[1]स्यात् । [2]यथा अणिति अइउवर्णा गृह्यन्ते । एवमन्येपि ज्ञेयाः । ते च प्रत्याहारा एकचत्वारिंशत् ।

'एकस्मात् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः' । [3]इति वचनात् ।

---

[4]क्वचिद्विशेषाणां पर्यायाणां वा ग्रहणमिष्यते । विभाषा वृक्षमृगतृणेत्यादि । तथा च वक्ष्यति ।

'वृक्षादौ[5] तद्विशेषाणां [6]स्वे पर्यायविशेषयोः ।
पर्यायस्यैव राजादौ मत्स्यादौ तद्विशेषयोः ॥' इति ।

[7]तत्तत्स्थानेषु प्रतिपादयिष्यामः । प्रत्याहारानुदाहरति । अणिति । अकारो णकारेण सह गृह्यमाणोण् प्रत्याहारः स्यात् । स च [8]मध्यगयोरिवर्णोवर्णयोर्ग्राहकोकारस्यापि । एवमिति । [9]व्याख्यातप्रकारेणान्येपि प्रत्याहारा ज्ञातव्याः । तांश्च प्रत्याहारानानियमेन प्रसक्तान् नियमयति । ते चेति । [10]ते इति तच्छब्देनाणादिभिश्चतुर्दशसू[11]त्रान्त्यैः सह ये प्रत्याहारास्ते प[12]रामृश्यन्ते तेन रप्रत्याहारसुबादिषु सत्स्वपि नियमभङ्गो न । तांश्च [13]प्रत्याहारान्

'एकस्मात् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥' इति

---

१. $D_1$ drops it. २. यथा dropped $D_2$, $D_4$, $B_1$, C, N.; क्वचित् 'यथाणिति अइउवर्णा गृह्यन्ते इति यथाशब्दः पठ्यते K. ३. इति वचनात् dropped $B_1$, $C_1$, $B_2$, $D_3$, $D_5$. ४. यत्तु क्वचि° $Nc_2$. ५. °त्यादौ $Bc_1$. ६. स्वपर्याय° $Dc_2$. ७. तत्र तत्र स्थानेषु $Nc_1$, $Dc_3$. ८. तन्मध्ययो° $Dc_1$ ; मध्यगयोरिउवर्णयो° $Dc_2$. ९. एवमपि व्याख्यात° $Nc_1$; अनेन व्याख्यात° $Dc_2$. १०. ते चेति $Dc_1$; ते इति dropped $Nc_1$. ११. सूत्रान्तैः $Dc_3$. १२. परामृश्यन्ते $Dc_1$. १३. प्रत्याहारान् संग्रहश्लोकानुसारेण कथयति । एकस्मादिति । एङ् । $Dc_4$.

एङ् यञ् अण् पूर्वेण णकारेण । छव् अट्[1] झष् भष् अक् इक् उक् अण् इण् यण् परेण णकारेण । अम् यम्[2] ङम् अच् इच् एच् ऐच् यय् मय् झय् खय् यर् झर् खर् चर् शर् अश् हश् वश्[3] जश्[4] झश् बश् अल् हल् वल् रल् झल् शल् इति[5] । लकारस्थावर्णेन

---

संग्रहश्लोकानुसारेण कथयति । एङित्यादि । एङ् । 'एङः पदान्तात्—' इति । यञ् । 'अतो दीर्घो यञि । अण् पूर्वेणेति' । 'अइउण्' अत्रत्येन । 'केणः' । छव् । 'नश्छव्यप्रशान्' । अट् । 'शश्छोटि' । झष् भष् । 'एकाचो बशो भष् झषन्तस्यस्ध्वोः' । अक् । 'अकः सवर्णे दीर्घः ।' इक् । 'इको गुणवृद्धी ।' उक् । 'उगितश्च ।' अण् । 'अणुदित् सवर्णस्य चाप्रत्ययः ।' इण् । 'इण्कोः ।' यण् । 'इको यणचि ।' परेणेति । एतेणादयो 'लण्' इत्यनेन णकारेण प्रत्याहाराः । अम् । 'पुमः खय्यम्परे ।' यम् । 'हलो यमां यमि लोपः ।' ङम् । 'ङमो ह्रस्वादचि ङमुण् नित्यम् ।' अच् । 'अचः परस्मिन् पूर्वविधौ ।' इच् । 'इच एकाचोम्प्रत्ययवच्च ।' एच् । 'एचोयवायावः ।' ऐच् । 'वृद्धिरादैच् ।' यय् । 'अनुस्वारस्य ययि परसवर्णः ।' मय् । 'मय उञो वो वा ।' झय् । 'झयो होन्यतरस्याम् ।' खय् । 'पुमः खय्यम्परे ।' यर् । 'यरोनुनासिकेनुनासिको वा' । झर् । 'झरो झरि सवर्णे ।' खर् । 'खरि च ।' चर् । 'अभ्यासे चर्च ।' शर् । 'शर्पूर्वाः खयः ।' अश् । 'भोभगोअघोअपूर्वस्योऽशि ।' हश् । 'हशि च ।' वश् । 'नेड्वशि कृति ।' जश् । झश् । 'झलां जश् झशि' । बश् । 'एकाचो बशो भष् झषन्तस्य स्ध्वोः ।' अल् । 'अलोन्त्यस्य ।' हल् । 'हलन्त्यम् ।' वल् । 'लोपो व्योर्वलि ।' रल् । 'रलो व्युपधाद्धलादेः संश्च ।' झल् । 'झलो झलि' । शल् । 'शल इगुपधादनिटः क्सः ।' इतिशब्दः समाप्तिं द्योतयति । लकारस्थेति ।

---

१. After अट् P has अटीति जिह्वामूलीयोपध्मानीययोर्ग्रहणम् । उरष्क्रेण उरष्पेणेत्यादिसिद्धये; C agrees with P and has छव् अट् अटीति जिह्वा°...।सिद्धये before एङ् यञ्. २. ङम् यम् C. ३. भश् झश् जश् वश् $D_5$. ४. बश् । जश् । झश् $B_1$, $D_1$, $D_4$, $D_5$, N. ५. इति प्रत्याहाराः $D_2$.

सहोच्चार्यमाणो रेफो रप्रत्याहारः[१] ।

**ऊकालोज्झ्रस्वदीर्घप्लुतः ॥ १।२।२७॥**

उऊऊ३[२] इत्येवंकालोच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः[३] स्यात् ।

---

'लण्' इति सूत्रे लकारात् परोकारोनुनासिकः प्रतिज्ञायते । तेन 'उपदेशेज्–' इतीत्संज्ञकः सः । तेन सहोच्चार्यमाणो रेफः 'आदिरन्त्येन–' इति रप्रत्याहारः स्यादित्यर्थः । रप्रत्याहारफलम् 'उरण् रपरः' इत्यत्र वक्ष्यते ।

ऊकालः । एकमात्रत्वद्विमात्रत्वत्रिमात्रत्वानां[४] कुक्कुटरुतावुकारे प्रसिद्धत्वादकारं परित्यज्योकारमाह सूत्रकारः । ऊकाल इति । ह्रस्व-दीर्घप्लुत इति द्वन्द्वैकत्वं[५] पुल्लिङ्गनिर्देशश्छान्दसः[६] । संज्ञात्रयविधानात् संज्ञिनोपि त्रय इत्याह । उऊऊ३ । तत्र प्रथमो मात्रिको द्वितीयो द्विमात्रस्तृतीयस्त्रिमात्र इति । ननु च ऊ इति प्रश्लिष्टनिर्देशे कथं ज्ञायत एषैवानुपूर्वीति । ज्ञापकात् । तथा हि । 'विभाषा पृष्टप्रतिवचने हेः' इति मात्रिकस्य हेः प्लुतविधेर्ज्ञायते न मात्रिकोन्त्य इति । अन्त्यत्वे हि सति तस्य प्लुतसंज्ञा स्यात् । प्लुतस्य च प्लुतविधिरनर्थकः स्यात् । द्विमात्रोप्यन्त्यो न । 'ओमभ्यादाने' इति । द्विमात्रस्य प्लुतविधेः । तस्मा-दन्त्यस्त्रिमात्रः । मध्येपि मात्रिको न । 'अतो दीर्घो यञि' इति दीर्घविधेः । यदि मध्ये स्यात्तस्य दीर्घसंज्ञा स्यात्[७] । दीर्घस्य च दीर्घविधानमनर्थकं स्यात् । तस्मादादौ मात्रिकः । अन्त्यस्त्रिमात्रः । परिशेषान्मध्ये द्विमात्रिकः एकमात्रादिकालज्ञानं[८] तु चाषादिशब्दैः स्यात् । तथा चोक्तम् ।

---

१. After it D1 has—हकारो द्विरुपात्तोयमटि शल्यापि वाञ्छता ।
अर्हणाधुक्षतोः सिद्धिर्हमहादटि शल्यतः ॥

D4 gives this verse and has after it ल्कारस्था°. २. उऊ ३ D1. ३. °संज्ञकः C. ४. एकमात्रद्विमात्रत्रिमात्रत्वानां Dc3. ५. Dropped Bc1, Dc3, Dc4. ६. °निर्देशात् Dc3. ७. स्यात् dropped D1. ८ संज्ञानं चा° Nc1.

**अचश्च ॥ १।२।२८॥**

**ह्रस्वादिसंज्ञा[1] विधीयमाना एत अच एव स्थाने स्युः ।**

**स[2] प्रत्येकमुदात्तादिभेदेन त्रिधा[3] ।**

**उच्चैरुदात्तः ॥१।२।२९॥**

---

'चाषस्तु वदते मात्रां द्वितीयां वायसोऽब्रवीत् ।
तृतीयां तु शिखी ब्रूयान्नकुलो[4] ह्यर्धमात्रिकम् ॥' इति ।

ऊकालवत् कालो यस्येत्युपमानपूर्वो बहुव्रीहिरयमिति सूचयति । **एवंकाल** इति । दधि[5] । गौरी । देवदत्ता३ एहि । कालग्रहणं परिमाणावधारणार्थम् । अज्ग्रहणं संयोगस्याच्समुदायस्य च निवृत्त्यर्थम् । प्रत्यक्ष[6]व्यञ्जनं त्वर्धमात्रिकमित्यर्धमात्रयोः[7] कषयोर्हलोः समुदायस्य मात्रिक[8]त्वात् । 'ह्रस्वस्य—' इति ह्रस्वाश्रयस्तुङ् मा भूत् । तितउ छत्रम् । अत्राकारोकारयोः समुदायस्य द्विमात्रत्वाद् दीर्घत्वं स्यात् । ततश्च 'दीर्घात् पदान्ताद्वा' इति तुक् वा स्यात् । स मा भूत् । ह्रस्वदीर्घप्लुतप्रदेशाः 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'अकृत्सार्वधातुकयोर्दीर्घः' 'वाक्यस्य टेः प्लुत उदात्तः' इत्येवमादयः । **स प्रत्येकमिति** । यस्याचो ह्रस्वदीर्घप्लुतसंज्ञा विहिताः स प्रत्येकमिति एकमेकं प्रत्येकं[10] ह्रस्वोपि दीर्घोपि प्लुतोपि उदात्तानुदात्तस्वरितभेदेन त्रिधेत्यर्थः । **उच्चैः** । 'अचश्च' इत्यनुवर्तते । तस्यायमर्थः । ह्रस्वादयः स्वसंज्ञया विधीयमाना अच एव[11] स्थाने स्युरिति । उदात्तादिशब्दाः स्वरे वर्णधर्मे

---

१. नाम्ना $B_2$ : संज्ञया $D_4$, ह्रस्वादिना नाम्ना C. २. Before this P and $B_2$ have—

निरन्तराः क्रमस्थाश्च ह्रस्वदीर्घप्लुतास्त्रयः ।
उवर्णे कुक्कुटरुतौ प्रसिद्धा इत्युकालगाः ॥ ;

$D_2$ follows P, $B_2$ and has an additional verse—

चाषस्तु वदते मात्रां द्विमात्रां वायसो वदेत् ।
त्रिमात्रां कुक्कुटो वक्ति मात्राणामेष निर्णयः ॥

It and the Com. drop the Sûtra अचश्च. ३. त्रेधा C. ४. नकुलो वदेत् $Nc_1$. ५. नकलो वदेत् $Nc_1$. ६. सुधि $Bc_1$. ७. प्रत्यक्षं $Dc_3$, $Dc_4$. ८. °मात्रक° $Dc_4$. ९. मात्रकयोः $Dc_3$, १०. प्रति प्रत्येकं $Dc_4$. ११. Dropped $Dc_3$.

**नीचैरनुदात्तः ॥१।२।३०॥**

**समाहारः स्वरितः १।२।३१॥**

**[1]नवविधोपि प्रत्येकं सानुनासिकनि[2]रनुनासिकत्वेन द्विधा ।**

---

लोकवेदयोः प्रसिद्धास्त इह तद्गुणेचि परिभाष्यन्ते । उच्चैरिति श्रुति-प्रकर्षो न [3]गृह्यते उच्चैः [4]पठतीति । किं तर्हि । स्थानकृतमुच्चैस्त्वं संज्ञिनो विशेषणम् । ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा जायन्ते तत्र य ऊर्ध्वभागजोच् स उदात्तः स्यात् । यस्मिन्नुच्चार्यमाणे गात्राणां निग्रहः स्याद्रूक्षता स्वरस्य [5]संवृतता कण्ठविवरस्य । ये । ते । यत्तदोर्जसि त्यदाद्यत्वं 'जसः शी' 'आद्गुणः' 'एकादेश उदात्तेनोदात्तः' इति । उदात्तप्रदेशाः 'आद्युदात्तश्च' इत्येवमादयः । **नीचैः** । नीचभागे जातोच् अनुदात्तः यास्त् । यस्मिन्नुच्चार्यमाणे गात्राणां मार्दवं स्यात् स्वरस्य स्निग्धता कण्ठविवरस्य महत्ता । नमस्ते रुद्र मन्यव इत्यत्र 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात् तेशब्दोनुदात्तः । रुद्रोपि 'आमन्त्रितस्य च' इत्यनुदात्तः । पदकालेनुदात्तश्रुतिः । संहितायां त्वेकश्रुतिः स्यात् । अनुदात्तप्रदेशाः 'अनुदात्तं सर्वमपादादौ' इत्ये-वमादयः । **समाहारः** । उदात्तानुदात्तौ समाह्रियेते [6]यस्मिन्नचि स स्वरित-संज्ञः स्यात् । अत्रोदात्तानुदात्तौ वर्णधर्माविव गृह्येते नाचौ । क्व । 'किमोत् ।' 'क्वाति ।' 'तित् स्वरितम्' । [7]स्वरितप्रदेशाः 'तित् स्वरि-तम्' इत्येवमादयः । **नवविधोपीति** । नवप्रकारोप्यच् प्रत्येकमेकमेकं प्रति **सानुनासिकनिरनुनासिकत्वेन**[8] । अनुगतो नासिकामनुनासिको वर्णधर्मः । अथवा अनु पश्चात् [9]मुखस्य नासिका व्याप्रियते यस्मिन्

---

१. स नव° C. २. °निरनुनासिकभेदेन $P_1$, $D_1$, $B_2$. ३. गृह्यतेत्र $Nc_1$. ४. प्रपठतीति $Nc_1$. ५. संहतता $Dc_4$. ६. यस्मिन् विषये स्वरितः स स्यात् $Dc_2$. ७. Before it-स्वरितः $Dc_4$. ८. °त्वेनेति $Nc_1$. ९. मुखं $Dc_4$.

**मुखनासिकावचनोनुनासिकः ॥१।१।८॥**

मुखयुतनासिकयोच्चार्यमाणोनुनासिकः स्यात् ॥

**अणुदित्सवर्णस्य चाप्रत्ययः ॥१।१।६९॥**

अत्राण् परेण णकारेण । अणुदिच्च सवर्णस्य ग्राहकः स्वस्य

---

नासिकाया वा पश्चान्मुखं व्याप्रियते यस्मिन् । सहानुनासिकेन वर्तत इति सानुनासिकः । निर्गतोनुनासिको यस्मात् स निरनुनासिकः । सानुनासिकश्च निरनुनासिकश्च सानुनासिकनिरनुनासिकौ तयोर्भावः सानुनासिकनिरनुनासिकत्वम् । तेन द्विधा । अयं भावः । अच् ह्रस्वो दीर्घः प्लुतश्च । तत्र ह्रस्वोप्युदात्तोनुदात्तः स्वरितश्चेति त्रिधा । एवं दीर्घप्लुतावपि त्रिधा । अनेन प्रकारेण नवविधोपि सानुनासिकनिरनुनासिकश्चेति प्रकाराभ्यां द्विधो स्यात् । तथा सत्यष्टादश भेदाः स्युरिति । अनुनासिकसंज्ञामाह । **मुख** । मुखनासिकेति न द्वन्द्वः किं तु मयूरव्यंसकादित्वादुत्तरपदलोपी तत्पुरुष एवं । द्वन्द्वे तु 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः स्यात् । ततश्च 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वं स्यात् । ततश्च मुखनासिकवचन इति स्यादिति मत्वाह । **मुखयुतनासिकयेति** । अभ्र आँ अपः । मुखग्रहणं किम् । अनुस्वारस्यैव हि स्यात् । नासिकाग्रहणं किम् । कचटतपानां मा भूत् । अनुनासिकप्रदेशाः 'आङोनुनासिकश्छन्दसि' इत्येवमादयः ॥

**अणुदित्** । अत्रत्यमेवाण्ग्रहणं परेण णकारेणेति चेतसि कृत्वाह । **अत्राणिति** । अचां यवलानां च सवर्णग्रहणाय 'लण्' इति सूत्रस्थेन णकारेण प्रत्याहारोयम् । अन्यान्यण्ग्रहणानि सर्वाणि पूर्वेणैव णकारेणेति भावः । संज्ञासूत्रमिदम् । तेनाण् उदिच्च सवर्णानां स्वस्य च संज्ञा स्यात् । ततश्चाणुदित्ग्रहणे सवर्णा अणुदितोपि गृह्यन्त इति भावोणुदित्यादेः ।

---

१. मुखयुतया ना° C; मुखनासिकयो° $D_5$. २. Dropped $D_1$. ३. $D_1$ drops च; अण् च उदिच्च $D_2$. ४. °विति $Dc_1$. ५. स्यात् द्विधा $Dc_2$. ६. एवेति मत्वाह । $Dc_3$. ७. ह्रस्वः $Dc_4$. ८. आं३ $Dc_3$. ९. चवतकपानां $Dc_1$, $Nc_1$. १०. अणुदित् सवर्णस्य चाप्रत्ययः $Dc_4$. ११. निधायाह । $Dc_4$. १२. अणुदितोपि च $Dc_2$, $Nc_2$.

च[1]। प्रत्ययस्तु[2] न सवर्णस्य[3] ग्राहकः। यथा उप्रत्ययः। कुचुटुतुपु एते उदितः[4]। ततश्चावर्णः स्वाष्टादशभेदान्[5] गृह्णाति। तथा इउऋवर्णाः। ऌवर्णो न दीर्घोस्ति। एच् ह्रस्वो नास्ति।

तपरस्तत्कालस्य ॥ १।१।७०॥

---

'अप्रत्यय[6] इति। अप्रत्ययादेश[7] टित्कित्मित् इति वक्तव्यम्। प्रत्ययः। 'सनाशंसभिक्ष उः।' भिक्षुः। आदेशः। 'इदम इश्।' इह। टित्। 'आर्धधातुकस्येड् वलादेः।' लविता। कित्। 'भुवो वुक् लुङ्लिटोः।' बभूव। मित्। 'अम् संबुद्धौ।' हे अनड्वन् इत्यादिषु सवर्णानां ग्रहणं मा भूदित्येवमर्थम्। अथवा अप्रत्यय इति प्रत्ययग्रहणेन न संज्ञाग्रहः किं त्वन्वर्थग्रहः। प्रतीयते विधीयत इति प्रत्ययः। तेनाप्रत्यय इत्यस्यायमर्थः। भाव्यमानोण् सवर्णान्[10] न गृह्णातीति[11]। ईशादयोपि[12] भाव्यन्त इति तेपि[13] सवर्णग्राहका न। उदितः। कथयति। कुचु[14] इति। सूत्रफलं दर्शयति। ततश्चेति। 'आद्गुणः' इत्यादाववर्णो गृह्यमाणः पूर्वोक्तान् ह्रस्वादीन्[15] स्वाष्टादशभेदान् गृह्णाति। ततश्च उपेन्द्रः रमेशः इत्यादि सिद्धम्। तथेति। 'यस्येति च' 'ओर्गुणः' 'उरण् रपरः' इत्यादिषु इउऋवर्णास्तथाष्टादश[16] भेदान् गृह्णन्ति। ऌवर्ण इति। दीर्घस्य प्रयोगाभावात्। एजिति। ह्रस्वानां प्रयोगाभावात्। ततश्चैते द्वादश द्वादश भेदान् स्वग्रहणेषु गृह्णन्ति। तपरः। तपर इति बहुव्रीहिस्तः परो यस्मादिति।

---

१. च स्यात् $D_2$. २. Before this—प्रत्ययादन्य इत्युपलक्षणम्। विधीयमानोण् सवर्णस्य ग्राहको नेष्यते। $D_5$. ३. सवर्णग्राहकः B, $D_5$. ४. C has on the margin—उकारः पञ्चवर्णपरिग्रहणार्थः।. ५. स्वादष्टादश° P, $B_1$. ६. प्रत्यय $Dc_4$. ७. प्रत्यया° $Dc_4$. ८. मित $Bc_1$. ९. °ग्रहणं $Dc_1$. १०. न सवर्णान् $Dc_4$. ११. इति dropped $Dc_1$. १२. इशादयोपि च $Nc_1$, $Nc_2$. १३. तेपि dropped $Dc_1$. १४. कुचुटु इति $Nc_1$; कुचुटुतुपु इति $Dc_2$, $Dc_4$. १५. ह्रस्वदीर्घप्लुतादीन् $Dc_1$. १६. °स्तथा चाष्टादशभेदान् स्वग्रहणेषु गृह्णन्ति $Dc_4$.

तपरस्तात्परो वा तावान् ग्राह्यः ॥

**तुल्यास्यप्रयत्नं सवर्णम् । १।१।९॥**

तुल्यौ[1] स्थानप्रयत्नौ यस्य तदक्षरं मिथः सवर्णं[2] स्यात् । ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् । वर्ग्यो वर्ग्येण सवर्णः ।

---

तात्पर इति पञ्चमीतत्पुरुषेऽप्यावृत्त्यात्र[3] लभ्यत इत्यभिप्रेत्याह । तपरस्तात्परो वेति । तत्र[4] बहुव्रीहेर्लिङ्गम् 'अतो भिस[5] ऐस्' इति । अकारार्थं तपरकरणम् । पञ्चमीतत्पुरुषस्य लिङ्गं 'वृद्धिरादैच्' इत्यैजर्थं तपरकरणम् ।

तुल्यास्य । आस्ये भवमास्यं ताल्वादिस्थानम् । आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तुल्यौ आस्यप्रयत्नौ यस्येति द्वन्द्वगर्भो बहुव्रीहिरित्यभिप्रेत्याह । **तुल्यौ स्थानप्रयत्नौ यस्येति** । स्थानस्यापि तुल्यत्वार्थं[6] द्वन्द्वाश्रयण कृतम् । तुल्यः आस्ये प्रयत्नो यस्येति त्रिपदे बहुव्रीहावाश्रीयमाणे तुल्यत्वेन स्थानस्या[7]विशेषित्वाद् भिन्नस्थानानां कचटतपानां सवर्णसंज्ञा स्यात् । ननु द्वन्द्वगर्भाश्रयणे[8] प्रयत्न आन्तरत्वेन न[9] विशेषितः स्यात् । नैष दोषः । अत्र हि[10] स्थानसाहचर्यात् स्थाने यः प्रयत्नो वर्णोत्पत्तिकालभावी स विवक्षिष्यते । तेनान्तरो यः स्पृष्टतादिश्चतुर्विधः प्रयत्नः स एवेह गृह्यते न बाह्यो विवारादिः । अक्षरशब्दोऽत्र वर्णवाची । मिथः परस्परम् । ऋऌवर्णयोरिति । भिन्नस्थानत्वादप्राप्तं सावर्ण्यमुच्यते । तत्राचः[11] परस्परं सवर्णाः प्रदर्शिताः 'ततश्चावर्णः' इत्यादिना । हलः परस्परं सवर्णान् दर्शयति । **वर्ग्यो वर्ग्येणेति** । वर्गे भवो वर्ग्यः । दिगादित्वाद्यत् । वर्ग्यो यो वर्णः सोऽन्येन स्ववर्गान्तःपातिना सवर्णः स्यात् । तुल्यस्थानप्रयत्नात्[12] । सानुनासिकनिरनुनासिकत्वेन यवला

---

१. Before it—तुल्यशब्दः समपर्यायः । प्रयत्नं प्रयत्नः । $D_2$. २. सवर्णसंज्ञं C, $B_2$. ३. °प्यावृत्त्या dropped $Dc_1$. ४. अत्र $Dc_3$. ५. भिस् $Dc_1$, $Nc_1$, $Dc_3$. ६. तुल्यार्थत्वार्थं $Dc_3$. ७. स्थानस्यापि विशे° $Dc_3$. ८. °श्रयणेन $Dc_3$. ९. Dropped $Dc_3$. १०. Dropped $Dc_3$. ११. अत्राचः $Dc_3$. १२. °प्रयत्नत्वात् $Dc_4$.

रेफोष्मणां न सवर्णः । अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । उपूपध्मानीयानामोष्ठौ । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम्[2] । जिह्वामूलीयस्य जिह्वामूलम् ।

---

द्विधेति यवलानां सवर्णान् हल्सन्धौ वक्ष्यति । रेफोष्मणामिति[1] । रेफस्य शषसहानां च भिन्नस्थानप्रयत्नत्वादन्ये भिन्नजातीया वर्णाः सवर्णा न सन्ति[3] । किं तु रेफस्य सजातीयो रेफ एव सवर्णः । तुल्यस्थानप्रयत्नत्वात् । तथा शस्य श एव । षस्य ष एव । सस्य स एव । हस्य ह एवेति भावः । आस्यग्रहणं किम् । कचटतपानां तुल्यप्रयत्नानां भिन्नस्थानानां मा भूत् । ततस्तप्रेत्यत्र[4] पकारस्य तकारे 'झरो झरि' इति लोपो न । प्रयत्नग्रहणं किम् । इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत् । ततश्च अरुः श्च्योततीत्यत्र[5] शकारस्य चकारे लोपो न स्यात्[6] । सवर्णप्रदेशाः 'अकः सवर्णे दीर्घः' इत्येवमादयः । इदानीं वर्णानां स्थानान्याह । अकुहेति । अत्र सर्वत्र अइउऋ एतेष्टादशभेदभिन्नाः ऌएऐओऔ एत द्वादशभेदभिन्ना गृह्यन्ते । कुचुटुतुपु वर्गाः । एदैतोरित्यादि[7] । तपरकरणं सुखोच्चारणार्थम् । इदानीं प्रयत्नानाह । स्पृष्टमित्यादि । स्पृष्टं स्पृष्टता गुणः तदनुगतं प्रयतनमुच्चारणं स्पर्शानाम् । एवं विवृतमूष्मणामित्यादौ व्याख्येयम् । तत्र[8] नाभिदेशात् प्रयत्नप्रेरितः प्राण ऊर्ध्वमाक्रामन् कण्ठप्रभृतीनामन्यतरस्मिन्[9] स्थाने प्रयत्नेन विधार्यमाणः स्थानमभिहन्ति । तस्मात् स्थानाभिघाताज्जातो[10] ध्वनिः साकाशो[11] वर्णश्रुतिः । स वर्णस्यात्मलाभः । तत्र ध्वनावुत्पद्यमाने यदा कण्ठादिस्थानं जिह्वाग्रोपाग्रमध्यमूलानि

---

१. सावर्ण्यम् P, B₁. २. दन्तौष्ठम् D₁. ३. संभवन्ति Dc₃. ४. ततश्च Dc₃. ५. श्चोतती° Bc₁, Dc₃. ६. Dropped Bc₁, Dc₃, Dc₄. ७. °रिति Dc₄. ८. यत्र Dc₁. ९. °मन्यतरस्य Dc₁. १०. स्थानाभिघातजो Dc₁. ११. आकाशो Dc₂; सावकाशे Dc₃.

नासिकानुस्वारस्य[1] । स्पृष्टं प्रयतनं[2] स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वराणां च । [3]दीर्घप्लुतयोरवर्णयोर्विवृतत्वम् । संवृतं ह्रस्वस्य[4] । सोत्र सावर्ण्यार्थं विवृतः प्रतिज्ञायते । [5]कादयो मावसानाः स्पर्शाः ।

---

करणानि प्रयत्नश्च परस्परं[6] स्पृशन्ति सा स्पृष्टता । ईषद्यदा स्पृशन्ति सा ईषत्स्पृष्टता । सामीप्येन यदा स्पृशन्ति सा[7] संवृतता । दूरेण यदा स्पृशन्ति सा विवृतता । एते आभ्यन्तराः । आभ्यन्तरत्वं त्वेषां स्थानकरण[8]प्रयत्नव्यापारेणोत्पत्तिकाल एव भावात् । सोत्रेति । सं[9] ह्रस्वोकारोत्र व्याकरणशास्त्रे[10] दीर्घप्लुताभ्यां सावर्ण्यार्थं विवृत इति[11] प्रतिज्ञायते । तथा च शास्त्रान्ते सूत्रकारेण 'अ अ' इति सूत्रेण प्रत्यापत्तिः करिष्यते । इदानीं पूर्वोद्दिष्टानां स्पर्शानाम्[12]र्थानाह[13] । कादय इति । बाह्याः प्रयत्नाः सवर्णसंज्ञायामनुपयोगिन इत्याचार्यवर्यैर्नोक्ताः । अस्माभिस्तु वर्णानामान्तरतम्यज्ञानायोच्यन्ते । ते चैकादश । विवारः । संवारः । श्वासः । नादः । घोषः । अघोषः । अल्पप्राणः । महाप्राणः । उदात्तः । अनुदात्तः । स्वरितश्च । तत्र पूर्वोक्त एव वायुर्यदा मूर्ध्नि प्रतिहतो निवृत्तः कोष्ठमभिहन्ति तत्र[14] यदा गलबिलस्य संवृतत्वं तदा संवारो नाम वर्णधर्मो जायते । यदा विवृतत्वं तदा विवारः । संवृते गलबिले अव्यक्तशब्दो नादः । विवृते श्वासः । श्वास उपरिवर्ती[15] वायुः । तौ श्वासनादावनुप्रदान[16]मित्याहुः । अनु पश्चात् प्रदीयत इति । तत्र यदा स्थानाभिघातजे ध्वनौ नादोनुप्रदीयते तदा नादध्वनिसंसर्गाद्घोषो जायते । यदा श्वासोनुप्रदीयते तदा श्वासध्वनिसंसर्गादघोषः ।

---

१. After this—पञ्चमैश्च संयुक्तस्य हस्य उरः $D_2$. २. करणं P. ३. दीर्घप्लुतयोर्विवृ° $B_2$. ४. ह्रस्वस्याकारस्य $D_2$. ५. Before it—अचः स्वराः । हल् व्यञ्जनम् । $D_1$. ६. यदा परस्परं $Dc_4$. ७. तदा सा $Dc_3$. ८. स्थानानां $Bc_1$. ९. सः dropped $Dc_1$. १०. व्याकरणे शास्त्रे $Nc_2$; पाणिनीयव्याकरणशास्त्रे $Bc_1$. ११. Dropped $Dc_3$. १२. स्पर्शादीना° $Bc_1$. १३. °मर्थमाह $Dc_4$. १४. कोष्ठेभिहन्यमाने तत्र यदा $Dc_2$. १५. °वर्ति $Bc_1$, $Dc_3$, $Dc_4$. १६. कोष्ठिदनुप्रदान° $Dc_2$.

ञमङणना अनुनासिकाः । [1]यरलवा अन्तस्थाः । शषसहा ऊष्माणः । ≍ क इति जिह्वामूलीयः । ≍ प इत्युपाध्मानीयः । अं इत्यनुस्वारः । अः इति विसर्जनीयः ।

वृद्धिरादैच् ॥१।१।१॥

महति वायौ महाप्राणः। अल्पे अल्पप्राणः। यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रः स्यात्तदा गात्रस्य निग्रहः [2]कण्ठविवरस्य चाणुत्वं स्वरस्य [3]च रौक्ष्यं स्यात्तमुदात्तमाहुः। यदा तु मन्दः प्रयत्नः स्यात्तदा गात्रस्य स्रंसनं कण्ठविवरस्य महत्त्वं स्वरस्य [4]च स्निग्धता स्यात् सोनुदात्तः। उदात्तानुदात्तसंबन्धात् स्वरितः। वर्णोत्पत्तिकालानन्तर[5]मुत्पत्तेर्बाह्यत्वमेषाम्। तत्र [6]वर्गाणां प्रथमद्वितीयाः शषसा विसर्जनीय ≍ क ≍ पा विवृतकण्ठाः श्वासानुप्रदाना अघोषाः। [7]वर्गाणा तृतीयचतुर्था अन्तस्था नासिक्या हानुस्वारौ च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च। [8]वर्गाणां प्रथमतृतीया अन्तस्थाश्चाल्पप्राणाः। इतरे सर्वे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः। आनुनासिक्यमेषामधिको गुणः। एते बाह्याः प्रयत्नाः। तत्र यमा नाम वर्गेष्वादितश्चतुर्णां पञ्चमेषु परतो ये त एव नासिक्या जायन्ते यथा पलिक्न्क्नीः चख्ख्नतुः आग्ग्मं नपाम् जघ्घ्नतुः अप्प्न स्वतीत्यादौ कुंखुंगुंघुंङुं इति। वृद्धिरादैच्। वृद्धिः आदैजिति द्विपदं सूत्रम्। आदैजिति समाहारद्वन्द्वैकवचनम्। समासान्तविधेरनित्यत्वात् 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच् न। 'अयस्मयादीनि छन्दसि' इति भत्वात् 'चोः कुः' इति कुत्वं न। छन्दस्त्वं तु 'छन्दोवत् सूत्राणि भवन्ति' इति वचनात्। लाघवार्थम इति वाच्ये दीर्घोच्चारणसामर्थ्याद् द्विमात्र एव ग्रहीष्यते न मात्रिकत्रिमात्रौ। अतो नाकारार्थं तपरत्वम्।

१. अन्तस्था यरलवाः। $D_2$. २. तदा कण्ठ° $Dc_1$. ३. च वायोस्तीव्रगतित्वाद्रौक्ष्यं $Dc_2$; $Dc_4$ drops च. ४. वायोर्मन्दगतित्वात् स्निग्धता $Dc_2$. ५. °मुत्पत्तेर्हेतो° $Nc_1$. ६. वर्गयमानां $Dc_2$, $Bc_1$. ७. वर्गयमानां $Dc_2$, $Bc_1$. ८. वर्गयमानां $Dc_2$, $Dc_3$.

कृताकृतानामादैचां वृद्धिसंज्ञा स्यात् ।

**अदेङ् गुणः ॥१।१।२॥**

[2]अदेङां गुणसंज्ञा स्यात् ।

**इको गुणवृद्धी ॥१।१।३॥**

---

किं त्वैजर्थम् । कृताकृतानामिति । वृद्धिशब्दोच्चारणेन कृतानां तेनाकृतानां च आदैचां सामान्येन वृद्धिसंज्ञा स्यादित्यर्थः । तेनौपगवीयः शालीय इत्यादि सिद्धम् । ननु कृतानां संज्ञायामितरेतराश्रयत्वं स्यात् । 'मृजेर्वृद्धिः' इत्यादौ संज्ञया हि क्रियन्ते । कृतानां च संज्ञेति । नैष दोषः । भाविनीयं संज्ञा विज्ञास्यते । ततश्चायमर्थः स्यात् । यस्य कृतस्य वृद्धिसंज्ञा स्यादिति । लोके च भाविन्यः संज्ञा दृश्यन्ते । तथा हि । कश्चित्तन्तुवायमाह । अस्य सूत्रस्य शाटकं वयेति । स पश्यति यदि वेयो न शाटकः । शाटकश्चेन्न वेयः । अतो मन्ये स वेयो यस्मिन्नुते शाटकसंज्ञा स्यादिति । इदं सूत्रमनर्थकम् । साध्वनुशासनार्थं प्रयोगनियमार्थमाँगमार्थमादेशार्थं विशेषणार्थं तद्गुणाध्यारोपणार्थं वेति सप्तानां विकल्पानां निराकरणं **महाभाष्यादेरवगन्तव्यम्** । वृद्धिप्रदेशाः 'वृद्धिरेचि' इत्येवमादयः ।

अदेङ् । पूर्वेण तुल्यं व्याख्यानमस्य । तपरत्वं त्वत्रत्यमकारार्थमेङर्थं च । गुणप्रदेशाः 'मिदेर्गुणः' इत्येवमादयः ।

इकः । इयं परिभाषा नाधिकारः । अस्वरितत्वात् । परिभाषा चैकदेशस्था सर्वं शास्त्रमभिज्वलयति । यदाहुः ।

'परितो व्याप्टृतां भाषां परिभाषां प्रचक्षते' इति ।

सा चानियमप्रसङ्गे नियमो विधीयत इति । यत्र साक्षात् स्थानी न निर्दिष्टः 'सार्वधातुकार्धधातुकयोः' 'सिचि वृद्धिः–' इत्यादौ

---

१. Dropped P. २. अदेङौ गुणसंज्ञौ स्याताम् । P, $D_1$; अदेङोर्गुणसंज्ञा स्यात् $B_2$. ३. स्यादिति $Dc_4$. ४. संज्ञायां $Nc_1$. ५. °मर्थः । स स्यात् $Dc_1$, $Nc_1$. ६. °संज्ञः $Bc_1$. ७. °मादेशार्थमागमार्थ° $Bc_1$, $Dc_4$. ८. यथाहुः $Bc_1$. ९. व्यावृतां $Dc_4$.

गुणवृद्धी स्वसंज्ञया विधीयमाने इक एव स्थाने स्तः ।

तत्रैव स्थानिनियमार्था प्रवर्तते । न 'अचोञ्णिति' इत्यादौ । स्थानिनिर्देशात् । 'वृद्धिरादैच्' इत्यतो 'वृद्धिः' 'अदेङ् गुणः' इत्यतो 'गुणः' इत्यनुवर्तमानेपि नगुणवृद्धिग्रहणं गुणवृद्धिसंज्ञया शिष्यमाणे इत्यस्यार्थस्य प्रतिपत्यर्थमित्यभिप्रेत्याह । **स्वसंज्ञयेति** । गुणवृद्धिसंज्ञयेत्यर्थः । इक इति किम् । आत् सन्ध्यक्षरव्यञ्जनानां मा भूत् । अन्यथा यानमित्यत्र यातेरने परे आकारस्य गुणे अकारे कृते 'अतो गुणे' इति पररूपे च यनमित्यनिष्टं रूपं प्रसज्येत । ग्लायतीत्यत्रैकारस्य गुणे एकारे कृते ग्लयतीति स्यात् । उभ्भितेत्यत्र भकारस्य ओकारे गुणे उमवितेत्यनिष्टं रूपं स्यात् । अतो गुणविधौ 'सार्वधातुकार्धधातुकयोः' इत्यादाविक इति भाव्यम् । अन्यथा चिरिजिर्योर्लुङि सिचि इटि अन्तरङ्गत्वाद्गुणायादेशयोः कृतयोः 'ह्यचन्तक्षण–' इति यान्तत्वाद्वृद्धि निषेधः स्यात्ततश्च अचिरयीत् अजिरयीदित्यनिष्टं रूपं स्यात् । इकि तु सति सिचि वृद्ध्यान्तरङ्गस्य गुणस्य बाधः । अन्यथा न क्वापि सिचीगन्तं स्यात् । ततश्च अचिरायीत् अजिरायीत् इत्यादि सिद्धम् । स्वसंज्ञया विधीयमान इति किम् । द्यौः । पन्थाः । इमम् । इत्यत्र 'दिव औत्' 'पथिमथ्यृभुक्षामात्' 'त्यदादीनामः' इत्येत इकः स्थाने मा भूवन्निति । अस्मिन्सूत्रे अन्यदाक्षेपसमाधानादिकं महाभाष्यादेरवगन्तव्यम् । फलितमेवास्माभिरुक्तम् ।

१. Before it—अनिर्दिष्टस्थाने $D_1$ ; अनिर्दिष्टस्थानके $B_1$. $B_2$ ; गुणवृद्धी after विधीयमाने $B_2$. २. Dropped $D_2$. ३. °निर्दिशत्वात् $Dc_3$. ४. क्रियमाणे $Dc_4$. ५. Dropped $Dc_1$. ६. वृत्ते $Dc_4$. ७. स्यात् $Dc_1$. ८. Dropped $Dc_3$, $Dc_4$. ९. गुणे ओकारे $Dc_4$. १०. °गन्तमङ्ग $Dc_2$.

**अदर्शनं लोपः ॥१।१।६०॥**

वर्णानामदर्शनं लोपसंज्ञं स्यात् ।

**भूवादयो धातवः ॥१।३।१॥**

[1]क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥

---

**अदर्शनम्** । वर्णानामदर्शनमिति । 'षष्ठी स्थाने योगा' इत्यतः प्रसङ्गवाचिनः स्थानशब्दस्यानुवृत्तेः प्रसक्तानां वर्णानामश्रवणमित्यर्थः । लोपप्रदेशा 'लोपो व्योर्वलि' इत्येवमादयः ।

**भूवादयः** । लघ्वर्थमेकाक्षरायां संज्ञायां कार्यायां महत्याः पूर्वाचार्यसंज्ञाया यदाश्रयणं तत्तैर्यादृशां संज्ञा विहिता तादृशामेव यथा स्यादित्येवमर्थम् । तैस्तु क्रियावाचिनां विहितेत्यभिप्रेत्याह । **क्रियावाचिन** इति । क्रिया नाम साध्यमानस्वरूपा पूर्वापरीभूतावयवा । तथा चोक्तम् ।

'यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥' इति ।

तेन धातुसमानानामक्रियावाचिनां वादीनां न । ते च धातुपाठपठिता एव गृह्यन्ते तेनाणवयेत्यादीनां न । ननु च भू आदिर्येषामिति बहुव्रीहौ संहितया निर्देशे यणादेशे सति भ्वादय इति भाव्यं तत् कथं भूवादय इति । उच्यते ।

'भूवादीनां वकारोयं मङ्गलार्थः प्रयुज्यते ।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ॥'

'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि च' इति मध्ये मङ्गलार्थं

---

१. भू इत्येवमादयः क्रियावाचिनो धात° $D_1$. २. यादीनां $Pc_1$, $Dc_3$. ३. तेन भावयेत्यादीनां $Bc_1$. ४. संहितानिर्देशे $Nc_1$. ५. स्यात् $Nc_1$, $Dc_4$. ६. मङ्गलार्थं $Bc_1$. ७. वीरपुरुषाणि $Nc_1$, $Nc_2$, $Dc_4$. ८. °पुरुषाणि $Nc_1$, $Nc_2$. $Dc_2$.

भूवादीनां वकारोयं मङ्गलार्थः प्रयुज्यते ।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः[1] ॥

वकारः प्रयुज्यते । द्वितीयं प्रकारमाह । भुवो वार्थं वदन्तीति । भुवो धातोरर्थं वदन्तीति वा भूवादयः । अर्थकथनमेतत् । व्युत्पत्तिस्तु भवनं भूः[2] क्रियासामान्यम् । भुवं वदन्तीति वदेरौणादिक इण् । यद्येवमस्ति-भवतिविद्यतीनामेव[3] स्यान्न पचतीत्यादीनाम् । क्रियाविशेषवाचित्वात् । न । विशेषेपि[4] सामान्यस्य सत्त्वात् । भाव[5] इति पाकस्त्याग इत्यादौ घञ्विधिवद् भविष्यति । अस्मिन्पक्षे पाठसामर्थ्यात् पाठोप्यङ्गीक्रि[6]-यते । तृतीयं प्रकारमाह । भ्वर्था वा वादयः स्मृता इति । भवनं भूः सोर्थो येषां ते भ्वर्थाः । वादय इति । वा गतिगन्धनयोरिति आदिर्येषां ते वादयः वा गतीत्यारभ्य चु[7]रादिसमाप्तेस्तथा वा अस्य आदयो वादयः भूप्रभृतयः आ वा गतिगन्धनयोर्[8]स्मात् । वादयश्च वादयश्च वादयः । एकशेषः । भूवो वादय इति वाच्यवाचकसंबन्ध[9]षष्ठ्याः समासः । अत्र पक्षे पाठार्थौ सूत्राक्षरैरेवोपात्तौ विचारविशेषादर्थविशेषो महाभाष्यात् ज्ञेयः । तथा हि । भूवादय इति भू सत्तायां वा गतिगन्धनयोरनयोः प्रत्ये-कमादिशब्दः संबध्यते । तत्र यदा सपरिस्पन्दसाधनसा[10]ध्या क्रि[11]या धात्वर्थ इति पक्षस्तदा भूरादिर्व्यवस्थितिर्येषां वा आदिः प्रकारो येषां ते भूवादयो भूइत्यादयो वाप्रकारा वासदृशाः क्रियार्था इत्यर्थः । यदा त्वपरिस्पन्दसाधनसाध्यो भावो धा[12]त्वर्थस्तदा भूप्रकारा भाववचना वा इत्यादयो धातवः स्मृता इ[13]त्यादि ।

---

१. After this—अमृतात्मा प्रसिद्धोसावागमे तेन सिद्ध्यति ।
धातूनशेषशब्दानां बीजभूतान्महामुनिः ॥ २ ॥

K. remarks in regard to the verse भूवादीनां°—क्वचिदयं मूलेपि पठ्यते । कारकाणां प्रवृत्तिविशेषः क्रिया । C, $D_1$. २. After it सत्ता $Dc_1$, $Dc_3$, $Dc_4$. ३. विद्यतीत्यादीना° $Dc_3$. ४. विशेषेष्वपि $Bc_1$. ५. यथा भाव इति $Dc_3$. ६. पाठोयमङ्गी° $Nc_1$. ७. आ चुरादि° $Nc_1$, $Dc_2$. ८. °रित्यस्मात् $Dc_1$. ९. °संबन्धः । षष्ठ्या $Dc_4$. १०. साध्यक्रिया $Nc_1$. ११. क्रियाभावो धात्वर्थ $Dc_1$. १२. धात्वर्थ इति पक्षः $Dc_2$. १३. Dropped $Dc_2$; इति $Dc_1$, $Dc_3$.

## उपसर्गाः क्रियायोगे ॥१।४।५९॥

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा

---

उपसर्गाः । मरुच्छब्दस्य उपसर्गसंज्ञा वाच्या । मरुत्त इति मरुच्छब्दात् परस्य दाञः क्तप्रत्यये 'अच उपसर्गात्तः' इति तत्त्वविध्यर्थं विधिसामर्थ्यादनजन्तादपि तत्त्वम् । क्रियायोगे किम् । प्रगतो नायकोऽस्मात् प्रनायको देशः । अत्रोपस[2]र्गाभावान्न णत्वम् । ननु चात्र गमिक्रियायोगोऽस्त्येव । प्रादीनां क्रियायोगाव्यभिचारात् । सत्यम् । तथापि क्रियाग्रहणसामर्थ्याद्यत्[3]क्रियायुक्तास्तां प्रत्युपसर्गसंज्ञाः स्युः । नान्याम् । तेनेह नयतिं प्रत्युपसर्गता न ।

कृष्णाचार्यै रामचन्द्राचार्यभ्रातृसुतैः कृताः ।
सोदाहृत्युपसर्गार्थश्लोका ये ताँल्लिखाम्यहम् ॥ १ ॥

प्र आदिकर्मदीर्घेशे भृशसंभवतृप्तिषु ।
वियोगशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने ॥ २ ॥

आदिकर्मणि क्तः । [1]प्रयातः । दीर्घे । प्रबला मूषकाः । ईशे । प्रभुर्देशस्य । भृशार्थे । [4]प्रवदन्ति दायादाः । [5]संभवे । हिमवतो गङ्गा प्रभवति । तृप्तौ । प्रभुक्तमन्नम् । वियोगे प्रोषितः । शुद्धौ । प्रसन्नमुदकम् । शक्तौ । [6]प्रशक्तो विप्राय । इच्छायाम् । प्रार्थयते कन्याम् । शान्तौ । प्रशान्तोर्मिः । पूजायाम् । प्राञ्जलिः स्थितः । अग्रे । प्रवालम् । दर्शने । प्रलोकयति ।

वधे गतौ दर्शने च विक्रमाभिमुखे भृशौ ।
[7]अधीनमोक्षणप्रातिलोम्यकेषु परा मतः ॥ ३ ॥

वधे । पराहतः । गतौ । परागतः । दर्शने । परादृष्टः । विक्रमे । पराक्रान्तः । अभिमुखे । परावृत्तः । भृशे । पराजितः । अधीने । पराधीनः । मोक्षणे । पराकृतः । प्रातिलोम्ये । पराङ्मुखः ।

---

१. Dropped P. २. °सर्गत्वा° $Dc_4$. ३. °क्रियया युक्ता° $Nc_1$. ४. प्रवदन्तीति $Dc_3$. ५. संभवेपि $Dc_4$. ६. प्रसक्तो $Dc_3$. ७. अधीने $Dc_4$.

## अप सम् अनु अव निर् दुर्

अपो वियोगे [1]विकृतौ विपरीते निदर्शने ।
आनन्दे वर्जने चौर्ये वारणे सम्यगीरितः ॥ ४ ॥

अपयाति । अपकृतवान् । अपशब्दः । अपदिशति । अपहसति । [2]अपत्रिगर्ताद्वृष्टो देवः । अपहरति । अपसरति ।

संयोग ऐक्यप्रभवसत्यप्रत्यक्षसिद्धिषु ।
भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचि सम् ॥ ५ ॥

संगतः पुत्रेण । संवदन्ति सख्यः । संभवत्यभिः । कोष्ठे गां [3]संजानामि । संपश्यते । संसिद्धिः । संस्कृता कन्या । संधत्ते । संगृह्णाति । संक्रुद्धः । संयाति[4] ।

वेदाधिष्ठानसामीप्यपश्चाद्भावानुबन्धने ।
साम्याभिमुखहीनेषु [5]विसर्गे लक्षणे त्वनु ॥ ६ ॥

अनुवाकमधीते । अनुष्ठानं देशे । अनुमेघं वर्षति । अनुरथम् । अनुशयः । अनुकृतिः । अनुवत्सो मातरं धावति । अन्वर्जुनं योद्धारः । [6]अनुज्ञातः । अनुधनमसतां गतिः ।

ज्ञानावलम्बशुद्धीषद[7]र्थे व्याप्तिपराभवे ।
अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ७ ॥

अवगतोर्थः । अवलम्ब्य यष्टिं गच्छति । अवदातम् । अवलम्बते । अवकीर्णम् । अवघ्नन्ति । अवयातः ।

निर्वियोगात्ययादेशातिक्रमे लाभनिश्चिते ।

निःसङ्गो ब्रवीति । निर्मेघम् । निर्दिष्टम् । निःक्रान्तः । निर्वेशः । निश्चितम् ।

[8]दुरीषदर्थे कृच्छ्रेर्थे कृशासंपत्तिसंकटे ॥ ८ ॥

दुर्गतः । दुर्जीवनः । दुर्बलः । दुर्गतः । दुर्दिनम् ।

---

१. निकृतौ Bc1. २. अपत्रिगर्तेभ्यो वृष्टो देवः Dc3. ३. सञ्जानाति Dc4. ४. After it—इत्यादि Dc2. ५. विसर्गलक्षणे Nc1. ६. अनुज्ञाताः Dc3. ७. °दर्थे° Dc3. ८. दुःपावनः Dc2.

## वि आङ् नि

नानावियोगातिशय[१]भृशमोहेशवाङ्मृधे ।
पैशून्यास्मरणे भूषेषदर्थनाभिमुख्यके ॥ ९ ॥
अनवस्थामुख्यशौर्यदर्शने विरुदाहृतः ।

विचित्रा सूत्रस्य[२] कृतिः । वियुक्तः । विकीर्णः[३] । वितटा नद्यः । विमनस्कः । विभुः । विवदन्ति[४] । विगायति । विस्मृतः[५] । विभूषितः । विलोपितः[६] । विमुखः[७] । विभ्रान्तः[८] । विशिष्टः । विक्रान्तः । विलोकयति ।

आङिच्छाभयवाक्येषदर्था[९]श्लेषादिकर्मणि ॥ १० ॥
बन्धनेभिविधौ शाठ्यकृच्छ्रसामीप्यसंश्रये ।
अभिमन्त्रनिवृत्त्याशादानानुभवविस्मये ॥ ११ ॥
प्रतिष्ठादेशमर्यादास्पर्धामुख्योर्ध्वकर्मणि ।

आकाङ्क्षते । आविग्नः । आजानाति । आताम्रा नखाः । आलिङ्गति । आरभते । कवचमाबध्नन्ति । आकुमारं यशः । आचरति कपटेन । आहूकृतः । आसन्ना[१०] वयम् । आवसथः[११] । आमन्त्रणम् । आधावति । आशास्ते । आदत्ते । आशितम्[१२] । आ एवं किल तत् । आस्पदम् । आदिष्टः । आभक्तेर्दुःखम् । आह्वयन्ते रथिनो रथिनः । आगच्छति । आरोहति पर्वते[१३] ।

राश्य[१४]धस्त्वभृशादेशनित्यकौशलबन्धने ॥ १२ ॥
अन्तर्भावे समीपे निर्दर्शने परमाश्रये ।

निकरो मणीनाम्[१५] । निपतितम् । निगृहीतः[१६] । निदेशितम् । निविशते । निपुणः । निबद्धः । निपीतमुदकं सिकताभिः । निकृष्टः । निदर्शनम्[१७] । निवृत्तः पापात् । निलयः ।

---

१. °शये Dc4. २. सत्रकृतिः Dc2. ३. विप्रकीर्णः Dc1. ४. विवदन्ते वादिनः Dc2. ५. विस्मितः Dc1. ६. विलोचनः Nc1. ७. विमुखाः Dc3. ८. विभ्रमः Nc2. ९. °त्याशीर्वा° Bc1, Dc4. १०. आसन्नः Dc1. ११. आवसथम् Dc3; आवसथ्यम् Dc4. १२. आशितम् Dc3, Dc4. १३. पर्वतम् Dc3, Dc4. १४. संघा° Dc2, Dc4. १५. मुनीनाम् Dc4. १६. निगृहीतम् Bc1, Dc3, Dc4. १७. निदर्शितम् Dc3.

## अधि अपि अति सु उत् अभि

अधिरध्ययनैश्वर्यवशित्वस्मरणा[1]धिके ॥ १३ ॥

उपाध्यायादधीते । अधिपतिः । अधीनः । मातुरध्येति । अधिकृतम् ।

अपि संभवगर्हाशीर्मृतिभूषासमुच्चये ।

अपि योजनमस्ति । अपि पापिन् । भद्रमपि । मरणमपि । अपिनह्यति हारम् । तदपि ।

विक्रमातिक्रमे बुद्धौ भृशार्थातिशये त्वतिः ॥ १४ ॥

अतिरथः । अतिक्रामति । अतिगहनम् । अतितप्तम् । अतिमनुते ज्ञानम् ।

प्रशंसानुमते पूजाभृशकृच्छ्रशुभेषु सुः ।

सुरूपः । सुकृतम् । सुसाधुः । सुतप्तः । सुदुष्करम् । सुगन्धः ।

उत् प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने ॥ १५ ॥

आश्चर्यमोक्षणे भावे बलप्राधान्यशक्तिषु ।

उद्बलः । उद्गच्छति । उत्तिष्ठति शयनात् । उत्पन्नम् । उच्चरति । उत्सुकः । उ[2]द्गतोऽश्वः । उत्पथः । उत्कः । उ[3]द्दिष्टः । उत्साहः ।

अभिः पूजाभृशार्थेच्छाव्याधिसा[4]म्याभिमुख्यके ॥ १६ ॥

[5]सौरूपावचनाहारस्वाध्यायेषु निरूपितः ।

[6]अभिवदति गुरुम् । अभियुक्तः । अभिलिप्सते । अभिस्यन्दो व्याधिः । अभिजातः । अभिमुखम् । अ[7]भिरूपः । अभिधानम् । अभ्यवहरति । अभ्यस्यति ।

---

१. °दिके Dc4. २. उद्गतोऽश्वम् Dc4; उद्गतमुखः Dc1. ३. उद्दिष्टम् Dc3. ४. °शाम्या° Dc3. ५. सारूप्य° Bc1. ६. अभिवदते Bc1. ७. अभिरूपम् Dc3.

प्रति परि उप एते प्रादयः ।

**विरामोवसानम्** ॥ १।४।११० ॥

वर्णानामभावोवसानसंज्ञः[1] स्यात् ॥

---

सादृश्यादानहिंसाङ्गीकृतौ प्रतिनिधौ क्वचित् ॥ १७ ॥
व्याध्यभिमुख्ययोर्व्याप्तौ वारणे **प्रति**रुच्यते ।

प्रति देवदत्तस्य । प्रतिगृह्णाति । प्रतिहन्ति । प्रतिज्ञानम्[2] । अभिमन्युरर्जुनतः प्रति[3] । प्रतिश्यायम्[4] । प्रतिसूर्यं गच्छति[5] । प्रतिकीर्णं पांशुभिः । प्रतिषिद्धः ।

परिः समन्ततो भावव्याप्तिदोषकथासु च ॥ १८ ॥
भूषाश्लेषे पूजने च वर्जने वसने शुभे ।

परिभ्रमति । परिगतोग्निर्ग्रामम् । परिवादः । परिकरोति[6] कन्याम् । परिष्वजते । परिचरति गुरुम् । परित्रिगर्तेभ्यो वृष्टो[7] देवः । परिधत्ते वासः । परिदेवनम् ।

उपः सामीप्यसामर्थ्यव्याप्त्याचार्यकृतौ मृतौ ॥ १९ ॥
दोषादानक्रियावीप्सारम्भाध्ययनपूजने ।
[8]कृष्णाचार्यैः कृताः श्लोका उपसर्गार्थसंग्रहे ॥ २० ॥

उपकुम्भं तिष्ठति । उपकरोति मित्रेभ्यः । उपकीर्णः पांशुभिः । उपदिशति शिष्येभ्यः । उपरतः । उपघातः । उपहरत्यर्थं देवदत्ताय । उपचारः । देवं देवमुपचरति । उपक्रमते भोक्तुम् । उपाध्यायादधीते । उपचितः[9] पिता पुत्रेण ।

समाप्ता[10] सोदाहरणोपसर्गवृत्तिः ।

**विरामः** । विरतिर्विरामः । स चात्र शब्दानुशासनप्रसङ्गाद्वर्णानामित्याह । **वर्णानामिति** ।

---

१. °संज्ञं $B_2$. २. प्रतिज्ञातम् $Bc_1$, $Dc_4$. ३. प्रतिनिधिः $Dc_1$. ४. प्रतिश्यायः $Bc_1$, $Dc_3$; प्रतिश्यामः $Dc_4$. ५. गतिः $Dc_2$; गच्छन्ति $Dc_4$. ६. परिष्करोति $Bc_1$, $Dc_3$. ७. देवो वृष्टः $Dc_3$. ८. This and the following line—अष्टादशोदाहृता हि सोदाहरणरूपतः are given after उपचितः पिता पुत्रेण $Dc_2$, $Dc_4$. ९. उपचारितः $Dc_4$. १०. $Dc_2$, $Dc_4$ drop this line.

**परः संनिकर्षः संहिता ॥ १।४।१०९ ॥**

[1]अतिशयितः संनिधिर्वर्णानां यः[2] स संहितासंज्ञः स्यात् ॥

**सुप्तिङन्तं पदम् ॥ १।४।१४ ॥**

सुबन्तं तिङन्तं च[3] पद[4]संज्ञं स्यात् ॥

---

अतिशयित इति । अनेन परशब्दोतिशयेत्र[5] वर्तत इत्युक्तम्[6] । ततश्चान्यार्थो[7] न । संनिधिरित्यनेन संनिकर्षशब्दो न संश्लेषवचनस्तस्य वर्णेष्वसंभवात् किं तु प्रत्यासत्तिवचन इत्युक्तम् । स चातिशयितः संनिधिरीदृशः । यावता कालेन मात्राया अर्धमुच्चार्यते तावता[8] काल-व्यवधानेन वर्णानामुच्चारणम् । तस्य च कालस्यातिसूक्ष्मत्वाद् दध्यत्रे-त्यादौ वर्णाः संसृष्टा इव भान्ति ।

सुप्तिङ् । तिङा साहचर्यात् सुबित्यपि प्रत्याहारस्य ग्रहणं न सप्तमीबहुवचनस्य । 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति वचनाद्विनाप्यन्तग्रहणं[9] तदन्तस्यैव संज्ञासिद्धावप्यन्त ग्रहणमन्यत्र[10] संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधार्थम् । तेन तरप्तमोरेव[11] घसंज्ञा न[12] तदन्तस्य[13] ।

---

१. वर्णानां योतिशयितः संनिधिः स संहिता° $D_1$. २. यः सः dropped $B_1$. ३. Dropped $B_2$, $D_3$. ४. पदं $D_1$. ५. अत्र dropped $Nc_1$, $Dc_1$. ६. इत्युक्तं भवति $Dc_3$. ७. °श्चान्यार्थे न $Dc_2$, $Bc_1$. ८. तावत्काल° $Dc_3$, $Dc_4$. ९. °ग्रहं $Nc_2$. १०. °ग्रहणविधिरन्यत्र $Dc_2$. ११. तरप्तमपो° $Bc_1$, $Dc_3$, $Dc_4$. १२. स्यान्न $Dc_2$, $Nc_1$, $Bc_1$, $Dc_4$. १३. After this $Bc_1$, $Dc_2$, and $Dc_4$ have—अत्र केचिच्चोदयन्ति । युक्तं तिङिति प्रत्याहारग्रहणम् । अन्यस्य तिङ्शब्दस्याभावात् । सुबिति तु कथं प्रत्याहारग्रहणं यतः सप्तमी-बहुवचनं सुप् अतस्तस्य सुपो ग्रहणं कुतो न स्यात् । अत्रोच्यते । 'न ङिसंबुद्ध्योः' इति निषेधात् । तथा हि यद्येतत् सप्तमीबहुवचनस्य ग्रहणमिष्टं स्यात्तदा ङौ संबुद्धौ च परतः पदत्वाभावान्नलोपनिषेधोनर्थकः । तस्मान्नलोपनिषेधान्यथानु-पपत्त्या प्रत्याहारग्रहणमेवेदमिति व्यवस्थितम् ।; After न तदन्तस्य $Dc_3$ has—ब्राह्मणि कालितरेत्यत्र अतिशयेन काली कालितरेत्यत्र तरप्निमित्तो ह्रस्वो भवति । अन्तग्रहणे न भवति ।

**हलोनन्तराः संयोगः ॥१।१।७॥**

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः

**चादयोसत्त्वे ॥१।४।५७॥**

अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥

**प्रादयः ॥१।४।५८॥**

प्रादयोपि[1] निपातसंज्ञाः स्युः ॥

---

हलः । समुदायः संज्ञी तेन निर्यायादित्यत्र 'वान्यस्य' इत्येत्वं न । प्रत्येकसंज्ञापक्षोपि[2] भाष्ये समर्थितः । अन्तरं व्यवधानं तच्च विजातीयैरेव स्यादित्याह । अज्भिरिति[3] । हल इति जातौ बहुवचनम् । तेन द्वयोर्बहूनां च संज्ञा स्यात् । हलं[4] इति किम् । 'तनोतेर्डउः सन्वच्च' इति तितउ छत्रम् । हल इत्यनुक्तावुंकारस्य[5] 'संयोगान्तस्य' इति लोपः स्यात् । अनन्तराः किम् । पनसम् । अत्र 'स्कोः—' इति सलोपः स्यात् ॥

चादयः । 'प्राग्रीश्वरान्निपाताः' इति सूत्रेण 'अधिरीश्वरे' एतत्पर्यन्तं निपाताधिकारः क्रियते । ततो निपात इत्यनुवर्तत इत्यभिप्रेत्याह । **निपातसंज्ञा** इति । इदं तदिति सर्वनामप्रत्यवमर्शयोग्योर्थो द्रव्यम् । तथोक्तं भर्तृहरिणा प्रकीर्णकाण्डे ।

'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोर्थो भेद्यत्वेन विवक्षितः ॥'

भेद्यत्वेन विशेष्यत्वेनेत्यर्थः । चादीनव्ययप्रकरणे वक्ष्यति । असत्त्वे किम् । पशु वै पुरुष इत्यत्र पशुशब्दस्य चादित्वेपि जातिव्यवच्छिन्नद्रव्यवाचित्वान्निपातत्वं न ।

प्रादयः । अद्रव्यार्था इत्येवं[7] । पृथग्योगकरणं 'उपसर्गाः क्रियायोगे' इत्यत्र प्रादीनामेवानुवृत्तिः स्यान्न चादीनामित्येवमर्थम् ।

---

१. प्रादयो निपाताः P; $D_2$; प्रादयोपि निपाताः $C_1$, $D_1$, $B_2$, $D_3$. २. अपि dropped $Dc_2$. ३. °रित्यादि $Dc_3$. ४. हलः किम् $Dc_3$. ५. अनुस्वारस्य उकारस्य च $Dc_2$. ६. व्यवस्थितः $Dc_1$. ७. एव $Dc_3$.

**आद्यन्तौ टकितौ ॥ १।१।४६ ॥**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तयोः स्तः ॥

**मिदचोऽन्त्यात्परः ॥ १।१।४७ ॥**

अन्त्यादचः परो मित्[1] स्यात् ॥

**अनेकाल् शित् सर्वस्य ॥ १।१।५५ ॥**

अनेकालादेशः शिच्च[2] सर्वस्य[3] स्यात्[4] ॥

**ङिच्च ॥ १।१।५३ ॥**

ङिदनेकालप्यन्त्यस्यैव[5] स्यात् ॥

---

आद्यन्तौ । टकारककारावितौ ययोस्तौ टकितौ । इत् शब्दः प्रत्येकमभिसंबध्यते । टकारे अकारः सुखोच्चारणार्थः । सिंहावलोकित[6]-न्यायेन वक्ष्यमाणं 'षष्ठी स्थाने योगा' इत्यतः षष्ठीग्रहणमनुवर्तते । अथवा आद्यन्तावववयवौ तौ चावयविनमपेक्ष्य वर्तेते । ततश्चावयवाव-यविसंबन्धेवयवी षष्ठ्या निर्देष्टव्य इति सामर्थ्यात् षष्ठी निर्दिष्टस्येति स्यादिति सर्वमभिप्रेत्याह । टित्कितौ यस्योक्तौ तस्येति । 'षष्ठी स्थाने योगा' इत्यस्याः परिभाषाया अयमपवादस्तेनेयमपि परिभाषा ॥

मिदचः । अन्त्यादित्यादि । सन्निविष्टानामचां मध्येऽन्त्यादचः परो मित् स्यादित्यभिप्रायः ॥

अनेकाल् । सर्वस्येति । षष्ठीनिर्दिष्टस्य सर्वस्येति भावः । शितः शकारेणानेकाल्त्वेपि पृथग्[7] ग्रहणं 'नानुबन्धकृतमनेकाल्त्वं स्यात्' इति ज्ञापनार्थम् । तेन 'दिव औत्' इत्यादौ सर्वादेशो न ॥

---

१. मित्संज्ञः $D_5$. २. च dropped $B_2$. ३. सर्वस्यैव $D_1$, $D_4$. ४. After it—नानुबन्धकृतमनेकाल्त्वमिति शिद्ग्रहणम् । P, C, $B_1$, $D_3$ (इति शिद्ग्रहणं dropped in $D_3$.) ५. °ऽन्त्यस्यैव $D_1$, $D_2$. ६. °वलोकन° $Dc_2$. ७. पृथक्स्थान्याश्रयणं ग्रहणं $Nc_1$.

**स्थानिवदादेशोनल्विधौ ॥ १।१।५६ ॥**

धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत् स्युर्न त्वल्विधौ ॥

इति संज्ञ्युपयोगिसंज्ञाप्रकरणम् ॥

---

**स्था[1]निवत्** । स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशो न स्यादिति कार्यातिदेशो[2]ऽयमारभ्यते । स्थानिना तुल्यं वर्तते स्थानिवत् । स्थान्याश्रयाणि कार्याण्यादेशेऽपि स्युरित्यर्थः । अतिदेशस्य प्रयोजनान्याह । **धात्वङ्गे**त्यादिना । धात्वादेशो धातुवत् । 'अस्तेर्भूः' । भविता । धातुत्वात् तृच् । केन[3] । किमोऽङ्गस्यादेशः कस्तस्याङ्गवत्त्वादिनः । प्रकृत्य । कृतः क्त्वो ल्यप् तस्य कृत्त्वात् तुक् । [4]अद्यतनम् । योस्तद्धितस्यानस्तस्य तद्धितत्वात् प्रातिपदिकत्वम् । [5]प्रस्तुत्य । अव्ययस्य क्त्वो ल्यप् तस्याव्ययत्वात् सुपो लुक् । रामाय । सुपो ङेर्यः । तस्य सुबन्तत्वाद् दीर्घः । भवताम् । तसस्तिङस्तान्तस्य च तिङ्त्वात् पदत्वम् । ग्रामो वः स्वम् । युष्माकमिति पदस्य वः । तस्य पदत्वाद्रुत्वमित्यादीनि प्रयोज्या[6]नि । **न त्वल्विधा**विति । अलाश्रितो विधिरल्विधिरित्युत्तरपदलोपी समासः । ततश्च योऽलि विधिर्यश्चालो विधिर्यश्चालः परस्य विधिर्यश्चालां विधिः स सर्व एवालाश्रय इति सर्वत्र निषेधः । स्थानिनो योऽल् तदाश्रयाणि कार्याणि वर्जयित्वेत्यर्थः । कानि पुनरलाश्रयाणि कार्याणि यानि वर्णमात्राश्रयाणि यानि पुनः समुदायाश्रयाणि तां[7]न्यनलाश्रयाणि । वत्करणं स्थान्यादेशस्य संज्ञा मा विज्ञायीत्येवमर्थम् । ततश्च स्थान्याश्रयं कार्यं स्थानिन्यपि स्यादादेशाश्रितमादेशेऽपि स्यात् । आहत आवधिष्टेत्युभयोरपि 'आङो यमहनः' इत्यात्मनेपदं भवति । अन्यथा स्थानिनो हनः संज्ञात्वात्

---

१. स्थानिवदिति $Dc_3$. २. °देशः समारभ्यते $Dc_2$. ३. 'किमः कः' । केन । $Bc_1$. ४. For अद्यतनम्...प्रातिपदिकत्वम् $Dc_4$ has दाधिकम् । दादेशस्यैकस्य तद्धितत्वात् प्रातिपदिकत्वम्. ५. Before it प्रकृत्य K. ६. प्रयोजनानि $Dc_3$, $Dc_4$. ७. न तान्यलाश्रयाणि $Bc_1$, $Dc_1$.

तस्मादात्मनेपदं न स्यात् । किं तु तत्प्रत्यायितादेशात् संज्ञिनो वधशब्दादेव स्यात्[1] । आदेशग्रहणमानुमानिकस्याप्यादेशस्य स्थानिवद्भावार्थम् । 'एरुः' । पचतुः । अत्र ते स्तुरित्यानुमानिक आदेशस्तस्य स्थानिवत्त्वात् पदसंज्ञा भवति । ननु च[2] उकारमात्रमादेशोस्तु किमनुमानेन । एवं हि 'एरुः' इति यथाश्रुतं व्याख्यातं स्यात् । आदेशग्रहणं च न कार्यम् । एकदेशविकृतस्यानन्यत्वात् पदसंज्ञा च[3] स्यात् । एवं तर्ह्येतदेवादेशग्रहणं लिङ्गमेकदेशविकारोत्र शास्त्रे नाश्रीयत इत्यस्यार्थस्य । ततश्चैतदुपपन्नम् ।

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं[4] नोपपद्यते ॥' इति ।

'सेर्ह्यपिच्च' इति ज्ञापकादनुबन्धकार्याणामल्विधित्वे[5]प्यतिदेशः स्यादेव । ततश्च प्रनुत्येत्यत्र[6] कित्त्वाश्रयो गुणनिषेधः स्यात् । अनल्विधाविति किम् । द्यौः । 'हल्ङ्याब्—' इति सुलोपो न । प्रपठ्य । अत्र वलादिलक्षण इण्न ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलः **संधिसंज्ञाप्रसङ्गः** ॥

---

१. After it—तत्करणे च सत्यतिदेशोयं भवति । तत्र चान्यकार्यमन्यवत् संपाद्यते न तु स्वाश्रयं निवर्त्यते । आदेश° &c. $Dc_2$. २. च dropped $Dc_1$. ३. Dropped $Dc_3$. ४. अन्यत्वं $Nc_1$, $Nc_2$. ५. °मल्विधावपि $Dc_4$. ६. प्रस्तुत्ये° $Dc_4$.

# अथ संधिः ॥

**इको यणचि ॥ ६।१।७७ ॥**

इकः स्थाने यण् स्यादचि[2] संहितायां विषये[3] ॥

अथ संधिप्रकरणमुच्यते । अथ संधिरिति । अथेति संध्युपयोगिनीनां संज्ञानां प्रकरणादनन्तरमचां हलां विसर्गस्य स्वादीनां च संधिरुच्यते । तत्र तावदच्संधिः[4] कथ्यत इत्यर्थः । इकः । **इकः स्थान** इति । एतच्च 'षष्ठी स्थाने योगा' इत्यनया परिभाषया लभ्यते । अस्यास्त्वयमर्थः । अत्र शास्त्रे या षष्ठ्यनियतसंबन्धा श्रूयते सा स्थानेयोगैव स्यात् । स्थाने योगो यस्याः सा स्थानेयोगा । सप्तम्या अलुक् । स्थानशब्दः प्रसङ्गवाची । योगशब्दः संबन्धवाची । प्रसङ्गे संबन्धस्य निमित्तभूते सति ज्ञेया । स च संबन्धः स्थान्यादेशभावलक्षणस्ततश्चायमर्थः । इकः प्रसङ्गे यण् स्यादचि परतः । अचीति सप्तमी । ततश्च 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति[5] परिभाषा प्रवर्तते[6] । तस्यास्त्वयमर्थः । सप्तमीनिर्देशे पूर्वस्यैव कार्यं स्यान्नोत्तरस्य । निर्दिष्टग्रहणमानन्तर्यार्थम् । निरन्तरं दिष्टोऽव्यवधानेनोच्चरित[7] इत्यर्थः । अग्निचित् अत्र इति व्यवहितस्य मा भूत् । संहितायां विषय इति । 'संहितायाम्' इत्यधिकारे या सप्तमी सा विषयसप्तमीति भावः । इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनाय यणादेशो वाच्यः* । हो३ ई[8] इदम् । हो३ यिदम् ॥

१. अच्संधिः $D_2$. २. °दचि परे $D_4$. ३. विषये dropped C. ४. °दच्चः संधिः $Dc_2$. ५. Dropped $Dc_1$. ६. वर्तते $Dc_3$. ७. °नोच्चारित $Bc_1$. ८. ई $Dc_3$.

**यथासंख्यमनुदेशः समानाम् ॥१।३।१०॥**

समेषूद्देशिषु[1] समानां[2] विधानं यथाक्रमं स्यात् ॥ सुध्य् उपास्य इति[3] स्थिते

**अनचि च ॥८।४।४७॥**

अचः परस्य यरो[4]नाचि परे द्वे स्तः[5] ॥

**अचः परस्मिन् पूर्वविधौ ॥१।१।५७॥**

परनिमित्तो[6]जादेशः पूर्वविधौ कार्ये[7] स्थानिवत् स्यात् ॥

---

**यथासं°** । **समेष्वित्यादि** । समसंख्याकेषूद्देशिषु समसंख्यानां विधेयानां यथाक्रमं[8] क्रममनतिक्रम्य प्रथमस्य प्रथमो द्वितीयस्य द्वितीय इत्यादि स्यादित्यर्थः । **सुध्य् उपास्य** इति । [9]स्थित इत्यर्थः । सुधी उपास्य इति स्थिते 'इको यणचि' इति यणादेशे 'यथासंख्यम्–' इति ईकारस्य यकारे कृते सुध्य् उपास्य इति स्थित इत्यर्थः ॥

**अनचि च** । शर उत्तरस्य खयो द्वे स्त इति वाच्यम् * । स्थ्थाली । अथवा खय[10] उत्तरस्य शरः । वत्स्सः । अवसाने च यरो द्वे स्त इत्येके । वाक्क्[11] । वाक् । एतच्च 'अनचि' इत्यस्माल्लभ्यते ।

**अचः** । सूत्रमिदमल्विधौ स्थानिवद्भावार्थम् । अजादेशः परनिमित्तः पूर्वविधौ स्थानिवदेव यथा स्यात् । मा भूत् स्वयंनिमित्तमिति नियमार्थ[12]मयमारम्भः । तथा च पटयतीत्यत्र [13]टिलोपे कृते प्राप्तोपधावृद्धिर्न । एवमत्र बहूनि स्वाश्रये[14]निवृत्तेरुदाहरणानि । अत एव द्विर्वचनविधौ स्थानिवत्त्वनिषेधः । **परस्मिन्निति** निमित्तसप्तमी । **पूर्वविधाविति** विषयसप्तमीत्यभिप्रेत्याह । **परनिमित्त** इत्यादि ।

---

१ समेषूद्देशिषु dropped $B_1$. २. समानानां $B_2$. ३. इति स्थिते dropped $D_2$, Com. ४. यरो द्वे स्तोनचि परे $D_1$, $D_4$. ५. इति द्वित्वे प्राप्ते after it in C, $B_2$. ६. °निमित्तो योजादेशः B, C, $D_2$, $D_3$. ७. कार्ये कर्तव्ये $D_2$. ८. Before it—विधानं $Bc_1$. ९. जाते $Dc_2$, $Nc_2$. १०. खयः $Bc_1$. ११. त्वक् । त्वक्क् । $Dc_4$. १२. नियमार्थोप्यारम्भः $Bc_1$, नियमार्थमप्यारम्भः $Dc_3$. १३. अणादिष्टं कार्यं प्रातिपदिकस्येति टिलोपे $Dc_2$. १४. °निमित्ते° $Nc_1$; °निमित्ते उदा° $Dc_1$.

## इति द्वित्वाप्राप्तौ

पूर्वस्य विधिः पूर्वविधिः । विधीयत इति विधिरिति कर्मसाधनो विधिशब्दः । तदा पूर्वस्येति शेषे षष्ठी । भावसाधनो वा । विधानं विधिरिति । तदा पूर्वस्येति कर्मणि षष्ठी । उभयमपि यथासंभवमङ्गीक्रियते । तच्च यथास्थानं व्याख्यास्यामः । पूर्वत्वं त्वजपेक्षया आदेशापेक्षया निमित्तापेक्षया वा । तत्र त्रिष्वपि पक्षेषु दोषा उद्भाविता निराकृताश्च ते भाष्यन्यासादेरवगन्तव्याः । पदमञ्जरीकारमते विधिशब्दः कर्मसाधन एव । अजपेक्षयैव पूर्वत्वं ततोऽवगन्तव्यम् । अचः किम् । आगत्य । 'वा ल्यपि' इत्यनुनासिकलोपः । परनिमित्तस्तुकि कार्ये न स्थानिवत् । परस्मिन् किम् । वैयाघ्रपद्यः । अपरनिमित्तः पादान्तलोपः पदभावं न प्रतिषेधयति । पूर्वविधौ किम् । हे गौः । वृद्धिरजादेशः संबुद्धिलोपे कार्ये स्थानिवद् मा भूदिति । विधिग्रहणं किम् । न स्थानिवदादेश इत्यतोऽनुवर्तते । उच्यते । समासपरिग्रहार्थं पूर्वस्य विधिः पूर्वस्माद्विधिरिति । प्रथमसमासस्य प्रयोजनं वव्रश्च इत्यत्र 'उरत्' अत्त्वे 'न संप्रसारणे संप्रसारणम्' इति वस्य 'लिट्यभ्यासस्य' इति प्राप्तसंप्रसारणनिषेधः स्थान्यलाश्रयः[७] । द्वितीयप्रयोजनमपीपचन्नित्यत्र अपीपच् अ अन् इति स्थिते अन्त्याकारस्य चङश्च 'अतो गुणे' तस्य परं प्रत्यादिवत्त्वात् झिग्रहणेन ग्रहणे 'सिजभ्यस्त—' इति जुस्प्राप्तौ णिलोपस्यैकादेशस्य वा[१०] स्थानिवत्त्वान्नेति[११] । द्वित्वाप्राप्ताविति । सुध्य् उपास्य इत्यत्रेकारस्य यकारः स[१२] परो योऽच् उकारस्तन्निमित्तकः पूर्वस्य धकारस्य द्वित्वे कार्ये स्थानिवत् स्यात् । ततश्च 'अनचि च' इति द्वित्वं नेति प्राप्ताविल्यर्थः ॥

१. च Bc₁. २. च dropped Dc₄. ३. तत्त्वतो° Bc₁; तत्त्वतो Dc₃. ४. परस्मिन्निति Dc₃. ५. प्रतिषेधति Dc₂. ६. From पूर्वविधौ to मा भूदिति dropped Bc₁, Dc₃. ७. After it—अस्माद्वचनात् स्यात् Dc₃. ८. द्वितीयसमासस्य प्रयोजनम् Dc₂. ९. प्रत्यादिवद्भावात् Dc₁. १०. Dropped Bc₁. ११. After स्थानिवत्त्वान्नेति Bc₁, Dc₃ have—पूर्वविधौ किम् । हे गौः । वृद्धिरजादेशः संबुद्धिलोपे कार्ये स्थानिवन्मा भूदिति । इति द्वित्वाप्राप्ताविति । १२. तत्परो य उकारः सोऽच् तन्निमित्तकः Dc₂. १३. द्वित्वाप्राप्ता° Bc₁, Dc₃, Dc₄.

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घ-

न पदान्त। पूर्वेणातिप्रसक्तः स्थानिवद्भाव एषु विधिषु निषिध्यते। अस्य सूत्रस्योदाहरणानि तत्तत्स्थाने व्याख्यास्यति स्वयमेव ग्रन्थकृत्। तथाप्यत्र स्पष्टीकरणार्थं लिख्यन्ते। पदान्ते। कौ स्तः। अत्रास्तेरल्लोपस्य स्थानिवत्त्वाभावादाव् न। द्विर्वचने तु स्थानिवत्त्वाभावः सुध्युपास्य इत्यत्रैव। वरे। यायावरः। यातेर्यङन्ताद्वरच्यतो लोपे च[1] कृते अतो लोपो न स्थानिवत् 'आतो लोप इटि च'[2] इत्यालोपे कार्ये। ननु च वरे इति सप्तम्या लुका भाव्यम्। न। निपातनादलुक्। अथवा [3]ईकारप्रश्लेषोयं तेनामलक्याः फलमामलकमित्यत्र मयटो लुकि कृते 'लुक् तद्धितलुकि' इति ङीषो[4] लुकि कृते तस्य स्थानिवत्त्वात्[5] 'यस्येति च' इत्यलोपः[6] स्यात्। तस्मात्[7] तस्य स्थानिवत्त्वं स्यादल्लोपे कार्ये। लुकस्तु पौर्वापर्यं स्थानिवद्द्वारकम्[8]। अलुक्पक्षे तु नेति योगविभागात् सिद्धम्। यलोपे। कण्डूयतेः क्तिन्। कण्डूतिः। 'लोपो व्योर्वलि' इति यलोपे कार्ये अतो लोपो न स्थानिवत्। स्वरे। चिकीर्षकः। चिकीर्षते। ण्वुलि ईकारस्य[9] 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वे कार्ये अतो लोपो न स्थानिवत्। सवर्णानुस्वारयोः। शिण्ढि। शिंषन्ति। अनुस्वारपरसवर्णौ प्रति श्नस्याल्लोपो न स्थानिवत्। दीर्घे। प्रतिदीव्नः[11]। अल्लोपो न स्थानिवत्

---

१. यलोपे च Bc1, Dc3. २. Dropped Dc3; अतो लोपे यलोपे च कृते Dc4. ३. इकार Dc3. ४. ङीपो Dc3. ५. स्थानिवद्भावात् Dc3. ६. इत्यल्लोपः Dc4. ७. Before it Bc1, Dc3, Dc4 have—तस्मादीकारपरतो यो विधिस्तं प्रति न स्थानिवत्। ईकारलुक् हि परं तद्धितलुकमाश्रित्य जातः (ईकारे परतो Dc3.). ८. स्थानिद्वारकम् Bc1. ९. Dropped Dc3, Dc4. १०. ईकारस्य Dc3. ११. प्रतिदीव्ना Bc1.

**–जश्चर्विधिषु ॥ १।१।५८ ॥**

पदान्ते द्विर्वचनादौ च[1] कर्तव्ये परनिमित्तोजादेशो[2] न[3] स्थानिवत् स्यात् । इति धकारस्य[4] द्वित्वम्[5] ।

**झलां[6] जश् झशि ॥ ८।४।५३ ॥**

झलां जश्[7] स्यात् झशि[8] ॥

**स्थानेन्तरतमः ॥ १।१।५० ॥**

स्थाने प्राप्यमाणानां मध्ये[9] सदृशतम आदेशः स्यात् ॥

---

'हलि च' इति दीर्घविधौ । जशि । सग्धिः[10] । समानाग्धिः । घसेः क्तिनि 'घसिभसोर्हलि च' इत्युपधालोपो 'झलां जशि' इति जश्त्वं प्रति न स्थानिवत् । चरि । जक्षतुः । घसेरतुसि 'गमहन—' इत्युपधालोपः 'खरि च' इति चर्त्वं प्रति न स्थानिवत् । स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् । इति **धकारस्येति** । द्विर्वचनं प्रति स्थानिवद्भाव-निषेधात् सुध्य् इति वर्तमानस्य धकारस्य 'अनचि च' इति द्वित्वमित्यर्थः ॥

**स्थाने** । परिभाषेयमादेशनियमार्था न विधिरत एवाह । **स्थाने प्राप्यमाणानामिति** । सदृशतमत्वं तु स्थानार्थगुणप्रमाणैः । स्थानेन । दण्डाग्रम् । कण्ठ्ययोरतोः कण्ठ्य एव दीर्घ आकारः । अर्थेन । वातण्ड्ययुवतिः । वतण्डशब्दादपत्ये यञ् । तस्य 'लुक् स्त्रियाम्' इति लुक् । 'शार्ङ्गरवाद्यञो ङीन्' वतण्डी चासौ युवतिश्चेति 'पोटा—' इत्यादिना समासः । 'पुंवत् कर्मधारय—' इति पुंवत्त्वे कार्ये सर्वः पुंशब्दः प्रसक्तः । अत्रानेन वतण्डापत्यार्थे वातण्ड्यशब्दो

---

१. Dropped $B_2$. २. °मित्तो योजादेशः B, C, $D_2$, $D_3$. ३. पूर्वविधौ कार्ये न स्थानिवत् $D_3$, $D_4$ (स्थानिवत् स्यात् $D_4$). ४. धकारद्वित्वम् $B_1$. ५. After it—पुनर्द्वित्वे प्राप्ते C. ६. C has 'झरो झरि सवर्णे' and its Vṛitti before it. ७. जशः स्युः $B_2$. ८. झशि परे $D_1$, $D_4$, $B_1$, $B_2$. ९. वर्णानां मध्ये $B_1$, $B_2$, C, $D_5$. १०. समानाञ्धिः । सञ्धिः । $Dc_3$.

इति पूर्वधकारस्य दकारः । पुनर्द्वित्वे प्राप्ते[1]

**झरो झरि सवर्णे ॥ ८।४।६५॥**

हलः परस्य[2] झरो लोपः स्यात् सवर्णे झरि इति मध्यदकार[4]-लोपः[5] ॥

---

भवति । अर्थतः सादृश्यात् । गुणेन पाकः । 'चजोः कु घिण्यतोः' इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारः स्यात् । गुणेनान्तरतम्यात् । प्रमाणेन । अमुष्मै । अमूभ्याम् । 'अदसोसेः— ' इति ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः । प्रमाणेनान्तरतम्यात् । 'षष्ठी स्थाने' इत्यतः 'स्थाने' इत्यनुवर्तमानेपि पुनः स्थानग्रहणं यत्रानेकमान्तरतम्यं संभवति[6] तत्र स्थानत एवान्तरतम्यं बलीयो यथा स्यादिति । चेता । स्तोता । प्रमाणेनाकारो गुणः प्राप्तः । तत्र स्थानत एवान्तर्यादेकारोकारौ स्तः । तमग्रहणं किम् । वाग्घरिः । 'झयो होन्यतरस्याम्' इति हकारस्य पूर्वसवर्णे कार्ये सोष्मणो हकारस्य सोष्मत्वाद् द्वितीयाः प्राप्ताः । नादत्वात्[7] तृतीयाः । तमग्रहणाद्ये नादवन्तः सोष्माणस्ते[8] भवन्ति चतुर्थाः । इति पूर्वधकारस्येति । 'झलां जश्' इति जश्त्वे कार्ये स्थानत आन्तरतम्याद् दन्त्यो दकारो दन्त्यस्य[10] धकारस्य स्यादित्यर्थः । **पुनर्द्वित्व** इति । 'अनचि च' इति दस्य द्वित्वं[11] इत्यर्थः । एतच्च व्यक्तिपदार्थाश्रयेणोक्तम्[12] । जातिपदार्थपक्षे तु सकृत्प्रवृत्त्यैव चरितार्थत्वान्न पुनः[13] प्रवृत्तिः ॥

झरो । 'झयो होन्यतरस्याम्' इत्यतः 'अन्यतरस्याम्' इत्यनुवर्तते । तेन वा लोप इति वृत्तिकारमतम् । झर इति किम् । शार्ङ्गः । झरीति

---

१. पुनर्द्वित्वे प्राप्ते dropped C, $D_5$. २. Dropped K, $D_1$. ३. उत्तरस्य $D_1$. ४. मध्यमधकारस्य लोपः C ; मध्यमदकारलोपः $D_2$, $D_3$, $D_5$. ५. दकारस्य लोपः $D_2$. ६. संभवति dropped $Dc_3$, $Dc_4$. ७. नादवत्त्वात् $Dc_3$. ८. सोष्माणो हकारस्य ते भवन्ति चतुर्थाः । $Dc_3$. ९. Dropped $Nc_1$. १०. दन्त्यधकारस्य $Nc_1$. ११. द्वित्वमित्यर्थः $Dc_2$, $Nc_1$. १२. °श्रयणेनोक्तम् $Dc_3$. १३. पुनः पुनः $Dc_1$.

**संयोगान्तस्य लोपः ॥ ८।२।२३॥**

संयोगान्तस्य पदान्तस्य लोपः स्यादिति लोपे[1] प्राप्ते यणः प्रतिषेधो वाच्यः[2][3] * । सुध्युपास्यः । मध्वरिः । धात्रंशः ।

---

किम् । प्रियपञ्च्ञाम् । अल्लोपस्य पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवद्भावनिषेधाच्चकारस्य अकारे लोपः स्यात् । सवर्णे इति किम् । तर्प्ता । सवर्णग्रहणसामर्थ्यात् संख्यातानुदेशो न । सवर्णमात्रे लोपो भवति ॥

**संयोगान्तस्येति**[5] । संयोगान्तः सन्नेव यः पदान्तस्तस्येत्यर्थः । **यण** इति । यणादेशस्य संयोगान्तलोपप्रतिषेधो वाच्यो[6] व्याख्येयः । तत्रेदं व्याख्यानम् । यणादेशो बहिरङ्गस्तेन 'असिद्धं बहिरङ्गमन्तरङ्गे' इति तस्यासिद्धत्वात् संयोगान्तलोपो न स्यादिति । **सुध्युपास्य** इति । सुधिया शोभनबुद्धिना पुंसा अथवा शोभनया बुद्ध्या उपास्यः । कथितायां प्रक्रियायां कृतायां श्लिष्टोच्चारणे सत्येवं भवति[7] सुध्युपास्य इति । **मध्वरिरिति** । मधोररिर्मध्वरिः । मधु अरि इति स्थिते 'इको यणचि' इति यणादेशे 'यथा संख्यम्—' इत्युकारस्य वकारे कृते 'अनचि च' इति धस्य द्वित्वे प्राप्ते 'अचः परस्मिन्—' इति स्थानिवत्त्वाद् द्वित्वाप्राप्तौ 'न पदान्त—' इति स्थानिवत्त्वनिषेधे[8] द्वित्वम् । 'झलां जश्' इति पूर्वधकारस्य जश् । 'स्थानेन्तरतमः' इति दकारः । पुनर्द्वित्वम् । 'झरो झरि' इति मध्यमदकारलोपः । संयोगान्तस्य लोपे यणो निषेधः संयोगान्तलोपस्य[9] । ततः श्लिष्टोच्चारणम् । **धात्रंश** इति । धातुरंशो धात्रंशः । धातृ अंश इति स्थिते यण् । रेफः । द्वित्वम् । तकारस्य झशोभावाज् 'झलाम्—'

---

१. यण्लोपे $B_2$. २. वक्तव्य; C, $D_2$, $D_3$. $D_5$. ३. After it—अनच् परेण संयोऽज्यम् $B_2$; पुनर्द्वित्वे प्राप्ते 'झरो झरि सवर्णे' and its वृत्ति (मध्यमदकारलोपः)। सुध्युपास्यः &c. $D_5$. ४. पूर्वत्रासिद्धीये $Dc_1$, $Dc_3$, $Dc_4$. ५. संयोगान्तस्येत्यादि $Bc_1$, $Dc_3$. ६. वक्तव्यः $Dc_4$. ७. संभवति $Dc_3$. ८. °निषेधः। द्वित्वम् $Dc_4$. ९. संयोगान्तस्य $Dc_4$.

लाकृतिः ॥

**अचो रहाभ्यां द्वे ॥ ८।४।४६॥**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे स्तः[1]। पुनर्द्वित्वे प्राप्ते

---

इति न प्रवर्तते। **लाकृतिरिति**। ऌ इत्यस्याकृतिरिवाकृतिर्यस्य स लाकृतिः। अथवा ऌ इत्यस्याकृतिः[3]। ऌकारस्य लकारो यण्। अचः परत्वाभावाद्[4] द्वित्वादि न। **अचो रहाभ्याम्**। अचः किम्। ह्नुते। **पुनर्द्वित्व इति**। हरि अनुभव इति स्थिते 'इको यणचि' इति यणादेशे 'अचो रहाभ्याम्–' इति यकारस्य द्वित्वे हर्य्य् अनुभव इति स्थिते 'अचो रहाभ्याम्–' इति पुनर्द्वित्वे प्राप्त इत्यर्थः। एवं स्थिते त्रयो यकारा भवन्ति ॥

स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयं प्रसङ्गाद् व्याख्यायते। 'नादिन्याक्रोशे पुत्रस्य' ॥ ८।४।४८॥ अचः परस्य पुत्रयरो[5]नचि न द्वे स्त आदिन्यां परत आक्रोशे। पुत्रादिनी भव। 'हतजग्धपरे वा'। पुत्रहती। पुत्रहती। पुत्रजग्धी। पुत्रजग्धी। शरि[6] परे पौष्करसादेर्मते न चयो[7] द्वितीयाः स्युः। तस्य थः। वथ्सः। कस्य खः। ख्षीरम्[8]। पस्य फः। अफ्सरसः। 'त्रिप्रभृतिषु शाकटायनस्य' ॥ ८।४।५०॥ त्र्यादिषु वर्णेषु न द्वे। इन्द्रः। उष्ट्रः। 'सर्वत्र शाकल्यस्य' ॥ ८।४।५१॥ अस्य

---

१. After it—रेफस्य यरन्तर्भावे सति यत्कार्यमुक्तं तत्साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः। P; C, $D_1$, $D_5$; $B_1$ has रवर्जितस्यैवेष्यते। २. पुनर्द्वित्वे प्राप्ते dropped $D_1$, $D_3$ which has हर्य्यनुभवः instead; प्राप्ते dropped $B_1$, $D_1$. ३. इति dropped $Dc_4$. ४. परत्वाद्यभावात् $Ne_2$. ५. पुत्रस्य यरो $Dc_3$. ६. Before it—चयो द्वितीयाः शरि पौष्करसादेः। $Dc_3$. ७. मयो $Bc_1$, $Dc_4$. ८. क्ख्षीरम् $Dc_3$, $Dc_4$.

**हलो यमां यमि लोपः ॥८।४।६४॥**

हलः परस्य यमो लोपः स्याद्यमि[1] । इति पूर्वयलोपः[2][3] । द्वित्वविधानाद्[4] द्वावेव शिष्येते[5] । हर्य्यनुभवः[6] । न ह्यस्ति ।

[7]**दीर्घादाचार्याणाम् ॥८।४।५२॥**

सर्वेषां[8] मते दीर्घात्[9] परस्य यरो न द्वे स्तः। दात्रम्। पात्रम्[10] ॥

---

मते सर्वत्र द्वे न स्तः। अर्कः। 'दीर्घादाचार्याणाम्'॥ ८।४।५२॥ दीर्घात् परस्य न द्वे। दात्रम्। हलः। अत्रापि 'अन्यतरस्याम्' इत्यनुवर्तत इति वृत्तिकारमतम्। हलः किम्। अन्नम्। यमां किम्। अर्च्यम्[11]। यमि किम्। शार्ङ्गिन्। द्वित्वविधानादिति व्यक्तिपदार्थाश्रयणात्। तथा[12] हि व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणं प्रवर्तते। तत्र यदि द्वितीयस्यापि यस्य लोपः स्यात् हर्यनुभव इत्यत्र प्रवर्तमानं द्वित्वलक्षणं व्यर्थं स्यात्। ततो द्वित्वविधानसामर्थ्याद् द्वौ यकाराववशिष्येते। अथवा 'अन्यतरस्याम्' इत्यनुवृत्तेर्लोपाभावे द्वित्वविधानादुत्तरकालं द्वाववशिष्येते इत्यभिप्रायः[13]। हर्य्यनुभव इति। हरेरनुभवो हर्य्यनुभवः॥

---

१. Before this Sûtra $D_3$ has—'दीर्घादाचार्याणाम् ॥' ८।४।५२॥ दीर्घात् परस्य यरो द्वित्वं न स्यात् सर्वेषां मतेन। आचार्यग्रहणं पूजार्थम्। गौर्यत्र। रेफस्य यरन्तर्भावे यत्कार्यमुक्तं तत् साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः। पुनर्द्वित्वे प्राप्ते। २. यमि परे। द्वित्वविधौ द्वाववशिष्येते। हर्य्यनुभवः। न ह्यस्ति। $D_1$. ३. यकारस्य लोपः $B_2$, $D_4$; इति पूर्वयलोपः dropped $D_2$. ४. द्वित्वविधानसामर्थ्यात् $D_2$, $D_3$. ५. After it—अन्ये लुप्यन्ते $D_5$. ६. Before this—रेफस्य यरन्तर्भावे सति यत् कार्यमुक्तं तत् साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः। $B_2$; हर्य्य°... स्ति dropped $D_3$. ७. This Sûtra and the Vṛitti are dropped. Com. ८. दीर्घादुत्तरस्य यरः सर्वेषामाचार्याणां मते द्वित्वं न स्यात्। P; दीर्घादचः परस्य यरो द्वे न स्तः सर्वेषामाचार्याणां मतेन। दात्रम्। पात्रम्। $D_1$. ९. रेफहकाराभ्यां परस्य यरो द्वित्वं न स्यात्। $B_2$; दीर्घात् परस्य सर्वेषां मते द्वित्वं न स्यात्। गौर्यत्र। $D_2$; १०. After it—गौर्यत्र C, $D_2$. ११. अर्घ्यम् $Bc_1$, $Dc_3$. १२. यथा हि $Dc_3$. १३. इत्यर्थः। $Dc_3$.

**एचोऽयवायावः ॥६।१।७८॥**

एचः क्रमात् अय् अव् आय् आव् एते स्युरचि[1] । हरये । विष्णवे । नायकः । पावकः ॥

**वान्तो यि प्रत्यये ॥६।१।७९॥**

यकारादौ[2] प्रत्यये[3] अव् आव् आदेशौ[4] स्तः[5] । गव्यम् । नाव्यम् । अध्वपरिमाणे[6] च[7] गव्यूतिः ॥

---

एचोय् । **क्रमादिति** । 'यथासंख्यमनुदेशः समानाम्' इति परिभाषयेति भावः । **हरये विष्णवे** इति । हरिविष्णुशब्दाभ्यां चतुर्थ्येकवचनम् । 'घेर्ङिति' 'इति गुणः । **नायकः पावक** इति । नयतेः पूञश्च ण्वुलि 'अचो ञ्णिति' वृद्धिः ॥

**वान्तो यि** । यीति वर्णग्रहणम् । वर्णग्रहणे च 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया यादौ प्रत्यये परे कार्यमित्यभिप्रेत्याह । **यकारादाविति** । यद्यप्यत्र स्थानी न निर्दिष्टस्तथाप्यवादेश ओकारस्य स्थाने स्यादावादेश औकारस्य स्थान इति ज्ञेयम्[8] । कथम् । पूर्वयोगे हि तद्धर्मो वान्तादेशो दृष्टः[9] । इहापि तद्धर्म[10] एवानुवर्तते । **गव्यमिति** । गोर्विकारः । 'गोपयसोर्यत्' **नाव्यमिति** । नावा तार्यम् । 'नौवयोधर्म—' इत्यादिना यत् । **गव्यूतिरिति** । क्रोशयुगमित्यर्थः[11] । अध्वपरिमाणादन्यत्र गोयूतिरित्येव । **वान्त इति किम्** । रायमिच्छति रैयति । **यीति किम्** । गोभ्याम् । नौभ्याम्[12] । **प्रत्यये किम्** । गोयानम् । नौयानम् ॥

---

१. °रच्चि परे D1, D5; °रच्चि परतः B2; परे D3. २. यकारादौ प्रत्यये परे D1, B2; एचो यकारादौ प्रत्यये परे D2. ३. After प्रत्यये—B1, D3, D4, D5 have ओदौतोः स्थाने. ४. आदेशः P, D. ५. स्यात् P; स्तः dropped D1, D2. ६. गौर्यूतावध्वपरिमाणे गव्यूतिर्निपात्यते । B1, B2, D1. ७. Dropped P. ८. °च्यावादेश औकारस्य स्थाने स्यात् अवादेश ओकारस्य स्थाने । Dc1, Dc2, Nc1, Nc2. ९. द्रष्टव्यः Dc3. १०. तद्धर्मा एवानुवर्तन्ते Dc3. ११. °युगल° Dc2. १२. नौभ्याम् dropped Dc1, Dc2, Nc1, Nc2.

धातोस्तन्निमित्तस्यैव ॥ ६।१।८० ॥

यादौ[1] प्रत्यये परे तन्निमित्तयोर्धातोरोदौतोः स्थाने वान्तादेशः स्यात्[2] । लव्यम् । अवश्यलाव्यम् । तन्निमित्तयोरिति[3] किम् । आ ऊयते ओयते । [4]औयत ।

---

धातोः । पूर्वेण सिद्धे नियमार्थं वचनम् । तन्निमित्तयोरिति । तच्छब्देन यकारादिः परामृश्यते । स निमित्तं ययोस्तौ तथोक्तौ[5] । लव्यमिति । लूञ् छेदने । अस्माद् 'अचो यत्' । तमेव यतमाश्रित्य 'सार्वधातुकार्धधातुकयोः' इत्योकारो विधीयमानस्तन्निमित्तः स्यात् । अवश्यलाव्यमिति । 'ओरावश्यके' इति ण्यत् । मयूरव्यंसकादित्वात् समासः । 'लुम्पेदवश्यम्—' इति मलोपः । अत्रापि तमेव ण्यतमाश्रित्य 'अचो ञ्णिति' इति जात औकारस्तन्निमित्तः । धातोः[6] किम् । प्रातिपदिकस्य नियमो मा भूत् । तत्र को दोषः स्यात् । बाभ्रव्य इत्यत्रैव स्यात् । अत्र न स्यात् । गव्यं नाव्यमिति । आ ऊयत इति । वेञ् तन्तुसंताने । 'आदेच—' इत्यात्वम् । आङ् पूर्वः । लट् । 'भावकर्मणोः' इति तङ् । 'सार्वधातुके यक् ।' यजादित्वात् संप्रसारणम् । 'अकृत्सार्वधातुकयोः' इति दीर्घः । 'आद्गुणः' इति गुणो जातः स यादिप्रत्ययनिमित्तो न भवति । औयतेति । तस्यैव धातोर्लङि रूपम् । 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । एवकारकरणं धात्ववधारणं यथा स्यात् तन्निमित्तावधारणं मा भूत् । तन्निमित्तस्य हि धातोश्चाधातोश्च स्यात् । बाभ्रव्यः । लव्यम् ॥

---

१. यकारादौ $B_2$; एचो यकारादौ $D_2$. २. Dropped $D_2$. ३. P and $B_1$ drop तन्निमित्तयोरिति किम् । ४. Before औयत $B_1$ has आ औयत; $D_2$, $B_2$ drop औयत. ५. तन्निमित्तौ $Dc_4$. ६. धातोरिति किम् $Dc_3$.

**क्षय्यजय्यौ शक्यार्थे ॥६।१।८१॥**

अत्र यादौ यान्तादेशो निपात्यते । क्षय्यम् । जय्यम् । शक्यार्थे इति किम् । क्षेयं पापम् । जेयं मनः ॥

**क्रय्यस्तदर्थे ॥ ६।१।८२॥**

क्रयार्थे प्रसारितं क्रय्यम् । क्रेयमन्यत् ॥

**लोपः शाकल्यस्य ॥ ८।३।१९॥**

अवर्णपूर्वयोः पदान्तयो यंवयोर्वा लोपोशि परे ॥

---

**क्षय्य** । अत्रेति । अत्रेत्येतदावृत्त्या योज्यते । ततश्चात्र क्षय्यजय्यशब्दयोरत्र शक्यार्थे यादौ प्रत्यये परतो यान्तादेशो निपात्यत इत्यर्थः । अत्र क्षय्य इत्यत्र क्षि क्षये क्षि निवासगत्योः क्षीष हिंसायां वा ततो यति प्रत्यये परतो गुणे कृते यादेशो निपात्यते । जय्य इत्यत्र जि जये इत्यस्य तथैव यति गुणे कृते यादशो निपात्यते । **क्षेयं जेयं मन** इति । क्षेतुमर्हं जेतुमर्हं न तु शक्यमित्यर्थः । अत्रार्हे कृत्यस्य जातत्वाच्छक्यार्थाभावः ॥

**क्रय्यस्तदर्थे** । डुक्रीञ् द्रव्यविनिमये । अस्माद्यति परे क्रयार्थे यान्तादेशो निपात्यते । क्रयार्थ इत्यनेन तदर्थ इति शब्दं व्याचष्टे । क्रयायेदं क्रयार्थम् । चतुर्थीसमासः । तस्मिन् क्रयार्थे प्रसारितं क्रयार्थमुपन्यस्तं द्रव्यमित्यर्थः । **क्रेयमन्यदिति** । क्रेतव्यं ग्रहीतव्यम् । स्वीकर्तव्यमित्यर्थः ।

लोपः । अवर्णपूर्वयोरिति । ननु च 'भोभगोअघोअपूर्वस्य' इत्यनुवृत्तेर्भोभगो अघो अवर्णपूर्वयोरिति वाच्यम् । मैवम् । 'ओतो

---

१. यादौ परे $B_2$; यादौ dropped $D_1$. २. Dropped P, $D_1$, $D_2$, $B_2$. ३. °यंकारवकारयो° $B_2$. ४. लोपो वा स्यादशि परे C, $B_2$; लोपो वाशि परे $D_4$. ५. क्षय्यजय्ययोः $Dc_3$. ६. यान्तादेशनिपात इत्यर्थः $Nc_2$. ७. निपात्य इत्यर्थः $Dc_2$. ८. तत्र $Nc_2$, $Bc_1$. ९. अपूर्वयो° $Nc_2$.

**पूर्वत्रासिद्धम् ॥ ८।२।१॥**

सपादसप्ताध्याय्यां विहितं कार्यं प्रतीह त्रिपाद्यां विहितमसिद्धं ज्ञेयम्[1]। इतः[2] परमप्युत्तरोत्तरं[3] कार्यं पूर्वं पूर्वं कार्यं[4] प्रत्यसिद्धं ज्ञेयम्। अतः पुनर्न संधिः। हर एहि। हरयेहि।

---

गार्ग्यस्य' इति तेभ्यः परयोर्नित्यलोपं[5] विधास्यति। अतः साधूक्तम् 'अवर्णपूर्वयोः' इति। शाकल्यग्रहणं विकल्पार्थं न पूजार्थमित्यभिप्रेत्याह[6]। वा लोप इति॥

पूर्वत्र। सप्तानामध्यायानां समाहारः सप्ताध्यायी। पादेन सह वर्तमाना सपादा। सपादा चासौ[7] सप्ताध्यायी च सपादसप्ताध्यायी। 'वृद्धिरादैच्' इत्यारभ्य 'पूर्वत्रासिद्धम्' इति सूत्रावधिका। त्रयाणां पादानां समाहारस्त्रिपादी। 'पूर्वत्रासिद्धम्' इत्यारभ्याष्टमाध्यायपरिसमाप्त्यवधिका। ये त्वत्र त्रिपाद्यां षष्ठीनिर्देशाः सप्तमीनिर्देशाः पञ्चमीनिर्देशाश्च ते 'षष्ठी स्थानेयोगा' 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्य' इत्यादौ कर्तव्ये नासिद्धा भवन्ति। यतः पूर्वत्वमासां परिभाषाणां नास्ति। कार्यकालं हि संज्ञापरिभाषम्। यत्र कार्यं तत्र द्रष्टव्यमिति न्यायात्। 'विप्रतिषेधे परं कार्यम्' इत्येषा परिभाषात्र[8] न प्रवर्तते। यतः परं लक्षणं येन पूर्वेण लक्षणेन सह स्पर्धते तत् प्रत्यसिद्धम्। ततश्चावगोर्यमित्यत्र[9] गुरेः 'पुगन्त—' इति गुणः परेण 'हलि च' इति दीर्घेण न बाध्यते। अपवादस्य तु परस्याप्युत्सर्गे पूर्वे कार्ये[10] वचनप्रामाण्यादसिद्धत्वं न। तेन दोग्धेत्यत्र घत्वस्यासिद्धत्वाद् 'हो ढः' इति ढत्वं स्यात् तन्न। अतः पुनर्न संधिरिति। हरे एहीत्यत्र 'एचोऽयवायावः' इत्ययादेशे संधौ कृते यस्य च लोपे

---

१. After it—स्यात् $D_2$, $D_5$, $D_4$; ज्ञेयम् dropped $D_1$, $B_1$. २. अतः $D_2$. ३. °प्युत्तरोत्तरकार्यं $D_2$. ४. पूर्वपूर्वकार्यं $D_2$. ५. °नित्यं लोपं $Nc_2$, $Bc_1$. ६. °मित्याह। $Dc_4$. ७. सा चासौ $Nc_2$, $Dc_3$. ८. परिभाषा त्वत्र $Nc_2$. ९. ततश्चावगूर्यमित्यत्र $Bc_1$. १०. कार्येपि $Dc_3$.

विष्ण इह। विष्णविह। श्रिया उद्यतः। श्रियायुद्यतः। गुरा उत्कः। गुरावुत्कः।

कानि सन्ति। कौ स्तः। अत्रास्तेरल्लोपस्य ‘न पदान्त–’ इति सूत्रेण स्थानिवत्त्वाभावाद्यणावादेशौ न स्तः।

---

‘वृ[1]द्धिरेचि’ इति वृद्धिलक्षणः पुनः संधिः प्राप्तस्तस्मिन् षष्ठाध्यायस्थे कार्ये प्राप्ते त्रि[3]पादीस्थं ‘लोपः शाकल्यस्य’ इति कार्यमसिद्धमिति कृ[4]त्वा यकारेण व्यवहितत्वात्[5] ‘वृद्धिरेचि’ इत्यादिकं न प्रवर्तत इत्यर्थः। विष्ण इह इत्यादिषु ‘आद्गुणः’ इति गुणः प्राप्तः स न भवत्यसिद्धत्वाल्लोपस्य। **कानि सन्ती**त्यादि। अस्तेर्लटि प्रथमपुरुषबहुवचनद्विवचनयोः ‘श्नसोरल्लोपः’ इत्यकारलोपः। परनिमित्तोजादेश इति कृत्वा कानि सन्तीत्यत्रैकारस्य यणादेशे कार्ये कौ स्त इत्यत्रौकारस्यावादेशे कार्ये तस्य ‘अचः परस्मिन्–’ इति स्थानिवत्त्वं प्राप्तं तस्य च पदान्तविधिं प्रति ‘न पदान्त–’ इत्यादिना निषेधाद्यणादेश आवादेशश्च न भवतीति भावः। नै[6]नु व्याकरणे पदानामेव संस्काराद् द्वितीयपदस्यानिमित्तत्वेनासंनिधानादनादिष्टादचः पूर्वत्वासंभवात् स्थानिवत्त्वाप्रसङ्गाद्यणादिप्राप्तिरेव नास्ति किं पन्दाते स्थानिवद्भावनिषेधेन। उच्यते। व्याकरणेन वाक्यमपि संस्क्रियते। **पदमञ्जर्यां तू**क्तम्। यद्यपि पदमेव संस्क्रियते न वाक्यं तथापि वाँ[7]क्यगते स्त इत्यादौ पदे व्युत्पाद्ये काविल्यादेरसत्यपि निमित्तत्वे संविधानमविरुद्धम्॥

---

१. Before it—‘श्नसोरल्लोपः॥’ ६। ४। १११॥ श्न इत्येतस्यास्तेश्चाकारस्य लोपः स्यात्॥ $B_1$, $D_2$ (श्नस्यास्तेश्च and स्यात् सार्वधातुके प्रत्यये परे $D_2$); C has the Sûtra ‘श्नसोरल्लोपः’ only. २. ‘ओमाङोश्च’ इति पररूपलक्षणः पुनः संधिः प्राप्तः। $Dc_2$. ३. त्रिपादीस्थं कार्यं $Dc_1$. ४. Dropped $Dc_1$. ५. After it—यस्य च लोपे $Dc_3$. ६. ननु च $Dc_1$, $Nc_2$, $Dc_3$. ७. वाक्यान्तर्गते $Dc_3$.

**आद्गुणः ॥६।१।८७॥**

अवर्णादचि पूर्वपरयोरेको गुण आदेशोन्तरतमः स्यात्[1]। उपेन्द्रः[2]। रमेशः। गङ्गोदकम्। कृष्ण ऋद्धिः। तव ऌकार इत्यत्र ऋऌस्थाने[3] गुणादेशे कृते[4]

आत्। अवर्णादित्यादि। 'अचि' इत्यनुवृत्तेः 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति पूर्वस्य गुणादेशः प्राप्तः। 'आत्' इति निर्देशात् 'तस्मादित्युत्तरस्य' इत्युत्तरस्य। तथा[5] ह्यस्यायमर्थः पञ्चम्यर्थ-निर्देशेनन्तरस्य परस्यैव कार्यं स्यादित्येवं स्थिते 'एकः पूर्वपरयोः' इत्यधिकारादुभयोः स्थाने एको गुणादेशः स्यादिति चेतसि कृत्वाह। पूर्वपरयोरेको गुण इति। स च गुणादेशः[6] स्थानेन्तरतमपरिभाषया सदृशतमः स्यादित्याह। अन्तरतम इति। उपेन्द्र इति। इन्द्रमुपगत उपेन्द्रः। उप इन्द्र इति स्थिते पूर्वपरयोरकारेकारयोः स्थाने गुणसंज्ञा अदेङ्[7] प्राप्ता। तत्राकारस्य अकुहविसर्जनीयानां कण्ठ इति कण्ठ-स्थानम्। इचुयशानां तात्विवतीकारस्य तालुस्थानम्[8]। तत्र स्थानत आन्तरतम्यादेदैतोः कण्ठतालु इति कण्ठतालुस्थान[9] एकारो भवति। रमेश इति। रमाया ईशो रमेशः। पूर्ववदाकारस्य[10] स्थान एकारः। गङ्गोदकमिति। गङ्गाया उदकम्। अत्राप्याकारस्य कण्ठ्यस्योकारस्य[11] चोपूपध्मानीयानामोष्ठाविति कण्ठोष्ठ्य ओकारः स्यात्। कृष्ण ऋद्धिः। तव ऌकार इत्यत्रेति। कृष्ण ऋद्धिः तव ऌकार इति स्थिते अकारस्य[12] ऋकारस्य च स्थाने अकारस्य ऌकारस्य च स्थाने 'आद्गुणः' इति गुणादेशो क्रियमाणे सत्युच्यत इत्यर्थः॥

१. गुणादेशो C. २. उप इन्द्रः। उपेन्द्रः। रमा ईशः। रमेशः। गङ्गा उदकम्। गङ्गोदकम्। $D_2$. ३. ऋऌस्थाने dropped $B_1$, $D_3$. ४. च कृते $D_4$; कर्तव्ये $D_1$; कृते dropped $B_1$, $D_5$; after कृते—सर्वमुखस्थानमिच्छन्त्येके आचार्याः $D_5$. ५. तथाप्यस्या° $Dc_4$. ६. गुणादेश $Bc_1$, $Dc_4$. ७. अदेङः $Bc_1$. ८. स्थानं तालु $Bc_1$, $Dc_4$. ९. कण्ठतालुस्थ $Dc_2$. १०. °दाकारस्य ईकारस्य च स्थाने $Bc_1$, $Dc_3$. ११. कण्ठः $Dc_2$. १२. अकारऋकारयोः स्थाने $Bc_1$.

**उरण् रपरः ॥ १।१।५१ ॥**

ऋलृस्थानीयोण् रप्रत्याहारपरः स्यात् । द्वित्वम् । कृ[1]ष्णर्द्धिः । यणो मयो द्वे वाच्ये* । तवल्कारः ।

**वृद्धिरेचि ॥ ६।१।८८ ॥**

आ[2]देचि परे वृद्धिरेकादेशः स्या[3]त् । कृ[4]ष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

---

उरण् । ऋस्थाने लक्षणान्तरेण विधीयमानोण् विधानकाल एव तेन सह संहत्य रप्रत्याहारपरत्वविशिष्टोनेन सूत्रेण भाव्यते । एवं च सति रश्रुतिमत ऋकारस्य रश्रुतिमानेव गुणो भवत्यर् । आन्तरतम्यात् । त[5]था ऋ[6]वर्णग्रहणेन लृ[7]वर्णस्यापि सावर्ण्येन ग्रहणाद् लृकारस्य लश्रुतिमतो लश्रुतिमानेव गुणो भवत्यल् । तथा च भाष्यकारः । 'वृद्धिर्भवति गुणो भवति रे[8]फस्य गुणवृद्धिसंज्ञा[9] भवति' इति । ननु च कृष्णर्द्धिस्तवल्कार इत्यत्राकारऋकारयोरुभयोः स्थाने भवन्नण् कथमृस्थानीयत्वेन रपरः स्या[10]त् । उच्यते । यो ह्युभयोः स्थाने भ[11]वति लभतेसावन्यतरव्यपदेशम् । यथा देवदत्तस्य पुत्रो दे[12]वदत्तायाः पुत्र इति । द्वित्वमिति । 'अचो रहाभ्याम्' इत्यनेन धकारस्य द्वित्वम् । जश्त्वम् । यण इति । 'यणः परस्य मयो द्वे स्तः' इति ककारस्य द्वित्वम् ॥

वृद्धिः । आदित्यादि । अवर्णात् परो य एच् एचि पूर्वो योवर्णस्त[13]योः पूर्वपरयोः स्थान आद्गुणापवादो वृद्धिरेकादेशः स्यादित्यर्थः ।

---

१. कृष्ण ऋद्धिः । कृष्णर्द्धिः । $D_2$. २. अवर्णादेचि $D_5$. ३. Dropped P. ४. कृष्ण एकत्वम् । कृष्णैकत्वम् । गङ्गा ओघः । गङ्गौघः । देव ऐश्वर्यम् । देवैश्वर्यम् । कृष्ण औत्कण्ठ्यम् । कृष्णौत्कण्ठ्यम् । $D_2$. ५. तथा च सवर्णग्रहणेन $Bc_1$. ६. लृवर्ण° $Dc_1$, $Dc_2$, $Nc_1$, $Nc_2$. ७. ऋवर्ण° $Dc_1$, $Dc_2$, $Nc_1$, $Nc_2$. ८. रेफस्य लकारशिरा गुणवृद्धिसंज्ञो भवतीति $Nc_1$; रेफलकारौ गुणवृद्धिसंज्ञौ भवतीति $Dc_2$; रेफशिरा गुणवृद्धिसंज्ञको भवति $Dc_4$, $Nc_2$; रेफलपरगुणवृद्धिसंज्ञको भवतीति $Dc_3$. ९. °संज्ञको $Dc_3$, $Dc_4$, $Nc_2$. १०. Dropped $Bc_1$, $Dc_4$. ११. विधीयते $Bc_1$, विहितो $Dc_3$, $Dc_4$. १२. देवदत्तपुत्र $Bc_1$. १३. तयोः dropped $Dc_1$, $Dc_2$, $Nc_1$, $Nc_2$.

एत्येधत्यूठ्सु[1] ॥ ६।१।८९ ॥

एष्वाद्वृद्धिः[2] । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः ॥

अक्षादुहिन्याम्* । अक्षौहिणी[3] ।

स्वादीरेरिणोः* । स्वैरम् । स्वैरी[4] । स्वैरिणी ।

---

एत्येधति । एष्वित्यादि । 'आत्' इति वर्तते 'वृद्धिरेचि' इति च । तत्र एजित्येतेरेव विशेषणं नैधतेः । व्यभिचाराभावात् । ऊठोपि न । असंभवात् । इण् गतावित्यस्मिन्नेजादौ धातावेध वृद्धावित्यस्मिन्नूठि च पूर्वो योवर्णस्ततश्च परो य एच् ऊठ् च तयोः पूर्वपरयोः स्थाने वृद्धिरेकादेशः स्यादित्यर्थः ॥

पररूपेत्यादि । एत्येधत्योरेङि पररूपत्वापवादः । 'ओमाङोश्च' । इति पररूपस्य न बाधः । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषया । तेनेह न । उप आ इतः । उपेतः । ऊठ्याद्गुणापवादः । प्रष्ठौह इति । प्रष्ठं वहति । 'वहश्च' इति ण्विः । ततः षष्ठ्येकवचनम् । 'वाह ऊठ्' । 'संप्रसारणाच्च' । इति पूर्वरूपत्वम् । ततो वृद्धिः । एचीत्येव । उप इतः । उपेतः ।

अक्षादिति । अक्षशब्दस्योहिन्यां परतो वृद्धिर्वक्तव्येत्यर्थः । अक्षौहिणीति । अक्षाणामूहः समूहः सोस्यास्तीति मत्वर्थीय इनिः । 'ऋन्नेभ्यो ङीप्' इति ङीप् ।

स्वादिति । स्वशब्दस्य ईरशब्द ईरिन्शब्दे च परतो[5] वृद्धिः स्यादिति वाच्यमित्यर्थः । स्वैरीति । 'ईरणमीरः । भावे घञ् । स्वस्य ईरः स्वैरः । ईरशब्दे[6] परतो वृद्धिः[7] । ततः[8] स्वैरो विद्यते यस्यासौ स्वैरी । 'अत इनिठनौ' इतीनिः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया ईरिन्ग्रहणे[9] ईरिणीशब्दस्यापि ग्रहणमित्यभिप्रेत्य स्त्रीलिङ्गोदाहरणमाह । स्वैरिणीति । स्वेन ईरितुं

---

१. °त्यूठ्सु C. २. एषु परे C. ३. After it—सेना $B_2$, $D_2$. ४. स्वैरिणी। स्वैरी C, P, $B_1$, $B_2$. ५. वर्तमाने $Dc_4$. ६. परे $Bc_1$, $Dc_2$. ७. वृद्धिः स्यात् $Dc_1$, $Nc_1$, $Dc_3$. ८. तत्र $Bc_1$. ९. °ग्रहणेन $Bc_1$.

प्रादूहोढोढ्येषैष्येषु[1]* । प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । गुणोप्यत्रेति केचित् । प्रेषः । प्रेष्यः ।[2]

ऋते च तृतीयासमासे* । आद्वृद्धिः । सुखेन ऋतः । सुखार्तः ।

---

शीलमस्याः । 'सुप्यजातौ–' इति णिनिः । अथवा मत्वर्थीय इनिः । 'ऋन्नेभ्यः–' इति ङीप् । णत्वम् । ननु चादन्तस्य ईरशब्दस्योदाहरणं किं न प्रदर्शितम् । नन्वेतत् प्रदर्शितं स्वैरीति । तथा हि कृतवृद्धेः स्वैरशब्दात् पश्चादिनिः । इन्नन्तोदाहरणं तु 'स्वादीरेरिणोः' इत्यस्मिन् वक्तव्ये ईरिणोरितीन्नन्तस्य पृथग् ग्रहणं न कर्तव्यमिति सूचनार्थम् । तथा च महाभाष्य उक्तम् । 'ईरिन्ग्रहणं शक्यमकर्तुम् । कथं स्वैरीति । इनिनैतन्मत्वर्थीयेन सिद्धम् । स्वैरोस्यास्तीति स्वैरी' इति ।

प्रादिति । अन्यमतोपसंग्रहार्थं[4] वक्तव्यमध्य[5] ऊहशब्दस्य प्रक्षेपः प्रौह इत्युदाहरणं च । प्रात् किम् । उपोहः । ननु कथं प्रोढवानित्यत्र न वृद्धिः । 'अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषया । कथं तर्ह्यूढशब्दात् णिचि कृते प्रौढयतीति । ऊढिशब्देन[6] ण्यन्तस्यापि ग्रहणात् । पैषः । प्रैष्य इति । इषु गतिहिंसादानेषु इषुँ[7] इच्छायामिति वा । आभ्या प्रपूर्वाभ्यां यदा घञ् तदा प्रैषः यदा ण्यत् तदा प्रैष्यः । गुणोप्यत्रेति[8] । अत्रेति । प्रेषः प्रेष्य इत्यनयोरुदाहरणयोः । तथा च दौर्गसिंह्यां वृत्तावुक्तम् । 'एषएष्ययोरैत्वं विभाषया' इति ।

सुखेन ऋत इति । सुखार्त इत्यस्य तृतीयासमासप्रदर्शनार्थं[9] विग्रहवाक्यम् । स च समासः 'कर्तृकरणे कृता बहुलम्' इत्यनेन ।

---

१. After it—वृद्धिर्वक्तव्या P. २. प्रैषः । प्रैष्यः dropped $D_1$. ३. प्रेषः । प्रैषः । प्रेष्यः । प्रैष्यः । $D_1$. ४. °संग्रहणार्थं $Dc_3$. ५. वक्तव्यम् । मध्य $Nc_1$, $Dc_4$. ६. ऊढ° $Bc_1$. ७. इषु dropped $Dc_1$. ८. गुणोप्यत्रेति केचिदिति $Dc_2$, $Nc_1$. ९. तृतीयासमासत्वप्रदर्शनार्थं $Dc_2$, $Bc_1$.

तृतीयेति किम् । परमर्तः । समासेति किम् । सुखेनर्तः ।

प्रवत्सतरवत्सरकम्बलवसनार्णदशानामृणे * । प्रार्णम् । वत्सतरार्णमित्यादि ।

**उपसर्गादृति धातौ ॥ ६।१।९१॥**

---

ऋकारस्य रश्रुतिमतो रश्रुतिमानेवाकारो वृद्धिः । आन्तरतम्यात् । **परमर्त** इति । परम ऋत इति 'सन्महत—' इत्यादिना समासः । न तृतीयासमासः । अतोत्र 'आद्गुणः' इति गुण एव । ऋते किम् । सुखेन इतः सुखेतः ।

प्रवत्सतरेति । **कौमारा** वत्सतरस्य स्थाने वत्सरशब्दं पठितवन्त-स्तन्मतोपसंग्रहार्थं वत्सरेत्युक्तम् । एषामृणशब्दे परतो वृद्धिरेकादेशः । **वत्सतरार्णमित्यादी**त्यादिशब्देन वत्सरार्णं कम्बलार्णं वसनार्णमृणार्णं दशार्णमिति ।

**उपसर्गात्** । उपसर्गादादिति । 'येन विधिस्तदन्तस्य' इत्यवर्णा-न्तादुपसर्गादित्यर्थः । अस्य सूत्रस्यायमर्थः । येन विशेषणेन विधीयते कार्यं तदन्तस्यात्मान्तस्य समुदायस्य स्वस्य च तत् संज्ञा स्यात् । 'एरच् ।' चयः । अयः । समासप्रत्ययविध्योर्न । कष्टं परमश्रितः । 'द्वितीया श्रित—' इति समासो न । परमनडस्यापत्यम् । 'नडादिभ्यः फक्' न । उगिद्वर्णग्रहणवर्जम् । 'उगितश्च ।' भवती । अतिभवती । 'अत इञ् ।' दाक्षिः । यस्मिन् विधिस्तदादावल्ग्रहण इति वाच्यम् । भुवः ।

---

१. इति dropped P, $D_1$. २. वत्सतरार्णम् । कम्बलार्णम् । ऋणार्णम् । $B_2$. ३. प्रवत्सतरेत्यादि $Nc_2$. ४. वत्सतरार्णं $Nc_1$. $Nc_2$. ५. परमाश्रितः $Bc_1$. ६. Dropped $Bc_1$. ७. After it—अस्यास्त्वयमर्थः । यस्मिन्निति सप्तमी-निर्दिष्टे पूर्वस्य विधिस्तत्र तदादौ वेदितव्यः । अलादावित्यर्थः । यदि तत्रापि तदन्त-विधिः स्यादिहैव स्यात् । श्रियो भवति । इह न स्यात् । **उपाच्छेतीति** &c. $Dc_2$.

ऋकारादौ[1] धातावुपसर्गादात्[2] वृद्धिरेकादेशः स्यात्[3] । उपार्च्छति । प्रार्च्छति[4] । तपरत्वाद्दीर्घे न[5] । उप ऋकारीयति । उपर्कारीयति ।

**वा सुप्यापिशलेः ॥ ६।१।९२॥**

आदुपसर्गात् सुब्धातौ[6] ऋति प्रागुक्तं वा स्यात्[7] । उपर्षभीयति । उपार्षभीयति[8] । प्रर्षभीयति । प्रार्षभीयति । सावर्ण्याल्लृवर्णग्रहणम् । प्लकारीयति[9] प्राल्कारीयति ॥

---

श्रिय इति । उपार्च्छतीति । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । उपसर्गात् किम् । खट्वर्च्छति । ऋते[10] इति किम् । उप इतः । उपेतः । उपसर्गग्रहणादेव धातुग्रहणे सिद्धेऽपि धातुग्रहणं 'ऋत्यकः' इति शाकल्यमतेन प्रकृतिभावः स्यात् तन्निवृत्त्यर्थम् । तन्निवृत्तिश्च धातुग्रहणे सति योगविभागाद्भवति । उपसर्गादृतीत्येको योगः । उपसर्गादृति वृद्धिः स्यात् । ततो धाताविति द्वितीयः । तत्रापि उपसर्गादृतीत्यनुवर्तते तत्र द्वितीयो योगो बाधकबाधनार्थम् । तेन[11] पक्षे शाकलं न भवति ॥

वा सुपि । आदित्यादि । अवर्णान्तादुपसर्गात् सुबन्तावयवे धातौ ऋकारादौ पूर्वपरयोर्वृद्धिरेकादेशो वा स्यादित्यर्थः । आपिशलिग्रहणं पूजार्थम्[12] । वेति ह्युच्यत इति । प्रार्षभीयति[13] । ऋषभमात्मन इच्छति[14] । 'सुप आत्मनः क्यच् ।' 'क्यचि च' इतीत्वम् । सावर्ण्यादिति । 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्' इति ऋलृ अनयोः[15] सावर्ण्यादत्र ऋग्रहणेन लृकारस्यापि ग्रहणं स्यात् । ततश्च प्राल्कारीयतीति सिध्यतीति भावः ॥

---

१. ऋकारादिधातौ परे $C_1$; ऋकारादौ धातौ परे $B_2$. २. आदुपसर्गात् $B_2$. ३. Dropped $D_1$. ४. Dropped $D_1$. ५. After it—आद्गुणः $B_1$. ६. सुब्धातौ परे $B_2$. ७. Dropped $B_1$, $D_1$. ८. After it—उप ऋषभीयति $D_1$. ९. उपल्कारीयति । उपाल्कारीयति । C. १०. ऋति किम् $Bc_1$. ११. ततः $Bc_1$, $Dc_4$. १२. पूजनार्थम् । $Dc_1$, $Nc_1$, $Bc_1$. १३. After it—इति $Dc_3$. १४. इच्छतीति $Dc_3$. १५. उभयोः $Dc_4$.

**एङि पररूपम् ॥ ६।१।९४ ॥**

आदुपसर्गादेङादौ धातौ[1] पररूपमे[2]कादे[3]शः स्यात्[4] । प्रेजते । [5]उपोखति । एङादौ सुब्धातौ वा । उपेडकीयति । उपैडकीयति । प्रोघीयति । प्रौघीयति ।

[6]शकन्ध्वादिषु पररूपं वाच्यम्* । शकन्धुः । कर्कन्धुः[7] । कुलटा । सीमन्तः[8] । मनीषा[9] । हलीषा । लाङ्गलीषा[10] । पतञ्जलिः । सारङ्गः ।

---

एङि । पररूपमेकादेशो वृद्धेरपवादश्च । **प्रेजत** इति । एजृ कम्पने । उपोखतीति[11] । ओखृ[12] शोषालमर्थयोः । **उपेडकीयतीति** । एडकमात्मन इच्छति । **प्रोघीयतीति** । ओघमात्मन इच्छति ।

**शकन्धुरिति** । शकानां जनपदानामन्धुः कूपः । **कुलटेति** । कुलान्यटतीति । पचाद्यच् । स्वैरिणी । **सीमन्त** इति । सीम्नोन्तः सीमन्तः । केशेष्वेव । अन्यत्र सीमान्तः । **मनीषा** । **पतञ्जलिरि**त्यत्र पृषोदरादित्वादन्त्यलोपे पश्चात्पररूपम् । अथवा 'ओमाङोश्च' इत्युत्तरसूत्रे चकारोधिकविधानार्थः । [13]तेनैतेषां पररूपं स्यात् । तच्च मनःपतच्छब्दयोष्टेर्भवति । तस्य चकारस्याधिकविधानार्थत्वं **न्यासकारो**चकथत्[14] । 'उत्तरसूत्रे चकारोधिकविधानार्थस्तेन शकन्ध्वादिष्वपि पररूपं भविष्यति' इति । **मनीषेति** । **मनस ईषेति** । **हलीषेति** । हलस्य ईषा । **लाङ्गलीषेति** । पूर्ववत्[15] । **पतञ्जलिरिति** । पतन्नञ्जलेः पतति स्माञ्जलेरित्यर्थः । **सारङ्ग** इति । साराण्यङ्गानि यस्य सः ।

---

१. धातौ परे $B_2$. २. पररूपं स्यात् $B_2$. ३. एकादेशः dropped C, $D_3$. ४. Dropped $B_1$, $D_1$. ५. प्रोषति $D_1$; उपोषति noticed by K. ६. शकन्ध्वादौ $D_2$. ७. कर्कन्धुः dropped $B_1$, $D_1$. ८. After it केशेष्वेव । C, $B_1$, $D_2$, $D_5$. ९. हलीषा । लाङ्गलीषा । मनीषा । C. १०. लाङ्गलीषा dropped $B_1$, $D_2$. ११. उपोषतीति $Nc_1$, $Nc_2$, $Dc_2$, $Dc_4$. १२. ओख $Dc_1$. १३. तेनैकेषां $Bc_1$. १४. °चीकथत् $Bc_1$. १५. लाङ्गलस्येषा $Bc_1$.

एवे चानियोगे ।* अद्येव । नियोगे तु अद्यैव गच्छ[1] । ओत्वोष्ठयोः समासे वा ।* स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासेति[2] किम् । तवौष्ठः ।

**ओमाङोश्च ॥६।१।९५॥**

ओमि आङि च[3] आत् पररूपं स्यात्[4] । शिवायों नमः । शिव आ इहि । शिवेहि ।

---

एव इति । नियोजनं[5] नियोगो व्यापारः । न नियोगोनियोगस्त-स्मिन् । एवशब्दो नियमे वर्तते । यदा व्यापारेणाविशिष्टं नियममाह तदा पररूपं भवति । यदा तु व्यापारविशिष्टं तदा न किं तु वृद्धिरेव स्यादिति । **अद्येवेति** । स्वरूपाख्यानं न तु नियोगः । **अद्यैव गच्छेति** नियोगः । अन्ये तु नियोगो नियमोवधारणमिति यावदिति नियोगं व्याख्यायानियोगमनवधारणं कथयन्ति । ततश्च 'यदेव पूर्वं ज्वलने शरीरम्' इत्यादयः प्रयोगा उपपन्ना भवन्तीत्याहुः । **स्थूलोतुरित्यादि** । स्थूलश्चासावोतुश्च । बिम्बमिव ओष्ठो यस्य स तथा । पक्षे 'वृद्धिरेचि' इति वृद्धिः । **तवौष्ठ** इति वाक्यमेव न समासः ।

**ओमाङोः** । 'एकःपूर्वपरयोः' इत्येव । ननु किमर्थमिहाङो[6] ग्रहणम् । यावता शिव आ इहि इत्यत्र अकः सवर्णे दीर्घत्वे आद्गुणे च[7] कृते शिवेहीति रूपं सिध्यत्येव । न सिध्यति । यतो धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वमाद्गुणेन भाव्यम् । तथा च वृद्धिः । तत आङो ग्रहणं कार्यं वृद्धिबाधनार्थं सवर्णदीर्घबाधनार्थं च । ननु च पूर्वं[8] गुणे कृते एकारे जाते आङो निवर्तितत्वादिदं सूत्रं न प्रवर्तते । नैष

---

१. After it—इहैव तिष्ठ C, $B_2$, $D_3$, $D_4$. २. इति dropped $B_1$, $D_1$, $D_3$. ३. च परे $D_1$, $B_2$; च आत् dropped $D_3$: ४. Dropped C, $D_1$, $D_2$. ५. नियोजनं dropped $Bc_1$. ६. इह dropped $Dc_3$. ७. For च—इति गुणे $Bc_1$, $Dc_4$. ८. Before it—च $Dc_3$.

९ [ प्र. कौ. ]

ब्रह्मोतम्[1] । राजर्षिः[2] । [3]ओङेकादेशस्तु[4] आङ्ग्रहणेन ग्राह्यः[5] ।

**अव्यक्तानुकरणस्यात इतौ ॥६।१।९८॥**

अव्यक्तानुकरणशब्दस्यात इतौ परे सह पररूपमेकादेशः[6] । पटत् इति । पटिति । घटिति[7] । एकाचो न ।* श्रदिति[8] । अतः किम् । दकारान्ते मा भूत् । घडदिति[9] । सदिति[10][11] ।

---

दोषः । द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यो भवति लभतेसावन्यतर[12]-व्यपदेशमिति परिभाषया आङ्ग्रहणेन गृह्यते । ब्रह्मोतमिति । आ उतमोतम् । ब्रह्मण्योतं ब्रह्मोतम् । राजर्षिरिति । आ ईषदृषिरर्षिः । राजा चासावर्षिश्च राजर्षिः । अत्रान्तरङ्गत्वात् पूर्वमाङ् ऋकारस्य चैव[13] गुणे कृते सवर्णदीर्घ[14]बाधनार्थं पररूपम् ॥

**अव्यक्त** । **अव्यक्तेत्यादि** । अव्यक्तोपरिस्फुटवर्णो यः शब्दस्तस्य योनुकरणशब्दो ध्वनिसादृश्येन व्यक्तवर्ण एव तस्य योत्शब्दस्तस्य सर्वस्य इति शब्दे परतः पूर्वपरयोः स्थाने पररूप एकादेशः स्यादिति तात्पर्यार्थः । ननु च किमित्यत्रालोन्त्यपरिभाषा न प्रवर्तते । उच्यते । 'नानर्थकेलोन्त्यविधिः' इति । अथवोत्तरसूत्रेन्त्यस्येति वचनात् । **अतः किमिति** । तकारान्तग्रहणं किमित्यर्थः । **घटदिति** । दकारान्तमेवैतदनुकरणम् । अव्यक्तानुकरणस्येति किम् । जगदिति । अतः किम् । उतो मा भूत् । मरुदिति । इताविति किम् । पटदत्र ॥

---

१. Before it—ब्रह्म आ उतम् $B_2$. २. Before it—राजा आ ऋषिः $D_1$, $B_2$. ३. This sentence is omitted-P, $D_1$, $D_3$, $D_4$; आङ एका° C. ४. Dropped $D_2$. ५. गृह्यते $B_2$. ६. पररूपादेशः स्यात् । C; पररूपं स्यात् $D_3$; पररूपादेशः $D_1$, $D_2$. ७. $B_1$ has घटत् इति before it; घटिति dropped $D_3$. ८. छादिति $D_1$; सदिति $D_2$. ९. घटदिति $B_1$, Com.; घटिति C. १०. Dropped $B_1$; For it—पटदिति C. ११. After it—अव्यक्तानुकरणस्येति किम् । जगदिति । अतः किम् । उतो मा भूत् । मरुदिति । इताविति किम् । पटदत्र । $B_2$. १२. लभते सोन्य° $Bc_1$. १३. Dropped $Bc_1$ १४. °दीर्घता° $Dc_4$.

**नाम्रेडितस्यान्त्यस्य तु वा ॥६।१।९९॥**

द्विस्त्रिरुक्तस्य नोक्तं[1] स्यादन्त्यस्य तु तकारमात्रस्य वा स्यात्। पटत्पटेति[2]। पटत्पटदिति॥

**अकः सवर्णे दीर्घः ॥६।१।१०१॥**

अकः सवर्णेचि दीर्घ एकादेशः स्यात्[3]। दैत्यारिः। श्रीशः। विष्णूदयः॥

ऋति सवर्णे ऋ वा।* होतृकारः[4]। होतॄकारः। ऋकारस्य

---

**नाम्रेडितस्य**। 'अव्यक्तानुकरणस्यात इतौ' इत्यनुवर्तते। **पटत्पटेति**। 'नित्यवीप्सयोः' इति द्वित्वम्। तकारस्य पररूपे अकारेण सहेकारस्य गुणः। **पटत्पटदिति**। तकारपररूपाभावे 'झलां जशोन्ते' इति जश्त्वम्। अनुकरणशब्दः पटदित्यादिर्यदा द्विस्त्रिरुच्यते तदा तस्याच्छब्दस्य पररूपं न स्यात्। यदा तु समुदायोनुकरणं तदा स्यादेव पूर्वरूपेण[5] पररूपत्वं पटत्पटिति।

**अकः**। 'इको यणचि' इत्यतः 'अचि' इत्यनुवर्तत इत्यभिप्रेत्याह। **सवर्णेचीति**। दैत्यारिरित्यादि षष्ठीतत्पुरुषः। 'तुलास्यप्रयत्नं सवर्णम्' इति सर्वत्र सवर्णसंज्ञा। अकः किम्। अग्नये। परत्वात् 'घेर्ङिति' इति गुणे कृते उभयोरेकारयोः सवर्णत्वेपि अगभावादत्र सवर्णदीर्घो न। सवर्णे किम्। दध्यत्र। भिन्नस्थानत्वात् सावर्ण्याभावः।

होतृकार इति। होतृ ऋकार इति स्थिते अकः सवर्णे दीर्घत्वे प्राप्ते ह्रस्व एव ऋकार एकादेशो जातः। पक्षे दीर्घ एव भवति होतॄकार इति ज्ञेयम्। होतॄकार इति। होतृ ऌकार इति स्थिते[6] ऌकार एकादेशः[7]। पक्षे इति। यदा ऌकारो न भवति तदा

---

१. उक्तं न। अन्त्यस्य C, $B_2$. २. पटत्पटदिति। पटत्पटेति $B_1$; पटत्पटेति for पटत्पटति $D_1$. ३. Dropped $B_1$. ४. होतृ ऋकारः। होतृकारः। पक्षे होतॄकारः सावर्ण्यात् स्यात्। होतॄकारः। $B_2$. ५. पूर्वेण पररूपम्। $Dc_4$. ६. स्थिते dropped $Dc_1$; संस्थिते $Dc_4$. ७. एकादेशो जातः। $Dc_3$.

ऌति ऌ वा ।* होत्ऌकारः । पक्षे ऋ[1]कारः । सावर्ण्यात् । होतॄकारः । अचि किम् । कुमारी शेते ॥

**नाज्झलौ ॥१।१।१०॥**

तुल्यास्यप्रयत्नावप्यज्झलौ न सवर्णौ स्तः[2] । इ[3]ति सावर्ण्यनिषेधो न दीर्घशकारयोः ।

न निषिद्धं सवर्णत्वं नाज्झलाविति दीर्घशौ[4] ।
ग्र[5]होदितानिषिद्धत्वादन्यत्र न निषिद्धता[6] ॥

---

ऋऌवर्णयोर्मिथः सावर्ण्याद्दीर्घस्य च ऌकारस्याभावात् सवर्णदीर्घे कार्ये ऋकार एव भवति । **अचि किमिति** । 'इको यणचि' इत्यतः 'अचि' इति किमर्थमनुवर्त्यत इति प्रश्नाभिप्रायः । उत्तरमाह । **कुमारी शेत** इति । 'इचुयशानां तालु' इतीकारशकारयोस्तुल्यं स्थानं 'विवृतमूष्मणां स्वराणां च' इति तुल्यः प्रयत्नः । एवं च सति यदि 'अचि' इति नोच्यते तदात्रापि सवर्णदीर्घः स्यादित्यभिप्रायः ।

ननु चात्र सवर्णसंज्ञैव नास्ति । अपवादादिति । अज्ग्रहणानुवृत्ति निराकरणवाद्यपवादं पठति । **नाज्झलौ** । **तुल्यास्येति** । तुल्यस्थानप्रयत्नावपीत्यर्थः । अनेनापवादेनाज्झलोः सावर्ण्यनिषेधाद् 'अचि' इत्यनुवृत्तिं विनापि कुमारी शेत इत्यत्र सवर्णे दीर्घो न स्यादिति भावः । सिद्धान्ती परिहरति । **इति सावर्ण्येति** । 'नाज्झलौ' इति सावर्ण्यनिषेधो दीर्घशकारयोर्न भवति । अयं भावः । 'नाज्झलौ' इत्यत्र 'अच्' इति प्रत्याहारसंनिविष्टा एवाकारादयो गृह्यन्ते न तु तत्सवर्णा अपि । 'अणुदित् सवर्णस्य चाप्रत्ययः' इत्यत्र शास्त्रस्य सवर्णसंज्ञाविधायकशास्त्रं प्रत्यसिद्धेः । यतस्तस्य सवर्णसंज्ञा अङ्गम् । तस्या अङ्गभूताया

---

१. होतॄकारः । ऋकारसवर्णत्वात् $D_1$. २. Dropped $D_1$. ३. Dropped $B_1$; from इति to °शकारयोः dropped $D_3$. ४. दीर्घ शौः P. ५. सहोदित° P. ६. After it—इति सावर्ण्यनिषेधो न दीर्घशकारयोः । $D_3$, $D_5$. ७. °वर्तेत $Dc_4$; °वर्तते $Dc_3$. ८. प्रयत्नं before विवृत° $Dc_3$. ९. सवर्णदीर्घो $Dc_4$.

**एङः पदान्तादति ॥६।१।१०९॥**

पदान्तादेङोति परे पूर्वरूप एकादेशः स्यात्। हरेव। विष्णोव॥

**सर्वत्र विभाषा गोः ॥६।१।१२२॥**

लोके वेदे च गोरति वा प्रकृतिभावः। गो अग्रम्। गोग्रम्॥

---

असिद्धावङ्गिनोपि ग्रहणकशास्त्रस्यासिद्धिः। तस्मात् 'नाज्झलौ' इति [१]प्रति ग्रहणकशा[३]स्त्रनिवृत्तेस्तत्र प्रत्याहारसूत्रसंनिविष्टा एवाकारादयो गृह्यन्ते। ते[४]न दीर्घशकारयोरयं सावर्ण्यनिषेधो न। दीर्घस्य प्रत्याहार-सूत्रसंनिवेशाभावादिति॥

एङः। अयावादेशयोरपवादोयम्। हरे इति। 'ह्रस्वस्य गुणः' इति गुणः। अवेति। [५]अव रक्षणे। लोण्मध्यमपुरुषैकवचनम्। एङ इति किम्। दध्यत्र। पदान्तात् किम्। चयनम्। लवनम्। अति किम्। वायो इति। वायविति। तपरः किम्। वायवायाहि॥

**सर्वत्र**। विभाषेति प्रतिषेधविकल्पयोः संज्ञा। तथा च सूत्रम्—'न वेति विभाषा'। नेति निषेधो वेति विकल्पस्तयोः प्रतिषेधविकल्पयो-र्विभाषेति संज्ञा स्यात्। विभाषेति श[६]ब्दसंज्ञा। तस्यार्थो विकल्पोपि संज्ञा ततश्च विकल्पार्थेषु वान्यतरस्यामाचार्यग्रहणमित्येतेष्वपि प्रतिषेध-विकल्पावुपतिष्ठेते इति सिद्धम्। विभाषाप्रदेशेषु निषेधविकल्पावुप-तिष्ठेते। तत्र निषेधेन समीकृते विषये विकल्पः प्रवर्तते। उभयत्र विभाषा प्रयोजनमस्याः संज्ञायाः। यथा 'विभाषा श्वेः'। शुशाव। शिश्वाय। शुशुवतुः। शिश्वियतुः। णल्यप्राप्तेतुसि प्राप्ते संप्रसारणे इयं [७]विभाषा। प्रकृतिभावात् सन्ध्यभावः॥

---

१. पूर्वरूपमेका° $B_2$. २. प्रत्याहारग्रहणक° $Nc_1$; अज्ग्रहणं प्रति $Dc_3$. ३. °शास्त्रीयनिवृत्तेः $Dc_4$. ४. ततः $Dc_4$. ५. अव रक्षणे dropped $Dc_1$. ६. शब्दोपि संज्ञा $Dc_3$, $Dc_4$. ७. परिभाषा $Dc_3$.

**अवङ् स्फोटायनस्य ॥६।१।१२३॥**

अतीति निवृत्तम् । आचि परे गोरवङ् वा स्यात् पदान्ते[1] । गवाग्रम्[3] । गोग्रम् । गोअग्रम् । गवेशः । गवीशः । पदान्ते[2] किम् । गवे ।

**इन्द्रे च नित्यम् ॥६।१।१२४॥**

गवेन्द्रः । चकाराद् गवाक्षः[4] ।

**अचोन्त्यादि टि[5] ॥१।१।६४॥**

अन्त्याच्[6]प्रभृतिशब्दष्टिसंज्ञः[7] स्यात् ॥

---

अवङ् । 'अचि' इत्येतत्तु मण्डूकप्लुतिन्यायेनानुवर्तत इत्यभिप्रेत्याह । अचीति । आद्युदात्तोयमादेशो निपात्यते संनिपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधौ भवति । गावोग्रमस्य गवाग्रमिति । अन्यस्मिंस्तु समासे समासान्तोदात्तत्वेन बाध्यते । स्फोटायनग्रहणं पूजार्थम् । विभाषेत्यनुवर्तत एव ।

इन्द्रे च । इन्द्रशब्दस्थेचि परतो गोर्नित्यमवङ् स्यात् । गवेन्द्र इति । गवामिन्द्रो यज्ञचरुः । पूर्वेण विकल्पे सिद्ध आरम्भसामर्थ्यादेवास्मिन् विधौ नित्ये सति पुनर्नित्यग्रहणं 'प्लुत[8]प्रगृह्या अचि' इत्याद्युत्तरार्थम् । चकारादिति । अनुक्तसमुच्चयार्थादित्यभिप्रायः ॥

अचोन्त्यादि । संनिविष्टानामचां मध्ये योन्त्योच् तदादिको यः शब्दः स टिसंज्ञ इत्यभिप्रायः[9] ॥

---

१. पदान्ते गोरवङ् वादेशः स्यात् P. २. पदान्ते dropped $D_1$, $D_4$. ३. P; C have गवाग्रम् । गवीशः । गवेशः ।; $B_2$ has—गवाग्रम् । गवेशः । गवीशः; $D_2$ drops गोग्रम् । गोअग्रम् ।. ४. गवाक्षम् $B_2$, $D_2$, $D_3$; After it—अथ प्रकृतिभाव उच्यते $D_2$; इति स्वरसंधिः $D_5$. ५. °टिष्टिः $B_1$. ६. अन्त्यादचः प्रभृति शब्दरूपं टिसंज्ञं स्यात् । $D_1$. ७. °संज्ञकः C. ८. °प्लुत° $Dc_2$, $Nc_2$. ९. एवस्येभि° $Nc_2$.

## दूराद्धूते च ॥८।२।८४॥

### दूरादाह्वाने टेः प्लुतः स्यात् ॥

दूरात् । दूरत्वं यद्यप्यनवस्थितं तथापि हूतग्रहणसामर्थ्याद्धूतापेक्षमिहाश्रीयते । यत्र प्राकृतात् प्रयत्नात् प्रयत्नविशेष आश्रीयमाणे शब्दः श्रूयते तद् दूरम् । हूतग्रहणं संबोधनमात्रोपलक्षणं द्रष्टव्यम् । तेन यत्राह्वानं नास्ति तत्रापि प्लुतिः स्यात् । अस्याश्च प्लुतेरेकश्रुतिः । 'दूरात्संबुद्धौ' इत्यनयैकश्रुत्या समावेश इष्यते । दूरात् किम् । आगच्छ भो माणवक देवदत्त३ ॥

एतत्सूत्रव्याख्यानेनैव व्याख्यातप्रायत्वात् स्पष्टत्वाद्वा त्यक्तानि षड्विंशतिसूत्राणि व्याख्यायन्ते । 'वाक्यस्य टेः प्लुत उदात्तः' ॥ ८।२।८२॥ इतः परमा पादसमाप्तेर्वाक्यस्य टेः प्लुत उदात्त इति सर्वमधिकृतं वेदितव्यम् । वाक्यसंज्ञा पारिभाषिकी महाभाष्य उक्ता । तथा हि । आख्यातं साव्ययकारकविशेषणं वाक्यम् । आख्यातं साव्ययं सकारकं सविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम् ।* साव्ययम् । उच्चैः पठति । नीचैः पठति । सकारकम् । ओदनं पचति । सकारकविशेषणम् । मृदु विशदमोदनं पचति । सक्रियाविशेषणं चेति वक्तव्यम् ।* सुष्ठु पचति । दुष्ठु पचति । अपर आह । आख्यातं सविशेषणमित्येव । सर्वाणि ह्येतानि क्रियाविशेषणानि । एकतिङ् ।* एकतिङ् वाक्यं भवतीति वक्तव्यम् । ब्रूहि ब्रूहीति । संबोधनस्य सतिङन्तस्यापि सविशेषणत्वं स्यादिति वाक्यपदीय उक्तम् ।

'संबोधनपदं यच्च तत् क्रियाया विशेषणम्' । इति ।

तथा 'यथानेकमपि क्तान्तं तिङन्तस्य विशेषकम् ।

तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषकम्' ॥ इति ।

---

१. कृतात् Dc1, Nc1; प्राकृतप्रयत्नात् Dc4. २. यत्राप्याह्वानं Bc1, Dc4. ३. देवदत्त देवदत्तक३ Dc1. ४. सविशेषणं Bc1. ५. Before it—उच्चैः पठति Bc1. ६. स्यात् dropped Bc1, Dc4.

तयोदाहरिष्यामः । वाक्यग्रहणमनन्त्यस्य पदस्य निवृत्त्यर्थम् । टिग्रहणं व्यञ्जनान्तस्यापि प्लुतो यथा स्यादिति । अग्निचि३त्[१] ।

'प्रत्यभिवादेशूद्रे' ॥८।२।८३॥ अभिवादयितृ आशीर्वादः प्रत्यभिवादः । तत्राशूद्रविषये यद्वाक्यं प्रवर्तते तस्य टेः प्लुत उदात्तः स्यात् । अभिवादये देवदत्तोहं भोः । आयुष्मानेधि देवद[३]त्त३ । अभिवादवाक्ये संकीर्तिते[४] नाम गोत्रं वा यत्र प्रत्यभिवादान्ते प्रयुज्यते तत्रायं प्लुत इष्यते । इह[५] न । देवदत्त कुशल्यसि । आयुष्मानेधि । अशूद्रे किम् । शूद्रोभिवादयेहं भोः । आयुष्मानेध्यरे शूद्र । स्त्रियामपि निषेधः । अभिवादये गार्ग्यहं भोः । आयुष्मती भव गार्गि । भो राजन्यविशां वा ।* आयुष्मानेधि भोः३ । आयुष्मानेधीन्द्रवर्म३न् । आयुष्मानेधीन्द्रपालि३न् । पक्षे न ।

'हैहेप्रयोगे हैहयोः' ॥८।२।८५॥ हैहयोः प्रयोगे दूराद्धूते हैहयोरेव प्लुतः[६] । पुनर्[७]हैहेग्रहणमनन्त्ययोरपि यथा स्यात् । है३ देवदत्त । देवदत्त है३ । हे३ देवदत्त । देवदत्त हे३ ॥

'गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम्' ॥८।२।८६॥ अन्त्यस्यानन्त्यस्य च ऋकारवर्जितस्य गुरोरेकैकस्य प्लुतः स्यात् प्राचां मतेन । दे३वदत्त । देवद३त्त[८] । गुरोः किम् । वकारात्परस्य मा भूत् । अनृतः किम् । कृष्णमि३त्र । कृष्णमित्र३ । एकैकग्रहणं पर्यायार्थम् । प्राचामिति विकल्पार्थम् । आयुष्मानेधि यज्ञदत्त । तेन यदुच्यते सर्व एव प्लुतः साहसमनिच्छता विभाषा वक्तव्य इति तदुपपद्यते ॥

'ओमभ्यादाने' ॥८।२।८७॥ आरम्भ ओंकारः प्लुतः स्यात् । ओ३म् अग्निमीळे पुरोहितम् । अभ्यादाने किम् । ओमित्येकाक्षरमुद्गीथमुपासीत ॥

१. °न्तस्य टेः प्लुतो Bc1. २. अग्निची ३त् Dc3, Bc1. ३. देवदत्ता ३ Mss. ४. संकीर्तितं Bc1, Dc4. ५. तेनेह न Bc1, Dc4. ६. After it स्यात् Dc4. ७. पुनरपि Bc1. ८. After it—देवदत्त३ । Bc1.

'ये यज्ञकर्मणि' ॥८।२।८८॥ ये इत्यस्य प्लुतः स्याद्यज्ञेऽध्ययने। ये३ यजामहे। यज्ञकर्मणि किम्। स्वाध्याये मा भूत्। [1]ये यजामह इत्यत्रैवायं प्लुत इष्यते। इह न भवति। ये देवासो दिव्येकादशस्थ इति ॥

'प्रणवष्टेः' ॥८।२।८९॥ यज्ञकर्मणि वाक्यटेः स्थाने प्रणव आदेशः स्यात्। प्रणवो नाम पादस्य वार्धर्चस्य वान्त्याक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोंकारं वा विदधाति स इत्याचक्षते प्रातिशाख्यविदः। अपां रेतांसि जिन्वतो३म्। टेरित्यनुवर्तमाने पुनष्टिग्रहणमोकारादेशपक्षे सर्वादेशार्थम्। ओंकारादेशपक्षे त्वनेकाल्त्वादेव सर्वादेशः स्यात् ॥

'याज्यान्तः' ॥८।२।९०॥ यज्ञकाण्डे ये मन्त्राः पठ्यन्ते ते याज्यास्तेषामन्तो यष्टिः स प्लवते यज्ञकर्मणि। स्तोमैर्विधेमाग्नये३। अन्तग्रहणं वाक्यसमुदायरूपाणां याज्याख्यानामृचां यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतो मा भूत् किं तु सर्वान्त्यस्येत्येवमर्थम् ॥

'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' ॥८।२।९१॥ एषामादेः प्लुतो यज्ञकर्मणि। अग्नये अनुब्रू३हि। अग्नये गोमयान् प्रे३ष्य। अस्तु श्रौ३षट्। सोमस्याग्ने व्रीही वौ३षट्। अग्निमा३वह।

'अग्नीत्प्रेषणे परस्य च' ॥८।२।९२॥ अग्नीध ऋत्विजः प्रेषणमग्नीत्प्रेषणं तत्रादेः प्लुतस्तस्मादेव चादेः परस्य प्लुतः। आवय३। आ३वय। अत्रैवायं प्लुत इष्यते। तेनेह न। अग्नीदग्नीन् विहर बर्हिस्तृणीहि। इह तु उद्धर३ उद्धर। अभिहर३ अभिहर। छान्दसः प्लुतव्यत्ययः। यज्ञकर्मणीति निवृत्तम्।

'विभाषा पृष्टप्रतिवचने हेः' ॥८।२।९३॥ पृष्टप्रतिवचने हीत्यस्य प्लुतो वा। अकार्षीः कटं देवदत्त। अकार्षं हि३। अकार्षं हि। पृष्टप्रतिवचने किम्। कटं करिष्यसि हि। हेरिति किम्। करोमि ननु ॥

१. ये३ Bc1.

'निगृह्यानुयोगे च' ॥८।२।९४॥ स्वमतात् प्रच्यावनं निग्रहः। अनुयोगो निग्रहाविष्करणम्। तत्र निगृह्य निगृहं कृत्वानुयोगे यद्वाक्यं वर्तते तस्य टेः प्लुतो वा स्यात्। अद्य श्राद्धमित्यात्थ३। नित्यः शब्द इत्यात्थ३। पक्षे आत्थ॥

'आम्रेडितं भर्त्सने॥' ८।२।९५॥ आम्रेडितसंज्ञं भर्त्सने प्लुतं स्यात्। चौर चौर ३ घातयिष्यामि त्वाम्। भर्त्सने पर्यायेणेति वाच्यम्।* चौर३ चौर। तदर्थमाम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति॥

'अङ्गयुक्तं तिङाकाङ्क्षम्॥' ८।२।९६॥ अङ्गशब्देन युक्तं साकाङ्क्षं तिङन्तं भर्त्सने प्लवते। अङ्ग कुरु ३ ज्ञास्यसि फलम्। भर्त्सने किम्। अङ्गाधीष्व गुडं ते दास्यामि। आकाङ्क्षं किम्। अङ्ग पच। नैतदपरमाकाङ्क्षति॥

'विचार्यमाणानाम्॥' ८।२।९७॥ विचारवाक्यानां टेः प्लुतः स्यात्। होतव्यं दीक्षितस्य गृहा३ इ॥

'पूर्वं तु भाषायाम्॥' ८।२।९८॥ लोके तु विचार्यस्य पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु॥

'प्रतिश्रवणे च॥' ८।२।९९॥ अभ्युपगमप्रतिज्ञाश्रवणोक्तता प्रतिश्रवणं तत्र यद्वाक्यं तस्य टिः प्लवते। गां मे देहि भोः॥ अहं ते ददामि३। नित्यः शब्दो भवितुमर्हति। देवदत्त भोः किमात्थ३॥

'अनुदात्तं प्रश्नान्ताभिपूजितयोः॥' ८।२।१००॥ दूराद्धूतादिविहितः प्लुतः प्रश्नान्ताभिपूजितयोरनुदात्तः स्यात्। अगमः३ पूर्वा३न् ग्रामान् अग्निभूत३ इ। अग्निभूते इत्यस्य प्रश्नान्ते वर्तमानस्यानुदात्तः प्लुतो जातः। अगम इत्यादीनाम् 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति स्वरितः प्लुतः। अभिपूजिते। शोभनः खल्वसि माणवक३॥

१. स्वमतप्रच्यावनं $Nc_1$. २. चौर चौर चौर ३ $Bc_1$. ३. दास्यामि ते गुडम्। $Bc_1$. ४. नैवेदं पर° $Bc_1$. ५. Dropped $Bc_1$, $Dc_4$. ६. °श्रवणोक्ता कृता $Nc_1$; श्रवणोक्तं ततः प्रतिश्रवणं $Dc_2$. ७. अपि for इति $Dc_1$, $Dc_4$. ८. Dropped $Bc_1$. ९. After it—स्यात् $Dc_3$.

'चिदिति चोपमार्थे प्रयुज्यमाने' ॥८।२।१०१॥ चिदित्यस्मिन्नुपमार्थे प्रयुक्ते[1] वाक्यस्य टेरनुदात्तः प्लुतः स्यात् । अग्निचिद् भाया३ त् । अग्निरिव भायादित्यर्थः । उपमार्थे किम् । कथंचिदाहुः । प्रयुज्यमाने किम् । अग्निर्माणवको भायात् ॥

'उपरिस्विदासीदिति च ॥' ८।२।१०२॥ अस्यापि टेरनुदात्तः प्लुतः स्यात् । अधस्विदासी३ त् । उपरिस्विदासी३ त् । अधस्विदासीदित्यस्य 'विचार्यमाणानाम्' इत्युदात्तः[2] प्लुतः । उपरिस्विदासीदित्यस्यानेनानुदात्तः प्लुतः ॥

'स्वरितमाम्रेडितेसूयासंमतिकोपकुत्सनेषु ॥' ८।२।१०३॥

ऐष्वर्थेष्वाम्रेडिते[3][4] स्वरितः प्लुतः स्यात् । असूयायाम् । अभिरूपक३ अभिरूपक व्यर्थं ते आभिरूप्यम् । संमतौ । अभिरूपक३ अभिरूपक शोभनोसि । कोपे । अविनीतक३ अविनीतक क इदानीं ज्ञास्यसि । कुत्सने । शाक्तीक३ शाक्तीक रिक्ता ते शक्तिः । असूयादिषु वेति वाच्यम् ।* माणवक माणवक ॥

'क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्' ॥८।२।१०४॥ आचारभङ्गादिष्वर्थेषु साकाङ्क्षं स्वरितं तिङन्तं प्लवते[5] । क्षियायाम् । स्वयं हि रथेन याति३ उपाध्यायं पदातिं गमयति । आशिषि । पुत्रान् लभस्व३ धनं च । प्रैषे । यवान् लुनीहि३ सक्तूंश्च पिब[6] । आकाङ्क्षं[7] किम् । अग्नीन्[8] विहर ॥

'अनन्त्यस्यापि प्रश्नाख्यानयोः' ॥८।२।१०५॥ एतयोरन्त्यस्यानन्त्यस्यापि टेः स्वरितः प्लुतः स्यात् । आगमः३ पूर्वा३न् ग्रामा३न् । अग्निभूत३इ । अग्निभूते । अत्र पक्षे अनुदात्तोप्युदाहृतः 'प्रश्नान्ताभिपूजितयोः' इत्यत्र ॥

१. प्रयुक्तस्य Dc1, Dc2, Nc1, Nc2. २. इत्याद्युदात्तः Bc1, Dc3. ३. एतेष्व॰ Dc4. ४. ॰म्रेडिते परे Bc1, Dc3. ५. प्लवति Bc1. ६. पिब३ Bc1. ७. आकाङ्क्षायां Dc2. ८. अग्निचिदग्नीन् Dc2.

प्लुतप्रगृह्या अचि ॥६।१।१२५॥

प्लुताः प्रगृह्याश्चाचि[1] प्रकृत्या स्युः । न संधिं यान्तीत्यर्थः । कृष्णा३[2] एहि ।

---

'प्लुतावैच इदुतौ' ॥८।२।१०६॥ दूराद्धूतादौ प्लुतो विहितस्तत्र एचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लुतौ स्तः । वर्धेत इत्यर्थः । ऐ३तिकायन । औ३पगव । यदा समः प्रविभागः अवर्णस्य मात्रा इवर्णोवर्णयोर्मात्रेति तदेदुतोर्द्विमात्रतायां कृतायामवर्णमात्रया सह त्रिमात्रावैचौ स्तः । भाष्यकारमते इदुतोस्त्रिमात्रतायामवर्णमात्रया सह चतुर्मात्रौ स्तः । यदा त्वर्धमात्रावर्णस्याध्यर्धमात्रेवर्णोवर्णयोस्तदाध्यर्धतृतयिमात्रावैचौ क्रियेते ॥

'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' ॥ ८।२।१०७॥ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वांशस्यादादेशः स्यात् स च प्लुत उत्तरस्येदुतौ तावुदात्तौ । प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति परिगणनं कार्यम् । आ गमः३ पूर्वा३इन् ग्रामा३इन् अग्निभूता३इ । पटा३उ । एवमभिपूजितादौ । पदान्त इति वाच्यम् ।* तेनेह न । भद्रं करोषि गौरिति । अप्रगृह्यस्येति किम् । शोभने खट्वे इति ॥

'तयोर्य्वावचि संहितायाम्' ॥८।२।१०८॥ तयोरिदुतोर्यवौ स्यातामचि परे संहितायां विषये । अग्ना३याशा । पटा३वाशा । इदुतोरसिद्धत्वाद्यण् न स्यात् । 'संहितायाम्' इत्यष्टमाध्यायपर्यन्तमधिकारः ॥

प्लुत । [4]त्रिपादीविहितो[5]ऽपि प्लुत [6]एतं प्रकृतिभावं प्रत्यासिद्धो न । तदाश्रयत्वात् । अचीत्यनुवर्तमानेपि पुनरज्ग्रहणं संधिनिमित्तं योऽच् तत्परिहारार्थम् । तेनेह न । जानु उ अस्य रुजति । जान्वस्य रुजति[3] ।

---

१. °श्चि परे P, C; °श्चि परतः $D_2$. २. कृष्ण३ एहि $D_1$. ३. Dropped $Nc_1$, $Dc_1$. ४. Before it—एतत्सूत्रसामर्थ्यादेवात्र न प्लुतस्यासिद्धत्वं निमित्तभूतोऽचि परत इत्युक्तेर्जानु उ अस्येत्यादौ पूर्वेणाचा संधिर्भवति ततो विकृतस्याप्यस्मिन्नचा संधिर्भवति रूपमालायाम् । $Dc_3$. ५. अपि dropped $Nc_2$, $Dc_2$. ६. एनं $Nc_2$, $Dc_2$.

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥१।१।११॥

ईदूदेदन्तं द्विवचनान्तं[1] प्रगृह्यसंज्ञं[2] स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । द्विवचनं[3] किम् । कुमार्यत्र ।

---

अत्र जा[4]नुशब्दात् परो य उकारः स प्रगृह्यः । तत्र उकारयोः सवर्णदीर्घे क्रियमाणे अस्येत्यकारस्यानिमित्तत्वात् तस्मिन् पर[5]त उकारस्य प्रकृतिभावो न । तेन सवर्णदीर्घः स्यादेव । नित्यग्रहणमनुवर्तते । प्लुतप्रगृह्याणां नित्यमयमेव प्रकृतिभावो यथा स्याद् 'इकोसवर्णे–' इत्येतच्छाकलं मा भूत् । तेन हरी एतौ इत्यत्र पक्षे ह्रस्वो न । कृष्ण३ एहीति 'ओमा[6]ङोश्च' इति प्राप्तं पररूपं न भवति ॥

ईदूदेत् । अत्र पक्षत्रयं संभाव्यते । ईदादयो यद् द्विवचनमित्येकः । 'येन विधिस्तदन्तस्य' इति तदन्तस्य ग्र[7]हणम् । ईदाद्यन्तं यद्द्विवचनमिति द्वितीयः । पूर्ववत् तदन्तग्रहे 'प्रत्ययग्रहणे यस्मात् स तदादेस्तदन्तस्य ग्रहणम्' इति द्विवचनान्तग्रहे च ईदाद्यन्तं यद् द्विवचनान्तमिति तृतीयः । तत्र प्र[8]थमे पक्षे पचेते अत्रेत्यत्र प्रगृह्यत्वं न स्यादिति दोषः । न ह्य[9]त्र द्विवचनमेकारः किं तु तदन्तम् । द्वितीये तु पक्षे हरी एतावित्यादौ न स्यात् । न ह्यत्र ईदाद्यन्तं द्विवचनमपि तु त एव । तृतीये तु पक्षे कुमार्योरगारं कुमार्यगारमित्यत्र प्रगृह्यत्वं स्यात् । भवति ह्ये[10]तदीकारान्तं प्रत्ययलक्षणेन द्विवचनान्तं[11] च । तत्र द्वितीये पक्षे दोषः 'आद्यन्तवदेकस्मिन्' इत्यन्तवद्भावात् परिहर्तुं शक्यः । तृतीय[12]पक्षे दोषोपि 'ईदूतौ च सप्तम्यर्थे' इत्यर्थग्रहणात् प्रगृह्यप्रकरणे प्र[13]त्ययलक्षणं नेति ज्ञापितमिति प्रत्ययलक्षणेन द्विवचनान्तत्वाभावात् परिहर्तुं शक्यः । तत्रातिविशदत्वात् तृतीयं पक्षमाश्रित्याह । ईदूदेदन्तं द्विवचनान्तमिति । तपरकरणं न तावद्ध्रस्वप्लुतनिवृत्त्यर्थम् ।

---

१. प्रगृह्यं स्यात् द्विवचनान्तम् । $B_2$. २. प्रगृह्यं $B_1$. ३. द्विवचने $B_2$. ४. Before it—'प्रकृत्यान्तःपादमव्यपरे' इत्यस्मात् सूत्रात् $Dc_2$. ५. परस्य $Dc_1$. ६. 'वृद्धिरेचि' इति प्राप्ता वृद्धिर्न भवति $Nc_2$. ७. ग्रहः $Nc_2$. ८. प्रथमपक्षे $Nc_1$. ९. पूर्ववत् तदन्तग्रहे प्रगृह्यत्वं न स्यादिति दोषः । $Bc_1$. १०. ह्येतत् $Bc_1$. ११. द्विवचनं च $Bc_1$. १२. °पक्षदोषोपि $Nc_2$. १३. प्रत्ययलोपे प्रत्यय° $Nc_2$.

मणीवादेर्न ।* मणीव । रोदसीव[1] । दम्पतीव[2] ।।

**अदसो मात् ॥१।१।१२॥**

अदसो मात्परे ईदूदेतस्तथा[3] । अमी ईशाः । अमू आसाते[4] । अदसः किम् । शम्यत्र । मात् किम्[5] । अमुकेत्र ।

---

दीर्घोच्चारणसामर्थ्यादेव तन्निवृत्तेः[6] । अथ 'दूराद्धूते च' इत्यादि प्लुतनिवृत्त्यर्थमिति चेन्न । इष्टत्वात्तस्य प्लुतस्य । यथा चेष्टः स तथा[7] महाभाष्ये प्रतिपादितम् । तस्मादसंदेहार्थं तपरत्वम्[8] । हरीत्यादीनि प्रथमाद्विवचनान्तानि । आद्ययोर्यणादेशे प्राप्ते प्रगृह्यत्वात् प्रकृतिभावः । अन्त्यस्य तु 'एङः पदान्तादति' इति पूर्वरूपत्वे प्राप्ते । ईदूदेत् किम् । रामावत्र । द्विवचनमिति किम् । कुमार्यत्रेति । 'वयसि प्रथमे' इति कुमारशब्दाद् ङीप् यण् ॥

मणीवेति । मणिशब्दस्य प्रथमाद्विवचनान्तस्य इवशब्दे परतः सवर्णदीर्घः । रोदसीवेति । द्यावापृथिव्याविवेत्यर्थः । दम्पतीवेति । जाया च पतीश्च दम्पती । जायाया जंभावदंभावौ वा निपात्यौ[9] पत्यौ[10] ॥

अदसः । अदसः[11] संबन्धी यो मकारस्तस्मात्परे ईदूदेतः प्रगृह्यसंज्ञाः स्युः । अमी ईशा इति । अदसशब्दात्परस्य जसः शी[12] । त्यदाद्यत्वम् । पररूपत्वम् । आद्गुणः । 'एत ईद्—'इतीकारः । दस्य च मः । प्रगृह्यत्वात् सवर्णदीर्घाभावः । ऊकारस्योदाहरणम् । अमू आसाते । एकारस्योदाहरणं न संभवति । ननु च अमी ईशा इत्यादौ सवर्ण-

---

१. दम्पतीव । रोदसीव । P, $D_2$. २. Before it—जंपतीव । C, $D_1$ जम्पतीव after it—$B_2$, $D_3$. ३. After it—स्युः $B_2$. ४. After it—इमे आसाते $B_1$. ५. मादिति किम् $D_1$. ६. °निवृत्तिः $Dc_3$. ७. तथा च $Dc_3$; ८. तपरकरणम् $Dc_3$. ९. Dropped $Dc_1$, $Dc_3$. १०. पत्यौ dropped $Bc_1$, $Dc_3$. ११. अदसः dropped $Bc_1$. १२. शीभावः $Dc_3$.

**निपात एकाजनाङ् ॥१।१।१४॥**

एकाज्[1] निपात आङ्वर्जः प्रगृह्यः[2] स्यात्[3] । अ अनन्तः । इ ईश्वरः । उ उमेशः ।[4] आ एवम्[5] । अज्मात्रः किम्[6] । प्रादात् । अनाङ् किम्[7] ।

---

दीर्घादिकं संधिं प्रति पूर्वत्रासिद्धन्यायेन ईत्वोत्वयोरसिद्धत्वात् सवर्णदीर्घादिर्न स्यात् । तत् किं प्रयोजनं प्रगृह्यसंज्ञया प्रकृतिभावार्थया । किं च ईत्वोत्वयोरसिद्धत्वात् प्रगृह्यसंज्ञा न प्रवर्ततापि । अन्यच्च । अमी ईशाः । अमू आसाते । अमी अत्र । इत्यत्र ईत्वोत्वयोरसिद्धत्वाद् अय् आव् पूर्वरूपाणि क्रमेण[8] प्राप्नुवन्ति । नैते दोषाः स्युः । 'अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये' इति वचनादीत्वोत्वयोः सिद्धत्वात् । अस्य वचनस्यायमर्थः । बहिष्पदलक्षणे द्वितीयपदव्यवस्थिते स्वरेचि परतोदस ईत्वोत्वे सिद्धे वाच्य इति । एकपदस्थे[9] त्वच्यसिद्धे एव । तथा च यदग्रे वक्ष्यति ग्रन्थकारो 'मुभावस्यासिद्धत्वान्न संधिः' इति तदुपपन्नं भवति । एकपदत्वात् ॥

**निपात** । एकाजिति । यद्येकोच् यस्येति बहुव्रीहिः स्यात् प्रशब्दस्यापि प्रगृह्यत्वं स्यात् । ततश्च 'प्रोपाभ्यां समर्थाभ्याम्' इति निर्देशो नोपपद्येत । तस्मादेकश्चासावच्चेति कर्मधारयोयमिति मत्वाह । **एकाज् निपात** इति । **अ अनन्त** इत्यादि । चादिषु अइउऋऌएऐओऔ इति पठ्यन्ते । तस्मान्निपातत्वम् । निपातः किम् । चकारात्र । **अनाङ् किमिति** ङिदङितोराकारयोर्विभागप्रदर्शनार्थं प्रश्नः ।

---

१. एकोज् P, $D_3$, $D_4$, $D_5$, $B_1$. २. प्रगृह्यसंज्ञः C. ३. Dropped $D_1$, $D_2$. ४. After it—अ निषेधाधिक्षेपयोः । इ विस्मये । उ रोषोक्तौ संबोधने च । $D_2$. ५. After it—एकग्रहणं किम् । अहड अपेहि इति निपातसमुदायस्य मा भूत् $D_6$. ६. एकाजिति किम् $D_2$; अज्मात्रः किम् dropped $D_1$. ७. अनाङिति किम् C, $D_1$. ८. क्रमेण पूर्वरूपाणि $Bc_1$. ९. Before it—एकपदस्थिते त्वसिद्धे वाच्ये इति $Bc_1$ and एकपदस्थिते for एकपदस्थे $Bc_1$.

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥
ओत्तमैरक्ष्यसे न त्वमामृतादेन्द्रतोखिलैः ।
आ एवं सर्वं वेदोर्थः आ एवं सद्वचो हरेः ॥ २ ॥

ईषदर्थे इत्यादि । ईषच्छब्दस्यार्थ ईषदर्थः । तस्मिन् । क्रियाया योगः क्रियायोगस्तस्मिन् । मर्यादा सीमा । अभिविधिरभिव्याप्तिः । मर्यादा चाभिविधिश्च मर्यादाभिविधि तस्मिन् मर्यादाभिविधौ । सर्वो द्वन्द्वो-विभाषयैकवद् भवतीत्येकवद्भावे नपुंसकत्वम् । 'स नपुंसकम्' इति सप्तम्येकवचने ङौ परत 'इकोचि-'इति नुमागमो न भवति । अनित्य-मागमशास्त्रमित्यनित्यत्वात्तस्य । तस्माद् 'अच्च घेः' इत्यौकारोन्ता-देशश्चाकारः । एतेषु चतुर्षु विषयेषु वर्तमान आकारो यस्तं ङितं ङकारेतं विद्याज्जानीयात् । वाक्यस्मरणयोः । वाक्यशब्देन वाक्यार्थ उच्यते । अथवा वाक्यावयवः । स्मरणं स्मृतिः । तत्र वाक्ये स्मरणे च वर्तमानो य आकारः सोङित् । न ङिदङित् ।

ङिदङितोरुदाहरणानि श्लोकेनाह । ओत्तमैरिति । हे हरे त्वमखिलैरोत्तमैरा ईषदुत्तमा ओत्तमास्तैर्न ईक्ष्यसे दृश्यसे । किं मर्यादीकृत्य । आ अमृतादमृतं मोक्षं मर्यादीकृत्य । यावन्मोक्षो भवति तावन्नेक्ष्यस इत्यर्थः । किमभिव्याप्य । आ इन्द्रतः । इन्द्रमभिव्याप्य । इन्द्रेणापीषदुत्तमेन त्वं नेक्ष्यस इत्यभिप्रायः । ङिद्विशिष्टस्यानाङिति प्रगृह्यत्वप्रतिषेधादोत्तमैरित्यादिष्वाकारस्य संधिर्भवत्येव । ईषदाद्यर्थ-त्वेन ङित्त्वात् । आ एवं सर्ववेदार्थः । अयं पूर्ववाक्यार्थ एव सर्व वेदार्थ इत्यर्थः । पूर्वप्रक्रान्तवाक्यार्थप्रदर्शनपरोयमाकारोतोङित् । ततः संधिर्न भवति । अथवा निरर्थकोयं वाक्यालंकारमात्रे प्रयुक्तः । आ एवं सद्वचः सतां वचो वाक्यम् । एवमेवातादृगर्थमेव सद्वचः स्मर्यत इत्यर्थः । अत्र स्मरण आकारो वर्ततेतो न संधिः ।

१. °वेदार्थाः $B_2$, $D_6$. २. क्रियया $Nc_2$. ३. परतो हि $Dc_3$. ४. भवतीति $Dc_3$. ५. °शासन° $Nc_1$, $Dc_2$, $Dc_4$. ६. य आकारः $Nc_1$. ७. ईषदर्थत्वेन $Nc_1$. ८. °तावदर्थमेव $Dc_4$.

ओत् ॥१।१।१५॥

ओदन्तोपि[1] निपातः प्रगृह्यः[2] । अहो ईशाः[3] ।

हैहयोः प्रगृह्यत्वमिति केचित् । है अम्ब । हे ईश ।

संबुद्धौ शाकल्यस्येतावनार्षे ॥१।१।१६॥

संबुद्धावोदन्तोवैदिक[5] इतौ वा तथा । विष्णो इति । विष्ण[6] इति । विष्णविति । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत् ॥

उँञः[4] ॥१।१।१७॥

उँञ[7] इतौ[9] वा प्रागुक्तम्[8] । उ इति । विति ॥

---

ओत् । अनदोदः समभवददोभवदिति च्व्यन्तस्य निपातत्वेपि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति प्रगृह्यत्वं न । लाक्षणिकत्वादोकारस्य । अगोर्गोः संमपद्यत[11] गोभवदित्यत्र तु 'गौण-मुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न भवति प्रगृह्यसंज्ञा । एतच्च सुविशदं पदमञ्जर्यादेर्ज्ञेयम् ॥

संबुद्धौ । संबुद्धावित्यादि । संबुद्धाविति निमित्तसप्तमी । इता-विति परसप्तमी । संबुद्धिनिमित्तो य ओकारस्तदन्तः शब्दोप्युपचारात् संबुद्धावोदन्तः । सोवैदिक इतिशब्दे परतो वा प्रगृह्यसंज्ञा[12] स्यादित्यर्थः[10] । विष्णो इतीति । 'ह्रस्वस्य गुणः' इति संबुद्धावुकारस्य गुण[13] ओकारः । पक्षे अवादेशः । 'लोपः शाकल्यस्य' इति वा वलोपः । संबुद्धाविति किम् । गवित्ययमाह । अत्रानुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादर्थ-वत्त्वाभावाद्विभक्तिर्नोत्पद्यते[14] । अत इदं प्रत्युदाहरणम् । अनुकरणस्य हि साधुत्वमिष्यते ॥

उञः । वितीति । प्रगृह्यत्वाभावे 'इको यणचि' इति यणादेशः ।

---

१. अपि dropped D1. २. प्रगृह्यः स्यात् D1, D3. ३. ईशः D2. ४. अज D1. ५. °दन्त आवैदिक इतौ परे D1. ६. विष्ण इति dropped P, B1. ७. उञि D2. ८. उञः dropped C, D2. ९. इतौ परे D1. १०. After it—स्यात् B1. ११. संपद्यते गोभवति च्व्यन्तस्य निपातनादित्यत्र तु Bc1. १२. °संज्ञः Dc3. १३. गुणः dropped Bc1. १४. °नोपपद्यते Bc1, Dc3, Dc4.

ऊँ ॥ १।१।१८ ॥

अयमादेशश्च वा । ऊँ इति ॥

**मय उञो वो वा** ॥८।३।३३॥

मयः परादुञोचि परे वो वा स्यात् ।

---

ऊँ । **अयमिति** । दीर्घोनुनासिकः प्रगृह्यसंज्ञश्च । ऊँ इत्ययमुञ आदेशोपि वा स्यादित्यर्थः । ऊँ इति । पक्षे पूर्वोदाहृतरूपद्वयम् । एवं त्रीणि रूपाणि भवन्तीति योगविभागस्य फलम् । उञ ऊँ इत्येकयोगे हि सति ऊँ इति उ इति रूपद्वयमेव स्यात् ॥

**मयः** । मय गताविति धातुरस्ति । मयिति यकारेण प्रत्याहारोप्यस्ति तत् कस्येह ग्रहणमित्याशङ्क्याह । **मयः परादिति** । समानाधिकरणे एते पञ्चम्यौ । अयमर्थः । परं करोति परयति । णिच् । परयतीति परः । पचाद्यच् । णिलोपः । संनिधेरुञं स्वस्मात् परं करोति यो मय् तस्मात्परस्योञो वा स्यादिति । कश्च मय् उञं स्वस्मात्परं करोति । यः प्रत्याहारः । तस्माद्व्यवधानेन पर उञ् उपपद्यते न मयधातोः । तस्मादव्यवधानेन परस्योञः प्रयोगासंभवात् । अथवा मय्प्रत्याहारात्सकाशात्परः । अतति गच्छत्यत् । अत सातत्यगमने । क्विप् । परश्चासावच्च परात् । पराच्चासावुञ् च परादुञ् । तस्य परादुञः । मयः परस्योञ इत्यर्थः । अथवा मयः परादिति पदादित्यधिकारात् पदस्य परोवयवो यो मय् तस्मात् परस्योञः । मयन्तात्पदात्परस्योञ इत्युक्तं भवति । एतच्च 'येन विधिस्तदन्तस्य'

---

१. अयमादेशो वा C; Before it—अन्वर्थाव्यर्थयोरुञ् $D_2$. २. °दुञो वो वा स्यादचि । C. ३. Dropped $D_1$, $D_2$. ४. °संज्ञकश्च $Bc_1$, $Dc_3$. ५. °रुञस्तस्मात्पर $Dc_4$. ६. हि dropped $Bc_1$. ७. मयधातोः $Nc_1$. ८. तस्मात्पदादुत्तरस्येत्युक्तं भवति । $Bc_1$. ९. पदादुत्तरस्य $Nc_1$, $Dc_3$.

किमु[1] उक्तम् । किम्वुक्तम् । शमु अस्तु । शम्वस्तु[2] ॥

**इको सवर्णे शाकल्यस्य ह्रस्वश्च ॥६।१।१२७॥**

असवर्णेचि[3] इकः प्रकृत्या स्युर्ह्रस्वश्च[5] वा । चक्री अत्र । चक्रि अत्र । चक्र्यत्र ॥

न समासे* । हर्यर्थः[6] ।

**ऋत्यकः ॥६।१।१२८॥**

ऋति पर अकः प्राग्वत् । ब्रह्मा ऋषिः । ब्रह्म ऋषिः । ब्रह्मर्षिः । होतृ ऋकारः । होतृकारः[7] ॥

इत्यच्संधिः ॥

---

इति परिभाषया लभ्यते । किम्वुक्तमिति । प्रगृह्यत्वादुञः प्रकृतिभावे प्राप्ते वकारोनेन विधीयते । अस्य[8] च वकारस्यासिद्धत्वाद् 'हलि' इत्यनुवर्तमाने 'मोनुस्वारः' इति विधीयमानोनुस्वारः किम्वुक्तमित्यादौ न भवति । किमु उक्तमिति पक्षे प्रगृह्यत्वात् प्रकृतिभावः ॥

इकः । हर्यर्थमिति । हरय इदम् । 'अर्थेन नित्यसमासः सर्वलिङ्गता च' इति समासः । नित्यसमासोदाहरणप्रदर्शनेन समास इति नित्यसमास एव प्रतिषेध इति ज्ञेयम्[9] । इकः किम् । उपेन्द्रः । असवर्ण इति किम् । श्रीशः ॥

ऋति । ऋकारे परतः शाकल्यस्याचार्यस्य मतेनाकः प्रकृतिभावः स्याद्ध्रस्वश्च वा । होतृ ऋकार इति । पक्षेस्य 'अकः सवर्णे दीर्घः' इति सूत्र उक्तमुदाहरणद्वयं भवति[10] ॥

---

१. किम्वुक्तम् । किम् उक्तम् । किमुक्तम् C, $B_2$. २. शम्वस्तु । शमु अस्तु । C, $B_2$. ३. After it—वस्वस्यासिद्धत्वादनुस्वाराभावः । $D_2$. ४. पदान्ता अस° $B_2$. ५. Dropped $B_1$. ६. हर्यर्थम् C, $B_2$, $D_4$, $D_5$, K. ७. C drops this; होतृकारः । पक्षे होतृकारः $B_2$; After it होत्लृकारः $D_5$. ८. तस्य $Bc_1$, $Dc_3$, $Dc_4$. ९. $Bc_1$ drops from नित्य° to ज्ञेयम् ।. १०. संभवति $Dc_1$, $Dc_4$.

स्पष्टत्वात् त्यक्तं सूत्रत्रयं व्याख्यायते । 'अप्लुतवदुपस्थिते' ॥ ६।१।१२९ ॥ उपस्थितो नामानार्ष इतिकरणस्तस्मिन् परे प्लुतोप्लुतवत् स्यात् । प्लुतकार्यं न करोति । सुश्लोक३ इति । सुश्लोकेति ॥

'ई३चाक्रवर्मणस्य' ॥ ६।१।१३० ॥ ई३चाप्लुतः स्यादचि चाक्रवर्मणस्य मतेन । अभुहि३ इत्यब्रवीत् । अभुहीत्यब्रवीत् । आचार्यग्रहणमुपस्थितनिवृत्त्यर्थमनुपस्थितप्राप्त्यर्थमित्युभयत्र विभाषार्थम् । इकारादन्यत्रापीष्यते । वशा३ इयम् । वशेयम् ॥

'अणो प्रगृह्यस्यानुनासिकः ॥' ८।४।५७॥ अणन्तस्याप्रगृह्यस्यावसाने वर्तमानस्यानुनासिको वा स्यात् । दधिँ । मधुँ । दधि । मधु । अप्रगृह्यस्य किम् । अग्नी३ इति ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदतुलोच्चसंधिराद्योनवद्यः ॥

---

१. °मुपास्थिते No1, Dc3. २. °मनुपस्थिते No1, Dc3. ३. इव Dc3.

# अथ हल्संधिः ॥

**स्तोश्चुना श्चुः ॥ ८।४।४० ॥**

स्तोः[1] सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रा[2]मश्शेते । रामश्चिनोति । सं[3]चित् । शार्ङ्गिञ्जय ॥

---

अथ ह[4]ल्संधिरुच्यते । **स्तोः** । **सकारतवर्गयोरित्यादि** । अत्र च सकारतवर्गौ द्वौ कार्यिणौ । निमित्ते अ[5]पि द्वे ए[6]व शकारचवर्गौ[7] । एवं च साम्यात् संख्यातानुदेशः प्राप्नोति । नैष दोषः । यदयं शात्परस्य तवर्गस्य चुत्वाभावं शास्ति तज् ज्ञापयति निमित्तनिमित्तिनोः स्तोश्चुनानयोः संख्यातानुदेशो न भवतीति । आ[8]देशादेशिनोस्तु[9] स्तोश्चुरनयोः संख्यातानुदेश इष्यत एव । ततश्चायमर्थः । सकारस्य शकारेण चवर्गेण च योगे शकारो भवति तवर्गस्यापि शकारेण चवर्गेण च योगे चवर्गो भवतीति । इममेवार्थं चेतसि कृत्वोदाहरति । **रामश्शेते** । **रामश्चिनोतीति** । तवर्गस्यापि चवर्गो भवन् यथासंख्येनैव भवतीति प्रदर्शनायोदाहरति । **सच्चित्** । **शार्ङ्गिञ्जयेति** । पूर्वत्र तस्य चः । उत्तरस्य नस्य ञः । ला[10]घवार्थं श्चाविति सप्तमीनिर्देशे कार्ये श्चुनेति तृतीयानिर्देशः पूर्वेणापि योगे यथा स्यात् । यज् नः यज्ञः । याच् ना याच्ञा ॥

---

१. स्तोः dropped $D_2$, $D_3$; स्तोः सकारतवर्गीयाः शकार° $D_1$. २. रामस् शेते रामश्शेते &c. $D_2$; $D_1$ has तत् शास्त्रम् । तच् शास्त्रम् । शार्ङ्गिञ्जय । रामश्चिनोति । रामश्शेते. ३. सच्चित्रम् $D_5$. ४. हलन्ते सं° $Dc_3$. ५. अपि dropped $Dc_1$. ६. Dropped $Bc_1$. ७. After it च $Dc_1$, $Nc_1$. ८. आदेशानां संख्यातानुदेश इष्यत एव । $Bc_1$. ९. तु dropped $Dc_3$. १०. Before it—अकृत्वा सप्तमीमेतां तृतीयामकरोन्मुनिः । श्चुनेति तस्मात्पूर्वेण संनिपातः परेण वा ॥ $Dc_3$.

**ष्टुना ष्टुः ॥ ८।४।४१ ॥**

स्तोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः। रामष्षष्ठः[1]। रामष्टीकते। तट्टीका[2]। चक्रिण्ढौकसे ॥

**न पदान्ताट्टोरनाम् ॥ ८।४।४२॥**

पदान्ताट्टवर्गात्परस्य स्तोः ष्टुर्न स्यात्[3]। षट् सन्तः। षट् ते[4]।[5] अनाम्नवतिनगरीणामिति वाच्यम्*। षण्णाम्। षण्णवतिः। षण्णगर्यः[6]।

---

ष्टुना। अत्रापि निमित्तनिमित्तिनोः संख्यातानुदेशाभावस्य 'तोःषि' इति प्रतिषेधो ज्ञापकः। अत्राप्ययमर्थः। सकारस्य षकारेण टवर्गेण च योगे षकारो भवति। तवर्गस्य षकारेण टवर्गेण च योगे टवर्गो भवतीति[7]। रामष्षष्ठः। रामष्टीकते। टीकृ गत्याम्। उभयत्र सस्य षः। तट्टीका। तस्य टः। चक्रिण्ढौकस इति। ढौकृ गत्याम्। चक्रिन् इति नस्य णः[8] ॥

न पदान्तात्। षट् सन्त इति। अत्र 'डः सि धुट्' इति यदा धुट् नास्ति तदेदमुदाहरणम्। पदान्तात् किम्। ईट्टे। ईट्टे। टोः किम्। सर्पिष् तमम्। 'ह्रस्वात्तादौ तद्धिते' इति षः। सर्पिष्टमम् ॥

अनामित्यादि। सूत्रे अनामित्यल्पमुच्यते। नाम्नवतिनगरीणां निषेधो नेति वाच्यम्*[9] इत्यभिप्रायः। नामित्यागतनुट्कस्य षष्ठी-बहुवचनस्य[10] निर्देशः। षण्णामिति। 'षट् चतुर्भ्यश्च' इति नुट्। 'झलां जशोन्ते' इति षस्य डः। 'यरोनुनासिकेनुनासिको वा' इति डस्य णः। षण्णवतिरिति। षडधिका नवतिः। शाकपार्थिवादित्वादुत्तर-पदलोपी समासः ॥

---

१. रामस्षष्ठः। रामष्षष्ठः। &c. $D_2$, $D_3$; $D_1$ has before it—यथासंख्यमत्र नेष्यते. २. तट्टीकते $D_1$, $D_3$, $B_2$. ३. भवति $D_1$. ४. षड्न $D_1$. ५. After it—पदान्तात् किम्। ईट्टे। टोः किम्। सर्पिष्टमम्। P, $B_1$, C. ६. षट् नाम्। षण्णाम्। &c. $D_2$. ७. इति dropped $Dc_3$. $Dc_4$. ८ इत्यस्य नस्य णकारः $Nc_1$. ९. Before it—किं तर्हि। $Dc_3$. १०. °नुट्कषष्ठी° $Nc_1$.

**तोः षि ॥८।४।४३॥**

तवर्गस्य षकारे परे[1] न ष्टुत्वम् । सन् षष्ठः ॥

**शात् ॥८।४।४४॥**

शात्परस्योक्तं न । विश्नः । प्रश्नः[2] ॥

**झलां जशोऽन्ते ॥८।२।३९॥**

पदान्ते झलां जशः स्युः । वागीशः । चिद्रूपः[3] ।

---

**तोः षि** । षीति सप्तमीनिर्देशात् पूर्वभूतेन संनिपातेन स्यादेव[4] । रोष्टा[5] । पेष्टेति । **सन्निति** । अस् भुवीत्यस्य शत्रन्तस्य रूपं श्नसोर-ल्लोपे नुमि संयोगान्तलोपे च कृते ॥

**शात्** । **शादिति** । शात्परस्य तवर्गस्य चुत्वं न स्यादित्यर्थः । **विश्नः प्रश्न** इति । विच्छ गतौ । प्रच्छ ज्ञीप्सायाम् । 'यजयाच—' इति नङ् । 'च्छ्वोः शूड—' इति शः ॥

**झलाम्** । ननु च 'स्कोः संयोगाद्योरन्ते च' इत्यतः 'अन्ते' इत्यनुवर्तत एव । किमर्थं पुनर् 'अन्ते' इत्युच्यते । तद्ध्यन्तग्रहणं 'झलो झलि' इत्यतोनुवर्तमानेन 'झलि' इत्यनेन संबद्धम् । अतो 'झलि' इत्यस्य निवृत्त्यर्थं पुनरन्तग्रहणं कृतम् । तेन वस्ता वस्तुमित्यादौ जश्त्वं न । **वागीश** इति । वाचामीशो वागीशः । तत्रान्तर्वर्तिनीं[6] विभक्तिमाश्रित्य पदान्तत्वम् । 'स्थानेन्तरतमः' इति स्थानप्रयत्नान्तरतम्याद्[7] गकारो[8] जश् । **चिद्रूप** इति । चित् ज्ञानं रूपमस्य । अत्रापि तथा ॥

---

१. परे dropped P. २. Dropped D1. ३. चिद्रूपम् B2, D8. ४. संनिपाते स्यादेव । Bc1. ५. लोष्टा । Bc1. ६. अत्रा° Nc2, Dc3, Dc4. ७. °प्रयत्नत आन्त° Nc1; °प्रयत्नेनान्त° Dc2. ८. कस्य गकारो Dc2.

**यरोनुनासिकेनुनासिको वा ॥८।४।४५॥**

यरः पदान्तस्यानुनासिके परेनुनासिको वा स्यात्[1] । एतन्मुरारिः । एतद्मुरारिः[2] ।[3]

मयटि नित्यं वाच्यम्* । चिन्मयम्[4] ।

**तोर्लि ॥८।४।६०॥**[5]

तवर्गस्य लकारे परे परसवर्णः[6] । तल्लयः । विद्वाँल्लिखति । सानुनासिकनिरनुनासिकत्वेन यवला द्विधा । तेन नकारस्य सानुनासिको लकारः ॥

**उदः स्थास्तम्भोः पूर्वस्य ॥८।४।६१॥**

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ॥

---

**यरः** । अनुनासिका ञमङणनाः[7] । पदान्तस्य किम् । यत्नः ॥ **मयटीति** । एतच्च व्यवस्थितविभाषाविज्ञानात् सिद्धम् । **चिन्मयमिति** । मयट् तद्रूप इति केचित् । पाणिनिमते तु 'मयड् वैतयोः—' इति मयट् ।

**तोर्लि** । **तल्लय इति** । तत् लय इति स्थिते । **विद्वाँल्लिखतीति** । विद्वान् लिखति इति स्थिते । नकारस्य परसवर्णे लकारे प्राप्ते विशेषमाह । **सानुनासिकेति** । यतो द्विप्रकारा यवलास्तेन कारणेन नकारस्य सानुनासिकस्य लँसवर्णे[8] कार्ये स्थानेन्तरतमपरिभाषया सानुनासिक एव लँकारः स्यादित्यभिप्रायः ॥

उदः **स्थास्तम्भोरिति** । ष्ठा गतिनिवृत्तौ । स्तम्भु रोधने[9] ॥

---

१. Dropped $D_1$. २. Before it—एतन् मुरारिः $D_2$. ३. After it—स्पर्शस्यैवेष्यते । तेन चतुर्मुखः। $D_2$ (तेन dropped), $B_1$, C. ४. P has after it स्पर्शस्यैवेष्यते । तेन चतुर्मुखः ।. ५. तोर्लि° $D_1$; तोस्तवर्गस्य $B_2$; तोर्लकारे परसवर्णः $D_2$. ६. After it—स्यात् $D_1$. ७. ङञणनमाः । $Bc_1$. ८. ले सवर्णे $Bc_1$, $Dc_4$. ९. After it—इत्येतयोर्ग्रहणम् । $Dc_3$.

## आदेः परस्य ॥१।१।५४॥

पञ्चमीनिर्देशेन क्रियमाणं कार्यं परस्यादेर्ज्ञेयम्[1] । उत्थानम् । उत्तम्भनम्[2] ।

## झयो होऽन्यतरस्याम् ॥८।४।६२॥

झयः परस्य हस्य पूर्वसवर्णो वा[3] । वाग्घरिः । वाग्हरिः । घोषवत्त्वादिगुणतो[4] वर्गचतुर्थो हस्य सवर्णः[5] ।

---

आदेः । 'अलोन्त्यस्य' इत्यस्यापवादोयम् । इह शास्त्रे न क्वचित् परस्येत्युच्चार्य कार्यं विधीयत इत्येतन्निर्विषयमित्याशङ्क्याह । पञ्चमीनिर्देशेनेति । 'तस्मादित्युत्तरस्य' इति परिभाषयेत्यभिप्रायः । उत्थानमिति । ल्युट् । उदः परस्य सकारस्य पूर्वसवर्णस्तकारः । केचिदघोषस्य महाप्राणस्य तादृश एव पूर्वसवर्णस्थकारः । तस्य 'खरि च' इति चर्त्वे[6] तकारे क्रियमाणेसिद्धत्वात् तन्मते थकारद्वय-श्रवणम् । पूर्वस्य चर्त्वं तकारः । तस्य[7] 'अनचि च' इति द्वित्वम् । 'झरो झरि सवर्णे' इति लोपः । उत्तम्भनमिति । स्तम्भेर्ल्युट्[8] । पूर्ववत्साधनम् । स्थास्तम्भोः किम् । उत्स्नातः । उदः परस्य स्कन्दे रोगे वाच्ये पूर्वसवर्णो वाच्यः । उत्कन्दनो नाम रोगः ॥

झयः । वाग्घरिरिति । ननु चात्र पूर्वस्य सवर्णत्वेन कवर्गेषु पञ्चसु प्राप्तेषु कथं घकार एव जात इत्याशङ्कायामाह । घोषवत्त्वादिति । हस्य यः पूर्वसवर्णो भवति[9] स वर्गचतुर्थ[10] एव । कुतः । घोषवत्त्वादिगुणतः[11] । घोषवत्त्वं महाप्राणत्वं नादवत्त्वं सोष्मत्वं चेति चतुर्गुणत्वेनान्तरतम्यादित्यर्थः । तत्र घोषवत्त्वादयस्त्रयो गुणाः

---

१. विधीयमानं $D_1$. २. P has after this—उदः परस्य स्कन्दे रोगे वाच्ये पूर्वं सवर्णः । ३. After it—स्यात् $D_2$, $D_5$. ४. गुणवतो P, $D_4$, $D_5$. ५. After it—वाग्घरिः । वाग्हरिः । तद्धविः । $D_5$. ६. चर्त्वम् $Nc_2$. ७. तथा $Bc_1$. ८. °र्ल्युडादि $Dc_4$. ९. हस्य पूर्वसवर्णो य एव भवति $Dc_2$. १०. चतुर्थः सवर्ण एव $Dc_4$. ११. °गुणवतः $Dc_3$, $Dc_4$.

तत् शिव इत्यत्र जश्त्वे कृते[1]

**खरि च ॥८।४।५५॥**

खरि झलां चरः स्युः ॥

**शश्छोटि ॥८।४।६३॥**

झयः परस्य शस्य छो वा स्यादटि । तच्छिवः । तच्शिवः । छत्वममीति वाच्यम्* । तच्छ्लोकेन[2] । अमीति किम् । वाक् श्चोतति ॥

---

'तुल्यास्यप्रयत्नं सवर्णम्' इत्यस्मिन् सूत्रे कथिता ज्ञातव्याः । सोष्मत्वं तु शषसहानां वर्गद्वितीयचतुर्थानां च ॥

तत् शिव इत्यादि । तदो 'वावसाने' इति चर्त्वे कृते पश्चात् 'शिव' इत्यनेन संबन्धे जश्त्वं 'झलां जशोऽन्ते' इति । ततश्च तद् शिव इति स्थिते ।

खरि चेति । अनेन चर्त्वे आन्तरतम्यात्तकारे कृते 'स्तोःश्चुना—' इति चकारे तच् शिव इति स्थिते ।

'शश्छोटि' इत्यनेन पक्षे शस्य छत्वे कृते तच्छिव इति स्यात् । छत्वाभावे तच् शिव इति । छत्वममीति । 'शश्छोटि' इत्यत्र 'शश्छोमि' इति वक्तव्यमित्यर्थः । 'अमि' इत्युक्ते यत् सिध्यति तद्दर्शयति[3] । तच्छ्लोकेनेति । अत्र[4] लस्याट्त्वाभावादप्राप्तं छत्वम् । प्रक्रिया पूर्ववत्[5] । वाक् श्चोततीति । अत्र शकारात्परो यश्चकारः सोम् न भवतीति न छत्वम् ॥

---

१. Dropped P, $D_1$. २. Before it—तत् श्लोकेन $D_1$; After it—तच् श्लोकेन $B_2$, $D_4$. ३. °मिति शेषः $Bc_1$, $Dc_4$. ४. अटि लस्याभावादप्राप्तं $Dc_2$. ५. पूर्ववत् प्रक्रिया $Nc_1$.

**मोनुस्वारः ॥८।३।२३॥**

हलि[1] मस्यानुस्वारः स्या[2]त् पदान्ते । हरिं वन्दे । अपदान्ते तु गम्यते ।

**नश्चापदान्तस्य झलि ॥८।३।२४॥**

नस्य मस्य चा[3]पदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । झ[4]लि किम् । आक्रम्यते ।

**अनुस्वारस्य ययि परसवर्णः ॥८।४।५८॥**

अ[5]नुस्वारस्य ययि परे परसवर्णः स्या[6]त् । शान्तः । अङ्कितः ।

---

**मोनु** । अपदान्ते तु गम्यत इति । अयं भावः । 'पदस्य' इत्यनुवर्तते । तेन पदान्तस्यैव मस्यानुस्वारः स्यात् । अपदान्तस्य तु न स्या[7]त् । तेन गम्यत इति सिध्यतीति । हलि किम् । किमत्र ।

**नश्च** । यशांसीति । 'जश्शसोः शिः' । 'नपुंसकस्य झलचः' । इति नुम् । 'सान्तमहतः—' इति दीर्घः । नस्यानुस्वारः । **आक्रंस्यत** इति । क्रमेर्लृट् । 'आङ् उद्गमने' इत्यात्मनेपदम् । अपदान्तस्य मस्यानुस्वारः । अपदान्तस्य किम् । राजन् भुङ्क्ष्व । झलि किम् । मन्य[8]ते । गम्यते ॥

**अनुस्वारस्य** । अनुस्वारस्य ययि परतः परसवर्णः स्या[8]त् । **शान्त** इति । शमु उपशमे । निष्ठा । 'अनुनासिकस्य क्विझलोः' इति दीर्घः । 'वा दान्त—' इतीडभावो वा निपात्यते । मकारस्य 'नश्चापदान्तस्य' इत्यनुस्वारः । तस्य परसवर्णो नकार एव स्यादान्तरतम्यात् । एवं सर्वत्रानुस्वारस्य परसवर्णो ययि परतः सानुनासिक एव स्यादान्तरतम्यादिति ज्ञेयम् । **अ[9]ङ्कित** इति ।

---

१. हलि पदान्ते च मस्या° $B_1$. २. Dropped $B_2$, $D_2$. ३. चापदान्ते वर्तमानस्यानुस्वारः स्यात् झलि परे । $D_4$. ४. झलीति किम् । जंघन्यते । P; झलि to आक्रम्यते dropped $D_1$, $D_4$, $D_5$. ५. $D_1$, $D_2$, $B_2$ drop the Vṛitti. ६. Dropped P. ७. Dropped $Dc_4$. ८. Dropped $Dc_1$, $Nc_1$. ९. Before it—नकार एव $Dc_3$.

**वा पदान्तस्य ॥८।४।५९॥**

पदान्तस्यानुस्वारस्य यंयि परसवर्णो वा। त्वं करोषि। त्वङ्करोषि। संयन्ता। सँय्यन्ता। संवत्सरः। सँव्वत्सरः। यं लोकम्। यँल्लोकम्॥

**मो राजि समः क्वौ ॥८।३।२५॥**

क्विबन्ते राजतौ समो मस्य म एव स्यात्। सम्राट्॥

**हे मपरे वा ॥८।३।२६॥**

मपरे हकारे मस्य मः स्याद्वा। किम् ह्मलयति। किं ह्मलयति॥

---

अङ्क पदे लक्षणे च। निष्ठा। अत्रानुस्वारस्य नकारस्थाने जातस्य परसवर्णो ङकारः। कुर्वन्तीत्यत्र णत्वस्यासिद्धत्वात् पूर्वं नस्यानुस्वारः। तस्य परसवर्णो नः। तस्याप्यसिद्धत्वात् पुनर्णत्वं न। यंयीति किम्। सर्पींषि॥

**वा पदान्तस्य**। 'वावसाने' इत्यतो वाग्रहणेनुवर्तमानेपि पुनर्वाग्रहणं द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति मध्ये वर्तमानस्य 'अनुस्वारस्य ययि परसवर्णः' इत्यस्य विधेर्नित्यत्वार्थम्। त्वङ्करोषीति। मकारस्यानुस्वारे सति तस्य पक्षे परसवर्णो ङकारः स्यादान्तरतम्यात्। संयन्तेत्यादि। पक्षे क्रमेणानुस्वारस्य सानुनासिका यकारवकारलकाराः॥

**मो राजि**। **सम्राडिति**। संपूर्वस्य राजः 'सत्सूद्विष—' इति क्विप्। मस्य मवचनमनुस्वारनिवृत्त्यर्थम्। राजि किम्। संयत्। समः किम्। किं राट्। क्वौ किम्। संराजिता॥

**हे म**। मः परो यस्मादिति मपरः॥

---

१. ययि परे $B_2$. २. राजतौ परे $B_2$. ३. Before it $D_1$ has—सिद्धे सत्यारम्भो नियमार्थः। ४. हकारे परे $B_2$. ५. म एव स्याद्वा। C, $B_1$; मो वा स्यात् $D_3$; मः। $D_5$. ६. °स्थानजातस्य $Nc_2$. ७. पूर्वं dropped $Dc_1$. ८. ययि किम् $Dc_1$, $Dc_3$, $Nc_1$.

यवलपरे यवला वा*। यवलपरे हकारे मस्य यवला वा स्युः। किँय्ह्यः। किं ह्यः। किँव्ह्वलयति। किं ह्वलयति। किँल्ह्लादयति। किं ह्लादयति ॥

**नपरे नः ॥८।३।२७॥**

नपरे हकारे मस्य नो वा स्यात्। किन्ह्नुते। किं ह्नुते ॥

**ङ्णोः कुक्टुक् शरि ॥८।३।२८॥**

ङकारणकारयोः कुक्टुकावागमौ वा[2] स्तः शरि[3]। प्राङ्क्षष्ठः। प्राङ् षष्ठः। सुगण्ट्षष्ठः। सुगण् षष्ठः[4] ॥

**डः सि धुट् ॥८।३।२९॥**

---

यवलपर इति। यवलाः परे यस्य सः। यवलाश्चान्तरतम्यान्मकारस्य सानुनासिका एव भवन्ति ॥

नपरे।

ङ्णोः कुक्। कुक्टुकोः पूर्वान्तत्वकरणं छत्वार्थं षत्वनिषेधार्थं ष्टुत्वनिषेधार्थं च। तथा हि। प्राङ्क् छेते। सुगण्ट् छेते। परादित्वे हि सति 'शश्छोऽटि' इति छत्वं न स्यात्। तत्र हि 'पदान्तात्' इत्यनुवर्तते। अन्यथा पुराक्रूरस्य विसृपो विरप्शिन् इत्यत्रापि स्यात्। प्राङ्क् साय इत्यत्र 'सात्पदाद्योः' इति षत्वनिषेधो न स्यात्। परादित्वे सुगण्ट् साय इत्यत्र 'न पदान्ताट्टोः' इति ष्टुत्वनिषेधो न स्यात्। तस्मात् पूर्वान्तौ कुक्टुकौ क्रियेते ॥

डः सि। नन्वत्र सूत्रे 'सि' इति सप्तम्यस्ति। ततश्च 'तस्मिन्निति निर्दिष्टे पूर्वस्य' प्राप्नोति। मैवम्। 'डः' इति पञ्चमी। ततः

---

१. Dropped $D_5$. २. स्तो वा $B_1$, $B_2$, $D_3$; स्यातां वा $D_1$; वा शरि dropped $D_6$. ३. शरि परे $D_4$. ४. drops सुगण्षष्ठः and प्राङ्षष्ठः. ५. च dropped $Dc_1$, $Nc_1$. ६. सुगण्ट् छेते dropped $Dc_1$, $Dc_2$, $Bc_1$. ७. परादित्वे हि सति $Dc_2$, $Bc_1$.

डात्परस्य सस्य वा[1] धुडागमः स्यात् । षट्त्सन्तः । षट् सन्तः ॥

**नश्च ॥८।३।३०॥**

नकारान्तात्[2] परस्य सस्य धुड् वा स्यात्[3] । सन् त्सः । सन् सः ।

**शि तुक् ॥८।३।३१॥**

नस्य पदान्तस्य शि[4] परे तुग्वा[5] । सञ् च् छंभुरिति स्थिते[6] 'झरो झरि सवर्णे'[7] । सञ्छंभुः । सञ्च् शंभुः । सञ् शंभुः ।

---

'तस्मादित्युत्तरस्य' इत्युत्तरस्यैव स्यात्परत्वादिति चेतसि कृत्वाह । डात्परस्य सस्येति । धुटः परादित्वकरणं 'न पदान्ताट्टोरनाम्' इति ष्टुत्वनिषेधार्थम् । श्चुत्वं धुटि सिद्धं वाच्यम्* । अटतीत्यट् श्चोततीति धुट् न भवति । श्चुतिरयं सादिः ॥

**नश्च ।**

**शि तुक् ।** अस्यापि पूर्वान्तत्वकरणं छत्वार्थम् । यद्येवं कुर्वन् च्छेते अत्र नकारस्य णत्वं प्राप्नोति । तुगन्तत्वेन पदान्तत्वाभावे 'न पदान्तस्य' इति निषेधाभावात् । उच्यते । 'स्तोश्चुना श्चुः' इत्यत्र 'स्तोश्चुना' इति योगविभागः क्रियते । तत्र च णत्वनिषेधोनुवर्तते । ततश्चायमर्थः । स्तोश्चुना णकारो न भवति । ततः 'श्चुः' इति सूत्रम् । ततः 'स्तोश्चुना' इति वर्तते । **सञ् च् छंभुरिति स्थिते** इति । सन् शंभुरिति स्थिते तुकि कृते शस्य छत्वे चुत्वे च नतयोः कृत इत्यर्थः । **'झरो झरि सवर्णे'** इति । चकारस्य लोप इत्यर्थः । **सञ्च् शंभुरिति** । तुकि चुत्वे छत्वाभावे रूपम् । सञ् शंभुरिति । तुगभावे रूपम् ॥

---

१. धुडागमः स्याद्वा P; धुडागमो वा । $D_5$; धुड् वा C, $B_1$, $D_3$. २. Dropped $D_4$, $D_5$. ३. नकारस्य P; नान्तस्य $D_2$. ४ शे for शि परे $B_2$, $D_2$. ५. तुग्वा स्यात् P, $B_2$, $D_2$. ६. सञ् च् शंभुरिति स्थिते $D_2$; सञ् च् छंभुरिति स्थिते dropped $D_1$. ७. After this हलः परस्य झरो लोपः स्यात्, णे झरि परे $D_2$. ८. छंभु° $Dc_1$.

**ङमो ह्रस्वादचि ङमुण्नित्यम् ॥८।३।३२॥**

[1]ह्रस्वोत्तरात् [2]ङमः पदान्तात् ङमः परस्याचो नित्यं ङमुडागमः [3]स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥

**पुमः खय्यम्परे ॥८।३।६ ॥**

पुम्शब्दस्य रुः स्यादम्परे खयि ॥

---

ङमो ह्रस्वात् । ह्रस्वोत्तरादिति । ह्रस्वात् [4]परो यो ङम् पदान्तस्तस्मात्परस्याचो नित्यं ङमुडागमो [5]यथासंख्यं स्यादित्यर्थः । अत्र सूत्रे '[6]ह्रस्वात् ङमः' इति पञ्चम्यस्ति 'अचि' इति च सप्तमी । तत्र परत्वात् 'तस्मादित्युत्तरस्य' इतीयमेव परिभाषा प्रवर्तते । अत एवोक्तं '**परस्याचः**' इति । **प्रत्यङ्ङात्मेति** । अत्र [7]ङुट् जातः । **सुगण्णीश** इत्यत्र [8]णुट् । **सन्नच्युत** इत्यत्र [9]नुट् यथासंख्येन । ङमुटः परादित्वकरणं कुर्वन्नास्त अत्र णत्वं मा भूदिति । पूर्वान्तत्वे हि पूर्वस्य नस्य पदान्तत्वाभावात् 'पदान्तस्य' [10]निषेधो न स्यात् । ननु च परमदण्डिनेत्यत्र प्रत्ययलक्षणेन समासान्तर्वर्तिविभक्त्याश्रयेणास्य नस्य पदान्तत्वात् तस्मात्परस्याचो ङमुट् [11]प्राप्नोति । मैवम् । 'उञि च पदे' इत्यतः 'पदे' इत्यनुवर्तते । ततश्चाचि पदेऽजादेः परस्येत्यर्थः स्यात् । अतोऽत्र ङमुट् न भवति । ङमः किम् । [12]त्वमास्से । ह्रस्वात् किम् । प्राङ् आस्ते । अचि किम् । प्रत्यङ् करोति ॥

**पुमः** । पुंसः [13]सकारन्यूनस्यायं निर्देशः । [14]सकारस्य संयोगान्तलोपे कृते तस्यैव [15]कार्यित्वात् । **अम्** इति । अम् परो यस्मात् सोऽम्परः । अमिति प्रत्याहारो गृह्यते न द्वितीयैकवचनम् । खया प्रत्याहारेण साहचर्यात् ॥

---

१. ह्रस्वादुत्तरात् $D_2$. २. पदान्तात् ङमः P, C, $D_3$. ३. Dropped $B_1$. ४. उत्तरात् परो $Bc_1$. ५. यथासंख्येन $Dc_2$. ६. ह्रस्वोत्तरात् $Bc_1$. ७–८–९. ङट्, णट्, नट् All Mss. except $Dc_2$. १०. णत्वनिषेधो $Bc_1$, $Dc_3$, $Dc_4$. ११. प्राप्नोति $Nc_1$. १२. त्वमसौ $Bc_1$. १३. सकारपूर्वस्या° $Dc_2$. १४. अतः सकारस्य $Dc_3$. १५. कार्यत्वात् $Nc_2$, $Dc_2$.

**अलोन्त्यस्य ॥१।१।५२॥**

षष्ठीनिर्दिष्टोन्त्यस्यादेशः स्यात् ॥

**अत्रानुनासिकः पूर्वस्य तु वा ॥८।३।२॥**

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात्[२]। इत्युकारः सानुनासिकः ॥

**अनुनासिकात्परोनुस्वारः ॥८।३।४॥**

अनुनासिकाभावपक्षे रोः पूर्वस्यानुस्वारागमः ॥

संपुंकानां सो वक्तव्यः* । ⨯ क[४] ⨯ पनिवृत्त्यर्थम् । पुँस्कोकिलः[५] । पुंस्कोकिलः । पुँस्पुत्रः । पुंस्पुत्रः । खयि[६] किम् । पुंदासः । अम्परे किम् । पुंक्षीरम् । ख्याधातौ नेति केचित् । पुंख्यानम् ॥

---

अलः । षष्ठीनिर्दिष्टान्त्यस्येति[७] । षष्ठ्या निर्दिष्टस्य योन्त्यस्त-[८]स्यादेशः स्यादित्यर्थः । अयं भावः । स्थानषष्ठ्या निर्दिष्टस्य य आदेश उच्यते स तस्य स्थानषष्ठीनिर्दिष्टस्यान्त्यस्यालः स्थाने स्यादिति । तथा च 'पुमः खय्यम्परे' इति 'पुमः' इति स्थानषष्ठ्या निर्दिष्टस्य पुमो मकारस्य रुर्भवति ॥

अत्रानुनासिकः । इत्युकार इति । अनेन सूत्रेण पुम इत्यत्र वर्तमान उकारः सानुनासिको जात इत्यर्थः[९] ॥

अनुना ॥

संपुंकानामिति । ⨯क⨯पनिवृत्त्यर्थमित्युपलक्षणमेतत् षत्व-विसर्गयोरपि निवृत्त्यर्थम् । 'समः सुटि' । 'पुमः खय्यम्परे' ।

---

१. षष्ठीनिर्दिष्टस्यान्त्यस्या° $D_4$, $D_5$, K notices षष्ठीनिर्दिष्टः also. २. Dropped $B_1$. ३. After it स्यात् $B_2$. ४. Before it—विसर्जनीयस्य $D_1$. ५. पुँस्कोकिलः । पुँस्पुत्रः । पुंस्कोकिलः । पुंस्पुत्रः । $B_1$. ६. P omits खयि किम् । पुंदासः । After it $B_2$ has पुंक्षीरम्. ७. षष्ठीनिर्दिष्टस्यान्त्यस्येति । $Dc_1$, $Dc_2$, $Dc_3$. ८. षष्ठ्या निर्दिष्टः षष्ठीनिर्दिष्टस्तस्य योन्त्य° $Dc_2$. ९. उकार इत्यर्थः $Dc_4$.

## समः सुटि ॥८।३।५॥

### समो मस्य रुः स्यात् सुटि परे ।

'कानाम्रेडिते' इत्येतेषु सूत्रेषु रुर्विधीयते सकारो वेति पक्षद्वयमस्ति । तत्र रुविधिपक्षे 'संपुंकानां विसर्गस्य सो वक्तव्यः*' । अन्यथा संस्कर्तेत्यत्र 'वा शरि' इति स्यात् । पुंस्कोकिल इत्यत्र 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् । कांस्कानित्यत्र 'कुप्वोः—' इति ≍कः[1] । अयं च पक्षो 'मतुवसो रु—' इत्यस्यानुवृत्तेर्लभ्यते[2] । सकारविधिपक्षेयमर्थः । संपुंकानां सो वक्तव्यो व्याख्येयः । एभिः सूत्रैः सो विधीयत इति व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् ।

समः सुटीति । द्विसकारको[3] निर्देशः । तेन सो विधीयते । एषु सूत्रेषु रुस्त्वनुवर्तमानोपि[4] न संबध्यते । संबन्धानुवृत्तेः 'मतुवसो रु संबुद्धौ छन्दसि' इति । ननु च 'कानाम्रेडिते' इत्यत्र सकारानुवृत्तौ[5] 'नश्छव्यप्रशान्' इत्यत्रापि स्यात्[6] सकारः । मैवम् । संबन्धानुवृत्तेः 'समः सुटि' इति । तेन तत्र[7] रुरेव संबध्यते न सः । 'कानाम्रेडिते' इत्यत्र तु[8] सकारमात्रं संबध्यते । 'समः सुटि' इति तु[9] निवर्तते । ननु सकारविधिपक्षे संस्कर्तेत्यादावनुनासिकानुस्वारौ न स्तः । [11]तौ हि रुविधावुक्तौ[12] नान्यत्रेति । मैवम् । तस्योपलक्षणत्वात् । तत्र सकारविधिपक्ष एवाचार्याणामभिप्रेतः । कुतः । यतो रेफविसर्गविधायकं सूत्रं पठित्वैवं वदति संपुंकानामिति । रुविधौ हि विसर्गं कृत्वा[13] एतदवक्ष्यत्[14] । अयं च पक्षो **भाष्यकाराभिप्रेतोतः** साधीयान् । **पुंस्कोकिल** इति । पुमांश्चासौ कोकिलश्च । अनुनासिकपक्षेर्धो[15] बिन्दुः । अनुस्वारपक्षे

१. Dropped P, $D_5$. २. इत्यतोनु° $Dc_1$; इत्यतो रु इत्यस्यानु° $Nc_1$, $Dc_3$, $Dc_4$. ३. °सकारो $Nc_1$. ४. अपि dropped $Dc_2$. ५. सकारस्यानुवृत्तौ $Dc_4$. ६. सकारः स्यात् $Dc_2$. ७. Dropped $Nc_1$. ८. Dropped $Nc_1$, $Dc_2$. ९. इत्यनुवर्तते $Nc_1$. १०. Dropped $Dc_1$, $Dc_2$, $Dc_4$. ११. यत स्तौ $Bc_1$. १२. °वुक्तावत्रेति $Dc_1$, $Dc_3$, $Nc_1$, $Nc_2$. १३. उक्त्वा $Dc_4$. १४. एतदेव वक्ष्यते $Dc_2$. १५. पक्षेर्धबिन्दुः $Nc_1$.

[1]सँस्कर्ता । संस्कर्ता ॥

**नश्छव्यप्रशान् ॥८।३।७॥**

अम्परे छवि नकारस्य रुः[2] स्यान्न तु प्रशान्शब्दस्य ॥

**खरवसानयोर्विसर्जनीयः ॥८।३।१५॥**

खरि अवसाने च पदान्ते[3] रेफस्य विसर्जनीयः[4] ॥

**विसर्जनीयस्य सः ॥८।३।३४॥**

[5]खरि विसर्जनीयस्य[6] स स्यात् । श्चुत्वम्[7] । शार्ङ्गिँश्छिन्द्धि । शार्ङ्गिंश्छिन्द्धि । चक्रिँस्त्राहि चक्रिंस्त्राहि । अम्परे किम् । सन्त्सरुः ॥

---

समग्रः । खयीति किम् । पुंदासः । पर इति किम् । यतोमीति सप्तम्यैव परत्वं स्यात् । मैवम् । अमि खय्पर इति विपरीतमपि ज्ञायेत[9] ॥

**संमः**[10] । मोनुस्वारे प्राप्ते वचनम् । संस्कर्तेति । 'संपर्युपेभ्यः—' इति सुट् । समः किम् । उपस्कर्ता । सुटि किम् । संकरः ।

**नश्छवि** । छवि किम् । सन् करोति ॥

**खर** । खरवसानयोः किम् । अग्निर्नयति । इह नृपतेरपत्यं नार्पत्य इति वृद्धेर्बहिरङ्गत्वात्तदाश्रयस्य रस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वाद्विसर्गो न ॥

**विसर्जनीयस्य** । 'खरवसानयोर्विसर्जनीयः' इत्यतः 'खरि' इति मण्डूकप्लुतिन्यायेनानुवर्तत इत्यभिप्रेत्याह । खरीति । श्चुत्वमिति । 'स्तोश्चुना—' इति । शार्ङ्गिँश्छिन्द्धीति । शार्ङ्गिन् छिन्द्धि इति स्थिते

---

१. Before it सम् स्कर्ता इति स्थिते $D_1$, $B_1$, C. २. रुर्वा स्यान्न $B_2$. ३. पदान्तस्य $B_2$. ४. After it स्यात् C, $D_3$, $D_4$, $B_1$. ५. खरि पदान्ते P. ६. विसर्गस्य $D_2$. ७. पुनश्चुत्वम् । $B_1$. ८. खयि परतः $Dc_2$. ९. ज्ञायते $Dc_1$, $Dc_2$, $Bc_1$. १०. Before it—व्याघाताविति । तथोक्तं महाभाष्ये । रुविधिः पुंख्याने । पुंख्यानमित्यत्र रुविधिर्न भवति । $Dc_3$, $Dc_4$.

अप्रशान् किम् । प्रशान् तनोति ॥

**नॄन्पे ॥८।३।१०॥**

पेपरे नॄन्नकारस्य रुर्वा ॥

**कुप्वोः ᳲक ᳲपौ च ॥८।३।३७॥**

कुप्वोः संबन्धिनि खरि परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः ।

---

'नश्छवि:—' इति रुः । अनुनासिकोनुस्वारो वा । विसर्गः । तस्य सः । श्चुत्वेन शः । चक्रिंस्त्रायँहीति । त्रायत इति त्राः । 'क्विप् च' इति क्विप् । त्रावदाचरति । 'सर्वप्रातिपदिकेभ्यः क्विबाचारे' इति क्विप् । 'सनाद्यन्ताः' इति धातुत्वम् । लोण्मध्यमैकवचनस्य सेर्हिः । शप् । सवर्णदीर्घः । प्रशान् तनोति । प्रपूर्वात् शमेः क्विप् । 'अनुनासिकस्य क्वि–' इति दीर्घः । 'मो नो धातोः' इति नः । तस्यासिद्धत्वान्नलोपाभावः ॥

नॄन् । पे परे नॄन्नकारस्य रुर्वेति । 'वा' इत्येतद् 'उभयथर्क्षु' इत्यत 'उभयथा' इत्यस्यानुवृत्तेर्लभ्यते । तथा चोक्तं काशिकायाम् । "'उभयथा' इत्येतदपि केचिदनुवर्तयन्ति । नॄन् पाहीत्यपि यथा स्यात्" । इति । पे किम् । नॄन् भोजयति ।

कुप्वोः । 'खरि' इत्यनुवृत्तिसामर्थ्यात् कुप्वोरिति षष्ठ्यन्तं संपद्यत इत्याह । कुप्वोः संबन्धिनीति । ᳲक ᳲपावित्यत्र वर्तमानौ कपावुच्चारणार्थौ । जिह्वामूलीयोपध्मानीयावेव त्वादेशावित्यभिप्रेत्याह । जिह्वामूलीयोपध्मानीयाविति । 'विसर्जनीयस्य सः' इति प्राप्त इदमारभ्यत इति तस्यैवापवादः । अतो वासः क्षौमम् । अद्भिः प्सातम्—इत्यत्र पूर्वत्रासिद्धीये परविप्रतिषेधाभावात् 'शर्परे विसर्जनीयः'

---

१. रुर्वा स्यात् C. २. त्राणं त्राः Bc1. ३. °दनुवर्णयन्ति Nc1. ४. तु dropped Dc1, Dc3.

चोद्विकल्पः । नूँ ×पाहि । नूं ×पाहि । नूँ पाहि । नूंः पाहि । नॄन् पाहि ॥

**कानाम्रेडिते ॥८।३।१२॥**

कान्नकारस्य रुः स्यादाम्रेडिते परे ॥

**कस्कादिषु च ॥८।३।४८ ॥**

एषु विसर्जनीयस्य ×क ×पौ न । अविहितलक्षणः कस्कादौ

---

इत्येतदेव भवति । केचित्त्वेतदर्थं योगविभागं कुर्वन्ति । 'कुप्वोः' इत्येको योगः । कुप्वोः शर्परयोर्विसर्गस्य विसर्गः । एतच्च '×क ×पौ च' इति प्राप्तयोः ×क ×पयोर्बाधनार्थम् । ततः '×क ×पौ च' इति सूत्रम् । तत्र 'कुप्वोः' इति वर्तते । **चाद्विकल्प** इति । अयं भावः । चकारो हि विसर्जनीय इत्यस्यानुकर्षणार्थः । तेन पक्षे विसर्गस्य विसर्ग* एवं स्यादिति । चाद्विकल्पः । तेन ×क ×पयोरभावपक्षे 'विसर्जनीयस्य सः' इति न प्रवर्तते । विसर्गेण बाधितत्वात् ॥

**कान्** । कान् कानिति वक्तव्य आम्रेडितग्रहणं यत्र द्वित्वं स्यात्तत्रैव यथा स्यात् । तेनेह न । कान् कान् पश्यतीति । एकोत्र किम् प्रश्ने । द्वितीयः क्षेपे । कान् कुत्सितान् पश्यतीत्यर्थः ॥

**कस्कादिषु चे**ति । ननु चात्र 'न' इति नानुवर्तते नापि '×क-×पौ' । तयोरस्वरितत्वात् । तत् किमित्येतदाह । **एषु विसर्जनीयस्य ×क ×पौ ने**ति । उच्यते । अत्र 'सोपदादौ' इतः 'सः' अनुवर्तते । 'इणः षः' इत्यतः 'षः' । तौ सषावनेन विधीयेते ×क ×पयोर्नाप्राप्तयोः । अतः 'येन नाप्राप्ते से तस्य बाधको भवति' इति न्यायेन सषाभ्यां

---

१. चाद्विसर्गः C, $D_3$, $D_4$, $B_1$, $B_2$; K. notices चाद्विकल्पः also. २. आम्रेडिते परे in the beginning of the Vṛitti $B_1$. ३. °विसर्जनीयस्य $Nc_1$, $Nc_2$, $Bo_1$. ४. इदम् $Nc_2$. ५. ततः $Dc_1$. ६. विसर्ग $Dc_1$. ७. एव dropped $Nc_2$. ८. °द्विकल्पार्थः $Dc_1$; °द्विकल्प इति । अयं भावः । $Nc_1$. ९. यो विधिरारभ्यते स $Bc_1$, $Dc_3$.

**ज्ञेयः । तत्र कौतस्कुत इत्यादौ सः । सार्पिष्कुण्डिकेत्यादाविणः परस्य सस्य ष इति ज्ञेयम् । काँस्कान् । कांस्कान् । रुत्वं वेति केचित् । कान् कान् ॥**

**छे च ॥६।१।७३॥**

---

×क ×पौ बाध्येते इति । तौ[2] कस्कादिषु विसर्गस्य[1] नेत्युच्यते । अत एवाह । **तत्र कौतस्कुत इत्यादौ सः सार्पिष्कुण्डिकेत्यादाविणः परस्य सस्य ष इति ज्ञेयम्** । **अविहितलक्षण** इति । न विहितं लक्षणं यस्य षस्य सस्य वा[3] सोविहितलक्षणः । अनेन कस्कादिष्वाकृतिगणतां चकारसूचितां दर्शयति । **कौतस्कुत** इति । कुतः कुत आगतः । वीप्सायां[4] द्वित्वम् । 'तत आगतः' इत्यण् । टिलोपः । **सर्पिष्कुण्डिकेति** षष्ठीसमासः । कस्कः । कौतस्कुतः । भ्रातुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । साद्यस्क्रः । क्रीणातेः क्विपि तत्र भवोण्[5] । सर्पिष्कुण्डिका । धनुष्क-पालः[6] । बर्हिष्पूलः । यजुष्पात्रम् । अयस्कान्तः । तमस्काण्डम् । अदस्पिण्डः । **कांस्कानिति** । 'कानाम्रेडिते' इति सूत्रेण यदा रुत्वं विधीयते तदा कस्कादित्वात् सः । यदा तु सत्वं तदा तेनैव सिद्धम् । **रुत्वं वेति केचिदिति** । तथा च बोपदेवपण्डितैरुक्तम् । 'कांस्काँन् नूंः पि वा'[7] इति ॥

**छे च** । अत्र 'ह्रस्वस्य' इत्यनुवृत्तेः 'येन विधिस्तदन्तस्य' इति यदि ह्रस्वान्तस्य तुक् स्यात्तदा चिच्छिदुरित्यत्र तुगभ्यास-ग्रहणेन गृह्यत इति हलादिशेषेण निवर्त्येत[8] । तदन्तविध्यभावे तु नावयवावयवः समुदायावयवो भवतीति न निवर्त्येतेति[9] चेतसि कृत्वाह ।

---

१. विसर्गस्य C. २. Dropped $Nc_1$. ३. वासौ $Dc_3$. ४. इति वीप्सायां $Nc_1$. ५. °भवाण् $Nc_2$; °भवेण् $Bc_1$. ६. °ष्कपालम् $Bc_1$, $Nc_2$. ७. 'कान् कान् नॄन् पि वा' $Dc_1$, $Dc_2$, $Dc_3$, $Dc_4$, $Nc_1$. ८. निवर्तते $Dc_4$. ९. निवर्तेत $Dc_4$.

ह्रस्वस्य छे परे तुगागमः स्यात् संहितायाम् । श्चुत्वम् । शिवच्छायां[1] । चुत्वस्यासिद्धत्वात्[2] 'चोः कुः' इति कुत्वं न ॥

**आङ्माङोश्च ॥६।१।७४॥**

एतयोश्छे[3] तुक् स्यात्[4] । 'पदान्ताद्वा' इति विकल्पापवादः आँ[5] च्छादयति । मा च्छिदत् ॥

**दीर्घात् ॥६।१।७५॥**

[6]दीर्घाच्छे तुगागमः[7] । ह्रीच्छति[8] ।

---

ह्रस्वस्येति । अयमर्थश्चकारात् ज्ञायते । तथा हि । अत्र स्वरितत्वादेव 'ह्रस्वस्य' इत्यनुवर्तमानेपि यत् 'छे च' इति चकारस्तदनुकर्षणार्थः क्रियते तत्र ह्रस्व एवागमी यथा स्यात् न तदन्त इत्येवमर्थमिति । चुत्वस्येति । 'स्तोश्चुना श्चुः' इत्यनेन विहितस्य चुत्वस्य 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वादित्यर्थः । प्लुतविकारस्तुग्विधौ छे[9] सिद्धो वक्तव्यः[10]* । अग्नाऽ३ इ छत्रम् । पटाऽ३ उ छत्रम् ॥

आङ् । ङित्विशिष्टस्य किम् । आ छाया । आच्छाया । अयं स्मरण आकारः । ततो विकल्पः । प्र मा छर्दः[11] । प्र मा च्छर्दः[12] । नायं माङव्ययं किं तु माङ् मान इति धातुः । ननु 'दीर्घात्' इत्येव सिद्धे किमर्थमिदमित्याशङ्क्याह । 'पदान्ताद्वा' इति ॥

दीर्घात् । दीर्घात् परो यश्छकारस्तस्मिन् परे पूर्वस्य तस्यैव दीर्घस्य तुगागमः स्यादित्यर्थः । वि[13] चाच्छायत इत्याद्यप्युदाहरणम् । ननु चात्र 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति छस्य तुक्

---

१. After it—अत् छ अच्छ । $D_2$. २. अत्र चुत्व° $D_5$. ३. °श्छे परे $D_4$, $B_1$, C. ४. Dropped $D_1$, $D_3$, $B_2$. ५. आच्छादय $D_1$. ६. The Vṛitti is dropped $D_1$, $B_2$; दीर्घात् परस्य छे परे नित्यं तुगागमः स्यात् । $D_4$; दीर्घाच्छे परे नित्यं तुगागमः स्यात् । दीर्घस्येति विभक्तिविपरिणामः । $D_5$. ७. तुक् C. ८. After it म्लेच्छः C. ९. Dropped $Dc_1$, $Nc_1$. १०. वाच्यः $Nc_2$. ११. छन्दः $Dc_3$, $Dc_4$. १२. च्छन्दः $Dc_3$, $Dc_4$. १३. Before it—छो छेदने । यङ् । दीर्घोक्तितः । वि उपसर्गः । $Nc_2$.

**पदान्ताद्वा ॥६।१।७६॥**

दीर्घात् पदान्ता च्छे[1] तुग्वा[2] । लक्ष्मी च्छाया । लक्ष्मी छाया[3] ॥

इति हल्संधिः ॥

---

स्यात् । न दीर्घस्य । नैष दोषः । 'तस्मादित्युत्तरस्य' इत्यत्र 'तस्मात्' इति योगविभागः क्रियते तेन दीर्घः स्यादिति ॥

**पदान्तात्** ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलः संधिरीदृग्धलां च ॥

---

१. च्छे परे P, C. २. तुग्वा स्यात् C. ३. D₁ drops लक्ष्मी च्छाया; D₃ drops लक्ष्मी छाया.

# अथ विसर्गसंधिः ।[1]

**विसर्जनीयस्य सः ॥८।३।३४॥**[2]

**शर्परे विसर्जनीयः ॥८।३।३५॥**

शर्परे खरि विसर्जनीयो न त्वन्यत् । कः त्सरुः ॥[3]

**वा शरि ॥८।३।३६॥**

शरि परे पूर्वं वा । हरिः शेते । हरिश्शेते ।[4]

खर्परे शरि वा विसर्गलोपः*।[5] हरि स्फुरति । हरिः स्फुरति । तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च* । तस्करः । बृहस्पतिः ।

---

अथ विसर्गसंधिरुच्यते[6] । विसर्जनीयस्य[7] । कृष्णश्चिन्त्यः । हरिष्टीकते । विष्णुस्त्राता–इत्यत्रानेन सूत्रेण सकारो भवतीत्यर्थः । पूर्वयोर्यथाक्रमं श्चुत्वष्टुत्वे ॥

शर्परे । विसर्जनीयस्य विसर्जनीयवचनं तद्विकारनिवृत्त्यर्थमित्याह[8] । न त्वन्यदिति ॥

**वा शरि** । **पूर्वं वेति** । विसर्जनीयस्य विसर्जनीयो वा स्यादित्यर्थः ॥ **तद्बृहतोरिति** । एतच्च पारस्करगणस्थं सूत्रम् । अस्य चायमर्थः । तत् बृहत् इत्येतयोर्यथाक्रमं करपतिशब्दयोः परतो यथाक्रमं चौरदेवतायां चाभिधेयायां सुट् स्यात् तलोपश्च । तत्र करपतिशब्दयोः सुट् स्यात् तयोरेव परयोस्तत्बृहतोस्तलोपः ' अलोन्त्यस्य ' इत्यन्त्यस्य

---

१. Heading dropped $D_2$. २. After this the Vritti—खरि पदान्ते विसर्जनीयस्य सः स्यात् । कृष्णश्चिन्त्यः । हरिष्टीकते । विष्णुस्त्राता । P, $B_1$, C. ३. विसर्जनीयस्य पदान्तस्य विसर्जनीयः स्यात् । सत्वापवादः । न त्वन्यत् $D_2$, $D_5$, $B_1$. ४. पूर्वोक्तं $D_4$, $D_5$, P, $B_1$. ५. विसर्गलोपो वा $B_1$. ६. विसर्गस्य सांधि° $Nc_2$. ७. °नीयस्येति $Dc_4$. ८. °मित्यत आह $Dc_4$.

कुप्वोः ≍क ≍पौ च ॥८।३।३७॥

कः करोति । क ≍करोति । कः पचति । क ≍पचति[1] । कस्कादित्वात्सः । कुप्वोः खरि[2] सो वा समास इति केचित् । भास्करः । भा≍करः ॥

नमस्पुरसोर्गत्योः ॥८।३।४०॥

गतिसंज्ञयोरनयोर्विसर्गस्य[3] सः स्यात्[4] कुप्वोः परयोः[5] । नमस्करोति । पुरस्करोति ॥

इति विसर्गसंधिः[6] ॥

---

स्यादिति निपातनस्यैवायं[7] प्रपञ्चः । एतच्चाग्रे वक्ष्यते[8] । तत्करोतीति तस्करश्चौरः । 'कियत्तद्बहुष्वञ्ज्वा' इति कृञोच् । अन्यस्तत्करः । बृहतां पतिर्बृहस्पतिर्देवता । बृहत्पतिरन्यः । 'कुप्वो ≍क ≍पौ च' इति विसर्जनीयस्य ≍क ≍पौ विसर्जनीयश्च ॥

**कस्कादित्वादिति** । भास्करशब्दे सकारो लक्षणान्तरेणाविहित इति कृत्वा कस्कादित्वात् ज्ञेय इत्यर्थः । अथवा भास्करेति निपातनादिति कृदन्ते वक्ष्यति । **कुप्वोरिति** । अर्वाचीनमतमेतत् । वाशब्दो व्यवस्थायां तेन संज्ञायां स्तोन्यत्र नेति तेषामभिप्रायः ॥

**नमस्** । **नमस्करोतीति** । 'साक्षात्प्रभृतीनि च' इति कृञो योगे नमःशब्दस्य विभाषा गतिसंज्ञा । **पुरस्करोतीति** । 'पुरोऽव्ययम्' इति पुरःशब्दस्याव्ययस्य नित्यं गतिसंज्ञा । गत्योः किम् । नमः पीत्वा गतः । पूः पुरौ पुरः कृत्वा गतः ॥

इति विसर्गसंधिः ॥

---

१. कः पठति । क ≍पठति । P, $B_1$. २. सबन्धिनि खरि परे $D_4$, $B_1$. ३. °विसर्जनीयस्य C, $D_1$. ४. Dropped P, $D_1$, $D_4$, $D_5$. ५. Dropped $D_5$; परतः C. ६. इति विसर्गसंधिः dropped $D_1$, $D_2$, $D_4$, $D_5$; $B_2$ has इति विसर्गः. ७. निपातस्यैवा° $Nc_1$, $Dc_2$. ८. वक्ष्यति $Nc_1$.

# [1]अथ स्वादिसंधिः ॥

स्वौजसमौडिति सुप्र[2]त्यये शिव सु[3] अर्च्य इति स्थिते ॥

**ससजुषो रुः ॥८।२।६६॥**

पदान्तस्य सकारस्य सजुष्शब्दस्य च रुः स्यात् ॥

**अतो रोरप्लुतादप्लुते ॥६।१।११३॥**

अप्लुतादतः परस्य रोरुः स्यादप्लुतेति[4] । 'भोभगोअघो-' इति प्रा[5]प्तस्य यस्यापवादः । रुत्वैकाश्रयमुत्वं प्रति रु[6]त्वं

---

अथ स्वादिसं[7]धिः । **स्वौजसमौडिति** । शिव अर्च्य इत्यत्र 'अर्थवदधातुरप्रत्ययः—' इति प्रातिपदिकत्वात् 'स्वौजसमौट्—' इत्यादिना सूत्रेण प्रथमैकवचने सुप्रत्यये कृते सति शिवस् अर्च्य इति स्थिते उच्यत इत्यर्थः । **ससजुषोः** । जुषी प्रीतिसेवनयोरस्मात्[8] क्विपि सहपूर्वस्य रूपमेतत् सजुष् इति[9] । 'अतो रोः' इति विशेषणार्थ उकारानुबन्धः ॥

**अतो रोः** । **'भोभगो—' इतीति** । नाप्राप्ते तस्मिन्नेतस्य विधीयमानत्वात् । ननु चोत्वे कार्ये पूर्वत्रासिद्धन्यायेन रुत्वमसिद्धम् । तत् कथमसतः शक्यमुत्वं विधातुमित्याशङ्क्याह । **रुत्वैकाश्रयमिति** । यदि रुत्वमसिद्धं स्यात्तर्हि रुत्वस्योत्वं प्रति स्थानिवत्त्वेनाश्रयणमनर्थकं

---

१. अथ स्वादिसंधिः dropped D2. २. सुप्रत्ययः D3. ३. सु P, D1. ४. After this—अत इत्येव। प्लुतादौ वर्जिते पुनस्तद्द्वारेण मुत्वे कर्तव्ये सत्यसिद्धस्य पुनर्भाविनः प्लुतस्य विसर्जनार्थमिदं वचनम् । सुपया अत्रागच्छ । 'दूराद्धूते च' इति प्लुतः । 'भोभगो-' इति प्राप्तस्यापवादः । रुत्वैकाश्रयमुत्वं प्रति रुत्वं नासिद्धम् &c. D2. ५. प्राप्तस्यापवादः P, B2; आप्तस्य D1. ६. रुत्वं dropped P, B1, D2, D3, D5. ७. स्वादिप्रक्रिया Dc1. ८. इति for अस्मात् Dc1. ९. After it—स्यात् Dc3.

नासिद्धम् । शिवोच्र्यः । अप्लुतात् किम् । कृतेपि प्लुते तस्योत्वं मत्यसिद्धत्वादुत्वं स्यात् । तन्मा भूत् । सुस्रोत३ । अत्र 'दूराद्धूते च' इति प्लुतः । अप्लुते किम् । तिष्ठतु पय अ३ग्निदत्त । 'गुरोरनृतोनन्त्यस्य' इति प्लुतः ॥

हशि च ॥६।१।११४॥

हशि च तथा । शिवो वन्द्यः । रोरित्येव ।

---

स्यात् । ततः स्थानित्वेनाश्रयणाद्रुत्वं नासिद्धमित्यभिप्रायः । शिवोच्र्य इति । उत्वे 'आद्गुणः ।' 'एङः पदान्तात्' इति पूर्वरूपत्वम् । ननु 'अतः' इति तपरत्वादेव सिद्धायां प्लुतनिवृत्तौ किमर्थम् 'अप्लुतात्' इत्युच्यत इत्याक्षिपति । अप्लुतात् किमिति । परिहरति । कृतेपीति । अयमर्थः । यदि 'अतः' इत्येवोच्येत तदा सुस्रोत३ अत्रेत्यत्र 'दूराद्धूते च' इति प्लुते कृतेपि तस्य प्लुतस्य 'अतो रोः' इत्युत्वं प्रति पूर्वत्रासिद्धन्यायेनासिद्धत्वाद्रोरुत्वं स्यादेव । तन्मा भूदित्येवमर्थम् 'अप्लुतात्' इत्युक्तम् । 'अप्लुतात्' इति ह्युच्यमाने यत्र प्लुतसंभावनाप्यस्ति तत्र न भवति । सुस्रोत३ अत्रेति । सुस्रोतस् अत्रेति स्थिते रुत्वम् । प्लुतः । उत्वाभावात् 'भोभगो-' इति यत्वम् । 'लोपः शाकल्यस्य' इति यलोपः । अप्लुतेति किमित्यादि । पूर्ववदाक्षेपपरिहारौ ॥

हशि च । तथेति । अप्लुतादतः परस्य रोरुः स्यादित्यर्थः । रोरित्येवेति । उकारानुबन्धस्यैव रेफस्योत्वं नान्यस्येत्यभिप्रायः ।

---

१. सुश्रोत३ D1, B2, D4. २. अप्लुतेति C, B2, Com. ३. °नन्त्यस्यार्थैकैकस्य प्राचामिति D1. ४. हशि च dropped D2; हशि चोत्वं तथा P. ५. तस्मात् Bc1, ६. °रूपम् Dc1, Dc2, Dc4. ७. सुश्रोत३ Dc1, Dc2, Dc3, Dc4. ८. सुश्रोत३ Dc1, Dc2, Dc3, Dc4. ९. सुश्रोतस् Dc1, Dc2, Dc3, Dc4. १०. किमिति Dc1.

मा[1]तरत्र । धा[2]तगच्छ । देवा स[3] इहेति स्थित्वे रु[4]त्वम् ।

**भोभगोअघो अपूर्वस्य योशि ॥८।३।१७॥**

एतत्पूर्वस्य रोर्यादेशोशि प[5]रे ॥

**लोपः शाकल्यस्य ॥८।३।१९॥**

देवा इह । देवायिह[6] ।

---

**भ्रा[7]तरत्र । धातर्गच्छेति** । अत्र । भ्रा[8]तृधातृशब्दयोः संबुद्धौ ऋ[9]कारस्य गुणो रपरः । **देवास् इहेति** । देवशब्दाज्जसि पूर्वसवर्णदीर्घे कृते देवास् इह इति स्थिते इत्यर्थः । **रुत्वमिति** । 'ससजुषोरुः' इति ॥

**भोभगो** । अथ 'अशि' इति किम् । खरि मा भूत् । न । तत्र 'खरवसानयोः—' इति विसर्[10]गः स्यात् । नैष दोषः । तत्र कृतेपि स्थानिवत्त्वाद्यः स्यात् । न । ज्ञापकात् । यदयम् 'अत्रानुनासिकः पूर्वस्य तु वा' इति विसर्गस्य यकारमकृत्वा निर्दिशति तज् ज्ञापयति विसर्गस्य ख[11]रि यकारो न भवतीति । अवसाने तर्हि स्यादिति चेन्न । 'संहितायाम्' इत्यधिकारात् । एवं तर्ह्युत्तरार्थमश्ग्रहणम् । 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' । 'लोपः शाकल्यस्य' इत्ये[12]तदशि यथा स्याद् 'हलि सर्वेषाम्' इति च हशि यथा स्यात् । ततश्च वृक्षं वृश्चतीति वृक्षवृट् । तमाचष्टे । णि[13]च् । टिलोपः । वृक्षवयति । त[14]तो विच्[15] । वृक्षव्करोतीत्यत्रैतानि कार्याणि न संभ[16]वन्ति । अत्र णिलोपस्य स्थानिवत्त्वात् 'लोपो व्योर्वलि' लोपो न । पू[17]र्वत्रासिद्धीये न स्थानिवत्' इति । 'हलि सर्वेषाम्' इति स्यादेव । अथ 'हलि सर्वेषाम्' इत्यत्र

---

१. भ्रातरत्र $B_1$, $B_2$; भ्रातरत्र Com. २. मातर्गच्छ $B_1$; भ्रातर्गच्छ $D_3$, $D_4$, P, C. ३. सु P. ४. रुत्वे $B_2$. ५. परे dropped P, $B_1$, $D_1$, $D_3$. ६. After it—भाशि किम् । देवाः सन्ति । C, $B_1$. ७. भ्रातरत्र $Dc_2$, $Dc_4$, $Bc_1$. ८. भ्रातृ $Dc_2$, $Dc_4$, $Bc_1$. ९. ऋकारगुणो $Dc_3$. १०. विसर्जनीयः $Dc_3$. ११. यकारः खरि $Dc_2$. १२. इत्येतदर्थं यथा स्यात् $Dc_2$. १३. णिच्च $Dc_1$. १४. ततः dropped $Dc_2$. १५. क्विप् $Bc_1$, $Dc_4$. १६. भवन्ति $Dc_2$, $Dc_4$. १७. पूर्वत्रासिद्धन्याये $Dc_2$.

विभाषा भवद्भगवदघवतामोच्चावस्य । एषां रुः स्यादवस्यौकारो वा संबुद्धौ । यत्वम् ॥

**व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥८।३।१८॥**

वकारयकारयोर्लघूच्चारणौ वयौ वाशि ॥

**ओतो गार्ग्यस्य ॥८।३।२०॥**

ओकारात्परस्यालघुप्रयत्नस्य नित्यं लोपः ।

---

हल्ग्रहणं किमर्थं 'हशि' इत्येव किं नोक्तम् । 'मोनुस्वारः' इत्येवमादि हल्मात्रे यथा स्यादिति ॥

**विभाषा** । एषां रुरिति । अलोन्त्यपरिभाषया एषामन्त्यस्य स्यात् । यत्वमिति । 'भोभगो—' इत्यनेन वृत्तिकारमते 'विभाषा भवद्—' इत्यादिकं वक्तव्यं न कर्तव्यम् । भो इत्येवमादयो 'भोभगोअघोअपूर्वस्य' इति सौत्राः सान्ता निपाता द्रष्टव्याः । अथवा विभक्तिस्वरप्रतिरूपकाश्चेति चकारेणासंबुद्धावपि हि दृश्यन्ते । भो ब्राह्मणि ॥

**व्योर्लघु** । प्रयतनं प्रयत्नः । लघुः प्रयत्नो यस्य स लघुप्रयत्नः । अतिशयेन लघुप्रयत्नः लघुप्रयत्नतरः । लघुप्रयत्नतरत्वं नामोच्चारणे स्थाने करणे च शैथिल्यम् । आन्तरतम्याद्यस्य य एव वस्य व एव भवति ॥

**ओतः** । ओकारात्परस्येति । ओकारान्तादङ्गात्परस्येत्यर्थः । ओकारान्तात्परस्य वकारस्यासंभवात् । 'परस्य' इत्येकवचननिर्देशः । यद्यविशेषेणालघुप्रयत्नस्य लघुप्रयत्नस्य च लोपः स्यात् । 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' इति विधिरनर्थकः स्यात् । तस्मादलघुप्रयत्नस्यैव लोप इत्याह । अलघुप्रयत्नस्येति । केषांचिन्मते सर्वस्यैव लोपः । 'लोपः शाकल्यस्य' इत्यनेनैव लोपे सिद्धे नित्यत्वार्थं वचनमित्याह । नित्यमिति ।

---

१. स्यात् dropped $B_2$ which has रुरवस्यौ°. २. Dropped $D_3$. ३. वाशि परे $D_1$. ४. लोपोशि परे $D_1$, $B_2$, C; लोपः स्यात् $D_3$; लोपोशि $B_1$. ५. निपातात् $Nc_1$. ६. ब्रह्माणि $Dc_1$, $Nc_2$. ७. ओकारात् $Nc_2$, $Dc_2$. ८. °वचनेन निर्देशः $Nc_2$. ९. केषांचित्पक्षे $Nc_2$.

गार्ग्यग्रहणं पूजार्थम् । भो अच्युत । लघुप्रयत्नपक्षे । भो यच्युत । रुत्वाभावे । भवन्नच्युत[2] ।

**हलि सर्वेषाम् ॥८।३।२२॥**

ओतः परस्यावर्णात्परस्य च[3] लघ्वलघूच्चारणस्य[4] यकारस्य[5] नित्यं लोपो हलि सर्वेषां मतेन[6] । देवा नम्याः । भो हरे ।

---

ननु यदि नित्यार्थं[1] वचनं गार्ग्यग्रहणं किमर्थमित्याशङ्क्याह । **गार्ग्यग्रहणमिति** । **भो अच्युतेति** । भवन्[7] अच्युतेति स्थिते 'नानर्थकेऽलोन्त्यविधिः' इति सर्वस्य अवस्य ओत्वम्[8] । यत्वम्[9] । यलोपः । **लघुप्रयत्नेऽत्रे**[10] । यदा लघुप्रयत्नस्तदा लोपो[11] न । **भवन्नत्रेति**[12] । 'उगिदचाम्—' इति नुम् । संयोगान्तलोपः[13] । 'ङमो ह्रस्वादचि ङमुट्' ॥

स्पष्टत्वात्त्यक्तं व्याख्यायते । 'उञि च पदे ॥' ८।३।२१॥ अपूर्वयोः पदान्तयोर्य्वोर्लोपः स्यादुञि पदे परे । क उ कृष्णं समाश्रयेत् । पदे किम् । तन्त्रे उतम् । तन्त्रयुतम् ॥

हलि । **ओतः परस्येति** । भोभगोअघोअपूर्वस्येत्यर्थः । एतेषामनु[14]वृत्तेः । ननु च व्योरित्यनुवर्तते । तत् कथं **यकारस्य** इत्येवोच्यते । वकारस्य चेत्यपि किं नोच्येतेति चेदुच्यते । अत्र हि भोभगोअघोअपूर्वस्तु वकारो न संभवत्येव । अवर्णपूर्वस्तु यद्यपि संभवति वृक्षव्[15] करोति तथापि तस्येह ग्रहणं न भवतीति[16] 'भोभगोअघोअपूर्वस्य' इति सूत्रे प्रतिपादितम् । **भो हरे** इत्यादि । 'विभाषा भवत्—' इत्यादिना

---

१. °वचनं P. २. भवन्नत्र $D_5$, Com. ३. Dropped $D_1$. ४. °च्चारण-यकारस्य $D_1$. ५. वकारस्य यकारस्य च लोपो नित्यं $B_1$; नित्यं dropped $B_2$, $D_2$, $D_4$, $D_5$. ६. मते C. ७. भगवत् $No_2$. ८. Before it—रुत्वं $No_2$, $Do_2$. ९. ओ $No_1$, $Do_1$. १०. Dropped $No_2$. ११. यलोपो $No_2$, $Do_2$. १२. भगवन्नत्रेति $No_2$. १३. संयोगान्तस्य लोपः $No_1$, $Do_3$. १४. एषा° $No_2$. १५. वृक्षव् करोति dropped $No_1$, $Do_1$. १६. संभवतीति $Do_3$.

भगो[1] रक्ष । अघो याहि । सोरुत्वम् । हरिरयम् । विष्णुर्याति ॥

**रोऽसुपि ॥८।२।६९॥**

अह्नो रेफादेशः स्यादसुपि[2] । रोरपवादः । अहरहः । अहर्गणः । असुपि[3] किम् । अहोभ्याम् । अत्र 'अहन्' इति रुत्वम् ।

रूपरात्रिरथन्तरेषु[4] रुत्वं वाच्यम्* । अहो रूपम् । अहो[5] रात्रम् । अहो रथन्तरम् ।

---

रुः । अवस्य ओ । यत्वम् । सोरुत्वमिति । हरिविष्णुशब्दाभ्यां प्रथमैकवचनम्[6] । सौ जाते हरिस् अयम् । विष्णु स् याति । इति स्थिते 'ससजुषो रुः ।' इति रुत्वमित्यर्थः ॥

रोऽसुपि । रोरपवाद इति । 'अहन्' इत्यनेन प्राप्तस्य तेन अहरह इत्यत्र 'अतो रोरप्लुतादप्लुते' इत्युत्वं न भवति । अहर्ददाती-त्यादौ तु सुपो[7] लुक् जात इति सुप्परत्वं नास्तीति रो भवति[8] । अह्नो रविधौ[9] तु[10] लुमता लुप्ते[11] प्रत्ययलक्षणं न भवतीति वक्तव्येन प्रत्ययलक्षणनिषेधात् । यत्र तु लोप इति लुप्यते तत्र प्रत्ययलक्षणं स्यादेव । तेन[12] हेतुना दीर्घाहो निदाघ इत्यादौ रो न । 'हल्ङ्याब्भ्यः—' इति सोर्लोपात् ॥

रूपरात्रीति । रेफापवादो रुत्वमुत्वार्थं विधीयते ॥

---

१. भगो नमस्ते $D_4$, $D_5$. २. After it—परे $B_1$. ३. असुपीति C. ०रेष्वह्नो $B_1$. ५. अहोरात्रः K. (नपुंसकपाठस्तु प्रामादिकः 'रात्राह्नाहाः पुंसि' इति वचनात् K). ६. ०वचने $Nc_2$, $Dc_2$; प्रथमैकवचनम् dropped $Nc_1$. ७. Before it—'स्वमोर्नपुंसकात्' इति स्वमोर्लुक् जात इति $Dc_2$, $Dc_4$. भवतीति $Dc_1$, $Dc_2$, $Dc_3$, $Dc_4$. ९. रुविधौ $Bc_1$, $Dc_2$. १०. Dropped $Nc_1$, $Nc_2$. ११. प्राप्ते $Dc_1$, $Nc_1$, $Nc_2$. १२. तेनेह $Nc_2$, $Dc_2$.

अहरादीनां पत्यादिषु वा रेफः*। विसर्गापवादः[1]। अहर्पतिः। अहःपतिः। अहः पतिः[2]। गीर्पतिः। गीःपतिः। गीः पतिः[3]। धूर्पतिः। धूःपतिः। धूः पतिः[4][5]।

**रो रि ॥८।३।१४॥**

रेफस्य रेफे[6] परे लोपः[7] ॥

**ढ्रलोपे पूर्वस्य दीर्घोणः ॥६।३।१११॥**

ढरेफयोर्लोपनिमित्तयोः[8] परतः पूर्वस्याणो दीर्घः स्यात्[9]।

---

अहरादीनामिति। अत्र विसर्गबाधनार्थं रेफस्यैव पक्षे रेफो विधीयते ॥

**रो रि**। यद्यपि 'पदस्य' इत्यनुवर्तते तथापि तस्याविशेषणषष्ठीत्वात् पदान्तस्यापदान्तस्य[10] चाविशेषेण लोपो भवतीत्यभिप्रेत्याह। **रेफस्य रेफे लोप** इति ॥

ढ्रलोपे। ढ्रलोपे इत्ययं न तत्पुरुषः किं तु बहुव्रीहिः। ढ्रयोर्लोपो यस्मिन्निति यन्निमित्तो ढ्रयोर्लोपः स्यादित्यर्थः। स च ढ्रलोपो विचार्यमाणो ढकाररेफावेवेति सर्वं चेतसि कृत्वाह। **ढरेफयोर्लोपनिमित्तयोः परत** इति। ढ्रलोप इति सप्तमीनिर्देशादेव पूर्वस्य दीर्घे सिद्धे पूर्वग्रहणमुत्तरपदाधिकारेप्यनुत्तरपदेपि पूर्वमात्रस्य दीर्घार्थम्।

---

१. P drops विसर्गापवादः. २. अहः पतिः dropped P, $D_1$; After it—एवं स्वर्पतिः। स्वःपतिः। गीर्पतिः &c. $B_2$. ३. Dropped P, $D_1$; गीःपतिः $D_3$. ४. Dropped P, $D_1$; धूःपतिः $D_3$. ५. After this—$B_1$, $D_2$ have—उषसो नित्यं बुधेरः। उषर्बुधः and $D_5$ has—उषसो बुधेर्नित्यं च। उषर्बुधः।. ६. Dropped Com. ७. After it—स्यात् $D_3$, $D_5$. ८. ढकाररेफयो° C, $D_2$. ९. Dropped $B_1$. १०. तस्यापदान्तस्य चाविशेषणलोपो $Nc_1$.

पुना रमते। हरी रम्यः। शंभू राजते। अणः किम्। तृढः।

मनस् रथ इत्यत्र रुत्वे कृते 'हशि च' इत्युत्वे 'रो रि' इति लोपे प्राप्ते।

इति लोपे प्राप्ते 'पूर्वत्रासिद्धम्' इत्युत्वमेव। मनोरथः[6]।

---

तृढ इति। नात्र 'दृढः स्थूलबलयोः' इति निपातो गृह्यते। तस्य निपातनादेव दीर्घाभावसिद्धेः प्रत्युदाहरणत्वानुपपत्तेः। किं तु दृह वृद्धावित्यस्य निष्ठायामागमशासनस्यानित्यत्वेनेडभावे 'वा द्रुहमुह—' इति 'वा' इति योगविभागात् पक्षे घत्वाभावे ढत्वे ष्टुत्वे ढलोपे च रूपम्। तथा च न्यास उक्तम्। 'केचित्त्वनित्यत्वादागमशासनस्याभावमिटो वर्णयन्ति। 'वा द्रुह—' इत्यत्र 'वा' इति योगविभागात् पक्षे घत्वस्य' इति। अथवा तृढ इति प्रत्युदाहरणम्। तृहू हिंसार्थः। निष्ठा॥

मनस् इत्यादि। सिद्धं रुत्वं 'ससजुषो रुः' इति। तस्मिन् कृते उत्वलोपयोः प्राप्तयोर्विषयव्यवस्थार्थमुच्यते—

लोपे प्राप्ते इति। 'हशि च' इत्युत्वं शिवो वन्द्य इत्यादौ सावकाशम्। 'रो रि' इति लोपो हरी रम्य इत्यादौ सावकाशः। तयोरत्र प्रसङ्गे लोपे प्राप्ते 'रो रि' इत्यस्य परत्वादित्यर्थः। 'पूर्वत्रासिद्धम्' इत्युत्वमेवेति। अत्र 'रो रि' इत्यस्य त्रिपादीस्थत्वात् पूर्वत्रासिद्ध-

---

१. Before it—विसर्जनीयस्य सः। ससजुषो रुः। D2. २. ढ्रूलोपे किम्। सुश्रोतः३ अत्र B2. ३. वृढः D2. ४. हशीन्युत्वे P. ५. After this C and D2 have—पूर्वत्रासिद्धमित्युक्तेर्हशि चेति विधिं प्रति। रोरीत्यस्य सिद्धं स्यात्तेन सिध्येन्मनोरथः॥. ६. सिद्धं dropped Nc2, Dc2. ७. त्रिपादी-पूर्वत्रासिद्धन्यायेन Nc1, Dc1.

**विप्रतिषेधे परं कार्यम्** ॥१।४।२॥

तुल्यबलविरोधे परं कार्यं स्यात् ।

**एतत्तदोः सुलोपोकोरनञ्समासे हलि** ॥६।१।१३२॥

एतत्तदोरककारयोरनञ्समासे लोपः स्याद्धलि । एष विष्णुः । स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः[4] । हलि किम् । एषोत्र ॥

---

न्यायेन षाष्ठिकमुत्वं प्रत्यसिद्धत्वात् तुल्यबलत्वाभावात् विप्रतिषेधपरिभाषा न प्रवर्तते । अत उत्वमेव स्यादिति भावः । अपवादादीनां तु परस्परं संप्रधारणायां नित्यादन्तरङ्गो बलीयांस्तस्मादप्यपवादः । तथोक्तम् ।

'परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव ।
नित्यान्तरङ्गोपगमेन्तरङ्गस्तस्माद्विधिः प्रातिपदो बलीयान् ॥' इति ॥

**विप्रति** । द्वौ प्रसङ्गावन्यत्र सावकाशौ यत्र युगपत् प्राप्नुतः स तुल्यबलविरोधः । उत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गेषु तुल्यबलता नास्तीति नायमस्य सूत्रस्य विषयः । जातिपदार्थपक्षेप्रवृत्तौ विध्यर्थं वचनम् । व्यक्तिपदार्थपक्षे पर्यायेण प्राप्तौ नियमार्थमिति ।

एतत्तदोः । एष इति । 'तदोः सः सौ' इति सः । षत्वम् । एषको रुद्र इति । 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् । ननु त्वाकच्सहितं शब्दान्तरमेतन्नैतत् । मैवम् । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति रूपभेदेप्येतदेव । **असः शिव** इति । ननु चात्र समेतस्य सुशब्दो न तदः । मैवम् । उत्तरपदार्थप्रधानत्वान्नञ्समासस्य तद एवायं सुः । सोः किम् । एतौ गावौ ॥

---

१. सोर्लोपः $D_1$, $D_2$, $B_2$; सुलोपः $D_5$. २. °द्धलि परे C, $B_2$. ३. अकोरिति $D_2$. ४. After this—अनेषो रामः $B_1$. ५. हलीति किम् $B_2$. ६. परस्परसंप्र° $Nc_1$, $Nc_2$. ७. °दन्तरङ्गो विधिर्ब° $Dc_2$. ८. विप्रतिषेधः for तुल्यविरोधः $Dc_3$. ९. तुल्यबलं $Nc_1$. १०. अप्राप्तौ for अप्रवृत्तौ $Dc_3$. ११. नैतदिति $Dc_2$. १२. समस्तस्य $Dc_2$, $Bc_1$.

**सोचि लोपे चेत् पादपूरणम् ॥६।१।१३४॥**

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे पूर्येत[1] । सेमामविड्ढि । सैष दाशरथी रामः ॥[2]

इति विसर्गसंधिः ॥[3]

---

**सोचि** । स[4] इति प्रथमैकवचनान्तस्य तदो रूपं तस्य ग्रहणमेतत् । पादग्रहणेन ऋक्पादः श्लोकपादोपि गृह्यते । अत एवोदाहरणद्वयमाह । **सेमामविड्ढि** । **सैष दाशरथी राम** इति । तथा चोक्तं **काशिकायां** वृत्तौ । 'पादग्रहणेनात्र श्लोकपादस्य ग्रहणं केचिदिच्छन्ति । तेनैतदपि सिद्धं भवति ॥

सैष दाशरथी रामः सैष राजा युधिष्ठिरः[5] ।' इति

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेगात् प्रसादे **युगलमिति विसर्गाभिधस्वादिसंध्योः** ॥

[6]इति संधिप्रकरणम् ॥

---

१. पूर्येत P, C. २. After it—पादपूरणमिति किम् । स एषः । P, B1; लोपे चेत् पादपूरणमिति किम् । स एषः । B2. ३. इति विसर्गसंधिः dropped D1, D2. ४. स इति dropped Bc1, Nc1, Dc1. ५. After it—सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ Bc2. ६. इति संधिप्रकरणम् dropped D1, D2.

# अथ स्वादिप्रक्रिया ॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥१।२।४५॥

धातुप्रत्ययवर्जमर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् ॥

---

अथ स्वादिप्रक्रिया। तत्र तावदजन्तान् पुंलिङ्गानकारान्तादिक्रमेण व्युत्पादयितुकामः प्रातिपदिकसंज्ञामाह। **अर्थवत्** । **धातुप्रत्ययवर्जमिति** । धातुवर्जं प्रत्ययान्तवर्जं चेत्यर्थः । ननु चान्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नेति ज्ञापितं 'सुप्तिङन्तं पदम्' इत्यन्तग्रहणेन तत् किमेवं व्याख्यायते । नैष दोषः। संज्ञाविधौ हि निषेधः। न चायं संज्ञाविधिः। किं तर्हि। निषेधविधिः। **अर्थवदिति** । अत्रार्थशब्दोऽभिधेयवाची।

'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'। इत्यभिधानात्।

तेनाभाववचनानां शशविषाणादिशब्दानामपि प्रातिपदिकसंज्ञा स्यात्। अभावो ह्यभिधेयो भवति। तच्चाभिधेयं चतुर्विधं। जातिगुणक्रियाद्रव्यभेदेन। अत एव चतुष्टयी शब्दानां प्रवृत्तिः। अर्थवदिति किम्। यदि त्वर्थवदिति नोच्येत तदा वनमित्यस्मिन्नव्युत्पन्ने शब्दे नान्तस्यावधेर्निरर्थकस्य संज्ञा स्यात् ततश्च सुप् स्यात्। ततश्च पदत्वान्नलोपः प्रसज्येत। ननु च 'अधातुरप्रत्ययः' इति पर्युदासावेतौ ततश्च नञिव युक्तमन्यसदृशार्थे तथा ह्यर्थगतिरिति न्यायेनार्थवतस्तत्सदृशस्यैव संज्ञा स्यात्। अतो नार्थोऽर्थवद्ग्रहणेन। न्यायस्यायमर्थः। नञ्युक्तमिवयुक्तं चान्यास्मिन् सदृशेऽर्थे प्रतीतिं जनयति। तथा ह्ययमर्थो लोके दृश्यते। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं क्षत्रियमानयति। न विसदृशलोष्टमानीय

---

१. The heading dropped P, B1. २. प्रत्ययातिरिक्त° P, C, D1. ३. शब्दानां चतुष्टयी Dc3. ४. ह्यर्थवदिति Dc3. ५. नोच्यते Nc2, Dc3. ६. °अनर्थकस्य Dc3. ७. Dropped Bc1. ८. Dropped Bc1. ९. °ग्रहणे Nc1. १०. मणिसदृशं लोष्ट° Nc1.

कृती भवतीति । नैष दोषः । अनर्थकोपि धातुरस्ति । तद्यथा । इङ् अध्ययन इति धातुः । अधिपूर्वस्यैवास्यार्थवत्त्वात् । यस्तु धातुपाठेर्थनिर्देशः स समुदायार्थमवयव आरोप्य कृतः । आरोपितार्थस्यापि गणपाठबलादेव धातुसंज्ञा । प्रत्ययोप्यनर्थकोस्ति । 'यावादिभ्यः कन्' । याव एव यावक इति । न ह्यत्र कनोन्वयव्यतिरेकाभ्यामर्थो ज्ञायते । विनापि कना यावशब्दादेवार्थप्रतीतेः । तस्मात् 'अर्थवत्' इति वक्तव्यम् । अधातुरिति किम् । हन्तेर्लङि शप्लुकि 'हल्ङ्याब्–' इति लोपे अटि चाहन् । अडत्र हन्तिग्रहणेनैव गृह्यत इति कृतेप्यटि हन्तिर्धातुरेवेति धातुनिषेधं विना संज्ञा स्यात् ततश्च नलोपः प्रसज्येत । ननु च प्रत्ययग्रहणेनाप्रत्यय इति निषेधः स्यात् । मैवम् । प्रातिपदिकसंज्ञायां हि नलोपकार्यम् । नलोपे प्रत्ययलक्षणेनाप्रत्यय इति निषेधो न प्रवर्तत इत्यत्र 'न ङिसंबुद्ध्योः' इति निषेधो ज्ञापकः । यदि हि प्रत्ययलक्षणेनाप्रत्यय इति संज्ञानिषेधः स्यात्तर्हि राजन्नित्येवमादावपि तत एव संज्ञानिषेधे 'न ङिसंबुद्ध्योः' इति व्यर्थं स्यात् । अप्रत्यय इति किम् । काण्डे इत्यत्र प्रथमाद्विवचनान्ते शब्दे प्रत्ययान्तनिषेधं विना 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः प्रसज्येत । ननु च काण्डशब्दस्य प्रातिपदिकत्वाद्विभक्त्या चैकादेशे कृते 'अन्तादिवच्च' इत्यन्तवत्त्वादस्त्येव प्रातिपदिकत्वमिति कृतेप्यप्रत्ययग्रहणे ह्रस्वः स्यादेव । न स्यात् । अप्रत्ययग्रहणसामर्थ्यात् । अन्यथा ह्यप्रत्ययग्रहणमनर्थकं स्यात् ॥

१. धातोरधि° Dc1, Bc1. २. अस्य dropped Nc1, Dc1, Bc1. ३. अत्र dropped Dc1. ४. कनोप्यन्वय° Nc2, Bc1, Dc3, Dc4; कनान्वय° Dc1, Nc1. ५. तिङि लुकि Dc1. ६. °लक्षणेना° Nc1, Dc2. ७. न लोपः कार्यः Bc1, Dc3. ८. °प्रत्ययलक्षणो निषेधो Dc3. ९. Dropped Nc1.

**प्रत्ययः ॥३।१।१॥ परश्च ॥३।१।२॥ ङ्याप् प्रातिपदिकात् ॥४।१।१॥**

इत्यधिकृत्य

**प्रत्ययः** । **परश्च** । **ङ्याप् प्रातिपदिकात्** । इत्यधिकृत्येति । एतानि त्रीणि सूत्राण्यधिकृत्योच्यन्त इत्यर्थः । तानि च क्रमेण व्याख्यामः[1] । **प्रत्ययः** । प्रतियन्त्यनेनार्थमिति प्रत्यय इत्यन्वर्थसंज्ञा । इत ऊर्ध्वमा पञ्चमाध्यायपरिसमाप्तेर्याननुक्रमिष्यामः प्रत्ययसंज्ञास्ते ज्ञेयाः प्रकृत्युपपदोपाधिविकारान् वर्जयित्वा । **परश्च** । प्रत्ययः प्रकृतेः परः स्यादित्यधिकारो योगे योग उपतिष्ठते । परिभाषा वा । चकारो बहुलाधिकारविहितानामप्युणादीनां परत्वविकल्पो मा भूदिति । **ङ्याप् प्रातिपदिकात्** । इत ऊर्ध्वमा पञ्चमाध्यायपरिसमाप्तेः स्वादिषु कप्पर्यन्तेषु प्रकृतित्वेनाधिक्रियते ङ्याप् प्रातिपदिकादिति । ङीप्ङीष्ङीनां सामान्यग्रहणं 'ङी' इति । टाप् डाप् चापाम् 'आप्' इति । प्रातिपदिकमुक्तम् । तेषां समाहारद्वन्द्वो ङ्याप्प्रातिपदिकादिति । यद्यपि प्रत्ययपरत्वेन पारिशेष्यात् ङ्याप्प्रातिपदिकमेव प्रकृतिर्लभ्यते तथापि वृद्धावृद्धावर्णस्वरद्व्यच्लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कार्यम् । अन्यथा समर्थ[2]विशेषणमेतत् स्यात् 'समर्थानां प्रथमाद्वा' इति समर्थात् प्रत्ययविधानात् । ततश्च ज्ञानामपत्यमित्यत्र 'उदीचां वृद्धात्' इति प्रातिपदिकावस्थायामवृद्धस्यापि ज्ञशब्दस्य समर्थावस्थायां[3] षष्ठीबहुवचने वृद्धत्वमस्तीति फिन् स्यात् । तथा च 'प्राचामवृद्धात् फिन् बहुलम्' इत्यपि वृद्धविशेषणं प्रातिपदिकत्वेऽस्ति[4] । समर्थत्वे[5] नास्तीति न स्यादित्यादि प्रयोजनं **महाभाष्यादवगन्तव्यम्** । विस्तरभयान्न लिख्यते । अथ ङ्याब्ग्रहणं किमर्थम् । न प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापिग्रहणं भवतीत्येव सिद्धम् । न सिध्यति । प्रातिपदिकस्य स्वरूपग्रहणे सा परिभाषा । किं च ङ्याबन्तात्

१. व्याख्यास्यामः Dc3, Dc4. २. समर्थविशेषण° Nc2, Dc2. ३. सामर्थ्यावस्था° Nc1. ४. °त्वेऽप्यस्ति Dc4. ५. समर्थत्वेन Dc1.

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ॥४।१।२॥**

ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सुङस्योरुकारेकारौ जशटङपाश्चेत्संज्ञार्थाः ॥

---

तद्धितविधानार्थं च तद्ग्रहणं कार्यम् । अन्यथा विप्रतिषेधात् तद्धित एव स्यान्न ङ्यापौ । कालितरा । खट्वातरा ॥

**स्वौजसमौट्** । **सुङस्योरित्यादि** । **संज्ञार्था** इति । सु इत्यादि संज्ञा प्रयोजनं येषां ते तथोक्ताः । अयं भावः । सु इत्यत्रोकार उच्चारणार्थः सन् सुसंज्ञार्थः । ङसेरिकारः षष्ठ्येकवचनाद्विशेषणार्थः सन् ङसिसंज्ञार्थः । जसो जकार औकारेण सहासंदिग्धोच्चारणार्थः सन्नितरथा ह्यौकारस्यावादेशे कृते संदेहः स्यात् कीदृक् प्रत्यय इति । शसः सकार औटष्टकारश्चत्वेनासंदिग्धोच्चारणार्थः सन् । इतरथा 'औङः शी' इत्युक्ते टस्येदं ग्रहणं ङस्य वेति संदेहः स्यात् । औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः सन् । टाइत्यत्र[1] टकारः 'टाङसिङसामिनात्स्याः' इत्यत्र विशेषणार्थः सन् । चतुर्थ्येकवचनादिषु ङकारो 'घेर्ङिति' इति विशेषणार्थः सन्[2] । सुपः पकारः सुबिति प्रत्याहारार्थः । इत्वं चैषां यथायोगम् 'उपदेशेऽजनुनासिक इत्' 'हलन्त्यम्' 'चुटू' 'लशक्वतद्धिते' इति सूत्रैः । संख्याकर्मादयश्च स्वादीनामर्थाः सूत्रान्तरैर्विहिताः 'बहुषु बहुवचनम्' इत्यादिभिः 'कर्मणि द्वितीया' इत्येवमादिभिश्च । तैः सहास्यैकवाक्यता भवति । कर्मणो बहुत्वे बहुवचनं शस् स्यात् । कर्मण एकत्व एकवचनम् । कर्मणो द्वित्वे द्विवचनमौ भवतीत्येकवाक्यता ज्ञेया । तत्रेदं वैयाकरणसिद्धान्तरहस्यम् । इदं तावत् केषांचिन्मतम्[3] । स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः पञ्चकः प्रातिपदिकार्थ इति । अन्येषां तु स्वार्थद्रव्यलिङ्गात्मकस्त्रिक इति । तत्र स्वार्थो नाम विशेषणम् । तच्च कदाचित् स्वरूपं जातिर्गुणो

---

१. अत्रत्यः for इत्यत्र Nc2. २. सन् dropped Bc1. ३. °न्मते Dc1, Nc1.

**विभक्तिश्च ॥१।४।१०४॥**

सुप्तिङौ विभक्तिसंज्ञौ स्तः। सु औ जस् इति प्रथमा। अम्

---

द्रव्यं वा स्यात्। द्रव्यं नाम विशेष्यम्। तदपि कदाचित् जातिर्गुणो द्रव्यं वा स्यात्। तत्र यदा शब्दरूपेण विशिष्टा जातिरुच्यते गौरिति तदा गोशब्दस्य स्वरूपं विशेषणत्वात् स्वार्थो भवति। जातिस्तु विशेष्यत्वाद् द्रव्यम्। यदा तु जातिविशिष्टो गुण उच्यते पटस्य शुक्लो गुण इति तदा जातिर्विशेषणत्वात् स्वार्थः शुक्लगुणो विशेष्यत्वाद् द्रव्यम्। यदा तु गुणविशिष्टं पटादि द्रव्यमुच्यते शुक्लः पट इति तदा विशेषणत्वाद् गुणः स्वार्थः विशेष्यत्वात् पटो द्रव्यम्। यदा पुनर्द्रव्यं द्रव्यान्तरस्य विशेषणं स्यात् 'यष्टीः प्रवेशय' इत्यादौ तदा यष्ट्यादिकं विशेषणत्वात् स्वार्थः द्रव्यान्तरं पुरुषादि विशेष्यत्वाद् द्रव्यमेव। क्वचित् संबन्धोपि स्वार्थः स्याद्यत्र संबन्धनिमित्तः प्रत्ययः स्यात्। यथा दण्डीति। अत्र दण्डपुरुषसंबन्धो विशेषणम्। दण्डीति द्रव्यम्। क्वचित् क्रियापि स्वार्थः। यत्र क्रियानिमित्तः प्रत्ययो यथा पाचक इति। क्रियाकारकसंबन्ध एव स्वार्थ इत्यन्ये। लिङ्गं स्त्रीत्वादि। संख्या एकत्वादि। कर्मादयो वक्ष्यमाणाः कारकविशेषाः। धातोस्तु क्रियैव वाच्येत्याचार्याणामविवाद एव। तत्र पञ्चकप्रातिपदिकार्थपक्षे संख्याकर्मादयः प्रातिपदिकेनैवोच्यन्ते विभक्तयस्तु तद्द्योतिकाः[2]। त्रिकपक्षे विभक्तयो वाचिकाः। तत्र त्रिकप्रातिपदिकार्थपक्षमेव युक्तत्वादङ्गीकृत्य 'बहुषु बहुवचनम्' विध्यर्थताश्रिताचार्यवर्यैः[3]। ततस्तैः सहास्यैकवाक्यता स्यात्॥

**विभक्तिश्च**। चकारः पुरुषादिसंज्ञासमावेशार्थः। अन्यथैकसंज्ञाधिकारे वचनप्रामाण्यात् पर्यायेण स्युः। तिङो विभक्तित्वे प्रयोजनं 'न विभक्तौ तुस्माः' इति। सुपस्त्वेतच्चान्यच्च त्यदाद्यत्वादि। पूर्वाचार्यैः स्वादीनां त्रिकाणां कृताः प्रथमादिसंज्ञाः कथयति। **सु औ जस्** इत्यादिना॥

---

१. यदा तु पुन° No2, Dc2, Dc3. २. °द्योतकाः Dc3. ३. सिद्ध्यर्थताश्रिता° Nc1, Dc1.

औट् शस् इति[1] द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति[2] सप्तमी ॥

सुपः ॥१।४।१०३॥

सुबिति प्रत्याहारः । सुपस्त्रीणि त्रीणि[3] पदान्येकैकश[4] एकवचनाद्विवचनबहुवचनसंज्ञानि स्युः ॥

द्व्येकयोर्द्विवचनैकवचने ॥१।४।२२॥[5]

द्वित्वैकत्वयोरेते[6] स्तः ॥

---

सुपः । प्रत्याहार इति । प्रथमैकवचनमारभ्या सुपः पकारात् । अथ कपः पकारेण ग्रहणं कस्मान्न स्यात् । सप्तमीपकारस्य वैयर्थ्य-प्रसङ्गात् । तस्य हि प्रत्याहार एव प्रयोजनं नानुदात्तत्वं तस्य सुप्त्वादेव सिद्धत्वात् । कपः पकारस्य त्वनुदात्तत्वमस्ति प्रयोजनम् ॥

द्व्येकयोः । द्व्येकयोरिति भावप्रधानो निर्देशः । अन्यथा बहुत्वाद्बहुवचनं स्यादित्यभिप्रेत्याह । द्वित्वैकत्वयोरिति । कर्मादयोपरे विभक्तीनां वाच्यास्तदीये एकत्वादावेकवचनादि भवति । अत्र येषां मतं त्रिकः प्रातिपदिकार्थ इति तत्पक्षे एतत् सूत्रं विध्यर्थम् । तथा हि । ङ्याप् प्रातिपदिकात् स्वादयो लस्य तिबादय इत्येकवचनद्विवचने सामान्येन विहिते तयोरनेन द्वित्वैकत्वे वाच्यत्वेन विधीयेते । अन्यथा यदीदं सूत्रं नोच्येत ततो निर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति प्राति-पदिकात् स्वादयो विधीयमानास्त्रिक एवार्थे स्युः । धातोरपि तिबादयः क्रियायामेव स्युर्नैकत्वादौ । येषां तु मते पञ्चकः प्रातिपदिकार्थस्तत्पक्षे

---

१. इति dropped P, B₂. २. इति dropped B₁, B₂, D₃, D₅. ३. त्रीणि dropped B₁. ४. वचनान्ये° P, C, D₂, B₁. ५. °द्विवचनैकवचने P. ६. भवतीति Dc₃. ७. °दात्तत्वादि Dc₄.

**बहुषु बहुवचनम् ॥१।४।२१॥**

बहुत्व एतत् स्यात् ॥

पञ्चाप्यर्थाः प्रातिपदिकवाच्या इति विनाप्येतेन वचनेन प्रातिपदिकाद्विधीयमानाः स्वादयो निर्दिष्टार्थत्वेनैकत्वादौ स्युः । ततस्त्वनियमेन प्राप्ता अनेन नियम्यन्ते । एकत्व एकवचनमेव द्वित्वे द्विवचनमेवेति । 'अव्ययादाप्सुपः' इत्यव्ययादुत्पन्नानां सुपां सुंलुग्वचनं ज्ञापकं निःसंख्येभ्योप्यव्ययेभ्यः स्वादय उत्पद्यन्त इति ॥

बहुषु । अयमपि भावपरो निर्देशः । एवं तर्हि भावस्यैकत्वाद् 'बहुषु—' इति बहुवचनं न घटते । नैष दोषः । यस्मात् संख्याधारस्य द्रव्यस्य यो भेदस्तं बहुत्वे गुणेध्यारोप्य 'बहुषु—' इति बहुवचननिर्देशः कृतः संख्यावाची बहुशब्दो न वैपुल्यवाचीति ज्ञापनार्थम् । तेनावैपुल्यं बहुवचनस्य वाच्यम् । तेन बहुरोदन इति वैपुल्यवाचिनो बहुशब्दादेकवचनमेव स्यात् । एतदपि सूत्रं त्रिकप्रातिपदिकार्थपक्षे विधायकं पञ्चप्रातिपदिकार्थपक्षे नियामकम् । प्रातिपदिकार्थविचारस्तु 'स्वौजसमौट्—' इति सूत्रकृतः ॥

एतद्व्याख्यानेनैव व्याख्यातप्रायत्वेन त्यक्तं सूत्रत्रयं व्याख्यायते । 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' ॥१।२।५८॥ जातेरेकत्वात्तदाख्यायामेकवचने प्राप्ते विकल्पेन बहुवचनार्थं विधिः । जात्यर्थो बहुवत् स्यादिति यावत् । ततश्च तद्विशेषणानामपि बहुवचनम् । संपन्ना यवाः । संपन्नो यवः । जातीति किम् । देवदत्तः । आख्यायां किम् । काश्यपप्रतिकृतिः काश्यपः । जातिशब्दोपि प्रतिकृतिमाचष्टे । एकस्मिन् किम् । व्रीहियवौ । संख्याप्रयोगे निषेधः । एको व्रीहिः ॥

१. अत° $Dc_3$. २. लुग्वचनं $No_2$. ३. गुणाधारे $Dc_2$. ४. तेन वैपुल्यं बहुवचनस्य वाच्यं नेति बहु' $Nc_2$, $Dc_2$; न वैपुल्यं बहुवचनस्य वाच्यं तेन बहु° $Nc_1$. ५. तेन dropped $Bc_1$. ६. सूत्रे कृतः $Dc_3$, $Dc_4$. ७. बहुवचनाय $Dc_1$. $Nc_1$; बहुवचनविधिः $Dc_2$, $Bc_1$. ८. विशेषणानामपि $Nc_1$, $Bc_1$.

राम[1] सु[2] इति स्थिते रुत्वविसर्गौ। रामः। राम[3] राम औ इति स्थिते।

'अस्मदो द्वयोश्च' ॥१।२।५९॥ एकत्वे द्वित्वे चास्मदो बहुवचनं वा। अहं करोमि। आवां कुर्वः। वयं कुर्मः। सविशेषणस्य निषेधः। अहं देवदत्तो ब्रवीमि। युष्मदि गुरावेकेषाम्*। त्वं मे गुरुः। यूयं मे गुरवः॥

'फल्गुनीप्रोष्ठपदानां च नक्षत्रे' ॥ १।२।६०॥ फल्गुन्योः प्रोष्ठपदयोश्च नक्षत्रयोर्द्वित्वे बहुवचनं वा। कदा पूर्वाः फल्गुन्यः। कदा पूर्वे फल्गुन्यौ। कदा पूर्वाः प्रोष्ठपदाः। कदा पूर्वे प्रोष्ठपदे। नक्षत्रे किम्। फल्गुन्यौ माणवकौ॥

राम सुँ[4] इति स्थिते रामशब्दस्याव्युत्पन्नस्य 'अर्थवत्—' इति प्रातिपदिकसंज्ञायां प्रातिपदिकार्थैकत्वविवक्षायां प्रथमैकवचनं सु। सूँत्रकृते उकारस्येत्संज्ञायां लोपे च[5] कृते राम स् इति स्थित इत्यर्थः। **रुत्वविसर्गाविति**। 'ससजुषो रुः' इति रुत्वम्। 'खरवसानयोः—' इति विसर्गः। रामत्वं पुंस्त्वमेकत्वं तदधिष्ठानमित्यमी रामपदेर्था[6]श्चत्वारः। एवमूह्यं पदान्तरे। **राम राम औ इति स्थिते** इति। रामद्वयवाचके रामशब्दद्वये[7] स्थिते सति द्वित्ववाचके औ इत्यस्मिन् विवक्षिते सत्युच्यत इत्यर्थः॥

१. Before this P, $D_1$, C have—'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' [जातिर्नामायमेकोर्थस्तदभिधाने एकवचनमेव प्राप्तं तत इदमुच्यते। जातेराख्या जात्याख्या तस्यां C] एकस्मिन्नर्थे बहुवचनं वा स्यात्। जात्यर्थो बहुवद्भवतीत्यर्थः। तेन वि (तद्वि $D_1$) शेषणानामजातिशब्दानामपि संपन्नादीनां बहुवचनमुपपद्यते। संपन्नो यवः। संपन्ना यवाः। जातिग्रहणं किम्। देवदत्तो यज्ञदत्तः (यज्ञदत्त इति $D_1$) आख्यायामिति किम्। काश्यपप्रतिकृतिः काश्यपः। भवत्ययं जातिशब्दः। न च तेन (नत्वनेन $D_1$) जातिराख्यायते। किं तर्हि। प्रतिकृतिः। एकस्मिन्निति किम्। व्रीहियवौ। संख्याप्रयोगे प्रतिषेधो वक्तव्यः*। एको यवः संपन्नः। सुभिक्षं करोति। 'अस्मदो द्वयोश्च' ॥ अस्मदेकत्वे द्वित्वे च बहुवचनं वा स्यात्। अहं ब्रवीमि। आवां ब्रूवः। वयं ब्रूमः। सविशेषणस्य प्रतिषेधो वक्तव्यः*। अहं देवदत्तो ब्रवीमि। युष्मदि गुरावेकेषाम्*। त्वं मे गुरुः। यूयं मे गुरवः। २. स् P, $D_2$, $B_1$, $B_2$. ३. राम औ $D_1$. ४. सू Nc$_2$, Dc$_3$. ५. तत्र कृते Dc$_3$. ६. °पदार्था° Nc$_2$. ७. °शब्दस्य द्वये Dc$_1$.

**सरूपाणामेकशेष एकविभक्तौ ॥१।२।६४॥**

**सरूपाणां मध्ये एक एव शिष्यते नेतरे एकविभक्तौ परतः ॥**

---

**सरूपाणाम्** । रूपशब्दः स्वभाववाची । समानं रूपं येषां ते सरूपाः । 'ज्योतिर्जनपदरा—' इति समानस्य सः । सरूपाणामिति निर्धारणे षष्ठीत्याह । **सरूपाणां मध्य** इति । समानजातीयस्यैव निर्धारणं भवति न विजातीयस्य । तेन सरूप एव शिष्यते । एकस्यां विभक्तौ परतो यानि सरूपाणि प्रातिपदिकानि दृष्टानि तेषां मध्ये एक एव सरूपः नेतरे सरूपा इत्यर्थः । अनुत्पन्नायामेव विभक्तौ एकशेषः । कृते एकशेषे विभक्त्युत्पत्तिः । अथवा सविभक्तिकानामेकशेषः । कथम् । विभज्यत अनेन प्रातिपदिकार्थ इति विभक्तिः कारकम् । परशब्द इष्टवाची । **एकविभक्तौ** । एकस्मिन् कारके परत इष्टे विवक्षिते यानि सरूपाणि तेषां मध्ये एक एव शिष्यते नेतर इति । कारकं हि विवक्षितत्वात्[1] स्वनिमित्तां विभक्तिं जनयतीति सविभक्तिकानामेकशेषः[2] । सह विवक्षायां चायमेकशेषो नान्यथा । ननु च जातिः पदार्थः । जातिश्चैकैव । तत्रैकत्वादर्थस्य बहूनां शब्दानां प्रसङ्ग एव नास्ति । तत् किमेकशेषारम्भेण । व्यक्तिपक्षेप्य-नेकार्थाभिधानसामर्थ्यं द्व्यादिवदभ्युपेयम् । उच्यते । जातिपक्षेप्यक्षा इत्यादावनेकशब्दत्वं स्यात् । न हि विभीतकदेवनशकटाक्षेष्वनुस्यूतं किंचित् सामान्यमस्ति । व्यक्तिपक्षेपि वृक्षश्च वृक्षश्चेति वाक्येनेकशब्द-दर्शनाद् विरूपेषु द्वन्द्वदर्शनादनेकेषामर्थानामेकेन शब्देनाभिधानमशक्य-मिति यावन्तस्तेर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति । इष्यते चैकशब्दत्वं तस्मादेकशेष आरभ्यते । समानामित्येव वक्तव्ये रूपग्रहणं भिन्नेप्यर्थे[3]

---

१. निमित्तत्वात् $Nc_1$. २. °नामेवैकशेषः $Nc_2$, $Dc_1$, $Dc_2$. ३. भिन्नेष्वर्थेषु $Nc_1$.

**प्रथमयोः पूर्वसवर्णः ॥६।१।१०२॥**

अकः[1] प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते[2]

**नादिचि ॥६।१।१०४॥**

अवर्णादचि न पूर्वसवर्णदीर्घः[3]। वृद्धिरेचि। रामौ॥

---

यथा स्यात्। अक्षाः। अन्यथा अक्षशब्दस्य विभीतकशकटाक्षादिवाचकत्वेन सरूपत्वेप्यर्थभेदादेकशेषो न स्यात्। स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते। यथा भूवादय इत्यत्र वादयश्च वादयश्च वादयः। बहुव्रीहेः शेषः। एकग्रहणं किम्। द्विबह्वोः शेषो मा भूत्। एकविभक्ताविति किम्। पयः पयो जरयतीत्यत्र प्रथमाद्वितीययोः सरूपयोरेकशेषो मा भूत्॥

**प्रथमयोः।** प्रथमाशब्दो विभक्तिविशेषरूढस्तत्साहचर्याद्[4] द्वितीयापि प्रथमाशब्देनोच्यत इत्यभिप्रेत्याह। **प्रथमाद्वितीययोरिति।** 'अतो गुणे' इति यदकारे पररूपत्वं तदकः सवर्णदीर्घत्वमेव[5] बाधते न पूर्वसवर्णदीर्घत्वम्। 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति। पूर्वग्रहणम् अग्नीत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थम्। इति **प्राप्ते** इति। इति सूत्रेण राम औ इत्यत्र पूर्वसवर्णदीर्घे प्राप्ते इत्यर्थः॥

**नादिचि।** आदिति किम्। अग्नी। अचीति किम्। रामान्[6]। 'वृद्धिरेचि' इति वृद्धिरेव स्यादित्यर्थः॥

---

१. $B_2$ has अकः after अचि. २. दीर्घत्वे प्राप्ते $D_3$. ३. °दीर्घ एकादेशः $B_2$; न पूर्वसवर्णः $D_3$. ४. °विशेषे $Dc_2$. ५. सवर्णे $Dc_2$. ६. After it—अनेन न पूर्वसवर्णनिषेधः $Dc_3$.

**चुटू ॥१।३।७॥**

प्रत्ययाद्यौ चुटू इतौ स्तः[1][2] । इति जलोपः ।

**न विभक्तौ तु स्माः ॥१।३।४॥**

विभक्तिस्थास्तवर्गसकारमकारा इतो न । इति[3] न सकारलोपः । एकशेषः । पूर्वसवर्णदीर्घः । रामाः ॥

---

**चुटू** । 'चुटू' 'षः प्रत्ययस्य' इत्येकस्मिन्नेव योगे कार्ये पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम् । तथा चाग्रे वक्ष्यति । 'चुटू' इत्यस्यानित्यत्वात् न चस्येत्संज्ञेति । तेन[4] 'तेन वित्तश्चुञ्चुप्चणपौ' । केशचञ्चुः । अवटीट[5] इत्यादि सिद्धम् । **इति जलोप** इति । बहुत्व-विवक्षायां बहुवचनम् । राम जस् इति स्थिते जकारस्येत्संज्ञायां लोप इत्यर्थः ।

**न विभक्तौ** । 'हलन्त्यम्' इतीत्संज्ञायां प्राप्तायां निषेधारम्भः[6] । विभक्ताविति किम् । 'अचो यत्' 'ऊर्णाया युस्' 'रुधादिभ्यः श्नम्' । अनित्योऽयं निषेध इति 'इदमस्थमुः' इति मकारस्येत्संज्ञापरित्राणार्था-दुकारानुबन्धाज् ज्ञायते । तेन 'किमोत्' 'इटोत्' इत्यत्रेट्संज्ञानिषेधो न । **इति न सकारलोप** इति । जस इति शेषः । **एकशेष** इति । 'सरूपाणाम्–' इति विभक्त्युत्पत्तेः पूर्वं सविभक्तिकस्य वा । **पूर्वसवर्ण-दीर्घ** इति । 'अतो गुणे'[7] इति पररूपस्य बाधकः । **रामा** इति । रुत्व-विसर्गौ ॥

---

१. प्रत्ययाद्यौ चुटू dropped B2. २. जाहादिवर्जं कर्णजाहमिति जलोपः B2. ३. इति dropped Dc1, Dc2, Dc4. ४. Dropped Nc1, Dc2. ५. अवटीटं Dc1. ६. निषेधार्थोऽयमारम्भः Dc1, Nc1. Dc3. ७. 'अतो गुणे' इति dropped Nc2.

**एकवचनं संबुद्धिः ॥२।३।४९॥**

संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥

**एङ् ह्रस्वात् संबुद्धेः ॥६।१।६९॥**

एङन्तात् ह्रस्वान्ताच्च[1][2] हल् लुप्यते संबुद्धेश्चेत्[3]। [4]हे राम। हे रामौ। हे रामाः ॥

**अमि पूर्वः ॥६।१।१०७॥**

अकोऽमि परतः पूर्वरूपमेकादेशः[5] स्यात्[6]। रामम्। रामौ ॥

---

**एकवचनम्**। ननु सुग्रहणमेव कस्मान्न कृतम्। न च सप्तमीबहुवचनेतिव्याप्तिः। संबोधन[7]प्रथमाधिकारादिति चेदुच्यते। प्रत्ययमात्रस्य संज्ञार्थमेकवचनं[8] ग्रहणम्। अन्यथा पूर्वसूत्रेण[9] तदन्तस्यैव संज्ञा विहितेति तदन्तस्यैव स्यात् ॥

**एङ् ह्रस्वात्**। ननु च एङ्ग्रहणं किमर्थम्। यतो हे अग्ने हे वायो इत्यादावपि प्रागेव संबुद्धिगुणात्[10] ह्रस्वादित्येव लोपः स्यादिति[11] चेदुच्यते। नित्यत्वात् परत्वाच्च संबुद्धिगुण एव बलीयानिति[12] प्रथमं स एव स्यात्। तत्र कृते ह्रस्वात्परः संबुद्धेर्हल् नेति लोपो न स्यात्। अत एङ्ग्रहणं कर्तव्यम्। **हे राम। हे रामौ। हे रामा** इति। अत्र संबोधनाभिव्यक्तये हे शब्दः प्रयुक्तः ॥

**अमि**। 'प्रथमयोः पूर्वसवर्णः' इत्यतः पूर्वसवर्णग्रहणेनुवर्तमानेपि पूर्वग्रहणं पूर्व एव यथा स्यात् पूर्वसवर्णान्तरतमो मा भूत्। तेन कुमारीमित्यत्र त्रिमात्रो न ॥

---

१. ह्रस्वाच्च P, $D_5$. २. After it–परः $D_4$. ३. After it–स्यात् $B_2$, $D_2$. ४. Before it—संबोधनाभिव्यक्त्यर्थं क्वचिद्धेशब्दः प्राक् प्रयुज्यते. $B_1$; $B_2$ has हे शब्दः प्राक् प्रयुज्यते. ५. पूर्वरूप एकादेशः $D_1$. ६. स्यात् dropped P, $D_1$. ७. संबोधने $Dc_2$. ८. °वचनग्रहणम् $Bc_1$, $Dc_3$, $Dc_4$. ९. °सूत्रे $Dc_1$. १०. °ग्रहणात् $Nc_2$. ११. इति चेत् dropped $Nc_2$. १२. बलवानि° $Dc_3$.

**लशक्वतद्धिते ॥१।३।८॥**

तद्धितवर्ज[1]प्रत्ययाद्या लशकवर्गा इतः स्युः । इति शलोपः[2] । पूर्वसवर्णदीर्घः ॥

**तस्माच्छसो नः पुंसि ॥६।१।१०३॥**

तस्मात् पूर्वसवर्णदीर्घात् परस्य शसः सस्य[3] नः स्यात् पुंसि[4] ॥

**[5]रषाभ्यां नो णः समानपदे ॥८।४।१॥**

[6]रेफषकाराभ्यां परस्य नस्य[7] णः स्यात् समानपदे ॥

**अट्कुप्वाङ्नुम्व्यवायेपि ॥८।४।२॥**

---

लश इति । शलोप इति । राम शस् इति स्थिते शसः शस्य लोप इत्यर्थः ॥

तस्मात् । तस्मादिति किम् । एतान् गाः पश्य[8] । शस इति किम् । रामाः । पुंसीति किम् । बह्वीर्धेनूः । इह तु चञ्चाप्रतिकृति-श्चञ्चा । 'लुम्मनुष्ये' इति कनो लुपि कृते 'लुपि युक्तवद् व्यक्तिवचने' इति पुंसोपि स्त्रीलिङ्गता । तेन नत्वं न । चञ्चाः पश्य ॥

अट्कु । आङ्ग्रहणं 'पदव्यवाये' इत्यस्य प्रतिषेधस्य[9] बाधनार्थम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तेन बृंहणमित्यत्रानुस्वार[10]-व्य[11]वाये नुमभावेपि णत्वं स्यात् । प्रेन्वनमित्यत्र तु सत्यपि नुमि अनुस्वाराभावे णत्वं न । किं पुनरिह सूत्रे समुदाये वाक्य[12]परिसमाप्ति-राहोस्वित् प्रत्येकम् । तत्र समुदाये इति पक्षो न घटते । सर्वैरडादिभि-र्व्यवायाभावात् । यदि द्वितीयस्तदा अर्केणेत्येवमादावनेकेन व्यवाये[13] न

---

१. °वर्जितप्रत्यया° C, $D_1$, $D_5$; °वर्जं प्रत्यया° $B_2$; वर्जाः प्रत्यया° $B_1$, P. २. शकारलोपः $B_1$, $D_3$, $D_5$. ३. सकारस्य नकारः C, $B_1$, $D_1$. ४. After it—रामान् $B_1$. ५. The Sûtra with the Vṛitti dropped $D_5$. ६. $D_4$ has इति वर्तमाने in place of the Vṛitti; Before it—एकपदस्थाभ्यां $D_3$. ७. नस्य णत्वं स्यादिति वर्तमाने $D_2$. ८. शशाः पश्य $Dc_3$. ९. प्रतिषेधस्य dropped $Nc_1$, $Dc_1$, $Dc_2$. १०. °नुस्वारस्य $Dc_3$. ११. व्यवायनुम° $Nc_2$. १२. वाक्ये $Nc_1$, $Dc_1$. १३. व्यवायेन न $Nc_1$, $Dc_1$.

अट्कवर्गपवर्गआङ्नुम् एतैर्व्यस्तैः समस्तैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे ॥ इति णत्वे प्राप्ते

**पदान्तस्य ॥८।४।३७॥**

पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥१।४।१३॥**

प्रत्ययो यस्मात् क्रियते तदादिशब्दः प्रत्यये परेऽङ्गसंज्ञः स्यात् ॥

---

स्यात् । तस्माद् व्यवाये णत्वं स्यादित्युपलक्षयितुमडादीनां ग्रहणम् । कतरस्मिन् व्यवाये । अडादिभिर्व्यवाये । ते चाडादयो व्यस्ताः समस्ता वा व्यवायमुपलक्षयितुं शक्नुवन्तीत्यभिप्रेत्याह । **एतैर्व्यस्तैः समस्तैश्च व्यवधाने** इति । **इति णत्वे प्राप्ते** इति । रामानित्यत्रेति शेषः ॥

**यस्मात्** । यस्माद्धातोः प्रातिपदिकाद्वा । तदादीति । स आदिर्यस्य स तदादिः । यस्मादिति किम् । तदादीत्यनेन संबन्धात् संज्ञिनिर्देशार्थम् । प्रत्ययग्रहणं किम् । न्यविशत अत्र 'नेर्विशः' इति नेरुपसर्गाद्विधिरस्तीति तदादेरङ्गसंज्ञा स्यात् । ततश्चोपसर्गात् प्रागडागमः स्यात् । विधिग्रहणं किम् । प्रत्ययपरत्वमात्रे मा भूत् । स्त्री इयती । इदं परिमाणमस्या इति वतुप् । 'किमिदम्भ्याम्—' इति वस्य घः । तस्येय् । 'इदंकिमोः—' इति इदम ईश् । 'यस्येति च' इतीकारलोपः । 'उगितश्च' इति ङीप् । स्त्रीशब्दात् सोर्हल्ङ्यादिलोपः । स्त्री इयती इति स्थिते यदि विधिग्रहणं न क्रियते इयतीशब्दे प्रत्यये परतः स्त्रीशब्दस्याङ्गसंज्ञा स्यात् । ततश्च 'यस्येति च' इति लोपः प्रसज्येत । ननु च 'असिद्धवदत्राभात्' इत्यसिद्ध ईलोपस्तत् कुतोयं प्रसङ्गः । उच्यते । विधिग्रहणात् प्राक् भाचासिद्धमित्यभिप्रायो

---

१. अट्कवर्गाः पवर्गाः $B_2$. २. समस्तैर्व्यस्तै° C, $D_3$. ३. स्यात् dropped P, $D_1$, $D_4$. ४. °स्तदादिः $B_1$. ५. विधीयते C, $B_2$. ६. तदादिशब्दरूपं प्रत्यये परेऽङ्गसंज्ञं $B_2$. ७. $B_1$ drops परे. ८. समस्ता व्यस्ता वा $Dc_1$. ९. अप्रत्यय इति किम् $Dc_1$. १०. After it–इति $Dc_3$. ११. यलोपः $Nc_2$.

**टाङसिङसामिनात्स्याः ॥७।१।१२॥**

अकारान्तादङ्गाट्टादीनां क्रमादिनादयः स्युः[१] । णत्वम्[२] । रामेण ॥

**सुपि च ॥७।३।१०२॥**

यञादौ सुपि परेऽकारान्ताङ्गस्य[३] दीर्घः स्यात् । रामाभ्याम् ॥

**अतो भिस[४] ऐस् ॥७।१।९॥**

अकारान्ताद्[५] भिस[६] ऐस् स्यात् ॥

---

लक्ष्यते । अथवा भाधिकारीयमसिद्धमनित्यमिति[७] । तदादिवचनं स्यादिप्रत्ययसहितस्य नुमाद्यागमसहितस्य चाङ्गसंज्ञा यथा स्यात् । करिष्यामि । कुण्डानि । असति हि तदादिग्रहणे यस्मात् प्रत्ययविधिस्तस्य संज्ञा स्यात् न तस्यादेः समुदायस्य । ततः प्रत्ययस्याविहितत्वात् । पुनः प्रत्ययग्रहणं किम् । श्रियै इदं श्र्यर्थम् । अस्त्यत्र चतुर्थ्येकवचनस्य विधिरित्यसति पुनः प्रत्ययग्रहणे श्रीशब्दस्यार्थशब्दे परतोऽङ्गसंज्ञा स्यात् । ततश्चेयङ् स्यात् । सति तु [८]विहिते प्रत्यये परत इत्येवं विज्ञायते । यश्चातो विहितः स लुप्त इति न भवति ॥

**टाङसि** । **णत्वमिति** । राम टा इति स्थिते 'चुटू' इति टस्येत्त्वाल्लोपे इनादेशे आद्गुणे च कृते पश्चात् 'अट्कुप्वाङ्—' इति णत्वमित्यर्थः ॥

**सुपि च** । [९]**अतो भिस** ।

एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ।
कृतेप्येत्वे भौतपौर्व्यादैस्तु[१०] नित्यस्तथा सति ॥

---

१. आदेशाः स्युः $B_2$, $D_3$. २. णत्वम् dropped $B_1$, $D_4$. ३. परेकाराङ्गस्य $D_2$; परेतोङ्गस्य C, $B_1$, $D_1$, $D_3$. ४. भिस् P, $B_1$, $B_2$, C. ५. अकारान्तादङ्गात् $B_2$. ६. भिस् P, $B_1$, $B_2$, C. ७. °मसिद्धत्वम° $Bc_1$. ८. विदिते $Dc_1$, $Nc_1$. ९. Before it—यञादौ परेकारान्तस्याङ्गस्य दीर्घः स्यादिति भावः $Dc_2$. १०. भौतपूर्व्यादैस्तु $Dc_1$, $Dc_2$.

अनेकाल् शित् सर्वस्य ॥१।१।५५॥

रामैः ॥

ङेर्यः ॥७।१।१३॥

अतोऽङ्गात् परस्य ङे इत्येतस्य यादेशः स्यात्[३]। स्थानिवत्त्वात् सुप्कार्यम्[४]। 'सुपि च' इति दीर्घः[५]। रामाय। रामाभ्याम् ॥

---

अनेकाल् शित् सर्वस्य। इत्यनेकाल्त्वात् सर्वादेशोयमैस् ॥

ङेर्यः। स्थानिवत्त्वादित्यादि। चतुर्थ्येकवचने राम ङे इति स्थिते 'लशक्वतद्धिते' इतीत्त्वात् ङकारलोपे यादेशे च कृते 'स्थानिवदादेशोनल्विधौ' इति सुबादेशस्य यस्य स्थानिवत्त्वात् 'सुपि च' इति दीर्घः सुप्कार्यं भवति। ननु यञादौ दीर्घो विधीयत इत्यल्विधिरयं तत् कथं स्थानिवत्त्वम्। नैष दोषः। अनल्विधाविति स्थानिनो योल् तमाश्रितो विधिर्निषिध्यते। यथा प्रपठ्येत्यत्र क्त्वो वलादित्वमाश्रित इट् निषिध्यते। न चात्र यञादित्वं स्थान्यतिदेशेन किं तु स्वयमेवादेशस्येति। ननु चात्र स्थानिन एकारस्याल्त्वात्तदाश्रयं सुप्त्वमलाश्रयमेव। न[६]। यस्मिन् कार्ये अल्[७] एवासाधारणं रूपं निमित्तादित्वेनाश्रीयते अशि हलीत्यादि स एवाल्विधिः। 'सुपि च' इत्यत्र[८] नैवंविधं किंचिदस्ति। केवलमुदाहरणे अलात्मकस्थानी। ननु च 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्यदन्तत्वसंनिपातेन जातो यादेशः कथमदन्तत्वं विहन्यात्। मैवम्। 'कष्टाय क्रमणे' इति निर्देशादनित्यत्वमस्याः परिभाषायाः। तेन दीर्घो भवत्येव। रामाभ्यामिति। 'सुपि च' इति दीर्घः ॥

---

१. C drops the Sûtra. The Vritti—अनेकालादेशः शिच्च सर्वस्य स्यात् D3. २. इत्यस्य D5. ३. Dropped B1, D1, D4, D5. ४. सुप्कार्यं dropped D1. ५. 'सुपि च' इति दीर्घः dropped B1, B2. ६. Dropped Dc1, Nc1. ७. अल् Dc3. ८. इत्यत्र तु Nc1, Nc2.

**बहुवचने झल्येत् ॥७।३।१०३॥**

झलादौ[1] बहुवचने[2] परेतोऽङ्गस्यैकारः[3] स्यात्[4] । रामेभ्यः । रामात् । रामाभ्याम् । रामेभ्यः । रामस्य ॥

**ओसि च ॥७।३।१०४॥**

ओसि[5] परेतोऽङ्गस्यैकारः[6] स्यात्[7] । रामयोः[8] ॥

**ह्रस्वनद्यापो नुट् ॥७।१।५४॥**

ह्रस्वान्तान्नद्यन्तादाबन्तात्परस्यामो नुडागमः स्यात् ॥

---

**बहुवचने** । बहुवचने किम् । रामाभ्याम् । झलि किम् । रामाणाम् । 'सुपि' इत्यनुवर्तत एव । यजध्वम् । **रामादिति** । पञ्चम्येकवचने राम ङसीति स्थिते । इत्त्वात् ङकारेकारयोर्लोपे 'टाङसिङसामिनात्स्याः' इत्यादादेशो ङसः । अकः सवर्णे दीर्घः[9] । **रामाभ्याम्** । **रामेभ्य** इति । पञ्चमीद्विवचनबहुवचनयोः क्रमाद् दीर्घत्वैत्वे । **रामस्येति** । षष्ठ्येकवचने राम ङस् इति स्थिते इत्त्वात् ङलोपे 'टाङसिङसामिनात्स्याः' इति स्यादेशः ॥

**ओसि** । **रामयोरिति** । षष्ठीद्विवचने राम ओस् इति स्थिते एत्वायादेशरुत्वविसर्गाः ॥

**ह्रस्व**[10] । आमत्र षष्ठीबहुवचनं गृह्यते । एतत्[11] 'आमि सर्वनाम्नः सुट्' इत्यत्र प्रतिपादयिष्यते । तदेव ह्याम्ग्रहणमत्रानुवर्तते ॥

---

१. झलादिबहु° $D_1$. २. सुपि बहु° P, $B_1$, $B_2$, $D_3$. ३. °स्यैत् C. ४. Dropped P, $B_2$, $D_2$, $D_4$. ५. अतोऽङ्गस्य ओसि परे $D_3$. ६. °स्यैत् C. ७. Dropped $D_1$, $D_2$, $B_2$. ८. Before it—'एचोऽयवायावः' $D_2$. ९. After it—इति दीर्घः $Dc_2$. १०. °ह्रस्वनद्यापः $Dc_2$. ११. तत् $Nc_1$.

**नामि ॥६।४।३॥**

नामि परतोजन्तस्य[1] दीर्घः[2] । रामाणाम् । रामे । रामयोः । एत्वे[3] कृते ।

**आ[4]देशप्रत्यययोः ॥८।३।५९॥**

इण्कवर्गाभ्यां परस्यादेशप्रत्यययोरपदान्तस्य सस्य मूर्धन्यादेशः स्यात्[5] । रामेषु । पदान्ते तु ह[6]रिस्तत्र । एवं कृष्णमु[7]कुन्दादयः ॥

---

**नामि** । ननु च रामाणामित्यत्र 'सुपि च' इति दीर्घेण सिद्धम् । किमर्थं 'नामि' इत्यारभ्यते । उच्यते । अवश्यं हरीणामित्यादि-सिद्ध्यर्थमेतदा[8]रभ्यं तदन्यार्थं कृतमेतदर्थमपि स्यादिति भावः । **रामाणा**मिति । षष्ठीबहुवचने आमि नुटि 'नामि' इति [10]दीर्घत्वे 'अट्कुप्वाङ्—' इति णत्वम् । **रामे** इति । सप्तम्येकवचने ङि ङकारलोपः । 'आद्गुणः' इति गुणः । **रामयो**रिति । 'ओसि च' इत्येकारः । अयादेशः । **एत्वे कृते** इति । सप्तमीबहुवचने राम सु इति स्थिते 'बहुवचने झल्येत्' इत्येत्वे कृते इत्यर्थः ॥

**आदेश** । आदेशप्रत्यययोरिति षष्ठी भेदेन संबध्यते । आदेशो यः सकारः प्रत्ययावयवो यः सकार इति । **रामेष्वि**ति । सकारस्य [11]सोष्मणो घोषस्यान्तरतम्यात् तादृश एव षकारो भवति मूर्धन्यः ॥

---

१. °जन्तस्याङ्गस्य B₁, C. २. After it—स्यात् C, D₃, D₅. ३. एत्वे कृते dropped P. ४. इण्कोरादेशप्रत्यययोः B₂. ५. Dropped P, D₁. ६. हरिस्त्राता B₁. ७. °मुकुन्दगोविन्दकेशवादयः शब्दाः D₁. ८. तद् No₁. ९. °दारम्भणीयम् Dc₂; °दारम्भः Bc₁. १०. दीर्घत्वं Dc₄. ११. Before it—विवृतस्य Dc₂, Dc₄.

## सर्वादीनि सर्वनामानि ॥१।१।२७॥

सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः ॥

सर्व । विश्व । उभ । उभय । डतर । डतम । इतर[1] । अन्य । अन्यतर । त्वत् । त्व । नेम । सम । सिम । पूर्व[2] । पर । अवर । दक्षिण । अपर[3] । अधर । स्व । अन्तर । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि ।[4] युष्मद् । अस्मद् । भवत् । किम् । डतरडतमौ प्रत्ययौ । ततश्च[5] तदन्ताः शब्दा ग्राह्याः । एते सर्वादयस्त्रिलिङ्गाः[6] ॥

---

**सर्वादीनि** । सर्व आदिर्येषां तानि सर्वादीनि । तद्गुणसंविज्ञानो बहुव्रीहिः । सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञा । तेन संज्ञोपसर्जनयोः सर्वनामत्वं न । एतच्चाग्रे स्वयमेव वक्ष्यति । ननु च 'सर्वनामानि' इत्यत्र 'पूर्वपदात् संज्ञायामगः' इति णत्वेन भाव्यम् । अस्मादेव निपातनान्न भवति । सर्वादिगणं पठति । **सर्वेत्यादि** । त्वशब्दोयमन्यवाची द्विः पठितः स्वरभेदात् । एक उदात्तोन्योनुदात्त इति **काशिकाकारमतम्** । ग्रन्थकारमतं तु एकोकारान्तोन्यस्तकारान्तो द्वावप्यनुदात्ताविति । भवतोकच् एकशेषः* । 'आ सर्वनाम्नः' । इत्यात्वम् । 'सर्वनाम्नस्तृतीया च' इत्यादीनि प्रयोजनानि । **डतरडतमौ प्रत्ययाविति** । किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् । वा बहूनां जातिपरिप्रश्ने डतमच् इति । **ततश्च तदन्ता शब्दा** इति 'प्रत्ययग्रहणे यस्मात् स तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया । ननु च

---

१. अन्य । अन्यतर । इतर C, D3. २. B1 has एक before पूर्व. ३. अपर dropped P, B1, D3, D4, D5. ४. After it—किम् B1. ५. च dropped D1, D5, B2. ६. After it—तत्र पुंलिङ्गत्वे रूपं नेयम् D5. ७. तथ Nc2. ८. इत्येतानि Nc2, Dc4. ९. जाति dropped Nc2. १०. ग्रहणम् dropped Dc1, Dc4.

**जसः शी ॥७।१।१७॥**

अकारान्तात् सर्वनाम्नः परस्य जसः शी स्यात् । शे[१] इत् । सर्वे ॥

**सर्वनाम्नः स्मै ॥७।१।१४॥**

अतः सर्वनाम्नो ङे[३] इत्यस्य स्मै स्यात् । सर्वस्मै ॥

**ङसिङ्योः स्मात्स्मिनौ ॥७।१।१५॥**

अतः सर्वनाम्नो ङसिङ्योः क्रमात्[४] स्मात्स्मिनौ स्तः । सर्वस्मात् ।

---

'सुप्तिङन्तं पदम्' इत्यन्तग्रहणेन ज्ञापितं न संज्ञाविधौ तदन्तविधिरिति । सत्यम् । तथापि केवलयोः सर्वनामकार्याभावात् तदन्तग्रहणमित्यदोषः ॥

**जसः शी** । श इति । 'लशक्वतद्धिते' इति । स च सर्वादेशार्थः । अन्यथा 'आदेः परस्य' इत्यकारमात्रस्य स्यात् । दीर्घोच्चारणं 'नपुंसकाच्च' इत्येवमर्थम् । मधुनी । **सर्वे** इति । 'अर्थवत्—' इति प्रातिपदिकसंज्ञायां सर्वशब्दात् प्रथमाबहुवचनं जस् ॥

**सर्वनाम्नः** । अतः किम् । भवते । अथोत्रास्मै इत्यन्वादेशे अशि कृते सवर्णदीर्घ एकादेशः प्राप्नोति । तत्रैकपदाश्रयत्वादन्तरङ्गत्वात्पूर्वं स्मैभाव एव स्यात् पश्चादेकादेशः । पदद्वयाश्रयात् । **सर्वस्मै** इति । चतुर्थ्येकवचनस्य ङे इत्यस्य स्मै ॥

**ङसिङ्योः** । ङेरल्पाच्तरस्य पूर्वनिपाते प्राप्ते परनिपातो वैचित्र्यार्थः । **सर्वस्मादिति** । पञ्चम्येकवचनं ङसिः ॥

---

१. श इत् dropped $B_2$. २. आह्गुणः । सर्वे $D_2$. ३. परस्य ङेः $D_4$. ४. क्रमात् dropped $D_1$. ५. न । तत्रै° $Nc_2$. ६. °श्रयत्वात् $Nc_2$, $Dc_3$.

**आमि सर्वनाम्नः सुट् ॥७।१।५२॥**

अवर्णात् सर्वनाम्नः परस्यामः सुट्[1] स्यात्। ऐत्वषत्वे[2]। सर्वेषाम्। सर्वस्मिन्[3]। शेषं रामवत्। एवं विश्वादयोऽप्यकारान्ताः। उभशब्दो [4]द्विवचनान्तः। उभौ। उभौ। उभाभ्याम्। उभाभ्याम्। उभाभ्याम्। उभयोः। उभयोः।

---

**आमि सर्वनाम्नः**। 'आमि' इति सप्तमीनिर्देश उत्तरार्थः। इह तु 'सर्वनाम्नः' इति पञ्चमीनिर्देशात् षष्ठीप्रकृतिर्भवति। आमीति षष्ठीबहुवचनं गृह्यते न ङेराम्। तस्य हि परत्वात् आट् याट् स्यादयः स्युः। तेषु कृतेषु सुट्प्राप्तिरेव नास्ति। न हि द्वयोरादिलिङ्गयोः समुच्चयो घटते। यश्च घादाम् यश्च कास्प्रत्ययेत्याम् तावपि न गृह्येते। 'अननुबन्धकग्रहणे न सानुबन्धस्य' इति परिभाषया। तौ हि सानुबन्धौ। एत्वषत्वे इति। सर्व आम् इति स्थिते सुट्। 'बहुवचने झल्येत्' इत्येत्वम्। 'आदेशप्रत्यययोः' इति षत्वम्। **सर्वस्मिन्निति**। सर्व ङि इति स्थिते 'ङसिङ्योः—' इति स्मिन्। **शेषं रामवदिति**। जस्ङेङसिआम्ङि इति वचनपञ्चकव्यतिरिक्तं वचनषोडशकं रामशब्दवत् साधनीयम्। तानि रूपाणि चैवम्। सर्वः। सर्वौ। सर्वम्। सर्वौ। सर्वान्। सर्वेण। सर्वाभ्याम्। सर्वैः। सर्वाभ्याम् ३। सर्वेभ्यः २। सर्वस्य। सर्वयोः २। सर्वेषु॥

**उभशब्दो द्विवचनान्त इति**। तस्य द्वित्ववाचकत्वात्। **उभौ उभौ इति**। प्रथमाद्वितीययोर्द्विवचनमौकारौ। **उभाभ्याम् ३ इति**। तृतीयाचतुर्थीपञ्चमीद्विवचनानि। भ्यामः 'सुपि च' इति दीर्घः। **उभयोः। उभयोरिति**। षष्ठीसप्तमीद्विवचने। ओसौ 'ओसि च'

---

१. For सुट् C has सुडागमः. २. एत्वसत्वे P, $B_1$, $D_3$, $D_4$, $D_5$. ३. After it—सर्वयोः। सर्वेषु। $D_5$. $B_1$, P, C. ४. नित्यं द्विव° $D_1$. ५. °प्रकृति° $Dc_2$, $Bc_1$. ६. तेषु च $Dc_4$. ७. सानुबन्धकस्य $Bc_1$, $Dc_3$, $Dc_4$. ८. रामवत् $Dc_3$. ९. च dropped $Nc_1$, $Nc_2$, $Bc_1$.

तेऽस्य सर्वादिषु पाठः 'सर्वनाम्नस्तृतीया च' इत्यर्थः ।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥१।१।३४॥**

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात् सर्वत्र या प्राप्ता सा जसि वा स्यात् । स्वाभिधेयापेक्षावधिनियमो व्यवस्था ।

---

इत्येकारः । यदि द्विवचनान्त एव तत् किमर्थोऽस्य सर्वादिषु पाठः । यतः 'सर्वनाम्नः स्मै' इत्यादीनां सर्वनामकार्याणामेकवचनबहुवचनविषयत्वम् । अकजपि सर्वनामसंज्ञां न प्रयोजयति । विशेषाभावात् । न हि तस्मादकचि के वा कृते रूपभेदः स्वरभेदो वास्ति । अथवाकच् तस्मान्न प्राप्नोत्येव द्विवचनटाब्विषयत्वादस्येत्याशङ्क्याह । **तस्ये**त्यादि । अनेन तृतीया षष्ठी च यथा स्यादित्येवमर्थ इत्यभिप्रायः ॥

**पूर्व** । **व्यवस्थाया**मिति । गम्यमानायामित्यर्थः । **असंज्ञाया**मिति । संज्ञायामसत्याम् । यदि पूर्वादयः संज्ञारूपा न भवन्तीति यावत् । **गणपाठात् सर्वत्र या प्राप्ते**ति । गणे हि 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति सूत्रं पठ्यते तेनास्मिन् विषये सर्वत्रैषां सर्वनामसंज्ञा प्राप्तानेन जसि विभाष्यते । **स्वाभिधेये**ति । अवधिर्मर्यादा तस्य नियमोऽवश्यंभावः । अवधिभावादभ्रंशः किंविशिष्टः । स्वाभिधेयापेक्षः । पूर्वादीनां स्वाभिधेयो यो दिग्देशकालस्वभावोऽर्थस्तमपेक्षते तेन वापेक्ष्यत इति स्वाभिधेयापेक्षः । अयमर्थः । पूर्वाद्यभि-

---

१. Before it—अन्यतरग्रहणे अन्यतमस्य सर्वनामसंज्ञा प्रतिषेधः (निषेधः D1) शब्दान्तरं वा । उभशब्दस्य C, D1, D2. २. इत्येवमर्थः C; इत्येतदर्थम् D5. ३. एषां D3. ४. या सा dropped B1, C, D1, D2, D3. ५. °धेयापेक्षो° P. ६. विषयत्वात् Bc1 ७. °पेक्ष्यः Nc1, Bc1. ८. °पेक्ष्यः Nc1, Bc1.

पूर्वे । पूर्वाः । व्यवस्थायां किम् । दक्षिणा गाथकाः । प्रवीणा इत्यर्थः । सत्यामपि व्यवस्थायां न नाम्नि । उत्तराः कुरवः ।

**स्वमज्ञातिधनाख्यायाम् ॥१।१।३५॥**

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता सर्वनामसंज्ञा जसि वा स्यात् । स्वे । स्वाः । ज्ञातिधनाख्यायां तु । स्वाः । ज्ञातयोऽर्था वा ॥

---

धेयानां दिगादीनामर्थानां यत् पूर्वादित्वं तन्नियोगतः कमप्यवधिमपेक्ष्य स्यात् । तथा हि पूर्वदेशस्य यत् पूर्वत्वं तदवश्यं परं देशमवधिमपेक्षते । तथा परस्यापि यत् परत्वं तत् पूर्वम् । तस्मात् पूर्वादिशब्दवाच्यापेक्षेण केनचिदवधिनावश्यं भाव्यम् । तेन तस्यैवावधेर्यः पूर्वादिशब्दाभिधेयापेक्षोऽवधिभाव ऐकान्तिकः स व्यवस्थेति । **पूर्वे** । **पूर्वाः** इति । परस्मादवधेरिति गम्यते । **दक्षिणा** इति । सर्वनामसंज्ञाभावात् जसः शीभावो न । **प्रवीणा इत्यर्थ** इति । प्रावीण्यमात्रं निमित्तमुपादायावधिभावनिरपेक्ष एव दक्षिणशब्दो गाथकेषु वर्तत इति व्यवस्थात्र न गम्यत इति भावः । **सत्यामपी**त्यादि । अयं भावः । जम्बुद्वीपं सुमेरुं वावधिमपेक्ष्योत्तरशब्दः कुरुषु वर्तत इति व्यवस्था गम्यत एव किं तु इयं तेषां संज्ञेति न भवति सर्वनामसंज्ञेति ॥

**स्वम्** । **प्राप्तेति** । 'स्वमज्ञातिधनाख्यायाम्' इत्यस्मात् गणसूत्रात् । **स्वे** । **स्वा** इति । आत्मीया इत्यर्थः ।

---

१. Before it—परे । पराः । इत्यादि C. २. या प्राप्ता सर्वनामसंज्ञा सा जसि C, D5. ३. किम् C. ४. ज्ञातयः स्वा अर्था वा । D3. ५. °क्ष्यते Dc3. ६. °पेक्ष्य Dc3. ७. प्रवर्तत Dc3, Dc4. ८. जम्बू° Dc4.

**अन्तरं बहिर्योगोपसंव्यानयोः ॥१।१।३६॥**

बहिर्योगोपसंव्यानयोः सर्वनामसंज्ञोन्तरशब्दो जसि तत्संज्ञो वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटका परिधानीया इत्यर्थः ॥

**पूर्वादिभ्यो नवभ्यो वा ॥७।१।१६॥**

एभ्यः परयोर्ङसिङ्योः स्मात्स्मिनौ वा । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् ।

---

**अन्तरम्** । बहिरित्यनावृत्तो देशस्तेन योगः संबन्धो बहिर्योगः । स चानावृत्तस्य बाह्यस्य वस्तुनो भवति । उपरि संवीयते विधीयते तदुपसंव्यानम् । 'कृत्यल्युट–' इति कर्मणि ल्युट् । अथवा संवीयत अनेनेति संव्यानम् । करणे ल्युट् । पश्चादुपशब्देन समासः । संव्यानस्य समीपमुपसंव्यानं परिधानीयमुच्यते । **सर्वनामसंज्ञे**ति । 'अन्तरं बहिर्योगोपसंव्यानयोः' इत्यनेन सूत्रेण । **तत्संज्ञ** इति । सर्वनामसंज्ञ इत्यर्थः । **बाह्या इत्यर्थ** इति । ग्रामबाह्याश्चाण्डालादिगृहा इत्यर्थः । **परिधानीया इत्यर्थ** इति । न प्रावरणीया इति भावः ।

**पूर्वादिभ्यः** । **एवं परादीनामपी**ति । पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर इत्येतेषामपि रूपाण्येवमेव ज्ञातव्यानीत्यर्थः । **शेषं सर्ववदि**ति । जस् ङसिङि इत्येतानि वचनानि वर्जयित्वान्येषु वचनेषु पूर्वादीनां नवानां रूपाणि सर्वशब्दस्येव ज्ञातव्यानीत्यर्थः । सर्वादीना शब्दानां येषां यस्मिन्नर्थे यस्मिन्नुपाधौ च सर्वनामसंज्ञा भवति

---

१. बहिर्योगोपसंव्यानयोः dropped P, $D_2$, $B_1$ ; बहिर्योगोपसंव्यानयोरन्तरशब्दस्य सर्वनामसंज्ञा वा स्यात् $B_2$. २. इत्यर्थः dropped $B_2$. ३. वा स्तः $B_2$, $D_3$. ४. तत्संज्ञक $Dc_3$. ५. °संज्ञक $Dc_3$. ६. °श्चण्डालगृहा $Nc_1$.

सर्वादिः सर्वनामाख्यो न चेद्गौणोथवाभिधा ।
पूर्वादिश्च व्यवस्थायां समोतुल्येन्तरोपुरि ॥
परिधाने बहिर्योगे स्वोर्थज्ञात्यन्यवाच्यपि ॥

प्रत्युदाहरणं तु । अतिक्रान्तः सर्वमतिसर्वः । तस्मै अतिसर्वाय

---

तानर्थानुपाधींश्च सार्धश्लोकेन सुखप्रतिपत्त्यर्थं संगृह्णाति । **सर्वादिरिति** । सर्वादिर्गणस्तर्हि सर्वनामसंज्ञो भवति । चेद् गौणो न । अप्रधानं न । अभिधा वा न । चेत् संज्ञारूपो न भवतीति । एतच्च सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञाविज्ञानाल्लभ्यते । गौणत्वे संज्ञायां वा सर्ववाचकत्वं सर्वादीनां नास्तीति कृत्वा । **पूर्वादिश्च व्यवस्थायामिति** । न चेद् गौणोथवाभिधेत्येतदुत्तरत्र सर्वत्रानुवर्तते । एतच्चान्ते समुच्चयार्थादपिशब्दात् ज्ञायते । **स्वोर्थज्ञात्यन्यवाच्यपीति** । पूर्वादिगणः सप्तसंख्यो व्यवस्थायां गम्यमानायां सर्वनामसंज्ञो भवति । एतत्तु 'पूर्वपर–' इत्यादेर्गणसूत्राल्लभ्यते । **समोतुल्येति** । समशब्दो सदृशवाची सर्वनामसंज्ञः । एतदन्वर्थसंज्ञाविज्ञानाल्लभ्यते । **अन्तरोपुरि परिधाने बहिर्योगे** इति । अन्तरशब्दः सर्वनामसंज्ञो भवति यदि नगर्यां न वर्तते परिधाने बहिर्योगे च वर्तते । एतदपि 'अन्तरम्–' इत्यादेर्गणसूत्रादन्वर्थसंज्ञायाश्च लभ्यते । **स्वोर्थज्ञात्यन्यवाच्यपीति** । स्वशब्दः सर्वनामसंज्ञः स्याद्यदि धनज्ञातिवाची न भवति । एतेषामुदाहरणान्युक्तानि । **प्रत्युदाहरणं त्विति** । प्रत्युदाहरणमिति जात्यभिप्रायेणैकवचनम् । न चेद् गौण इत्यस्य प्रत्युदाहरणं वक्तुं सर्वशब्दस्य गौणतां दर्शयति । **अतिक्रान्तः सर्वमतिसर्व** इति । 'न बहुव्रीहौ' इत्यादेर्निषेधात् सर्वनामविधौ तदन्तविधेरभ्युपगमात् । **अतिसर्वाय देहीति** । एतत् प्रत्युदाहरणम् ।

---

१. तुल्येन्तरापुरि P, B1. २. Dropped P, D1. ३. इति dropped Dc3.

देहि । सर्वो नाम कश्चित् तस्मै सर्वाय । पूर्वाय । समाय सदृशायेत्यर्थः । अन्तरायां पुरि । ग्रामयोरन्तरे तापसः । मध्य इत्यर्थः । स्वाय धनाय ज्ञातये वा ।

**न बहुव्रीहौ ॥१।१।२९॥**

बहुव्रीहौ सर्वादेः सर्वनामता न स्यात् । प्रियसर्वाय ।

---

सर्वनामत्वाभावात् स्वभावो न । अथत्राभिधेत्यस्य प्रत्युदाहरणमाह । **सर्वो नामे**त्यादि । पूर्वादिश्चेत्यस्य प्रत्युदाहरणं **पूर्वाये**ति । अत्र व्यवस्था न गम्यते । समोतुल्येत्यस्य प्रत्युदाहरणं **समाये**ति । सदृशायेत्यनेन समशब्दस्य तुल्यवाचितां दर्शयति । अपुरीत्यस्य प्रत्युदाहरणम् **अन्तरायां पुरी**ति । प्राकाराद्बहिर्वर्तिन्यामित्यर्थः । परिधाने बहिर्योगे इत्यस्य प्रत्युदाहरणं **ग्रामयोरन्तरे तापस** इति । **स्वाये**ति । स्वोर्थज्ञात्यन्यवाच्यपीत्यस्य प्रत्युदाहरणम् ॥

**न बहु** । अत्र वृत्तौ द्विधा सूत्रार्थो लभ्यते । बहुव्रीहाविति निषेधाधिकरणम् । बहुव्रीहौ संज्ञा न । बहुव्रीहेः संज्ञा नेति यावद् । बहुव्रीहाविति सत्राधिकरणं वा । बहुव्रीहौ यानि सर्वादीनि वर्तन्ते तानि सर्वनामसंज्ञानि नेति । 'विभाषा दिक्समासे बहुव्रीहौ' इत्यतो 'बहुव्रीहौ' इत्यनुवर्तमानेपि भूतपूर्वेपि बहुव्रीहौ प्रतिषेधो यथा स्यात् । वस्यतेनेनेति वस्त्रम् । वस्त्रमन्तरं येषां ते वस्त्रान्तराः । वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः । अन्यथा 'विभाषा जसि' इति विभाषा स्यात् । प्रथमसूत्रस्योदाहरणमाह । **प्रियसर्वाय** इति । प्रियः सर्वो यस्य प्रियसर्वस्तस्मै प्रियसर्वाय । 'वा प्रियस्य पूर्वत्वम्' इति प्रियशब्दस्य पूर्वनिपातः । एतदुपन्यासस्तदन्तविधिज्ञापनाय । ननु चान्वर्थसंज्ञाविज्ञानादेवात्र सर्वनामसंज्ञा न स्यात् तत्

---

१. After it—आद्यायेत्यर्थः । P, $B_1$, $B_2$; $D_5$ has पराय after it. २. तापसाः $D_3$, $D_5$. ३. After it—चिकीर्षिते $B_1$. ४. अन्तरापुरीत्यस्य $Dc_1$. ५. अत्रावृत्तौ $Dc_1$. ६. Before it—बहुव्रीहिग्रहणं $Bc_1$, $Dc_3$, $Dc_4$. ७. अपि dropped $Nc_2$. ८. अयमुप° $Nc_1$; एतदुपन्यस्तं $Dc_2$. ९. °ज्ञापनार्थम् $Dc_2$.

सूत्रकारमते बहुव्रीहौ न सर्वनामता। भाष्यकारमते तु[1] गौणत्वमात्रे। त्वत्कपितृको मत्कपितृक इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्गकार्यत्वेनाकच् स्यात्। स मा भूत् किं तु कप्रत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मतम्॥

---

किमेतत्सूत्रारम्भेणेत्याशङ्क्याह। सूत्रकारमत इति। 'न बहुव्रीहौ' इति सूत्रश्रवणात् सूत्रकारमतमेवं प्रतिभाति। बहुव्रीहौ सर्वनामसंज्ञानिषेधो नोपसर्जनमात्रे[3] इति भावः। भाष्यकारमत इति। भाष्यकारमतेऽन्वर्थसंज्ञाविज्ञानाद् गौणत्वमात्रे सर्वनामसंज्ञानिषेधात् 'न बहुव्रीहौ' इति सूत्रं व्यर्थमिति शेषः। तथा च महाभाष्यम्[4]। "[5]गोनर्दीय आह।

'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ'।

त्वकत्पितृकः मकत्पितृक[6] इत्येव[7] भवितव्यमिति[8]'। एतस्य तात्पर्यमुक्तं कैयटेन। 'गोनर्दीय आहेति। सूत्रप्रत्याख्यानमेतत्। यथोत्तरं हि मुनित्रयस्य प्रामाण्यमिति'[9]। त्वत्कपितृक इति। त्वं पिता यस्य अहं पिता यस्येति विगृह्य बहुव्रीहिसमासे कृते समासावयवयोः समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेन सर्वनामसंज्ञकत्वात्। अज्ञाताद्यर्थविवक्षायाम् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् प्रसज्येत[10]। तस्य हि समैप्रभृतीनामिवाङ्गाधिकारविहितत्वाभावात् स्वाद्युत्पत्त्यनपेक्षत्वात्। ततश्च त्वकत्पितृको मकत्पितृक इत्यनिष्टं रूपं स्यात्। तस्मात् सोऽकच् मा भूत्। 'प्रागिवात् कः' इति कप्रत्यय एव स्यादित्येतदर्थं 'न बहुव्रीहौ' इति सूत्रमिति न्यासकृतः काशिकाविवरणपञ्जिकाकारस्य जिनेन्द्रबुद्धेर्मतमित्यर्थः। तथा च काशिकाविवरणपञ्जिकायामुक्तम्। 'त्वं पिता अस्य[11] अहं पिता अस्येति[12]

---

१. Dropped $D_1$, $D_2$, $B_2$. २. सर्वाविरत्वा° C. ३. नोपसर्जनत्वमात्रे $Bc_1$, $Nc_2$. ४. महाभाष्ये $Bc_1$, $Dc_2$. ५. Before it—इत्येतस्य तात्पर्यार्थं $Dc_4$. ६. मकत्पितृकः त्वकत्पितृकः $Dc_2$, $Dc_4$, $Nc_1$, $Nc_2$, $Bc_1$. ७. इत्येवं $Dc_1$, $Dc_2$, $Dc_3$. ८. भवितव्य इत्येकमिति $Bc_1$. ९. After it—शेषः $Dc_3$. १०. प्रतिप्रसज्येत $Dc_3$. ११, १२. यस्य Nc.

## तृतीयासमासे ॥१।१।३०॥

तृतीयासमासे[1] सर्वनामता[2] न । मासपूर्वाय । तृतीया-समासार्थवाक्येऽपि न । मासेन पूर्वाय ॥

---

विगृह्य बहुव्रीहौ कृते अज्ञाताद्यर्थविवक्षायामसति प्रतिषेधे 'अव्यय-सर्वनाम्नामकच् प्राक् टेः' इत्यकच् प्रसज्येत । ततश्च त्वकल्पितृको मकल्पितृक इत्यनिष्टं स्यात्[4] । तस्मादकच् मा भूदिति प्रतिषेध आरभ्यते । तेन 'प्रागिवात् कः' इति क एव भवति । तत्र परतः प्रत्ययोत्तरपदयोश्चेति मपर्यन्तयोर्युष्मदस्मदोस्त्वमादेशयोः 'नद्यृतश्च' इति समासान्ते कपि च त्वत्कपितृको मत्कपितृक इति सिध्यति । ननु चान्वर्थसंज्ञाकरणादेवात्र संज्ञानिरासे कृते अकच्[5] न भविष्यति[6][7] । न ह्यत्र सर्वार्थता संभवति । विशेषविषयत्वात् । नैतदस्ति । स समुदायो हि[9] विशेषे वर्तते[8] । पूर्वपदं तु सर्वार्थताया अनपेतमेव' । इति ॥

तृतीया । तृतीयासमासार्थवाक्येऽपि नेति । अयमाशयः । 'विभाषा दिक्समासे बहुव्रीहौ' इत्यतः समासग्रहणेनुवर्तमानेऽपि पुनः समासग्रहणं गौणेऽपि तृतीयासमासे संज्ञानिषेधार्थं तृतीयासमासार्थे च वाक्यं तादर्थ्येन गौणस्तृतीयासमास इति कृत्वा तत्रापि निषेध इति । अत्र[10] च लक्षणप्रतिपदोक्तपरिभाषया 'पूर्वसदृश—' इत्यादिनायं तृतीया-समासं वक्ष्यति । तस्येदं ग्रहणं न 'कर्तृकरण—' इत्यादेः । तेन त्वयका कृतं मयका कृतमिति सिद्धम् ॥

---

१. न तृती° B₂. २. तृतीयासमासे dropped D1, D2, D3. ३. सर्वादेः सर्व° B2. ४. रूपं स्यात् Dc3. ५. For अकच् न भविष्यति Dc1, Bc1, No1 have अकच्निरासो भविष्यति. ६. भवति Dc4. ७. After it—इति Dc3. ८. प्रवर्तते Dc4. ९. Dropped Dc2. १०. अत्रापि Dc1.

**द्वन्द्वे च ॥१।१।३१॥**

[1]उक्ता संज्ञा न । पूर्वपरावराणाम्[2] ॥

**विभाषा जसि ॥१।१।३२॥**

द्वन्द्वे जसि वा सर्वनामता । वर्णाश्रमेतरे । वर्णाश्रमेतराः ॥

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥१।१।३३॥**

एते जसि वा सर्वनामसंज्ञाः[3][4] । तयः प्रत्ययः । प्रथमे । प्रथमाः । द्वितये । द्वितयाः । इत्यादि[5] । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् । सर्वादिमध्ये[6] पाठात् ॥

---

द्वन्द्वे च । उक्तेत्यादि । द्वन्द्वे समासे सर्वादीनां सर्वनामसंज्ञा नेत्यर्थः ॥

**विभाषा** । पूर्वेण नित्ये निषेधे प्राप्ते विभाषारभ्यते । व्यवस्थितविभाषाविज्ञानाज्जसः कार्यं प्रति विभाषा । तेनाकच् न भवति । क एव भवति । वर्णाश्रमेतरकाः । अकचि हि[7] सति तस्य सर्वनामान्तःपातित्वात् पाक्षिकः शीभावः स्यात् । कप्रत्यये तु सति तेन व्यवधानादेष प्रसङ्गो न ॥

**प्रथम** । **द्वितय** इति । 'संख्याया अवयवे तयप्' । आदिना । चरमे । चरमाः । अल्पे । अल्पाः । अर्धे । अर्धाः । **शेषं रामवदिति** । एतेषां सर्वादिमध्ये पाठाभावादिहापि जसः कार्यं प्रति विभाषा । तेन एतेभ्यः क एव स्यान्नाकच् । नेमशब्दात्त्वकच् । सर्वादिमध्ये पाठात् । उभयशब्दस्य तयप्रत्ययान्तस्यापि[8] जस्यन्तरङ्गत्वाद्गणपाठान्नित्या सर्वनामसंज्ञा उभये इति ॥

---

१. Before it—द्वन्द्वसमासे $B_1$; द्वन्द्वे चोक्ता $D_4$. २. पूर्वापराणाम् $D_3$; पूर्वापराधराणाम् $D_5$; पर्वापरावराधराणाम् P, $D_1$, $D_2$. ३. सर्वनामसंज्ञकाः C. ४. After it—स्युः $D_2$, P, C. ५. Dropped $B_2$, $D_2$. ६. अस्य सर्वादि° C. ७. विहिते $Nc_1$. ८. तयप्प्रत्यया° $Dc_1$.

तीयस्य ङित्सु[1] वा सर्वनामता वाच्या* । द्वितीयस्मै । द्वितीयाय । द्वितीयस्मात् । द्वितीयात् । द्वितीयस्मिन् । द्वितीये[2] । शेषं रामवत् । एवं तृतीयः । निर्जरः[3] ।

**जराया जरसन्यतरस्याम् ॥७।२।१०१॥**

जराशब्दस्य जरस् वा स्यादचि[4] । तदन्तविधिरत्रेष्यते । निर्जरसौ । निर्जरसः । निर्जरसम् । निर्जरसौ । निर्जरसः । निर्जरसा । केचिदादौ इनातौ आदेशाविच्छन्ति पूर्वविप्रतिषेधेन[5] । [6]निर्जरसिन । निर्जरेण । निर्जरसे । निर्जराय । निर्जरसैः ।

---

**तीयस्येति** । अत्र सजातीयशब्दस्य सर्वनामसंज्ञा न भवति । 'अर्थवद्ग्रहणे नानर्थकस्य' इति ॥

**जराया** । अष्टन आ 'विभक्तौ' इत्यतो 'विभक्तौ' इत्यनुवर्तते । तेन जरान्तिकमित्यादौ जरसभावो न । **निर्जरसाविति** । निर्गतो जरायाः । प्रादिसमासे ह्रस्वे च कृते 'एकदेशविकृतमनन्यवद्भवति' इति जराशब्दस्य जरसादेशः । **निर्जरसेति** । परत्वाज्जरसादेशः । पश्चाददन्तत्वाभावादिनादेशो न । एतत्तु **भाष्यकारमतम्** । **केचिदादावित्यादि** । केचिदिति भाष्यकारादन्ये[7] । निर्जर टा इत्यादौ स्थिते 'टाङसिङसामिनात्स्याः' इतीनादौ प्राप्ते जरसादेशे च 'विप्रतिषेधे परं कार्यम्' इत्यत्र परशब्दस्येष्टवाचित्वात् पूर्वविप्रतिषेधेन पूर्वबलीयस्त्वेन प्रथममिनातावादेशौ भवतः पश्चाज्जरसादेश इतीच्छन्तीत्यर्थः । **निर्जरसैरिति** ।

---

१. वा ङित्सु $D_1$, $D_5$. २. After it—इत्यादि $D_1$. ३. After it—'एकदेशविकृतमनन्यवद्भवति' ।. $D_5$ ४. After it—विभक्तौ परतः $B_1$; विभक्तौ $B_2$, $D_3$. ५. After it—भिस ऐस् इच्छन्ति P. ६. After it—निर्जरसैः । निर्जरसे । निर्जरसात् । निर्जरसाम् । पक्षे हलादौ च रामवत् for निर्जरेण...रामवत् $D_1$, $D_5$: ऐस्करणात् पूर्वविप्रतिषेधाद्वा । निर्जरसैः । निर्जरसे । निर्जरसः । निर्जरसात् । इत्यादि । पक्ष हलादौ च रामवत् । $B_2$; ऐसि कृते पश्चाज्जरसादेशः पूर्वविप्रतिषे° then follows $B_2$—$D_4$. ७. महाभाष्यकारा° $Dc_3$, $Dc_4$.

ऐस्करणात् पूर्वविप्रतिषेधेन निर्जरैः । निर्जरसः । निर्जरसात् । इत्यादि । पक्षे हलादौ रामवत् ॥

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥६।१।६३॥**

**पाददन्तनासिका मास हृदय निशा असृज् यूष दोष यकृत् शकृत् उदक आसन इत्येतेषां पदादय आदेशाः क्रमात् स्युः**

---

'अतो भिस ऐस्' इत्यैस्भावे कृतेजादित्वाज्जरसादेशः । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्यस्याः परिभाषाया अनित्यत्वात् निर्जरसे इति चतुर्थ्येकवचनं निर्जरसः निर्जरसात् इति पञ्चम्येकवचने क्रमेण **भाष्यकारतदन्येषां** मतेन रूपे । आदिना । निर्जरसः । निर्जरसोः । निर्जरसाम् । निर्जरसि । निर्जरसोः । **पक्षे** इति । जरसभावपक्षे हलादौ विभक्तौ च रामशब्दवद्रूपाणि निर्जरशब्दस्य ज्ञेयानीत्यर्थः ॥

**पद्दन्नः** । इह शस्प्रभृतयो निमित्तत्वेनोपात्तास्ते च विना प्रकृत्या न घटन्त इति तेषु प्रकृत्यन्तराद्विहितेषु विधीयमानाः पदादय आदेशा विज्ञायन्ते तेष्वादिश्यमानेषु शस्प्रभृतयोनुरूपामेव पादादिकां प्रकृतिमाक्षिपन्तीत्याह । **पाददन्ते**त्यादि । केचिदत्र 'छन्दसि' इत्यनुवर्तयन्त्यपरे पुनरविशेषेणेच्छन्ति । तथा हि भाषायामपि पदादयः प्रयुज्यन्ते ।

'व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥' इत्येवमादयः ।

---

१. P, $D_2$ drop ऐस्करणात्......षधेन. २. हलादौ च P, $D_2$. ३. भाष्यकारतदन्येषां मतेन dropped $Dc_1$; भाष्यकारमतादन्येषां मतेन $Dc_4$. ४. च विभक्तौ $Nc_2$, $Bc_1$, $Dc_3$.

शसादौ वा । प्रभृतिग्रहणात् क्वचित् तद्धितेपि । पदः । पदा । पद्भ्याम् । इत्यादि । दतः । दता । दद्भ्याम् । इत्यादि । मासः । मासा । माभ्याम् । इत्यादि ॥

**सुडनपुंसकस्य** ॥१।१।४३॥

---

**प्रभृतिग्रहणादिति** । प्रकारार्थोयं प्रभृतिशब्द इत्यभिप्रायः । तद्धितग्रहण-मुपलक्षणार्थं तेन दोषणीत्यादौ औङः श्यामपि दोषन् । नासिकाया यत् तस् क्षुद्रेषु नसादेशः* । नस्यः । नस्तः । नः क्षुद्रः । नासिक्यो वर्णः । नासिक्यं नगरम् । अत्र न । पदः । पदे[1]त्यादि । पादशब्दस्य दन्त-शब्दस्य मासशब्दस्य च क्रमेण शसादौ पदादेशे ददादेशे मासादेशे च कृते रूपाणि । पक्षे स्वादिषु पञ्चसु रामवत् । **माभ्यामिति** । मास्-भ्यामिति स्थिते 'ससजुषो रुः' इति रुत्वम् । 'भोभगोअघोअपूर्वस्य' इति यत्वम् । 'हलि सर्वेषाम्' इति यलोपः ॥

**सुडनपुं°** । सुडिति प्रत्याहारग्रहणम् । आ औटष्टकारात् । तत्र पञ्चैव वचनान्यन्तर्भवन्तीत्याह । **स्वादिपञ्चवचनानीति** ।

'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्र[2]सज्यप्रतिषेधोयं क्रियया सह यत्र नञ् ॥
प्राधान्यं तु विधेर्यत्र प्र[3]तिषेधेप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

इति प्र[4]सज्यप्रतिषेधपर्युदासयोर्लक्षणे । तत्र यद्यनपुंसकस्येति प्र[5]सज्यप्रतिषेधः स्यात् तदायमर्थः स्यान्नपुंसके न भवतीति । ततश्च जसः शेः[6] सर्वनामसंज्ञा न स्यात् । पर्युदासपक्षे अनपुंसकस्य नपुंसकव्यतिरिक्तस्येत्यर्थः[7] स्यात् । तेन न विधिर्न प्रतिषेधः ।

---

१. पञ्चसु च Dc4. २. प्रसह्य° Dc3. ३. प्रतिषेधोप्रधानता Dc3. ४. प्रसह्य° Dc3. ५. प्रसह्य° Dc3. ६. शिः Dc4. ७. °त्ययमर्थः Dc3.

सुट्[1] प्रत्याहारः । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥

**स्वादिष्वसर्वनामस्थाने** ॥१।४।१७॥

कप्[2]प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः[3] पूर्वं पदसंज्ञं स्यात् ॥

**यचि भम्** ॥१।४।१८॥

य[4]कारादिष्वजादिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं[5] भसंज्ञं स्यात् न पदसंज्ञम् ॥

---

तेन जसः[6] शेः 'शि सर्वनामस्थानम्' इत्यनेन संज्ञा सिद्धा भवतीति चेतसि कृत्वा पर्युदासपक्षमाश्रित्याह । **अक्लीबस्येति** ॥

**स्वादिषु** । अत्र यदि सप्तमीबहुवचनादारभ्य आ कपः प्रत्यया गृह्येरन् असर्वनामस्थान इति प्रतिषेधं न कुर्यात् । कृतश्चासौ । ततो ज्ञायते प्रथमैकवचनादारभ्येति । ननु च राजेत्यत्र पदसंज्ञा न स्यात् प्रत्ययलक्षणेनासर्वनामस्थान इति निषेधात् । ततश्च नलोपो न स्यात् । नैष दोषः । यतो यदयं 'न ङिसंबुद्ध्योः' इति निषेधं शास्ति तज् ज्ञापयति सौ पदत्वं स्यादिति । अन्यथा संबुद्धिग्रहो व्यर्थः स्यात् ॥

**यचि भम्** । यचीति वर्णग्रहणं सप्तमीनिर्दिष्टम् । अतो 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिनात्र भाव्यमित्यभिप्रेत्याह । **यकाराजादिष्विति** । नभोङ्गिरोमनुषां वति भत्वं वाच्यम् * । नभसा तुल्यं नभस्वत् । अङ्गिरस्वत् । मनुष्वत् । वृषणो वस्वश्वयोर्भत्वम् * । वृषण्वसुः । वृषण[7]श्वः ॥

---

१. सूडिति C. २. कप्रत्यया° $D_3$, $D_4$, $D_5$. ३. Dropped $D_1$. ४. यकाराज्जादिषु $D_1$, Com. ५. Before it—परतः C, $B_2$, $D_2$. ६. जसः शसः शिः $Dc_3$. ७. वृषण्वश्वः $Dc_3$.

**अल्लोपो नः ॥६।४।१३४॥**

अन्नन्तस्य भस्याङ्गस्याकारस्य[1] लोपः स्यात् ॥

**रषाभ्यां नो णः समानपदे ॥८।४।१॥**

एकपदस्थाभ्यां[2] रेफषकाराभ्यां परस्य नस्य णः स्यात् । यूष्णः । यूष्णा ॥

**नलोपः प्रातिपदिकान्तस्य ॥८।२।७॥**

प्रातिपदिकान्तस्य[4] पदान्तस्य नस्य लोपः स्यात् । नलोपस्यासिद्धत्वान्न दीर्घत्वम् । यूषभ्याम् । इत्यादि[6] ॥

---

अल्लोपः । तपरकरणं नञ्समासोयमिति शङ्कानिरासार्थम् ।

रषाभ्याम् । यूष्ण इत्यादि । यूषशब्दस्य शसि वा यूषन्नादेशः । भसंज्ञा । अल्लोपः । णत्वम् ।

नलोपः । अत्र च[5] 'पदस्य' इत्यनुवर्तते । सूत्रस्थं च प्रातिपदिकग्रहणम् । असमस्तमेव 'सुपां सुलुक्' इति षष्ठ्या लुकं कृत्वा निर्दिष्टम् । ततश्च 'अन्तस्य' इत्युभाभ्यां संबध्यते प्रातिपदिकान्तस्य पदान्तस्येति चेतसि कृत्वाह । **प्रातिपदिकान्तस्य पदान्तस्य नस्य लोपः स्यादिति । नलोपस्येति** । यूषन् भ्यामिति स्थिते । नलोपे कृते 'सुपि च' इत्यदन्तत्वाद् दीर्घत्वं प्राप्नोति तन्न भवति । 'नलोपः सुप्स्वर—' इति सुब्विधिं प्रति नलोपस्यासिद्धत्वात् ॥

---

१. °स्याकारलोपः C, $D_1$, $D_4$. २. रषाभ्यामिति णत्वम् । यूष्णः $D_3$. ३. $D_1$ drops the Vṛitti. ४. पदान्तस्य प्रातिपदिकान्तस्य $D_5$. ५. Dropped $D_2$. ६. Dropped $Dc_3$.

**विभाषा ङिश्योः** ॥६।४।१३६॥

अन्नन्तस्य भस्याङ्गस्याकारलोपो[1] वा स्यात् ङिश्योः परतः। यूष्णि। यूषणि। पक्षे सर्वनामस्थाने च रामवत्॥

पदादयः पृथक्शब्दा इत्येके[2]। द्वयोरह्नोर्भवो[3] द्व्यह्नः।

**संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ** ॥६।३।११०॥

संख्याविसायएतत्[4]पूर्वस्याह्नस्याहन्नादेशो वा[5] स्यात् ङौ[6]। द्व्यह्नि। द्व्यहनि। द्व्यह्ने। त्र्यह्नि। त्र्यहनि। त्र्यह्ने। सायाह्नि। सायाहनि। सायाह्ने।

---

**विभाषा ङिश्योरिति**। ङिरिति सप्तम्येकवचनम्। शीति 'नपुंसकाच्च' इति यः शी विहितस्तस्येदं ग्रहणम्। न 'जस्शसोः शिः' इति। तस्मिन् भसंज्ञाया अभावात्॥

**द्वयोरह्नोर्भवः द्व्यह्न इति**। तद्धितार्थविवक्षायां 'तद्धितार्थ–' इति समासः। 'कालाट्ठञ्' इति ठञ्। तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। 'राजाहः सखिभ्यष्टच्' इति टच् समासान्तः। 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः॥

**संख्या**। 'संख्याविसायेभ्यः' इत्येवं वाच्ये पूर्वशब्दस्याधिकस्य ग्रहणमधिककार्यसूचनार्थम्। तेन सायाह्न इत्यत्र मलोपः सिद्धः स्यात्। **द्व्यहनि**। **द्व्यह्नि**। इति। 'विभाषा ङिश्योः' इति वाल्लोपः। **द्व्यह्ने** इति। आदेशाभावपक्षे त्र्यहनीत्यादि। त्र्यह्न इति प्रादिसमासः। शेषं द्व्यह्नशब्दवत्। सायमह्नः सायाह्नः। सायंशब्दोऽह्नरेकदेशवाची। 'संख्याविसाय–' इति ज्ञापकादेकदेशिसमासः। शेषाण्येतेषां रूपाणि रामशब्दवत्॥

इत्यदन्ताः[7]॥

---

१. भस्याकार° P, C, D4. २. Dropped B1. ३. इति केचित् D6. ४. एतत् dropped C. ५. Dropped B1. ६. ङौ परे B1. ७. इत्यदन्ताः dropped No2.

विश्वपाः । विश्वपौ ।

**[1]दीर्घाज्जसि च ॥६।१।१०५॥**

दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । [2]सवर्णदीर्घः । विश्वपाः । विश्वपाम् । विश्वपौ ।

**आतो धातोः ॥६।४।१४०॥**

आकारान्तस्य [3]भस्य धातोरालोपः [4]स्यात् । विश्वपः । विश्वपा । [5]विश्वपाभ्याम् । इत्यादि । एवं [6]शङ्खध्मादयः । धातोः किम् । [7]हाहान् । आदन्तत्वाच्छसो नत्वाभाव इत्येके । हाहाः । [8]हाहा । हाहाभ्याम् । इत्यादि । हलि विश्वपावत् । आत इति योगविभागादधातोरप्यालोपः क्वचित् । क्त्वः । श्नः ।

---

**विश्वपाः** । विश्वं पातीति विश्वपाः । 'विजुपे छन्दसि' इत्यनुवर्तमाने 'आतो मनिन्क्वनिब्वनिपश्च' इति विच् । पा रक्षणे अस्माद्धातोः 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वात् स्वादयः ॥

**दीर्घात्** । ननु च विश्वपा इत्यत्र पूर्वसवर्णदीर्घे सवर्णदीर्घे वा विशेषो नास्ति तत् [9]किमर्थं निषेधः क्रियते । उच्यते । वातप्रम्य इत्यादौ पूर्वसवर्णदीर्घो मा भूदित्येतदर्थमवश्यमेतत् सूत्रं कार्यम् । तदन्यार्थं [10]कृतमिहार्थमपि स्यात् । हाहा । अस्य ङे वृद्धिरेचि ङसिङसोः सवर्णदीर्घः । ओसि वृद्धिः । ङौ गुणः ॥

इत्यादन्ताः ॥

---

१. Dropped $B_1$. २. सवर्णे दीर्घः $B_2$. ३. भस्य dropped P. ४. Dropped $B_1$. ५. Dropped $D_2$. ६. कलालपाशङ्खध्मादयः P. ७. C has हाहाः। हाहौ । हाहाः । हाहाम् । हाहौ । हाहान् । ८. After it—हाहा । हाहाभ्याम् । dropped P, $B_1$, C. ९. किम् $Dc_1$. १०. °मिहापि $Dc_3$.

हरिः । 'प्रथमयोः पूर्वसवर्णः' । हरी ।

**जसि च** ॥७।३।१०९॥

जसि च[1] परे[2] ह्रस्वाङ्गस्य गुणः स्यात् । हरयः ।

**ह्रस्वस्य गुणः** ॥७।३।१०८॥

ह्रस्वस्य गुणः स्यात् संबुद्धौ । 'एङ् ह्रस्वात्–' इति संबुद्धिलोपः[3] । हे हरे[4] । हरिम् । हरी । हरीन् ।

**शेषोध्यसखि** ॥१।४।७॥

अनदीसंज्ञं ह्रस्वमिउवर्णान्तं सखिवर्जं घिसंज्ञं स्यात् ॥

**आङो नास्त्रियाम्** ॥७।३।१२०॥

आङिति[5] टासंज्ञा । घेः परस्याङो ना स्यादस्त्रियाम् । हरिणा । हरिभ्याम् । हरिभिः ।

---

**प्रथमयोरिति** । हरि औ इति स्थिते 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घ ईकार इत्यभिप्रायः ।

**जसि च** । ह्रस्वग्रहणमङ्गविशेषणं विशेषणेन च तदन्तविधिर्भवति ततश्च ह्रस्वान्ताङ्गस्येत्यर्थः ।

**हरिमिति** । 'अमि पूर्वः' । **हरी** इति । 'प्रथमयोः–' इति पूर्वसवर्णदीर्घः **हरीनिति** । शसि पूर्वसवर्णदीर्घे 'तस्माच्छसो नः–' इति नत्वम् ॥

**शेषः** । शेषशब्दार्थमाह । **अनदीसंज्ञमिति** ।

**आङः** । आङिति तृतीयैकवचनस्य पूर्वाचार्याणां संज्ञेत्याह । **आङितीति** । आङिति स्थान्यन्तरस्य निर्देशादिहार्थाद्विभक्तिविपरिणामो भवतीति घेरिति षष्ठ्यन्तं प्रकृतं पञ्चम्यन्तं भवतीत्याह । **घेः परस्येति** ।

---

१. Dropped $D_2$, $D_4$. २. परतः P. ३. संबुद्धेर्लोपः $D_3$. ४. After it—हे हरी । हे हरयः $D_1$, $B_2$. ५. आङिति टासंज्ञा given at the end of the Vritti $B_2$.

**घेर्ङिति ॥७।३।१११॥**

घिसंज्ञस्य ङिति सुपि परे[2] गुणः स्यात्[3] । हरये । हरिभ्याम् । हरिभ्यः । गुणे कृते

**ङसिङसोश्च ॥६।१।११०॥**

एङो ङसिङसोरति परे[4] पूर्वरूप एकादेशः स्यात्[5] ॥ हरेः । हरिभ्याम् । हरिभ्यः । हरेः । हर्योः । हरिणाम् ॥

**अच्च घेः ॥७।३।११९॥**

घेरुत्तरस्य ङेरौत् स्यात् घेरन्तादेशश्चाकारः ॥ वृद्धिः[6] । हरौ । हर्योः । हरिषु । एवं श्रीपत्यग्निरव्यादयः[7] ॥

---

पुंसीति वाच्ये अस्त्रियामित्युक्तममुना ब्राह्मणकुलेनेत्यत्रोत्वमत्वयोरसिद्धत्वात् 'इकोचि विभक्तौ' इति नुम् न प्राप्नोति ततश्च अमुनेति सिद्ध्यर्थम् । अस्त्रियां किम् । धेन्वा । कृत्या । घेः किम् । सख्या ॥

घेः । घेः किम् । सख्ये । ङितीति किम् । हरिभ्याम् । सुपीति किम् । पट्वी । कुरुतः ।

**ङसि** । अथ कस्मादत्र यथासंख्यं न द्वौ एङौ द्वौ च ङसिङसौ इति । उच्यते । अल्पाच्तरस्य ङसः परनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावोवसीयते ॥

**अच्च** । अदिति तपरकरणं स्त्रियां बुद्धावित्यादौ कृते अत्वे टापो निवृत्त्यर्थम् । वृद्धिरिति । 'वृद्धिरेचि' इति ॥

---

१. Dropped $D_1$, $D_2$, $D_4$; C has च in its place. २. Dropped $B_1$. ३. Dropped $B_1$. ४. पूर्वरूपमेकादेशः । $B_2$, $D_2$. ५. Dropped $B_1$. ६. स्याद्वृद्धिरेचीति वृद्धिः $D_2$; वृद्धिः dropped $D_3$, $B_1$, C, P. ७. अग्न्यादयः $D_2$.

**अनङ् सौ** ॥७।१।९३॥

सख्युरसंबुद्धौ सौ परे अनङादेशः स्यात् ॥

**अलोन्त्यात् पूर्व उपधा** ॥१।१।६५॥

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥

**सर्वनामस्थाने चासंबुद्धौ** ॥६।४।८॥

नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे ॥

**अपृक्त एकाल् प्रत्ययः** ॥१।२।४१॥

एकाल् प्रत्ययो यः सोपृक्तसंज्ञः स्यात् ॥

---

**अनङ्** । ङकारोन्त्यादेशः । अकार उच्चारणार्थः । आकारे विधेये अनङ्विधानं सोर्लोपार्थम् । ङादेशस्तर्हि सोर्विधेयः । एवं सिद्धे यदनङ्विधानं तदनङ एव क्वचिच्छ्रुत्यर्थम् । तेन यद्वक्ष्यति उशनसः संबुद्धौ वानङ्वाच्यः इत्यारभ्य हे उशनन् इत्येतदुपपन्नम् ॥

**अलोन्त्यात्** । समुदायादपि पूर्वस्य संज्ञा स्यात् तन्निवृत्त्यर्थमलः इति विशेषणम् । अन्त्यादित्यस्य पूर्व इत्यस्याप्यविशेषितत्वे समुदायस्य संज्ञा स्यात् तन्निवृत्त्यर्थं विशेषणं वर्ण इति भाव्यम् । तच्च लोकतः सिद्धम् । लोके ह्यमीषां ब्राह्मणानामन्त्यात् पूर्व आनीयतामित्युक्ते एक एवान्त्यात् पूर्व आनीयत इत्येतत् सर्वं चेतसि कृत्वाह । अन्त्यादलः पूर्वो वर्ण इति ।

**सर्वनाम** । सर्वनामस्थाने किम् । राजनि । असंबुद्धाविति किम् । हे राजन् ।

**अपृक्त** । असहायवचन एकशब्दः । एकाल् किम् । जागृविः । 'वेरपृक्तस्य' इति न भवति । प्रत्यय इति किम् । सुरां सुनोतीति सुरासुत् । तमाचष्टे । सुरासयतीति सुराः । सकारस्य लोपो न ॥

---

१. B₁ has सख्युः after परे. २. परतः $D_2$. ३. Dropped $B_2$. ४. तन्निवृत्त्यर्थमल इति $D_{04}$.

**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ॥६।१।६८॥**

हलन्तात् ङ्यन्तादाबन्ताद्दीर्घात्[1][2] परं सुतिसि इत्येतदपृक्तं हल् लुप्यते । इति सुलोपः । ततो नलोपः । सखा । हे सखे ॥

**सख्युरसंबुद्धौ ॥७।१।९२॥**

सख्युः परं सम्बुद्धिवर्जं[4] सर्वनामस्थानं णित्[5] स्यात् ॥

---

हल् । लोप इति वर्तते । तदिह लौकिकेनार्थेनार्थवत् कर्मसाधनं लुप्यत इति लोप इति । ततश्चापृक्तं हलिति प्रथमान्तेन संबध्यते इति चेतसि कृत्वाह । हल् लुप्यत इति । हलन्तादेव तिस्योर्लोपः । तिपा सहचरितस्य ग्रहणात् सीति सिच् न गृह्यते । अभैत्सीत् । ननु हलन्तात् 'संयोगान्तस्य लोपः' इत्यनेनैव सिद्धत्वाल्लोपविधानं व्यर्थम् । मैवम् । सखेत्यत्र संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न स्यात् । अभिनोत्रेत्यत्र 'अतो रोरप्लुतादप्लुते' इत्युत्वं न स्यात् । अजागर्भवानित्यत्र 'रात्सस्य' इति नियमाल्लोप एव न स्यात् । तथा चोक्तम् ।

'संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु तेनैव लोपः स्यात् हलस्तस्माद्विधीयते' ॥ इति ।

हल्ङ्याब्भ्य इति किम् । ग्रामणीः । सुतिसीति किम् । अभैत्सीत् । अपृक्तस्येति किम् । बिभर्ति । हलिति[6] किम् । बिभेद । **ततो नलोप** इति । 'नलोपः प्रातिपदिकान्त—' इति । हे **सखे** इति । ह्रस्वस्य गुणः ॥

**सख्युः** । संबुद्धेरन्या असंबुद्धिरिति पर्युदासोयम् । तत्र 'णित्' इत्यनेन सामानाधिकरण्यात् सर्वनामस्थानं प्रथमान्तं तत्रोत्तरार्थं सप्तम्यन्तमप्यसंबुद्धावित्येतदर्थात् प्रथमान्ततयान्वेतीत्यभिप्रेत्याह । **संबुद्धिवर्जमिति** ॥

---

१. ङ्यावन्ताद्दीर्घाच्च P. २. दीर्घाच्च P, $D_1$, $D_5$, $B_1$. ३. Dropped $D_1$. ४. सर्वनामस्थानं संबुद्धिवर्जं णित्कार्यकृत् स्यात् $B_2$. ५. णित्कार्यकृत् $D_3$. ६. हलि किम् $Bo_1$.

**अचो ञ्णिति ॥७।२।११५॥**

ञिति णिति च परेऽचो वृद्धिः स्यात् । सखायौ । सखायः । सखायम् । सखायौ[1] । शोभनः सखा सुसखा । अतिसखा । अतिसखायौ । घिसंज्ञाभावान्न तत् कार्यम् । सख्या । सख्ये ।

**ख्यत्यात् परस्य ॥६।१।११२॥**

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरकारस्य उः स्यात् । सख्युः[2] ।

**औत् ॥७।३।११८॥**

---

अचः । शोभनः सखा सुसखेत्यादिना 'अनङ् सौ' 'सख्युरसंबुद्धौ' इत्यत्र तदन्तविधिरिष्यते इति दर्शयति । सुसखेति । 'राजाहः सखिभ्यष्टच्' इति प्राप्तस्य टचो 'न पूजनात्' इति निषेधः । अतिशयितः सखा अतिसखा । अत्रापि टचो निषेधः । घिसंज्ञेत्यादि । तत् कार्यम् 'आङो नास्त्रियाम्' । 'घेर्ङिति' इत्यादि ।

ख्यत्यात् । ख्यत्यादिति कृतयणादेशयोर्निर्देश इत्याह ।

कृतयणादेशाभ्यामित्यादि । कृतयणादेशनिर्देशस्तु यत्रैषां यणादेशः प्राप्नोति तत्रैवोकारो यथा स्यात् । यत्र गुणस्तत्र मा भूत् अतिसखेरागच्छतीत्यादौ । अत्र हि सख्युः समासे घिसंज्ञास्त्येवेति घित्वात् 'घेर्ङिति' इति गुणः । 'परस्य' इति ग्रहणं 'एकः पूर्वपरयोः' इत्यधिकारनिवृत्त्यर्थम् ॥

औत् । 'इदुद्भ्याम्—' इति सूत्रेण नदीसंज्ञकात् परस्य ङेराम् विहितः । 'अच्च घेः' इति घिसंज्ञकात् परस्याकारसहित औकारो विहितः ।

---

१. Dropped $D_2$. २. After this—तदन्तविधिरिष्यते । अतिसखायौ । घिसंज्ञाभावात् &c. $D_2$; तदन्तस्याप्यनङिष्यते $D_4$. ३. After it—सखीन् C, $D_3$.

घिनदीसञ्ज्ञावर्जिताभ्यामिदुद्भ्या ङेरौत् स्यात् । सख्यौ । शेषं हरिवत् । सख्युः । समासे घिसंज्ञास्त्येव । अतिसखेरागच्छति ॥

**पतिः समास एव ॥१।४।८॥**

पतिः समास एव[1] घिसंज्ञः[2] । पत्या । पत्ये । पत्युः । पत्युः । पत्यौ । शेषं हरिवत् । समासे तु[3] भूपतये ।

कतिशब्दो[4] बहुवचनान्तः ।

**बहुगणवतुडतिसंख्या ॥१।१।२३॥**

एते[5] संख्यासंज्ञाः[6] स्युः ॥

---

तस्मात् पारिशेष्यात् ताभ्यां यदन्यत् तदिहोदाहरणमित्यभिप्रेत्याह[7] । **घिनदीसंज्ञावर्जिताभ्यामिति** । **सख्युरित्यादि** । ग्रहणवता प्रातिपदिकेन तदन्तविधेः[8] प्रतिषेधात् ॥

**पतिः** । सिद्धे सत्यारम्भो नियमार्थ इति विनाप्येवकारमवधारणे सिद्धेप्येवकारकरणं विपरीतावधारणनिरासार्थम् । ततश्च समासशब्दानन्तरमेवकारे श्रूयमाणे यत एवकारस्ततोन्यत्रावधारणमिति पतिशब्द एव नियम्यते न तु समासः । ततश्च शोभनाग्निनेत्यादि सिद्धम् । समासे पतिशब्दस्य[9] घित्वं विधीयत इति पतिगृहे 'द्वन्द्वे घि' इति पूर्वनिपातः[10] सिद्धः ॥

**बहु** । अत्र बहुगणशब्दौ प्रातिपदिके[11] । वतुडती प्रत्ययौ । बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति । संख्यावाचिनोरेव । भूयादिनिवृत्यर्थं संख्यासंज्ञा विधीयते । संख्यायतेनयेति

---

१ Dropped C. २. घिसंज्ञकः $D_1$, $B_2$; After it—स्यात् C, $D_2$. ३. After it—भूपतिना $D_3$. ४. After it—नित्यं $B_1$, $B_2$. ५. संख्या ज्ञेयाः $B_1$. ६. Dropped $B_2$. ७. इह dropped $Nc_2$. ८. °विधिप्रति° $Dc_3$. ९. पतिशब्दस्य समासे $Dc_3$. १० °निपातनियमः $Nc_2$. ११. After it—वर्तेते $Nc_1$, $Dc_1$.

डति च ॥१।१।२५॥

डत्यन्ता संख्या षट्संज्ञा स्यात् ॥

प्रत्ययस्य लुक्श्लुलुपः ॥१।१।६१॥

लुक्श्लुलुप् एतैः शब्दैः कृतं प्रत्ययादर्शनं क्रमात् लुक्श्लुलुप्संज्ञं स्यात् ॥

---

संख्येत्यन्वर्थसंज्ञाविज्ञानात् । अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वाच्यम्* । समासकन्विध्यर्थम् । अर्धपञ्चमशूर्पम् । अर्धपञ्चमकः ॥

डति च ॥ संख्येत्यनुवर्तत इत्यभिप्रेत्याह । डत्यन्ता संख्येति । किमर्थं सेहानुवर्तते । पातेर्डतिः । पतय इत्यत्र मा भूत् । ननु च पतिशब्दस्यापि डत्यन्तत्वात् पूर्वसूत्रेण संख्यासंज्ञास्त्येवेति संख्यानुवर्तनादपि षट्संज्ञा प्राप्नोत्येव । नैष दोषः । पूर्वसूत्रे वतुना साहचर्यात् तद्धित एव डतिर्गृह्यते न कृत् । कृच्चायम् ॥

प्रत्ययस्य । अनेकसंज्ञाविधानात् तद्भावितग्रहणमिह विज्ञायत इत्यभिप्रेत्याह । लुक्श्लुलुप्शब्दैरिति । तद्भावितग्रहणात् संज्ञासंकरो न । प्रत्ययस्येति किम् । अगस्तयः । कुण्डिनाः । यदि प्रत्ययग्रहणं न क्रियते तदागस्त्यस्यापत्यानि ऋष्यण् कुण्डिन्या अपत्यानि गर्गादिभ्यो यञ् । तयोरागस्त्यकौण्डिन्यशब्दयोर्जसि परतो यदागस्त्यकौण्डिन्ययोः अगस्तिकुण्डिनच् इति लुक् अगस्तिकुण्डिनचौ चादेशास्तदा वैषम्यादेकैकस्य स्थानिनस्त्रय आदेशाः पर्यायेण स्युः । तत्र यदा लुगादेशः स्यात्तदा विभक्तिमात्रस्य श्रवणं प्रसज्येत । अथाप्यलोन्त्यस्य स्यादेवमप्यागस्त्यः कौण्डिन्य इति स्यात् । अगस्तयः कुण्डिना इति चेष्यते ।

---

१. Dropped P, C, D4. २. लुक्श्लुलुप् dropped B2. ३. पति इत्यत्र Bc1. ४. संख्यानुवृत्तावपि Nc2, Dc4. ५. चादेशौ Dc3. ६. प्राप्नुवन्ति Dc3.

**षड्भ्यो लुक् ॥७।१।२२॥**

**षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुक् स्यात् ॥**

**प्रत्ययलोपे प्रत्ययलक्षणम् ॥१।१।६२॥**

प्रत्ययलुप्तेऽपि[1] [2] तदाश्रितं[3] कार्यं स्यात् ॥ इति 'जसि च' इति गुणे प्राप्ते ।

---

यदाप्यागस्त्यशब्दस्य कुण्डिनजादेशः कौण्डिन्यशब्दस्यागस्त्यादेशस्तदाप्यनिष्टमेव । विपर्ययस्यानङ्गीकारात् । अथान्तरतम्यादगस्त्यस्यागस्तिरेव कौण्डिन्यस्य कुण्डिनच् तथापि प्राग्दीव्यतीयेजादौ विवक्षिते 'वृद्धाच्छः' इति छो न स्यात् । अवृद्धत्वात् प्रकृतेः । प्रत्ययग्रहणे तु तददर्शनस्यैवेयं संज्ञेति तस्यैव लुक् स्यात् । परिशिष्टस्य प्रकृतिद्वयस्य यथासंख्यमादेशद्वयम् । तेन अगस्तयः कुण्डिना इति स्यात् । प्राग्दीव्यतीयेजादौ विवक्षिते 'गोत्रे लुगचि' इति लुकि निषिद्धे तत्संनियोगशिष्टत्वादगस्त्यादेशेऽपि निवृत्ते वृद्धाच्छे आगस्तीया इति स्यात् ॥

**षड्भ्यः** । षट्संज्ञकं यत्र प्रधानं तत्र तदन्तादपि लुक् । परमषट् । यत्र तूपसर्जनं तत्र न । प्रियषषः ॥

**प्रत्ययलोपे** । प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये भाव्यमितीद[4]मारभ्यते । प्रत्ययग्रहणेनुवर्तमानेऽपि पुनः प्रत्ययग्रहणं कृत्स्नप्रत्ययलोपे[5] यथा स्यात् । एकदेशलोपे[6] मा भूत् । तेन संग्मीतेत्यत्र सीयुटः सलोपेऽपि प्रत्ययग्रहणेन[7] झलादित्वं नेत्यनुनासिकलोपो न । प्रत्ययलक्षणं किम् । रायः कुलं रैकुलम् । गवे हितं गोहितम् । आयवादेशौ न स्तः । वर्णाश्रयत्वात् ॥

---

१. Before it—कृत्स्नप्रत्ययलोपे यथा स्यादिह मा भूत् । जोघ्नीत् । संग्मीत । गवेहितम् । गोहितम् । रायःपदम् । रैपदम् । अयआयौ न स्तः । $D_5$. २. अपि dropped P; प्रत्यये लुप्ते $D_2$, $D_4$. ३. तदाश्रितमङ्गकार्यं $B_2$; प्रत्ययाश्रितं $D_3$. ४. यथा स्यादितीद° $Dc_3$. ५. कृत्स्नस्य प्रत्य° $Dc_1$. ६. °देशे लोपे $Bc_1$. ७. प्रत्ययमहणे $Nc_2$.

**न लुमताङ्गस्य ॥१।१।६३॥**

लुक्श्लुलुप् एते लुमन्ताः । लुमता शब्देन लुप्ते[1] तन्निमित्तमङ्गकार्यं न स्यात् ॥ कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु ।

अव्ययास्मद्युष्मत्षट्[2]संज्ञास्त्रिषु सरूपाः । त्रिशब्दो बहुवचनान्तः[3] । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ।

---

न लु° । पूर्वेणातिप्रसक्तं प्रत्ययलक्षणं[4] विशेषे निषिध्यते । लुशब्दो विद्यते यस्मिन्नसौ लुमानिति व्युत्पत्तिरत्रेत्यभिप्रेत्याह । लुगित्यादि । लुमता किम् । कार्यते । कृञो णिचि यकि णिलोपे कृतेपि प्रत्ययलक्षणेन वृद्धिः । अङ्गस्येति किम् । पञ्च । पदत्वान्नलोपः स्यात् । **कति । कति इति**[5] । का संख्या येषां ते कति । 'किमः संख्यापरिमाणे डति च' इति डतिः । तदन्तस्य च संख्या संज्ञा ततः षट्संज्ञा । ततः कतिशब्दस्य बह्वर्थवाचकत्वेन तस्मात् प्रथमाबहुवचनं जस् उत्पद्यते । तस्य लुक् । प्रत्ययलक्षणेन प्राप्तो गुणो 'न लुमता—' इति निषिध्यते । एवमेव द्वितीयाबहुवचनेपि रूपम्[6] । शसो लुप्तत्वात् ॥

**अव्ययेत्यादि । त्रिषु सरूपाः ।** त्रिषु लिङ्गेषु समानरूपाः । लिङ्गरहितार्थप्रातिपदिकत्वेन तद्विशेषद्योतकाः प्रत्ययास्तेभ्यो नोत्पद्यन्त इत्यर्थः । **त्रय इति** । 'जसि च' इति गुणः । **त्रीनिति** । पूर्वसवर्णदीर्घः । नत्वम् ॥

---

१. लुप्ते सति $B_2$. २. P drops षट्. ३. बहुवचनः P; नित्यं बहुवचनान्तः C, $D_3$. ४. °लक्षणे $Dc_4$. ५. इति स्थिते $Dc_3$. ६. After it—ज्ञेयम् $Nc_1$.

**त्रेस्त्रयः ॥७।१।५३॥**

त्रि इत्येतस्य त्रयादेशः स्यादामि ॥ त्रयाणाम् । त्रिषु । द्विशब्दो द्विवचनान्तः ।

**त्यदादीनामः ॥७।२।१०२॥**

त्यदादीनां द्विपर्यन्तानामकारोन्तादेशः स्याद्विभक्तौ ॥ द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥

संज्ञायामुपसर्जनत्वेपि च नोकारादेशः । द्विः । अतिद्विः । प्राधान्ये स्यादेव । परमद्वौ ॥

---

**त्रेस्त्रयः** । ननु च 'निजां त्रयाणाम्' इति निपातनादेवैतत् सिद्धं तत् किमर्थमेतत् सूत्रम् । एवं तर्हि सिद्धे सतीदमारभ्यमाणमेतज् ज्ञापयति 'अबाधकान्यपि निपातनानि स्युः' इति । तेन पुरातनेति सिद्धं स्यात् । अन्यथा हि 'पुराणप्रोक्तेषु' इति निपातनेन बाधितत्वादेतन्न सिध्येत् ॥

**त्यदादीनाम्** । **द्विपर्यन्तानामिति** । तथा चोक्तं **महाभाष्ये** । 'तस्माद् द्विपर्यन्तानामिति वक्तव्यम्' इति । **द्विरिति** । कस्यचिदियं संज्ञा । **अतिद्विरिति** । द्वावतिक्रान्तोतिद्विः । अत्र द्विशब्दस्योपसर्जनत्वादप्राधान्यान्नात्वम् । **परमद्वाविति** । परमौ च तौ द्वौ च परमद्वौ । अत्र द्विशब्दस्य प्राधान्यादत्वम् ॥

इतीदन्ताः ॥

---

१. द्विशब्दपर्यन्ताना° $D_1$. २. विभक्तौ परतः C, $D_3$. ३. नाकारः $B_2$. ४. तथोक्तं $Bc_1$, $Dc_4$, $Dc_3$.

वातप्रमीः । 'दीर्घाज्जसि च' इति पूर्वसवर्ण[1]निषेधाद्यणादेशः । वातप्रम्यौ । [2]वातप्रम्यः । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । [3]वातप्रमीभिः । वातप्रम्ये । [4]वातप्रमीभ्याम् । [4]वातप्रमीभ्यः । वातप्रम्यः । वातप्रम्यः । वातप्रम्योः । [5]दीर्घान्नुडभावः । वातप्रम्याम् । ङौ तु सवर्णदीर्घः । वातप्रमी । वातप्रम्योः । [6]वातप्रमीषु । एवं देवयज्यतिलक्ष्म्यादयः ।

---

**वातप्रमीः** । वातं प्रमिणोतीति वातप्रमीः निःशृङ्गो मृगाकृतिः । 'वातप्रमीः' इत्युणादिसूत्रेण ईप्रत्ययान्तो [7]निपातः । **दीर्घादित्यादि** । वातप्रमी औ इति स्थिते 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति तस्य [8]प्रतिषेधात् 'इको यणचि' इति यणादेश इत्यर्थः । **वातप्रमीमिति** । परत्वात् 'अमि पूर्वः' इति पूर्वत्वम् । **वातप्रमीनिति** । शसि पूर्वसवर्णदीर्घः । नत्वम् । **दीर्घत्वान्नुडभाव** इति । वातप्रमी आम् इति स्थिते दीर्घत्वात् 'ह्रस्वनद्यापो नुट्' इति नुट् नेत्यर्थः । **ङौ त्विति** । सप्तम्येकवचने वातप्रमी ङि इति स्थिते ङस्येत्संज्ञायां लोपे 'अकः सवर्णे दीर्घः' इति [9]दीर्घः । एवं **देवयज्यतिलक्ष्म्यादय** इति । देवान् यजतीति देवयजीः । यजेरीप्रत्ययः । 'प्रत्ययतः प्रकृतेश्च तदूह्यम्' इति वचनात् । लक्ष्मीमतिक्रान्तोतिलक्ष्मीः । इत्यादयः शब्दा ईकारान्ता अधातवो वातप्रमीसदृशा ज्ञेया इत्यर्थः। अतिलक्ष्मीशब्दस्य वातप्रमीशब्दवद्रूपमर्वाची[10]नैमते ज्ञेयम् । **भाष्यकारमते** तु नदीसंज्ञत्वान्नदीकार्यं स्यात् । हे **अतिलक्ष्मि** । **अतिलक्ष्म्यै** ।

---

१. °निषेधः । यणादेशः । $D_3$. २. From this to वातप्रम्योः dropped $D_3$. ३. Dropped $D_1$, $D_2$, $D_4$. ४. Dropped $D_1$, $D_2$, $D_4$. ५. $D_1$ has वातप्रम्याम् before it. ६. Dropped $D_1$, $B_2$. ७. निपातितः $Bc_1$, $Dc_3$, $Dc_4$. ८. निषेधात् $Dc_3$. ९. सवर्णदीर्घः $Bc_1$, $Dc_2$, $Dc_3$. १०. °मतेन $Nc_1$, $Dc_3$, $Dc_4$.

सुधीः । 'इको यणचि[१]' इति यणि प्राप्ते

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥६।४।७७॥**

श्नुप्रत्ययान्तस्य भ्रूइत्येतस्य धातोश्चेवर्णोवर्णयोः क्रमादि[४]यङुवङौ स्तोचि परे ॥ इति इयङादेशः[५] । एतदपवादे[६] 'एरनेकाचः—' इत्यनेन[७] यणि प्राप्ते

---

अतिलक्ष्म्याः । अतिलक्ष्मीणाम् । अतिलक्ष्म्याम् । इति स्यात् । तथा च भाष्ये । 'प्रथमलिङ्गग्रहणं[८] च कर्तव्यम्' इत्याद्युक्त्वा 'अतितन्त्र्यै ब्राह्मणाय । अतिलक्ष्म्यै ब्राह्मणाय' इत्युक्तम् । **सुधीरिति** । सुष्ठु-ध्यायतीति सुधीः । ध्यायतेः 'संप्रसारणं च' इति क्विप्[९] संप्रसारणं च । सुष्ठु धीरस्येति वा । इक इत्यादि । सुधी औ इति स्थिते दीर्घत्वा-त्पूर्वसवर्णनिषेधे 'इको यणचि' इति यणि प्राप्ते उच्यत इत्यर्थः ॥

अचि श्नु । अङ्गस्येत्यनुवर्तते । तत् श्नुप्रत्ययान्तस्य[१०] भ्रू इत्येतस्याङ्गस्य धातोरङ्गस्येत्येवं संबध्यते । अचीति वर्णग्रहणम्[११] । तेन 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यजादौ कार्यं ज्ञेयम्[१२] । यत्र त्वजेव प्रत्ययो नाजादिस्तत्र व्यपदेशिवद्भावेनाजादित्वं ज्ञेयम् । ङकारो विस्पष्टार्थः । 'निर्दिश्यमानस्यादेशा भवन्ति' इति य्वोरेवादेशयोः सिद्धत्वात् । अचीति किम् । सुधीभ्याम् । श्नुधातुभ्रुवामिति[१३] किम् । वातप्रम्यौ । य्वोरिति किम् । चक्रतुः । अङ्गानुवृत्तिः किमर्थम् । सुध्युपास्यः । इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन । चयनम् । चायकः । लवनम् । लावकः । एतदित्यादि । एतस्येयङादेशस्यापवादे[१४] 'एरनेकाचोसंयोगपूर्वस्य' इत्यनेन यणादेशो प्राप्त इत्यर्थः ।

---

१ इको यणिति $D_2$. २. यण् C. ३. इत्यस्य C. ४. क्रमात् dropped $B_2$; Before it—एतयोः $D_2$. ५. इयङादेशे प्राप्ते $D_1$, $B_2$. ६. तदपवादः $D_1$. ७. अनेन dropped $B_1$, $B_2$. ८. प्रथमं लिङ्ग° $Nc_2$, $Dc_1$, $Dc_3$, $Dc_4$. ९. क्विप् च कर्तरि पुंसि तद्योगात् । सुष्ठु &c. $Dc_3$. १०. After it—अङ्गस्य $Nc_1$, $Dc_3$. ११. सवर्णग्रहणम् $Nc_2$. १२. स्यादिति ज्ञेयम् $Dc_2$. १३. अचिश्नु° $Dc_2$. १४. °पवादः $Dc_1$, $Nc_1$, $Nc_2$.

**न भूसुधियोः ॥६।४।८५॥**

एतयोरचि[1] यण् न स्यात् ॥ सुधियौ । सुधियः । अमि शसि च[2] परत्वादियङ्[3] । सुधियम् । सुधियौ । सुधियः । इत्यादि[4] । एवं सुश्रीयवक्र्यादयः । प्रधीः ।

**एरनेकाचोसंयोगपूर्वस्य ॥६।४।८२॥**

अनेकाचोऽङ्गस्य धातोरिवर्णस्य यण् स्यादचि[5] धात्ववयवसंयोगः पूर्वो यस्मात् तस्य तु[6] न स्यात् । गतिकारकपूर्वस्य[7]

---

**न भू** । भूग्रहणेन तदन्तग्रहणम् । केवलस्य यणादेशप्राप्त्यभावाद् व्यर्थं वचनं स्यात् । उवङादेशनिषेधार्थत्वान्न व्यर्थमिति चेदेवं तर्हि 'वर्षाभ्वश्च' इति यण्विधिर्व्यर्थः स्यात् । तस्माद्यण्निषेधार्थमेतत्[8] । ततो भूग्रहे[9] तदन्तग्रहणं कार्यम् । **अमि शसीति** । अमि 'अमि पूर्वः' इति पूर्वरूपे प्राप्ते परत्वादियङेव । शसि 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे प्राप्ते परत्वादियङेवेत्यर्थः । **एवं सुश्रीयवक्र्यादय इति** । सुष्ठु श्रीर्यस्य स सुश्रीः । यवान् क्रीणातीति यवक्रीः । **प्रधीरिति** । प्रध्यायति प्रकृष्टा धीरस्य वा ॥

**एरने** । धातोरिति[10] वर्तते । तेन संयोगो विशेष्यते धातोरवयवः संयोगपूर्वो यस्मादिवर्णान्नास्ति तस्येवर्णस्य यण् स्यात् । यस्मात्तु[11] धात्ववयवः संयोगः पूर्वस्तस्य तु न स्यादित्याह । **धात्ववयव इति** । **गतिकारकेति** । क्विबन्तस्य धातोर्गतिकारकपूर्वस्य यण् इष्यते* ॥

---

१. °राच्च परे $D_3$. २. च परे $B_2$. ३. After it—विप्रतिषेधे परं कार्यम् । $B_2$. ४. Dropped $B_2$; Before it—सुधिया $D_5$. ५. °रच्चि सुपि $D_2$. ६. Dropped C. ७. °पूर्वकस्य $B_2$. ८. °मेव तत् $Dc_2$. ९. °ग्रहणे $Dc_2$; °ग्रहणेन $Dc_3$. १०. °रित्यनुवर्तते $Dc_2$. ११. तु dropped $Dc_4$.

क्विबन्तस्यैवे[1]ष्यते* । प्रध्यौ । प्रध्यः । प्रे[3]ध्यम् । प्रध्यौ । प्रध्यः । इत्यादि । एवं दीधीवेवी[4]सुत्यादयः । असं[5]योगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ । गतिकारकोपपदात् किम् । परमधियौ । शुद्धधियौ । अनेकाचः किम् । नीः । नियौ[6] ।

---

'सर्वं वा[7]क्यं सावधारणं भवति' इति गतिकारकपूर्वस्यैव नान्यपूर्वस्यत्य[8]र्थः । अयं भावः । यदि क्विबन्तस्य धातोः संपूर्वपदस्य यण् क्रियते तर्हि गतिकारकपूर्वस्यैवेष्यते नान्यपूर्वस्येति । एरिति किम् । असंयोगग्रहणमिव वर्णवि[9]शेषणं यथा स्यात् । अङ्गविशेषणं मा भूदिति । ननु त्वासत्येरित्येतस्मिन् य्वोरित्यनुवृत्तेर्लुलुवतुरित्यत्रापि यण् स्यात् । नैतदस्ति । 'ओः सुपि' इति ओः सुप्येवेति नियमादत्र यण्निषेधः । धातुना संयोगविशेषणं किम् । इहापि यथा स्यात् उन्न्यौ उन्न्य इति । प्रध्यम् । प्रध्य इति । अमि शासि च परत्वाद्य[10]णादेश एव । एवमिति । सुष्ठु नयतीति सुनीः । 'सत्सूद्विष—' इति क्विप् । परमधियौ । शुद्धधियाविति । अत्र परमशुद्धशब्दौ न गती नापि कारके इति तत्पूर्वस्य न भवति । अङ्गस्येति किम् । ब्राह्मणस्य नियौ । अत्र मा भूत् ॥

---

१. एव dropped $D_1$, $D_2$. २. After it—नान्यपूर्वस्य C. ३. Before it P has परत्वाद्यणादेशः; C has अमि शासि च प्रध्यम् । प्रध्यः । इति विशेषः । परत्वाद्यणादेशः; $D_1$ has इत्यादि after it; After प्रध्यौ । प्रध्यः, $D_2$ has—यणोन्तरङ्गत्वान्नामिपूर्वः । इत्यादि । एवं सुन्यादयः । एवं दीधीसुत्यादयः । असंयोगपूर्वस्य किम्, &c. ४. वेवी dropped $D_5$, $B_2$; दीधीवेवी dropped $D_4$. ५. असंयोगस्य किम् $D_1$. ६. After it—नियः $D_2$, $D_4$. ७. वाक्यं च $Dc_1$, $Nc_1$. ८. गतिकारकपूर्वस्य $Dc_1$. ९. °विशेषग्रहणं $Nc_1$. १०. यणावादेशः $Dc_2$.

ङेराम्नद्याम्नीभ्यः ॥७।३।११६॥

नद्यन्तादाबन्तान्नीशब्दात् परस्य ङेराम् स्यात् । नियाम । शेषं सुधीवत् । ग्रामणीः । ग्रामण्यौ । ग्रामण्यः । शेषं प्रधीवत् । सह खेन वर्तते सखः । तमिच्छतीति सखीः । सख्यौ । 'ख्यत्यात्–' इति दीर्घस्यापि ग्रहणादुकारः । सख्युः । सख्युः । सुखमिच्छतीति सुखीः । सुख्युः २ । सुतमिच्छतीति सुतीः ।

---

ङेराम् । ङेरिति सप्तम्येकवचनं गृह्यते । एतच्च 'स्त्रियाम्' 'इच्छायाम्' इत्यादेर्निर्देशात् ज्ञायते । ग्रामणीरिति । ग्रामं नयतीति ग्रामणीः । अग्रग्रामाभ्यां नयतेर्णो वाच्यः* । सह खेन वर्तत इति । सख इति । 'तेन सह तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहस्य सः । तमिच्छतीति सखीरिति । सखमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यच् । 'क्यचि च' इतीत्वम् । सखीयतेः क्विपि कृते 'अतो लोपः' इत्यलोपः । 'लोपो व्योर्वलि' इति यलोपः । क्विपः सर्वस्य लोपः । कृत्त्वात् सुः । सख्याविति । 'एरनेकाचः—' इति यण् । ख्यत्यात्—' इत्यादि । सखी ङसि सखी ङस् इति स्थिते यणादेशे च कृते 'ख्यत्यात् परस्य' इत्यत्र सूत्रे दीर्घस्यापि सखीशब्दस्य ग्रहणात् ङसिङसोर्ङकारस्योकारः । सुखमिच्छतीति सुखीरिति । क्यच् । ईत्वम् । क्विप् । अल्लोपयल्लोपौ । सुख्युरिति । अत्रापि पूर्ववत् । सुतमित्यादि । पूर्ववत् प्रक्रिया ।

---

१. °शब्दाच्च D1, D2, D4. २. उत्तरस्य P; चोत्तरस्य B2, D3; परस्य dropped D4. ३. °रामादेशः D1. ४. ग्रामण्याम् D2. ५. Before it—ङौ तु ग्रामण्याम् B2; शेषं dropped D3. ६. इति सखः P. ७. After तमिच्छतीति—सखीयति । सखीयतीति सखीः &c. D3, P, B1, B2, C. ८. Dropped Dc3. ९. ङसिङसोरकारस्य Dc3, Dc4, Nc2.

सुत्युः २। त[1]कारस्था[2]नजाद्वर्णादपीष्यते । लूनामिच्छतीति लूनीः । लून्युः २ । वेति केचित् । सख्यः । स[3]ख्यः । सुत्यः । सु[4]त्यः । लून्यः । लू[5]न्यः । शेषरूपमे[6]षां प्रधीवत् ।

---

**तकारस्थानजा**दिति । तकारस्थाने यो जातो वर्णस्तस्मात् परस्य ङसिङसोरस्योत्वमिष्यते । अयं भावः । लूञ् छेदने । क्तः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । लूनस्तमात्मन इच्छति । क्यजादि पूर्ववत् । लूनी ङस् इति स्थिते पूर्वत्रासिद्धन्यायेन तकारस्य स्थाने जातस्य नस्यासिद्धत्वात् 'ख्यत्यात्परस्य' इति तीशब्दात् परस्य ङसि-ङसोरस्य उः स्यादिति । **वेति केचि**दिति । दीर्घाभ्यां खीतीशब्दाभ्यां परयोर्ङसिङसोरस्य उत्वमिति शेषः । उत्वाभावपक्षे रूपाणि सख्य इत्यादीनि । तथा चायमर्थो **विचारचिन्तामणा**वुक्तः ।

'सख्युः पत्युः प्रसिद्ध्यै यत् ख्यत्यादित्याह पाणिनिः ।
साधारणं तं मन्वानाः सुख्युः सुत्युः सुखीः सुतीः ॥

सुखीयतीसुतीयत्योर्यौ क्विबन्तौ तयोर्विदुः ।
निष्ठादेशस्य पूर्वत्रासिद्धत्वात् लून्युरादिकम् ॥

सुख्य इत्यादि साध्वेतदुभयं **भाष्यगौरवात्** ॥' इति ।

**शेष**मिति । **एषा**मिति । सखीसुतीलूनीशब्दानामित्यर्थः ॥

इति ईदन्ताः ॥

---

१. Before it—उत्वं प्रति निष्ठानत्वं 'पूर्वत्रासिद्धम्' इत्यासिद्धम् । $B_2$, $D_3$ ( तेन तकार° $D_3$ ). २. °स्थावर्णादपि $D_5$. ३. सख्युः $D_1$, $D_2$, $B_2$ ; सुख्युः $D_4$, $D_5$. ४. सुत्युः $D_1$, $D_2$, $D_5$, $B_2$. ५. लून्युः $D_1$, $B_2$. ६. प्रधीवदेषाम् C ; शेषं प्रधीवत् $B_2$. ७. °रकारस्य $Dc_3$.

शंभुर्हरिवत् साध्यः । शंभुः । शंभू । शंभवः । हे[2] शंभो । शंभुम् । शंभू । शंभून् । शंभुना । शंभुभ्याम् । शंभुभिः । शंभवे । शंभुभ्याम् । शंभुभ्यः । शंभोः । शंभुभ्याम् । शंभुभ्यः । शंभोः । शंभ्वोः । शंभूनाम् । शंभौ । शंभ्वोः । शंभुषु । एवं विष्णुवायुभान्वादयः ॥

**तृज्वत् क्रोष्टुः ॥७।१।९५॥**

क्रोष्टुशब्दस्य तृजन्तवद्रूपं स्यादसंबुद्धौ सर्वनामस्थाने[4] ॥

**ऋदुशनस्पुरुदंसोऽनेहसां च ॥७।१।९४॥**

ऋदन्तानामुशनसादीनामनङ्[5] स्यादसंबुद्धौ सौ परे ॥ क्रोष्टा । हे क्रोष्टो ।

---

शंभुरिति । शंभुशब्दो हरिशब्दवत् साध्यः । हरिशब्दे यादृशी प्रक्रिया तादृश्येवात्रेति भावः ॥

तृज्वत् । क्रोष्टुशब्दः क्रुश आह्वाने अस्मात् 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्ययान्तो जम्बूकवाची । तस्यानेन प्रत्यासत्तेस्तृजन्तस्य क्रुशे रूपमतिदिश्यत इत्यभिप्रेत्याह । क्रोष्टुरित्यादि ।

ऋदु । ऋकारान्तस्य 'ऋतो ङि—' इति गुणे प्राप्ते इतरेषां तु हल्ङ्यादिलोपरुत्वविसर्जनीयासन्तदीर्घत्वेषु[7] प्राप्तेष्वनङ् विधीयते । तपरकरणमसंदेहार्थम् । क्रोष्टेति । अनङि अन्तादेशे जाते सुलोपः । 'सर्वनामस्थाने च' इत्युपधादीर्घः । नलोपः । हे क्रोष्टो इति । 'ह्रस्वस्य गुणः' ॥

---

१. Before it—इति ईदन्ताः। C. २. हे शंभो dropped $D_5$, $B_1$, P, C; After it—इत्यादि $B_2$. ३. तृजन्तं रूपं P, तृज्वद्रूपं $D_1$, $B_2$. ४. After it—परे $D_1$, $D_5$, $B_2$. ५. °नां चानङ् $D_1$, $D_2$, $B_2$. ६. °शब्दस्य $Dc_3$. ७. °ङ्यादिर्लोप° $Nc_1$; °ङ्यादिर्लोपः $Dc_2$; °ङ्यादिर्लोपे $Dc_3$.

ऋतो ङिसर्वनामस्थानयोः ॥७।३।११०॥

ङौ सर्वनामस्थाने च[1] परे ऋदन्तस्य गुणः स्यात् ॥ रपरत्वम् ।

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥६।४।११॥

अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने[2] ॥ क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टॄन् ॥

---

ऋतः । तपरकरणं मुखसुखार्थम् । ङिसर्वनामस्थानयोर्दीर्घस्यासंभवात् । ऋकारस्य स्थाने गुणो भवन्नान्तरतम्यात् रश्रुतिमानकार एव भवतीत्यभिप्रेत्याह । रपरत्वमिति । तच्च 'उरण् रपरः' इत्यनेन ॥

अप्तृन् । ननु च यथा 'तुरिष्ठेमेयस्सु' इत्यत्र तृन्तृचोर्यः समानोंशस्तस्यैव ग्रहणं कृतं तथेहापि किं न कृतम् । 'अर्वणस्त्रसावनञः' इत्यस्य ग्रहणं मा भूदिति । मैवम् । अर्थवद्ग्रहणपरिभाषयैव तस्य ग्रहो न स्यात् । एवं तर्हि तस्या अनित्यत्वज्ञापनार्थम् । तेन 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इत्येतदुपपन्नं स्यात् । अथवा 'सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम् । तेन 'न कोपधायाः' इत्यत्र सामान्योक्तावपि अकतद्धितयोरेव को गृह्यते । न कमात्रम् । तेन यदग्रे वक्ष्यति 'अकतद्धिताभ्यां कोपधायाः पुंवत्त्वनिषेधोत्र' इति तदुपपन्नं भवति । अथ नप्त्रादयः किमर्थं गृह्यन्ते । यतस्तेपि केचित् तृजन्ताः केचित् तृन्नन्ताः । अत्रोच्यते । केचिदाचार्या उणादीन्यव्युत्पन्नानि प्रातिपदिकानीत्याहुः । तत्पक्षे विध्यर्थम् । केचिद् व्युत्पन्नानीत्याहुः । तत्पक्षे नियमार्थम् । एवंभूतानामन्येषां संज्ञाशब्दानां दीर्घो मा भूदिति । पितरौ । पितरः ॥

---

१. Dropped $D_2$, $B_2$. २. After it—परे C, $B_2$, $D_3$, $D_4$. ३. तत्रो $Bc_1$, $Dc_3$, $Dc_4$.

**विभाषा तृतीयादिष्वचि** ॥७।१।९७॥

तृतीयादिष्वचि[1] क्रोष्टुर्वा तृज्वत् स्यात् ॥ क्रोष्ट्रा[2] । क्रोष्ट्रे[3] ।

**ऋत उत्** ॥६।१।१११॥

ऋदन्तात् ङसिङसोरति परे उकार एकादेशः स्यात् । रपरः[4] ।

**रात्सस्य** ॥८।२।२४॥

रेफात् संयोगान्तस्य सकारस्यैव लोपो नान्यस्य ॥ रेफस्य विसर्गः[5] । क्रोष्टुः । क्रोष्ट्रः । क्रोष्ट्रोः । आमि परत्वात् तृज्वद्भावे प्राप्ते ।

---

**विभाषा** । अप्राप्तविभाषेयम् ॥

**ऋत उत्** । ऋत इति तपरत्वम् । तेन दीर्घनिवृत्त्यर्थम् । तेन उन्न्योर्ग[6] इत्येवमादि सिद्धम् । उदित्येतदपि दीर्घनिवृत्तये । अन्यथा हि द्विमात्रस्य स्थानिनो द्विमात्र एवादेशः स्यात् । ननु च 'भाव्यमानेनाणा सवर्णानां ग्रहणं न' इति द्विमात्रो न स्यात् । एवं तर्ह्येतत् ज्ञापयति 'भवत्युकारेण भाव्यमानेनापि सवर्णानां ग्रहणम्' इति । तेन यदग्रे-वक्ष्यति 'स्थानेन्तरतमः' इति ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकार इत्येतदुपपन्नं भवति ॥

**रात्सस्य** । 'संयोगान्तस्य लोपः' इति सिद्धे नियमार्थं वचनम् । 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायादिति चेतसि कृत्वाह । **सकारस्यैव लोपो नान्यस्येति** । **रेफस्य विसर्ग** इति । क्रोष्टु अस् इति स्थिते सलोपे च कृते 'खरवसानयोः—' इति रेफस्य विसर्ग इति भावः । **आमीत्यादि** । क्रोष्टु आम् इति स्थिते रामाणामित्यादौ सावकाशो 'ह्रस्वनद्यापः—' इति नुट् प्राप्नोति[7] । क्रोष्टा[8] इत्यादौ

---

१. तृतीयादावचि $D_1$, $B_2$. २. After it—क्रोष्टुना $B_2$, $D_3$, $D_4$, $D_5$. ३. After it—क्रोष्टवे $B_2$, $D_3$, $D_5$. ४. पररत्वम् $B_1$. ५. विसर्जनीयः $D_2$. ६. उन्न्योर्ग $Bc_1$. ७. प्राप्ते $Nc_1$. ८. क्रोष्टु $Bc_1$, $Dc_4$.

नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन* । इति नुडेव स्यात् । क्रोष्टूनाम् । क्रोष्टरि । क्रोष्ट्रोः । पक्षे हलादौ च शंभुवत् । ओमि शसि च तृज्वद्भावो वेति केचित् । क्रोष्टून् । क्रोष्टृणाम् ॥

हूहूः । हूह्वौ । हूह्वः । इत्यादि । वातप्रमीवत् । एवमतिचम्वादयः । खलपूः ।

---

सावकाशस्तृज्वद्भावश्च प्राप्नोति । 'तत्र विप्रतिषेधे. परं कार्यम्' इति परत्वात् तृज्वद्भाव एव प्राप्नोति तस्मिन् प्राप्ते इत्यर्थः । **नुमित्यादि** । नुम् 'इकोचि विभक्तौ' इति विहितः । **अचिरेति** । 'अचिर् ऋतः' इति विहितो रः । तृज्वद्भावोयमेव । एभ्यो नुट् भवति पूर्वविप्रतिषेधेनेत्यर्थः । पूर्वविप्रतिषेधश्च परशब्दस्येष्टवाचित्वाल्लभ्यते । **क्रोष्टूनामिति** । नुटि कृते अजादित्वाभावात् तृज्वद्भावो न । **पक्षे** इत्यादि । तृज्वद्भावाभावे हलादौ च विभक्तौ परतः शंभुशब्दस्येव रूपाणि ज्ञातव्यानीत्यर्थः । **केचिदिति** । दुर्गादयः । तथा चाह **दुर्गः** । 'शसादौ तु तृनन्तस्य तुनन्तस्य च प्रयोगः । क्रोष्टॄन् । क्रोष्टून् ।' इति ॥

इत्युदन्ताः ।

**हूहूः** । इति गन्धर्वविशेषस्य संज्ञा । **इत्यादि वातप्रमीवदि**त्यादि । ङिवर्जमिति शेषः । ङौ सवर्णदीर्घो न भवति किं तु यणेव । हूह्वि । **एवमिति** । चमूं सेनामतिक्रान्तोतिचमूः । आदिना अलाब्वादयः । अतिचमूशब्दो हूहूशब्दवदित्यर्वाचीनमतम् । **भाष्यकार**मते तु नदीकार्यं स्यादिति । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचमूनाम् । अतिचम्वाम् । इति । **खलपूरिति** । खलं पुनातीति खलपूः । पूञः क्विप् ॥

---

१. नुमचिर ऋतः B2. २. नामि D1. ३. वा dropped D1. ४. क्रोष्टृणाम् । क्रोष्टूनाम् D1, क्रोष्टून् । क्रोष्टृणाम् dropped P, D5, B1, B2. ५. Before it—इति ऋदन्ताः C. ६. इत्यादि dropped D2, P, B1, B2. ७. Before it—हूहूम् । हूह्वौ । हूहून् C. ८. Dropped Dc3. ९. वातप्रमीवदिति Dc3, Dc4.

**ओः सुपि ॥६।४।८३॥**

अनेकाचोऽङ्गस्य धातोरुवर्णस्य यण् स्यादचि सुपि धात्ववयवपूर्वस्य[1] तु न स्यात्[2]। गतिकारकपूर्वस्यैवेति वाच्यम्*। खलप्वौ। खलप्वः। इत्यादि। प्रधीवत्। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः। इत्यादि। सुधीवत्। एवं कटप्रू-स्वयंभ्वादयः। दृग्भूः[3]। दृक्कारापुनर्भ्वश्चेति वक्तव्यम्*। इति वचनाद्यण्। दृग्भ्वौ[4]। दृग्भ्वः। इत्यादि[5]। एवं[6] काराभूः। पुनर्भूः[7]।

**वर्षाभ्वश्च ॥६।४।८४॥**

वर्षाभ्वो[8] यण् स्यादचि[9]। वर्षाभूः। वर्षाभ्वौ। वर्षाभ्वः। शेषं खलपूवत् ॥

---

**ओः सुपि**। सुपि किम्। ललुवतुः। अनेकाचः किम्। लुवौ। धात्ववयवसंयोगपूर्वस्य तु नेति किम्। कटप्रुवौ। गतिकारकपूर्वस्यैवेति किम्। परमलुवौ[10]। **स्वभुवौ**। स्वस्माद्भवतीति 'न भूसुधियोः' इति यणो निषेधः। **कटप्रू** इति। कटं प्रवते। 'क्विब्वचि—' इति क्विप्। दीर्घश्च। 'अत्यल्पमिदमुच्यते। वर्षाभ्वश्चेति। वर्षादृक्कारपुनःपूर्वस्य भुव इति वक्तव्यम्' इति **महाभाष्यकारवचनमर्थतोनूद्य** तद्वचनबलादत्र यण् भवतीत्याह। **दृक्कारेत्यादि**। **इति वचनादिति** वचनं दृग्भूशब्दस्य यण् न स्यात् **काशिकादावदृष्टत्वादिति** शङ्का न कार्या साक्षाद् भाष्ये उक्तत्वादिति प्रामाणिकत्वदर्शनार्थम्[11] ॥

इत्यूदन्ताः ॥

---

१. पूर्वस्य न $B_2$. २. Dropped C, $D_1$, $D_3$, $D_4$. ३. दृन्भूः। दृन्कारा° $B_1$, $D_1$, P. ४. दृन्भ्वौ। दृन्भ्वः $B_1$, $D_1$, $P_1$. ५. इत्यादि dropped $B_1$, $D_1$. ६. एवं काराभूः। पुनर्भूः dropped $B_3$. After वर्षाभ्वश्च and its वृत्ति $D_5$ has एवं काराभूः. ७. Dropped C, $D_3$. After it—C has इत्युदन्ताः; From पुनर्भूः to खलपूवत्, dropped $D_1$. ८. Before it—वर्षाभू-शब्दस्य $B_2$. ९. °दचि सुपि $B_2$, $D_4$, $D_5$. १०. °भुवौ $D_4$. ११. °प्रदर्श-नार्थम् $Bc_1$, $Dc_4$.

धाता[1]। सबुद्धिलोपे प्राप्ते परत्वात् 'ऋतो ङिसर्वनामस्थानयोः'[2] इति गुणः। सेस्य लोपः। रैस्य[3] विसर्गः। हे धातः। धातारौ[4]। धातारः। धातारम्। धातारौ। पूर्वसवर्णदीर्घः। नत्वम्। धातॄन्। ऋवर्णान्नस्य णत्वं वाच्यम्*। धातॄणाम्। शेषं तृजन्तक्रोष्टुवत्[5]। एवं नप्तृहोतृपोत्रादयः[6]। पिता। हे पितः। अतृजन्तत्वात् 'अप्तृन्–' इत्युपधादीर्घो न। पितरौ। पितरः। पितरम्। पितरौ। शेषं धातृवत्। एवं जामातृमातृभ्रात्रादयः[7]॥

नृ च ॥६।४।६॥

नॄ[8] इत्यस्य नामि[9] वा दीर्घः। नृणाम्। नॄणाम्। शेषं पितृवत्[10]।

---

धातेति। 'ण्वुल्तृचौ' इति तृच्। अनङादि। धाताराविति। तृजन्तत्वाद् दीर्घः। एवमिति। अनेन प्रकारेण। नप्त्रादयस्तृन्तृजन्ताश्च ज्ञातव्या इत्यर्थः। अतृजन्तत्वादिति। पितृशब्दस्येति शेषः। ननु पितृशब्दोऽप्युणादौ तृजन्तो 'नप्तृनेष्टृ–' इत्यादिना निपात्यते सत्यम्। तथापि 'अप्तृन्–' इति सूत्रेण उणादितृजन्तव्यतिरिक्ततृजन्तग्रहणादतृजन्तः स्यात्। यथा चैतत्तथा तत्रैव प्रत्यपादि॥

नृ च। केचिदत्र 'छन्दस्युभयथा' इत्यतः 'छन्दसि' इत्यनुवर्तयन्ति। तेन भाषायां न भवति। आचार्याणां मते तु भाषायामपि भवतीति 'छन्दसि' इति नोक्तम्। तथा च।

'नृणामेको गम्यस्त्वमसि पयसामर्णव इव' इत्यादि प्रयोगो भाषायां दृश्यते॥

इति ऋदन्ताः।

---

१. After it—दृग्भू : दृग्कारा° । काराभू : D4. २. सस्य लोपः । रस्य विसर्गः dropped B1. ३. रेफस्य B2, D4. ४. Before it—ऋतौ ङौ सर्वनामस्थाने गुणः । 'अप्तृन्–' इति दीर्घः B2. ५. तृज्वत् क्रोष्टुवत् D1. ६. भ्रात्रादयः B1. ७. जामात्रादयः B1, C, B2. ८. नृ इत्येतस्य P. ९. नामि परे D3. १०. ऋदन्ताः after it C.

**गोतो णित् ॥७।१।९०॥**

गोशब्दात् परं सर्वनामस्थानं णित्कार्यकृत् स्यात् ॥ गौः । गावौ । गावः ।

**औतोम्शसोः ॥६।१।९३॥**

ओतोम्शसोः परतः[1] आकार एकादेशः स्यात् ॥ गाम् । गावौ । गाः । गवा । गोभ्याम् । इत्यादि । 'ङसिङसोश्च' इति पूर्वरूप एकादेशः[2] । गोः । गोः । इत्यादि[4] । गोत इति

---

गोतः । ननु च हे चित्रगो । चित्रगव इत्यत्र किमिति णित्कार्यं न । उच्यते । 'अङ्गान्त्यकार्ये वृत्ते पुनर्नाङ्गान्त्यकार्यम्' इति गुणे कृते णित्कार्यं न भविष्यति । अथवा गोत इति सम्बन्धे षष्ठी । ततश्च गोतो यत् सर्वनामस्थानमिति यच्च तदर्थस्यैकत्वादौ सर्वनामस्थानं तद् गोः सर्वनामस्थानमुच्यते । चित्रगुशब्दात् परं यत् सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादौ ।

ओतः । ओकारान्तात् परं सर्वनामस्थानं णिन्निर्दिश्यते । तेन वृद्धौ नाप्राप्तायामयमाकारो विधीयमानस्तां बाधते । 'अम्' अत्र द्वितीयैकवचनं गृह्यते । शसा साहचर्यात् । 'सुपि' इत्यधिकाराच्च । तेन 'अचिनवम्' इत्यत्र न । गोत इत्यादि । 'गोतो णित्' इत्यस्मिन् सूत्रे 'गोतः' इति तपरकरणमोकारान्तानां शब्दानामुपलक्षणार्थम् । तेन सुद्योरित्यादि सिध्यति । ननु च तपरकरणं तत्कालावधारणार्थं

---

१. परे B₁, अतः D₁. २. रूपादेशः D₁. ३. After it—स्यात् B₂. ४. इत्यादि dropped B₁, B₂. ५. कृते Dc₂. ६. Dropped Bc₁.

तपरत्वमोकारान्[1]तोपलक्षणार्थम् । यस्माद्वर्[2]णनिर्देशे तपरत्वं प्रसिद्धम्[3] । तेन सुद्यौः । सुद्यावौ । सुद्यावः । हे सुद्यौः । इत्यादि[4] ।

**रायो हलि ॥७।२।८५॥**

रैशब्दस्या[5]कारः स्याद्धलि विभक्तौ । अचि आयादेशः । रा[6]ः । रायौ । रायः । रा[7]यम् । रायौ । रायः । राया । राभ्याम् । इत्यादि ॥

---

तत् किमुच्यत ओकारान्तोपलक्षणार्थमित्याशङ्क्याह । **यस्मादि-**त्यादि । यस्माद्धेतोस्तत्कालावधारणार्थं तपरत्वं वर्णनिर्देशे प्रसिद्धं 'वृद्धिरादैच्' इत्यादौ । न चायं वर्णनिर्देशः किं तु शब्दनिर्देशस्तस्मादेतत् तपरत्वमोकारान्तोपलक्षणार्थमेव तेन सुद्यौरित्यादि सिध्यतीति । केचित् 'ओतो णित्' इति सूत्रं पठन्ति तदपि प्रमाणम् । उभयथा ह्याचार्येण शिष्याः प्रतिपादिताः ॥

इत्योदन्ताः ॥

**रायः** । 'हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि' इत्यभिधाने पुलिङ्गसाहचर्यात् पुंसि ॥

इत्यैदन्ताः ॥

---

१. °रान्तस्योप° $B_2$. २. °द्वर्णे निर्देशे $B_1$. ३. After this—हे चित्रगो । परमगव इत्यत्र 'एकदेशविकृतमनन्यवद् भवति' इत्यनया परिभाषया वृद्धौ सत्याम् 'अङ्गान्त्यकार्ये कृते पुनर्नाङ्गान्त्यकार्यम्' अनया वृद्धिर्न । तेन सुद्यौः &c., $D_2$. ४. इत्योदन्ताः after it—C; $D_1$ drops इत्यादि. ५. °स्याकारान्तादेशः $B_2$; °स्याकारादेशः $D_1$, $D_2$. ६. सुराः । सुरायौ । सुरायः । इत्यादि ॥ इत्यैदन्ताः । C. ७. हे राः before it—$D_2$; हे राः for रायम् । रायौ रायः । $D_1$.

ग्लौशब्दस्य हलादावविशेषः । अजादावावादेशः । ग्लौः[1] । ग्लावौ । ग्लावः[2] । इत्यादि[3] ॥

इत्यजन्ताः पुंलिङ्गाः ॥

---

ग्लौरिति । 'ग्लौर्मृगाङ्कः कलानिधिः' ।

इत्यौदन्ताः ॥

अत्र ऋकारान्ता ऌकारान्ता एकारान्ताश्चाप्रसिद्धत्वान्नोदाहृताः। इति

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहाचार्यो-
यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीयव्याख्याने[4]-
गुः प्रसादे सुविशदमिह पुल्लिङ्गशब्दा अजन्ताः ॥

---

१. $B_1$, C, $D_4$, $D_6$ drop ग्लौशब्दस्य....वादेशः ।. २. हे ग्लौः । ग्लावम् ग्लावौ । ग्लावः । ग्लावा । ग्लौभ्याम् । इत्यादि । $D_1$; After it—हे ग्लौः $D_2$, $D_5$; हे ग्लौः । इत्यादि । $D_3$. ३. इत्यौदन्ताः after it C. ४. व्याख्यानेस्मिन् प्रसादे $Dc_1$, $Dc_2$.

आबन्तत्वात् स्वाद्युत्पत्तिः। हल्ङ्याबिति सुलोपः[1]। रमा। दीर्घात् किम्। अतिखट्वः। निष्कौशाम्बिः।

**औङ आपः ॥७।१।१८॥**

आबन्तादङ्गात्[2] परस्यौङः शी स्यात्॥ औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः।

---

**अथ स्त्रीलिङ्गाः शब्दा अजन्ता[3] उच्यन्ते ॥**

आबन्तत्वादिति[4]। रमाशब्दस्य 'अजाद्यतष्टाप्' इति टाबन्तत्वेनाबन्तत्वात् 'स्वौजसमौट्' इत्यादिना स्वाद्युत्पत्तिरित्यर्थः। तत्र प्रथमैकवचने[5] रमा सु इति स्थिते 'हल्ङ्याब्--' इति सोर्लोपो भवतीत्याह। हल्ङ्याब् इति। 'हल्ङ्याब्भ्यः--' इति सूत्रे यद् दीर्घग्रहणं तत्प्रत्युदाहरणव्याजेन। ङ्याबन्तयोर्ह्रस्वत्वे जाते यादृशं रूपं भवति तद् दर्शयति। दीर्घादित्यादि। खट्वामतिक्रान्तोऽतिखट्वः। निर्गतः कौशाम्ब्या निष्कौशाम्बिः। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्[6]।

औङः। प्रथमाद्वितीययोरौकारयोर्ग्रहणार्थमौङिति ङित् पठितः। न च ङित्त्वे शयां परतो याडादीनि कार्याणि स्युरित्याशङ्कनीयम्। ङिदिति हि वर्णनिर्देश इति तानि ङिदादौ विधीयन्ते। अथवा पूर्वाचार्याणां संज्ञेयम् औङिति औकारविभक्तेरित्येतच्चेतसि[7] कृत्वाह। औङित्यादि। तथा चोक्तम्।

'औकारोयं शीविधौ ङिद् गृहीतो
ङिच्चास्माकं नास्ति कोयं प्रकारः।
सामान्यार्थस्तस्य चासञ्जनेस्मिन्
ङित्कार्यं ते शयां प्रसक्तं स दोषः ॥१॥

---

१. सोर्लोपः D5, D4, D3, D2. २. B1 drops अङ्गात्. ३. अजन्ताः शब्दा Dc4. ४. आबन्तत्वात् स्वाद्युत्पत्तिरिति। Dc2. ५. °वचनं Nc2, Bc1. ६. ह्रस्वः। Dc4. ७. च औकार° Dc1.

**सम्बुद्धौ च ॥७।३।१०६॥**

आप एकारः स्यात् संबुद्धौ ॥ एङ्ह्रस्वादिति संबुद्धि[1]-लोपः। हे रमे। हे[2] रमे। हे रमाः। रमाम्। रमे। रमाः। स्त्रीत्वान्नत्वाभावः।

**आङि चापः ॥७।३।१०५॥**

आङि ओसि च[3] आबन्तस्य एकारः[4] स्यात्[5] ॥ रमया। ङ्याब्ग्रहणे दीर्घग्रहणादेत्वमत्र न। अतिखट्वेन। रमाभ्याम्। रमाभिः।

**याडापः ॥७।३।११३॥**

[7]आपः परस्य ङिद्वचनस्य याडागमः स्यात् ॥

---

'ङिन्त्वे विद्याद् वर्णनिर्देशमात्रं
वर्णे यत् स्यात्तच्च विद्यात् तदादौ।
वर्णश्चायं तेन ङिन्त्वेप्यदोषो
निर्देशोयं पूर्वसूत्रेण वा स्यात् ॥२॥' इति।

आबिति टाप् डाप् चापां सामान्यग्रहणम्।

**आङीति। ङ्याबिति।** ङ्यापोर्ग्रहणे दीर्घग्रहणात् दीर्घविशेष-ग्रहणात् अतिखट्वेनेत्यत्रैत्वं न। अयं भावः। 'हलङ्याब्भ्यो दीर्घात्' इति योगविभागः कर्तव्यः। इह शास्त्रे यावत् ङ्यापोः कार्यं तावत् सर्वं दीर्घयोः स्यात् ह्रस्वयोर्मा भूदिति। ततः 'सुतीत्यपृक्तं हल्' इति द्वितीयो योगः। अत्र च हल्ङ्याब्भ्यो दीर्घादिति वर्तते[6]।

**याट्।** अतिखट्वायेत्यत्राकृते दीर्घे ङ्याब्ग्रहणे दीर्घग्रहणात् याँडागमो न भवति कृते तु लाक्षणिकत्वान्न भवति।

---

१. संबुद्धेर्लोपः $D_3$. २. $D_1$, $D_2$, drop हे रमे। हे रमाः।. ३. परे P; च परे $D_2$. ४. एकारादेशः P. ५. Dropped $B_2$. ६. °दित्यनुवर्तते। $Dc_2$. ७. याडापो न $Nc_2$.

आटश्च ॥६।१।९०॥

आटोचि परे वृद्धिरेकादेशः ॥ रमायै। रमाभ्याम्। रमाभ्यः। रमायाः २। रमयोः २। रमाणाम्। ङेरामित्यादेशः। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः।

सर्वनाम्नः स्याड्ढ्रस्वश्च ॥७।३।११४॥

आपः सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः॥ सर्वस्यै। सर्वस्याः २। आमि सुट्। सर्वासाम्। सर्वस्याम्। शेषं रमावत्। एवं विश्वादय आबन्ताः।

---

आटः। चकारोऽधिकविधानार्थः। तेन उस्रामात्मन ऐच्छत् औस्रीयत् औंकारीयत् आ ऊढा ओढा तामैच्छत् औढीयत् इत्यत्र 'उस्यपदान्तात्' 'ओमाङोश्च' इति पररूपं न भवति। ननु च रमाया ए इति 'वृद्धिरेचि' इति वृद्धया रमायै इति सिध्यति रमायाः इत्यादि तु सवर्णदीर्घेण तत् किमेतत् सूत्रारम्भेण। नैष दोषः। यद्यप्येतत् सिध्यति तथापि ऐषिष्टेत्यादि न सिध्यति तदर्थमेतत् सूत्रमवश्यमारब्धव्यम्। तत् तदर्थं कृतमेतदर्थमपि भवति। याटोप्यन्ते आट् अस्तीति एतच्चेतसि कृत्वात्रेदं सूत्रं पठितमाचार्यवर्यैः। तथा च धर्मकीर्तिना रूपावतारे जायाशब्दरूपवर्णने 'याडापः' इत्येतदुक्त्वा 'आटश्च' इत्येतत् पठितं जायायै जायाया इत्येतद्रूपसिद्ध्यर्थम्। तथा विचारचिन्तामणौ बोपदेवपण्डितैरपि पठितम्।

'शिवाभ्यां च शिवाभिर्या डाप आटश्च वृद्धिरे।
शिवायै च शिवाभ्यां च शिवाभ्यः पुनरप्ययम्॥' इति।

सर्वनाम्नः। याटोऽप्येपवादः। आपः किम्। भवत्यै। भवत्याः।

---

१. After it—स्यात् $B_2$, $D_2$, $D_3$. २. $B_1$ drops this sentence. ३. $B_1$ drops शेषं रमावत्. ४. °दयोऽप्याबन्ताः $D_5$. ५. ऐक्षिष्ट° $Nc_2$, $Dc_4$, $Dc_3$; ऐधिष्ट° $Nc_1$. ६. Before this—च $Dc_2$. ७. After it—शिवायै इति सिद्धये $Dc_3$. ८. च्चि शिवायै $Nc_1$, $Dc_1$, $Dc_2$. ९. अपि dropped $Bc_1$, $Dc_4$.

**विभाषा दिक्समासे बहुव्रीहौ ॥१।१।२८॥**

अत्र सर्वनामता वा[1] ॥ उत्तरपूर्वस्यै । उत्तरपूर्वायै । अपूरीत्युक्तेः अन्तरायै नगर्यै ॥

**विभाषा द्वितीयातृतीयाभ्याम् ॥७।३।११५॥**

आभ्यां परस्य ङितः स्याड् वा[2] स्यात् ह्रस्वश्च[3] वा[4] ॥ द्वितीयस्यै । द्वितीयायै । द्वितीयस्याः । द्वितीयायाः । पुनस्तौ । द्वितीयस्याम् । द्वितीयायाम् । शेषं रमावत् ॥

**अम्बार्थनद्योर्ह्रस्वः ॥७।३।१०७॥**

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् संबुद्धौ । हे अम्ब । शेषं रमावत्[5] । एवमक्काल्लादयः । डलकवतीनां न ह्रस्वः[6] ।

---

**विभाषा** । 'न बहुव्रीहौ' इति प्रतिषेधे प्राप्ते विकल्प आरभ्यते । दिशां समासो दिक्समासः । उत्तरपूर्वस्यै इति । उत्तरस्याः पूर्वस्याश्चान्तरालमुत्तरपूर्वा । 'दिङ्नामान्यन्तराले' इति समासः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भाव इति पुंवत् । समासग्रहणं समास एव यो बहुव्रीहिस्तत्रैव यथा स्यात् बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत् । दक्षिणदक्षिणस्यै देहीति । 'आबाधे च' इति द्विर्वचनं बहुव्रीहिवद्भावश्च । **अपुरीति** । अन्तरापुरीत्यत्रापुरीत्युक्ते अन्तरशब्दस्य नगरीवाचकस्य सर्वनामसंज्ञा नेति अन्तरायै इति याट् स्यात् न स्याडित्यर्थः ।

**विभाषा** । **पुनस्ताविति** । पुनरतौ प्रयोगौ द्वितीयस्या द्वितीयाया इति ।

**अम्बार्थ** । अम्बार्था मात्रर्थाः । मातुर्मातजादेशो वाच्यः संबुद्धौ अर्हन्तं पुत्रमभिधातुम् । चोन्तोदात्तार्थः । गार्गीमात । **डलकवतीति** ।

---

१. वा स्यात् $B_2$. २. C $D_4$, $D_6$ drop वा. ३. आपश्च ह्रस्वः $D_3$. ४. P, $B_2$ drop वा; $D_1$ drops च वा. ५. शेषं रमावत् dropped $B_2$. ६. $D_1$ drops it.

जरा[1]। हलि रमावत्। अचि वा जरसादेशः। जरसौ[2]। केचित् पूर्वविप्रतिषेधेनादौ शीभावमिच्छन्ति। जरसी। जरे। जरसः। जराः। इत्यादि[3]। 'पद्दन्—' इति नासिकाया नस् निशाया[4] निश्। नसः। नसा। 'हशि[5] च।' नोभ्याम्[6]। निशः। निशा।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥८।२।३६॥**

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारो[7]न्तादेशः स्याज्झलि[8] पदान्ते च। 'झलां जशोन्ते' इति जश्त्वम्[9]। डकारः[10]।

---

डलका यासामक्षरश्रुतीनां सन्ति ता डलकवत्यः। अथवार्थगतेन स्त्रीत्वेन अम्बार्था निर्दिष्टाः। अत्रासंयुक्ता डलका गृह्यन्ते। अतः अक्क अल्ल इत्यत्र ह्रस्वः स्यादेव। 'जराया जरसन्यतरस्याम्' इत्यचि वा जरसादेशः स्यादित्याह। अचीत्यादि। जरसाविति। जरा औ इति स्थिते 'औङ आपः' इति शीभावः प्राप्नोति जरस्भावश्च। तत्र परत्वाज्जरस्भाव एव भवति। केचिदिति। तथा च दुर्गसिंहवृत्तौ 'औरीम्' इति सूत्रव्याख्याने उक्तम्। 'दीर्घात् किम्। जरसीति केचित्' इति[11]। नसः। नसा। इति। नासिकाशब्दस्य नसादेशे शसि टाप्रत्यये च परे पक्षे सर्वनामस्थाने च रमावत्।

व्रश्च[12]। ओ व्रश्चू छेदने। भ्रस्जो पाके। सृज विसर्गे। मृजूष शुद्धौ। यज देवपूजासंगतिकरणदानेषु। राजृ दीप्तौ। टु भ्राजृ

---

१. Before it—अत्रासंयुक्ता डलका गृह्यन्ते। हे अम्बाडे। हे अम्बाले। हे अम्बिके। ङि संबुद्धौ ह्रस्वो वेति वक्तव्यम्*। हे देवत। हे देवते। हे देवते। हे देवताः। P; $B_2$ and $D_3$ have अत्रासंयुक्ता डलका गृह्यन्ते after the form हे अम्बिके and drop from ।ङि to हे देवताः. २. जरसौ dropped $D_1$, B, P, C. ३. इत्यादि dropped $B_1$. ४. निशाया निश् after नोभ्यामित्यादि $D_3$. ५. Dropped P, $B_1$, $D_2$, $D_3$. ६. After it—इत्यादि $D_1$, $D_2$, $D_3$, $D_4$. ७. षकारान्तादेशः $D_1$. ८. झलि परे $D_1$; झलि परतः $D_2$. ९ जश्त्वेन $D_4$, P, C; जश्त्वम् dropped $D_3$. १०. डत्वम् $D_3$. ११. इच्छन्तीति $Dc_4$. १२. व्रश्चू $Dc_1$.

निड्भ्याम् । निड्भिः । इत्यादि ॥ मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा* ॥ पृतनायाः पृत् । पृतः । पृता । पृद्भ्याम् । इत्यादि । पक्षे सुटि च रमावत् । गोपा विश्वपावत् । मतिर्हरिवत् । स्त्रीत्वाच्छसो नत्वाभावः । मतीः । टा इत्यस्य न नात्वम् । मत्या ।

**ङिति ह्रस्वश्च ॥१।४।६॥**

इयङुवङ्स्थानौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति परे न तु स्त्री ॥

---

दीप्तौ । **निड्भ्याम्** इत्यादि । निश् समाधौ क्विबन्तः । ततः 'आपं चैव हलन्तानाम्' इति **भागुरिमतेनाप्** । ततो निश् आदेशः । पश्चात् षः । यदि च 'व्रश्चभ्रस्ज–' इति सूत्रे 'दादेर्धातोः–' इत्यतः 'धातोः' इत्यनुवर्तते तर्हि आबभावपक्षे रूपं निड्भ्यामिति । **गोपा विश्वपावदिति** । गाः पातीति गोपाः । अयं विश्वपाशब्दवत् । आबन्तत्वाभावादाब्विधिर्न स्यादिति भावः ॥

इत्यादन्ताः ॥

**टा इत्यस्य न नात्वमिति** । स्त्रीत्वादेव । ङिति । 'यू स्त्र्याख्यौ नदी' इति दीर्घयोरेव नदीसंज्ञा विहितेति ह्रस्वयोर्न प्राप्नोति । 'नेयङुवङ्स्थानावस्त्री' इतीयङुवङ्स्थानयोश्च निषिद्धा तस्मात् ह्रस्वयोरियङुवङ्स्थानयोश्च ङिति वा विधीयते । **इयङुवङ्स्थानौ** इत्यादि । इयङुवङ्स्थानौ नित्यस्त्रीलिङ्गावीकारोकारौ ह्रस्वौ नित्यस्त्रीलिङ्गाविकारोकारौ स्त्रीलिङ्ग एव वा नदीसंज्ञौ स्तः न तु लिङ्गान्तरे स्त्रीशब्दं विनेत्यर्थः । तथा चोक्तं **महाभाष्ये** । 'ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । किं प्रयोजनम् । श्रियै । अतिश्रियै ब्राह्मण्यै । क्व मा भूत् । श्रिये अतिश्रिये ब्राह्मणाय । भ्रुवै । अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत् ।

---

१. इति $D_1$. २. शसादौ परे $D_2$. ३. टापं $Dc_1$. ४. च प्राक् $D_3$. ५. °वचनादेव $Dc_2$.

**आण् नद्याः ॥७।३।११२॥**

नद्यन्तात् परेषां ङितामाडागमः स्यात्। 'आटश्च' इति वृद्धिः[1]। मत्यै। मतये। मत्याः। मतेः २[2]। मत्याम्[3]। मतौ। एवं श्रुतिस्मृतिबुद्ध्यादयः[4][5]॥

---

भ्रुवे अतिभ्रुवे ब्राह्मणाय। शकट्यै। अतिशकट्यै ब्राह्मण्यै। क्व मा भूत्। शकटये अतिशकटये ब्राह्मणाय। धेन्वै अतिधेन्वै ब्राह्मण्यै। क्व मा भूत्। धेनवे अतिधेनवे ब्राह्मणाय' इति। तथाग्रे उक्तम्। 'प्रथमलिङ्गग्रहणं चोदितं तद् द्रष्टव्यं[6] विजानीयात्। सर्वमेवं[7] विकल्प्यते इति तदाचार्यः सुहृद् भूत्वाचष्टे' इति॥

**आण्नद्याः। मतये** इति। नदीसंज्ञाभावे घिसंज्ञा ततो 'घेर्ङिति' इति गुणः। **मत्यामिति**। अत्र स्पष्टत्वादव्याख्यातं यत् सूत्रम् 'इदुद्भ्याम्*' ७।३।११७॥ इति तेन ङेराम्। अस्यायमर्थः। इकारोकाराभ्यां नदीसंज्ञाभ्यामुत्तरस्य ङेराम् स्यादिति। ननु च यद्यत्रापि नद्या इति वर्तते तर्हि 'ङेराम्नद्याम्नीभ्यः' इत्यनेनैवाम् सिद्धः किम् 'इदुद्भ्याम्' इत्यनेन। मैवं वोचः। 'औत्' इत्यौत्वं परत्वादामं बाधित्वा स्यात् तन्मा भूदित्येवमर्थमिदं पृथक् सूत्रम्। ननु च 'औत्' इति सूत्रे घिनदीसंज्ञावर्जिताभ्यामिति व्याख्यातम्। अयं च नदीसंज्ञः। तत् कुत औत्वप्रसङ्गः। नैष दोषः। 'इदुद्भ्याम्' इत्यस्मिन्[8] पृथग्योगे सति तद् व्याख्यानं नान्यथेति तस्मिन्नेव सूत्रे सूचितम्। **मतौ** इति[9]। नदीसंज्ञाभावे 'अच्च घेः' इत्यौत्वमन्तादेशश्चाकारः॥

---

१. 'आटश्च' इति वृद्धिः dropped D2. २. Before it—मत्योः २। D2. ३. After it—इत्यादि P. ४. भूतिस्मृतिश्रुति° D1. ५. After it the verse—

अवीतन्त्रीतरीलक्ष्मीह्रीधीश्रीणामुणादितः।
शब्दानां तु भवत्येषां सिलोपो न कदाचन॥ B1.

६. कर्तव्यमिति Dc3. ७. सर्व एवं Nc1. ८. °मित्येतस्मिन् Dc3, Nc1; अस्मिन् dropped Dc1. ९. Dropped Dc1.

**त्रिचतुरोः स्त्रियां तिसृचतसृ ॥७।२।९९॥**

एतयो[३]रेतावादेशौ स्तः[१] स्त्रियां विभक्तौ परतः[२] ॥

**अचि र ऋतः ॥७।२।१००॥**

तिसृचतसृशब्दयोः ऋकारस्य रेफादेशः स्यात् अचि[४] । गुणदीर्घोत्वानामपवादः ॥ तिस्रः २ । तिसृभिः । तिसृभ्यः २ । आमि[५] 'नुमचिर' इति नुडेव ॥

**न तिसृचतसृ ॥६।४।४॥**

एतयोर्नामि[६] दीर्घो न स्यात् ॥ तिसृणाम् । तिसृषु ।

---

त्रिचतुरोः । स्त्रियामिति किम् । त्रयः । चत्वारः । विभक्तौ किम् । त्रिभार्यः । चतुर्भार्यः[७] । संज्ञायां कनि तिसृभावो वाच्यः । तिसृकः । चतसृशब्दस्याद्युदात्तत्वं निपात्यम् । चतस्रः पश्येत्यत्र 'चतुरः शसि' इत्येष स्वरो मा भूदिति । चतसृणामित्यत्र तु 'षट्चतुर्भ्यो हलादिः' इत्येष स्वरो भवति । हलादिग्रहणसामर्थ्यात् निपातनस्वरबाधात् ।

अचि । गुणदीर्घोत्वानामपवाद इति । गुणस्य 'ऋतो ङिसर्वनामस्थानयोः' इति प्राप्तस्य । दीर्घस्य 'प्रथमयोः पूर्वसवर्ण—' इति पूर्वसवर्णदीर्घस्य । उत्वस्य 'ऋ उत्' इति प्राप्तस्यापवादः बाधको रेफ इत्यर्थः । तत्र गुणस्य पूर्वविप्रतिषेधेन इतरयोः परविप्रतिषेधेन ।

न तिसृ । अयमेव प्रतिषेधो ज्ञापकः अचि रात् पूर्वविप्रतिषेधेन नुट् स्यादित्यस्यार्थस्य । 'त्रिचतुरोः स्त्रियाम्' इत्यत्र सूत्रे वर्तमानं 'स्त्रियाम्' इति पदमङ्गस्य प्रकृतत्वात् तस्यैव विशेषणं

---

१. भवतः P. २. $B_1$ drops परतः. ३. एतयोः for शब्दयोः P, $D_1$, $B_2$. ४. अचि dropped $Dc_2$; अचि परे $Dc_3$. ५. आमि नुडेव $B_2$. ६. एतयोरङ्गयो° $D_3$. ७. चतुर्भार्यः dropped $Dc_1$.

स्त्रियामिति त्रिचतुरोर्विशेषणं नाङ्गस्य तेन स्त्रियां गौणयोर्नैतावादेशौ[1]। प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः। प्रियत्री। प्रियत्रयः[2]। प्रियचत्वाः[3]। 'चतुरनडुहोः—' इत्याम्। इत्यादि। यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदादेशौ[4] स्त एव। प्रियास्तिस्रो

---

न त्रिचतुरोरिति कस्यचिदाशङ्का स्यात्तामपनुदन्नाह। स्त्रियामितीत्यादि। यतः स्त्रियामित्येतत्पदं प्रत्यासत्त्या त्रिचतुरोरेव विशेषणं नाङ्गस्य तेन कारणेन अङ्गस्य स्त्रियां प्राधान्येन वृत्तावपि[5] स्त्रियामप्रधानयोस्त्रिचतुर्शब्दयोस्तिसृ चतसृ इत्येतावादेशौ न भवत इत्यर्थः। तादृशं स्थलं दर्शयति। प्रिया इत्यादि। अत्र प्रियत्रिरित्येतदङ्गं मुख्यवृत्त्या स्त्रियां वर्तते। त्रिशब्दस्तु मुख्यया वृत्त्या पुंसि नपुंसके वा वर्तते स्त्रियां तु गौण्या वृत्त्येति न भवति तिसृभावः। तेन मतिशब्दवदस्य रूपं नेयम्। प्रियचत्वा इति। प्रियाश्चत्वारश्चत्वारि वा यस्याः सा प्रियचत्वाः। अत्रापि चतुःशब्दोऽप्राधान्येन स्त्रियां वर्तते प्राधान्येन पुंनपुंसकयोस्तेन चतसृभावो न। प्रिय चतुर् स् इति स्थिते 'चतुरनडुहोरामुदात्तः' इत्याम्। सुलोपः। रेफविसर्गः[6]। आदिना। प्रियचत्वारौ। प्रियचत्वारः। हे प्रियचत्वः। प्रियचत्वारम्। प्रियचत्वारौ। प्रियचतुरः। प्रियचतुरा। प्रियचतुर्भ्याम्। प्रियचतुराम्। प्रियचतुर्षु। इत्यादि। यदेत्यादि। यदा त्रिचतुर्शब्दौ स्त्रियां मुख्यया वृत्त्या वर्तेते लिङ्गान्तरे पुंनपुंसकयोर्गौण्या वृत्त्या वर्तेते तदा त्रिचतुर्शब्दयोस्तिसृचतसृशब्दावादेशौ भवत एव यद्यप्यङ्ग

---

१. After it—स्तः B1, C, D3. २. After it—शेषं हरिवत् D3. ३. प्रियचत्वारि for it C; After it—मतिवत् D2; after it—प्रियचत्वारौ। प्रियचत्वारः। D5. ४. तदा त्वादेशौ B2. ५. प्रवृत्ता° Dc3. ६. रेफस्य विसर्गः। Nc2, Dc1, Dc2.

यस्य स प्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रम् । प्रियतिस्रौ । शसि प्रियातिस्रः[२] । ङसि प्रियातिस्रः । ङौ प्रियतिस्रि । क्लीबे प्रियतिसृ । प्रियतिसृणी[३] । इत्यादि । एवं प्रियचतसा । प्रियचतसृ[४] । द्वेरत्वे सत्याप् । द्वे २ । द्वाभ्याम् ३ । द्वयोः २ । गौरी । गौर्यौ । गौर्यः ।

---

स्त्रियां न वर्तते तदापीत्यर्थः । तादृशं स्थलं दर्शयति । **प्रियास्तिस्रोऽस्य प्रियतिसेति** । अत्र त्रिशब्दो मुख्यया वृत्त्या स्त्रीमाह पुमांसं तु गौण्या वृत्त्या । **प्रियतिसेति** । तिसृभावोऽनङ् उपधादीर्घः सुलोपः नलोपः । **प्रियतिस्रावित्यादि** । गुणअमिपूर्वत्वपूर्वसवर्णदीर्घऋत्वउत्वानि बाधित्वा 'अचि र ऋतः' इति रेफः । **क्लीबे** इति । प्रियास्तिस्रो यस्य तत् **प्रियतिसृ** । **एवं प्रियचतसेति** । प्रियाश्चतस्रोऽस्य प्रियचतसा प्रियतिसृवत् प्रक्रिया । **प्रियचतसृ** । एतत् क्लीबे । **द्वेरत्वे** इति । द्विशब्दो द्विवचनान्तस्तस्य द्वि औ इति स्थिते 'त्यदादीनामः' इत्यत्वम् । तस्मिन् कृतेदन्तत्वाद् 'अजाद्यतष्टाप्' इति टाप् । ननु च विभक्तौ परतस्त्यदाद्यत्वं विधीयते तत्र यदि त्यदाद्यत्वे कृते टाप् स्यात् विभक्तिपरत्वं व्याहन्येत तन्नायुक्तम् । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया निषिद्धत्वात् । नैष दोषः । अनित्यैषा परिभाषेति । तत 'औङ आपः' इति शीभावः । ततो गुणः ॥

इतीदन्ताः ॥

---

१. यस्यासौ B1, यस्य यस्या वा सा D2, D3.: अस्य Com. २. After it—प्रियातिस्रा । प्रियतिस्रे । प्रियतिस्रः २ । प्रियतिस्रि । क्लीबे, &c., D3, D4. ३. After it—प्रियतिसृणि D1, D3. ४. प्रियचतस्रौ for प्रियचतसृ B2, D2 follows B2, and has one more form प्रियश्चतस्रः. ५. Before it—'दीर्घाज्जसि च' इति पूर्वसवर्णनिषेधः D1. ६. तथापि Bc1. ७. °भावे Nc2. ८. अनित्येयं Dc4, Dc3.

**यू स्त्र्याख्यौ नदी ॥ १।४।३॥**

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ॥ अम्बार्थेति[1] ह्रस्वः । ह्रस्वविधिसामर्थ्यान्न गुणः । हे गौरि । गौरीम् । गौर्यौ । गौरीः । गौर्या । गौरीभ्याम् ३ । गौरीभिः । 'आण् नद्याः' । गौर्यै । गौरीभ्यः[2] २ । गौर्याः २ । गौर्योः २ । गौरीणाम्[3] । गौर्याम् । गौरीषु । एवं वाणीनद्यादयः[6] । लक्ष्मीः । अङ्यन्तत्वान्न सुलोपः[7] । शेषं गौरीवत्[8] । एवं तरीतन्त्र्यादयः[9] । स्त्री । ङ्यन्तत्वात् सुलोपः । हे स्त्रि ।

---

**गौरीति** । 'षिद्गौरादिभ्यश्च' इति ङीष् । ततो ङ्यन्तत्वात् सुलोपः । **गौर्याविति** । 'दीर्घाज्जसि च' इति पूर्वसवर्णनिषेधाद्यणादेशः । **यू** । ई च ऊ च यू । अविभक्तिको निर्देशः । स्त्रियमाचख्याते स्त्र्याख्यौ । मूलविभुजादित्वात् कः । अत्र च यदि ईदूतोरेव संज्ञा स्यात् तदा हे लक्ष्मि हे यवाग्वित्यादि न स्यात् । समुदायो ह्यत्र स्त्र्याख्यो न त्वीदूतौ तस्मादीदूदन्तस्यैवेयं संज्ञा । एवं तर्हि ङ्या नदीसंज्ञा न स्यात् । नैवम् । व्यपदेशिवद्भावात् स्यात् । ननु च संज्ञाविधौ तदन्तविधिर्नेति 'सुप्तिङन्तम्—'इत्यन्तग्रहणेन ज्ञापितम् । नैष दोषः । यदयं 'नेयङुवङ्स्थानावस्त्री' इति प्रतिषेधयति तज्ज्ञापयति स्यादत्र तदन्तविधिरिति । न हि यूमात्रं स्त्र्याख्यमियङुवङ्स्थानं संभवतीत्येतत् सर्वं मनसि[10] कृत्वाह । **ईदूतौ नित्यस्त्रीलिङ्गाविति** ।

---

१. अम्बार्थनद्योर्ह्रस्वः $B_1$. २. गौर्यै इत्यादि $D_3$. ३. Dropped $D_2$. ४. Dropped $D_2$. ५. Dropped $D_2$. ६. वाण्यादयः $D_3$. ७. Before it—लक्ष्मेर्मुट् ईच । $D_5$. ८. शेषं गौरीवत् dropped $D_2$. ९. P drops तरी. १०. चेतसि कृत्वा $Dc_1$, $Nc_1$, $Nc_2$.

**स्त्रियाः ॥६।४।७९॥**

स्त्रीशब्दस्येयङ् स्यादजादौ[1] ॥ स्त्रियौ । स्त्रियः ।

**वाम्शसोः ॥६।४।८०॥**

अमि शसि च[2] स्त्रिया इयङ् वा स्यात् ॥ स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रीभ्याम् । स्त्रीभिः । स्त्रियै । स्त्रीभ्यः २ । स्त्रियाः २ । स्त्रियोः २ । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रीषु । श्रीः । श्रियौ । श्रियः । इत्यादि[3] ।

---

यू इति किम् । मात्रे । दुहित्रे । स्त्र्याख्यौ किम् । ग्रामण्ये । खलप्वे । आख्याग्रहः शब्दार्थे स्त्रीत्वे यथा स्यात् पदान्तरद्योत्ये मा भूत् । ग्रामण्ये स्त्रियै । खलप्वे स्त्रियै । एतयोः क्रियाशब्दयोः स्त्रियां वृत्तिः पदान्तरेण क्रियते । इष्वशन्यादीनां द्विलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति स्यादेव नदीत्वम् । इष्वै । अशन्यै । सामान्यशब्दस्य पट्वादेः स्त्रीपुंनपुंसकवृत्तेः पदान्तरेण[5] केवलं विशेषान्तरव्यवच्छेदः क्रियते इति तस्य शब्दार्थ एव स्त्रीत्वमित्याख्याग्रहणं निवर्त्यं न । पट्व्यै स्त्रियै । प्रथमं यः स्त्रियां वर्तते तस्य नदीत्वं स्यादित्यपि वाच्यम् । प्रयोजनम् क्विप्लुप्समासाः । कुमारीमिच्छति कुमारीयति । ततः क्विप् । कुमारी । कुमार्यै ब्राह्मणाय । 'लुम्मनुष्ये'[4] । खरकुट्यै पुंसे । बहुश्रेयस्यै पुंसे । ननु च गौरीशब्दस्य ह्रस्वत्वे कृते 'ह्रस्वस्य गुणः' इति गुणः स्यादित्याशङ्क्याह ।

---

१. After it–ङपि C, D3, B1. २. After it–परे D2, D3, C, B1. ३. After this B1 has नदीत्वेऽपि ङिति विकल्पः. ४. Dropped B2. ५. शब्दान्तर° Nc2, Dc1, Bc1.

**नेयङुवङ्स्थानावस्त्री ॥१।४।४॥**

ईयङुवङौ स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री ॥ हे श्रीः । 'ङिति ह्रस्वश्च' इति वा नदीत्वम् । श्रियै । श्रिये । श्रियाः । श्रियः ।

**वामि ॥१।४।५॥**

इयङुवङ्स्थानौ यूँ स्त्र्याख्यौ वामि नदीसंज्ञौ न तु स्त्री ॥

---

ह्रस्वविधिसामर्थ्यादिति । यदि ह्यत्र गुण इष्टः स्यात् 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा नदीह्रस्वयोर्गुण इत्येवं वदेत् । तथा च नोक्तं 'अम्बार्थनद्योर्ह्रस्वः' इत्युक्तम् । तस्मात् ह्रस्वविधिसामर्थ्याद् गुणो न भवतीत्यर्थः । एवं वाणीनद्यादय इति । वण्यते शब्द्यते इति वाणी । वण शब्दे । 'इणजादिभ्यः' इतीण् । 'कृदिकारादक्तिनः' । सर्वतोऽक्तिन्नर्थात् इति ङीष् । नदीति । नदट् इति पचादिगणे पठ्यते ततष्टित्त्वात् ।'टिड्ढाणञ्—' इति ङीप् । लक्ष्मीरिति ।'लक्षेर्मुट् च' इति ईमुडागमश्च । एवं तरीतन्त्र्यादय इति । 'अवितॄस्तृतन्त्रिभ्य ईः' इति ईप्रत्ययः । स्त्री । ङ्यन्तत्वात् सुलोप इति । संस्त्याने 'स्त्यायतेर्ड्रट्'। टिलोपः । टित्त्वात् ङीप् । ततो 'हल्ङ्याब्—' इति सुलोपः । हे स्त्रीति । 'यू स्त्र्याख्यौ—' इति नदीसंज्ञा । 'अम्बार्थ—' इति ह्रस्वः । स्त्रियाः । 'जातेरस्त्रीविषयादयोपधात्' इति निर्देशान्नेदं स्त्रीप्रत्ययानां ग्रहणं नापि स्त्र्यर्थवृत्तेः शब्दस्येति स्त्रीशब्द इति स्वरूपेण गृह्यत इत्याह । स्त्रीशब्दस्येति । श्रीरिति । श्रयन्त्येताम् 'क्विब् वचि'

---

१. इयङुवङ्स्थिति° D1. २. न नदीसंज्ञौ D3. ३. After it—श्रीभ्याम् । श्रीभ्यः D3. ४. ईदूतौ स्त्र्याख्यौ वा आमि नदीसंज्ञौ स्तः न तु स्त्री C. ५. आमि वा C, D3, D5, B1, B2. ६. After it—स्तः D1, D2, B2; वा स्तः D3. ७. तर्हि Dc4. ८. Before it—इति ड्रट् Dc3, Dc4. ९. एव for इति Dc4. १०. इत्याशयेनाह Dc3.

श्रीणाम् । श्रियाम् । श्रियि । श्रियोः । श्रीषु ॥ सुध्यादयः पुंवत् । सुष्ठु धीः । प्रकृष्टा धीरिति नित्यस्त्रीत्वे तु सुधीप्रध्यौ लक्ष्मीवत् । अमि शसि । प्रध्यम् । प्रध्यः । इति विशेषः ।

---

इति श्रियः क्विप् दीर्घश्च । अङ्यन्तत्वान्न सुलोपः । नेयङ् । स्थान-ग्रहणं यत्र इयङुवङोः स्थितिरभिनिवृत्तिस्तत्र प्रतिषेधो यथा स्यात् । यत्र त्वपवादेन तयोर्बाधा तत्र मा भूत् । प्रध्यै । वर्षाभ्वै । इति । वामि । संहितासाम्येऽपि षष्ठीबहुवचनस्यैव आमो ग्रहणं न द्वितीयैक-वचनस्य । तत्र नदीकार्याभावात् । नापि सप्तम्यादेशस्य । तस्य नदीसंज्ञोत्तरकालीनत्वात् विभक्तिसंबन्धेन चेयं नदीसंज्ञा विधीयते इति विभक्तिसंबन्धिन एव ङ्याख्यस्य नदीसंज्ञा युक्ता । तेन यत्रावयवः ङ्याख्यस्तत्र न । अतिश्रियां ब्राह्मणानामिति । सुध्यादय इति । सुष्ठु ध्यायति प्रध्यायतीति विग्रहादस्त्रीलिङ्गानां पदान्तरेण स्त्रीलिङ्गतेति नदीत्वाभावात् सुध्यादयः पुंवत् ज्ञेया इत्यर्थः । सुष्ठु धीः । प्रकृष्टा धीरित्यादि । तत्र सुधीशब्दस्येयङ्स्थानत्वान्नदीसंज्ञाया विकल्प-निषेधाभ्यां श्रीशब्दवत् । प्रधीशब्दस्य यणादेशेनेयङो बाधित्वात् नदीसंज्ञास्त्येवेति । तेन लक्ष्मीशब्दवत् प्रक्रियेत्यर्थः । अमीत्यादि । परत्वात् अमिपूर्वत्वं पूर्वसवर्णदीर्घत्वं च बाधित्वा यणादेश एव स्यादिति भावः ॥

इतीदन्ताः ।

---

१. After it–इत्यादि $B_1$. २. Dropped $D_1$. ३. शसि च P, $D_1$, $B_2$. ४. °रनिवृत्ति° $Dc_2$. ५. °बाधः $Bo_1$. ६. अत्र $Dc_1$. ७. निषेध-विकल्पाभ्यां $Bc_1$, $Dc_3$, $Dc_4$. ८. स्त्रीशब्दवत् $Nc_1$. ९. इति dropped $No_1$, $Dc_3$. १०. °दीर्घं च $Bo_1$.

धेनुर्मतिवत्। धेनुः। धेनू। धेनवः। [1]इत्यादि। एवं तन्वादयः।

**स्त्रियां च ॥७।१।९६॥**

[2]क्रोष्टु[3]शब्दस्तृजन्तवद्रूपं स्यात् स्त्रियाम् ॥

**ऋन्नेभ्यो ङीप् ॥४।१।५॥**

ऋदन्तेभ्यो [4]नान्तेभ्यश्च [5]स्त्रियां ङीप् स्यात् ॥ ङपावितौ। यण्। क्रोष्ट्री। क्रोष्ट्र्यौ। क्रोष्ट्र्यः। इत्यादि। [6]गौरीवत्।

---

धेनुरिति। धेनुशब्दो मतिशब्दवत् साध्यः। **स्त्रियां च।** स्त्रियां वर्तमानः क्रोष्टुशब्दः तृज्वत् स्यादित्य[7]र्थः। केचित्तु क्रोष्टुशब्दं गौरादिषु पठन्ति ते[8]न स्त्रियामिति स्त्रीप्रत्यये ङीषि[9] परतस्तृज्वद्भावो [10]भवतीति व्याचक्षते क्रोष्ट्रीशब्दस्यान्तोदात्तत्वार्थम्। तन्मते पञ्चभिः क्रोष्ट्रीभिः क्रीता रथास्तैः पञ्चक्रोष्टुभिरिति 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुकि कृते तृज्वद्भावो न प्राप्नोति। अत्र प्रतिविधेयमिति तन्मतं परित्यज्य स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य तृज्वद्भावे कृते 'ऋन्नेभ्यः—' इति ङीप् पश्चात् 'उदात्तयणो हल्पूर्वात्' इति क्रोष्ट्रीशब्दोऽन्तोदात्तो भवतीत्येतच्चेतसि कृत्वा पठति सूत्रम्—'ऋन्नेभ्य—' इति। **ङपाविताविति।** ङकारः सामान्यग्रहणार्थः। पकारः स्वरार्थः सामान्यग्रहणाविघातार्थश्च ॥

इत्युदन्ताः ॥

---

१. P, $B_2$ drop इत्यादि. २. क्रोष्टुस्तु $B_2$, $D_2$. ३. P, $D_1$, $D_4$; $D_5$ drops शब्द. ४. नकारान्तेभ्यश्च C; च dropped P, $B_1$, $B_2$. ५. After स्यात् in $D_1$, $D_2$. ६. शेषं गौरीवत् $D_3$. ७. °दिति भावः $Dc_3$. ८. ते for तेन $Bc_1$. ९. ङिपि $Dc_1$. १०. न भवतीति $Nc_1$.

वधूः । वध्वौ । वध्वः । गौरीवत्[2] । एवं चमूतन्वादयः । भ्रूः श्रीवत् । भ्रूः । भ्रुवौ । भ्रुवः । इत्यादि । सुभ्रूः । अस्य संबुद्धौ ह्रस्वतेति[3] केचित् । हे सुभ्रु । पुनर्भूः । खलपूवत् । नित्यस्त्रीत्वे[4] हे[5] पुनर्भु ।

---

वधूरित्यादि । उह्यते इति वधूः स्त्री । चमूशब्दः सेनावाची । तनूशब्दः शरीरवाची । तनुशब्दो ह्रस्वः स्त्रीलिङ्गस्ततो मतान्तरेण ऊङ् । यस्त्वल्पवाची स तु वाच्यलिङ्गः । भ्रूः श्रीवदिति । भ्रमु अनवस्थाने । अस्मात् 'भ्रमेश्च डूः' इति डूप्रत्यये टिलोपे च[6] भ्रूरिति भवति । सुभ्रूरित्यादि । तेषां[7] त्वयमभिप्रायः । 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यूङ् । तदन्तत्वान्नदीसंज्ञायाम् 'अम्बार्थ—' इति ह्रस्वता[8] । तथा च **कुमारसंभवे कालिदासेन** प्रयुक्तम् । 'विमानना सुभ्रु कुतः पितुर्गृहे' इति तथा च **भट्टिकाव्ये** प्रयोगः । 'हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः' इति । तथा च **वामनेनोक्तम्** । 'ऊकारान्तादप्यूङ्प्रवृत्तेः । उत[9] ऊङ् विहितः । ऊकारान्तादपि क्वचिद् भवति । आचार्यप्रवृत्तेः । कासौ प्रवृत्तिः । अप्राणिजातेश्चारज्ज्वादीनामिति । अलाबूः कर्कन्धूः इत्युदाहरणम् । तेन 'सुभ्रु किं संभ्रमेण[10]' । अत्र सुभ्रूशब्दात् ऊङ्प्रत्ययः सिद्धो भवति । 'ऊङि त्वसति सुभ्रूरिति स्यात्' इति । **पुनर्भूः खलपूवदिति** । दृन्कारपुनःपूर्वस्य* इति वक्तव्येन[11] यणादेशात् पुनर्भवतीति पुनर्भूरिति व्युत्पत्त्या नित्यस्त्रीत्वाभावान्नदीसंज्ञाभावः । **नित्यस्त्रीत्वे त्विति** । यदा तु पुनर्भूर्दिधिषूरुच्यते तदा नित्यस्त्रीत्वान्नदी-

---

१. P, $D_1$, $D_2$ have इत्यादि after it; इत्यादि । शेषं गौरीवत् $D_3$ २. $D_1$, $D_3$ drop गौरीवत्. ३. ह्रस्व इति $B_1$; ह्रस्वेति $D_1$; ह्रस्वो वेति केचित् । हे सुभ्रु । हे सुभ्रू $D_2$. ४. नित्यं P; नित्यस्त्रीत्वे तु $D_1$, $D_2$. ५. तु $D_3$. ६. च कृते $Dc_3$, $Dc_4$. ७. तथा च तेषामभि° $Dc_3$. ८. ह्रस्वतेति $Bc_1$, $Dc_4$. ९. उकारान्ता° $Bc_1$. १०. भ्रमेण $No_1$. ११. वक्तव्ये $Bc_1$.

**एकाजुत्तरपदे णः ॥८।४।१२॥**

एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य[1] प्रातिपदिकान्तनुम्विभक्तिस्थस्य[2] नस्य णः स्यात् ॥[3] पुनर्भूणाम् । शेषं वधूवत् । वर्षाभूः[4] ।

**वर्षाभ्वश्च ॥६।४।८४॥**

वर्षाभ्वो[5] यण् स्यादचि[6] ॥ वर्षाभ्वौ । वर्षाभ्वः । इत्यादि ॥[7] सुलूवत् । स्वयंभूः पुंवत् ।

**न षट् स्वस्रादिभ्यः ॥४।१।१०॥**

षट्संज्ञकेभ्यः स्वस्रादिभ्यो ङीप्टापौ न स्तः ॥

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

---

संज्ञायां ह्रस्वत्वादि नदीकार्यं स्यादित्यर्थः । एकाच । 'रषाभ्यां नो णः—' इत्यतः 'णः' इत्यनुवर्तमाने पुनर्णग्रहणं 'वा भावकरणयोः' इति विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम् । **पुनर्भूणामिति** । परत्वाद्यणं बाधित्वा नुट् । विभक्तिस्थत्वान्नस्य णत्वम् । **सुलूवदिति** । वर्षासु भवतीति वर्षाभूरिति यदा वाच्यलिङ्गत्वेन स्त्री विवक्ष्यते तदा सुलूवद् रूपं ज्ञेयम् । यदा तु भेकजातीया स्त्रीव्यक्तिः वर्षाभूरित्युच्यते तदा नित्यस्त्रीत्वात् वधूशब्दवत् वर्षाभूशब्दो ज्ञेयः ।

इत्यूदन्ताः ॥

न षट् । अत्र स्त्रियामित्यनुवृत्तेरस्मिन्नर्थे यदुक्तं तन्न भवति इति यो यतः प्राप्नोति स सर्वः स्त्रीप्रत्ययः प्रतिषिध्यत इत्यभिप्रेत्याह । **ङीप्टापौ न स्त इति** । ननु च तिसृचतसृभावो हि विभक्तौ

---

१. °दुत्तरस्य C. २. प्रातिपदिकान्तस्य नुम्° $B_1$. ३. C has before it— णग्रहणं नित्यत्वार्थम् । परत्वाद्यणं बाधित्वा नुट् ।. ४. Dropped $D_3$. ५. अस्य उवर्णस्य यण् &c. $D_2$. ६. °दचि सुपि $D_4$. ७. Dropped $D_2$.

'अप्तृन्—' इत्युपधाया दीर्घः[1]। स्वसा। स्वसारौ। धातृवत्[2]। शसि स्वसॄः। इति भेदः[3]। माता पितृवत्। शसि[4] मातॄः। द्यौर्गौवत्। राः पुंवत्। नौर्ग्लौवत्॥

इत्यजन्ताः स्त्रीलिङ्गाः

---

परतो विधीयते ताभ्यां परतो ङीप् चेत् स्यात् तर्हि तयोर्विभक्तिपरता व्याहन्येतेति 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्यनयैव परिभाषया ङीबभावः सिद्धः। तत् किमेतयोरत्र पाठेन। एवं तर्हि संनिपातलक्षणपरिभाषाया अनित्यत्वं ज्ञाप्यते। ततश्च ङेरत्वे सत्या-बित्यादि सिद्धं स्यात्॥

इति ऋदन्ताः॥

रा इति। ननु चायं पुंल्लिङ्ग एवेत्युक्तम्। सत्यम्। केचित्तु स्त्रीलिङ्गमप्येनमिच्छन्ति। तथा च क्षीरस्वामिनोक्तम्[7]। रान्त्येन[8] राः स्त्रीत्येके।

इत्यैदन्ताः॥

ग्लौः[9]। औदन्तः। अन्ये त्वप्रसिद्धाः। इति

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम्।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेगुः प्रसादे सुविशदमबला लिङ्गशब्दा अजन्ताः॥

---

१. इत्युपधादीर्घः C, $D_3$, $D_5$; इति दीर्घः $B_1$, $D_1$. २. शेषं धातृवत् P, $D_4$. ३. इति भेदः dropped B. ४. शसि मातॄः dropped P, C, $B_1$, $B_2$. ५. सुराः $D_3$. ६. Before it—द्यौः। औदन्तः। $Bc_1$, $Dc_3$, $Dc_4$. ७. °मिना प्रोक्तम्। $Dc_3$. ८. रान्त्येनां $Dc_3$. ९. नौः $Dc_3$, $Dc_4$.

**अतोम् ॥७।१।२४॥**

अतो[1]ऽङ्गात् नपुंसकात् स्वमोरम् स्यात् ॥ 'अमि पूर्वः'। ज्ञानम्। 'एङ् ह्रस्वात्' इति हल्मात्रलोपः[2]। अमिपूर्वत्वम्। हे ज्ञान।

**नपुंसकाच्च ॥७।१।१९॥**

नपुंसकात् परस्यौङः शी स्यात् ॥ भसंज्ञायाम्।

**यस्येति च ॥६।४।१४८॥**

---

अथ न[4]पुंसकलिङ्गाः प्रदर्श्यन्ते।

**अतोम्।** 'स्वमोर्नपुंसकात्' इति प्राप्तस्य लुकोऽपवादः। तपरकरणं मुखसुखार्थम्। न च दीर्घनिवृत्त्यर्थम्। दीर्घस्य 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वविधानात्। ननु च किमर्थममादेशः क्रियते। मकार एवादेशः किं नोच्यते। न चैवम् 'आदेः परस्य' इति द्वितीयैकवचनो[5]कारमकारे कृते द्वयोर्मकारयोः श्रवणं स्यादिति वाच्यम्। एकस्य संयोगान्तलोपेना[6]पहानादिति चेदु[7]च्यते। यदि मकारमा[8]त्रमादेशः स्यात् 'सुपि च' इति दीर्घः स्यात् संनिपातलक्षणपरिभाषाया अनित्यत्वात्। **ज्ञानमिति।** ल्युडन्तत्वात् 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वात् सुः। **एङिति।** हे ज्ञान स् इति स्थिते आमि 'एङ् ह्रस्वात् संबुद्धेः' इति संबुद्धेर्हल्मा[9]त्रमस्य लोप इत्यर्थः।

**नपुं।** **भसंज्ञायामिति।** 'यचि भम्' इति सूत्रेण।

**यस्येति च।** यदीदं यस्येति यकारस्य ग्रहणं स्यात् 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इत्युत्तरसूत्रे पुनर्यकारग्रहणं न कुर्यात्। एतदेवानुव[10]र्तिष्यते। तस्मादिवर्णावर्णयोरिदं ग्रहणमित्यभिप्रेत्याह।

---

१. अकारान्तात् P. २. हल्मात्रं सुलोपः। हे ज्ञान B2. ३. क्त्वात् D2. ४. नपुंसकाः Dc2. ५. °नाकारस्य Bc1, Dc3, Dc4. ६. °लोपो नापहन्यादि° Nc1. ७. उच्यते dropped Nc1. ८. °मात्र आदेशः Bc1, Dc3. ९. °मात्रस्य लोप इत्यर्थः Dc1, Nc1, Nc2. १०. वर्तयिष्यते Nc1.

भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे ॥ इत्यकारलोपे प्राप्ते । औङः श्यां प्रतिषेधो वाच्यः*[1] । ज्ञाने ।

**जश्शसोः शिः ॥७।१।२०॥**

[2]क्लीबादनयोः शिः स्यात् ॥

**शि सर्वनामस्थानम् ॥१।१।४२॥**

शि इत्येतत् सर्वनामस्थानसंज्ञं स्यात् ॥

**नपुंसकस्य झलचः ॥७।१।७२॥**

झलन्तस्याजन्तस्य च[3] क्लीबस्य नुमागमः स्यात् सर्वनामस्थाने[4] ॥ उपधाया[5] दीर्घः । ज्ञानानि । पुंनस्तद्वत्[6] । शेषं रामवत् । एवं धनवन[7]फलादयः ॥

---

**भस्येवर्णावर्णयोरिति** । इयङुवङ्भ्यां लोपो विप्रतिषेधेन । वत्सं प्रीणातीति वत्सप्रीः । तदपत्यं वात्सप्रेयः । 'चतुष्पाद्भ्यो ढञ्' इति ढञ् । लेखाभ्रूः शुभ्रादिः[8] । तदपत्यं लेखाभ्रेयः । 'ढे लोपोकद्र्वाः' इत्यूल्लोपः ।

**जश्शसोः** । जसा सहचरितस्य शसो ग्रहणादिह न । कुण्डशो ददातीति ।

**शि सर्वनामस्थानमिति** । महती संज्ञा प्रयोजनमन्तरेण पूर्वाचार्यैः कृता तस्या यदिहाश्रयणं तत् कृतस्य शास्त्रस्य[9] दोषत्वदर्शना[10]र्थम्[11] । तत् पुनः स्वशास्त्रस्य पुनरुक्ततादोषपरिहारार्थम् ।

**नपुं** । नपुंसकस्य किम् । अग्निचिद्ब्राह्मणः । झलच इति किम् । वारि । उगितो नपुंसकस्य झलन्तस्य परत्वात् अनेनैव नुम् स्यात् । श्रेयांसि कुर्वन्ति ।

---

१. P, $D_1$, $D_4$ drop वाच्यः; वक्तव्यः $B_2$, $D_2$, $D_5$. २. अनयोः क्लीबात् P; जश्शसोः for अनयोः $B_2$; क्लीबात्परयोर्जश्शसोः $D_3$; क्लीबादनयोर्जश्शसोः $D_5$. ३. P, $B_2$ drop च. ४. After it—परे $D_3$, $B_3$. ५. उपधादीर्घः $B_1$, $D_2$, $D_4$. ६. P, $D_1$ have instead of this धनम् । धने । धनानि । ज्ञानम् । ज्ञाने । ज्ञानानि ।; $B_2$, $D_3$, C, $D_2$ drop it. ७. $D_1$ drops वन. ८. शुभ्रादि $Nc_1$. ९. तत्तस्य शास्त्रस्य $Dc_2$. १०. दोषत्वमिह दर्श° $Dc_1$. ११. सूचनार्थम् $Dc_3$.

**अद्ड्डतरादिभ्यः पञ्चभ्यः ॥७।१।२५॥**

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्

**टेः ॥६।४।१४३॥**

डिति परे भस्य टेर्लोपः स्यात् ॥

**वावसाने ॥८।४।५६॥**

अवसाने झलां चरो वा स्युः ॥ कतरत् । कतरद् । कतमत् । कतमद् । कतमे । कतमानि । टेर्लुप्तत्वादेङ्ह्रस्वादिति न संबुद्धिहल्लोपः । हे कतमत्–द् । पुनस्तद्वत् । शेषं पुंवत् ।

---

अद् । डतर । डतम । इतर । अन्य । अन्यतर इति सर्वाद्यन्तःपातिनः पञ्च गृह्यन्ते । तत्राद्यौ प्रत्ययौ ततस्तदन्ताः शब्दा गृह्यन्ते । पञ्चभ्यः किम् । नेमम् । डित्करणं कतरदित्यत्र प्रथमैकवचने 'प्रथमयोः—' इति पूर्वसवर्णदीर्घाभावार्थम्[3] । द्वितीयैकवचने तु स्थानिवद्भावात् अमि पूर्वत्वेनापि सिध्यति । एवं तर्हि तकार एवादेशः कुतो न कृतः । हे । कतरदिति संबुद्धिलोपो मा भूदिति । 'एङ्ह्रस्वात्—' इत्यत्राप्रक्तग्रहानुवृत्तौ हे कुण्डेत्यत्रामो हलो लोपो न स्यादिति दोषः । तन्निवृत्तौ च डतरादिषु अदो हलो लोपः स्यादिति दोषः । तस्मात् डित्करणादकारलोपे ह्रस्वाभावान्न लोपो न च पूर्वसवर्णदीर्घः । तथा चोक्तम् ।

'अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु ।
अद्डित्त्वात् डतरादीनां नलोपो न च दीर्घता ॥' इति ।

टेरित्यादि । हे कतरँ स् इति स्थिते सोरद्डादेशः । तत्र कृते टिलोपस्य जातत्वात् ह्रस्वादुत्तरा संबुद्धिर्न भवतीति संबुद्धेर्हलो लोपो न ।

---

१. हल् dropped $D_3$, $B_1$, P. २. ङेप्रथमयोः $Nc_1$. ३. नेमं तिष्ठति । नेमं पश्य । $Dc_3$. ४. Before it—इह तु कतरत् पश्येति $Dc_3$. ५. °ग्रहणानु° $Dc_2$, $Dc_3$. ६. अड्डित्त्वात् $Bc_1$. ७. सु $Dc_3$ ८ °हल्लोपो न न च दीर्घतेति $Dc_2$.

एवमन्यत्[1] अन्यतरत्[2] इतरत्[3]। एकतरात्[4] प्रतिषेधः[5]॥ एकतरम्। स्वमोरमादेशं वा जरस्। अजरसम्। अजरम्। अजरसी। अजरे। परत्वाज्जरस्। पश्चाज्झलन्तत्वान्नुम्।

**सान्तमहतः संयोगस्य** ॥६।४।१०॥

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने[6]। अजरांसि। अजराणि। पुनस्तद्वत्। शेषं पुंवत्[7]। 'पद्दन्—' इति हृदयोदकासनानां हृद् उदन् आसन्[8]। हृदि। हृदा[9]। हृद्भ्याम्। इत्यादि। उदानि। उद्नां[10]। उद्भ्याम्। इत्यादि। आसानि[11]। आस्ना। आसभ्याम्। इत्यादि। शीर्षस्य शीर्षन् वा शसादाविति केचित्।[12] शीर्षाणि। शीर्ष्णः[13]। शीर्ष्णा। शीर्षभ्याम्। इत्यादि। पक्षे शेषं[14] च ज्ञानवत्।

---

**स्वमोरमादेश** इति। न विद्यते जरा यस्य तदजरम्। अजर स् अजर अम् इति स्थिते 'अतोम्—' इति सोः पूर्वविप्रतिषेधेनामोप्यमादेशे कृते संनिपातलक्षणपरिभाषाया अनित्यत्वात् जरस् वादेश इत्यर्थः। **गोनर्दीयमते** तु संनिपातलक्षणपरिभाषाया नित्यत्वात् जरसादेशो नेति प्रथमैकवचने अजरमित्येव भाव्यम्। द्वितीयैकवचने तु परत्वादमादेशं बाधित्वा जरस् स्यात् तेन अजरसमिति। **परत्वा-दिति**। अजर स् इति स्थिते परत्वाज्जरस्। पश्चात् 'नपुंसकस्य झलचः' इति नुम् स्यादिति॥

इत्यदन्ताः॥

---

१. P drops एवमन्यत्. २. $D_1$ drops it. ३. Dropped $D_3$. ४. एकतरस्य $B_1$. ५. प्रतिषेधो वाच्यः $D_3$. ६. After it—परे $D_3$. ७. पुंलिङ्गवत्। अजरसेन। अजरेण। अजरसा। अजरसात्। अजरात्। अजरसः। $B_1$. ८. After this—इत्येते आदेशाः स्युः C. ९. $D_1$ drops हृदा. १०. After it—उदकेन $B_2$. ११. After it—आसनानि $B_2$. १२. Before it—शीर्षिण $B_2$. १३. $D_1$, $D_2$, $D_4$, $D_5$ drop it; $D_2$ drops this and the next form. १४. शेषे च $D_4$, $D_5$. १५. Dropped $No_1$.

**ह्रस्वो नपुंसके प्रातिपदिकस्य ॥१।२।४७॥**

क्लीबे प्रातिपदिकस्य ह्रस्वः स्यात् ॥ श्रीपम् । ज्ञानवत् ॥

**स्वमोर्नपुंसकात् ॥७।१।२३॥**

क्लीबात् स्वमोर्लुक् स्यात् ॥ वारि ।

**इकोऽचि विभक्तौ ॥७।१।७३॥**

इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ ॥

---

ह्रस्वः । नपुंसके किम् । ग्रामणीर्ब्राह्मणः । प्रातिपदिकस्येति किम् । काण्डे तिष्ठतः । काण्डे इत्यत्र 'अप्रत्ययः' इति प्रतिषेधात् प्रातिपदिकत्वाभावात् न ह्रस्वः । ननु च प्रातिपदिकाप्रातिपदिकयोरेकादेशोन्तादिवद्भावात् प्रातिपदिकग्रहणेन गृह्यते इति स्यादेव ह्रस्वः । नैष दोषः । प्रातिपदिकग्रहणसामर्थ्यान्न भवत्यत्रान्तवद्भावः । एतदुपपादनं पदमञ्जर्यादिर्ज्ञेयम् । श्रीपमिति । श्रियं पातीति श्रीपं कुलम् ।

इत्यादन्ताः ।

स्वमोः । सु इति यद्यपि सप्तमीबहुवचनमस्ति तथाप्यमैकवचनेन साहचर्यादेकवचनमेवं सुं गृह्यते । तद् ब्राह्मणकुलमित्यत्र लुका त्यदाद्यत्वं बाध्यते पूर्वविप्रतिषेधेन ।

इकोऽचि विभक्तौ इत्यतः 'नपुंसकस्य' 'इकः' इति षष्ठ्यन्तेप्यनुवर्तमाने अर्थात् प्रथमान्ते भवत इत्याह । इगन्तं क्लीबमिति ।

इकोऽचि । ननु च 'अचि' इति किमर्थमुच्यते । संबुद्धौ परतो नुम् मा भूदिति चेत् । नैवम् । बलवत्त्वादादौ संबुद्धिलुकैव भाव्यम् । तथापि प्रत्ययलक्षणेन नुम् स्यात् स मा भूदिति 'इकोऽचि–' इत्यच्ग्रहणं क्रियते इत्याशङ्क्याह ।

---

१. After it—परयोः B1, D3. २. नुम् स्यात् C, D1. ३. तदुप° Dc1, Dc3; उपपादनं Dc4. ४. एव dropped Dc2. ५. सुर्गृह्यते Bc1, Dc4.

वारिणी। वारीणि। न लुमतेति निषेधस्य नित्यत्वे[1] संबुद्धेर्लुकि तन्निमित्तनुमोप्राप्तेरिकोचीत्यज्ग्रहणं व्यर्थं स्यात्। नै[3] चान्यत्र हलादौ नुमभावार्थमिदम्। कृतेपि नुमि [4]तल्लोपस्य संभवात्। अतोचीत्युक्तेरेवं ज्ञायते। न लुमतेत्यस्यानित्यत्वात् संबुद्धेर्लुक्यपि[2] [5]प्रत्यय[6]लक्षणत्वेन नुम् स्यात्।

---

न लुमतेत्यादि। 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधो[7] नित्यः। तथा च सति संबुद्धेर्लुकि जाते प्रत्ययलक्षणनिषेधात् संबुद्धिनिमित्तो नुम् न प्राप्नोत्येव। [8]अतस्तदप्राप्तेस्तत्प्राप्तिनिवारण-प्रयोजनम् 'इकोचि विभक्तौ' इति सूत्रे वर्तमानमज्ग्रहणं व्यर्थं स्यात्। व्यर्थमिति संभावयाम इत्यर्थः। ननु च न व्यर्थ-मज्ग्रहणं संबुद्धेरन्यस्यां हलादौ विभक्तौ[9]। नै[10] नुमभावार्थ-मज्ग्रहणम्। कुत इत्याशङ्क्य [11]हेतुमाह। कृतेपीति। तत्र हलादौ विभक्तौ परतो नुमि कृते तल्लोपस्य तै[12]स्य नुमो 'न लोपः प्रातिपदिकान्तस्य' इति नै[13]लोपसंभवात् हेतोर्नेदमज्ग्रहणप्रयोजनमिति भावः। एवं प्रयोजनाभावादनर्थकमज्ग्रहणं प्राप्तमनिष्टं सत् किंचि-दिष्टं[14] ज्ञापयतीति न्यायेन कमप्यभिप्रेतमर्थमेतत् ज्ञापयतीत्याह। अतोचीति। अतोस्मादचीत्युक्तेर्हेतोरयमर्थो ज्ञायते। कोर्थो ज्ञायत इत्याशङ्क्याह। न लुमतेतीति। 'न लुमताङ्गस्य' इत्ययं प्रत्यय-लक्षणनिषेधोनित्यः कादाचित्कः। तस्मात् संबुद्धेर्लुकि जा[15]ते सति 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति नुम् भवेदेव। स मा भूदित्येव-मर्थमज्ग्रहणं कृतमिति भावः। ननु च तत्र जातेपि नुमि तस्य 'न लोपः प्रातिपदिकान्तस्य' इति लोपः स्यादित्याशङ्कामपनुदन्नाह।

---

१. नित्यत्वेन $B_2$; नित्यत्वात् $D_2$. २. °र्लुक्यापि $D_3$. ३. नान्यत्र $D_1$. ४. तल्लोपसंभवात् P; C, $D_4$. ५. Before it—प्रत्ययलोपे P, C. ६. लक्षणेन C; लक्षणत्वे $D_2$. ७. °प्रतिषेधो $Dc_2$. ८. ततः $Dc_2$. ९. After it—ननु नुमभावार्थमित्याशङ्क्याह। न चेति। अन्यत्रास्यां हलादौ विभक्तौ $Dc_3$, $Dc_4$. १०. नुमभावार्थमज्ग्रहणं न $Dc_3$. ११. तत्र हेतु° $Dc_3$. १२. Dropped $Dc_2$. १३. लोपसंभ° $Bc_1$. १४. किंचित् dropped $Nc_1$, $Nc_2$, $Dc_1$. १५. जातेपि $Dc_3$.

न च तल्लोपः शक्यः । 'न ङिसंबुद्ध्योः' इति [१]निषेधात् । अतस्तत्र नुमभावार्थमज्ग्रहणं कृतम् । तेन न लुमतेति निषेधस्या-नित्यत्वात् पक्षे संबुद्धिनिमित्तो गुणः[२] । हे वारे । हे वारि । हे वारिणी । हे वारीणि । वारिणा । घेर्ङितीति गुणे प्राप्ते वृद्ध्यौत्व-गुणेभ्यो नुम् पूर्वविप्रतिषेधेन* ॥ इ[३]ति नुम् । वारिणे । वारिणः २ । वारिणोः । नुमचिरेति नुट् । नु[४]टः प्रत्ययावयवत्वान्

न चेति । तत्र हेतुमाह । न ङीति । प्रकृतमुपसंहरति । अत इति । 'न लुमताङ्गस्य' इति निषेधस्यानित्यत्वमज्ग्रहणेन ज्ञापितमित्येतदुप-पादितं तज्ज्ञापने प्रयोजनमाह । तेनेति । यदा प्रत्ययलक्षणनिषेधो नास्ति तदा 'ह्रस्वस्य गुणः' इति गुणो भवति । अ[५]न्यदा न भवति । तेन हे वारे हे वारि इत्युभयमपि सिध्यति । घेर्ङितीति । वारि ङे इति स्थिते । नुमं बाधित्वा परत्वाद् गुणे प्राप्ते इत्यर्थः ।

वृद्ध्यौत्वेति । एतच्च परशब्दस्येष्टवाचित्वाल्लभ्यते । वृद्धेरवकाशः । सखायौ । गावौ । नुमोवकाशः । वारिणी । इहोभयं प्राप्नोति अतिसखीनि कुलानीति । तत्र पूर्वविप्रतिषेधेन नुमेव स्यात् । औत्वस्यावकाशः । सख्यौ । हरौ । नुमः स एव । इहोभयं प्राप्नोति । वारिणि । अतिसखिनीति । नुमेव स्यात् पूर्वविप्रतिषेधेन । गुणः सावकाशः । हरेः । नुमः स एव । इहोभयं प्राप्नोति । वारिणे इति । नुमेव स्यात् पूर्वविप्रतिषेधेन । '**नुमचिर–**' इति । नुमोवकाशः स एव । नुटोत्रकाशः । रामाणामिति । इहोभयं प्राप्नोति । वारीणामिति । नुडेव स्यात् पूर्वविप्रतिषेधेन । ननु च नुटि नुमि वा को विशेष इत्याशङ्क्याह । नुट इति ।

१. प्रतिषेधात् D4. २. After C has:—इ कः षण्डेपि संबुद्धौ गुणो माध्यं-दिनेर्मते । त्रिधा चोशनसो रूपं सान्तं नान्तमदन्तकम् ॥. ३. C drops इति नुम्. ४. नुट् । D2. ५. अन्यथा Dc2.

'नामि' इति दीर्घत्वम्। वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत्॥

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥७।१।१४॥**

अर्थवशादुक्तपुंस्कमिगन्तं क्लीबं पुंवद्वा स्यात् टादावचि[2]॥ अनादये। अनादिने। इत्यादि। शेषं वारिवत्। अर्थवशादुक्तपुंस्कं किम्। पीलुने फलाय।

---

तृतीया। अर्थवशादिति। अर्थ्यते याच्यते व्यावर्तयितुमित्यर्थो विशेष्यम्। [3]विशेष्यवशेन यदुक्तपुंस्कमित्यर्थः। स्वत एव केचिच्छब्दा विशेष्यलिङ्गाः। यथा गुणशब्दाः गुणप्रवृत्तिनिमित्ताः सन्तो गुणिनि वर्तन्ते। अतो विशेष्यलिङ्गाः। यथा शुक्लः पटः। शुक्ला पटी। शुक्लं वस्त्रमिति। तदुक्तम्। गुणवचनानामाश्रयतो लिङ्गवचनानीति। केचिच्च। यथा जात्यादिशब्दा ब्राह्मणी कलत्रमित्यादयः। 'नपुंसकस्य झलचः'। पीलुने फलाय इति।

अनादये अनादिने इति। न विद्यते आदिर्यस्य तदनादि। अनादिशब्दोनादित्वं प्रवृत्तिनिमित्तीकृत्य तद्विवर्तमानोनादिर्नारायण इति विशेष्यवशादुक्तपुंस्कः। पुंवत्पक्षे गुणः। अन्यत्र पक्षे नुम्।

---

१. After it—वारिषु। $D_1$. २. After it—अनादिना। अनादये। अनादिने। इत्यादि। शेषं वारिवत्। अर्थवशादुक्तपुंस्कं किम्। पीलुने फलाय।

पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे।
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः॥ १॥
यन्निमित्तमुपादाय पुंसि लिङ्गं प्रवर्तते।
नपुंसकेपि तच्चेत् स्यादुक्तपुंस्कं तदुच्यते॥ २॥ P, $D_3$.

C has यन्निमित्त' as the first verse, एक एव हि यः शब्दस्त्रिषु लिङ्गेषु विश्रुतः। एकमेवार्थमाख्याति भाषितपुंस्कं तदुच्यते॥ as the second verse and पीलुर्वृक्षः as the third verse; $D_4$ follows C, but it has 2 verses only, पीलुर्वृक्षः &c., being the second. ३. विशेष्येन वशेन $No_2$.

समासवशात्[1] पीलवे वृक्षाय ।

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥७।१।७५॥**

एषामनङ् स्यात् टादावचि स च उदात्तः ॥ अल्लोपोनः ॥ दध्ना । दध्ने । दध्नः २ । दध्नोः २ । दध्नाम् । [2]विभाषा ङिश्योः ॥

---

ननु च पीलुशब्दोपि भाषितपुंस्कः । पीलुर्वृक्षस्तस्य विकारः फलमपि–पीलु । नैवम् । तुल्ये प्रवृत्तिनिमित्ते यद् भाषितपुंस्कं तस्य पुंवद्भावः । इह तु पुंसि पीलुशब्दस्य प्रवृत्तौ निमित्तं वृक्षाकृतिः । नपुंसके तु फलाकृतिरिति भिन्नप्रवृत्तिनिमित्तत्वान्न पुंवद्भावः । ननु च कुत एतल्लभ्यते तुल्ये प्रवृत्तिनिमित्ते भाषित[3]पुंस्क इति । उच्यते । भाषित[4]पुंस्क इत्यस्यायमर्थः । भाषितः पुमान् यस्मिन्नर्थे तुल्यप्रवृत्तिनिमित्ते तत् भाषितपुंस्कशब्देनोच्यते । तद्योगादभिधेयमपि यन्नपुंसकं तदपि भाषितपुंस्कं तस्य प्रातिपदिकं यच्छब्दरूपं तदपि भाषितपुंस्कमिति । इगन्तं किम् । सोमपेन कुलेन । अचि किम् । ग्रामणीभ्यां कुलाभ्याम् । तृतीयादौ किम् । अनादि । अनादिनी । अनादीनि ।

[5]अस्थि । 'इकोचि—' इति नुमि प्राप्ते विधिरयं ङोन्तादेशार्थः । अकार उच्चारणार्थः । अस्थ्यादयः [6]एते 'नब्विषयस्यानिसन्तस्य' इति फिट्स्वरेणाद्युदात्ताः । शेषमनुदात्तम् । तत्रान्तस्यानुदात्तस्यानङ् विधीयमानः स्थानिवद्भावादनुदात्तः स्यादित्युदात्त उच्यते । तत्र दध्नेत्यादौ भसंज्ञायाम् 'अन्त्याभावेन्त्यसदेशस्य' इति परिभाषयान्त्यसमीपस्थाकारस्य लोपे कृते 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता स्यात् । टादौ किम् ।

---

१. $D_2$ drops from समास° to वृक्षाय; $B_2$ has the verse पीलुर्वृक्षः &c., in place of 'समास°' to वृक्षाय. २. P, C, $D_2$, $D_3$ drop विभाषा ङिश्योः. ३. °पुंस्कमिति $Dc_2$. ४. °पुस्कमि° $Dc_2$. ५. अस्थिदधि $Dc_2$. ६. एते नपुंसकस्य $Dc_4$.

दध्नि । दधानि[1] । शेषं वारिवत् । एवमस्थिसक्थिअक्षि[2] । तदन्तस्याप्यनङिष्यते* ॥ प्रियदध्ना ब्राह्मणेन । [3]प्रियसक्थ्ना । [4]प्रियाक्ष्णा । प्रियास्थ्ना शुनेत्यादि ।

सुधि । सुधिनी । सुधीनि । सुधिया । सुधिना । [5]इत्यादि । एवं प्रध्यादयः ।

मधु । मधुनी । मधूनि । हे मधो । हे मधु । पुनस्तद्वत् । मधुना । मधुभ्याम् । इत्यादि । एवमम्बुसान्वादयः । सानुशब्दस्य

दधिनी । अचि किम् । दधिभ्याम् । प्रियदध्नेत्यादि । प्रियं दधि यस्य ब्राह्मणस्य स प्रियदधिस्तेन । प्रियं सक्थि यस्य प्रियमक्षि यस्य तेन प्रियसक्थ्ना प्रियाक्ष्णा । अत्र 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् न भवति । समासान्तविधेरनित्यत्वात् । अनित्यत्वं च ज्ञापयिष्यते ॥

इतीदन्ताः ।

सुधि । सुष्ठु धीरस्य तत् सुधि । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः । पश्चाद्वारिवत् । सुधियेति । तृतीयादिष्विति । पक्षे पुंवत्त्वात् 'अचि श्नु–'इति इयङ् । सुधिना इति । पुंवत्त्वाभावपक्षे नुम् स्यात् । एवमनेन प्रकारेण प्रध्यादयोपीकारान्ता ज्ञेयाः । आदिना । प्रध्या । प्रधिने । इत्यादि ॥

इतीदन्ताः ॥

मधु । हे मधो । हे मधु । इति । 'न मता–' इत्यस्यानित्यत्वात् पक्षे संबुद्धिनिमित्तो गुणः । पुनस्तद्वदिति । द्वितीया प्रथमावदिति भावः ॥

इत्युदन्ताः ।

१. After it—ओसि भाग्वत् । दधिषु $D_3$. २. शब्दाः after it—P, C, $B_1$, $B_2$. ३. $B_1$ omits from प्रियसक्थ्ना to शुनेत्यादि. ४. Omitted in C; After शुना $D_3$. ५. For his—सुधिये । सुधिने $D_2$. ६. $B_1$ drops from हे मधो to इत्यादि. ७. हे मधु । हे मधो । $No_1$, $Do_3$.

स्नु वा[1] । सानूनि । स्नूनि २ । इत्यादि[2] । सुलु । सुलुनी[3] । सुलूनि । सुल्वा । सुलुनेत्यादि । प्रियक्रोष्टु । प्रियक्रोष्टुनी । [4]तृज्वद्भावः । प्रियक्रोष्टॄणि । हे[5] प्रियक्रोष्टु । हे प्रियक्रोष्टो । टादौ पुंवत्पक्षे[6] प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । [7]अन्यत्र तृज्वद्भावात् पूर्वविप्रतिषेधेन नुम् । प्रियक्रोष्ट्रे । प्रियक्रोष्टवे । प्रियक्रोष्टुने । [8]प्रियक्रोष्टूनाम् ।

---

**सुलु** इति । सुष्ठु लुनातीति सुलू इति स्थिते ह्रस्वः । **सुल्वेति** । पुंवत्पक्षे 'ओः सुपि' इति यणादेशः ॥

इत्यूदन्ताः ॥

**प्रियक्रोष्टु** इति । प्रियः क्रोष्टा यस्य तत् प्रियक्रोष्टु कुलम्[9] । अयमुदन्तोपि तृज्वद्भावपक्षे ऋदन्तेन[10] तुल्यरूप इति तत्संनिधौ पठित इति ज्ञेयम् । **तृज्वद्भाव** इति । 'जश्शसोः शिः' इति शौ कृते तस्य सर्वनामस्थानत्वात् 'तृज्वत् क्रोष्टुः' इति तृज्वद्भाव इत्यर्थः । तन प्रियक्रोष्टॄणीत्येतद्रूपं स्यात् । **टादावित्यादि** । तृतीयादिष्वित्यादिना पुंवत्त्वं यदा स्यात् तदा 'विभाषा तृतीयादिष्वचि' इति पक्षे तृज्वद्भावः । पक्षे नाभावस्तेन प्रियक्रोष्ट्रा प्रियक्रोष्टुना इत्येतद्रूपद्वयं स्यादित्यर्थः । **अन्यत्रेति** । पुंवत्वाभावपक्षे । **प्रियक्रोष्ट्रे** । **प्रियक्रोष्टवे** इति । पुंवत्पक्षे एते रूपे क्रमात्[11] तृज्वद्भावे घेर्गुणे च कृते । **प्रियक्रोष्टूनामिति** । पुंवत्पक्षे आमि नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेति

---

१. After it—वाच्यम् $B_2$. २. इत्यादिभेदः $D_3$, $D_1$, $D_2$. ३. सुलुनीत्यादि $B_1$. ४. शीपरे तृज्वद्भावः C; तृज्वद्भावः dropped $D_2$: After it—प्रियक्रोष्टूनि $D_3$. ५. $B_1$ drops the Voc. forms ; हे प्रियक्रोष्टु dropped $D_2$, $D_3$. ६. C drops पक्षे. ७. From अन्यत्र to नुम् dropped $B_1$, P ; $B_2$ has अन्यत्र to नुम् before प्रियक्रोष्टुना । ८. $B_1$ drops प्रियक्रोष्टूनाम् । इत्यादि ।; $D_3$ has प्रियक्रोष्टुः । प्रियक्रोष्टोः । प्रियक्रोष्टुनः । प्रियक्रोष्ट्रोः । प्रियक्रोष्ट्रोः । प्रियक्रोष्टुनोः । प्रियक्रोष्टूनाम् । प्रियक्रोष्टॄणाम् । प्रियक्रोष्टरि । प्रियक्रोष्टौ । प्रियक्रोष्टुनि । इत्यादि ।. ९. जलम $Bc_1$. १०. ऋदन्तस्य $Dc_2$. ११. Dropped $Dc_2$.

इत्यादि । धातृ । धातृणी । धातॄणि । हे धातः । हे धातृ । द्वितीया प्रथमावत् । धात्रा । धातृणा । इत्यादि । एवं ज्ञातृकर्त्रादयः ॥

**एच इग्घ्रस्वादेशे ॥१।१।४८॥**

ह्रस्वे कार्ये एच इगेव स्यात् ॥ प्रद्यु । प्रद्युनी । प्रद्यूनि ।

---

तृज्वद्भावं बाधित्वा नुट् । क्लीबत्वपक्षेऽपि नुमं बाधित्वा तस्मादुभयत्राप्येकमेव रूपम् । धातृ । दधातीति धातृ । धातृणी इति । ऋतो ङि गुणं बाधित्वा नुम् पूर्वविप्रतिषेधेन । धात्रेत्यादि । पक्षे पुंवत्त्वम् ।

इति ऋदन्ताः ॥

एचः । परिभाषेयमादेशनियमार्था । एचोऽवयवसमाहारवर्णाः । तत्रैचां पूर्वो भागोऽवर्णसमानाकृतिः कण्ठ्यो मात्रात्मा । एऐ अनयोरुत्तरो भाग इवर्णाकृतिस्तालव्यो मात्रात्मैव । ओऔ अनयोरुत्तर उवर्णाकृतिरोष्ठ्यो मात्रात्मैव । तत्र समुदायात्मनामेवमान्तरतमो ह्रस्वो नास्तीति तदवयवयोर्योऽन्तरतमस्तेनैव युक्तं भवितुम् । स भवन् एऐ अनयोः कदाचिदकारः कदाचिदिकारः स्यात् । ओऔ अनयोः कदाचिदकार उकारो वा स्यात् । स मा भूत् । इकारोकारावेव स्यातामिति परिभाष्यते । अत्रैचामिकां साम्येऽपि संख्यातानुदेशो न । यतो नेदं विधायकं किं तु नियामकम् । नियमश्च प्राप्तिपूर्वक इति येऽन्तरतमा इकः प्राप्तास्ते नियम्यन्त इति कुतो यथासंख्यम् । यद्येवमणित्येव वाच्यं न त्विगिति । सत्यम् । किं त्वेवमुच्यमाने संदेहः स्यात् । किं परेण णकारेणोत पूर्वेणेति । **प्रद्यु** इति । प्रकृष्टा द्यौरस्य तत् प्रद्यु ।

---

१. B₁ drops from द्वितीया to इत्यादि; D₂ drops द्वितीया प्रथमावत्. २. ह्रस्वादेशे B₂; ह्रस्वे कार्ये कर्तव्ये D₃. ३. प्रद्युनीत्यादि B₁. ४. एच इक Dc₂. ५. °वयवेति समा° Nc₁. ६. °मन्तर° Dc₂. ७. °रो वा। Dc₃. ८. एव for इति Dc₃. ९. Dropped Dc₃.

पुनस्तद्वत् । [1]प्रद्यवा । प्रद्युना । इत्यादि । प्ररि । [2]प्ररिणी । प्ररीणि[3] २ । प्रराया । प्ररिणा । [4]प्रराभ्याम् । [5]प्रराभिः । इत्यादि । सुनु । [6]सुनुनी । सुनूनि २ । [7]सुनावा । सुनुना । इत्यादि ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

प्रद्यो इति स्थिते 'ह्रस्वो नपुंसके—' इति ह्रस्वे कार्ये[8] ओकारस्यान्तरतम्यादुकारो जातः । **प्रद्यवा** इत्यादि । तृतीयादौ वा पुंवत्वम् ॥

इत्योदन्ताः ॥

**प्ररीति** । प्रकृष्टा रा यस्य तत् प्ररि । ह्रस्वे प्राप्ते ऐकारस्यान्तरतम्यादिकारः । सोर्लुक् जात इत्यात्वं न भवति । **प्ररायेति** । पुंवत्पक्षे । ह्रस्वाभावादायादेशः । **प्रराभ्यामिति** । 'एकदेशविकृतमनन्यवद्भवति' इति न्यायेन 'रायो हलि' इत्यात्वम् ॥

इत्यैदन्ताः ॥

**सुनु** इति । सुष्ठु नौर्यस्य तत् सुनु ॥

इत्यौदन्ताः ॥

अन्ये अप्रसिद्धाः । इति

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेगुः प्रसादे सुविशदममलाः क्लीबशब्दा अजन्ताः ॥

---

१. प्रद्यवे । प्रद्युने । $D_2$. २. प्ररिणीत्यादि $B_1$. ३. After it—पुनस्तद्वत् $D_3$. ४. प्ररिभ्याम् । प्ररिभिः $D_1$. ५. Dropped $D_3$. ६. सुनुनीत्यादि $B_1$. ७. सुन्वा $B_2$; सुनुना । सुनावा । इत्यादि $D_3$; सुनवा । $D_5$. ८. कार्ये $Dc_3$, $Dc_4$.

**हो ढः ॥८।२।३१॥**

झलि पदान्ते च हस्य ढः स्यात् ॥ 'हल्ङ्याब्—' इति सुलोपः। जश्त्वचर्त्वे। लिट्। लिड्। लिहौ। लिहः। [1]लिहम्। लिहौ। लिहः। लिहा। लिड्भ्याम्। इत्यादि। 'खरि च' इति चर्त्वम्[2]। लिट्सु ॥

**दादेर्धातोर्घः ॥८।२।३२॥**

दकारादेर्धातोर्हस्य[3] घः स्यात् झलि परतः[4]। पदान्ते च।

**एकाचो बशो भष् झषन्तस्य स्ध्वोः ॥८।२।३७॥**

एकाचो धातोर्झषन्तस्य बशः स्थाने भष् स्यात् सकारे

---

अथ हलन्ताः पुंलिङ्गाः प्रदर्श्यन्ते।

हो ढः। लिडिति। लेढीति लिट्। लिह आस्वादने। क्विबन्तत्वात् प्रातिपदिकत्वम्। ततः स्वाद्युत्पत्तिः ॥

दादेः। धातूपदेशावस्थायां यो दादिस्तस्य हस्य घत्वं स्यादिति ज्ञेयम्। ततश्च अधोक् इत्येतत् सिद्धं स्यात्। अन्यथा अटि जाते अटो धातुभक्तत्वात् दादित्वाभावाद् घत्वं न स्यात्। अन्यच्च दाम-लिहमिच्छति दामलिह्यति। ततः क्विप्। दामलिट् इत्यत्र घत्वाभावः सिद्धः स्यात् ॥

**एकाचो।** प्रातिपदिकसंज्ञस्य तु झलीति। झलि तु परे प्राति-पदिकसंज्ञकस्यैव पदान्ते तु धातोः प्रातिपदिकस्यापीत्यर्थः। एकाचो धातोरिति व्यधिकरणे षष्ठ्यौ। धातोरवयवो य एकाच् तस्य झषन्तस्येति।

---

१. लिहम्। लिहौ। लिहः dropped $D_2$, $B_1$, P, C. २. After it—'झलां जशोऽन्ते' इति जश्त्वम्। 'डः सि धुट्' इति धुडागमः। तकारः। लिड्त्सु। धुडभावे लिट्सु $D_5$. ३. दादे° $B_2$. ४. परतः dropped C, $B_2$. ५. 'हो ढः' इत्यस्यापवादः P, $B_1$; ढत्वापवादः $D_5$.

[1]ध्वेशब्दे च परे[2] । प्रातिपदिकसंज्ञस्य[3] तु झलि पदान्ते च ॥ धुक् । धुग् । दुहौ । दुहः । दुहम् । दुहौ ।

## आ कडारादेका संज्ञा ॥१।४।१॥

इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव[4] संज्ञा

---

धातोरवयवस्येति किम् । न धातोरेकाच इति समानाधिकरण्येन सिद्धम् । उच्यते । गर्दभं करोत्याचष्टे च गर्दभयति[5] । गर्दभयतेः क्विप् । णिलोपः । क्विपो लोपः । स्वाद्युत्पत्तिः । गर्धप् इत्यत्रापि भष्भावो यथा स्यादित्येवमर्थं धातोरित्यवयवषष्ठी व्याख्यायते । एकाचः किम् । दामलिट् । असति ह्येकाच्ग्रहणे धातोरित्येतदेव बशो विशेषणार्थं[6] स्यात् । बशः किम् । क्रुधेः क्रोत्स्यति । झषन्तस्य[7] किम् । दास्यति । स्ध्वोः किम् । बोद्धा । वकारोपसृष्टस्य धकारस्य ग्रहणं किम् । दध धारण इत्येतस्य यङ्लुकि लोटि सिपि 'हुझल्भ्यो हेर्धिः' इति धिभावे सति दादद्धि इति भवति । तत्र भष्भावो मा भूत् । धुगिति[8] । दोग्धीति धुक् । दुह प्रपुरणे । क्विप् ।

आ कडारात् । अन्यत्र लोके शास्त्रे च संज्ञानां समावेशात् नियमार्थमेकसंज्ञाधिकारः । तथा हि लोके इन्द्रः शक्रः पुरुहूत इत्यादयः । शास्त्रे प्रत्ययकृत्कृत्यसंज्ञाः । एकैव संज्ञा भवति ।

---

१. ध्वशब्दे $B_2$, $D_3$. २. After it—धातोर्भवति $B_1$. ३. प्रातिपदिकस्य तु C, $D_4$; प्रातिपदिकान्तस्य झलि &c. $B_2$; प्रातिपदिकस्य झलि $D_3$; तु dropped—झलि परतः M. ४. प्रागेकैकस्य C. ५. गर्दभयतीति $Dc_2$. ६. विशेषणं $Dc_3$. ७. °स्येति $Dc_3$. ८. Dropped $Dc_3$.

ज्ञेया। तेन शसादावचि भसंज्ञैव न पदत्वम्[1]। अतो घत्वजश्त्वभष्भावा न॥ दुहः। दुहा। धुग्भ्याम्। इत्यादि[2]। चैत्वं[3] [4]षत्वम्। धुक्षु।

## वा द्रुहमुहष्णुहष्णिहाम्[5] ॥८।२।३३॥

एषां हस्य[6] वा[7] घः स्याज्झलि पदान्ते च॥ ध्रुक्। ध्रुग्। ध्रुट्। ध्रुड्। द्रुहौ। द्रुहः। द्रुहा। ध्रुग्भ्याम्। ध्रुड्भ्याम्। ध्रुग्भिः। ध्रुड्भिः। इत्यादि[8]। ध्रुक्षु। ध्रुट्सु[9]। एवं मुहष्णुहष्णिहः[10,11]॥

का स्यादिति चेत् या परानवकाशा च। तेनेत्यादि। यत एवमेकसंज्ञाधिकारस्तेन कारणेन दुहशब्दस्य शसादावचि भसंज्ञैव स्यात्। परत्वादनवकाशत्वाच्च। न पदसंज्ञा। ततः किं फलितं स्यादित्याशङ्क्याह। अत इत्यादि। अतः पदत्वाभावात् घत्वादयो न भवन्ति। तेन दुह इत्यादि सिद्धम्[12]।

वा द्रुह। द्रुह द्रोहे। मुह वैचित्ये। ष्णुह उद्गारे। ष्णिह प्रीतौ। द्रुहेर्दादित्वान्नित्यं प्राप्ते इतरेषामप्राप्ते विकल्प्यते। द्रुहादयो दिवादिगणे अनेनैव क्रमेण पठ्यन्ते। तत्र वा द्रुहादीनामिति वाच्ये प्रतिपदपाठो यङ्लुक्यपि यथा स्यात्। दोध्रुक्। दोध्रुट्। अन्यथा 'निर्दिष्टं यद् गणे न च' इति न स्यात्।

१. पदसंज्ञा C, $B_2$, $D_4$, $D_5$. २. $B_1$ drops from इत्यादि to षत्वम्. ३. चत्र्वषत्वौ C. ४. Dropped $D_3$. ५. After the Vṛitti of the Sûtra, $D_2$ has—वा द्रुहादीनामिति वाच्ये प्रतिपदपाठो यङ्लुक्यपि यथा स्यात्। दोध्रुक्-ग्। अन्यथा निर्दिष्टं यद्ग्रहणेन चेति न स्यात्. ६. वा हस्य $B_2$. ७. घो वा $D_4$. ८. Before it—द्रुहम्। द्रुहौ। द्रुहः $D_1$. ९. P, $D_1$, $B_2$ drop इत्यादि. $B_1$ has on the margin भारोहः। भारोहा।; $D_3$ drops ध्रुग्भिः ध्रुड्भिः and has इत्यादि after ध्रुक्षु। ध्रुट्सु. १०. After it—इत्यादि $D_4$, $D_5$. ११. °ष्णिहाम् $B_2$. १२. After it–भवति $Dc_3$.

वाह ऊठ् ॥६।४।१३२॥

भस्य वाहो वाशब्दस्य ऊठ् स्यात्[1] ॥ ठ इत् । 'एत्येधत्यूठ्सु' इति वृद्धिः । विश्वौहः । विश्वौहा । इत्यादि[2] । शेषं लिड्वत् ।

ऊठि[3] कृते[4] सवर्णे दीर्घः[5] । भूहः । भूहेत्यादि[6] । शेषं लिड्वत् ।

---

वाहः । 'वहश्च' इति ण्विप्रत्ययान्तो वहिर्वाहन्तः[7] । अस्य । अत्र च 'वसोः संप्रसारणम्' इत्यतः 'संप्रसारणम्' इत्यनुवर्तते । तेन स ऊठ् संप्रसारणसंज्ञो भवति । संप्रसारणत्वात् 'इग्यणः संप्रसारणम्' इति वकारस्य स्थाने भवति । ततः 'संप्रसारणाच्च' इति आकारस्य पूर्वरूपमित्येतच्चेतसि कृत्वाह । वाशब्दस्येति । ननु च यदि 'संप्रसारणम्' इत्यनुवर्तते किमर्थं तर्हि ऊठुच्यते । संप्रसारणे हि[8] कृते प्रत्ययलक्षणेन ण्विप्रत्ययमाश्रित्य 'पुगन्तलघूपधस्य च' इति गुणः स्यात् । ततश्च 'वृद्धिरेचि' इति वृद्धौ कृतायां विश्वौह इत्येवमादि सिद्धं स्यात् । न चानकारान्त उपपदे छन्दसि वहेर्ण्विप्रत्ययो दृश्यते । एवं तर्हि ज्ञापनार्थमूठ्ग्रहणम् । तत्[9] ज्ञापयति । 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येषा परिभाषास्तीति । तस्यां च[10] सत्यां बहिरङ्गस्य संप्रसारणस्यासिद्धत्वात् अन्तरङ्गो गुणो न स्यात् । ठ इत् इति । 'हलन्त्यम्' इत्यनेन । स च एत्येधत्यूडिति विशेषणार्थः । ऊठि कृते इति केषांचिन्मते लोकेपि ण्विः स्यात् इति तन्मते छन्दस्यदृष्टेपि ण्विरिति भूवाह शस् इति स्थिते ऊठ् । 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घ इत्यर्थः[11] ।

---

१. After it—शसादावचि $B_2$. २. $B_1$, $D_5$ drop इत्यादि. ३. P drops from ऊठि to लिड्वत्. ४. Dropped in C. ५. सवर्णदीर्घः $D_1$, $D_4$, M. ६. इत्यादि । शेषं dropped $B_2$. ७. °वाहन्तस्य $Bc_1$; °वहिस्तस्य ण्विः । $Dc_3$. ८. Dropped $Dc_2$. ९. एतत् $Dc_2$, $Dc_3$. १०. Dropped $Dc_3$. ११. इत्यर्थः dropped $Dc_4$.

**चतुरनडुहोरामुदात्तः ॥७।१।९८॥**

अनयोः सर्वनामस्थाने आम् स्यात् स चोदात्तः ।

**सावनडुहः ॥७।१।८२॥**

अस्य नुम् स्यात् सौ परे ॥ सोर्लोपः । संयोगान्तस्य लोपः । नुम्विधिसामर्थ्याद् 'वसुस्रंसु—' इति दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्वान् ॥

**अम् संबुद्धौ ॥७।१।९९॥**

चतुरनडुहोः संबुद्धावम् स्यात् । आमोपवादः । हे अनड्वन् ॥ अनड्वाहौ । अनड्वाहः । अनड्वाहम् । अनड्वाहौ । अनडुहः । अनडुहा ।

---

चतुर् । आगमा अनुदात्ता इत्यनुदात्ते प्राप्ते उदात्तो विधीयते इत्यभिप्रेत्याह । **स च उदात्त** इति । सौ । 'आच्छीनद्योर्नुम्' इत्यतः 'आत्' इत्यनुवृत्तेराममोः कृतयोर्नुम् स्यात् । तेन नुमा आममौ न बाध्येते । आममुभ्यां च न नुम् बाध्यते । अपरे तु सत्यपि सामान्ये विशेषविषयत्वे आममोर्नुमश्च समावेशमिच्छन्ति । बाध्यबाधकभावो यथा चिचीषतीत्यादिषु दीर्घद्विवचनयोरिति ।

अनड्वानिति । अनो वहतीत्यनड्वान् बलीवर्दः । अनसि वहेः क्विप् । अनसो डश्चेति क्विप् । अनसो डोन्तादेशश्च । ततः संप्रसारणम् ।

---

१. सुलोपः $D_4$. २. °विधान° $B_2$. ३. The Sûtra and its वृत्ति are given after अनडुही C, $B_1$, $D_3$. ४. अमामौ $No_1$. ५. सामान्यविशेष° $Do_4$. ६. अनः शकटं $Do_3$.

**वसुस्रंसुध्वंस्वनडुहां दः ॥८।२।७२॥**

*सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्याज्झलि पदान्ते च। अनडुद्भ्याम्। इत्यादि। सान्तेति किम्। विद्वान्। तदन्तविधिरत्रेष्यते। प्रियानड्वान्। प्रियानड्वाहौ। प्रियानड्वाहः।

अनडुहः स्त्रियामाम् वा वाच्यः[२]*। अनड्वाही। अनडुही।

श्वेतवाहुक्थशास्पुरोडाशावयाजां डस् पदान्त इति वाच्यम्*। ड इत्। डित्वसामर्थ्यादभस्यापि टेर्लोपः।

**अत्वसन्तस्य चाधातोः ॥६।४।१४॥**

अत्वन्तस्यान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सौ। न तु धातोः। श्वेतवाः। अवयाः[४]।

---

**वसुस्रंसु।** 'हो ढः' इत्यस्यापवादोयम्। अत्र 'ससजुषोरुः' इत्यतः 'सः' इत्यनुवर्तते तेन च संभवव्यभिचाराच्च वसुरेव विशेष्यते न स्रंसुध्वंसु। व्यभिचाराभावात्। नाप्यनडुह्। असंभवात्। इत्येतत् सर्वं चेतसि कृत्वाह। **सान्तवस्वन्तस्येति।** **विद्वानिति।** उगित्वान्नुम्। 'सान्तमहतः—' इति दीर्घः। संयोगान्तस्य लोपः। **तदन्तविधिरिति।** 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात्। **अनड्वाहीति।** गौरादित्वात् ङीष्। **श्वेतवाह इति।** एतेषां यत्र पदत्वं भावि तत्र ण्विनोपवादो डस् वाच्य इत्यर्थः। **ड इदिति।** 'चुटू' इत्यनेन।

**अत्वसन्तस्य च।** अत्वन्तस्योदाहरणं धीमानित्यग्रे वक्ष्यति। तत्र यद्यप्यकृत एव दीर्घत्वे परत्वात् कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च नुम् प्राप्नोति तथापि वचनसामर्थ्यादादौ दीर्घ एव भवति। अन्यथा

---

*सान्तवस्वन्तस्य Com. १. After it—परतः D3, D5. २. वक्तव्यः C. ३. After it–परे B1, B2. ४. After it–'वा शरि' इति विसर्गपक्षे श्वेतवःसु। D5. ५. Dropped Bc1, Dc3. ६. संयोगान्तलोपः Dc2. ७. एषां Dc2.

श्वेतवाः पुरोडाश्च। एते कृतदीर्घाः संबुद्धौ निपात्यन्ते। चकारादुक्थशाः[1]। हे श्वेतवाः[2]। वेति केचित्। हे श्वेतवः। श्वेतवाहौ। श्वेतवाहः। श्वेतवाहम्। श्वेतवाहौ। ऊड् वास्येति[3] केचित्। श्वेतौहः। श्वेतवाहः। श्वेतौहा। श्वेतवाहा। श्वेतवोभ्याम्[4]। श्वेतवोभिः। श्वेतवस्सु। श्वेतवःसु[5]। इत्यादि। हस्य ढत्वे कृते[6]

दीर्घस्य निमित्तमजुपधा विहन्येत। अन्तग्रहणमुपदेशे यत् प्रसज्यते[7] शब्दरूपं तदेकदेशस्याप्यर्त्वं[8] तस्य परिग्रहार्थम्[9]। अन्यथा ह्युपदेशे[10] ये अत्वन्ता भवतुक्तवत्वादयस्तेषामेव ग्रहणं स्यात्। प्रयोगे उपदेशे वा नायमत्वन्तः श्रूयते इति। अन्तग्रहणे[11] तु[12] अन्तग्रहणसामर्थ्यादत्वन्तमात्रस्य ग्रहणं विज्ञास्यते। तेन योप्युपदेशाप्रयोगैकदेशभूतस्तस्यापि ग्रहः[13] स्यादित्युपपद्यते मतुपो ग्रहणम्। ननु च गोमन्तमात्मन इच्छति गोमत्यति। गोमत्यतेः क्विप्। गोमानित्यत्र कथं दीर्घत्वं यतः 'अधातोः' इति निषिध्यते। अयं च 'सनाद्यन्ता धातवः' इति धातुः। नैष दोषः 'अधातो' इति निषेध आनन्तर्यादसन्तस्यैव नात्वन्तस्य। अथवा चकारोनुक्तसमुच्चयार्थः। तेनेह धातोरपि स्यात् श्वेतैवा इति। श्वेता एनं वहन्ति श्वेतैवा[14] इन्द्रः। 'मन्त्रे श्वेतवह–' इति ण्विन्। **अवयाः। चकारा**दिति। अनुक्तसमुच्चयार्थाच्चकारात् उक्थशा इत्येतदपि **संबुद्धौ** दीर्घं[15] सिध्यतीत्यर्थः। **केचिदिति**। अर्वाचीनाः। तथा च **मुग्धबोध** उक्तम्। 'डस्ङो धौ[16] वा' इति। **ऊड् वेति**। एतदपि तत्रैवोक्तम्। 'वाहो वौ पौ श्वेतात्तु वा' इति।

१. अवयाः before it—$D_2$. २. °दुक्थशाश्च $B_2$. ३. ऊड्वा स्यादिति $B_2$. ४. Before it—'हशि च' इत्युत्वम्। 'आद्गुणः' $D_5$. ५. Before it—'वा शरि' इति विसर्गपक्षे $D_5$; श्वेतवःसु। इत्यादि dropped $D_4$. ६. P drops कृते. ७. प्रयुज्यते $Dc_2$, $Dc_3$. ८. °त्यत्वे $Dc_2$. ९. °ग्रहणार्थम् $Dc_2$, $Dc_4$. १०. शब्दरूपनिश्चयात्मके उपदेशे लौकिके प्रयोगे हि नायमत्वन्तो मतुप् श्रूयते इति न गृह्येत। अन्तग्रहणे तु, &c. $Dc_3$. ११. °ग्रहे $Dc_1$, $Nc_1$, $Nc_2$. १२. Dropped $Nc_1$. १३. ग्रहणं $Dc_2$. १४. श्वेतवाह $Dc_3$. १५. दीर्घः $Dc_3$. १६. 'धौ वा' इति केचित् $Dc_3$.

**सहेः साडः सः ॥८।३।५६॥**

साड्रूपस्य सहेः सस्य मूर्धन्यः स्यात् ॥ तुराषाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुरासाहं । तुरासाहौ । तुरासाहः । तुरासाहा । तुराषाड्भ्यामित्यादि ।

**दिव औत् ॥७।१।८४॥**

दिविति प्रातिपदिकस्य औत् स्यात् सौ परे ॥ तं इत् ।

---

सहेः । सहेरिति । षह मर्षणे । अस्य धातोः । सहेरिति किम् । 'अन्येष्वपि दृश्यते ।' इति डीङो डः । सह डेन वर्तत इति सडः । सडस्यापत्यं साडिरित्यत्र 'यस्य—' इत्यलोपे कृते साड्रूपं संपद्यते तत्र मा भूत् । मूर्धन्य इति । सहेरित्युक्तम् । साड्ग्रहणं यत्रास्यैतद्रूपं तत्र यथा स्यादन्यत्र तु साहमित्यादौ मा भूत् । स इति किम् । अलोन्त्यपरिभाषया डस्य मा भूत् । तस्य च विधिर्व्यर्थ इति 'अन्त्याभावेन्त्यसदेशस्य' इत्याकारस्य मा भूत् । 'आदेशप्रत्यययोः' इत्यादावनुवृत्त्यर्थं च सग्रहणम् । तुराषाडिति । तुरं सहते तुराषाट् । इन्द्रः । 'छन्दसि सहः' इति ण्विः । उपधावृद्धिः । हो ढः । जश्त्वम् । 'अन्येषामपि दृश्यते' इति दीर्घः । सस्योष्मणोघोषस्य तादृश एव षः ॥

इति हान्ताः ॥

दिवः । दिव्शब्दोयमस्त्यव्युत्पन्नं प्रातिपदिकं स्वर्गवाचि । अस्ति च धातुः दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिष्विति । तयोर्मध्येत्र प्रातिपदिकमेव गृह्यते न धातुरननुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया धातुर्हि उदनुबन्ध इत्यभिप्रेत्याह । **दिविति प्रातिपदिकस्येति** । ततश्चाक्षैर्दीव्यतीत्यक्षद्यूरित्यत्र क्विपि

---

१. मूर्धन्यादेशः D3, C, B1, B2. २. इत्यादि dropped B2. ३. B2, D5 drop त इत् । अलोन्त्यस्य । ४. डीङ् विहायसा गतौ Dc3. ५. अन्त्यस्य for डस्य Dc1, Nc1, Nc2; डस्य स्यात् । तस्य च Dc3. ६. °बन्धग्रहणे Dc3.

अलोन्त्यस्य । अनल्विधावित्युक्तेरलाश्रितत्वेन[1] स्थानिवत्त्वाभावाद् हल्ङ्याबिति सुलोपो न । सुद्यौः । सुदिवौ । सुदिवः । दिवो वा आत्वममीति केचित् । सुद्याम् । सुदिवम् । इत्यादि[2] ।

**दिव उत् ॥६।१।१३१॥**

[3]दिवोन्तादेश उकारः स्यात्[4] पदान्ते ॥ सुद्युभ्याम् । सुद्युभिः । इत्यादि[5] ॥ चत्वारः[6] । चतुर्भिः । चतुर्भ्यः २ ।

---

'च्छ्वोः शूडनुनासिके च' इत्यूठि कृते एकदेशविकृतस्यानन्यत्वात् दिव्शब्द एवायमित्यूकारस्यौत्वं प्राप्नोति तच्च भवति । ननु च सुद्यौरित्यत्रौत्वे कृतेपि स्थानिवदादेशोनल्विधाविति स्थानिवत्त्वेन हलन्तत्वात् हल्ङ्याब्भ्यः–' इति सोर्लोपः स्यादित्याशङ्क्याह । **अनल्विधाविति । दिवो वेति । केचिदिति ।** दुर्गादयः । तथोक्तं दुर्गेण । 'दिव उद्व्यञ्जने' 'औ सौ' 'वाम्या' इति ।

**दिव उत्** । अत्रापि दिविति प्रातिपदिकं गृह्यते न धातुः सानुबन्धकत्वात् । तपरकरणं किम् । सुद्युभ्यामित्यत्र परत्वात् 'च्छ्वोः शूडनुनासिके च' इत्यूट् प्राप्नोति । च्छ्वोरिति सूत्रे क्वितीत्यस्याननुवृत्तिरिति केषांचिन्मतम् । येषां तु मते क्वितीत्येतदनुवर्तते तन्मतेपि द्युभ्यामित्यत्रोकारस्य वकारस्थाने जातत्वात् संप्रसारणसंज्ञास्तीति हल इति दीर्घनिवृत्त्यर्थः ।

इति वान्ताः ॥

**चत्वार इति ।** चतुर्शब्दो बह्वर्थवाचकत्वाद्बहुवचनान्तः । जसि 'चतुरनडुहोः' इत्याम् ॥

---

१. °श्रितत्वे $B_2$. २. इत्यादि dropped $B_2$, $D_3$. ३. दिव उकारान्तादेशः स्यात् पदान्ते $B_2$. ४. $B_1$, $D_1$, $D_5$ drop स्यात्. ५. Dropped $B_2$. ६. चतुर्शब्दो नित्यं बहुवचनान्तः C. ७. च कृते $Dc_3$. ८. हि केषां $Dc_2$. ९. हल् $Dc_2$. १०. निवृत्त्यर्थम् $Dc_2$, $Dc_3$, $Dc_4$.

**षट्चतुर्भ्यश्च ॥७।१।५५॥**

षट्संज्ञकेभ्यश्चतुरश्च[1] परस्यामो नुट् स्यात्[2] ॥ णत्वं द्वित्वम्[3] । चतुर्ण्णाम् ।

**रोः सुपि ॥८।३।१६॥**

सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य[4] ॥ षत्वम्[5] । षस्य द्वित्वे प्राप्ते ।

**शरोऽचि ॥८।४।४९॥**

अचि परे शरो द्वे[6] न स्तः ॥ चतुर्षु । प्रियचत्वाः । हे प्रियचत्वः । [7]प्रियचत्वारौ । प्रियचत्वारः । इत्यादि । गौणत्वे नुट् नेष्यते[8]* ॥ प्रियचतुराम् । प्राधान्ये तु[9] स्यादेव । परमचतुर्णाम् ।

---

षट् । णत्वमिति । 'रषाभ्यां नो णः समानपदे' इति । द्वित्वमिति । 'अचो रहाभ्यां द्वे' इत्यनेन । रोः सुपि । रोरिति । उकारानुबन्धस्य रेः[10]स्येत्यर्थः । 'खरवसानयोर्विसर्जनीयः' इति सिद्धे नियमार्थम् । सिद्धे सत्यारम्भो नियमायेत्यभिप्रेत्याह । रोरेवेति । प्रियचत्वा इति । प्रियाश्चत्वारो यस्य प्रियचत्वाः । 'चतुरनडुहो–' इत्याम् । हे प्रियचत्व इति । अम् संबुद्धौ । गौणत्व इति । 'षट्चतुर्भ्यः' इति बहुवचननिर्देशात् अत्र संख्याप्रधानस्य ग्रहणम् । तेन गौणत्वे नुट् न । संख्याया अप्राधान्यात्[11] ।

इति रेफान्ताः ॥

---

१. षट्संज्ञिकेभ्य° $B_2$. २. नुडागमः स्यात् $B_1$, $B_2$. ३. द्वित्वं च P; $D_1$, $D_2$ drop द्वित्वम्. ४. नान्यस्य रेफस्य $D_2$, $D_5$. ५. सस्य षत्वम् C. ६. न द्वे $B_2$. ७. हे प्रियचत्वारौ । प्रियचत्वारः । प्रियचत्वारम् । प्रियचत्वारौ । प्रियचतुरः । प्रियचतुरा । प्रियचतुर्भ्याम् । प्रियचतुर्भिः । प्रियचतुरे । प्रियचतुर्भ्याम् । प्रियचतुर्भ्यः । प्रियचतुरः । प्रियचतुर्भ्याम् । प्रियचतुर्भ्यः । प्रियचतुरः । प्रियचतुरोः । प्रियचतुराम् । प्रियचतुरि । प्रियचतुरोः । प्रियचतुर्षु । गौणत्वे &c. $B_2$. ८. Dropped $D_2$, $D_3$. ९. $B_1$ drops तु. १०. रोरित्यर्थः $Dc_3$. ११. अप्रधानत्वात् $Dc_1$.

**मो नो धातोः ॥८।२।६४॥**

धातोर्मस्य नः स्यात् झलि पदान्ते च ॥ नत्वस्यासिद्धत्वान्नलोपो न । प्रशान् । प्रशामौ । प्रशामः । प्रशामम् । प्रशामौ । प्रशामः । प्रशामा । प्रशान्भ्याम् । इत्यादि ॥

---

**मो नः** । 'नशेर्वा' इत्यनुवर्तमानेपि मण्डूकप्लुत्या संबन्धानुवृत्त्या वा 'झलो झलि' इत्यस्मिन्नत्रानुवर्तमाने न कश्चिद्दोष इत्यभिप्रेत्याह । झलीति । ननु चायमस्ति दोषः । आक्रंस्यते । अत्रापि नः स्यात् । नायं दोषः । जातेपि तस्मिन् 'नश्चापदान्तस्य झलि' इत्यनुस्वारः स्यात् । एवं चेत् प्रशान्भ्यामित्यत्रापि प्राप्नोत्यनुस्वारः । न प्राप्नोति । 'स्वादिष्वसर्वनामस्थाने' इति पदत्वेन नस्य पदान्तत्वात् 'पदस्य' इत्यत्रानुवर्तते । तत्र मकारेण पदं विशेष्यमाणं येन विधिस्तदन्तस्येति न्यायेन विशेष्यते । नान्तस्य पदस्येति । निर्दिश्यमानस्यादेशा भवन्तीति न्यायेन मस्यैव नः ततश्चायं तात्पर्यार्थः संपद्यते । धातोर्मस्य नः स्यात् पदान्ते इत्येतच्चेतसि कृत्वाह । **पदान्ते चेति** । अथवा पदस्यान्ते चेत्यनुवृत्तेः इत्युच्यते । तथा च **धर्मकीर्तिना रूपावतारे** उक्तम्[3] । 'धातोर्मकारस्य नकारादेशो भवति झलि परतः[1] पदान्ते च'[2] इति । म इति किम् । भित् । धातोः किम् । इदम् । झलि पदान्ते चेति किम् । प्रशामौ । **प्रशानिति** । शमु उपशमे । क्विप् । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः ।

---

१. झलि परतः B1, C. २. From 'नशेर्वा' to झलि परतः पदान्ते चेति dropped Dc2, Bc1. ३. प्रोक्तम् Dc3.

**किमः कः ॥७।२।१०३॥**

किमः कः स्याद्विभक्तौ[1] ॥ अकच्सहितस्याप्ययमादेशः । कः । कौ । के । कादेशस्य[2] स्थानिवत्त्वादङ्गकार्यम्[3] । केन । काभ्याम् । इत्यादि[4] । सर्ववत् ।

**इदमो मः ॥७।२।१०८॥**

इदमो मस्य मः स्यात् सौ परे[5] ॥ त्यदाद्यत्वापवादः ॥

**इदोय् पुंसि ॥७।२।१११॥**

इदम[6] इदस्थाने अय् स्यात् सौ[7] पुंसि ॥ सोर्लोपः[8] । अयम् । त्यद्याद्यत्वे कृते ।

**अतो गुणे ॥६।१।९७॥**

अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात् ॥

---

**किमः** । **अकच्सहितस्येति** । 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति कृतेकचि साकच्स्यापि किमः कादेशः स्यादित्यर्थः ।

**इदमः** । मस्य मविधानमनर्थकमित्याशङ्क्याह । **त्यद्याद्यत्वापवाद** इति ।

**इदोय्** । पुंसि किम् । इयं ब्राह्मणी ।

**अतः** । अकः सवर्णदीर्घस्य 'वृद्धिरेचि' इति वृद्धेश्चापवादः । अतः किम् । यान्ति । गुणे किम् । अपचे । अपदान्तात् किम् । दैत्यारिः ।

---

१. विभक्तौ परतः P, B1. २. Before it—कम् । कौ । कान् D3, D4. ३. स्थानिवत्त्वभावाद° B2. ४. इत्यादि । सर्ववत् dropped B2; शेषं सर्ववत् D4. ५. Dropped D1, D3. ६. इदम dropped B2. ७. After it—परे B1. ८. सुलोपः B2.

अनाप्यकः ॥७।२।११२॥

आबिति टा[1] इत्यारभ्य सुपः पकारेण प्रत्याहारः[2]। अककारस्य इदम इदोन्[3] स्यादापि विभक्तौ[4]। अनेन।

हलि लोपः ॥७।२।११३॥

अककारस्य इदम इदो लोपः स्यादापि हलादौ[5]। नात्रालोन्त्यविधिः[6]।

आद्यन्तवदेकस्मिन् ॥१।१।२१॥

एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात्। 'सुपि च' इति दीर्घः। आभ्याम्॥

---

अनाप्यकः। आबिति तृतीयैकवचनादारभ्य सप्तमीबहुवचनपर्यन्तं[7] प्रत्याहारोत्राप् गृह्यते। न टाबादि स्त्रीप्रत्ययः। विभक्ताविल्यस्यानुवृत्तेः टाबादेश्चाविभक्तिकत्वादिति भावः।

हलि। नात्रेति। नानर्थकेलोन्त्यविधिरिति परिभाषयेति भावः।

आद्यन्तवत्। द्वितीयादिकं सहायमपेक्ष्य आद्यन्तशब्दौ प्रवर्तेते[8]। तथापि लोके परस्मिन् सहाये सति पूर्वस्मिन्नसति चादिरित्युच्यते पूर्वस्मिंश्च सति परस्मिन्नसति चान्त इत्युच्यते। अतस्तदुभयमेकस्मिन्न संभवतीति तत्राद्यन्तप्रतिबद्धानि कार्याणि न स्युरतोयमतिदेश आरभ्यते। आद्यन्तवदिति। 'तत्र तस्येव' इति सप्तम्यर्थे वतिरित्यभिप्रेत्याह। आदाविव अन्त इवेति। सुपि च इत्यादि। अन्तापदिष्टमेतत् कार्यम्।

---

१. टाकारादारभ्य $B_1$. २. आप्प्रत्याहारः $B_2$. ३. इदः स्थानेन् C. ४. विभक्तौ परतः $B_2$. ५. हलि। 'सुपि च' इति दीर्घः। आभ्याम्। आद्यन्त° $B_2$. ६. After it—इदोनर्थकत्वात् C, $D_2$; and C has also नानर्थकेलोन्त्याविधिः after °नर्थकत्वात्. ७. °पर्यन्तः $Dc_2$. ८. वर्तेते for प्रवर्तेते $Dc_2$, $Nc_1$, $Nc_2$.

**नेदमदसोरकोः** ॥७।१।११॥

अककारयोरिदमदसोर्भिसे[1] ऐस् न स्यात् ॥ एत्वम् । एभिः । अत्वम्[2] । ङेः स्मै । पश्चाल्लोपः । अस्मै । आभ्याम् । एभ्यः । अस्मात् । आभ्याम् । एभ्यः । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ।

ककारयोगे[4] तु[5] इमकेन । इमकाभ्याम् । इमकैः । इत्यादि[6] ।

**द्वितीयाटौस्वेनः** ॥२।४।३४॥

द्वितीयायां टौसोश्च परत[7] इदमेतदोरेनादेशः स्यादन्वादेशे ॥

---

नेद । अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकं 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इत्यस्याः परिभाषायाः । ननु च 'इदमदसोः कात्' इत्येव सूत्रं किं नोक्तं तद्धि सिद्धे सत्यारभ्यमाणत्वान्नियमार्थं स्यात् । उच्यते । विपरीतोपि नियमः संभाव्यते[8] । इदमदसोरेव कादिति । ततश्चैतन्न स्यात् सर्वकैरिति । इमकेनेत्यादि । 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् । 'दश्च' इति मत्वम् । त्यदाद्यत्वम् ।

द्वितीया । 'इदमोन्वादेशेशनुदात्तस्तृतीयादौ' इत्यतो मण्डूकप्लुतिन्यायेन 'इदमः' इत्यनुवर्तते । 'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ' इत्यतोनन्तरसूत्रात् 'एतदः' इत्यनुवर्तत इति चेतसि कृत्वाह । इदमेतदोरिति । अन्वादेशशब्दार्थमाह ।

---

१. °भिस् $D_2$. २. Dropped $B_2$, $D_2$, $D_5$. ३. After it—नित्यत्वात् प्रथमं स्मैप्रभृतयः $B_1$. ४. अककारयोः किम् for ककारयोगे तु $B_2$; ककारयोगेन तु $D_2$. ५. तु is dropped in $B_1$. ६. इत्यादि is dropped in $B_1$, $B_2$. ७. Dropped $B_2$; परयोः $D_3$. ८. संभाव्येत $Dc_2$, $Bc_1$.

उक्तस्य पुनरुक्ति[1]रन्वादेशः। एनम्। एनौ। एनान्। एनेन। एनयोः २। उपधादीर्घः[2]। सोर्लोपः। नस्य लोपः[3]। राजा।

---

उक्तस्येति। उक्तस्य किंचित् क्रियादिकं विधातुं कथितस्य पुनस्तेनान्येन वा शब्देनान्यद्विधातुमुक्तिः कथनमन्वादेशः। एतं-मन्वादेशस्यार्थे जाते यत्र वस्तुमात्रनिर्देशं कृत्वा विधानं तत्र पुनरुक्तावप्यन्वादेशता न। तेन 'एतमातं ङितं विद्यात्' इत्येवमादि सिद्धम्। अत्र ईषदर्थ इत्यादिना वस्तुमात्रमाकारं निर्दिश्य एतमातं ङितं विद्यादिति विधीयते। अत एकमेव विधानं तेन एनादेशो न। एनमित्यादि। अत्रैवं वाक्यं प्रयोक्तव्यम्। इमं छात्रं छन्दोऽध्यापय। अथो एनं व्याकरणमध्यापय। एवमेव द्विवचनबहुवचनयोः प्रयोगः। अनेन छात्रेण रात्रिरधीता। अथो एनेनाप्यहरप्यधीतम्। अनयोश्छात्रयोः शोभनं शीलम्। अथो एनयोः प्रभूतं स्वमिति। एतद् व्याख्यानेनैव व्याख्यातप्रायत्वात् त्यक्तं सूत्रं व्याख्यायते। 'इदमोन्वादेशेऽशनुदात्तस्तृतीयादौ'। २।४।३२।। इदमोन्वादेशविषयस्याशादेशः स्यात् स चानुदात्तस्तृतीयादौ विभक्तौ परतः। एतस्यापवादः एनादेशः। अतस्तद्विषयं परित्यज्योदाह्रियते। आभ्यां छात्राभ्यां रात्रिरधीता। अथो आभ्यामहरप्यधीतम्। अस्मै कम्बलं देहि। अस्मै शाकं देहीत्यादि। अशादेशवचनं साकच्कार्थम्। इमकाभ्यां छात्राभ्यां रात्रिरधीता। अथो आभ्यामहरप्यधीतम्॥

इति मान्ताः॥

उपधेति। राजन् सुँ इति स्थिते 'सर्वनामस्थाने चासंबुद्धौ' इत्युपधादीर्घ इत्यर्थः। सोर्लोप इति। 'हल्ङ्याब्भ्यः—' इति। नस्येति। 'नलोपः प्रातिपदिकान्तस्य' इति।

---

१. पुनर्भाषणम° $B_2$. २. उपधाया दीर्घः P, $B_2$. ३. लोपः स्यात् C. ४. °मन्वादेश इत्यर्थः $Dc_2$, $Bc_1$. ५. तेन एव° $Dc_1$. ६. °मन्वादेशशब्दस्य $Dc_2$. ७. अथो dropped $Nc_1$. ८. अपि dropped $Nc_1$. ९. From अस्मै to अधीतम् dropped $Dc_1$, $Dc_2$, $Dc_3$. १०. अथोस्मै $Dc_4$. ११. सु $Dc_1$.

**न ङिसंबुद्ध्योः ॥८।२।८॥**

नस्य लोपो न स्याद् ङौ[1] सम्बुद्धौ च ॥ हे राजन् । राजानौ । राजानः । राजानम् । राजानौ । 'अल्लोपोनः' । श्चुत्वम्[2] । राज्ञः । राज्ञा ।

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥८।२।२॥**

सुब्विधौ स्वरविधौ संज्ञाविधौ

---

न ङि । न[3]नु राजन् इत्यत्र लु[4]प्ते सौ प्रत्ययलक्षणेनाप्रत्यय इति निषेधा[5]त् प्रातिपदिकत्वं नास्तीति अप्रातिपदिकान्तत्वान्नलोप एव न प्राप्नोति । ङौ तु परमे व्योमन्नित्यत्र प्रत्ययल[6]क्षणेन भत्वात् पँ[7]दत्वबाधात् । तत् किं निषेधारम्भेणेति चेदुच्यते । एतदेव नलोप-निषेधवचनं ज्ञापयति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिध्यते भसंज्ञा च न भवतीति । तेन राज्ञः पुरुषो राजपुरुष इत्यत्र नलोपः स्यात् अल्लोपश्च न स्यादिति सिद्धम् । ङावुत्तरपदे प्रतिषेधो वाच्यः । चर्मणि तिला: अस्य चर्मतिलः ॥

**नलोपः** । विधिशब्दोयं प्रत्येकमभिसंबध्यते इत्याह । **सुब्विधा-वित्यादि** । स्वरसंज्ञा तु[8]कां विधेयत्वात् तैः क[9]र्मषष्ठीयुक्तैः भाव-साधनो विधिशब्दोभिसंबध्यते । सुपा तु संबन्धसामान्यवाचिषष्ठ्यन्तेन कर्मसाधनः । तेन सुपां स्थाने यो विधिः सुपि च परतो यो विधिः स सर्वः संगृहीतः स्यात् । 'पूर्वत्रासिद्धम्' इति सिद्धे

---

१. ङिसम्बुद्ध्योः $B_2$ २. C, $D_2$, $D_5$ have जश्रोर्ज्ञः after it; dropped $D_3$; चुत्वम् $D_4$, $D_5$. ३. ननु च $Dc_3$, $Dc_4$. ४. लुप्तेपि $Dc_3$, $Dc_4$. ५. निषेधत्वात् $Dc_1$, $Dc_2$. ६. °लक्षणत्वेन $Dc_3$, $Dc_4$. ७. पदत्वाभावात् $Dc_4$. ८. °तुकोः $Dc_3$. ९. कर्मणि षष्ठी° $Dc_3$.

कृति तुग्विधौ च[1] न लोपोसिद्धो नान्यत्र राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं न स्यात्[2]। राजभ्याम्। राजभिः। राज्ञि। राजनि। इत्यादि। प्रतिदिवन् अस्य भविषये अल्लोपस्य

---

नियमार्थमेतद्वचनमित्यभिप्रेत्याह। नान्यत्रेति। राज्ञोश्वो राजाश्व इत्यत्र सवर्णदीर्घं प्रति नलोपोसिद्धो नेति भावः। सुब्विधावुदाहरति। इत्यसिद्धत्वादित्यादि। आत्वं राजभ्यामित्यत्र एत्वं राजभ्य इत्यत्र ऐस्[3] राजभिरित्यत्र एतानि सुब्विधय इति कृत्वा नलोपो सिद्धो जातः। स्वरविधौ राजवती। 'अन्तोवत्याः' इत्यन्तोदात्तत्वं नलोपस्यासिद्धत्वान्न। पञ्चार्मा। 'अर्मे चावर्णं द्व्यच् त्र्यच्' इति पूर्वपदाद्युदात्तत्वं न। संज्ञाविधौ पञ्च ब्राह्मण्यः। 'ष्णान्ता षट्' इति षट्संज्ञा स्यात्। नलोपस्यासिद्धत्वात्। ततो 'न षट्स्वस्रादिभ्यः' इति टाप् न। कृति तुग्विधौ वृत्रहभ्याम्। न लोपस्यासिद्धत्वात् 'ह्रस्वस्य' इति तुक् न। अत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया असिद्धत्वात् तुग्विधिग्रहणमनर्थकम्। तत् क्रियते परिभाषाया अस्या अनित्यत्वज्ञापनार्थम्। तेन सा या इत्यादौ विभक्त्याश्रयं त्यदाद्यत्वं बहिरङ्गमपि प्रातिपदिकमात्राश्रये टापि अन्तरङ्गेपि[4] नासिद्धम्। कृति किम्। वृत्रहच्छत्रम्। 'छे च' इति तुक् स्यादेव। राज्ञि राजनीति। 'विभाषा ङिश्योः' इति वाल्लोपः। प्रतिदिवन्निति। प्रतिपूर्वात् दिवः 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन्प्रत्ययान्तस्य प्रतिदिवन्नित्यस्य शसादौ प्रत्यये परे 'भस्य' इत्यधिकृत्य 'अल्लोपोनः' इति जातस्य अल्लोपस्य

---

१. C, $B_2$ drop च. २ °मैस् न स्यात् C, °मैस्त्वं च $D_5$. ३. ऐस्तु $Bc_1$.
४. अपि dropped $Dc_4$.

'उपधायां च' इति दीर्घविधौ स्थानिवत्त्वाभावात् प्रतिदीव्नः। इत्यादि स्यात्।

**न संयोगाद्वमन्तात्** ॥६।४।१३७॥

वकारमकारान्तसंयोगात्परस्यानोकारस्य लोपो न स्यात्॥ यज्वनः। यज्वना। यज्वभ्याम्। ब्रह्मणः। ब्रह्मणा। इत्यादि। शेषं राजन्वत्।

---

'उपधायां च' इति दीर्घविधौ इति। 'उपधायां च' इत्युपलक्षणं 'हलि च' इति दीर्घे क्रियमाणे। स्थानिवत्त्वाभावादिति। 'अचः परस्मिन् पूर्वविधौ' इति प्राप्तस्य स्थानिवत्त्वस्य 'न पदान्त–' इति सूत्रेण दीर्घविधौ निषेधात्। प्रतिदीव्न इत्यादि स्यादिति। 'हलि च' इति दीर्घेण प्रतिदीव्नः। प्रतिदीव्ना इत्यादि रूपं स्यादित्यर्थः। ननु च 'हलि च' इत्यस्य लक्षकम् 'उपधायां च' इति किमर्थमुक्तम्। उच्यते। अत्र 'उपधायां च' इत्यस्याप्राप्तेः। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परतः इको दीर्घः स्यादिति स्वयं व्याख्यातत्वात्। अतोवगम्यते काशिकायां यदुपधायां चेत्युक्तं तदनुरोधादुपधायां चेत्युक्तमिति।

न संयोगात्। संयोगादिति किम्। प्रतिदीव्ना। वमन्तात् किम्। तक्ष्णा। यज्वन इत्यादि। इष्टवान् यज्वा। 'सुयजोर्ङ्वनिप्'।

---

१. $B_1$, C omit प्रतिदीव्नः; 'हलि च' इति दीर्घः before it $B_2$; After it—प्रतिदीव्ना $D_3$, $D_4$, P, C, $B_1$, $B_2$. २. इत्यादि is omitted in $B_1$. ३. After it—उपधायां च रेफवकारान्तस्य उपधादीर्घः स्यात्। $D_6$. ४. Dropped $D_2$. ५. Dropped $B_3$. ६. राजवत् $B_2$.

**सौ च ॥६।४।१३॥**

इन्हन्पूषार्यम्णामसंबुद्धौ[1] सावेवोपधाया[2] दीर्घः स्यान्नान्यत्र ॥[3]

वृत्रहा । 'एकाजुत्तर—' इति प्रातिपदिकान्तस्य[4] नस्य णत्वम् । वृत्रहणौ । वृत्रहणः । वृत्रहणम् । वृत्रहणौ ।

**हो हन्तेर्ञ्णिन्नेषु ॥७।३।५४॥**

ञिति णिति प्रत्यये[5] नकारे च[6] परे हन्तेर्हस्य[7] कुत्वं स्यात् ॥

---

सौ च । 'इन्हन्पूषार्यम्णां शौ' इति क्लीबे वक्ष्यमाणसूत्रेण कृतं नियमं सौकर्यार्थमत्रैवाह । **सावेवोपधाया दीर्घः स्यान्नान्यत्रेति** । तत्र हि 'दीर्घविधिर्य इहेन्प्रभृतीनाम्' इत्यादिना वार्तिकत्रयेण इन्प्रभृतीनामुपधाया दीर्घः शावेव प्रत्ययेन नियम्यत इत्युक्तम् । तच्च महाभाष्याद् वृत्तिन्यासादेश्चावगन्तव्यम् । विस्तरभयादत्र नोक्तम् । शावेव प्रत्यये उपधादीर्घस्य नियतत्वात् वृत्रहणीत्यत्र 'अनुनासिकस्य क्विझलोः क्ङिति' इति यद् दीर्घत्वं तदपि न भवति । वृत्रहेवाचरति वृत्रहायते इत्यत्र 'अकृत्सार्वधातुकयोर्दीर्घः' इति तु दीर्घो भवत्येव । उपधादीर्घस्यैव[8] नियतत्वादस्य चाजन्तदीर्घविधित्वात् । **वृत्रहेति** । वृत्रं हतवान् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप् ।

हो हन्तेः । अत्र 'ञ्णिति' इत्येतत् 'हन्तेः' विशेषणं 'न' इत्येतत् हकारस्य विशेषणम् । तेनायमर्थः स्यात् । ञिति णिति प्रत्यये परतो योनन्तरो हन्तिस्तस्यावयवस्य हस्य कुत्वं नकारे च परतो यो हन्तेरवयवोनन्तरो हस्तस्य कुत्वं स्यादिति ।

---

१. °मुपधाया दीर्घः स्यादसम्बुद्धौ सावेव B2. २. °पधादीर्घः D6. ३. C, D1, D3, D5, D4 have हे वृत्रहन् after it. ४. प्रातिपदिकान्तनकारस्य P; प्रातिपदिकान्तनस्य D1, D4. ५. प्रत्ययपरे B1. ६. चाव्यवहिते परे B1. ७. °र्हकारस्य C. ८. एव dropped No1.

## हन्तेरत्पूर्वस्य ॥८।४।२२॥

हन्तेरपूर्वस्यैव नस्य णत्वं नान्यस्य। द्वित्वम्। जश्त्वम्। वृत्रघ्नः।

वृत्रघ्न इत्यादावल्लोपे कृते 'अचः परस्मिन्—' इति स्थानिवद्भावाद्यद-नानन्तर्यं प्राप्नोति तत् कुत्वं न विहन्ति। वचनसामर्थ्यात् श्रुतिकृतस्यै-वात्रानन्तर्यस्याङ्गीकारात् शास्त्रकृतस्यानन्तर्यस्याप्रयोजकत्वात्। यदपि सर्वैरेव ञ्णिर्हन्त्यवयवो हकार एव विशेष्यते तदपि 'येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात्' इति न्यायेन घातक इत्यादौ ञ्णितो धात्ववयवेन व्यवधानेपि कुत्वं स्यादेव। अत्र तु न स्यात्। हननमिच्छति हननीयति। हननीयतेर्ण्वुल्। हननीयकः। ल्युडादिना व्यवधानात्। ह इति किम्। अलोन्त्यस्य मा भूत्। हन्तेः किम्। प्रहारकः।

हन्तेः। एतत्तु सूत्रमुपसर्गस्थान्निमित्तात् परस्य हन्तेरकारपूर्वस्य नस्य णत्वविधायकम्। तथा चादादिगणे हन हिंसागत्योरस्य प्रक्रियायां स्वयमेव वक्ष्यते। 'हन्तेरत्पूर्व–' इति णत्वं प्रहण्यादिति। **काशिकाकारो**-प्युक्तवान्। 'हन्तेरकारपूर्वस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति' इति। अत्पूर्वस्येत्ययं सूत्रावयवस्तु वृत्रघ्न इत्यादौ णत्वं मा भूदिति नियमं करोति। स एव नियमः प्रस्तुतोपयोगि-त्वादाचार्यैर्व्याख्यातः। **हन्तेरकारपूर्वस्यैव नस्य णत्वमिति**। तथा चेममेवार्थं प्रकटयन् **महाभाष्यकार** आह। 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। वृत्रघ्नः। स्रुघ्नः। प्राघानीति' इति।

---

१. अत्पूर्वस्य as the Sûtra P, $D_1$, $B_1$, $B_2$. २. °रकारपूर्वस्यैव P, $D_4$, $D_5$, Com.; अत्पूर्वस्य हन्तेरेव $B_2$. ३. After it—स्यात् $D_4$. ४. Before it—तच्चानन्तर्यंश्रुतिकृतमाश्रीयते। $Dc_3$. ५. वृत्रग्हनः। वृत्रग्हना। Most of Mss. ६. वक्ष्यति $Dc_4$.

वृत्रघ्ना। वृत्रहभ्याम्। इत्यादि। एवं शार्ङ्गिन्यशस्विन्नर्यमन्पूषन्प्रभृतयः। पूष्णि। पूषणि। पूष्णो ङौ टिलोपो वेति केचित्। पूषि[1]॥

**मघवा बहुलम्॥६।४।१२८॥**

[2]मघवन्नित्यस्य वा तृ इत्यन्तादेशः स्यात्। ऋ इत्।

**उगिदचां सर्वनामस्थाने धातोः॥७।१।७०॥**

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्

---

'हन्तेरत्पूर्वस्य' इत्यत्राल्पूर्वग्रहणं न कर्तव्यं भवति इति। तथा च विचारचिन्तामणौ बोपदेवपण्डितैः साक्षादुक्तम्।

'यथा वृत्रहणावेकाजुत्तरेति ण इष्यते।
वृत्रघ्नो न तथा हन्तेरत्पूर्वस्य नियन्त्रणात्॥' इति।

**पूष्ण इति।** तथा च 'मासनिशापूष्णां ङौ वान्त[4]स्वराद्विलोपः' इति दुर्गवचनम्। 'पूष्णो ङिर्ङ्वा[5]' इति बोपदेवपण्डितवचनम्[7]।

**मघवा।** मघवेति सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमेत्यभिप्रेत्याह। **मघवन्नित्यस्येति।**

**उगिदचाम्।** अजिति यदि प्रत्याहारग्रहणं स्यात् तर्हि उत्तरसूत्रे पुनर् 'नपुंसकस्य झलचः' इत्यज्ग्रहणं न कुर्यात्। कृतं च। ततो ज्ञायते अत्राजिति धातुरञ्चतिर्गृह्यते इत्यभिप्रेत्याह। **नलोपिनो[3]ऽञ्चतेरिति।** उगिदचां किम्। वृषद्। वृषदौ।

---

१. After it—पक्षे पोषमासूत्रम्। अर्थवद्ग्रहणेनानर्थकस्य। इति न्यायात्। प्लीहा। प्लीहानौ। प्लीहानः। प्लीहानम्। प्लीहानौ। प्लीह्नः। प्लीह्ना। इत्यादि। २. मघवन्नित्यादेः $B_1$. ३. न्लोपिनो $D_1$, $D_2$. ४. वान्त्य° $Dc_3$. ५. °ङिर्न्वा $Dc_3$. ६. पाण्डितैरुक्तम् $Dc_3$. ७. °वचनं च $Dc_2$, $Dc_4$.

सर्वनामस्थाने[१] । उपधाया[२] दीर्घः । मघवान् । मघवन्तौ । मघवन्तः । हे[३] मघवन् । मघवन्तम् । मघवन्तौ । मघवतः ॥ मघवता । मघवद्भ्याम्[४] । इत्यादि[५] । तृत्वाभावे[६] मघवा । मघवानौ । मघवानः[७] । इत्यादि[८] । सुटि राजन्वत्[९] ॥

सर्वनामस्थाने किम् । भवतः पश्य । उगित्त्वादेवाञ्चतेरपि नुमि सिद्धे अञ्चतिग्रहणं नियमार्थं धातोश्चेदुगितः स्यात् तर्ह्यञ्चतेरेवेति । तेन उषास्रदित्यादौ न । ननु चैवमधातोरिति व्यर्थम् । न व्यर्थम् । अधातुभूतपूर्व[१०]स्यापि नुम् स्यादित्यधातुग्रहणम् । गोमन्तमात्मन इच्छति गोमत्यति गोमत्यतेः क्विप् । गोमान् । अन्यथा ह्यत्र क्विबन्तत्वेन धातुत्वान्नुम् न स्यात् । **सर्वनामस्थाने चेत्युपधादीर्घ** इति । मघवन् सु[११] इति स्थिते तृ अन्तादेशस्ततो नुम् । सुलोपः । संयोगान्तलोपः[१२] । ततः 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घः । ननु च[१३] 'पूर्वत्रासिद्धम्' इति संयोगान्त[१४]लोपस्यासिद्धत्वान्नान्तत्वाभावाद् दीर्घो न स्यात् । उच्यते । 'मघवा बहुलम्' इति बहुलग्रहणात् सर्वविधिव्यभिचारार्थात् 'संयोगान्तस्य[१५] लोपस्य सिद्धत्वाद्दीर्घो लभ्यते' । तथा च **महाभाष्यकारः** ।

'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ॥' इति

व्याख्यानान्मतुपा[१६] सिद्धत्वेन 'मघवा बहुलम्' इति सूत्रं निराकृतवान् । तत्र यदि प्रथमैकवचने त्रन्तस्य[१७] मघवन् शब्दस्य दीर्घो न

---

१. चेत्युपधादीर्घः $D_1$; After it—परे $D_3$, $D_4$, $D_5$. २. 'सर्वनामस्थाने चासंबुद्धौ' इत्युपधाया दीर्घः C; सर्वनामस्थाने चेत्युपधादीर्घः $D_3$, $D_4$, Com. ३. हे मघवन् to मघवतः dropped $D_3$. ४. P has मघवद्भिः । मघवते । मघवद्भ्याम् । मघवद्भ्यः । before इत्यादि. ५. इत्यादि dropped $B_2$. ६. त्रभावे $B_2$. ७. $B_1$ drops मघवानः । इत्यादि ।; $D_1$, $D_3$ drop मघवानः. ८. C, $B_2$ drop इत्यादि; before it—मघवानम् । मघवानौ । $D_4$. ९. राजवत् $B_2$, $D_2$. १०. अधातुपूर्वस्यापि $Dc_3$. ११. सु $Dc_3$. १२. संयोगान्तस्य $Dc_2$. १३. Dropped $Dc_2$. १४. संयोगान्तस्य लो° $Dc_2$. १५. संयोगान्तलोपस्य $Dc_4$. १६. वार्तिकव्याख्यानात् $Dc_3$, $Dc_4$. $Bc_1$. १७. त्वन्तस्य $Dc_3$.

## इग्यणः संप्रसारणम् ॥१।१।४५॥

यणः स्थाने भूतो भावी वा इक् संप्रसारणसंज्ञः स्यात् ॥

---

स्यान्मतुपा व्याख्यानं न कुर्यात् । मतुबन्तस्य हि प्रथमैकवचने दीर्घो भवत्येवेति विशेषस्य सत्त्वात् मतुपा च सूत्रं निराकरोति । अतो ज्ञायते मघवानिति दीर्घो भवत्येवेति । तथा बोपदेवपण्डितैरपि विचारचिन्तामणावुक्तम् ।

'मघवानेव मघवा बहुलं सुपि सुप्यभो ।
धीमद्वद्राजवद् भस्य श्वयुवेति संप्रसारणम् ॥' इति ।

तथा च दुर्गसिंहवृत्तावप्युक्तम् । 'सौ च मघवान् मघवा वा । मघवन् शब्दो मघवन्तुर्भवति विभक्तौ सौ च परे मघवान्' इति । तट्टीकायामपि । मघवन्तुरित्यनुबन्धो व्याख्यानाद्गम्यते । छन्दस्येतौ प्रयोगाविति भाष्यकारो भाषते । शर्ववर्मणस्तु वचनाद् भाषायाम-प्यवसीयते । तथा हि 'मघवद्वलज्ज्ञानिदाने' इति दृश्यते वतुना प्रयोग इति । तथा च भट्टिकाव्ये प्रयोगः । 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति ।

इग्यणः । भूत इति यत्र शास्त्रान्तरेण विहितो भूतविभक्त्या कार्यान्तरार्थमनूद्यते यथा संप्रसारणस्य 'संप्रसारणाच्च' इति तत्र भूतः । भावी वेति । यत्र भाव्यमानविभक्त्या विध्यर्थं निर्दिश्यते यथा 'ष्यङः संप्रसारणम्' 'वसोः संप्रसारणम्' इति तत्र भावी । ततश्चायमर्थः । सं इग्यणः स्थाने स्याद्यस्य भूतस्य संप्रसारणं स्यादिति । इह 'यथासंख्यम्—' इति परिभाषा प्रवर्तते । इकां

---

१. संप्रसारणं P; संप्रसारणसंज्ञं B2. २. प्रत्याख्यानं Dc3, Dc4. ३. तथा च Dc4. ४. मघवते तुर्भवति Bc1. ५. Dropped Nc1. ६. संप्रसारणसंज्ञा Nc1; संप्रसारणं संज्ञा Bc1. ७. Dropped Dc3.

**श्वयुवमघोनामतद्धिते** ॥६।४।१३३॥

भसंज्ञानामेषामतद्धिते परे[1] संप्रसारणं स्यात् ॥

**संप्रसारणाच्च** ॥६।१।१०८॥

संप्रसारणादचि[2] पूर्वरूपमेकादेशः स्यात्[3] ॥ आद्गुणः । मघोनः । मघोना । मघवभ्याम्[4] । इत्यादि । अतद्धिते किम् ।

---

यणां च समसंख्यत्वात्[5] । ततश्च दुहेर्लङन्तस्य कर्मकर्तर्यात्मनेपदमिट् । 'न दुह—' इति यक्प्रतिषेधः । अदादित्वाच्छपो लुक् । अट् । 'तिङश्च' इति तमप् । 'किमे—' इत्यादिनाम् । अदुहितमामित्यत्र यद्यपि लस्य स्थाने इर्जातस्तथापि संप्रसारणसंज्ञो[6] न । यस्य स्थानेजातत्वात् ततश्च 'हलः' इति दीर्घो न । द्युभ्यामित्यत्र 'दिव उत्' इत्युक्ते तस्य संप्रसारणत्वेपि 'हलः' इति प्राप्तं दीर्घत्वं तपरत्वान्न स्यात् । अक्षद्युवावित्यादावूटः संप्रसारणत्वेपि 'संप्रसारणाच्च' इति पूर्वरूपत्वं प्राप्तं वार्णादाङ्गं बलीय इत्युवङा बाध्यते ।

**श्वयुव** । 'अल्लोपोनः' इति सूत्रे योगविभागः क्रियते 'अल्लोपः' 'अनः' इति । तत्र 'अनः' इति 'श्वयुवमघोनामतद्धिते' 'अल्लोपः' इत्युभयोर्योगयोः शेषस्ततश्चानन्तस्यैव संप्रसारणं विधीयत इति युवती मघवतः इत्यादौ संप्रसारणं न भवति ।

**संप्रसा** । संप्रसारणविधिसामर्थ्याद्विगृहीतस्य श्रवणे प्राप्ते वचनम् । शकं ह्वयतीति शकहूः । शकह्वौ इत्यत्रान्तरङ्गे अचि कृतार्थं वचनमिति पश्चादागते बाह्य अचि औ इत्यस्मिन् परतः पूर्वरूपत्वं न भवति ।

---

१. P has अतद्धिते at the end of the sentence; परे dropped P, C. २. °दचि परे $B_1$. ३. $D_1$, $D_5$ drop it. ४. $B_1$ drops मघवभ्याम्. ५. °संख्यात्वात् Dc, $Bc_1$. ६. °संज्ञा $Bc_1$. ७. Dropped $Dc_3$.

माघवनम्[1] । शुनः । शुना । श्वभ्याम् । इत्यादि । युवन्शब्दे[2] युवस्योत्वे कृते

**न संप्रसारणे संप्रसारणम्** ॥६।१।३७॥

संप्रसारणे परतः[3] पूर्वयणः[4] संप्रसारणं न स्यात् ॥ इति यकारस्येत्वं[5] न । अत एव ज्ञापकादन्त्यस्य[6] यणः संप्रसारणम्[7] । यूनः । यूना । युवभ्याम् । इत्यादि । अर्वा । हे अर्वन् ।

---

**माघवनमिति** । मघवा देवतास्य । 'सास्य देवता' इत्यण् । 'अन्' इति प्रकृतिभावाट्टिलोपो न । **युवन्शब्द** इत्यादि । शसादौ परतः संप्रसारणे कृते इत्यर्थः ।

**न संप्र** । 'ष्यङः संप्रसारणम्' इत्यतः 'संप्रसारणम्' इत्यनुवर्तमानेपि पुनः संप्रसारणग्रहणं श्वयुवमघोनामित्यस्यान्यदेशस्यापि निषेधार्थम् । **यून** इति । अत्र संप्रसारणग्रहणसामर्थ्यादेव पूर्वस्य संप्रसारणनिषेधे कार्ये सवर्णे[8] दीर्घत्वं न स्थानिवत् स्यात् । अस्तु वा स्थानिवत्त्वम् । तथाप्येतावद्व्यवधानमाश्रयिष्यते । ननु चास्मिन् निषेधे आरब्धेपि यून इत्यत्र यकारस्य संप्रसारणनिषेधो न । यतस्तस्य पूर्वं[9] संप्रसारणं करिष्यते पश्चाद्वकारस्य कृतं च[10] वचनशतैरप्यशक्य[11]निवृत्तीत्याशङ्क्याह । अत एवेत्यादि ।

---

१. Dropped $B_2$. २. युवन्शब्दे तु वकारस्योत्वे कृते $B_3$; युवन्शब्दे तु उत्वे कृते $D_4$; युवन्शब्दे तु वस्य उत्वे कृते $D_6$. ३. परे $B_1$, $D_1$. ४. पूर्वस्य यणः C, $D_3$, $D_4$. ५. °स्य नेत्वम् $D_2$, $D_4$, $D_5$; °स्य इत्वं न C, $B_3$. ६. °दन्त्यस्यैव $B_1$. ७. $B_1$ has स्यात् after it. ८. सवर्णदीर्घत्वं $Dc_3$, $Dc_4$; नस्यात्वे कृते अल्विधित्वात् । उपधादीर्घः $D_2$. ९. Dropped $Dc_1$, $Dc_2$. १०. Dropped $Dc_2$. ११. °प्यशक्यं निवर्तयितुमित्या° $Dc_3$.

**अर्वणस्त्रसावनञः ॥६।४।१२७॥**

नञ्[1]वर्जस्यार्वणस्तृ इत्यन्तादेशः स्यादसौ [2]प्रत्यये परतः । अर्वन्तौ । अर्वन्तः । अर्वन्तम् । अर्वन्तौ । अर्वतः । अर्वता । अर्वद्भ्याम् । इत्यादि । अनञः किम् । अनर्वा । अनर्वाणौ । अनर्वाणः । [3]इत्यादि । यज्ववत् ।

**पथिमथ्यृभुक्षामात् ॥७।१।८५॥**

एषां सौ परे आकारोन्तादेशः स्यात् ॥

---

**अर्वणः** । उकारस्यात्रानुनासिकत्वप्रतिज्ञानात् प्रथमैकवचनं सुर्गृह्यते न सप्तमीबहुवचनम् । 'नानुबन्धकृतमनेकालत्वम्' इत्ययमन्तादेशः स्यादित्यभिप्रेत्याह । **तृ इत्यन्तादेश** इति । 'असौ' इति [4]प्रसज्यप्रतिषेधः पर्युदासो वा । तत्र [4]प्रसज्यप्रतिषेधपक्षे निर्निमित्त [5]एष त्रन्तादेशः सौ निषिध्यते । पर्युदासे तु सुव्यतिरिक्तप्रत्ययनिमित्तकस्तत्र पक्षद्वयमपि प्रमाणम् । तत्र पर्युदासपक्षमाश्रित्याह । **असौ प्रत्यय** इति । ननु च 'नञिव युक्तमन्यसदृशार्थे' इति न्यायेन सुसदृशेन्यस्मिन् प्रत्यये विभक्तावेव स्यात् त्रादेशस्तत् किमिति विभक्ताविति परित्यज्य प्रत्यय इत्याह । नैष दोषः । अनित्यत्वान्नञिवयुक्तपरिभाषायाः । अनित्यत्वं तु 'औषधेश्च विभक्तावप्रथमायाम्' इत्यत्र विभक्तिग्रहात् ज्ञायते । यदि हि सा नित्या स्यात् प्रथमानिषेधादेवान्यस्यां विभक्तावेवं स्यादिति विभक्तिग्रहणं न कुर्यात् । **यज्ववदिति** । तेन 'न संयोगान्तात्—' इति शसादावल्लोपो नेत्यभिप्रायः ।

**पथि** । हल्ङ्यादिलोपे प्राप्ते वचनं 'भाव्यमानोण् सवर्णान्न गृह्णाति' इति [6]नकारस्थाने '[7]अलोन्त्यस्य' इति न्यायेन भवन्नकारोनुनासिको [8]न भवति । शुद्धो ह्ययमुच्चार्यते ।

---

१. नञ्वर्जितस्या° C. २. विभक्तौ $B_1$, C; प्रत्यये परे $D_3$. ३. Dropped $B_2$, $D_3$. ४. प्रसह्य° $Dc_3$, $Dc_4$. ५. एव dropped $Dc_1$, $Dc_3$. ६. नकारस्य स्थाने $Bc_1$. ७. न 'अलोन्त्यस्य' $Dc_2$; अलोन्त्येति $Dc_3$. ८. Dropped $Dc_2$.

**इतोत् सर्वनामस्थाने ॥७।१।८६॥**

पथ्यादेरिकारस्योकारः स्यात् सुटि ॥

**थोन्थः ॥७।१।८७॥**

पथिमथोस्थस्य न्थादेशः स्यात् सुटि। स्थानिवत्त्वाभावः। पन्थाः। उपधादीर्घः। पन्थानौ। पन्थानः। पन्थानम्। पन्थानौ।

**भस्य टेर्लोपः ॥७।१।८८॥**

भसंज्ञस्य पथ्यादेष्टेर्लोपः स्यात् ॥ पथः। पथा। पथिभ्याम्। इत्यादि। एवं मन्थाः। ऋभुक्षाः ॥

---

इतः। अथ 'आत्' इति वर्तमाने अद्वचनं किमर्थम्। ह्रस्वश्रवणार्थमिति चेन्न। कृतेपि ह्रस्वे सौ परतः सवर्णदीर्घेण भाव्यम्। अन्यत्र तूपधादीर्घत्वेनेति। उच्यते। ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' इति विकल्पेन दीर्घविधेर्ह्रस्वस्य पक्षे श्रवणार्थमद्वचनम्। स्थानिन्यादेशे च तपरत्वं मुखसुखार्थमित्येके। पथीनि इति दीर्घनिवृत्त्यर्थमित्यन्ये। पन्थानमात्मन इच्छतीति पथीयति। ततः क्विप्। अकारयकारलोपौ। पथी।

थोन्थः। द्वावपि स्थान्यादेशावनच्कौ। यस्तु न्थ इत्यत्राकारः श्रूयते स उच्चारणार्थः। सत्यप्यनेकाल्त्वे न्थादेशस्य 'निर्दिश्यमानस्यादेशा भवन्ति' इति थमात्रस्यैवायं विज्ञायते। स्थानिवत्त्वाभाव इति। नस्यात्वे कृते अल्विधित्वात् स्थानिवदादेशोनल्विधाविति स्थानिवत्त्वाभावस्ततश्च हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्ङ्यादिलोपो नेति भावः। एवमित्यादि। मन्थानौ। ऋभुक्षाणौ। मथः। ऋभुक्षः। मथिभ्याम्। ऋभुक्षिभ्याम्। इत्यादि पथिवत् ज्ञेयम्।

---

१. $B_2$ gives this Sûtra after 'थोन्थः' and has उपधाया दीर्घः after सुटि of the Vṛitti. २. °स्याकारादेशः C. ३. Dropped $D_5$. ४. स्थानिवत्त्वाभावान्न सुलोपः C, $D_3$, $B_2$; $D_2$ has स्थानिवत्त्वाभावः after पन्थाः. ५. उपधाया दीर्घः C, $D_3$, P, $B_2$. ६. Before it—पथिभिः $D_2$. ७. न dropped $Nc_1$.

**ष्णान्ता षट् ॥१।१।२४॥**

[1]उपदेशकाले षान्ता [2]नान्ता च[3] संख्या षट्संज्ञा स्यात् ॥ [4]उपदेशकाले[5] किम् । शतानि ।

[6]षड्भ्यो लुक् । [7]पञ्च । पञ्च । तदन्तग्रहणमत्रेष्यते । परमपञ्च । गौणत्वे तु[8] प्रियपञ्चानः । पञ्चभिः । पञ्चभ्यः । [10]'षट्चतुर्भ्यश्च' इति नुट् ॥

---

**ष्णान्ता षट्** । ष्णान्तेति स्त्रीलिङ्गनिर्देशेन संख्यानुवृत्तिः स्पष्टीकृता । न च षकारमात्रं नकारमात्रं वा संख्यास्तीति सामर्थ्यादेव तदन्तत्वे ज्ञातेऽप्यन्तग्रहणमुपदेशावस्थायां या ष्णान्ता सा षट्संज्ञा यथा स्यादित्येवमर्थमित्यभिप्रेत्याह । **उपदेशकाले षान्ता नान्ता च संख्या षट्संज्ञा स्यादिति** । **शतानीति** । यद्यत्रोपदेशकालद्योतनार्थमन्तग्रहणं न स्यात्तदा शतानीत्यत्र नुमि कृते षट्संज्ञा स्यात् ततश्च लुक् स्यात् स मा भूदित्येवमर्थमन्तग्रहणमिति भावः । **तदन्तेति** । **अत्रेति** । 'षड्भ्यो लुक्' इत्येतस्मिन् सूत्रे । **परमपञ्चेति** । परमाश्च ते पञ्च चेति विग्रहः । **गौणत्वे त्विति** । षड्भ्य इति बहुवचननिर्देशात् अर्थस्येदं ग्रहणम् । स चार्थो द्विधा प्रधानं चाप्रधानं च तत्र प्रधाने कार्यसंप्रत्ययाद् गौणत्वे जश्शसोर्लुक् न तत्रार्थस्याप्राधान्यादिति भावः । **प्रियपञ्चान इति** । प्रियाः पञ्च येषामिति बहुव्रीहिः ।

---

१. Before it—स्त्रीलिङ्गनिर्देशात् संख्येति संबध्यते $B_2$. २. नान्ता षट्संज्ञा स्यात् C. ३. च dropped $D_3$, $D_5$. ४. $D_1$ and $D_3$ have उपदेशकाले किम् । शतानि after पञ्च । पञ्च ।. ५. °काले इति किम् P, $D_2$. ६. षड्भ्यो लुक् । पञ्च ॥ पञ्च । dropped $D_2$. ७. Before it—षट्संज्ञकेभ्यः (°संज्ञकेभ्यः $D_4$) परयोर्जश्शसोर्लुक् स्यात् । $B_2$, $D_4$. ८. तु न C, $D_3$, $D_4$, $D_5$; न for तु $D_1$; पुनः for तु $B_2$. ९. Dropped $Dc_3$. १०. Dropped $Nc_2$.

**नोपधायाः ॥ ६।४।७॥**

नान्तस्योपधाया दीर्घः स्यान्नामि। पञ्चानाम्। परमपञ्चानाम्। न गौणत्वे नुडिष्यते। प्रियपञ्च्ञाम्। पञ्चसु। एवं सप्तन्नवन्दशन्।

**अष्टन आ विभक्तौ ॥७।२।८४॥**

अष्टन आत्वं स्याद्विभक्तौ परतः।

**अष्टाभ्य औश् ॥७।१।२१॥**

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात्। अष्टाभ्य इति

---

**नोप**। नान्तस्य किम्। चतुर्णाम्। नामीति किम्। चर्मणाम्। **पञ्चानामिति**। पञ्चन् आम् इति स्थिते नुट्। 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः। **न गौणत्वे** इति। अत्रापि 'षड्भ्यो लुक्' इत्यत्रोक्त एव हेतुः। **प्रियपञ्च्ञामिति**। आमि अल्लोपः। श्चुत्वेन ञः।

**अष्टनः**। आ इति व्यक्तिनिर्देशोयम्। जातिनिर्देशे तु अन्तरतमपरिभाषया नकारस्य स्थानेनुनासिकः स्यात्।

**अष्टाभ्यः**। 'षड्भ्यो लुक्' इति लुकि प्राप्तेयमारम्भोतो 'येन नाप्राप्ते स तस्य बाधकः' इति परिभाषयास्यैव बाधको न सुपो धातुप्रातिपदिकयोरस्य। एतस्मिन् हि प्राप्ते चाप्राप्ते चारम्भात्। अतोष्टपुत्रेत्येवमादि सिद्धं स्यात्। **अष्टाभ्य** इति। कृताकारस्याष्टनो निर्देशो यत्रास्यात्वं तत्रैवौश्त्वं यथा स्यादित्येतदर्थः। अन्यथा लाघवात् अष्टन इत्येव ब्रूयादित्यभिप्रेत्याह। **कृताकारादिति**। ननु च 'अष्टन आ विभक्तौ' इत्यनेनाष्टनो नित्यमात्वं विधीयते। तत्राकृताकारस्याष्टनो असत्त्वेन व्यभिचाराभावात् कृताकारस्याष्टनो निर्देशो व्यर्थ इत्याशङ्क्याह। **अष्टाभ्य इति**।

---

१. नान्तोपधा° Dc5. २. गौणत्वे नुट् न C; गौणत्वे तु नुट् नेष्यते B1, B2. ३. °पञ्चाम् D1; °पञ्चाम्। 'अल्लोपो नः' D2. ४. °दशन्प्रभृतयः C, D2. ५. परतः dropped B1. ६. Dropped Dc1. ७. तत्रैवौत्वं Dc3.

दीर्घोच्चारणं ज्ञापकमात्वविकल्पस्य ॥ अष्टौ[1] २। परमाष्टौ। गौणत्वे तु नात्वम्। प्रियाष्टा। आत्वस्याभावादौश्त्वं न। प्रियाष्टानः। अष्टाभिः। अष्टाभ्यः २। अष्टानाम्। अष्टासु। आत्वाभावे। अष्ट २। अष्टाभिः। अष्टाभ्यः २। अष्टानाम्। परमाष्टानाम्। गौणत्वे तु। प्रियाष्णाम्। अष्टसु। गौणत्वेप्यात्वं जश्शसोरौश्त्वं वेत्येके[4]। प्रियाष्टाः। प्रियाष्टौ। जसि शसि च[5]। प्रियाष्टौ २। आमि[6] न नुट्। प्रियाष्टाम्। शेषं हाहावत्। 'एकाचो बश्—' इति भष्भावः[7]। जश्त्वचर्त्वे।

---

दीर्घोच्चारणमिति। दीर्घस्योच्चारणं दीर्घस्याकारस्योच्चारणं कृतात्वस्योच्चारणमिति यावत्। अत्र च कृतात्वोच्चारणमिति वक्तव्ये दीर्घोच्चारणमिति वचनम् 'अष्टनो दीर्घात्' इति सूत्रे दीर्घवचनमपि ज्ञापकमिति दर्शयितुम्। **परमाष्टाविति**। तदन्तविधीष्टिं दर्शयति। **प्रियाष्टान इति**। प्रिया अष्टौ येषामिति बहुव्रीहिः। **अष्ट अष्ट इति**। औश्त्वाभावात् 'षड्भ्यो लुक्' इति जश्शसोर्लुक्। **प्रियाष्णामिति**। गौणत्वान्न नुट्। अल्लोपः। **गौणत्व इति**। एके **दुर्गसिंहादयः**। तथा च **दुर्गसिंहवृत्तावुक्तम्**। 'अष्टनः सर्वासु' इति सूत्रे 'प्रियाष्टाः। प्रियाष्टौ' इति। तट्टीकायामुक्तम्। 'प्रिया अष्टौ यस्य ययोर्वेति विग्रहः। एवं प्रियाष्टाम्। प्रियाष्टा पुरुषेणेत्यादि यथालक्षणं योज्यम्' इति। तथा 'औ तस्माज्जश्शसोः' इति सूत्रेप्युक्तम्। 'तदन्तविधिरत्र प्रकरणेस्तीति परमाष्टौ उत्तमाष्टौ प्रियाष्टौ येषाम्। अष्टावतिक्रान्ता वा प्रियाष्टौ अत्यष्टौ इति भवितव्यमेव' इति।

इति नान्ताः ॥

---

१. After this—अष्टाभिः। अष्टाभ्यः २। अष्टानाम्। अष्टासु। परमाष्टौ। परमाष्टानाम्। गौणत्वे तु नात्वम्। प्रियाष्टानः। 'नोपधायाः' 'षट्चतुर्भ्यश्च' इति नुट्। आत्वस्याभावादौश्त्वं न। प्रियाष्टानः। आत्वाभावे। अष्ट २. &c. $B_2$.
२. Dropped $D_4$. ३. C has after it—प्रियाष्णः। प्रियाष्णा। ४. वेति केचित् $D_5$. ५. Dropped P. ६. आमि च C. ७. °भावे $D_4$.

भुत् । भुद् । बुधौ । बुधः । बुधम् । बुधौ । बुधः । बुधा । भुद्भ्याम् । इत्यादि ।

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥३।२।५९॥**

आद्याः पञ्च क्विन्नन्ता निपात्यन्ते त्रिभ्यः क्विन् विधीयते । अञ्चेः सुप्युपपदे क्विन् युजि क्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते । क इ न एते इतः ।

---

भुदिति । बुध्यते जानातीति भुत् । बुध अवगमने । अस्मात् क्विप् ॥

इति धान्ताः ॥

**ऋत्विक्** । **आद्याः पञ्चेति** । ऋत्विगादयः पञ्च शब्दाः क्विन्नन्ता निपात्यन्ते । अलाक्षणिककार्यार्थं निपातनम् । तथाहि ऋतावुपपदे यजेर्धातोः क्विन् निपात्यते । ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋत्विक् । रूढिरेषा कथंचिद् व्युत्पाद्याः । धृषेः क्विन् । द्विर्वचनमन्तोदात्तत्वं च निपात्यते । धृष्णातीति दधृक् । सृजेः कर्मणि क्विन् अमागमश्च । सृजन्ति तां स्रक् । दिशेः कर्मणि क्विन् । दिशन्ति तां दिक् । उत्पूर्वात् ष्णिहेः क्विन् । उपसर्गान्तलोपः । षत्वं च । उष्णिक् । त्रिभ्य इति । अञ्चुयुजिक्रुञ्च एतेभ्यस्त्रिभ्यः क्विन् विधीयते । निपातनैः सह निर्देशादत्रापि किंचिदलाक्षणिकमस्तीत्यभिप्रेत्याह । अञ्चेरित्यादि क इ न एते इत इति । 'लशक्वतद्धिते' इति क इत् । 'उपदेशेऽजनुनासिक इत्' इतीकारः । 'हलन्त्यम्' इति नकारः ।

---

१. C has before this हे भुत्—द्. २. न्लोपाभाव॰ D1. ३. क्विप् Dc1 Dc2. ४. ऋतुना प्र॰ Nc2. ५. व्युत्पाद्यम् Bc1.

**कृदतिङ् ॥३।१।९३॥**

अत्र [1]तिङ्वर्जः प्रत्ययः कृत्संज्ञः स्यात् ॥

**वेरपृक्तस्य ॥६।१।६७॥**

अपृक्तस्य वेर्लोपः स्यात् ॥

**कृत्तद्धितसमासाश्च ॥१।२।४६॥**

[3]कृतस्ताद्धिताः समासाश्च प्रातिपदिक[4]संज्ञाः स्युः ॥ स्वाद्युत्पत्तिः ।

**युजेरसमासे ॥७।१।७१॥**

युजेः सुटि नुम् स्यादसमासे ॥ सुलोपः । संयोगान्तस्य लोपः ।

---

कृद । अत्रेति । तृतीये धात्वधिकारे ।

वेर । वेरिति विशेषकराननुबन्धानुत्सृज्य सामान्येन क्विबादयो गृह्यन्ते । अपृक्तस्येति किम् । पृदृभ्यां विन् । पर्विः । दर्विः ।

कृत्तद्धित । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रे 'अप्रत्ययः' इति पर्युदासात् कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसंज्ञा विधीयते । समासग्रहणं नियमार्थम् । अर्थवत्समुदायानां मध्ये समासस्यैव प्रातिपदिकसंज्ञेति । तेन वाक्यस्य प्रातिपदिकसंज्ञा न । ननु चैवं बहुपटवः उच्चकैरित्यादौ प्रकृतिप्रत्ययसमुदायानां प्रातिपदिकसंज्ञा न स्यात् । नैष दोषः । 'अप्रत्ययः' इति निषेधात् ज्ञापकाद्भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकत्वम् । अन्यथा 'अप्रत्ययः' इति पर्युदासो व्यर्थः स्यात् ।

युजेः । युजिर् योगे । क्विन् । 'झलो झलि' इत्यतः 'झलि' इत्येतस्मिन् [5]मण्डूकप्लुत्यानुवर्तमानेपि न कश्चिद्दोष इत्यभिप्रेत्याह । झलीति । 'पदस्य' इत्यनुवृत्तेः पदान्ते चेत्याह । तथा च **धर्मकीर्तिना** **रूपावतार** उक्तम्[6] ।

---

१. तिङ्वर्जितः $B_1$. २. कृतसंज्ञकः $B_1$. ३. एते for कृ...श्च $D_5$. ४. °संज्ञिकाः P. ५. मण्डूकप्लुत्या 'झलि' इत्यस्मिन्न° M, K. ६. प्रोक्तम् $Dc_3$.

क्विन्प्रत्ययस्य कुः ॥८।२।६२॥

क्विन्नन्तस्य धातोः कवर्गोन्तादेशः स्यात् झलि पदान्ते च ॥ युङ् । अनुस्वारपरसवर्णौ । युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । युजः । युजा । युग्भ्याम् । इत्यादि । असमासे किम् ।

चोः कुः ॥८।२।३०॥

चवर्गस्य कवर्गः स्यात् झलि पदान्ते च ॥ सुयुक्-ग् । सुयुजौ । इत्यादि । समाध्यर्थस्य युजेर्न नुम् । युक् । समाधिमानित्यर्थः । संयोगान्तस्य लोपः ।

---

'क्विन्प्रत्ययान्तस्य कवर्गादेशो भवति झलि परतः पदान्ते च' इति प्रत्ययग्रहणं बहुव्रीहिप्रतिपत्त्यर्थम् । क्विन् प्रत्ययो यस्मात् सोयं क्विन्प्रत्ययो धातुस्तस्येति । ततश्च यदग्रे वक्ष्यति क्विन्प्रत्ययो यस्माद्विहितस्तस्यान्यत्रापि प्रत्यये पदान्तस्य कुत्वमिति तदुपपन्नं भवति । युङ् इति । युनक्तीत्यर्थे युजेः क्विन् । क इ न एते इतः । वेर्लोपः । कृत्त्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । 'युजेरसमासे' इति नुम् । हल्ङ्याब्भ्यो दीर्घात्... हल्ङ्यादिलोपः । संयोगान्तस्य लोपः । कुत्वेनानुनासिकस्य नस्यानुनासिको ङः । अनुस्वारपरसवर्णाविति युँनूज् इति स्थिते 'नश्चापदान्त—' इत्यनुस्वारः । 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णः ।

तस्यासिद्धत्वात् 'चोः कुः' इति कुत्वं न । सुयुक् इति । 'सत्सूद्विष—' इत्यादिना क्विप् । समाध्यर्थस्येति । 'युजेरसमासे' इत्यत्र युजेरिकारानुबन्धस्य ग्रहणं युज समाधौ इत्यस्य निवृत्त्यर्थस्य । तेन समाध्यर्थस्य न नुम् इति भावः । युक् । युज्यते समादधातीति युक् ।

---

१. °रस्य ययि परसवर्णः $D_3$. २. कवर्गोन्तादेशः $B_1$, $D_3$. ३. Dropped $D_5$. ४. After it—स्यात् $B_2$. ५. संयो—लोपः dropped $D_3$. ६. लोपेन $B_2$. ७. Before it—पदस्य $Dc_3$, $Dc_4$. ८. कुत्वं स्यादित्येतदु° $Dc_3$. ९. °सुलोपः $Dc_4$. १०. °न्तलोपः $Dc_3$. ११. युन्ज् औ इति $Dc_1$.

खन् । खञ्जौ[1] । इत्यादि । 'व्रश्चभ्रस्ज—' इति षत्वम् । जश्त्व-चर्त्वे[2] । राट्-ड् । राजौ । राजः । राजम् । राजौ । राजः । राजा । राड्भ्याम् । इत्यादि । एवं विभ्राट् देवेट् विश्वसृट् परिमृट् ।

परौ व्रजेः षः पदान्ते इति षत्वम्*[3] । परिव्राट् ।

**विश्वस्य वसुराटोः ॥६।३।१२८॥**

विश्वशब्दस्य दीर्घोऽन्तादेशः[4] स्याद्वसौ[5] राट्शब्दे च[6] परे ॥ विश्वावसुः । विश्वाराट्-ड् । विश्वराजौ । विश्वराजः[7] । विश्वराजा[8] । विश्वाराड्भ्याम् । इत्यादि ॥

---

**खन्निति** । खजि गतिवैकल्ये । इदित्वान्नुम् । क्विप् । **राडिति** । राजृ दीप्तौ 'सत्सूद्विष—' इति क्विप् । **एवमित्यादि** । विभ्राजते इति विभ्राट् । देवान् यजते देवेट् । विश्वं सृजति विश्वसृट् । परिमार्ष्टीति परिमृट् । सर्वत्र क्विप्[9] । **परौ व्रजेः षः । पदान्त इति षत्वमिति** । एतत् सूत्रमुणादौ पठ्यते । तेन च क्विप्प्रत्ययः परिपूर्वात् व्रजेः क्रियते पदान्ते व्रजस्य षः । तेन ष इत्यर्थः । **परिव्राडिति** । परिवर्ज्य[10] सर्वं संन्यस्य व्रजतीति परिव्राट् कर्मन्दी[11] ।

**विश्वस्येति** । **राडिती** । विकृतिनिर्देशो[12] यत्रास्यैतद्रूपं तत्र यथा स्यात् । कुत्रास्यैतद्रूपम् । पदान्ते । पदान्ताधिकारे हि षत्वादय उक्ताः । **विश्वावसुरिति** । विश्वं वसु अस्य विश्वावसुः । **विश्वाराडिति** । विश्वस्मिन् राजते विश्वाराट् ।

---

१. After it—खञ्जः C, $D_2$, $D_3$; खन्त्सु $B_2$ ; खञ्जम् । खञ्जौ । खञ्जः । खञ्जा । खन्भ्याम् $D_5$. २. जश्त्वं चर्त्वम् $D_2$. ३. षत्वं ण्विप्रत्ययश्च $B_1$; वाच्यम् for षत्वम् P, C, $D_1$; षत्वं दीर्घश्च $D_5$. ४. वसुराट्शब्दयोः परतः C. ५. Dropped $D_5$. ६. परतः $B_1$, P, C. ७. After it—विश्वराजम् । विश्वराजौ । विश्वराजः । P, C, $D_2$, $D_3$. ८. From विश्वराजा to इत्यादि dropped $D_2$, $D_3$. ९. क्विप् $Dc_4$. १०. परिव्रज्य $Bc_1$, $Dc_3$. ११. कपर्दी $Nc_2$. १२. विकृत° $Nc_2$, $Bc_1$.

**स्कोः संयोगाद्योरन्ते च ॥८।२।२९॥**

पदान्ते यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् झलि परे। भृट्-ड्। 'झलां जश् झशि' इति सस्य दत्वे चुत्वम्। भृज्जौ। भृज्जः। इत्यादि। क्विन्नन्तत्वात् कुत्वम्। ऋत्विक्-ग्। ऋत्विजौ। ऋत्विजः। इत्यादि। 'रात्सस्य' इति नियमान्न संयोगान्तस्य लोपः। चोः कुः।

---

**स्कोः।** झलि परत इति। झलि परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यादित्यर्थः। ननु काष्ठशक्स्थातेति थकारे झलि संयोगादेः कस्य लोपः स्यात्। न। कान्तानां क्विबन्ताना प्रयोग एव नास्ति। तथोक्तं भाष्ये। काष्ठशगेव नास्तीति। वास्यर्थं वाक्यर्थमित्यत्र बहिरङ्गस्य लक्षणस्य यणादेशस्यासिद्धत्वात् संयोगादिलोपो न। स्कोः किम्। वर्वर्ति। संयोगाद्योः किम्। पयः। अन्ते च किम्। रक्षिता। **भृडिति।** भ्रस्जो पाके। भृज्जतीति भृट्। क्विप्। सलोपः। व्रश्चादिना षः। जश्त्वचर्त्वे। झलामिति किम्। भृस्ज् औ इति स्थिते झलामिति जशि कार्ये 'स्थानेन्तरतमः' इति स्थानत आन्तर्यात् सस्य दत्वे कृते पश्चात् 'स्तोश्चुना श्चुः' इति चुत्वं जकार इत्यर्थः। असिद्धत्वं जश्त्वस्य न स्यात्। 'न मु ने' इत्यत्र 'न' इति योगविभागात्। तथा च भृज्जतीनां डिति च इति निर्देश उपपद्यते। **क्विन्नन्तत्वादिति।** 'ऋत्विक्—' इत्यादिना क्विन्नन्तनिपातनात् 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्।

---

१. झलि च परतः $B_1$; झलि परे पदान्ते च $B_2$; झलि च परे $D_2$, $D_4$; झलि (परे dropped) $D_3$; झलि परे चकारात् पदान्ते $D_5$. २. दत्वम् C. दत्वे चुत्वे $D_1$, $B_2$; दत्वं चुत्वम् $D_2$. ३. ऋतौ यजत इति ऋत्विक् C. ४. C has ऋत्विजम्। ऋत्विजौ। ऋत्विजः। ऋत्विजा। ऋत्विग्भ्याम् before t. ५. °स्थानेति $Bc_1$, $Dc_3$. ६. ककारान्तानां $Dc_3$. ७. तथा चोक्तं $Dc_3$. ८. सावर्ण्यात् आन्तरतम्यात् $Dc_3$, $Bc_1$. ९. दकारे $Bc_1$, $Dc_3$, $Dc_4$. १०. असिद्धत्वं तु $Nc_2$, $Dc_2$.

ऊर्क्-र्ग् । ऊर्जौ । ऊर्जः । इत्यादि[1] । अवयाः[2] । अवयाजौ । अवयाजः । हे अवयाः । हे अवयः । अवयाजम् । अवयाजौ । अवयाजः । अवयाजा । अवयोभ्याम् । इत्यादि । त्यदाद्यत्वं पररूपत्वम्[3] ।

**तदोः सः सावनन्त्ययोः ॥७।२।१०६॥**

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात् सौ परे[4] ॥ स्यः । त्यौ । त्ये । सः । तौ । ते । इत्यादि । सर्ववत्[5] । परमसः । परमतौ । परमते । संज्ञायां गौणत्वे नात्वसत्वे[6] । त्यद् । त्यदौ । त्यदः । अतित्यद् । अतित्यदौ । अतित्यदः[7] ।

---

ऊर्क् इति । ऊर्ज बलप्राणनयोः । 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति क्विप् । अवया इति । अवयजते । 'अवे यजः' इति ण्विन् 'श्वेतवह—' इत्यादिना डस् । हे अवया इति । 'अवयाः श्वेतवाः—' इत्यादिना संबुद्धौ दीर्घः । केषांचिन्मतेन वा ॥

इति जान्ताः ॥

तदोः । अनन्त्ययोरिति किम् । अन्त्ययोर्मा भूत् । ननु च त्यदाद्यत्वं बाधकं स्यात् । न । अनवकाशं हि बाधकम् । अत्वं तु द्वावित्यादौ सावकाशम् । सत्वमप्यनन्त्ययोः सावकाशम् । ततश्च परत्वादत्वं बाधित्वान्त्ययोः सत्वमेव स्यात् । ततश्च सा इत्यत्रादन्तत्वाभावात् 'अजाद्यतष्टाप्' इति टाप् न स्यात् । तस्मादनन्त्ययोरित्युच्यते । **परमस** इति । तदन्तविधेरिष्टत्वादत्वसत्वे । **संज्ञायामिति** । अत्वमित्युपलक्षणं सत्वमपि संज्ञायां गौणत्वे च[8] नेष्यते ॥

---

१. ऊर्जम् । इत्यादि P ; $B_1$. drops इत्यादि. २. अवया $B_1$. ३. पररूपत्व च $D_2$. ४. After it—द्विपर्यन्तानां $B_2$. ५. Dropped $D_2$. ६. नात्वसत्वम् $B_1$; आत्वं न P ; च आत्वं न $D_1$, $D_2$. चात्वं सत्वं न $B_2$; तु नात्वम् $D_3$; नात्वम् $D_5$. ७. $D_1$, $B_2$, $D_4$ drop it. ८. न चेष्यते $Dc_1$, $Dc_2$.

एव यद् । एषः । एतौ । एते । इत्यादि । अन्वादेशे तु 'द्वितीयाटौस्स्वेनः' । एनम् । एनौ । एनान् । एनेन । एनयोः[2] २ ।

**ङे प्रथमयोरम्** ॥७।१।२८॥

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य प्रथमाद्वितीययोश्चामादेशः स्यात् ॥

**त्वाहौ सौ** ॥७।२।९४॥

युष्मदस्मदोर्मपर्यन्तस्य क्रमात् त्वाहावादेशौ स्तः सौ परे ॥

---

अथ युष्मदस्मदौ । **ङे प्रथमयोः** । प्रथमयोरिति विभक्त्योर्ग्रहणं न प्रत्यययोः 'द्वितीयायां च' इति वचनाज् ज्ञापकात् । तथादेशार्थमुच्यते । अनादेशे तु 'युष्मदस्मदोरनादेशे' इति सिद्धत्वात् यत्वं चेदनेन बाधिष्यते तर्हि योऽन्यद्वितीयायां चेत्यवक्ष्यत इत्यभिप्रेत्याह । **प्रथमाद्वितीययो**रिति ।

**त्वाहौ** । **मपर्यन्तस्ये**ति । मपर्यन्तस्येत्यधिकारसूत्राल्लभ्यते । तस्य चाधिकारस्य प्रयोजनं स्वयमेवाग्रे वक्ष्यति । मपर्यन्तस्य किम् । साकच्कस्य मा भूदिति । अन्यथा सर्वस्य वक्ष्यमाणा आदेशा मा भूवन्निति मपर्यन्तस्येत्युच्यते । अन्यथा हि त्वमयोरकारस्य 'योचि' इति यकारे कृते तृतीयैकवचने त्व्या म्या इत्यनिष्टं रूपं स्यात् । त्वया मया इति चेष्यते । मान्तस्येत्येव सिद्धे पर्यग्रहणमवधिद्योतनार्थम् । अन्यथा यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशः स्यात् । युष्मानाचष्टे अस्मानाचष्टे इत्यस्मिन्नर्थे णिचि टिलोपे च कृते युष्मयतेरस्मयतेश्च क्विपि णिलोपे क्विपो लोपे च कृते मान्ते युष्मदस्मदी संपद्येते इत्यत्रैवादेशाः स्युरन्यत्र न स्युः ।

---

१. तद् $D_4$. २. C has इत्यादि after it. C has on the margin:—पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि । यदि द्विवचनान्यत्र शेषे लोपो विधीयते ॥ १ ॥ आत्वयत्वं च यत्रोक्तं ततोऽन्यः शेष उच्यते । लोपस्तत्र विभक्तौ तु दस्य स्याद्युष्मदस्मदोः ॥२॥. ३. C drops क्रमात्. ४. आत्वं $Dc_1$. ५. अन्यच्च $Dc_3$.

**शेषे लोपः ॥७।२।९०॥**

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् ॥ 'अतो गुणे'। '[1]अमि पूर्वः'। त्वम्। अहम्। [2]शेषे लोपेलिङ्गत्वाट्टिलोपाद्वा टाप् न। [3]त्वं स्त्री। अहं स्त्री। परमत्वम्। [4]परमाहम्। आतित्वम्। [5]अत्यहम् ॥

---

**शेषे**। उक्तादन्यः शेषः। तच्चोक्तमात्वं यत्वं चेत्यभिप्रेत्याह। **आत्वयत्वनिमित्तेतरविक्ताविति**।

'पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि।
यान्यद्विवचनान्यत्र तेषु लोपो विधीयते ॥'

**शेषे लोप** इत्यादि। स्त्रियां विवक्षितायामस्मदः सोरमि तस्मिन्परे अहादेशे अतो गुणे च सति शेषे लोप इति अन्त्यलोपे कृते अह अम् इति स्थिते 'अजाद्यतष्टाप्' इत्यकारान्तत्वात् टाप् प्राप्नोति स न भवति। तत्र हेतुरलिङ्गत्वादिति। [6]अलिङ्गे हि युष्मदस्मदी। अतो लिङ्गविशेषवाचकत्वाभावात् 'स्त्रियाम्' इत्यधिकारेण स्त्रियां वर्तमानात् प्रातिपदिकाद्विधीयमानष्टाप् न स्यादिति भावः। मतान्तरेण हेत्वन्तरमाह। **टिलोपाद्वेति**। केचिदाहुः। शेषे लोपष्टिलोप इति। तथा हि ते व्याकुर्वन्ति। शेषोत्र वक्ष्यमाणयुवावाद्यादेशापेक्षः। ते चादेशा मपर्यन्तस्य विधीयन्ते। तेन मपर्यन्ताद्योन्यः स शेष इति। अद इत्यस्याष्टेर्लोपो भवति। ततश्चादन्तत्वाभावात् टाप् न भवतीत्यभिप्रायः। अङ्गाधिकारे तस्य [7]तदुत्तरस्य चेति न्यायेन तदन्तयोर्गौणयोरपि एते आदेशाः स्युरित्यभिप्रेत्याह। **परमत्वमिति**। परमश्चासौ त्वं च परमत्वम्। **अतित्वमिति**। त्वामतिक्रान्तः अतित्वम्। एवं परमाहमादौ विग्रहीतव्यम्।

---

१. अमि पूर्वत्वम् $B_1$, $D_3$. २. Before it—मपर्यन्तस्य किम्। सर्वस्य मा भूत् $D_4$, $D_5$. ३. त्वं स्त्री dropped P, C, $D_1$, $D_4$; $D_5$; त्वमहं स्त्री $B_2$. ४. परमाहं dropped $D_3$; after अतित्वम् $D_4$. ५. Dropped $D_3$. ६. अलिङ्गाति हि $Dc_4$. ७. तदुत्तरपदस्य चेति तदन्तयोरप्येते $Bc_1$.

**युवावौ द्विवचने ॥७।२।९२॥**

[1]द्विवचन इत्य[2]र्थग्रहणम् । [3]द्व्यर्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य [4]युवावौ स्तः ॥

**प्रथमायाश्च द्विवचने भाषायाम् ॥७।२।८८॥**

प्रथमाद्विवचने परे युष्मदस्मदोरा[5]कारोन्तादेशः स्याद्भाषायाम् ॥ युवाम् । आवाम् । मपर्यन्तस्य किम् । साकच्कस्य मा भूत् । [6]युवकाम् । [7]आवकाम् ।

**यूयवयौ जसि ॥७।२।९३॥**

युष्मदस्मदोर्मपर्यन्तस्य यूयवयौ स्तो [8]जसि ॥ शेषे लोपः ।

---

**युवावौ** । **द्विवचन इत्यर्थग्रहणमिति** । द्वयोर्वचनं द्विवचनमित्यर्थपरत्वान्निर्देशस्येति भावः ।

**प्रथमायाः** । आदेशार्थं वचनम् । प्रथमायाः किम् । युवयोः । आवयोः । द्विवचने किम् । त्वम् । अहम् । भाषायां किम् । युवं वस्त्राणि पीवसा वसाथे । मपर्यन्तस्य किमिति । युवावौ द्विवचन इत्यादौ मपर्यन्तस्याधिकारः [9]किमर्थं इत्याशङ्का । उत्तरमाह । **साकच्कस्येति** । अकच्सहितस्य युष्मकद् अस्मकद् इत्येतावतः समुदायस्य युवावादिरादेशो मा भूदित्येवमर्थं मपर्यन्तस्येत्यधिकार इत्यर्थः । **युवकामिति** । 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् ।

**यूयवयौ** । **यूयम्** । **वयमिति** । युष्मद् जस् [10]अस्मद् जस् इति स्थिते 'ङे प्रथमयोः' इति जसः अमादेशः । मपर्यन्तस्य यूयवयौ । अतो गुणे पररूपम् । शेषे लोपे इत्यन्तदकारलोपे अमिपूर्वत्वम् ।

---

१. $B_1$ drops द्विव°...ग्रहणम्. २. °र्थनिर्देशः $D_2$. ३. $B_1$ drops द्व्यर्थवाचिनोः ।. ४. क्रमाद्युवावौ $D_4$, $B_1$, $D_3$. ५. °राकारान्तादेशः $B_1$, $B_2$. ६. Dropped $D_2$. ७. P drops आवकाम्. ८. C has जसि परे. ९. किमर्थमि° $Nc_2$, $Dc_4$. १०. Before it—क्रियते $Dc_3$.

यूयम् । वयम् । प[1]रमयूयम् । परमवयम् । अतियूयम् । अतिवयम् ।

**त्वमावेकवचने ॥७।२।९७॥**

एकवचन इत्यर्थनिर्देशः । एकार्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तः ॥

**द्वितीयायां च ॥७।२।८७॥**

द्वितीयायां[2] परतो युष्मदस्मदोराकारोन्तादेशः स्यात् ॥ त्वाम् । माम् । युवाम् । आवाम् ।

**शसो नः ॥७।१।२९॥**

युष्मदस्मद्भ्यां परस्य शसो न[3]कारः स्यात् । अमोपवादः ॥

**आदेः परस्य ॥१।१।५४॥**

[4]संयोगान्तस्य लोपः । युष्मान् । अस्मान् ।

---

**परमयूयमिति** । तदन्तस्य । **अतियूयमिति** । गौणत्वेपि ।

**त्वमा** । **एकवचन इत्यर्थनिर्देशः** इति । ए[5]कस्य वचनमेकवचनमित्यर्थपरत्वान्निर्देशस्य ।

**द्वितीयायाम्** । आदेशार्थं वचनम् ।

**शसः** । ङे प्रथमयोरित्यमादेशे प्राप्ते वचनमित्यभिप्रेत्याह । **अमोपवाद** इति । ननु चामादेशेपि कृते 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे च 'तस्माच्छसो नः पुंसि' इति नत्वेन युष्मानस्मानिति सिद्धमिति व्यर्थं वचनमिति चेन्मैवम् । स्त्रीनपुंसकार्थं वचनम् । युष्मान् ब्राह्मणीः अस्मान् ब्राह्मणीः युष्मान् ब्राह्मणकुलानि अस्मान् ब्राह्मणकुलानि । अलिङ्गे युष्मदस्मदी इति वा पुंस्यप्यप्राप्तेः 'आदेः परस्य' इति शसोकारस्य नः । 'संयोगान्तस्य लोपः' इति स[6]कारस्य लोपः ।

---

१. परमयूयम् । अतियूयम् । परमवयम् । अतिवयम् P ; $B_2$ has परमयूयम् for it ; परमयूयं dropped $D_2$, C, $B_1$. २. द्वितीयायां च C; द्वितीयायां विभक्तौ परतः $D_5$. ३. नः स्यात् C, $D_5$. ४. Before it—पञ्चमीनिर्देशेन क्रियमाणं कार्यं परस्यादेर्ज्ञेयम् । C. ५. एकस्यार्थस्य $Dc_3$. ६. सकारलोपः $Dc_3$.

**योचि ॥७।२।८९॥**

युष्मदस्मदोर्यकारोन्तादेशः स्यादनादेशे अजादौ परे ॥ त्वया । मया[1] ।

**युष्मदस्मदोरनादेशे ॥७।२।८६॥**

युष्मदस्मदोराकारः[2] स्यादनादेशे हलादौ परे॥ युवाभ्याम्। आवाभ्याम् । युष्माभिः । अस्माभिः ।

**तुभ्यमह्यौ ङयि ॥७।२।९५॥**

युष्मदस्मदोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो[3] ङयि ॥ अमादेशः। शेषे लोपः[4] । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम्[5] । अतिमह्यम् । युवाभ्याम् । आवाभ्याम्[6] ।

---

**योचि** । 'युष्मदस्मदोरनादेशः' इत्यत्र 'रायो हलि' इत्यतो यदि हल्ग्रहणमनुवर्तते तदात्र 'अचि' इत्येतन्न वक्तव्यम्[7] । आत्वमपवादो भविष्यति । अनादेशे इति किम् । त्वद् गच्छति । मद् गच्छति । **त्वया मयेति** । 'त्वमावेकवचने' इति त्वमावादेशौ ।

**युष्मदस्मदोः** । अनादेशे इति किम् । युष्मत् । अस्मत् । यदात्र[8] 'हलि' इत्यतेदनुवर्तते तदा तेनैवात्रात्वं नेत्यनादेशग्रहणं 'योचि' इत्यत्रानुवृत्त्यर्थम् । **युवाभ्यामित्यादि** । 'युवावौ द्विवचने' इति युवावौ । आत्वम्[9][10] ।

**तुभ्य** । **अमादेश** इति । 'ङे प्रथमयोः—' इति । 'शेषे लोपः' इति । तुभ्यद् अम् इति स्थिते दलोपः । अमि पूर्वत्वम् । **परमतुभ्यमित्यादि** । तदन्तगौणप्रतिपत्त्यर्थम् ।

---

१. After this—अनादेशे किम् । त्वद्गच्छति D₂. २. °राकारान्तादेशः B₂, D₃; °राकारान्तादेशः D₂. ३. Dropped D₅. ४. शेषे लोपः dropped B₁. ५. अतितुभ्यम् । अतिमह्यम् dropped D₃. ६. Dropped B₂. ७. कर्तव्यम् Dc₁, Dc₂. ८. अत्र dropped Nc₂. ९. Dropped Dc₁. १०. Before it—युष्माभिरित्यादौ Dc₃.

**भ्यसोभ्यम् ॥७।१।३०॥**

युष्मदस्मद्भ्यां परस्य भ्यसो भ्यम् स्यात् । शेषे लोपः । अङ्ग[1]कार्ये वृत्ते पुनर्नाङ्ग[2]कार्यम् । तेन एत्वं न स्यात् । अभ्यमित्यादेशो वा । युष्मभ्यम् । अस्मभ्यम् ।

---

**भ्यसः** । अत्र पक्षद्वयमस्ति । भ्यमित्यादेशः । अभ्यमिति च[3] । तत्र पूर्वस्मिन् पक्षे युष्मदो[4]स्मदश्च परस्य भ्यसो भ्य[5]मिति कृते शेषे लोपे च कृते 'बहुवचने झल्येत्' इत्येत्वं प्राप्नोति । ततश्चानिष्टं रूपं स्यादित्याशङ्क्याङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येत्येतां परिभाषामर्थतः पठन्नुत्तरमाह । **अ[6]ङ्गकार्ये वृत्ते पुनर्नाङ्गकार्यं तेन एत्वं न स्यादिति** । अङ्गकार्ये जाते सति पुनरुत्तरकालमन्यदङ्गकार्यं न भवति प्र[7]योगार्हे स्थले तेनात्र शेषे लोपे अङ्गकार्ये[8]पुनर् 'बहुवचने झल्येत्' इत्येत्वलक्षणमङ्गकार्यं न भवतीत्यर्थः । क्वचित्तु अङ्गान्त्यलोपे पुनर्नाङ्गान्त्यकार्यमिति पाठः । तदा परिभाषार्थं प्रकृते प्रयोजयन् परिहरतीति भावः । ततश्चायमर्थः । अङ्गान्त्यस्य दस्य लोप इति लोपे जाते पुनरङ्गान्त्यस्याकारस्य कार्यं न । प्रयोगार्हत्वात् । तेनैत्वं न भवतीति । परिभाषायास्त्वयमर्थः । अङ्गे वृत्तं वर्तनं यस्य तदङ्गवृत्तं कार्यं तस्मिन्नङ्गकार्ये वृ[9][10]त्ते सति पुनरुत्तरकालमपरस्य कार्यस्य वृ[11]त्तौ प्राप्तायां तस्य कार्यस्याविधिरविधानं निष्ठितस्येत्यनेन यत्संबधिनः कार्यस्याविधिः स्यात्तदङ्गं विशेष्यते निष्ठितं यत् परिसमाप्तं प्रयोगार्हं तत्संबन्धिनः कार्यस्याविधिः स्यान्नान्यसंबन्धिन इति । द्वितीयपक्षेणोत्तरमाह । **अभ्यमित्यादेशो वेति** । अ[12]यं पक्षो यन्मते शेषे लोपष्टिलोपस्तैरवश्याभ्युपेयो युष्मभ्यमित्यादिरूपसिद्धये ।

---

१. अङ्गान्त्यकार्ये C; अङ्गान्त्यलोपे वृत्ते ( कृते $B_2$ ) पुनर्नाङ्गान्त्यकार्यम् $D_1$, $B_2$, $D_5$. २. °र्नाङ्गान्त्यकार्यम् C, $D_3$, $D_4$. ३. वा $Dc_3$. ४. युष्मदस्मदोश्च $Dc_4$. ५. भ्यमि कृते $Dc_3$. ६. अङ्गान्त्यकार्ये for अङ्गकार्ये $Dc_1$, $Dc_2$. ७. प्रयोगार्हस्थले $Nc_2$. ८. जाते पुनर् $Dc_4$. ९. वृत्ते पुन° $Dc_3$, $Dc_4$, १०. कृते $Nc_2$, $Bc_1$, $Dc_3$. ११. वृत्तौ प्रवृत्तौ $Dc_3$. १२. अयं च $Nc_2$, $Dc_4$.

**एकवचनस्य च ॥७।१।३२॥**

आभ्यां परस्य पञ्चम्येकवचनस्य अत् इत्यादेशः स्यात् ॥ त्वत् । मत् । युवाभ्याम् । आवाभ्याम् ।

**पञ्चम्या अत् ॥७।१।३१॥**

आभ्यां परस्य[1] पञ्चम्या[2] भ्यसोत् स्यात् ॥ युष्मत् । अस्मत् ।

**तवममौ ङसि ॥७।२।९६॥**

युष्मदस्मदोर्मपर्यन्तस्य तवममौ स्तो ङसि[3] ॥

**युष्मदस्मद्भ्यां ङसोश् ॥७।१।२७॥**

आभ्यां ङसः[4] स्थाने[5] अश्[6] स्यात् । श इत् । तव । मम । परमतव । परमम । अतितव । अतिमम ।

---

**एक** । चकार आदेशानुकर्षणार्थो भ्यसपेक्षया समुच्चयार्थो वा । ङसश्चेति वाच्ये एकवचनस्येति वचनं वैचित्र्यार्थम् ।

**पञ्चम्याः** । भ्यसोपवादः[7] । युष्मदस्मद् । यदा शेषे लोपोन्त्यलोपस्तदास्यादेशो[8] प्राप्ते इदं वचनम् । यदा टिलोपस्तदा विभक्तेः श्रवणे प्राप्ते आदेशार्थं वचनम् । शित्करणं सर्वादेशार्थम् । अन्यथा हि 'आदेः परस्य' इत्यादेरेव स्यात् । ननु चाकारस्याकारवचने प्रयोजनाभावात् सर्वादेश एव स्यात् । मैवम् । यत्त्वनिवृत्त्यर्थं आदेशव्यपदेश एव प्रयोजनं स्यात् ।

**तव ममेति** । ङसि युष्मदस्मदोस्तवममादेशयोः कृतयोः ङसोशादेशे शेषे लोपे 'अतो गुणे' इति पररूपम् । **परमतवेत्यादि** । तदन्तगौणविध्यर्थम् ।

---

१. परस्य dropped $B_1$, $D_1$, $D_3$, $D_4$. २. पञ्चम्याः dropped $D_2$. ३. ङसि परे C. ४. ङसूस्थाने $B_1$. ५. Dropped $D_2$. ६. अश् आदेशः P, $D_1$, $D_4$, $B_2$, $D_3$; असादेशः $D_5$. ७. After it—पञ्चम्या अत् । पूर्वसूत्रम् । एकवचनस्येति परसूत्रम् । तस्मादादेशानुकर्षणार्थम् । युष्मदस्मद् &c. $Dc_3$. ८. °स्तदा ङसः स्या° $Dc_3$.

'योचि'। युवयोः। आवयोः। आमि सुटि कृते[१]

**साम आकम् ॥७।१।३३॥**

आभ्यां सुट्सहितस्याम आकं स्यात् ॥ युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु। अस्मासु।

---

**युवयोरावयोरि**ति युवावादेशयोः कृतयोः 'योचि' इति दस्य यः। **आमी**ति। आमि परतः। **सुटि कृते**। कर्तुमारब्धे सति आशंसिते वा भाविनीति तात्पर्यार्थः। कृत इति। आदिकर्मणि क्तः। 'आशंसायां भूतवच्च' इत्याशंसायां वा।

**सामः**। ननु[४] 'आमि सर्वनाम्नः सुट्' इत्यत्र 'आज्जसेरसुक्' इत्यतः 'आत्' इत्यनुवर्तते। युष्मदोस्मदश्च शेषे लोपे अकारान्तशेषे लोपश्च विभक्तेरादेशे प्राप्नोति। ततश्चाकमादेशात् प्राक् सुटोप्राप्तेः सुट्सहितस्येति न घटत इति चेत् उच्यते। आकस्यादेशे कृते पश्चात् शेषे लोपे च[५] यः सुट् भविष्यति तस्य भाविनः निवृत्त्यर्थम्[६]। साम इत्युक्तम्। तथोक्तं **काशिकायां वृत्तौ**। 'अथ[७] किमर्थमागतसुट्को गृह्यते। न ह्यादेशविधानकाले सुट् विद्यते। तस्यैव तु भाविनः सुटो निवृत्त्यर्थम्। आदेशे कृते हि शेषे लोपे युष्मदस्मदोरकारान्तयोः सुट् प्राप्नोति। 'स स्थानिन्यन्तर्भूतत्वान्निवर्तते' इति। आकमो दीर्घाकारोच्चारणम् 'अकः सवर्णे दीर्घः' इति दीर्घो यथा स्यादिति। ह्रस्वे तु सति 'अतो गुणे' इति पररूपं स्यात्। ननु चाकारोच्चारणादेव पररूपं न स्यात्। अन्यथाकमित्येवावक्ष्यदिति चेत् 'बहुवचने झल्येत्' इत्येत्वनिषेधार्थमकारोच्चारणम्। **त्वयि मयी**ति। सप्तम्येकवचने त्वमादेशयोः कृतयोः 'योचि' इति यकारः। **आत्वमि**ति। 'युष्मदस्मदोरनादेशे' इत्यनेन। अङ्गाधिकारे तस्य तदुत्तरस्य[८]

---

१. After it—भाविसुट्निवृत्त्यर्थम् $D_3$. २. आभ्यां परस्य सामाकं स्यात् $B_1$, सुटि सहितस्याम C. ३. Before it—आत्वम् $D_5$, $D_4$, Com. ४. ननु च $Nc_2$, $Dc_3$. ५. च कृते $Dc_3$. $Dc_4$. ६. सुटो निवृत्त्यर्थम् $Nc_2$, $Dc_3$. ७. अथवा° $Dc_1$, $Dc_2$. ८. तदुत्तरपदस्य $Dc_3$.

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि ॥१॥
सुजसूङेङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममाविति ॥२॥

चेति परिभाषया समस्तयोरपि युष्मदस्मदोर्युवावाद्यादेशप्राप्तौ सत्यां विषयविशेषे तद्व्यवस्थां सुखप्रतिपत्त्यर्थं श्लोकचतुष्टयेन संगृह्णाति। **समस्यमान** इत्यादिना। समस्यमाने युष्मदस्मदी[2] चेत् द्व्येकत्व-वाचिनी द्वित्वैकत्ववाचिनी[3] भवतः समासार्थोऽन्यसंख्यस्तत्संख्यो वा भवतु तर्हि युवावौ स्तः। त्वमावपि यथासंख्यं स्तः। अयं भावः। यदा समासे युष्मदस्मदी द्व्यर्थे भवतः समासार्थस्य त्वन्यसंख्यत्वादेक-वचनं बहुवचनं वा भवति तदापि युवावौ भवतः। 'युवावौ द्विवचने' इत्यत्र द्विवचनग्रहणस्य[4] द्वित्वार्थपरत्वात्। तथा यदा समासे युष्मदस्मदी एकार्थे स्तः समासार्थस्य त्वन्यसंख्यत्वात् द्विवचनं बहुवचनं वा स्यात् तदापि त्वमौ स्तः। 'त्वमावेकवचने' इत्येकवचनस्यैकत्वार्थपरत्वादिति[5]। एवमनेन न्यायेन प्रथमैकवचनबहुवचनचतुर्थ्येकवचनषष्ठ्येकवचनयोरपि[6] परतो युष्मदस्मदोर्द्वित्ववाचित्वे प्राप्तौ युवावौ एकत्ववाचित्वे प्राप्तौ त्वमौ अपवदति। **सुजस्ङे** इति। सुजसूङेङस्सु परतो ये आदेशा विहितास्ते सदैव युष्मदस्मदोर्द्व्येकत्ववाचित्वेपि स्युः। ते चादेशाः के इत्याशङ्क्याह। त्वाहावित्यादि। सदैव ते स्युरित्यत्र हेतुमाह।

१. °वपि C, B1, D3, D5. २. Before it—प्रातिपदिके यदि Bc1. ३. द्वित्वैकत्ववाचिनी dropped Dc1, Dc2. ४. ग्रहस्य Nc2. ५. °वचन-ग्रहणस्यै° Nc2, Dc3, Dc4. ६. °वचनेष्वपि Dc3.

एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥३॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥४॥

---

**एते परत्वादित्यादि** । एते त्वाहादयः स्वके विषये सुजस्ङेङस्सु परतः परत्वाद् युवावौ बाधन्ते 'विप्रतिषेधे परं कार्यम्' इति न्यायेन । **त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः** । 'विप्रतिषेधे परं कार्यम्' इत्यत्र परशब्दस्येष्टवाचित्वात् पूर्वा अप्येते परावपि त्वमौ बाधन्त इत्यर्थः । तथा च **काशिकायां वृत्तावुक्तम्** । 'आदेशान्तराणां त्वाहौ सावित्यादीनां विषये पूर्वविप्रतिषेधेन त एवेष्यन्ते' इति । युष्मदस्मदोर्बह्वर्थत्वे समासार्थसान्यसंख्यत्वे कथमित्याशङ्क्याह । **द्व्येकसंख्य** इत्यादि । यदा युष्मदस्मदी बह्वर्थे बहुत्ववाचिनी स्तः समासार्थो द्व्येकसंख्यो द्वित्वैकत्ववाची बहुत्ववाची वा तदा युवावौ न स्तः । त्वमावपि न स्तः[1] । अत्र हेतुः । **तयोरद्व्येकतार्थत्वादिति** । तयोर्युष्मदस्मदोर्द्वित्वैकत्ववाचित्वाभावात् युवावौ न स्तः[2] । एकत्ववाचित्वाभावात् त्वमौ न स्त इत्यर्थः । तथा चैतत् सर्वं **महाभाष्ये** उक्तम् । "यद्यपि समास एकार्थो वा भवति बह्वर्थो वा भवति द्व्यर्थे च युष्मदस्मदी भवत एव युवावौ । किमविशेषेण । नेत्याह । 'यूयवयौ जसि' । 'त्वाहौ सौ' । 'तुभ्यमह्यौ ङयि' । 'तवममौ ङसि' इत्येतान् विधीन् वर्जयित्वा । तथा च यद्यपि समासो द्व्यर्थो भवति बह्वर्थो वा एकार्थे युष्मदस्मदी भवत एव त्वमौ तानेव विधीन् वर्जयित्वा" इति ।

---

१. After it—इत्यर्थः Dc4. २. Before it—द्वित्ववाचित्वाभावात् Dc3, Dc4, Bc1.

त्वां मां वातिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् । अतित्वाम् २ । अतिमाम् २ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । भ्यामि प्राग्वत् । अतित्वभ्यम् । अतिमभ्यम् । अतित्वत् । अतिमत् । भ्यामि प्राग्वत् । भ्यसि ङसिवत् । अतित्वत् । अतिमत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । गौणतायामसर्वनामत्वेन सुडभावात् 'साम आकम्' इत्यस्याप्रवृत्तेः 'योचि' इति यकार इति केचित् ।

---

**त्वां मा वातिक्रान्त इति विग्रहे इति** । अतित्वमत्यहमित्यादेः समासस्यार्थबोधके एवंविधे वाक्ये सत्येवं वक्ष्यमाणानि रूपाणि भवन्तीति शेषः । अतित्वमित्यत्र 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासस्तत्पुरुषः । अत्र सुजसङेर्ङसो वर्जयित्वान्यत्र त्वमौ युष्मदस्मदोरेकार्थवाचित्वात् स्वादौ त्वाहादयआदेशाः स्युः । अन्या प्रक्रिया पूर्ववत् । **अतित्वाकमतिमाकमिति** । 'साम आकम्' इत्याकम् । ननु च गौणत्वेनात्र सर्वनामत्वाभावात् सुट् नास्ति तत् कथमाकम् । उच्यते । 'साम आकम्' इत्यत्र केवलस्यैव आम आकम् विधीयते । सुट्सहितग्रहणं भाविनः सुटो निवृत्त्यर्थमित्युपपादितं तस्मिन् सूत्रे । **दुर्गसिंहादिमतमाह** । **गौणतायामिति** । अत्र युष्मदस्मदोरतिपूर्वयोर्गौणतायां सत्यां सर्वनामसंज्ञाया अभावेन 'आमि सर्वनाम्नः सुट्' इति सुट् न प्राप्नोति इति 'साम आकम्' इति न प्रवर्तते इति कृत्वा 'योचि' इति यकारः ।

---

१. C, $D_2$ drop वा. २. For भ्यामि प्राग्वत्—अतित्वाभ्याम् । अतिमाभ्याम् C, $B_1$, $D_4$, $D_5$. ३. For भ्यामि प्राग्वत्—अतित्वाभ्याम् । अतिमाभ्याम् C, $B_1$, $D_4$, $D_5$. ४. भ्यस् ङस्वत् P, $D_1$; भ्यस् ङसिवत् $D_3$; भ्यसि च $D_5$. ५. सुडागमा° $D_4$.

अतित्वयाम् । अतिमयाम् । अतित्वयि । अतिमयि । ओसि[1] प्राग्वत् । अतित्वासु । अतिमासु । युवामावां वातिक्रान्त इत्यत्र[2] सुजस्ङेङस्सु प्राग्वत् । औ अम् औट्सु[3] अतियुवाम् २ । अत्यावाम् २ । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवाभिः । अत्यावाभिः । भ्यसि । अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः । अतियुवत् २ । अत्यावत् २ । ओसि[4] । अतियुवयोः २ । अत्यावयोः २ । अतियुवाकम् । अत्यावाकम् । अतियुवयाम् । अत्यावयाम् । इति केचित् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान् वातिक्रान्त इत्यत्र[5] सुजस्ङेङस्सु[6] प्राग्वत् । औ अम् औट्सु अतियुष्माम्[7] । अत्यस्माम् ३ । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् ३ । अत्यस्माभ्याम् ३ ।

---

तथा च **दुर्गसिंहवृत्तावुक्तम्** । 'सामिति किम् । प्रिययुष्मयामतित्वयाम्' इति । **युवामावां वातिक्रान्त इत्यत्रेति**[8] । अत्र विग्रहे वक्ष्यमाणानि रूपाणि स्युरित्यर्थः । अत्र युष्मदस्मदोर्द्व्यर्थवाचित्वात् सर्वत्र युवावौ सुजस्ङेङस्सु परत्वात् त्वाहादयः । **युष्मानस्मान् वातिक्रान्त इत्यत्रेति** । अत्र विग्रहे वक्ष्यमाणानि रूपाणि स्युरित्यर्थः । अत्र युष्मदस्मदोर्बह्वर्थवाचिनोरद्व्येकतार्थत्वात् युवावौ त्वमावपि न भवतः सुजस्ङेङस्सु त्वाहादयो भवन्ति ।

---

१. For ओसि प्राग्वत्—अतित्वयोः । अतिमयोः C, $B_1$. २. इति विग्रहे $B_1$, $D_4$, $D_5$. ३. $B_1$ has अतित्वम् । अत्यहम् । अतियूयम् । अतिवयम् before it. ४. $B_1$ has अतितव । अतिमम before it. ५. इति विग्रहे P. ६. From सु...प्राग्वत् dropped in $D_1$, $D_3$. ७. Before it—भ्यामि $D_1$, $B_2$. ८. After it—एवंविध इत्यादिके $Dc_3$; इत्यत्र विग्रहे वक्ष्यमाणा° $Dc_4$. ९. युवावौ त्वमावपि न भवतः । $Dc_4$.

अतियुष्माभिः। अत्यस्माभिः। भ्यसि। अतियुष्मभ्यम्। अत्यस्मभ्यम्। ङसिभ्यसोः। अतियुष्मत् २। अत्यस्मत् २। ओसि। अतियुष्मयोः २। अत्यस्मयोः २। अतियुष्माकम्। अत्यस्माकम्। अतियुष्मयाम्। अत्यस्मयाम्। इति केचित्। अतियुष्मायि। अत्यस्मायि। अतियुष्मासु। अत्यस्मासु। शेषं प्राग्वत्।

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ ८।१।२०॥**

पदात् परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिद्विवचनान्तयोः क्रमात् वां नौ इत्यादेशौ स्तः ॥

---

युष्मदस्मदोः। 'पदस्य'। 'पदात्'। 'अनुदात्तं सर्वमपादादौ' इत्येतत् त्रयमनुवर्तते इत्यभिप्रेत्याह। पदादित्यादि। अनयोर्युष्मदस्मदोः। पादो नाम ऋचः श्लोकस्य वा चतुर्थो विभागः। षष्ठ्यादिद्विवचनान्तयोरिति। षष्ठीचतुर्थीद्वितीयाद्विवचनसहितयोरित्यर्थः। एतत्तु 'पदस्य' इत्यनुवृत्तेर्लभ्यते। स्थग्रहणं तु श्रूयमाणविभक्तिकयोर्यथा स्यादित्येवमर्थमिति स्वयमेवाग्रे वक्ष्यति। वामिति। मान्तो युष्मद आदेशः। नाविति। औकारान्तोऽस्मदः। तौ च सर्वानुदात्तौ भवतः। समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः। तेन अयं दण्डो हरानेन। अत्र हरेत्यत्र 'तिङ्ङतिङः' इति सर्वानुदात्तत्वं न। भिन्नवाक्यस्थपदात् पर इति कृत्वा। ओदनं पच तव भविष्यति मम भविष्यति। अत्रापि भिन्नवाक्यस्थपदात् परौ युष्मदस्मदाविति कृत्वा ते मे आदेशौ न।

---

१. पदादौ $D_2$. २. षष्ठीचतुर्थीद्वितीयाद्विवचनान्तयोः $B_1$. ३. Dropped C.

**बहुवचनस्य वस्नसौ ॥८।१।२१॥**

उक्तविधयोरेवा[1]नयोः षष्ठ्यादिबहुवचनान्तयोः[2] वस्नस् [3]इत्येतावादेशौ स्तः ॥

**ते मयावेकवचनस्य ॥८।१।२२॥**

तादृशयोरनयोः षष्ठीचतुर्थ्येकवचनान्त[4]योस्ते मे [5]इत्येतौ स्तः ॥

**त्वामौ द्वितीयायाः ॥८।१।२३॥**

तादृग्विधयोर[6]नयोर्द्वितीयैकवचनान्तयोस्त्वा मा इत्येतौ स्तः ॥

---

**बहुवचनस्य** । **उक्तविधयोरेवेति** । उक्ता विधा प्रकारो ययोस्तौ उक्तविधौ पदात्परौ अपादादिस्थितौ तयोरेव षष्ठीचतुर्थीद्वितीयाबहुवचनान्तयोर्युष्मदस्मदोर्यथासंख्यं वस् नस् आदेशौ भवतः । तावपि सर्वानुदात्तौ ।

**ते मया** । **तादृशयोरनयोरिति** । पदात् परयोरपादादौ स्थितयोर्युष्मदस्मदोरित्यर्थः । **षष्ठीचतुर्थ्येकवचनान्तयोरिति** । ननु चात्र द्वितीया कथं निवृत्तेति चेत्[7] द्वितीयैकवचनान्तयोस्त्वामौ द्वितीयाया इति ते मे [8]अपवादत्वेन त्वामादेशयोर्विधानात् । तावपि सर्वानुदात्तौ ॥

**त्वामौ** । **तादृग्विधयोरिति** । [10]पदात् परयोरपादादौ स्थितयोरित्यर्थः । एतावपि सर्वानुदात्तौ । चतुःसूत्र्या विहितानादेशान् द्वितीयादिविभक्तिष्वेकवचनादिक्रमेणोदाहरति श्लोकद्वयेन ।

---

१. एवानयोः dropped $B_2$. २. After it—क्रमात् P, $B_1$, $D_4$, $D_5$. ३. इत्यादेशौ $D_1$; इत्येतौ $B_2$, $D_3$, $D_4$, $D_5$. ४. After it—क्रमात् P, C, $D_1$, $D_4$. ५. इत्येतावादेशौ P, C; इत्यादेशौ $D_1$. ६. °रेवानयो° $B_1$; अनयोः dropped $D_2$, $D_5$. ७. After it—उच्यते $Bc_1$, $Dc_3$, $Dc_4$. ८. मे इत्यनयोरपवादत्वेन $Bc_1$, $Dc_3$. ९. एतावपि $Bc_1$, $Dc_3$. १०. Before it—तादृक् विधा प्रकारो ययोस्तादृग्विधौ तयोः । $Dc_3$, $Dc_4$.

श्रीशस्त्वावतु मापीह दत्तात्ते मेपि शर्म सः ।
स्वामी ते मेपि स हरिः पातु वामपि नौ विभुः ॥१॥

सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोव्याद्वो नः शिवं वो नो दद्यात् सेव्योत्र वः स नः ॥२॥

पदात् परयोरि[१]ति किम् । वाक्यादौ मा भूत् । त्वां पातु । मां पातु । अपा[२]दादौ किम् ।

---

श्रीशस्त्वेत्यादिना । श्रीशः लक्ष्मीशः । त्वावतु मापि । त्वां मां च रक्षत्वित्यर्थः । कर्मणि द्वितीया । श्रीश इति पदात् परस्य पादादावस्थितस्य त्वामित्यस्य द्वितीयैकवचनान्तस्य त्वादेशः । एवं सर्वेष्वप्यादेशेषु ज्ञेयम् । दत्तात्ते मेपि शर्म सः । स श्रीशस्तुभ्यं मह्यं च शर्म सुखं द[४]दातु । संप्रदाने चतुर्थी । स्वामी ते मेपि स हरिः । तव ममापित्यर्थः । 'स्वामीश्वराधिपति—' इत्यादिना षष्ठी । सेव्योत्र वः स नः इत्यत्र 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । पदात् परयोः किमिति । अत्र किमित्याक्षेपे । अपादादौ स्थितयोरित्येनैनैव पदात्परयोरिति सिद्धे व्यर्थं पदात्परयोरिति । उत्तरमाह । वाक्यादौ मा भूदिति । वाक्यं तु सविशेषणमाख्यातमित्यो[५]युक्तलक्षणम् । तस्य वाक्यस्यादौ वर्तमानयोर्युष्मदस्मदोरेतदादेशजातं मा भूदिति 'पदात्परयोः' इत्युच्यते । अयं भावः । य[६]दि 'पदात् परयोः' इति नो[७]च्येत तदा वृ[८]त्तनियमं विना वाक्यप्रयोगे वाक्यादौ स्थितयोरपदादौ स्थितत्वादादेशाः स्युरिति । अपादादौ किमिति । 'पदात् परयोः' इत्येव पादादिस्थितयोर्निषेधे सिद्धे व्यर्थमपादादिग्रहणमित्यर्थः ।

---

१. P, $B_2$ drop इति. २. त्वां मां पातु । $D_3$. ३. °पदादौ $D_2$. ४. Before it—दत्तात् $Dc_3$. ५. °मित्युक्त° $Dc_3$. ६. यदा $Nc_2$, $Dc_2$, $Bc_1$. ७. नो for नोच्येत $Nc_2$; नोच्यते $Dc_4$. ८. वृत्ति° for वृत्त° $Nc_2$.

युष्मान् रक्षतु गोविन्दोस्मान् कृष्णः सर्वदावतु ।

स्थग्रहणाद्विभक्तिलोपे नैते[1] स्युः । युवयोः पुत्रो युष्मत्पुत्रः । आवयोः[2] पुत्रोस्मत्पुत्रः । एते वां नावादय आदेशा अनन्वादेशे वा वक्तव्याः ॥ *अन्वादेशे तु नित्यं स्युः[3] । धाता ते तव वापत्यम् । तस्मै ते हरये नमः ।

**न चवाहाहैवयुक्ते ॥८।१।२४॥**

चादिपञ्च[4]योगे नैते आदेशाः[5] स्युः ॥

आवयोर्युवयोश्चेशो हरिर्मामेव रक्षतु ।

---

युष्मानित्यादि । पथ्यावक्त्रवृत्तस्यार्धम् । अत्र गोविन्दो युष्मानस्मान् रक्षतु कृष्णः सर्वदावत्वित्यन्वयः । गोविन्दपदात् परोप्यस्मच्छब्दः पादादौ वर्तत इति नसादेशो न भवति । स्थग्रहणादिति । षष्ठीचतुर्थीद्वितीययोरिति वाच्ये स्थग्रहणं श्रूयमाणविभक्तिकयोरादेशा यथा स्युरिति । तेन विभक्तिलोपे एते आदेशा न भवन्ति । युष्मत्पुत्रः अस्मत्पुत्र इति षष्ठीसमासे 'सुपो धातुप्रातिपदिकयोः' इति विभक्तेर्लुक् । एते इत्यादि । अन्वादेशे[6] तु । उक्तस्य पुनरुक्तिरित्युक्तः । धातेत्यादि । धाता तेपत्यमित्यत्र प्रयोगेनन्वादेशत्वात् वा ते आदेशः स्यादित्याह । ते तव वेति । यस्य तव धाता ब्रह्मापत्यं तस्मै ते हरये नमोस्तु । अत्र तवापत्यमिति युष्मच्छब्देनोक्तस्य पुनर्युष्मदा वचनादन्वादेशोयं तेन ते इत्यादेशो नित्यं जातः ।

न च । आवयोरित्यादि । आवयोर्युवयोश्चेति । चशब्दो युष्मदस्मदर्थयोः साक्षात् समुच्चयमाहेति वां नौ न भवतः । मामेवेति । अत्रास्मदर्थावधारणमेवकार आहेति मामित्यत्र मादेशो न । अत्र प्रत्याहारन्यायेन चशब्देवकारयोगे निषेधोदाहरणे दर्शिते तेन चादिभिरपि योगे ज्ञेयम् । आवयोर्युवयोर्वेशो हरिः । आवयोर्युवयोर्ह ईशो हरिः । आवयोर्युवयोरहेशो हरिः । इत्यादि

---

१. नैते आदेशाः $B_1$, $B_2$. २. P, $D_1$, $D_3$, $D_5$, $B_2$ drop आवयोः पुत्रः and $B_1$ drops आवयोः पुत्रोस्मत्पुत्रः. ३. ते स्युः $D_3$. ४. °पञ्चक° $B_1$. ५. C drops आदेशाः. ६. अन्वादेशः $Nc_2$, $Dc_3$, $Dc_4$.

साक्षाद्योगेयं निषेधः । युक्तयुक्ते तु न निषेधः । शिवो हरिश्च मे स्वामी ।

**पश्यार्थैश्चानालोचने ॥८।१।२५॥**

अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते स्युः ॥ चेतसा त्वां समीक्षते । युक्तयुक्तेपि निषेधः । भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ॥

---

ज्ञेयम् । **साक्षाद्योगेयं निषेध** इति । साक्षादव्यवधाने चाद्यर्थे युष्मदस्मदर्थयोर्यत्र योगस्तत्रैवायं निषेध इत्यर्थः । **युक्तयुक्ते तु न निषेध** इति । चाद्यर्थयुक्तेनान्येन युक्तयोर्युष्मदस्मदोर्नादेशानिषेधः । अयं चार्थो युक्तग्रहणाल्लभ्यते । अन्यथा सहार्थपरिभाषयैव युक्तत्वं लभ्यते । अथवा 'तुल्यार्थैरतुलोपमाभ्याम्' इत्यत्रैव युक्तग्रहणमध्याह्रियते । **हरिश्च मे स्वामी**ति । हर इति शेषः । अत्र हरिहरशब्दौ चशब्देन युक्तौ । तदर्थगतस्य समुच्चयस्य चशब्देन द्योतितत्वात् । अस्मच्छब्दश्च हरिहरशब्दाभ्यां युक्त इति निषेधाभावात् मे आदेशः ।

**पश्यार्थैः** । पश्यतीति पश्य इति 'पाघ्राध्माधेट्दृशः शः' इति यदि कर्तरि शः स्यात् तदा द्रष्टृभिरिति स्यात् । तथा च 'अनालोचने' इति प्रतिषेधो दुर्घटः स्यात् । तस्मादत एव निपातनाद् भावे शः । तथा च पश्यार्थैरिति दर्शनार्थैरित्यर्थः । दर्शनशब्दोयं चक्षुःपर्यायोप्यस्ति । 'अक्ष्णोदर्शनात्' इति । ज्ञानसामान्यवाच्यप्यस्ति । 'अदर्शनं लोपः' इति । तत्र 'अनालोचने' इति निषेधात् ज्ञानार्थोयमित्याभिप्रेत्याह । **अचाक्षुषज्ञानार्थै**रिति ।

---

१. $B_2$ drops युक्तयुक्ते तु न निषेधः । $D_1$, $D_2$; °युक्तेपि न निषेधः $D_3$; तु dropped $D_2$, $D_3$, P, C, $B_1$. २. अन्यथा $Nc_2$, $Bc_1$. ३. ज्ञानार्थेय° $Nc_2$.

## सपूर्वायाः प्रथमाया विभाषा ॥८।१।२६॥

विद्यमानपूर्वात् प्रथमान्तात् परयोरन्वादेशेप्येत आदेशा वा[1] स्युः ॥

भक्तस्त्वमप्यहं तेन हरिस्त्वा त्रायते स मा ।

विशेष्यपूर्वं संबोधनेतरपूर्वं संबोधनं हित्वान्यस्मात् संबोधनान्तात् परयोर्नैत[2] आदेशा इति केचित् । देवास्मान् पाहि । नृहरे विष्णोस्मान् रक्ष सर्वदा । विशेष्यपूर्वात्तु हरे[3] कृपालो नः पाहि । असंबोधनपूर्वात्तु[4] सर्वदा रक्ष देव नः ।

---

**सपूर्वायाः** । सपूर्वाया इत्यत्र सहशब्दो[5] विद्यमानवचनो यथा सहैव दशभिः पुत्रैर्भारं वहति गर्दभी इत्यत्रेत्यभिप्रेत्याह । विद्यमानपूर्वादिति । प्रथमाशब्दोयं प्रत्ययवचनः । तेन प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणमित्यभिप्रेत्याह । **प्रथमान्तादिति** । पदादिति शेषः । परयोर्युष्मदस्मदोरिति शेषः । ननु एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्या इति वक्तव्येनैव विभाषासिद्धेर्व्यर्थमेतद्वचनमित्याशङ्क्याह । **अन्वादेशेपीति** । **एते आदेशा इति** । एते वांनावादय इत्यर्थः । **विशेष्यपूर्वमित्यादि** । विशेष्यं व्यवच्छेद्यं तत् पूर्वं यस्य तत् विशेष्यपूर्वं संबोधनम् । संबुध्यते आमन्त्र्यते अभिमुखीक्रियते येन तत् संबोधनं हित्वा त्यक्त्वा तथा संबोधनेतरपूर्वमिति संबोधनादितरद-संबोधनं तत् पूर्वं यस्य संबोधनस्य तत् संबोधनं हित्वान्यस्माद-विशेष्यपूर्वसंबोधनान्तात् तथा संबोधनपूर्वसंबोधनान्तात्[6] परयोर्युष्मदस्मदोर्वैते वांनावादय आदेशा न भवन्तीति केचिदित्यर्थः ॥

इति युष्मदस्मदौ[7] ॥

---

१. Dropped $D_2$. २. परतो नैते $D_1$, $D_2$, $D_5$. ३. हे हरे $D_2$, $D_3$. ४. तु dropped $D_3$. ५. सहशब्दो dropped $Dc_1$, $Dc_2$. ६. संबोधनान्तात् $Dc_1$, $Dc_2$. ७. After it—परिसमाप्तौ $Dc_3$.

सुपात्-द् । सुपादौ । सुपादः । सुपादम् । सुपादौ ।

**पादः पत् ॥६।४।१३०॥**

पाच्छब्दस्य भस्य पदादेशः स्यात् ॥ सुपदः । सुपदा । सुपाद्भ्याम् । इत्यादि ।

अग्निमत्-द् । अग्निमथौ । अग्निमथः । हे अग्निमत्-द् । अग्निमथम् । अग्निमथौ । अग्निमथः । अग्निमथा । अग्निमद्भ्याम् । इत्यादि ।

प्राञ्च् इति स्थिते क्विनि कृते

---

**सुपादिति** । शोभनौ पादावस्येति बहुव्रीहिः । 'संख्यासुपूर्वस्य' इति पादस्यान्तलोपः ।

**पादः** । अत्र पादिति पादशब्दो लुप्ताकारो गृह्यते । 'अङ्गस्य' इत्यनुवृत्तेः पाच्छब्दान्तस्याङ्गस्य प्राप्नुवन्नपि पदादेशो 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया पाच्छब्दस्यैव भवति न तदन्तस्य सर्वस्येति सर्वं चेतसि कृत्वाह । **पाच्छब्दस्येत्यादि** ॥

इति दान्ताः ॥

**अग्निमदिति** । अग्निं मथ्नातीत्यग्निमद् । मथेः क्विन् । नलोपः ॥

इति थान्ताः ॥

**प्राञ्च इति स्थित इति** । **प्रकर्षेण अञ्चतीति** । अञ्चु गतिपूजनयोरित्यस्य प्रोपसर्गपूर्वस्य अकः सवर्णे दीर्घे कृते सति प्राञ्च् इति स्थिते । **क्विनि कृते इति** । 'ऋत्विक्—' इत्यादिना ।

---

१. After it—'संख्यासुपूर्वस्य' संख्यासुपूर्वस्य पादशब्दस्यान्त्यलोपः स्यात् । $B_1$. २. $B_1$, P, $D_5$ drop हे अग्निमत्-द्; $D_1$, $D_2$, $D_4$ drop from हे अग्निमत्-द् to अग्निमथा; $D_3$ drops from हे अग्निमत्-द् to अग्निमथः. ३. Before it—सुपात् $Dc_3$. ४. पादशब्दस्या° $Dc_3$. ५. नस्य लोपः । 'झलां जशोन्ते' इति जश्त्वे 'वावसाने' इति वा तकारः । विकल्पभावे जश्त्वम् $Dc_3$.

## अनिदितां हल उपधायाः क्ङिति ॥६।४।२४॥

हलन्तानामनिदितामुपधाया नस्य लोपः स्यात् किति ङिति परे[4] ॥ उगिदचामिति नुम् । संयोगान्तस्य लोपः । नकारस्य कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ ।

---

**अनिदिताम्** । इत् इत् येषां ते इदितः । न इदितः अनिदितः । 'हलः' इति सुब्व्यत्ययेन षष्ठीबहुवचनस्य स्थाने षष्ठ्येकवचनम् । एतच्च 'अनिदिताम्' विशेषणं विशेषणेन च तदन्तविधिर्भवतीत्यभिप्रेत्याह । हलन्तानामित्यादि । अङ्गानामिति शेषः । अनिदितामिति किम् । नन्द्यते । हल इति किम् । नीयते । उपधाया इति किम् । नह्यते । क्ङितीति किम् । स्रंसिता । गँलिकम्प्योरुपतापशरीरविकारयोरिति वाच्यम् । गँलितः । कँपितः । **उगिदचामिति** । **नुमिति** । प्राच् अस्मात् क्विन्नन्तात् 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वात् सौ सति नुम् । सुलोपः । संयोगान्तलोप इति चलोपः । **नकारस्य कुत्वेन ङकार** इति 'क्विन्प्रत्ययस्य कुः' इत्यनुनासिकस्य नकारस्यानुनासिको ङकार इत्यर्थः । **अनुस्वारपरसवर्णा**विति । प्राच् औ इति स्थिते 'उगिदचाम्–' इति नुमि 'नश्चापदान्तस्य' इत्यनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णो ञकार इत्यर्थः ।

---

१. हलि C, B1, B2. २. °मुपधानस्य B2. ३. नकारस्य D3; नलोपः D5. ४. D1, D2, D3, D4 drop it. ५. संयोगान्तलोपः D1. ६. Dropped Dc1. ७. लगि° Bc1, Dc4, Dc3. ८. लगितः Bc1, Dc4, Dc3. ९. विकम्पितः Dc3, Dc4.

**अचः ॥६।४।१३८॥**

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात्[1] ॥

**चौ ॥६।३।१३८॥**

लुप्ताकारेऽञ्चतौ परे[2] पूर्वस्याणः स्थाने[3] दीर्घः स्यात् ॥ प्राचः । प्राचा । प्राग्भ्याम् । इत्यादि । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । इत्यादि[4] ।

---

**अचः** । अत्र 'अच्' इति प्रत्याहारग्रहणं वा पचाद्यच्ग्रहणं वा । लुप्तनकाराञ्चतिर्ग्रहणं[5] वा । तत्राद्यद्वितीयपक्षौ न । 'द्युप्रागपागुदक्प्रतीचो यत्' इत्यस्मान्निर्देशात् । यदि हि प्रत्याहारग्रहणं पचाद्यच्ग्रहणं वा स्यात् प्रतीच इत्यञ्चतेर्लोपो नोपपद्येत[6] । न ह्येतदजन्तमङ्गं पचाद्यजन्तं वा तस्मादन्त्य एव पक्षोऽभिप्रेत इत्यभिप्रेत्याह[7] । **लुप्तनकारस्याञ्चतेरिति** ।

**चौ** । चौ इति लुप्ताकारोऽञ्चतिर्गृह्यत इत्याह । **लुप्ताकारे** इति । **प्रत्यङ्** इति । प्रतीपमञ्चतीति प्रतिपूर्वादञ्चतेः क्विनि तस्य सर्वस्य लोपे नलोपे च कृते प्रातिपदिकत्वात् सौ नुमि सुलोपे संयोगान्तलोपे कृते कुत्वेन नस्य ङः । **प्रत्यञ्चा**वित्यादौ अनुस्वारपरसवर्णौ । **प्रतीच** इति । शसि 'अचः' इत्यल्लोपः । 'चौ' इति दीर्घत्वम्[8] । अत्रान्तरङ्गोऽपि यणादेशो दीर्घविधानसामर्थ्यान्न प्रवर्तते ।

---

१. °र्भस्याकारलोपः C. २. Dropped B1. ३. Dropped D3. ४. After this—'उगिदचाम्—' इति नुम् । संयोगान्तस्य लोपः । 'अदसोसेर्दादु दो मः ।' अदसोसकारसंबन्धिनो दस्य मः स्यात् । तस्मात् परस्य वर्णमात्रस्योवर्णादेशः । अकारस्येति बहुव्रीहिणा कृतत्वशाद्यत्वस्य विवक्षितत्वादुत्वमस्वयोरभावः । परतः केचिदिच्छन्ति &c. D2. ५. ग्रहणं dropped Dc1, Dc2. ६. नोपपद्यते Dc1, Dc3. ७. इत्याभिप्रेत्याह Nc2. ८. Dropped Dc4.

अमुमुइअच् । अदमुइअच् । इति स्थिते यणादेशः । अमुमुयङ् । अमुमुयञ्चौ । अमुमुयञ्चः । शसादौ मुभावस्यासिद्धत्वान्न संधिः । अमुमुईचः । अमुमुईचा । अमुमुयग्भ्याम् । इत्यादि । एवमदमुयङ् । अदम्रयङ् । उदङ् । उदञ्चौ । उदञ्चः । शसादावचि

---

अमुमुइअच् अदमुइअच् इति स्थिते इति । अमुमञ्चतीति विग्रहे अदःशब्दपूर्वादञ्चतेः क्विनि तल्लोपे नलोपे च सति अदस् अच् इति स्थिते 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' इत्यदसष्टे-रद्र्यादेशे अदद्रि अच् इति स्थिते 'अदसोसेर्दादु दो मः' इत्य-विशेषादुभयत्रापीत्यपर इति वक्ष्यमाणवचनेनादसो दकारात् परस्या-कारस्योत्वे दस्य च मत्वे । तथाद्र्यादेशदकारात् परस्य रेफस्योत्वे दस्य च मत्वे अमुमुइ अच् इति स्थिते अदसोद्र्यादेशस्य मुभाव इत्येके इति वचनादद्र्यादेशस्यैव मुभावे अदमु इ अच् इति स्थिते सतीत्यर्थः । यणादेश इति । 'इको यणचि' इति इकारस्य यकारः । ननु प्रथमं मु इत्यत्र वर्तमानस्योकारस्य वत्वं कस्मान्न स्यात् । उच्यते । 'पूर्वत्रासिद्धम्' इति यणादेशं प्रत्ययसिद्धत्वात् अमुमुयङ् इत्यादौ शेषा प्रक्रिया पूर्ववत् । शसादावित्यादि । अमुमुइअच् शस् इत्यादौ स्थिते शसादौ परे 'अचः' इत्यल्लोपे पूर्वस्येकारस्य 'चौ' इति दीर्घत्वे 'पूर्वत्रासिद्धम्' इति मुभावस्यासिद्धत्वान्न संधिर्यणादेश इत्यर्थः । अदम्रयङ् इति । उभयत्र मुभावाभावपक्षे रूपम् । उदङ् इति । उत्कृष्टमञ्चतीति उत्पूर्वस्याञ्चतेः पूर्ववद्रूपसाधनम् ।

---

१. For अमुमुइअच् to अदम्रयङ्—अमुमञ्चतीति विग्रहे अदस् अच् इति स्थिते

परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः ।
उभयोः केचिदिच्छन्ति केचिन्नेच्छन्ति चोभयोः ॥

**विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥६।३।९२॥**

अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्याद्वप्रत्ययेञ्चतौ परे । इति टेरद्र्यादेश अदद्रि अच् इति स्थिते

**अदसोसेर्दादु दो मः ॥८।२।८०॥**

अदसोसान्तस्य दात्परस्योवर्णो दस्य च मः स्यात् । स्थानेन्तरतम इति ह्रस्वस्य

उद ईत् ॥६।४।१३९॥

उच्छब्दात्परस्य भस्याञ्चतेरस्य ईत् स्यात् ॥ उदीचः । उदीचा । उदग्भ्याम् । इत्यादि ।

---

उदः । अत्रापि लुप्तनकार एवाञ्चतिर्गृह्यते 'अचः' इत्यनुवृत्तेः ।

---

ह्रस्वः दीर्घस्य दीर्घ ऊकारः । अदमु इ अच् इति यणादेशः । अदमुयङ् । अदमुयञ्चौ । अदमुयञ्चः °शसादौ मुभावस्यासिद्धत्वान्न संधिः । अदमुईचः । अदमुईचा । अदमुयग्भ्याम् । इत्यादि । एवमसुद्र्यङ् । अमुमुयङ् । अदद्र्यङ् । P, C, $B_1$ ($B_1$ drops the वृत्ति of विष्वग्देवयोश्च°); (After the Sûtra विष्वग्दे° $D_2$ drops the वृत्ति and has इति टेरद्र्यादेशः । अदमुयङ् । अमुद्र्यङ् । अदद्र्यङ् । अमुमुयङ् । अमुमुइच् इति स्थिते यणादेशः स्यात् । अमुमुयञ्चौ । अमुमुयञ्चः । शसादौ मुभावस्यासिद्धत्वान्न संधिः । अमुमुईचः । अमुमुईचा । अमुमुयग्भ्याम् । एवमदमुयङ् । अमुद्यङ् । अदद्रमुङ् । उदङ् &c. $D_2$). (C and P have अमुमुइअच् । अमुमुयङ् । अमुमुयञ्चौ &c. । अमुमुईचः । for अदमुइअच् &c.) (C drops स्थाने° to ऊकारः and has परतः केचिदिच्छन्ति........... चोभयोः here) (C has एवमदमुयङ् । अमुद्र्यङ् । अदद्र्यङ्).

$B_2$ has विष्वग्देवयोरित्यद्र्यादेशः । अदसोसेर्दादु दो मः । अदमु इ अच् इति स्थिते यणादेशः । then follows the text and after इत्यादि has एवमदमुयङ् । उदङ् Dc.

अमुमञ्चतीति विग्रहे क्विन् । क्विनि कृते 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' इति टेरद्र्यादेशः । अदद्र्यङ् । अदसोद्र्यादेशस्य 'अदसोसेर्दादु दो मः' इति मुभाव इत्येके । अदमुयङ् । अविशेषादुभयत्रापीत्यपरे । अमुमुयङ् । आद्यावेवेत्येन्ये । अमुद्यङः । तथा चाहुः ।

परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः ।
उभयोः केचिदिच्छन्ति केचिन्नेच्छन्ति चोभयोः ॥

अमुमुइअच् इति स्थिते मुभावस्यासिद्धत्वान्न पूर्वेण संधिः । अदमुइअच् इति स्थिते यणादेशः । अमुमुयङ् । अमुमुयञ्चौ । अमुमुयञ्चः । शसादौ मुभावस्यासिद्धत्वान्न संधिः । अमुमुईचः । अमुमुईचा । अमुमुयग्भ्याम् । एवमदमुयङ् । एवममुमुयङ् । अदद्र्याङ् । उदङ् । उदञ्चौ । उदञ्चः । &c. $D_4$. १. P drops it.

## समः समि ॥६।३।९३॥

समः समिरादेशः[2] स्यादञ्चतौ परे[4] । सम्यङ् । सम्यञ्चौ । सम्यञ्चः । सम्यञ्चम् । सम्यञ्चौ । समीचः । समीचा । सम्यग्भ्याम् । इत्यादि[5] ।

[6]तिरस् अच् इति स्थिते

## तिरसस्तिर्यलोपे ॥६।३।९४॥

अलुप्ताकारेऽञ्चतौ परे तिरसस्तिर्यादेशः स्यात् ॥ तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । [7]तिर्यञ्चम् । तिर्यञ्चौ । अकारलोपः । श्चुत्वम् । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । इत्यादि । प्राञ्च् इति स्थिते

---

**सम्यङ्** इति । सम्यक् अञ्चतीति सम्यङ् । 'समः समिः' इति समः समिरादेशः ।

**तिरसः** । **अलोप** इति । न विद्यते लोपो यस्य सोऽलोपः । स च प्रकृतत्वादञ्चतिरित्यभिप्रेत्याह । **अलुप्ताकारेऽञ्चताविति** । तस्मिन् वप्रत्ययान्ते इति ज्ञेयम् । तस्याप्यनुवृत्तेः । **अकारलोप** इति । तिरस् अच् शस् इति स्थिते 'अचः' इत्यकारलोपे इत्यर्थः । अल्लोपस्य जातत्वात् तिर्यादेशो न । **श्चुत्वमिति** । 'स्तोश्चुना श्चुः' इति सकारस्य शकार इत्यर्थः । **प्राञ्च इति स्थिते** इति । प्रकर्षेणाञ्चति पूजयतीत्यर्थे अञ्चेः क्विनि तल्लोपे च कृते प्राञ्च् इति स्थिते इत्यर्थः ।

---

*१. $D_1$ drops the Sûtra and its Vṛitti and also सहस्य सध्रिः and has—सम्यङ् । सम्यञ्चौ । समीचः । समीचा । सम्यग्भ्याम् । तिरस् अच् इति स्थिते ।. २. अञ्चतावप्रत्ययान्ते उत्तरपदे परतः समः समीत्यादेशः स्यात् । $D_2$. ३. आदेशः dropped C. ४. °दञ्चतावप्रत्यये परे : $B_1$; °दप्रत्ययान्तेऽञ्चौ परे $D_3$; °दञ्चतौ प्रत्यये परे $B_2$. ५. Dropped $D_2$. ६. Before it—सहस्य सध्रिः ॥६।३।९५॥—सहस्य सध्रिरादेशः । सध्र्यङ् । $D_1$, $B_1$. ७. तिर्यञ्चम् । तिर्यञ्चौ dropped $D_1$, $D_3$, $D_4$.

**नाञ्चेः पूजायाम् ॥६।४।३०॥**

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् ॥ अलुप्तनकारत्वान्न नुम् । प्राङ् । प्राञ्चौ । प्राञ्चः । [1]नलोपाभावत्वाद[2]कारस्य लोपो न । प्राञ्चः । प्राञ्चा । [3]संयोगान्तस्य लोपः । कुत्वेन ङकारः । प्राङ्भ्याम् । प्राङ्भिः[4] । 'ङ्णोः कुक्[5]टुक् शरि' इति कुक् । प्राङ्क्षु । प्राङ्[6]षु । एवं प्रत्यङादयः । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुञ्चा । क्रुङ्भ्याम् । इत्यादि । 'चोः कुः' ।

---

**नाञ्चेः** । 'अनिदिताम्—' इति प्राप्तो[7] नलोपो निषिध्यते । **अलुप्तनकारत्वादिति** । 'उगिदचां सर्वनामस्थाने धातोः' इत्यत्र नलोपि[8]नोऽञ्चतेर्ग्रहणादिति भावः । **नलोपाभावादिति** । प्राञ्च् शस् इति स्थिते अस्य पूजार्थत्वेन नलोपाभावात् 'अचः' इति लुप्तनकारस्याञ्चतेर्विधीयमानोऽल्लोपो[9] नेत्यर्थः । **संयोगान्तलोप** इति । प्राञ्च्भ्याम् इति स्थिते चस्य लोप इत्यर्थः । **कुत्वेनेति** । क्विन्प्रत्ययस्येति पञ्चमस्यानुनासिकस्य नकारस्य पञ्चमोऽनुनासिको ङकार इत्यर्थः । **ङ्णोरित्यादि** । प्राञ्च् सु इति स्थिते [10]संयोगान्तस्य लोपे कुत्वेन नस्य ङे कृते 'ङ्णोः—' इति कुगागम इत्यर्थः । 'आदेशप्रत्यययोः' इति सस्य षः । कषयोगे क्षः । **एवं प्रत्यङ्ङादय इति** । एवमनेन प्रकारेण पूजार्थाः प्रत्यङ्ङादयो ज्ञेया इत्यर्थः । **क्रुङ् इति** । क्रुञ्चति गच्छतीति क्रुङ् । क्रुञ्च गतौ । अस्मात् केवलात् 'ऋत्विक्—' इत्यादिना क्विन् । न लोपाभावो निपात्यते ।

---

१. नलोपाभावात् P, C, Com. २. °काकारलोपः C; °कारस्यालोपः $B_2$, $D_3$, $D_5$; °इकारस्य न लोपः P, $D_4$. ३. संयोगान्तलोपः Com. ४. इत्यादि for it $D_5$. ५. °टुगिति $D_1$. ६. प्राङ्षु dropped P, $B_1$, $D_1$, $D_3$, $D_5$. ७. प्राप्ते निषिध्यते । $Dc_1$, $Dc_2$, $Nc_1$. ८. नलोपिनो $Dc_2$, $Nc_2$, $Bc_1$. ९. °लोपो ने° $Bc_1$. १०. °गान्तलोपे $Dc_3$.

पयोमुक्–ग् । पयोमुचौ । पयोमुचः । पयोमुचम् । पयोमुचौ । पयोमुचः । [१]पयोमुचा । पयोमुग्भ्याम् । इत्यादि । 'व्रश्चभ्रस्ज–' इति चस्य षत्वम्[२] । 'स्कोः संयोग—' इति सलोपः । जश्त्व-चर्त्वे[३] । सुवृट्–ड् । सुवृश्चौ । सुवृश्चः । इत्यादि । उगित्त्वान्नुम् । 'सान्तमहतः [४]संयोगस्य' । [५]महान् । महान्तौ । महान्तः । [६]महान्तम् । महान्तौ । महतः । महद्भ्याम् । इत्यादि ।

पयोमुक् इति । पयोमुञ्चतीति पयोमुक् । मुच्लृ मोक्षणे । अस्मात् क्विप् । सुवृडिति । सुष्ठु वृश्चतीति[७] सुवृट् । ओव्रश्चू छेदने । अस्मात् क्विन्[८] । 'ग्रहिज्या—' इत्यादिना संप्रसारणम् ॥

इति चान्ताः ॥

उगित्त्वादिति । 'वर्तमाने पृषत्बृहत्महत्जगत्शतृवच्च' इत्युणादिसूत्रेण मह पूजायामित्यस्य धातोर्महदिति रूपं निपात्यते । तच्च शतृवदित्यतिदेशादुगिद् भवति । तत उगित्त्वान्महच्छब्दस्य 'उगिदचाम्—' इत्यादिना नुमित्यर्थः । 'सान्तमहतः संयोगस्य' इत्यनेन सूत्रेण दीर्घ इत्यर्थः ।

१. From पयोमुचा to इत्यादि dropped $D_1$, $D_4$, $D_5$, $B_2$; From पयोमुचः (Nom. Plu.) to इत्यादि dropped $D_2$, $D_3$. २. निमित्ताभावे 'स्कोः—' $D_5$. ३. After it—सुवृश्चा । सुवृड्भ्याम् । इत्यादि । तत्त्वप्राट्-ड् । तत्त्वप्राशौ । तत्त्वप्राशः । तत्त्वप्राशम् । तत्त्वप्राशौ । तत्त्वप्राशः । तत्त्वप्राशा । तत्त्वप्राड्भ्याम् । इत्यादि । $B_2$. ४. संयोगस्येति दीर्घः $B_2$. ५. After it—हे महन् $B_2$, $D_1$, $D_2$, $D_3$. ६. महान्तम् । महान्तौ and महद्भ्याम् dropped $D_1$. ७. वृश्चति छिनत्तीति $Dc_3$. ८. क्विप् $Dc_3$, $Dc_4$.

अत्वन्तत्वाभावान्न दीर्घः । भवन् । भवन्तौ । [1]भवन्तः । [2]भवन्तम् । भवन्तौ । [3]भवतः । भवता । भवद्भ्याम् । इत्यादि । अत्वन्तत्वाद्दीर्घः । धी[4]मान् । हे धीमन् । शेषं [5]भवद्वत् । अत्रभवत्-तत्रभवच्छब्दौ [6]पूज्यार्थौ । धी[7]मद्वत् । अत्रभवा[8]न् । [9]अत्रभवन्तौ । अत्रभवन्तो भट्टाचार्याः । तत्रभवन्तः ।

---

अत्वन्तत्वाभावादिति । भवच्छब्दस्य भू अस्मात् 'लटः शतृ' इति शत्रन्तस्य सिद्धत्वादत्वन्तत्वाभात् 'अत्वसन्तस्य चाधातोः' इति न दीर्घ इत्यर्थः । भवन्निति । 'उगिदचाम्—' इति नुम् । अत्वन्तत्वाद् दीर्घ इति । धीमत्शब्दस्य धीर्विद्यते यस्यासावित्यर्थे 'तदस्यास्त्यस्मिन्' इति मतुप् इति मतुप्-प्रत्ययान्तत्वेनात्वन्तत्वात् 'अत्वसन्तस्य—' इति दीर्घ इत्य[10]र्थः अत्रभवदित्यादि । अत्रभवत्तत्रभवच्छ[11]ब्दौ पूज्यार्थौ पूज्यवाचिनौ । तौ च धीमच्छब्दवत् साधनीयौ । अत्रभवानिति । अत्रेति । एतदत्रेति तदः 'इत[12]राभ्योपि दृश्यन्ते' इति त्रल् । अत्र तत्रशब्द-विशिष्टो भवच्छब्दः [13]पूजार्थतां द्योतयति । अथवा पूज्यार्थावेवात्रभवत्-तत्रभवच्छब्दौ उदनुबन्धौ प्रकृतिप्रत्ययविभागेन कल्प्यौ । अत्वन्तत्वाद् दीर्घत्वम् । अत्रभवन्तो भट्टाचार्या इत्यनेन [14]पूजार्थता दर्शिता ।

---

१. P and $B_1$ have शेषं महद्वत् for भवन्तः.........भवद्भ्याम्. २. In place of भवन्तम्...शेषं महद्वत् $D_3$ has शेषं महद्वत्. ३. For भवतः...... इत्यादि $D_1$, $D_2$, $B_2$ have शेषं महद्वत्; after it—शेषं महद्वत् $D_4$, $D_5$. ४. After it—धीमन्तौ । धीमन्तः । $D_3$, $B_1$, $B_2$. ५. महद्वत् $D_5$. ६. पूजार्थे P; After it—निपात्येते $D_3$. ७. C omits धीमद्वत्. ८. $D_1$ drops अत्रभवान् । अत्रभवन्तौ. ९. हे अत्रभवन् $D_5$. १०. इत्यर्थः dropped $Dc_1$, $Dc_2$, $Nc_1$. ११. शब्दौ dropped $Nc_2$. १२. इतरेभ्योपि $Dc_3$. १३. पूज्यार्थतां $Dc_4$. १४. पूज्यार्थता $Dc_4$.

एवं यशस्वदादयः । भवान् । भवन्तौ । भवन्तः । विभाषा भवदिति रुत्वम् । अवस्य ओकारो[2] वा । हे भोः । हे भवन् । हे भगोः । हे भगवन् । हे अघोः । हे अघवन् । शेषं धीमद्वत् ॥

**उभे अभ्यस्तम् ॥६।१।५॥**

अत्र प्रकरणे ये द्वे विहिते ते[3] उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

**नाभ्यस्ताच्छतुः ॥७।१।७८॥**

अभ्यस्तात् परस्य शतुर्नुम् न स्यात् ॥ ददत् । ददतौ । ददतः । इत्यादि[4] ॥

---

**एवं यशस्वदादय** इति । धीमद्वदेव यशस्वदादयो ज्ञेया इत्यर्थः । **भवानिति** । अयं सर्वदोकारानुबन्धः पठ्यत इति दीर्घः ।

**उभे** । अत्र प्रकरणे 'एकाचो द्वे प्रथमस्य' इत्यारभ्यैतत्सूत्रपर्यन्तमित्यर्थः । अत्र च 'द्वे' इत्यनुवर्तमाने उभेग्रहणं समुदायस्य[5] संज्ञा यथा स्यात् प्रत्येकं मा भूदित्येवमर्थमाह । **उभे समुदिते** इति । समुदितसंज्ञाप्रतिपत्तिर्नेनिजतीत्यत्र 'अभ्यस्तानामादिः' इति विधीयमानमाद्युदात्तत्वं समुदाये यथा स्यात् प्रत्येकं पर्यायेण वा[6] मा भूदित्येवमर्थम् ।

**नाभ्य°** । अत्र यद्यपि 'अनन्तरस्य विधिर्भवति[7] प्रतिषेधो वा' इति परिभाषया 'ई च द्विवचने' इत्यनन्तरविहितस्य ईकारस्यैव निषेधेन भाव्यं तथापि तस्य शतुरविहितत्वात् व्यवहितोपि नुमत्र निषिध्यत इत्यभिप्रेत्याह । **शतुर्नुम् न स्यादिति** । ददिति । डुदाञ् दाने । वर्तमाने लट् । 'लटः शतृ' इति शतृ । शप् । 'जुहोत्यादिभ्यः श्लुः' । 'श्लौ' इति द्वित्वम् । अभ्यस्तसंज्ञायां 'श्नाभ्यस्तयोः' इत्यालोपः । स्वाद्युत्पत्तिः । उगित्त्वात् प्राप्तो नुमभ्यस्तत्वान्न ।

---

१. C has भवद्भगवदिति. २. अकारो D1. ३. B1 drops ते. ४. B1 drops इत्यादि. ५. समुदायसंज्ञा Nc1. ६. Dropped Dc1. ७. वा विधि° Dc2, विधिर्वा Nc2.

**जक्षित्यादयः षट् ॥६।१।६॥**

षड् धातवोन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः[1] ॥ जक्षत् । जक्षतौ । जक्षतः[2] । एवं जाग्रत्दरिद्रत्शासच्चकासत् दीध्यत्वेव्यत्[3] ।

धर्मगुप्-ब्[5] । धर्मगुपौ[6] । धर्मगुपः । इत्यादि[4] ।

---

**जक्षि** । जक्षिरित्ययं धातुरभ्यस्तसंज्ञः । इत्यादयो जागृप्रभृतयः षट् चाभ्यस्तसंज्ञा इति सूत्रार्थः । तथा हि । इतिरादिर्येषां त इत्यादयः । इतिशब्दोतिक्रान्तप्रत्यवमर्शकः । तत्र जक्ष इत्ययं धातुरनन्तरमतिक्रान्त इति स एव तेन प्रत्यवमृश्यते । जक्षित्येतदुपलक्षितानां जागृप्रभृतीनां वेवीङ्पर्यन्तानां षण्णां जक्षित्येतस्य च तेभ्यः पृथङ्निर्दिष्टस्य सप्तमस्याभ्यस्तसंज्ञा तत् सर्वं चेतसि कृत्वाह । **षड् धातवोन्ये जक्षितिश्च सप्तम** इति । **जक्षदिति** । जक्षभक्ष हसनयोः । शता । अभ्यस्तत्वान्नुम्निषेधः । एवं जाग्रदित्यादि । जागृ निद्राक्षये । दरिद्रा दुर्गतौ । शासु अनुशिष्टौ । चकासृ दीप्तौ । दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिना तुल्यः । सर्वेभ्यो लटः शता दीधीङ्वेवीङः 'व्यत्ययो बहुलम्' इति व्यत्ययेन शता ॥

तान्ताः ॥

**धर्मगुबिति** । धर्मं गोपायतीति धर्मगुप् । गुपू रक्षणे क्विप् 'आयादय आर्धधातुके वा' इति आयाभावपक्षे रूपम् ॥

पान्ताः ॥

---

१. $B_1$ drops स्युः. २. C has after it—इत्यादि । जक्षिजागृदरिद्राशास् दीधिवेवीङ् चकास्तथा । अभ्यस्तसंज्ञाः सप्तैते धातवो मुनिभाषिताः ॥

३. After this—जक्षजागृदरिद्राशास् दधीङ् वेवीङ् चकास्तथा । अभ्यस्तसंज्ञाः सप्तैते साभ्यासा ये च धातवः ॥१॥ $B_1$, C.

४. $B_1$, $D_1$ drop इत्यादि ; C has धर्मगुपम् । धर्मगुपौ । धर्मगुपः । धर्मगुब्भ्याम् before it. ५. एतत् $Dc_3$, $Dc_4$. ६. शतृ $Bc_1$.

## त्यदादिषु दृशोऽनालोचने कञ्च ॥३।२।६०॥

त्यदादिषूपपदेष्वनालोचनार्थाद्[1] दृशेर्धातोः कञ् स्यात् चात् क्विन् । क्विन्नन्तत्वात् कुत्वम् । तादृक्-ग् । तादृशौ । तादृशः[2] । एवं यादृगादयः । समानान्ययोश्च वक्तव्यम्* ॥ इति क्विन्[3] । [4]सदृक्-ग् । सदृशौ । [5]सदृशः । [6]अन्यादृक्-ग् । अन्यादृशौ । [7]अन्यादृशः । व्रश्चेति षत्वम् । जश्त्वचर्त्वे । विट्-ड् । विशौ । विशः । [8]विशम् । विशौ । विशः । विशा । विड्भ्याम् । इत्यादि ।

---

त्यदादिषु । आलोचनमिह ज्ञानमात्रं विवक्षितम् । यदि ज्ञाने दृशिर्न [9]वर्तेत तर्हि प्रत्ययो नान्यथा । तादृगिति[10] । 'आ सर्वनाम्नः' इत्यात्वम् । ननु चात्रापि दर्शनक्रियास्त्येव तथाहि [11]तादृगादिशब्दानां व्युत्पत्तौ आचार्याः । तमिव पश्यति अथवा स इव दृश्यते [12]इत्येवं-प्रकारं वाक्यमुपन्यस्यार्थप्रत्ययं कुर्वन्ति । नैष दोषः । [13]रूढशब्दा एते [14]तेनात्र नास्ति दर्शनक्रिया यतो [15]रूढशब्देषु नावश्यमवयवार्थेन भाव्यम् । बालव्युत्पत्त्यर्थमविद्यमानोप्यवयवार्थ उपादीयते । [16]यथा व्याजिघ्रतीति व्याघ्र इत्यादौ । अथवोपमानोपमेयभावमात्रमत्रास्ति न दर्शनक्रिया । तथा च **धर्मकीर्तिनोक्तं रूपावतारे** । 'उपमानोपमेय-भावो गम्यते चेत्तौ भवतः' इति । **सदृगिति** । 'दृग्दृशवतुषु' इति समानस्य सभावः । **विडिति** । विशतीति विट् । विश प्रवेशने । क्विप्[17] ।

---

१ °लोचनार्थदृशे° $B_1$. २. P has before it—आसर्वनाम्न इत्यात्वम् । कञ्पक्षे तादृशः ।. ३. $B_1$ has before it—क्विन्प्रत्ययः । कुः ।. ४. Before it—समानस्य सः । $D_2$. ५. P drops it. ६. एवमन्यादृक् । व्रश्चेति &c. $D_3$. ७. P and $B_1$, $D_1$ drop it. ८. From this to विशा dropped $D_2$; From this to इत्यादि dropped $D_4$. ९. वर्तते $Nc_3$, $Dc_4$. १०. °गित्यादिना $Nc_2$. ११. तादृगित्यादि° $Nc_2$. १२. प्रत्येकं प्रकारं $Dc_1$, $Dc_2$. १३. रूढि° $Nc_3$, $Dc_4$. १४. एतेनात्र $Dc_3$. १५. रूढि° $Nc_2$, $Dc_3$, $Dc_4$. १६. तथा $Dc_1$, $Dc_2$. १७. After it—'व्रश्चभ्रस्ज-' इति षत्वम् । 'झलां जशोन्ते' इति जश्त्वम् । 'वावसाने' इति चर्त्वम् । विट् । विड् । $Dc_3$.

**नशेर्वा ॥८।२।६३॥**

नशेः कवर्गान्तादेशो वा स्यात् पदान्ते[1]। झल्यपि[2] केचित्। नक्–ग्। नट्–ड्। नशौ। नशः। नेग्भ्याम्। नड्भ्याम्[3]। श्वेतवहादित्वात् डस्। पुरोडाः। पुरोडाशौ। पुरोडाशः। हे[4] पुरोडाः। हे पुरोडः[5]। पुरोडाशम्[6]। पुरोडाशौ। पुरोडाशः। पुरोडाशा। पुरोडोभ्याम्[7]। पुरोडस्सु। पुरोढःसु।

**स्पृशोनुदके क्विन् ॥३।२।५८॥**

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात्।

---

**नशेर्वा**। 'पदस्य' इत्यनुवर्तते इत्यभिप्रेत्याह। **पदान्त** इति। **नगिति**। नशनं नक्। संपदादित्वात् भावे क्विप्। नश्यतीति नगिति कर्तरि वा। **पुरोडा** इति। पुरो दाशन्ते[8] एनं पुरोडाः। 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्'। हे **पुरोडाः**। हे **पुरोड** इति। 'अवयाः श्वेतवाः पुरोडाश्च[9]' इति संबुद्धौ कृतदीर्घौ निपात्यते। वेति केचित्।

**स्पृशः**। ननु च 'सुपि स्थः' इत्यत्रोक्तं सकर्मकेषु कर्मानुवृत्तिरित्यत्र सुप इति स्पृश संस्पर्शने इति च[10] धातुः सकर्मक इति कर्मानुवृत्त्या भाव्यम्। तत्कथमुच्यते सुपीति चेत्। उच्यते। 'कर्तरि कृत्' इति 'कर्तरि' इति सिद्धेपि 'कर्तरि भुवः' इत्यतः 'कर्तरि' इत्येतदनुवर्तते तत् कर्तृप्रचयार्थम्। कर्तृप्रचयश्च सुबन्तमात्रे उपपदे स्यात्। कर्मण्युपपदे एकः प्रत्ययार्थः कर्ता अपरः करणादावुपपद इति। नकारः क्विन्प्रत्ययस्येति विशेषणार्थः। ककारो गुणप्रतिषेधार्थः। इकारः 'वेरपृक्तस्य' इति विशेषणार्थः।

---

१. झलि पदान्ते च C. २. झल्यपीति $D_1$. ३. नशम्। नशौ। नशः। नशा। नग्भ्याम्। नड्भ्याम्। नग्भिः। नड्भिः। इत्यादि C; नग्भ्याम्। नक्षु। नट्सु P. ४. After it—इत्यादि $D_3$. ५. हे पुरोडः dropped P, C, $D_2$, $D_5$, $B_1$, $B_2$. ६. $D_1$, $D_2$, $D_4$, $D_5$ drop all these forms except पुरोडोभ्याम्. ७. C has इत्यादि after it; P drops पुरोडस्सु। पुरोडःसु।. ८. दाशन्ते $Bc_1$, $Dc_4$. ९. पुरोडा इति $Dc_1$, $Dc_2$. १०. Dropped $Dc_2$.

घृतस्पृक्-ग् । घृतस्पृशौ[१] । [२]क्विन् प्रत्ययो यस्माद्विहितस्त[३]स्मादन्यत्रापि [४]प्रत्यये पदान्तस्य कुत्वं स्या[५]त् ॥ स्पृक्-ग् । स्[६]पृशौ । [७]स्पृग्भ्याम् । इ[८]त्यादि ।

[९]द[१०]धृक्-ग् । दधृषौ । दधृग्भ्याम् । इत्यादि । रत्नमुट्-ड् । रत्नमुषौ । रत्नमुषौ । [११]र[१२]त्नमुड्भ्याम् । इ[१२]त्यादि ।

षड्भ्यो लुक् ॥ षट् । षड् । २ । षड्भिः । षड्भ्यः २ । षण्णाम् । [१३]षट्सु ।

---

घृतस्पृक् इति । घृतेन स्पृशतीति क्विन्[१४]प्रत्ययादि । एतच्च 'क्विन्-प्रत्ययस्य कुः' इत्यत्रोपपादितम् । स्पृक् इति । स्पृशतीति स्पृक् । 'क्विप् च' इति क्विप् ॥

इति शान्ताः ॥

दधृगिति । धृष्णोतीति दधृक् । 'ऋत्विक्—' इत्यादि क्विबन्तो निपात्यते । रत्नमुडिति । रत्नं मुष्णातीति रत्नमुड् । मुष स्तेये । अस्मात् क्विप् । षडिति । षष्शब्दो बहुवचनान्तः । [१५]अत्र जश्शसोः सतोः 'ष्णान्ता षट्' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जश्शसोर्लुक् । षण्णाम् । [१६]षड् णामिति 'षट् चतुर्भ्यश्च' इति नुट् । ष्टुत्वम् । 'यरोनुनासिके—' इति वानुनासिकः ।

---

१. After this C has घृतस्पृशः । घृतस्पृशम् । घृतस्पृशौ । घृतस्पृशः । घृतस्पृशा । घृतस्पृग्भ्याम् । इत्यादि । अनुदके किम् । उदकस्पृट्-ड् ।; P has उदकस्पृट्-ड्; $B_2$ has अनुदके किम् । उदकस्पृट्-ड् ।. २. Before this Sûtra क्विन्प्रत्ययस्य कुः $B_2$. ३. °स्तस्यान्यत्रापि $D_1$. ४. प्रत्यये परे $B_2$, $D_5$. ५. Dropped $D_2$, $D_4$. ६. After this—स्पृशः $D_1$, $D_3$. ७. Before it—स्पृशम् । स्पृशौ । स्पृशः । स्पृशा । C. ८. Dropped $D_1$. ९. Before it—द्वेष्टीति । द्विष प्रीतौ । द्विट् । द्विड्भ्याम् । इत्यादि $B_1$. १०. Before it—दधृषम् । दधृषौ । दधृषः । दधृषा C; दधृषः $D_2$. ११. रत्नमुषः । रत्नमुषम् । रत्नमुषौ । रत्नमुषः । रत्नमुषा before it in C; $B_1$ has रत्नमुषः for रत्नमुड्भ्याम् । इत्यादि; $D_3$ has रत्नमुषः before it. १२. $D_2$, $D_5$, $D_4$, $D_1$ drop it. १३. P has in place of this जश्त्वे परे डस्य णत्वे पश्चात्तस्य णः ।. १४. °प्रत्यय इत्यादि $Dc_3$. १५. तत्र $Bc_1$, $Dc_4$. १६. षड्णामिति dropped $Bc_1$.

तदन्तग्रहणात्[1] परमषट् । परमषण्णाम् । गौणत्वे तु [2]प्रियषषः । प्रियषषाम् । [3]रुत्वं प्रति षत्वस्यासिद्धत्वात् ससजुषोरिति रुत्वम् ।

**र्वोरुपधाया दीर्घ इकः ॥८।२।७६॥**

रेफवकारान्तस्य[4] धातोरुपधाया इको दीर्घः स्यात् पदान्ते[5] ॥ पिपठीः । पिपठीषौ । [6]पिपठीर्भ्याम् । वा शरीति वा विसर्जनीयः । सत्वपक्षे सस्य [7]षत्वम् ।

---

तदन्तग्रहणादिति । 'षड्भ्यो लुक्' इत्यत्र 'षट्चतुर्भ्यश्च' इत्यत्र च तदन्तग्रहणात् परमषट् इत्यत्र जश्शसोर्लुक् । परमषण्णामित्यत्र नुट् स्यादित्यर्थः । परमाश्च षट् च इति । गौणत्वे त्वित्यादि । प्रियाः षट् येषां [8]ते प्रियषष इत्यत्र [9]गौणत्वे जश्शसोर्लुक् न । प्रियषषामित्यत्र नुट् न भवति । गौणत्वे अनयोरनिष्टत्वात् । रुत्वं प्रतीति । पिपठिष् सु इति स्थिते हल्ङ्याब्भ्यादिलोपे सति 'ससजुषोरुः' इति प्राप्तं रुत्वं प्रति 'आदेशप्रत्यययोः' इति जातस्य षत्वस्य पूर्वत्रासिद्धन्यायेनासिद्धत्वात् 'ससजुषोः—' इति सूत्रेण रुत्वमिति भावः ।

**र्वोरुपधायाः** । उपधायाः किम् । अबिभर्भवान् । अभ्यासेकारस्य मा भूत् । इकः किम् । अत्रैव भशब्दस्याकारस्य मा भूत् । धातोः किम् । अग्निः । वायुः । पदस्येत्येव । गिरौ । गिरः । **पिपठीरिति** । पठितुमिच्छति । 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति पठ व्यक्तायां वाचि अस्मात् सन् । इट् । 'सन्यङोः' इति द्वित्वम् । 'सन्यतः' इतीत्वम् । षत्वम् । पिपठिष् इति स्थिते क्विप् । अतो लोपः । क्विपः सर्वस्य लोपः ।

---

१. तदन्तग्रहणमत्रेष्यते P. २. Before it—प्रियषट् । प्रियषषौ C, $B_1$. ३. Before it—षट्चतुर्भ्यश्च $D_6$. ४. °वकारान्तधातो° P, $B_2$. ५. After it—झलि $B_2$. ६. C has पिपठिषः । पिपठिषम् । पिपठिषौ । पिपठिषः । पिपठिषा before it. ७. षः स्यात् $B_1$. ८. ते षट् $Dc_3$, $Dc_4$. ९. गौणत्वे dropped $Nc_2$.

नुम्विसर्जनीयशर्व्यवायेपि ॥८।३।५८॥

एभिर्व्यवधानेपि इण्कुभ्यां परस्य सस्य षः स्यात् ॥ पिपठीष्षु । विसर्जनीयपक्षे पिपठीःषु । रात्सस्येति सलोपः । चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु । दोः । दोषौ । दोर्षः । दोषम् । दोषौ । पद्दन्निति वा

नुम् । 'इण्कोः—' इति पञ्चमीनिर्देशात् निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वात् व्यवधाने 'इण्कोः—' इति न प्राप्नोतीत्यारम्भः । एभिरित्यादि । अत्र नुमा विसर्जनीयेन शरा च व्यवधाने इण्कवर्गाभ्यां परस्य सस्य षः स्यादित्यर्थः । अत्र नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । स चानुस्वारो नुम्स्थानिकः एव भाव्य इति नुम्ग्रहणम् । तेन पुंस्वित्यत्र षो न । पिपठीष्षु इति । पिपठीष् सु इति स्थिते रुत्वं प्रति षत्वस्यासिद्धत्वात् रुत्वम् । 'खरवसानयोः—' इति विसर्गः । तत्र 'वा शरि' इति यदा विसर्जनीयो न भवति तदा विसर्जनीयस्य सः । शरा सकारेण व्यवधाने परस्य सस्य षत्वम् । पूर्वस्य ष्टुत्वम् । विसर्जनीयपक्षेपि पिपठीःषु इति विसर्गस्य श्रवणं स्यादित्यर्थः । अत्र च प्रत्येकं वाक्यपरिसमाप्तिर्भवति । कथम् । नुमैव व्यवाये विसर्जनीयेनैव व्यवाये शरैव व्यवाये मूर्धन्य इति । ततश्च द्वाभ्यां त्रिभिर्व्यवाये न भवति । तेन निस्से इत्यत्र न भवति मूर्धन्यः । 'रात्सस्य' इति सलोप इत्यादि । कर्तुमिच्छतीत्यर्थे कृञः सनि 'इको झल्' इति कित्वे 'अज्झनगमां सनि' इति दीर्घत्वे 'ऋत इत्' इतीत्वे द्वित्वे चुत्वे क्विपि अल्लोपे स्वादौ सुलोपे च चिकीर्ष् इति स्थिते 'रात्सस्य' इति सलोपं प्रति षत्वस्यासिद्धत्वात् 'रात्सस्य' इति सलोप इत्यर्थः । दोरिति । दाम्यतीति दोर्भुजः । 'दमेर्डोस्' इत्युणादिसूत्रेण

१. °कवर्गाभ्यां $D_1$, $D_2$. २. मूर्धन्यादेशः C; मूर्धन्यः $D_1$, $B_2$, $D_4$, $D_5$, $D_3$, $D_2$. ३. रात्सस्येति सूत्रं प्रति षत्वस्यासिद्धत्वात् सलोपः C, $B_2$. ४. चिकीर्षः । चिकीर्षम् । चिकीर्षौ । चिकीर्षः । चिकीर्षा before it in C; after it चिकीर्षः $D_3$. ५. This and the two next forms dropped $D_3$. ६. Dropped $Nc_2$. ७. त्रिभिर्वा व्यवधाने न भवति । $Dc_3$; त्रिभिर्वा $Dc_4$.

दोषन्नादेशः। दोष्णः। दोषः। दोष्णा। दोषा। दोषभ्याम्। दोर्भ्याम्। इत्यादि। क्षान्तस्य न रुत्वमिति केचित्। 'स्कोः संयोग—' इति कलोपं प्रति कत्वस्यासिद्धत्वात् संयोगान्तलोपः। 'व्रश्च—' इति षः। जश्त्वचर्त्वे। विविट्-ड्। विविक्षौ। विविड्भ्याम्। विविट्सु। 'स्कोः—' इति कलोपः। तट्-ड्। तक्षौ। तड्भ्याम्। तट्सु।

---

डोस्। डित्त्वात् टिलोपः। षत्वम्। रुत्वं प्रति षत्वस्यासिद्धत्वात् रुत्वम्। दोष्ण इति। 'अल्लोपो न' इत्यल्लोपः। 'रषाभ्याम्—' इति णत्वम्। दोषभ्यामिति 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः। 'स्कोः—' इत्यादि। वेष्टुमिच्छतीत्यर्थे विश प्रवेशने अस्मात् सनि 'हलन्ताच्च' इति कित्त्वे द्वित्वे 'व्रश्च—' इति षत्वे 'षढोः कः सि' इति कत्वे 'आदेशप्रत्यययोः' इति सस्य षत्वे क्विपि अल्लोपे प्रातिपदिकत्वात् सौ तल्लोपे च सति 'स्कोः संयोगाद्योरन्ते च' इति सूत्रेण प्राप्तं कलोपं प्रति 'षढोः—' इति प्राप्तस्य कत्वस्य पूर्वत्रासिद्धन्यायेनासिद्धत्वात् 'संयोगान्तस्य लोपः' इति सकारस्य लोप इत्यर्थः। ततश्च निमित्ताभावे नैमित्तिकस्याप्यभाव इति षत्वकत्वाभावे विविश् इति स्थिते 'व्रश्च—' आदिना तस्य शस्य ष इत्यभिप्रेत्याह। 'व्रश्च—' इति ष इति। 'स्कोः—' इति कलोप इति। तक्षतीति तक्षू तनूकरणे क्विप्। सु। तक्ष् इति स्थिते संयोगादिभूतस्य तस्य 'स्कोः—' इति कलोप इत्यर्थः। ततः षस्य जश्त्वम्। डः। 'वावसाने' इति चर्त्वम्।

---

१. दोर्भ्याम् दोषभ्याम्। दोषसु। दोष्षु। दोःषु P, C, $D_5$. २. क्षान्तस्य... ...केचित् dropped $D_1$, $D_2$, $D_3$. ३. 'स्कोः—' इति $D_1$, $D_2$. ४. संयोगान्तस्य $D_2$. ५. षत्वम् C. ६. After it—'षढोः कः सि' इति कत्वम् $D_5$. ७. C has विविक्षः। विविक्षम्। विविक्षौ। विविक्षः। विविक्षा before it; $D_1$, $D_2$ have विविक्षः before it. ८. After it—तक्षः $D_1$, $D_2$. ९. तट्सु dropped $D_4$, $D_5$. १०. °त्यल्लोप $Nc_2$, $Dc_4$. ११. °भावेपि $Dc_3$. १२. तक्ष् सु $Dc_3$.

[1]गोरट्-ड् । गोरक्षौ । गोरक्षः[3] । रक्षतेः संयोगान्तलोप इति केचित्[2] । 'संयोगान्तस्य लोपः' । गोरक्-ग्[4] । 'स्कोः–' इति कलोपं प्रति कुत्वस्यासिद्धत्वात् [5]संयोगान्तलोपः । [6]यियक्-ग् । यियक्षौ । यियक्षः । यियग्भ्याम् । यियक्षु । एवं विवक्दिधक्षादयः[7] ।

---

**गोरडिति** । गां रक्षतीति गोरट् । पूर्ववत् । रक्षतेरिति । तथा च मुग्धबोधे । 'रक्षतेः संयोगादिलोपो निषिद्धः स्यादेः सोलोपः षेढन्यूरक्षः' इति । 'स्कोः—' इत्यादि । पक्तुमिच्छतीत्यर्थे पचः सनि द्वित्वे अभ्यासस्येत्वे 'चोः कुः' इति कुत्वे षत्वे क्विपि सौ तल्लोपे च[10] 'स्कोः संयोगाद्योरन्ते च' इति संयोगादिककारस्य प्राप्तं लोपं प्रति 'चोः कुः' इति कुत्वस्य पूर्वत्रासिद्धन्यायेनासिद्धत्वात् संयोगादिकस्याभावेन तल्लोपाप्राप्तेः 'संयोगान्तस्य लोपः' इति सस्य लोप इत्यर्थः । 'चोः कुः' इति चस्य कुत्वम् । एवमित्यादि । वक्तुमिच्छतीति विवक् । दग्धुमिच्छतीति दिधक् इत्यादयोन्येपि पिपक् इतिवत् ज्ञेया इत्यर्थः ।

इति षान्ताः ॥

---

१. Before it—षढाभ्यामन्यस्थाने जातस्य रक्षतेश्च ककारस्य संयोगादेर्लोपो नेति केचित् । संयोगान्तस्य लोपः । यियक्-ग् । यियक्षौ । यियक्षः । यियग्भ्याम् । यियक्षु । गोरक्-ग् । गोरक्षौ । गोरक्षः । गोरट्-ड् । गोरड्भ्याम् । गोरग्भ्याम् । इत्यादि । एवं विवक्ष्दिधक्षादयः । C. २. Dropped $D_1$, $D_3$. ३. एके $D_1$, $D_2$, $D_3$. ४. After it—गोरक्षौ । गोरक्षः । गोरक्षा । गोरग्भ्याम् $D_2$. ५. संयोगान्तस्य लोपः $D_2$, $D_4$, $D_5$. ६. पिपक्-ग् । पिपक्षौ । पिपक्षः । पिपग्भ्याम् । पिपक्षु $D_3$. ७. दिद्क्षा° $B_2$. ८. स्यादेशोलोपः । को षढ &c. $Dc_3$. ९. को षढन्यरक्षे इति $Dc_4$. १०. च सति $Dc_4$.

रुत्वम् । उपधादीर्घः । सुपीः । सुपिसौ । सुपीर्भ्याम् । सुपीस्सु । सुपीःसु । एवं सुतूः । विद्वान् । हे विद्वन् । विद्वांसौ । विद्वांसः । विद्वांसम् । विद्वांसौ ।

**वसोः संप्रसारणम्** ॥६।४।१३१॥

वस्वन्तस्य भस्य संप्रसारणं स्यात् ॥ पूर्वरूपत्वम् । षत्वम् । विदुषः । विदुषा । वसुस्रंस्विति दत्वम् । विद्वद्भ्याम् । इत्यादि ।

---

रुत्वमिति । सुष्ठु पेसतीति विग्रहे पिस गत्यामस्मात् सुपूर्वात् क्विपि सौ तल्लोपे च सुपिस् इति स्थिते 'झलां जशोऽन्ते' इति जश्त्वं प्रत्यसिद्धमपि नाप्राप्ते जश्त्वे आरभ्यमाणत्वात् तस्य बाधकमिति 'ससजुषो रुः' इति रुत्वमिति भावः । उपधादीर्घ इति । 'र्वोरुपधाया दीर्घ इकः' इत्युपधादीर्घत्वमित्यर्थः । सुपीःषु सुपीष्षु इति 'वा शरि' इति वा विसर्गे 'नुम्विसर्जनीयशर्व्यवायेपि' इति षत्वम् । सुतूरिति । सुष्ठु तोसतीति विग्रहे तुस् शब्दे अस्मात् क्विबादि पूर्ववत् । विद्वानिति । वेत्तीति विग्रहे विदेर्लट् । तस्य शता । तस्य 'विदेः शतुर्वसुः' इति वसुः । ततः प्रातिपदिकत्वात् सुः । उगित्त्वान्नुम् । 'सान्तमहतः—' इति दीर्घः। परमपि रुत्वमसिद्धमिति तद्बाधित्वा संयोगान्तलोपः। तस्यासिद्धत्वात् नलोपाभावः। 'हे विद्वन्निति ।'असंबुद्धौ' इत्यनुवृत्तेर्न दीर्घः।

**वसोः** । प्रत्ययग्रहणे परिभाषया तदन्तस्य कार्यं स्यादित्यभिप्रेत्याह । **वस्वन्तस्येति** । **पूर्वरूपत्वमिति** । 'संप्रसारणाच्च—' इति । षत्वमिति । 'आदेशप्रत्यययोः' इति ।

---

१. उपधाया दीर्घः $B_2$. २. P has सुतुसौ and $D_2$ सुतुसौ । सुतुसः after it. ३. $B_1$, $D_1$ drop हे विद्वन्. ४. Dropped in $B_1$. ५. $B_1$ drops it. ६. गत्याम् । तस्मात् $Dc_4$. ७. विसर्गः $Bc_1$.

पेचिवान् । पेचिवांसौ[1] । वस्य उत्वादिडभावः । पेचुषः । पेचुषा । पेचिवद्भ्याम् । इत्यादि ।

जगन्वान्[4] । जगन्वांसौ[5] । वस्य उत्वे तन्निमित्तस्य नस्य मत्वम् ॥

---

**पेचिवानिति** । डुपचष् पाके इत्यस्माल्लिट् । 'क्वसुश्च' इति तस्य क्वसुरादेशः । 'लिटि धातोः' इति द्वित्वम् । 'अत एकहल्मध्ये—' इत्यादिनैत्वाभ्यासलोपौ 'वस्वेकाजाद्घसाम्' इति इडागमः । नुमादि-पूर्ववत् । **वस्य उत्वादिडभाव** इति । पेच्वस् शस् इति स्थिते 'वसोः—' इति संप्रसारणेन वस्य उत्वाद्वलादित्वविघातात् निमित्ताभावे नैमित्तिक-स्याप्यभाव इति न्यायेन इडभाव इत्यर्थः । ननु चैकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणमिति परिभाषया 'विदेः शतुर्वसुः' इत्यस्यैव वसोः संप्रसारणं स्यात् न द्व्यनुबन्धकस्य क्वसोः तत् कथं पेचुष इति क्वसुरुदाहृत इति चेदुच्यते । शत्रादेशस्य वसोरुकारानुबन्धकरण-सामर्थ्यात् क्वसोरपि ग्रहणम् । तद्धि क्वसुना सामान्यग्रहणार्थं क्रियते । ननु चोगित्कार्यार्थं तत् स्यात् । मैवम् । उगित्कार्यस्य स्थानिवद्-भावेनापि सिद्धत्वात् ।

**जगन्वानिति** । गमेर्लिट् । क्वसुः । द्वित्वम् । चर्त्वम् । 'म्वोश्च' इति मस्य नत्वम् । वस्येत्यादि । जगम् वस् शस् इति स्थिते वस्य संप्रसारणे उत्वे कृते तन्निमित्तस्य वंन्निमित्तस्य 'म्वोश्च' इत्यनेन प्राप्तस्य नस्य मत्वमिति निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेन नस्याभावेन पूर्वस्थितो म एव स्थित इत्यर्थः ॥

---

१. C has after it पेचिवांसः। पेचिवांसम् । पेचिवांसौ. २. वस्य उत्वे वसौ वलादित्वनिवृत्तौ तन्निमित्तस्येटोऽप्यभावः $B_1$. ३. Dropped $B_1$, $D_1$. ४. Before it—म्वोश्च ॥८।२।६५॥ मकारवकारयोः परतो मान्तस्य धातोर्मस्य नः स्यात् ॥ P, C, $D_2$, $B_1$, $B_2$. ५. After it—जगन्वांसः । जगन्वांसम् । जगन्वांसौ । C. ६. °भावेन $Bc_1$. ७. वस्य $Dc_1$, $Dc_2$.

**गमहनजनखनघसां लोपः क्ङित्यनङि ॥६।४।९८॥**

एषामुपधाया[1] लोपः स्यादजादौ क्ङिति न त्वङि ॥ जग्मुषः । जग्मुषा । जगन्वद्भ्याम् । इत्यादि[2] । एवं[3] जघन्वान् । सान्तमहत इति महच्छब्दसाहचर्यात् सान्तधातोर्न दीर्घः । सुहिन् । सुहिंसौ । सुहिन्भ्याम्[4] । इत्यादि[5] । ध्वत्-द्[6][7] ।

ध्वसौ । ध्वद्भ्याम्[8] । इत्यादि[9] । एवं स्रत्-द्[10] । उक्थशाः । उक्थशासौ । उक्थशोभ्याम्[11] । इत्यादि ।

---

**गम** । **अनङीति** । अङि अजादौ प्रतिषेधः । तेन तत्तुल्यजातावजादावेव कार्यं विज्ञायते । नञिव युक्तन्यायेनेत्येतच्चेतसि[12] कृत्वाह । **अजादौ क्ङितीति** । **जग्मुष इति** । ननु च संप्रसारणस्य भाश्रयस्य बहिरङ्गत्वेनान्तरङ्गे उपधालोपे कार्ये असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषयासिद्धत्वात् अजादित्वाभावेनोपधालोपो न स्यात् । मैवम् । संप्रसारणस्य भिन्नाश्रयत्वेनादोषः । समानाश्रयत्वे ह्यसिद्धत्वं स्यात् । **जघन्वानिति** । हन्तेर्लिट् । क्वसुः । द्वित्वम् । 'अभ्यासाच्च' इति कुत्वम् । **सुहिन् इति** । हिसि हिंसायाम् । इदित्वान्नुम् । संयोगान्तलोपः । **ध्वदिति** । स्रंसु ध्वंसु अवस्रंसने । क्विप् । 'अनिदिताम्—' इति न्लोपः[13] । 'वसुस्रंसुध्वंसु—' इति दत्वम् । **उक्थशा इति** । उक्थानि उक्थैर्वा शंसति । 'मन्त्रे श्वेतवहोक्थशस्—' इति निपातः । श्वेतवाहादित्वाद् डस् ।

---

१. अकारलोपः $D_2$. २. $B_1$, $D_1$ drop it. ३. Dropped $D_3$. ४. C. has सुहिंसः । सुहिंसम् । सुहिंसौ । सुहिंसः । सुहिंसा before it; $D_2$ has सुहिंसः । सुहिंसा before it. ५. $B_1$, $D_1$ drop it. ६. After it—अधातोरित्युक्तेर्नुम् न P; C, $B_1$ (र्न नुम् $B_1$). ७. ध्वन् $D_1$, $B_2$. ८ ध्वसः । ध्वसा before it in C. ९. $B_1$, $D_1$ drop it. १०. स्रन् D, C has उक्थशासः । हे उक्थशाः । हे उक्थशः before it $B_2$; $D_2$ have उक्थशासः before it. ११. $B_1$, $D_1$ drop it. १२. युक्तमन्यसदृशार्थे तथा ह्यर्थे गतिः । अब्राह्मणमानयेति ब्राह्मणसदृशः क्षत्रियादिरानीयते । न लोष्टादिरिति न्यायेनेत्येतच्चेतसि-कृत्वाह ॥ $Dc_4$. १३. नलोपः $Dc_3$.

**पुंसोसुङ् ॥७।१।८९॥**

पुंसोन्तस्यासुङ्[1] स्यात् सुटि ॥ उङावितौ । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुमांसम् । पुमांसौ । पुंसः[2] । पुम्भ्याम् । इत्यादि । ऋदुशनसित्यनङ् । उशना । उशनसौ । उशनसः । संबुद्धौ वानङ्[3] वाच्यो[4] न लोपश्च वा* । हे उशन । हे उशनन्[5] । हे उशनः । उशनसौ । उशनोभ्याम् । इत्यादि । अनेहा । हे अनेहः । अनेहसौ[6] । एवं पुरुदंशा[7] । वेधाः । हे वेधः । वेधसौ[8] । इत्यादि । अधातोरित्युक्तेर्न दीर्घः । सुवः[9] । सुवसौ । सुवोभ्याम् । सुवःसु । सुवस्सु ।

---

**पुंसः** । उङावितावितिं । उकार उगित्कार्यार्थः । ङकारोन्तादेशार्थः । असुङ्व्युपदेशिवद्वचनं कार्यम् । तेन परमपुमानित्यत्राकृत एव समासान्तोदात्तत्वे उपदेशावस्थायामेव विभक्त्युत्पत्तेः प्रागसुङ् स्यात्तदनन्तरं समासान्तोदात्तत्वं ततश्च परमपुमानिति नित्यमन्तोदात्त एव स्यात् । पुमानित्ययं पुनः पुनातेर्मुम्सकौ नि[10]द्ध्रस्वश्चेत्येवं व्युत्पाद्यते । नि[11]तेन नित्स्वरेणाद्युदात्त एव स्यात् नान्तोदात्तः । **पुम्भ्या**मिति । संयोगान्तस्य लोपः । **उशनस** इत्यादि । एतच्च ' अनङ् सौ ' इत्यत्रोपपादितम् । तथा चोक्तम् ।

' संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यंदिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ' ॥ इति ।

**अनेहे**ति । ' ऋदुशनस्— ' इत्यनङ् । **वेधा** इति । ' अत्वसन्तस्य— ' इति दीर्घः । **अधातोरित्युक्ते**रिति । ' अत्वसन्तस्य चाधातोः ' इति । **सुव** इति । सुवस्ते इति विग्रहे वस आच्छादने । अस्मात् क्विप् ।

---

१ °स्यासुङादेशः C. २. C has पुंसा before it ; P has संयोगान्तस्य लोपे मोनुस्वारे वा पदान्तस्येति परसवर्णे before it. ३. $B_1$ drops it. ४. $B_1$ drops वाच्यः; अनङस्य नलोप° $D_2$. ५. Dropped $D_1$, $B_2$, $D_4$. ६. अनेहसः । अनेहसम् । अनेहसौ । अनेहसः । अनेहसा । अनेहोभ्याम् । इत्यादि after it in C. ७. Before it—अत्वसन्तस्य चाधातोः । $D_5$. ८. $B_1$ drops it; C has वेधसः before it. ९. C has हे सुवः and $B_2$ सुवसः before it. १०. नित् ह्रस्वश्चे° $Dc_3$. ११. निति वाते नित्स्वरेण $Dc_3$, $Dc_4$.

**अदस औ सुलोपश्च ॥७।२।१०७॥**

अदस औकारोन्तादेशः[1] स्यात् सौ परे सुलोपश्च । तदोः ससाविति दस्य सः । असौ । औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः[3] । सादुत्वं च[4] । यदौत्वाभावस्तदा सात्परस्योत्वम् । असकौ[5] । असुकः । त्यदाद्यत्वम् । पररूपत्वम्[6] । वृद्धिः ।

**अदसोसेर्दादु दो मः ॥८।२।८०॥**

अदसोसान्तस्य दात्परस्य उवर्णो दस्य च मः स्यात् ॥ स्थानेन्तरतम इति ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घ ऊकारः । अमू । जसः शीभावः । आद्गुणः ।

---

**अदसः** । ननु चादःशब्दात् परस्य सोरौत्वं विधीयतां ततश्च सुलोपो न विधेयः स्यात् । न च वाच्यं सोरौत्वे हे असौ ब्राह्मणीत्यत्र 'संबुद्धौ च' इत्येत्वं प्रसज्येतेति । 'बहुवचने झल्येत्' इत्यतः 'झलि' इति हि तत्रानुवर्तते इति चेदुच्यते । असकौ ब्राह्मणीत्यत्र 'प्रत्ययस्थात् कात्पूर्वस्य' इतीत्वं प्रसज्येत । असौ ब्राह्मणीत्यत्र 'औङ आपः' इति शीभावोपि प्रसज्येत । असकौ । असुक इति । 'अव्ययः सर्वनाम्नाम्—' इत्यकच् । त्यदाद्यत्वमित्यादि । अदस् औ इति स्थिते 'त्यदादीनामः' इत्यत्वम् । सस्य 'अतो गुणे' इति पररूपम् । 'वृद्धिरेचि' इति वृद्धिः । अदौ इति स्थिते । **अदसः** । अदसोनोस्त्र इति वक्तव्यम् । तथा चानोकारस्यासकारस्यारेफस्येत्यर्थः । तथा चादोत्रेत्यत्रौकारान्तत्वान्मुत्वं न । अदस्यतीत्यत्र सकारान्तत्वान्न । अद इत्यत्र रेफान्तत्वान्नेति सिद्धं स्यात् । 'स्थानेन्तरतमः' इत्यादि प्रमाणतोन्तरतमत्वादित्यर्थः । एतच्च 'ऋत उत्' इत्यत्र प्रतिपादितम् । **जसः शीभाव** इत्यादि । अदस् जस् इति स्थिते त्यदाद्यत्वे पररूपत्वे च सति 'जसः शी' इति शीआदेशः । 'आद्गुणः' इति गुणः ।

---

१. औकारान्तादेशः $D_2$. २. अत्व° $D_5$. ३. वाच्यः $B_1$, $D_3$. ४. C drops it. ५. असुकौ $D_5$. ६. पररूपत्वं dropped $D_2$. ७. Dropped $Dc_3$. ८ पररूपे सति $Dc_1$, पररूपत्वे कृते सति $Dc_2$, $Dc_3$.

एत ईद् बहुवचने ॥८।२।८१॥

अदसो दात्परस्यैत ईत्[1] स्यात्[2] दस्य च[3] मः[4] बह्वर्थोक्तौ[5]। अमी। पूर्वत्रासिद्धमिति[6] न्यायेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे। अमुम्। अमू। अमून्। उत्वमत्वे कृते[7] घिसंज्ञायां नाभावः।

न मु ने ॥८।२।३॥

नाभावे[8] कर्तव्ये कृते च सति[9] मुभावो नासिद्धः स्यात्[10]॥ अमुना।

---

एत ईत्। अत्र बहुवचनमिति। यदि पारिभाषिकं बहुवचनं गृह्येत तदा बहुवचने पर इत्यर्थः स्यात् तथाचामीभिरित्यत्रैवेत्वं स्यादमी आसत इत्यत्र न स्यात्। अतोन्वर्थं बहुवचनं गृह्यते बहूनामर्थानां वचनं बहुवचनमित्यभिप्रेत्याह। बह्वर्थोक्ताविति। पूर्वत्रेत्यादि। विभक्तिकार्यस्य सपादसप्ताध्यायीस्थितत्वात् 'अदसो-सेर्दादु दो मः' इत्यस्य[11] त्रिपादीस्थितत्वादिति भावः। उत्वे मत्वे च कृत इत्यादि। अदस् टा इति स्थिते त्यदाद्यत्वे प्रथमम् 'अदसोसेः—' इत्युत्वे मत्वे च कृते उकारान्तत्वेन 'शेषो घ्यसखि' इति घिसंज्ञायां सत्याम् 'आङो नास्त्रियाम्' इति नाभावः। टा इत्यस्येत्यर्थः। ननु च पूर्वत्रासिद्धन्यायेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इत्युक्तत्वात् कथमुच्यते उत्वे मत्वे च कृते इत्यादि। नैष दोषः। यदयं सूत्रकारो 'नमुने' इति सूत्रेण नाभावे कार्ये मुभावस्यासिद्धत्वं निषेधयति तत् ज्ञापयति टाप्रत्यये प्रथमं मुभावः पश्चाद्विभक्तिकार्यमिति।

न मु ने[12]। ननु च 'अमुना इत्यत्र 'सुपि च' इति दीर्घत्वं प्रति मुभावस्यासिद्धत्वात् दीर्घः स्यादेवेत्याशङ्क्याह। कृते च सतीति।

---

१. ईः $B_2$. २. $B_1$ drops it. ३. $D_1$ drops it. ४. $B_1$, $D_3$ have स्यात् after it. ५. बह्वर्थोक्ते $D_1$. ६. $D_1$, $B_2$, $D_4$ drop इति. ७. च कृते $D_1$; उत्वे मत्वे च कृते Com. ८. नभावे $D_2$. ९. C drops सति. १०. After it—नाभावे कृते 'सुपि च' इति दीर्घे कर्तव्ये मुभावस्यासिद्धत्वं नेष्यते। P; C, $B_1$, $D_4$. ११. इत्यस्य च $Bc_1$. १२. नमु नेति $Dc_3$.

अमूभ्याम् । 'नेदमदसोरकोः' । अमीभिः । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमूभ्याम् । अमीभ्यः । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ।

इति हलन्ताः पुंलिङ्गाः ॥

---

नेति योगविभागः कार्यस्तेन द्विवचने परसवर्णः सिद्धः सय्यन्ता पदाधिकारे द्वित्वे लत्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि स्युः । गरोगरः । गलोगलः । द्रोग्धा २ । द्रोढा २ । नुन्नः २ । नुत्तः २ । अभिनः २ । अभिनत् २ । मातुः स्वसा २ । मातुः ष्वसा २ । क्षीरपाणम् २ । क्षीरपानम् २ । वाङ्नयनम् २ । वाग्नयनम् २ । वाक् छयनम् २ । वाक् शयनम् २ । अन्यथा लत्वादीनां विकल्पितानाम- सिद्धत्वात् कृते द्विर्वचने पश्चादनिष्टोपि तद्विकल्पः स्यात् । गरो गलः[1] । गलो गरः[2] इति । इत्यादीनि सिद्धवद्वक्तव्यानि सिद्धानि[3] । अमूभ्यामि- त्यादि । अदस्भ्याम् अदस् भिस् अदस् ङे इत्यादौ विभक्तिकार्ये प्रथमं कृते अदाभ्याम् । अदेभिः । अदस्मै इत्यादौ स्थिते पश्चादुत्वमत्वे स्यातामिति ज्ञेयम् ॥

इति सान्ताः ॥

यान्तलान्तादयोप्रसिद्धत्वान्नोदाहृताः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेर्गुः प्रसादे सुविशदमिह पुल्लिङ्गशब्दा हलन्ताः[4] ॥

---

१. गरः Dc3. २. गलः Dc3. ३. सिद्धानि वक्तव्यानि । Dc4. ४. सुविशदमिह पुल्लिङ्गशब्दा हलन्ताः । Dc4.

**नहो धः ॥८।२।३४॥**

नहो हस्य धः स्यात् झलि पदान्ते च ॥ उपानत्—द् । उपानहौ । उपानहः[1] । उपानहा । उपानद्भ्याम् । इत्यादि[2] । क्विन्नन्तत्वात् कुत्वम् । उष्णिक्—ग् । उष्णिहौ । उष्णिग्भ्याम्[3] । इत्यादि[4] ।

'दिव औत्' ॥ द्यौः । दिवौ । दिवः । दिवो[5] वात्वममीति केचित् । द्याम् । दिवम् । 'दिव उत्' । द्युभ्याम् । उवर्ण एव स्वरे दिव उदिति केचित् । द्यूर्णुत् । अन्यत्र दिवीशः[6] । गीः । गिरौ । गिरः[7] । एवं पूः[8] ।

---

**नहो धः** । नह इति । णह बन्धने । अस्य । **उपानदिति** । उपनह्यते बध्यते इत्युपानत् । संपदादित्वात् क्विप् । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति पूर्वस्य दीर्घः । **क्विन्नन्तत्वादिति** । उष्णिक्शब्दस्य 'ऋत्विक्—' इत्यादिना क्विन्नन्तस्य निपातनादिति भावः ।

इति हान्ताः ॥

**उवर्ण एव स्वर** इति । तथा च **मुग्धबोधे** उक्तम् । 'उहस्युङ्' इति । **द्यूर्णुदिति** । दिवमूर्णोति द्यूर्णुत् ॥

वान्ताः ॥

**गीरिति** । गृणातीति गॄ[9] शब्दे । क्विप् । ऋत इत् । 'उरण् रपरः' । 'र्वोरुपधाया' दीर्घ इकः[10] । **एवं पूरिति** । पूर्यत इति पूः ।

---

१. $D_1$, $D_3$, $D_4$ drop उपानहः । उपानहा; $D_2$ drops उपानहा; After it—उपानहम् । उपानहौ । उपानहः । $D_5$. २. $B_1$, $D_1$, $B_2$, $D_4$ drop it. ३. उष्णिहः for उष्णिग्भ्याम् । इत्यादि $B_2$. ४. $D_1$, $D_2$, $D_3$ drop it. ५. $B_1$, $D_3$ have द्याम् only for दिवो........ दिवम् ।; $B_2$ drops from दिवो......द्युभ्याम्; $D_2$, $D_5$ drop from दिवो to केचित्. ६. After this—द्याम् । दिवम् । दिव उत् । द्युभ्याम् $B_2$. ७. C has गिरम् । गिरौ । गिरः । गिरा । हलि चेति दीर्घः । गीर्भ्याम् । इत्यादि । गिरः dropped $D_3$. ८. धूः $D_2$. ९. इति दीर्घः $Nc_2$. १०. After it—इति दीर्घः $Dc_4$, $Dc_3$.

चतुरश्चतस्रादेशः । स्वस्रादित्वान्न ङीप्[1] । चतस्रः २ । चतसृभिः । चतसृभ्यः २ । चतसृणाम् । चतसृषु ।

किमः कादेशे टाप् । का । के । काः । इत्यादि । सर्वावत् ।

**यः सौ ॥७।२।११०॥**

इदमो दस्य यः स्यात् सौ परे[2] ॥ इदमो मः । इयम् । त्यद्याद्यत्वम्[3] । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनादेशः[4] । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । आभ्याम् । आभ्यः । अस्याः । अनयोः[5] । आसाम् । अस्याम् । अनयोः । आसु । अन्वादेशे तु । एनाम् । एने । एनाः । एनया । एनयोः २ ।

---

पृ अस्मात् संपदादित्वात् क्विप् । अथवा पिपर्तीति 'भ्राजभास—' इति क्विप् । 'उदोष्ठ्यपूर्वस्य' इत्युत् । रपरः । दीर्घः । **चतस्र** इति । 'अचि र ऋतः' इति रः । **चतसृणामिति** । 'न तिसृचतसृ' इति दीर्घनिषेधः ॥

रान्ताः ॥

**किम** इति । 'किमः कः' इति कादेशे 'अजाद्यतष्टाप्' इति टाप् । **सर्वावदिति** । आबन्तसर्वशब्दवत् ।

**यः सौ** । 'इदोय् पुंसि' इत्युत्तरसूत्रे 'पुंसि' इति वचनात् क्लीबे तु सोर्लुकि सोरभावात् स्त्रियामयं यकारः । **इदम** इति । 'इदमो मः' इति सूत्रेण त्यदाद्यत्वापवादो म इत्यर्थः । **अनादेश**[6] इति । 'अनाप्यकः' इत्येतेन[7] । **अन्वादेशे**[8] **त्विति** । 'द्वितीयाटौस्स्वेनः' इति एनादेशे तु एनामित्यादि स्यादित्यर्थः ॥

मान्ताः ॥

---

१. ङीप्टापौ D4. २. D1, D2, D3, B2 drop it. ३. त्यद्याद्यत्वे D2, B1, P, C. ४. अनादेशः dropped D2. ५. C, D1 have अस्याः। आभ्याम्। आभ्यः before it. ६. अन्वादेश Dc3, ७. इत्यनेन Dc3. ८. अनादेशे Dc3.

स्रक्-ग्। स्रजौ[1]। स्रजः[2]। स्रग्भ्यामित्यादि[3]। त्यद्याद्यत्वम्। टाप्। या। त्ये। त्याः। इत्यादि[4]। सर्ववत्। एवं तद् यद् एतद्[5]। वाक्-ग्। वाचौ। वाचः[6]। हे[7] वाक्-ग्। वाग्भ्याम्। वाक्षु[8]। अप्शब्दो बहुवचनान्तः[9]। 'अपतृन्-' इति दीर्घः। आपः। अपः।

**अपो भि ॥७।४।४८॥**

अपस्तकारः स्याद् भादौ प्रत्यये[10] परे[11]। अद्भिः। अद्भ्यः। अपाम्। अप्सु।

---

**स्रगिति**। 'ऋत्विक्—' इति क्विन्नन्तो निपात्यते॥

जान्ताः॥

**त्यदाद्यत्वमिति**। त्यद् स् इति स्थिते अत्वन्तष्टाबित्यर्थः[12]। **स्येति**। 'तदोः स सौ' इति तस्य सः॥

दान्ताः॥

**वागिति**। वक्त्यनया। 'क्विब् वचि—' इत्यादिना क्विप् दीर्घश्च। 'चोः कुः' इति कुत्वम्॥

चान्ताः॥

**अपो भि**। भीति किम्। अप्सु॥

पान्ताः॥

---

१. $D_1$ drops स्रजः. २. C has स्रजम्। स्रजौ। स्रजः। स्रजा before it स्रग्भ्याम्। इत्यादि—dropped $D_4$; इत्यादि dropped $D_5$. ३. $B_1$ has स्रक्षु after इत्यादि. ४. Before it—त्याम्। त्ये। त्याः। $D_3$. ५. After it—प्रभृतयः C; तद् एतद् यद् शब्दाः $B_2$; एतद् dropped $D_3$; एतद्। यद्। $D_4$, $D_5$. ६. $D_1$ drops it. ७. $D_1$ drops it; $D_2$ drops this and the next two forms. ८. Before it—वाचम्। वाचौ। वाचः। वाचा। C; $D_4$ and $D_5$ drop this and वाक्षु।. ९. नित्यं बहुवचनान्तः C, $D_1$, $D_2$, $B_2$. १०. Dropped $B_1$. ११. Dropped $B_2$, $D_4$, $D_5$. १२. अत्वन्ततष्टा° $Nc_1$, $Bc_1$.

दिक्-ग् । दिशौ । दिशः[1] । दिग्भ्याम्[2] । एवं दृक्-ग् । दृशौ[3] । दृशः[4] ।

त्विट्-ड्[5] । त्विषौ । त्विषः । त्विड्भ्याम्[6] । सजूः । सजुषौ[7] । सजुषः[8] । सजूभ्याम्[9] । आशीः[10] । आशिषौ । आशिषः[11] । आशीभ्याम्[12] । इत्यादि ।

---

दिगिति । 'ऋत्विक्—' इति क्विन्नन्तो निपात्यते । दृगिति । दृश्यते अनया दृगिति क्विन्नन्तः[13] । क्विन्प्रत्ययो यस्माद्विहितस्तस्यान्यत्रापि प्रत्यये पदान्तस्य कुत्वम् ॥

शान्ताः ॥

त्विडिति । त्विष् दीप्तौ । क्विप् । जश्त्वचर्त्वे । सजूरिति । जुषेर्भावे क्विप् । बहुव्रीहौ सहस्य सभावः । सप्रीतिरित्यर्थः । 'ससजुषोरुः' इति रुत्वम् । 'र्वोरुपधायाः—' इति दीर्घः । आशीरिति । आङः शास इच्छार्थत्वात् क्विप् । शास आशासश्च क्वावुपधाया इत्वं वाच्यमितीत्वम् । 'शासिवासि—' इति षः । रुत्वं प्रति षत्वस्यासिद्धत्वात् रुत्वम् । 'र्वो—' इति दीर्घः ।

षान्ताः ॥

---

१. Dropped P; After it C has—दिशम् । दिशौ । दिशः । दिशा । दिग्भ्याम् । इत्यादि. २. दिग्भ्याम् dropped $D_4$, $B_1$, P. ३. दृशौ । दृशः dropped $D_1$, $D_4$, $D_5$, $B_2$. ४. After it—दृशेश्च वक्तव्यमिति क्विन् C, P. ५. Before it—त्विषम् । त्विषौ । त्विषः । त्विषा and after it इत्यादि । C. ६. After it—त्विट्सु $B_1$, P. ७. सजुषा । सजूर्भ्याम् $D_1$; सजुषौ । सजूर्भ्याम् $B_2$. ८. Dropped $D_2$, $D_3$, $D_4$. ९. Before it—सजुषा C. १०. एवमाशीः for आशीः to इत्यादि C, $B_2$, $D_3$; एवमाशीः $D_1$, $D_2$, $D_4$. ११. आशिषः to इत्यादि dropped $D_2$. १२. आशीर्भ्याम् । इत्यादि । dropped $D_5$. १३. क्विबन्तः $Bc_1$, $Dc_3$.

असौ[1] । त्यदाद्यत्वम् । टाप्[2] । शीभावादि । उत्वमत्वे । अमू । अमूः । अमूम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमूष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमुयोः । अमूषु ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

---

असाविति । 'अदस औ सुलोपश्च' इत्यौकारादेशः सुलोपश्च । 'तदोः—' इति सः । त्यदाद्यत्वे टापि च कृते सर्वावत् विभक्तिकार्ये कृते उत्वे मत्वे चाग्रिमाणि रूपाणि स्युः ॥

इति सान्ताः ॥

यान्तादयो[3]ऽप्रसिद्धाः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेगुः प्रसादे सुविशदमबलालिङ्गशब्दा हलन्ताः ॥

---

१. C has before it—अदस औः सुलोपश्चेति औकार अन्तादेशः स्यात् । तदोः स साविति सः ।. २. B1 omits टाप्. ३. वान्ता Dc3.

स्वमोर्लुक्[1] । दत्वम् । स्वनडुत्–द् । स्वनडुही[2] । 'चतुरनडुहोः—' इत्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । अझलन्तत्वान्न नुम् । वारि[3] । चत्वारि[4][5] । 'न लुमता—' इति कादेशो न । किम् । के । कानि । २ । इदम् । इमे । इमानि । २ । अन्वादेशे नपुंसकैकवचने[6] एनदिति वाच्यम् । एनत्–द् । एने । एनानि । शेषं[7] पुंवत् ॥

---

स्वमोर्लुगिति । स्वनडुह्शब्दात्परयोः 'स्वमोर्नपुंसकात्' इति लुक् । दत्वमिति । 'वसुस्रंसुध्वंसु—' इत्यादिना । तत्र तदन्तविधेरिष्टत्वात् । स्वनडुही इति । 'नपुंसकाच्च' इत्यौङः शीभावः । चतुरनडुहोरित्यामिति । तदन्तविधेरिष्टत्वात् । स्वनड्वांहीति । 'जश्शसोः शिः' । 'नपुंसकस्य झलचः' इति नुम् । पुनस्तद्वदिति । द्वितीयारूपाणि प्रथमावदिति भावः ॥

हान्ताः ॥

वारिति । रेफान्तो जलवाची[8] । चत्वारीति । 'चतुरनडुहोः—' इत्याम् ॥

रान्ताः ॥

न लुमतेति । कादेशो न[9] । किम् स इति स्थिते सोर्लुकि कृते 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् 'किमः कः' इति विभक्तौ परतो विधीयमानः कादेशो न भवतीत्यर्थः । के । कानीति । कादेशे कृते ज्ञानवत् प्रक्रिया ॥ अन्वादेशे इति । 'द्वितीया टौ स्वेनः' इत्येनः[10] । एनदिति । नपुंसकैकवचने एनदिति वाच्यमिति वक्तव्यात् ॥

मान्ताः ॥

---

१. Before it—अथ नपुंसकलिङ्गा हलन्ताः । $B_2$. २. Dropped $D_1$. ३. Dropped $D_1$, $B_2$. ४. Before it—दण्डि । दण्डिनी । 'इन्हन्पूषार्यम्णां शौ' एषामङ्गानामुपधाया दीर्घः स्यात् शौ परे। दण्डीनि । बहुवृत्रहाणि २। बहुपूषाणि २। बह्वर्यमाणि ।. ५. After it $B_2$ has—गौणत्वे प्रियचतुः । प्रियचतुरी । प्रियचत्वारि ।. ६. अमो लुकि for नपुंसकैकवचने $B_1$; एनदिति नपुंसकैकवचने वक्तव्यम् P, $B_2$; इदमेतदोर्नपुंसके द्वितीयैकवचने एनदिति वाच्यम् C; From नपुंसकैक° to वाच्यम् dropped $D_2$, $D_4$. ७. शेषं पुंवत् dropped $D_2$. ८. °वाचीति $Dc_3$. ९. नेति $Bc_1$, $Dc_3$. १०. इत्यनेन $Nc_2$.

ब्रह्म । संबुद्धौ वा नपुंसकानां नलोपो वाच्यः[1] ॥ *हे ब्रह्म । हे ब्रह्मन् । ब्रह्मणी[2] । ब्रह्माणि[3] ।

**अहन् ॥८।२।६८॥**

अहन्नित्यस्य रुः[4] स्यात् पदान्ते ॥ रुत्वस्यासिद्धत्वेन नलोपे प्राप्ते अह्नो नलोपप्रतिषेधो वक्तव्यः[5] । अहः[6] । विभाषा ङिश्योः । अह्नी । अहनी । अहानि । हे अहः । अहोभ्याम्[7] । अहोभिः[8] । दण्डि । दण्डिनी ।

**इन्हन्पूषार्यम्णां शौ ॥६।४।१२॥**

एषाम्[9]अङ्गानामुपधाया[10] दीर्घः स्यात् शौ परे[11] ॥ दण्डीनि २ । बहुवृत्रहाणि २ । बहुपूषाणि[12] २ । बह्वर्यमाणि २ ।

---

ब्रह्मेति । 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः । ब्रह्माणीति । 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घः । अहन्निति । अहरित्यत्र रुत्वस्यासिद्धत्वादिति रुत्वस्येत्युपलक्षणं रेफस्यापि । **अहोभ्याम्** । 'नलोपः प्रातिपदिकान्तस्य' इति नलोपं प्रति पूर्वत्रासिद्धन्यायेन रुत्वस्य रेफस्य[13] चासिद्धत्वेन नलोपे प्राप्ते सतीत्यर्थः । एतत् सूत्रमहोभ्यामित्यादौ रुत्वविध्यर्थं पठितम् । अहरित्यत्र तु[14] स्यमोर्लुको जातत्वेन 'रोः सुपि' इति रोरपवादो रेफो भवति ।

इन्हन् । एतच्च[15] सूत्रं नियमार्थमिति 'सौ च' इति सूत्रे प्रतिपादितम् । बहुवृत्रहादिशब्दनां बहुवृत्रघ्नेत्यादि रूपाणि पुंवत् ज्ञेयानि ।

---

१. वक्तव्यः $D_5$. २. $B_1$ drops the forms. ३. C has इत्यादि after it. ४. रुत्वम् C. ५. वाच्यः $B_1$, $D_3$. ६. $B_1$ drops अहः । विभाषा ङीश्योः ।. ७. अहोभ्याम् । इत्यादि । असृजः पदान्ते &c. $B_2$. ८. अहः सु in C; $D_1$, $D_2$, $D_3$, $D_5$, $D_4$ drop it. ९. एतेषा° C. १०. °मुपधादीर्घः $B_1$. ११. $D_1$ drops it. १२. बहुपूष । बहुपूष्णी । बहुपूषणी । बहुपूषाणि । बहुपूष्णा । बहुपूषभ्याम् । बह्वर्यम &c. similarly $D_4$. १३. रेफस्या° $Dc_3$. १४. तु Dropped $Nc_2$. १५. च dropped $Nc_2$.

असृजः पदान्ते कुत्वम् । सृजेः क्विनो विधानात् । विश्वसृजादौ प्रतिषेधोयम्[1] । असृक्–ग् । असृजी । असृञ्जि । 'पदद्न्—' इति वा असन् । असानि । असृजा । अस्ना । असृग्भ्याम् । असभ्याम्[2] । ऊर्क्–र्ग् । ऊर्जी । ऊर्जः[3] शौ नुम् वेति केचित् । ऊर्जि । ऊंर्जि । बहूर्जि[4] नुम्प्रतिषेधः[5] । बहूर्जि कुलानि । अन्त्यात् पूर्वं नुममिच्छन्त्येके । बहूर्ञ्जि ।

---

असृज इति । ताम्बूलरसादिवन्मध्ये न सृज्यते सहजत्वादित्यसृक् रक्तम् । संपदादित्वात् क्विप् । तस्यासृजः पदान्ते कुत्वं स्यात् । सृजेः 'ऋत्विक्—' इत्यादिनासृगित्यत्र क्विनो विधानात् । क्विन् प्रत्ययो यस्माद्विहितस्तस्यान्यत्रापि प्रत्यये पदान्तस्य कुत्वमिति वचनादिति भावः । **न[6] त्वेवं विश्वसृडादाविति** । **प्रतिविधेयमिति** । विश्वसृडादौ कुत्वं नेति वचनमेव कर्तव्यमित्यर्थः । **ऊर्क्** । ऊर्ग् । इति । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः । **ऊर्ज** इत्यादि । अर्वाचीनमतमेतत् । **बहूर्जि नुम्प्रतिषेध** इति । बहूर्जि इत्येतस्मिन्नुदाहरणे शौ परे नुमः प्रतिषेधो वाच्य[7] इत्यर्थः । **बहूर्जि कुलानीति** । बहव[8] ऊर्जो येषां तानि बहूर्जि । **अन्त्यादिति** । अन्त्यो जकारस्तस्मात्पूर्वं केचिदिच्छन्तीत्यर्थः । **बहूर्ञ्जि** इति । श्चुत्वं ञः । तथा च **महाभाष्ये** उक्तम् । 'तत्र बहूर्जि प्रतिषेधः । तत्र बहूर्जि प्रतिषेधो वक्तव्यः । बहूर्जि ब्राह्मणकुलानि । अन्त्यात् पूर्वं नुममेके इच्छन्ति ॥'

इति जान्ताः ॥

---

१. प्रतिषेधो विधेयः $B_1$. २. Dropped $D_1$. ३. ऊर्जः dropped $B_2$, $D_2$. ४. बहूर्जी P, $D_4$. ५. After it—वक्तव्यः $D_3$. ६. The reading of the Com. seems different; न त्वेवं विश्वसृडादावपि कुत्वं स्यादित्याशङ्क्याह । विश्वसृडादाविति $Bc_1$, $Dc_4$, $Dc_3$. ७. वक्तव्य $Dc_3$. ८. बहवो हि $Dc_3$.

त्यत् । त्ये । त्यानि । २ । तत् । ते । तानि । २ । यत् । ये[1] । यानि । २ । एतत् । [2]अन्वादेशे [3]नपुंसके [4]द्वितीयैकवचने एनदिति वा[5]च्यम् । एनत् ।

[6]गवाक्-ग् । [7]भसंज्ञायामकारलोपः । गोची । गवाञ्चि । तिर्यक्-ग् । तिरश्ची । तिर्यञ्चि । एवं [8]परे ।

---

त्यदित्यादि सोर्लुकि 'न लुमता—' इति [9]प्रत्ययनिषेधात् त्यदाद्यत्वं न ॥

दान्ताः ॥

**गवागिति** । गामञ्चतीति गवाक् । गोशब्दे उपपदे अञ्चतेः 'ऋत्विक्—' इत्यादिना क्विन् । तस्य लोपः । 'अनिदिताम्—' इति नलोपः । 'अवङ् स्फोटायनस्य' इति गोशब्दस्यावङादेशः । सवर्णदीर्घः । कुत्वम् । **भसंज्ञेति** । गवाच् औ इति स्थिते 'नपुंसकाच्च' इति औङः शी आदेशे 'यचि भम्' इति भसंज्ञा । **अकारलोप** इति । 'अचः' इति सूत्रेण । ततश्चावङभावे गोच् ई इति स्थिते गोची इति स्यात् । **गवाञ्चि** इति । गवाच् जस् इति स्थिते '[10]जसः शी' । तस्य सर्वनामसंज्ञकत्वात् 'उगिदचाम्—' इति नुम् । गोचा । गवाग्भ्याम् । इति । **तिर्यगिति** । 'तिरसस्तिर्यलोपे' इति तिर्यादेशः । **तिरश्चीति** । 'अचः' इत्यकारलोपः । **तिर्यञ्चीति** । सर्वनामस्थानत्वान्नुम् । एवं परे । अन्ये प्राक् प्रत्यगित्यादयोऽप्येवमेव ज्ञेया इत्यर्थः ॥

चान्ताः ॥

---

१. $D_1$ $B_2$, $D_2$ drop ये । यानि. २. अन्वादेशे तु P; C, $D_1$; अन्वादेशे तु एनदिति $D_3$. ३. नपुंसकैकवचने $D_1$, $D_5$. ४. Before it—इदमेतदोः B $D_4$. ५. वक्तव्यम् $B_1$, $B_2$, $D_3$. ६. गवाक् । गोअक् । गोक् । गवाची । गोअची । गोची । गवाञ्चि । गोअञ्चि । गोञ्चि $D_6$. ७. भसंज्ञा । अकारलोपः । $D_2$. ८. एवं प्राक्प्रत्यगादयः $B_1$, $D_2$. ९. प्रत्ययलक्षण° $Dc_4$. १०. तस्य for जसः $Dc_1$.

यकृत् । यकृती । यकृन्ति । 'पद्दन्–' इति वा[1] यकन् । यकानि । य[2]कृता । यक्ना । यकृद्भ्याम् । यकभ्याम् । शकृत्–द् । शकृती । शकृन्ति । शकानि । शकृता । शक्ना । शकृद्भ्याम् । शकभ्याम्[3] । ददत् । ददती ।

**वा नपुंसकस्य** ॥७।१।७९॥

अभ्यस्तात् क्लीबात्परस्य शतुर्वा[4] नुम् स्यात् सर्वनामस्थाने ॥ ददन्ति । ददति । एवं जक्षज्जाग्रदादयः । तुदत् ।

**आच्छीनद्योर्नुम्** ॥७।१।८०॥

अवर्णान्तात्परस्य शतुर्नुम् वा स्यात् शीनद्योः परयोः ॥ तुदन्ती । तुदती । तुदन्ति ।

---

**यकृन्तीति** । झलन्तत्वान्नुम् । **यक्नेति** । 'अल्लोपो नः' इत्यल्लोपः[5] । **शकृन्ति** । **शकानीति** । 'पद्दन्—' इति वा शकृतः शकन्नादेशः । **वा नपुं** । **अभ्यस्तादित्यादि** । अभ्यस्तात् परस्य शतुर्नुम् वा स्यात् । क्लीबात् नपुंसकाद्वि[6]हिते सर्वनामस्थाने परे इत्यर्थः ।

**आच्छी** । **तुदन्तीति** । तुद व्यथने । लटः शता[7] । शः[8] प्रत्ययः । अन्तरङ्गत्वादतो गुणे पररूपम् । ततो नुम् ।

---

१. Dropped $D_1$. २. यकृता to यकभ्याम् dropped $D_2$. ३. After it—इत्यादि C. ४. °र्नुम् वा स्यात् $D_1$, $D_3$, $D_4$, $D_5$. ५. इत्यलोपः $Dc_1$, $Dc_2$, $Dc_3$. ६. °द्विहितः $Bc_1$. ७. शतृप्रत्ययः। $Dc_4$. ८. शप्रत्ययः $Bc_1$.

भात् । भान्ती । भाती । भान्ति । पचत् ।

**शप्श्यनोर्नित्यम्** ॥७।१।८१॥

शप्श्यनोरात्परस्य शतुर्नुम्[1] नित्यं स्यात् शीनद्योः परयोः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती[2] ।

स्वप् । स्वपी । 'अप्तृन्–' इति दीर्घः ।

---

**भात्** इत्यादि । भा दीप्तौ । अदादित्वाच्छपो लुक् । अत्र किंचिदाक्षेपसमाधानं **काशिकायां** **वृत्तावुक्तम्** । तथा हि । अत्रान्तरङ्गत्वादेकादेशे कृते अवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुम् । उभयत आश्रये नान्तादिवदित्यन्तादिवद्भावो नास्ति । भूतपूर्वगत्याश्रयणे तु अदती घ्नतीत्येवमादिष्वतिप्रसङ्ग इति । अत्र समाधिं केचिदाहुः । शत्रवयवे शतृशब्दो वर्तते । अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति । अपरे पुनराहुः । आदित्यनेन शीनद्यावेव विशेष्येते । अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः शीनद्योः शत्रन्तस्य नुम् भवति तत्र येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादिति तकारेण व्यवधानमाश्रितं भवतीति ।

शप् । नित्यग्रहणं वेत्यस्य निवृत्त्यर्थम् । अन्यारम्भसामर्थ्यादिहैव नित्यमुत्तरत्र विकल्प्य इत्याशङ्केत । **पचन्तीति** । कर्तरि शप् । **दीव्यन्तीति** । दिवादिभ्यः श्यन् ॥

तान्ताः ॥

**स्वप्** इति । शोभना आपो अस्मिन्निति स्वप् । समासान्तविधेरनित्यत्वात् 'ऋक्पुर्–' इत्यप्रत्ययो न । 'अप्तृन्–' इति दीर्घ इति । स्वप् शि इति स्थिते अप्तृन्नित्यत्र 'वा षपूर्वस्य निगमे' इत्यतः पूर्वग्रहणमनुवर्तते । तद्धितकृताकृतप्रसङ्गित्वेन नित्यमपि परमपि नुमं

---

१. शतुर्नित्यं नुम् P, C, $B_2$. २. Dropped $B_2$, $D_4$. ३. P has दीव्यन्ति after it.

स्वाम्पि । २ । स्वपा । अपो[१] भि । स्वद्भ्याम् । रुत्वम् । धनुः । धनुषी । 'सान्तमहत–' इति दीर्घः । 'नुम्विसर्जनीये[२]–' इति षत्वम् । धनूंषि । धनुषा । धनुर्भ्याम्[३] । एवं हविः[४] ।

पयः । पयसी । पयांसि । २ । पयसा । पयोभ्याम्[५] । अदः । विभक्तिकार्यम्[६] । उत्वमत्वे । अमू । अमूनि । शेषं[७] पुंवत् ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

---

बाधित्वा पूर्वं दीर्घ एव यथा स्यादित्येवमर्थमिति दीर्घ इति भावः । ततो नुम् । अनुस्वारपरसवर्णौ । अन्ये तु स्वम्पीति दीर्घो न भाव्य एवेत्याहुः ॥

पान्ताः ॥

धनुरिति । 'धनि[८]—' इति धनेरुस् ।

षान्ताः ॥

पय इत्यादि । शेषं पुंवदित्यन्तं सुगमम् । पुंलिङ्गे विशेषो ज्ञेयः ॥

सान्ताः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्री पाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेगुः प्रसादे सुविशदममला क्लीबशब्दा हलन्ताः ॥

---

१. स्वपोभि $D_5$. २. °नीयश्च । षत्वम् $D_1$. ३. After it—इत्यादि C, $B_2$. ४. हविः । हविषी । हवींषि । $D_2$, $B_2$. ५. After it—इत्यादि । पेचिवत्-द् । 'वसोः संप्रसारणम् ।' वस्वन्तस्य संप्रसारणं स्यात् । वस्वन्तत्वादिडभावः । पेचुषी । पेचिवांसि । २। जगन्वत् । 'वसोः संप्रसारणम् ।' वस्य उत्वेन निमित्तस्य नस्य मुत्वम् । 'गमहन–' एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मुषी । जगन्वांसि । जघन्वत् । २। जघ्नुषी । जघन्वांसि । २। विद्वत् । २। विदुषी । विद्वांसि । शेषं पुंवत् । C; पेचिवत् । पेचुषी । पेचिवांसि । जगन्वत् । जग्मुषी । जगन्वांसि । जघन्वत् । जघ्नुषी । जघन्वांसि । विद्वत् । विदुषी । विद्वांसि $D_4$. ६. विभक्तिकार्यम् । उत्वमत्वे dropped $B_2$. ७. शेषं पुंवत् dropped P, C. ८. धन्वन्तीति $Dc_4$; धनन्तीति $Dc_3$.

**स्वरादिनिपातमव्ययम्** ॥१।१।३७॥

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः ॥

स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते ।

---

अथाऽव्ययानि निरूप्यन्ते । **स्वरादिनिपात** इति । 'प्राग्रीश्वरान्निपाताः' इत्यारभ्य 'अधिरीश्वरे' इति सूत्रपर्यन्तं ये उक्तास्त उच्यन्ते । तांश्चाग्रे वक्ष्यति । अत्र पठितानामव्ययानामर्थाः कतिचित्प्रयोगाश्चास्माभिः सुखप्रतिपत्त्यर्थं कथ्यन्ते । **स्वर् अन्तर्** एतावन्तोदात्तौ निपात्येते । स्वरिति स्वर्गपरलोकयोः । स्वर्गे । 'छायेव या स्वर्जलधेर्जलेषु' । परलोके । 'स्वर्यातस्य ह्यपुत्रस्य' इति । अन्तरिति मध्ये । 'अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ' । **प्रातर् पुनर्** आद्युदात्तौ । प्रातरिति प्रत्यूषे । 'प्रातः संध्यामुपासीत' । श्वस्तनेपि । पुनरित्यप्रथमविशेषयोः । अप्रथमे । पुनरुक्तम् । विशेषे । 'किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा' । **सनुतर्प्रभृतयो** नवान्तोदात्ताः । सनुतरित्यन्तर्धाने । 'सनुतश्चौरो गच्छति' । **उच्चै**रिति महति । 'उच्चैरुच्चैर्ऋतुश्चिरम्' । **नीचै**रित्यल्पे । 'नीचैर्मरुद्वाति' । **शनै**रिति क्रियामान्द्ये । 'शनैः शनैर्ददात्येष पादौ भूतानुकम्पया' । **ऋधगि**ति सत्ये । 'ऋधग्वदन्ति विद्वांसः' । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । **ऋते** इति वर्जने । 'ऋते कृशानोर्न हि मन्त्रपूतम्' ।

---

१. स्वरादिनि° P, $D_3$, $D_4$. २. सत् । सत्कारिका । अङ्गीकार । $B_2$; सत् । तस् $D_6$; C has before it—सत् आदरे । असत् अनादरे । कारिका अङ्गीकारे । अलं भूषायै । अन्तर् परिग्रहे । कणेमनसी श्रद्धाप्रतीघाते । पुरः पुरस्कारे । अस्तमदर्शने । अदोनुपदेशे । तिरोन्तर्धौ । उपाजेन्वाजे बलाधाने । उरसिमनसा निश्चितार्थे । मध्ये पदे अनित्याधाने । प्राध्वं बन्धने । हस्ते पाणौ उद्वाहार्थे । जाविकौपनिषदावौपम्ये ।. ३. स्वरादिनिपातमव्ययमिति $Nc_2$. ४. ये dropped $Nc_2$. ५. निपात्यौ $Dc_3$. ६. °नुचर इति $Dc_3$.

युगपत् । आरात् । पृथक्[१] । ह्यस् । श्वस् । दिवा[२] । रात्रौ[३] । सायम् । चिरम्[४] । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अधस्[५] । समया । निकषा । स्वयम् । वृथा[६] । नक्तम् ।

**युगपदि**त्येककालम् । 'युगपत् प्राप्ताः' । **आराद्** दूरसमीपयोः दूरे । 'आरात् शत्रोः सदा वसेत्' । समीपे । 'प्रतीतान् स्थापये-दारात्' । **पृथगि**ति वर्जने । 'त्वत्तः पृथक् नास्ति बन्धुः' । **ह्यस्प्र**भृतयोपि साम्यन्ता द्वाविंशतिरन्तोदात्ता इति । अतीतेह्नि ह्यः । 'ह्योकरोत्' । **श्वो**नागतेह्नि 'श्वो गन्ता' । **दिवे**ति अह्नि । 'दिवातनम्' । रात्राविति निशायाम् । 'रात्रौ वृत्तं तु वक्ष्यसि' । रात्रौचरः । **सायमि**ति निशामुखे । 'सायमासीनः संध्यां[७] वन्दते' । **चिरमि**ति चिरकाले । चिरंजीवी । **मनागि**ति ईषदर्थे । 'मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी' ॥ **ईषदि**त्यल्पे । 'ईषद्गौरः' । **जोषमि**ति सुख-मौनयोः । 'जोषमास्ते[८] जितेन्द्रियः' । जोषमास्स्व[९] । **तूष्णीमि**ति मौने । 'मुनिस्तूष्णीमुपास्ते । **बहिस्** बाह्ये । बहिर्भूतः[१०] । **अवस्** इति बहिर्भूते । अवो गच्छति । **समये**त्यन्तिकमध्ययोः । त्वां समयास्ते । समीप इत्यर्थः । ग्रामं समयास्ते । मध्ये इत्यर्थः । **निकषे**त्यन्तिके । 'विलङ्घ्य लङ्कां निकषा हनिष्यति' । **स्वयमि**त्यात्मनेत्यर्थे[११] । स्वयंकृतम् । **वृथे**ति वृथार्थे । 'वृथा दुग्धोनड्वान्' । **नक्तमि**ति रात्रौ । 'इदं नक्तंतनं दाम' ।

---

१. For it दूरात् $D_5$. २. P has सनत् before it. ३. रात्रम् C, $B_2$, $D_2$, $D_3$, $D_5$. ४. After it—वरम् $D_5$. ५. अवस् Com. ६. मृषा $B_2$, $D_2$; मृषा । वृथा $D_4$. ७. संध्यावन्दने $Nc_2$. ८. °मास्त $Dc_2$. ९. °मास्ते $Nc_2$, $Dc_4$, $Bc_1$. १०. बहिरर्थे $Nc_2$, $Dc_3$, $Bc_1$. ११. °त्यात्मनेर्थे $Dc_2$.

नञ् । हेतौ । इद्धा । अद्धा[1] । सामि । वत्प्रत्ययान्तं च[2]—ब्राह्मणवत् । क्षत्रियवत् । सनौ[3] । उपधा । सनात्[4] । सनदिति[5] केचित्[6] । तिरस् । अन्तरा । अन्तरेण ।

---

नञिति निषेधेषदर्थाविक्षेपेषु[7] । 'अब्राह्मणः' 'अनुदरा कन्या' । 'अपचासि त्वं जाल्म' । तदन्यतद्विरुद्धतदभावेष्वपि नञो वृत्तिमिच्छन्ति । अश्वादन्योनश्वः । धर्मविरुद्धोधर्मः । पापाभावोपापम् । अकारो नलोपो नञ इति विशेषणार्थः । हेतौ इति निमित्तार्थे । हेतौ हृष्यति । इद्धेति प्राकाश्ये । 'समिद्धमिद्धेशमहो ददासि[8]' । अद्धेति स्फुटावधारणे[9] । 'आराधितोद्धा मनुरप्सरोभिः' । तत्त्वातिशययोरित्येके । सामीत्येतदर्धजुगुप्सितयोः । अर्धे । 'सामिसंमीलिताक्षी' । जुगुप्सिते । 'सामिकृतमकृतं स्यात्' । वत्प्रत्ययान्तमिति । 'तेन तुल्यं क्रिया चेद्वतिः' इत्यादिना विहितो यो वतिस्तदन्तं च स्वरादौ ज्ञेयम् । सनेत्यादयश्चत्वारस्तिरसन्ता आद्युदात्ताः । सनेति नित्ये । 'सनातनः पितरमुपागमत् स्वयम्' । उपधेति भेदे । सनदिति केचित् पठन्ति । तन्नित्ये । सनत्कुमारः । सनादिति नित्ये । सनात्कुमारः । तिरस् इत्यन्तर्धौ तिर्यगर्थे च । तिरोहितः । तिरः काष्ठं कुरु । परिभूतेन्तर्ध्युपचारात् । तिरस्कृतोरिः । अन्तरेत्यन्तोदात्तो मध्यविनार्थयोः । 'त्वां[10] मां चान्तरा कमण्डलुः' । 'त्वामन्तरा तामरसायताक्षी' । अन्तरेणेति वर्जने । 'अन्तरेण पुरुषकारं न किंचित् सिध्यति' ।

---

१. Before it—अन्तर् B2; समिद्धम् । अद्धा । तत्त्वात् D4. २. च dropped D3, B1. ३. सनात् D3. ४. P, C, D2, D3 have सनत् and B2 सनत् । सनात् for सनात्......केचित्; सनदिति केचित् पठन्ति । सनात् । D4; for सनात् ......केचित्; D5 has मनाक्. ५. D1 drops सनदिति केचित्. ६. B1 has after it उपधा. ७. °विक्षेपेषु Dc1, Dc2. ८. ददाति Dc3. ९. °धारणयोः Bc1, Dc4, Dc3. १०. Before it—त्वां च मां चान्तरा हरिः Dc3.

ज्योक् । कम् । शम् । सहसा । विना । नाना[1] । स्वस्ति[2] । स्वधा । अलम् । वषट् । अन्यत् । अस्ति । उपांशु । क्षमा[3] ।

'ज्योगिति कालभूयस्त्वप्रश्नयोः' । 'ज्योग् जीवामः' । 'ज्योक्कृत्य नृपतिं गतः' । शीघ्रार्थे संप्रत्यर्थेऽपि । कमिति वारिमूर्धनिन्दासुखेषु । वारिणि । कंजं पद्मम् । मूर्ध्नि[4] कंजाः कचाः । निन्दायाम् । कंदर्पः । सुखे । कम्बुः । शमिति दुःखोपशमे । शंकरः । सहसेत्याकस्मिकाविमर्शयोः । 'दिवः प्रसूनं सहसा पपात' । 'सहसा विदधीत न क्रियाम्' । विनेति पृथगर्थे । 'विना वातं विना वर्षम्' । नानेत्यनेकविनार्थयोः । 'नानाविधं देहभृतां समाजम्' । 'नाना नारीं[5] निष्फला लोकयात्रा' । स्वस्तीति पुण्याशीःक्षेममङ्गलप्रत्यभिवादेषु । 'स्वस्त्यस्तु ते धार्मिक मत्प्रसादात्' । 'स्वस्ति तेऽस्तु लतया सह वृक्ष' । 'स्वस्त्यस्तु ते सौम्य चिराय जीव' । 'स्वस्ति श्रीकुसुमपुरात्' । 'राज्ञा नमस्कृता विप्राः स्वस्तीत्येतत् प्रयुञ्जते' । स्वधेति पितृदाने । 'स्वधा पितृभ्यः' । अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु । भूषणे । 'अलंकारः' । 'अलमस्य धनम्' । बह्वित्यर्थः । 'अलं मल्लो मल्लाय' शक्त इत्यर्थः । वारणे । 'अलमतिप्रसङ्गेन' । निषेधे । 'आलप्यालमिदं बभ्रोर्यत् स दारानपाहरत्' । न वक्तव्यमेतदित्यर्थः । 'वषडिति हविर्दाने' । 'वषडिन्द्राय' । अन्यदित्यन्यार्थे । 'देवदत्त आयातोऽन्यच्च यज्ञदत्तः' इति । अस्तीति सत्तायाम् । 'अस्तिक्षीरा गौः' । अस्ति परलोके मतिरस्य आस्तिकः । उपांशु इति । अप्रकाशोच्चारणरहस्ययोः । 'जपतः सदा जपमुपांशु' । 'कथमुपांशु वधः' । क्षमेति क्षान्तौ ।

१. C drops it. २. After it—स्वाहा $D_5$, $B_1$. ३. रहस् । क्षमा $B_2$, $D_2$. ४. मूर्धनि $Bc_1$. ५. नारीनि॰ $Bc_1$, $Dc_3$, $Dc_4$.

विहायसा । दोषा । मृषा । मिथ्या[7] । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रबाहुकम्[3] । आर्यहलम्[4] । अभीक्ष्णम् । साकम्[5] । सार्धम्[6] । नमस् । हिरुक् । धिक् । तसिलादिस्तद्धिते

'भवान् क्षमा करोतु' । विहायसेति वियदर्थे । 'विहायसा रम्यमितो विभाति' । दोषेति रात्रौ । 'दोषामन्यमहः' । मृषेति वितथे । मृषोद्यम् । मिथ्येति वितथे । मिथ्यावादी । मुधेति व्यर्थार्थे । 'मुधा बुधा विमुह्यन्ति' । पुरेति अविरतचिरातीतभविष्यदासत्तिषु । 'उपाध्यायेन स पुराधीयते' । अविरतमपाठीत्यर्थः । चिरातीते । 'पुरापि न नवं पुराणम्' । भविष्यदासत्तौ । 'गच्छ पुरा देवो वर्षति' । समनन्तरं वर्षिष्यतीत्यर्थः । मिथो इति रहःसहार्थयोः । 'मन्त्रयते मिथो' । विरहान्योन्यार्थयोरपि । मिथस् इति रहोन्योन्यार्थयोः । 'मन्त्रयते मिथः' । 'मिथः प्रहरतः' । प्रायस् इति बाहुल्ये । 'सन्तः प्रायो विवेक्तारः' । मुहुस् इति पुनरर्थे । 'इह मुहुर्मुदितैः कलभैरवः' । प्रबाहुकमिति । समकालार्थे[8] । 'प्रबाहुकं गृह्णीयात्' । ऊर्ध्वार्थेपि । प्रवाहिकेति केचित् । आर्यहलमिति बलात्कारे । 'आर्यहलं गृह्णाति' । आर्येति प्रीतिवधे । हलमिति[9] निषेधविषादयोरिति शाकटायनः । अभीक्ष्णमिति[10] । अनारते पुनरर्थे च । 'अभीक्ष्णं वक्ति' । पुनरर्थे । 'अभीक्ष्णमास्फालयतीभकुम्भम्' । साकं सार्धमित्येते सहार्थे । 'पुत्रेण साकं याति' । 'पुत्रेण सार्धं याति' । नमस् इति नतौ । 'नमो देवेभ्यः' । हिरुगिति वर्जने । 'हिरुक् कर्मणां मोक्षः' । कर्माणि वर्जयित्वेत्यर्थः । धिगिति निन्दाभर्त्सनयोः । 'धिगिमां देहभृतामसारताम्' । 'धिक् तार्किकान्' । तसिलादीत्यादि । 'पञ्चम्यास्तसिल्' इत्यतः प्रभृतिभिः

---

१. B1, D1, D2, D5 drop it; अकंहिकं B2. २. Dropped D2. ३. After this—प्रवाहिकम् B2, D1, D4. D5, C. ४. After it—अनार्यहलम् D4. ५. Dropped D2. ६. After it—सह D3, B1. ७. मिथ्यार्थे Dc3, ८. समानकालेर्थे Dc2, Dc4. ९. निषिद्ध° Bc1. १०. आभीक्ष्ण° Dc3.

एधाच्पर्यन्तः । कृत्वसुच् । सुच्[१] । शस्तसी[२] । आस्थालौ[३] च्व्यर्थाश्च । एते प्रत्ययाः । अथ । आम्[४] । प्रताम् । प्रशान्[५] । प्रतान् । मा[६] । माङ् । इति स्वरादिः[७] ।

---

'एधाच्च' इत्येतत्पर्यन्तैः सूत्रैरुक्तस्तद्धितः स्वरादिगणान्तःपाती ज्ञेयः। कृत्वसुजिति । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति । सुच् इति । 'द्वित्रिचतुर्भ्यः सुच्' । शस्तसी इति 'बह्वल्पार्थात्[८] शस्कारकादन्यतरस्याम्' इति शस् । 'प्रतियोगे पञ्चम्यास्तसिः' । आस्थालौ इति । 'इण आसिः' इत्युणादिविहित आस् । 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' । इति थाल् । च्व्यर्थाश्चेति । 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः' । 'विभाषा साति कार्त्स्न्ये' । 'देये त्रा च' । एते प्रत्यया इति । ततश्च तदन्ताः शब्दा अव्ययसंज्ञा इति भावः। अथेति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । मङ्गले । 'अथ परस्मैपदानि' । अनन्तरे । 'स्नातोथ भुङ्क्ते' । आरम्भे । 'अथ शब्दानुशासनम्' । प्रश्ने । 'अथ शक्तोसि भोक्तुम्' । कार्त्स्न्ये । 'अथ क्रतून् ब्रूमः' । अधिकारे । 'अथ स्नानविधिः' । प्रतिज्ञायाम् । 'गौडो भवान् । अथेति ब्रूमः' । समुच्चये । 'भीमोथार्जुनः' । अथेत्यस्य स्थाने अम् इति केचित्पठन्ति । स च 'अमु च च्छन्दसि' इत्युक्तः अमुप्रत्ययः । आमित्यङ्गीकारे । 'आम् कुर्मः' । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति प्रत्ययोपि । 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यपीति केचित् । प्रतामिति ग्लानौ । प्रशानिति समानार्थे । 'प्रशान् देवदत्तो यज्ञदत्तेन' । प्रतानिति विस्तारे[९] । मा इति निषेधे । 'मा भवतु' । 'मा भविष्यति' । माङिति निषेधाशङ्कयोः । 'मा कार्षीत्' । 'अस्य पापं मा भूत्' ।

इति स्वरादिर्गणः समाप्तः ॥

---

१. Dropped B₂. २. शत् । प्रसी । D₁. ३. आवर्थलौ B₁; आच्थालौ B₂, D₃, D₄, D₅. ४. अम् । आम् D₄. ५. प्रतान् । प्रशान् D₁, D₃. ६. म D₂; मा । मङ् D₅. ७. स्वरादि B₁, B₂; स्वरादिर्गणः D₃. ८. बाह्वल्या° Bc₁. ९. विस्तरे Bc₁.

च[1]। वा[2]। ह[3]। अह[4]। एवम्[5]। नूनम्।

---

अथ निपातान् ब्रुवन् चादिगणं पठति। चेति अन्वाचयसमाहारेतरेतरसमुच्चयविनियोगतुल्ययोगितावधारणहेतुषु[6]। अन्वाचयो मुख्या सिद्धा च प्राधान्य[7]निष्पत्तिः। यथा 'भिक्षामट गां चानय'। संहतिः प्राधान्ये समाहारे। पाणी च पादौ च पाणिपादम्। इतरेतरयोगे च संहत्य प्राधान्ये। 'प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ'। एकत्रानेकप्रत्यये समुच्चये। 'गार्ग्यो वात्स्यश्च'। 'पचति च पठति च चैत्रः'। विनियोगे। 'अहं च त्वं च वृत्रहन् संयुज्याव[8]'। तुल्ययोगितायाम्। '[9]ध्यातश्चोपस्थितश्च'। अवधारणे। 'अतीतः पन्थानं तव च महिमा वाङ्मनसयोः'। हेतौ। 'ग्रामश्च गन्तव्यः[10] शीतं च'। शीतात् कथं गम्यत इत्यर्थः। पादपूरणेपि[11]। 'भीमः पार्थस्तथैव च'। वेति विकल्पानवक्लृप्त्युपमानद्वन्द्वसमुच्चयेषु। विकल्पे। 'यवैर्व्रीहिभिर्वा यजेत[12]'। अनवक्लृप्तौ। 'कस्य वेह भुजवीर्यशालिनः'। उपमाने। 'जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम्'। द्वन्द्वे। 'सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम'। न तृतीयेत्यर्थः। समुच्चये। वायुर्वा दहनो वा। अहेति विनियोगे। 'त्वमह ग्रामं गच्छाह महारण्यम्'। आचारातिक्रमेपि। 'स्वयमह रथेन याति। उपाध्यायमह पदातिं गमयति'। पूजायामपि। 'अह माणवकमध्यापय'। एवमिति प्रकृतपरामर्शप्रकारेवार्थोपदेशनिर्देशनिश्चयाङ्गीकारेषु। प्रकृतपरामर्शे। 'एवंवादिनि देवर्षौ'। प्रकारे। 'एवं कुरु'। इवार्थे। 'अग्निरेवं विप्रः'। उपदेशे। 'एवं पठ'। निर्देशे। 'एवं तावत्'। निश्चये। 'एवमेतत् कः संदेहः'। अङ्गीकारे। 'एवं कुर्मः'। नूनमिति। तर्के[13] अर्थनिश्चये च[14] तर्के। 'नूनं शरत्फुल्ला हि[15] काशाः'। अर्थनिश्चये। 'नूनं हन्तास्मि रावणम्'।

---

१. च to अह dropped $B_1$. २. व $D_1$. ३. $D_1$, $D_2$, Com. drop it. ४. C has आह। एक। ५. एव C. ६. हेतुपादपूरणेषु $Dc_3$. ७. प्रधान° $Bc_1$; $Dc_4$. ८. °युज्याव: $Dc_4$, $Bc_1$. ९. Dropped $Nc_2$, $Bc_1$, $Dc_4$. १०. गन्तव्यं $Dc_3$. ११. अपि dropped $Dc_3$. १२. यजेत याज्ञिको मुनिः। $Dc_3$. १३. वितर्के $Nc_2$, $Dc_4$. १४. वा $Nc_2$. १५. Dropped $Nc_2$, $Dc_4$.

शश्वत् । कूपत् । कुवित् । नेत् । चेत्[२] । चण् । कच्चित्[३] । यत्र । न ह । हन्त । माकिम् । नकिम्[४] । माङ् । नञ् ।

---

**शश्वदिति** । सार्वकाल्ये । 'शश्वच्चकार' इत्यादि । पौनःपुन्येपि । 'शश्वद्भक्ति कुशिक्षितः' । नित्यसहार्थयोरपि । 'शाश्वतं वैरम्' । 'शाश्वद् भुञ्जते' । **कूपदिति** प्रश्नवितर्कप्रशंसासु । 'कूपदयं गायति' । **कुविदिति** भूर्यर्थे । 'कुविदङ्ग यवमन्तः' । प्रशंसादावपि । **नेदिति** शङ्कायाम् । नेज्जिह्मायन्तो नरकं पतामेति[५] । प्रतिषेधविचारसमुच्चयेष्विति **शाकटायनः** । **चेदिति** यद्यर्थे । 'सन्तश्चेदमृतेन किम्' । **चणिति** चेदर्थे । णकारो 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्' इति विशेषणार्थः । 'अयं च करिष्यति' अयं चेत् करिष्यतीत्यर्थः । **कच्चिदिति** इष्टप्रश्ने[६] । 'कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता' । **यत्रेत्य**नवक्लृप्त्यमर्षगर्हाश्चर्येषु । 'नावकल्पयामि न मर्षये गर्हे आश्चर्यं यत्र भवान्[७] वृषलं याजयेत्' । अस्य 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वे सिद्धेपि 'निपातैर्यद्यदिहन्त—' इत्यादौ विशेषणार्थं निपातसंज्ञा । **न हेति** प्रत्यारम्भे । 'न ह भोक्ष्यसे' । 'न हाध्येष्यसे' । **हन्तेति** हर्षानुकम्पावाक्यारम्भविषादेषु । हर्षे । 'हन्त जीविताः स्मः' । अनुकम्पायाम् । 'पुत्र हन्त ते धातकाः' । वाक्यारम्भे । 'हन्त ते कथयिष्यामि' । विषादे । 'हन्त हताः पथिकगेहिन्यः' । दाने निश्चये च । 'हन्तकारः' । 'हन्त गच्छामः' । **माकिमिति** निषेधवर्जनयोः । 'रक्षां मे माकिं कुरु' । **नकिमित्यौपम्ये** च । 'मेघो नकिं वर्षति सिद्धराजः' । माकिर्नकिरिति रेफान्तावित्येके । **माङ् नञ्** इत्येते व्याख्याते स्वरादौ । ननु च स्वरादित्वेनैवाव्ययत्वे सिद्धे किमर्थमत्र पाठ इति चेदुच्यते । निपाताद्युदात्तत्वादिकार्यार्थं

---

१. Dropped $B_1$. २. Dropped $B_2$. ३. क्वचित् $D_3$, $D_5$; कच्चित् । काश्चित् । कश्चन । क्वचन । क्वचित् । क्व । कुह । $D_4$. ४. नेकिम् C; नकि $B_1$, $D_1$, $D_2$, $D_4$; $D_3$ drops this and माङ्. ५. पताम इति । K. ६. अभीष्टप्रश्ने $Dc_2$. ७. तत्रभवान् $Dc_3$.

यावत् । तावत् । त्वै[1] । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । तुम् । तथा हि । खलु । किल[2] ।

निपातेषु पाठः । एवं चेत् स्वरादिपाठोनर्थकः । मैवम् । सत्त्ववचनानामपि अव्ययसंज्ञार्थं सूत्रपाठः[3] । एवं सर्वेषामप्युभयत्र पाठवतां प्रयोजनं ज्ञेयम् । यावत्तावदित्येते साकल्यावधिमानावधारणेषु । साकल्ये । 'यावत्कार्यं तावत् कुरु' । अवधौ । 'यावद्गङ्गा तावत्तिष्ठ' । माने । 'यावद्दत्तं तावद् भुंक्तम्'[5] । अवधारणे । 'यावदमत्रं ब्राह्मणानामन्त्रयस्व' । त्वै इति विशेषवितर्कयोः । 'अयं त्वै[6] प्रकृष्यते' । 'कस्मै त्वै[7] एषोभिगच्छति' । द्वै इति वितर्के । 'कस्माद् द्वै[8] एषोभिगच्छति' । रै इति दानानादरयोः[9] । 'रै करोनि' । दानं ददातीत्यर्थः[10] । 'त्वं रै किं करिष्यासि' । श्रौषट् वौषडिति वषट्शब्दार्थौ । स्वाहेति स्वधेति च व्याख्यातम् । तुमिति तुङ्कारे । 'गुरुं हुंकृत्य तुंकृत्य—' इति । तथा हीति निदर्शने । 'तथा हि ते शीलमुदारदर्शने' । खल्विति निषेधवाक्यालंकारजिज्ञासानुनयेषु । निषेधे । 'खलूक्त्वा खलु वाचिकम्' । वाक्यालंकारे । 'अथो खल्वाहुः' । जिज्ञासायाम् । 'स खल्वधीते वेदम्' । अनुनये । 'न खलु न खलु मुग्धे साहसं कार्यमेतत्' । नियमनिश्चयहेतुविषादेषु च । नियमे । 'प्रवृत्तिसाराः खलु मादृशां धियः' । निश्चये 'खलु दानम्' । हेतौ । 'त्वदधीनं खलु देहिनां सुखम्' । विषादे । 'न विदीर्ये कठिनाः खलु स्त्रियः' । किलेति वार्तारुचिन्यक्करणसंभाव्यहेत्वलीकेषु । वार्तायाम् । 'जघान कंसं किल वासुदेवः' । रुचौ । 'एवं किल केचिद्वदन्ति' । न्यक्करणे । 'त्वं किल योत्स्यसे' । संभाव्ये । 'पार्थः किल विजेष्यते कुरून् प्रवीरान्[11]' । हेतौ । 'स किल कविरेवमुक्तवान्' । अलीके । 'गोत्रस्खलितं किलाशुभं कृत्वा' ।

---

१. त्वैः । द्वैः । रैः । P. २. स्वधा । स्वाहा C; स्वाहा dropped D4. ३. Dropped D3. ४. संज्ञार्थस्तत्र पाठः । Dc4. ५. भुङ्क्ते Dc2. ६. वै° Bc1. ७. वै Bc1. ८. वै Bc1. ९. °दरणयोः Bc1. १०. दानं दास्ये Bc1, Dc3. ११. Dropped प्रवीरान् Dc2, Dc4, Bc1; कुरुप्रवीरान् Dc3.

**तथा। अथ। स्म। अस्मि। अं[1]। इ। उ। ऋ। लृ। ए। ऐ। ओ। औ। आङ्। अ। मा। नो। ना— प्रतिषेधे। उत्[2]। ओकस्[3]।**

तथेति सादृश्ये 'यथा हरिस्तथा हरः'। अयं च 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकथाल्प्रत्ययान्तो न गृह्यते। तस्य 'तद्धितश्च—' इत्यादिनाऽव्ययत्वसिद्धेः[4]। आद्युदात्तत्वं च लित्स्वरेणैव। कस्य तर्हि ग्रहणम्। तत्सदृशस्याऽव्युत्पन्नस्य। ननु च तस्यापि 'विभक्तिप्रतिरूपकाश्च' इत्यनेनैव सिद्धम्। सत्यम्। तस्यैवायं प्रपञ्चः। एवमन्यत्रापि विभक्त्यादिप्रतिरूपकेषु ज्ञेयम्। समुच्चयाभ्युपगमयोरपि। 'देवदत्तो गच्छतु तथा यज्ञदत्तः'। तथेति प्रतिज्ञायाम्। अथेति व्याख्यातम्। स्मेत्यतीते पादपूरणे च। 'वक्ति स्म व्यासः'। 'इति ह स्माहुराचार्याः'। **अस्मी**ति अहमित्यर्थे। 'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः'। अकारादयो यथासंभवं संबोधन-[5]भर्त्सनानुकम्पापादपूरणप्रतिषेधेषु वर्तन्ते। 'अं अनन्त'। 'इ इन्द्रं[6] पश्य'। 'उ उत्तिष्ठ'। ऋ लृ एतौ मन्त्रस्तोभवचनौ। 'ए इतो भव'। 'ऐ वाचं देहि धैर्यं नस्तव हेतोरसुस्रुवत्'। 'ओ श्रावय'। औ अयमपि मन्त्रस्तोभवचनः। **आङि**ति ईषदर्थाभिविधिमर्यादाक्रियायोगेषु। ईषत् पिङ्गलः आपिङ्गलः। अभिविधौ। 'आ कुमारं यशः पाणिनेः'। मर्यादायाम्। 'ओदकान्तात् प्रियं पान्थमनुव्रजेत्'। अमानोना प्रतिषेधे। एते प्रतिषेधे वर्तमानाश्चादयः। 'अविप्र इव भाषसे'। विप्रवन्न ब्रूषे इत्यर्थः। 'मा भवतु'। 'नो जानीमः'। 'नैकः सुप्तेषु जागृयात्'। उदिति अप्यर्थे 'उदरमन्तरं कुरुते'। अरमप्यल्पमप्यन्तरं कुरुत इत्यर्थः। उञिति ञितमपि पठन्ति[8]। संतर्कसंबोधनपूरणेषु। 'तद्वायुस्तदु चन्द्रमाः'। **ओकस्** इति आश्रये।

१. अद्। ओम्। अल्। ए। ऐ &c. $D_2$. २. After it—उञ् इति केचित् $D_3$, $B_1$, (इति केचित् dropped $D_4$, $D_5$.) ३. उकस् $B_2$; Before it—अरम् $D_3$; उकञ् $D_2$, $D_4$, $D_5$, $B_1$. ४. संज्ञकः $Bc_1$. ५. °व्ययत्वे सिद्धे $Dc_3$. ६. Before it—संबोधने। $Bc_1$, $Dc_3$. ७. इन्द्र $Bc_1$. ८. प्रपठन्ति $Nc_2$.

आदह[1] । आतङ्क[2] । वेलायाम् । मात्रायाम्[3] । यथा[4] । किम्[5] । यत् । यम् । हा[6] । ह । हे । है । पाट्[7] । प्याट् । आहो[8] ।

---

**आदहेति** हिंसोपक्रमकुत्सनेषु । 'आदहारीन् पुरंदरः' । 'आदह भक्तस्य भोजनाय' । 'कुर्वादह[9] यदि करिष्यसि' । **आतङ्केति** कुत्सनाविनाशयोः । आतङ्क क्षीरं दधिभावनाय । प्रतिग्रहेपीति **शाकटायनः** । **वेलायामिति** कालपरिमाणे । **मात्रायामिति** अल्पपरिमाणे । मात्रायां[10] भोजकः । **यथेति** योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु । योग्यतायाम् । 'यथारूपमूढा कन्या' । वीप्सायाम् । 'यथादेवं नमति' । अनतिक्रमे । 'यथाशक्ति करोति' । सादृश्ये । 'यथा हरिस्तथा हरः' । **किमिति** इच्छा[11]जुगुप्सयोः । 'किं गतोसि' । 'किंराजा यो न रक्षति' । ईषदर्थातिशययोरपि । 'न किमप्यस्यास्ति' । 'किमप्येष प्रगल्भते' । **यदिति** हेतौ । 'यत् सभासु प्रथसे तत् पूज्योसि' । **यमिति** यदित्यर्थे । **हा** इति विस्मयविषादशोकजुगुप्सार्तिषु । 'हा पाटलिपुत्रं लब्धम्' । 'कन्यान्तःपुरमेव हा प्रविशति' । 'हा क्रुद्धो मुनिर्भार्गवः' । 'हा प्रिये जानकि' । 'हा देवदत्त' । 'हा हतोस्मि मन्दभाग्यः' । **ह** इति विनियोगातिक्रमपादपूरणेषु । 'त्वं ह ग्रामं गच्छ' । 'अयं हारण्यं गच्छतु' । 'स्वयं ह ओदनं भुङ्क्ते । उपाध्यायं सक्तून् पाययति' । 'इति ह स्माहुराचार्याः' । हे है **पाट् प्याट्** एते चत्वारोपि संबोधनार्थाः । 'हे देवदत्त' । 'है देवदत्त' । 'पाट् पाठकाः' । 'प्याट् पान्थाः' । **आहो** इति विकल्पे । 'अयं स्थाणुराहो पुरुषः' । चेदर्थेपि । 'आहो रिक्तः कथमपि भवेदेष दैवात् तदानीं को नाम स्यादवटुकुहरालोकनेप्यस्य कल्पः' ।

---

१. अदह $B_2$. २. आतङ्क्के लोपात् $B_1$. ३. नम् मात्रायाम् $B_2$. ४. अथ $D_1$. ५. कियत् $B_2$. ६. हाम् । ह । है । हो C; हा dropped $D_1$; हं । हंहो । है $D_2$. ७. षाट् $D_5$, $B_1$, P, C. ८. अहो $D_3$, $D_4$, $D_5$, $B_1$. ९. कुर्यादादह K. १०. मात्रायामपि $Bc_1$. ११. पृच्छा $Dc_2$, $Dc_4$, $Dc_3$.

अथो । ननु । मन्ये । न हि । उताहो । असि । ब्रूहि । न तु । इति । इवं ।

---

अथो इत्यथार्थवत् । अन्वादेशेपि । 'इमं वेदमध्यापय । अथो एनं छन्दोध्यापय' । नन्विति प्रश्नावधारणानुज्ञेच्छानुनयामन्त्रणेषु । 'नन्वधीषे' । 'नन्वद्य गच्छामः' । 'नन्वादिश' 'ननु भुञ्जे'। 'ननु चण्डि प्रसीद मे' । वाक्यारम्भादौ च । 'नन्वयोहः(?) प्रसूयते'। आक्षेपे । ननु किमर्थमागतोसि । प्रत्युक्तौ । 'अकार्षीः कटं चैत्र । ननु करोमि भोः' । मन्ये इति वितर्के । 'मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुत्सुकः' । नहीत्यभावे । 'न हि प्रयोजनापेक्षं प्रेम' । उताहो इति विकल्पे । 'गौरयमुताहो गवय इति' । असीति त्वमित्यर्थवाक्यालंकारयोः । 'वेत्स्यसि'। 'शाधि वस्त्वमसि सभ्यमभ्यधाः'। ब्रूहीति प्रैषानुज्ञावसरेषु । 'ब्रूहि ब्राह्मणाः'। न तु इति निषेधे। 'न तु करोति' । इतीति हेतुप्रकारप्रकर्षएवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु । 'हन्तीति पलायते' । 'गौरश्वो हस्तीति जातिः' । 'इति पाणिनिः'। पाणिनिशब्दः प्रकर्षेण प्रकाशते इत्यर्थः । 'क्रमादमुं नारद इत्यबोधि सः' । 'ज्वलिति कसन्तेभ्यो णः'। 'वृद्धिरित्येव या वृद्धिः' । 'तदस्यास्त्यस्मिन्निति मतुप्' । 'पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि' । 'इत्युक्तवन्तं परिरभ्य दोर्भ्याम्' । 'विनिश्चयार्थामिति वाचमाददे' । 'इत्यापिशलिः' । इवेति ईषदर्थोपमोत्प्रेक्षावाक्यालंकारेषु । 'कडार इवायम्' । 'चन्द्र इव मुखम्' । 'लिम्पतीव तमोङ्गानि' । 'कथमिवैतद्भविष्यति' ।

---

१. तर्हि $D_1$, $D_3$, $B_1$, $D_4$. २. ननु Com; नु $B_2$. ३. After it—श्री $D_4$.

ओम् । फट् । वषट् । यदि[1] । हो[3] । इहि[2] । इह । तत् । आहोस्वित्[4] । उपरि । सीम्[5] । कम् । आम् । हिम् । वाम् । सुकम् । शुकम् । अनुकम् । नहिकम् । सत्यम् ।

---

ओमित्याभ्यादानाभ्युपगमसमाप्त्यर्थेषु । मङ्गलप्रयोजनश्च । 'ओं अग्निमीळे पुरोहितम्' । 'ओमित्युक्तवतोथ शार्ङ्गिण इति व्याहृत्य वाचं नभः' । 'ब्रह्मभूर्भुवः स्वरोम्' । फडिति विघ्ननिराकृतौ । 'अस्त्राय फट्' । वषडिति व्याख्यातम् । यदीति पक्षान्तरे । 'यदि शमः किं तपसा' । हो इति संबोधने । 'दुःसहो हो वियोगः' । इहीति तिङन्तप्रतिरूपकं । गच्छेत्यर्थे[6] । एहि इति पाठे प्रहासे । 'एहि मन्ये ओदनं भोक्ष्यसे । भुक्तः सोतिथिभिः' । इहेति अत्रेत्यर्थे । 'इह मुहुर्मुदितैः कलभैरवः' । तदिति हेतौ । 'यत् सभासु प्रथसे तत् पूज्योसि' । आहोस्विदिति आहोवत्[7] । उपरि इत्युपरिष्टादर्थे । 'जगतामुपरि हरिः' । सीमिति सर्वतो भावे । कमित्यनकर्थके पादपूरणे च । आमिति प्रतिवचनावधारणयोः । 'आं किं ब्रवीति' । 'आं चिरस्य प्रतिबुद्धोस्मि' । हिमिति स्तोभवचनः । वामिति युवामित्यर्थे । 'गेये केन विनीतौ वाम्' । सुकमित्यतिशये । 'सुकं शोभते' । शुकमिति शैघ्र्ये । 'शुकं गच्छति' । अनुकमिति वितर्के । नुकमिति केचित् । नहिकमिति निषेधे । 'अस्ति ते किंचित् । नह्किम्' । सत्यमिति प्रश्नप्रतिषेधसत्येषु । 'सत्यं करोषि' । 'ननु किमेवं सत्यम्' । 'सत्यं मनोज्ञाः श्रियः' ।

---

१. सादि $D_1$, $B_1$, P; C. २. Dropped $B_2$. ३. Dropped $D_3$. ४. आहोस्वित् P. ५. Before it—नहिकम् $D_1$; नहिकिम् $D_3$, $D_4$; after it—शुक्तम् $D_2$, $D_4$, P; C. ६. °त्यर्थः । $Dc_3$. ७. अहो $Bc_1$.

ऋतम् । नो चेत्[1] । जातु । कथम् । कुतः । कुत्र । अनु । अव । हाहौ । हैहौ[2] । इहौ[3] । शंबट्[4] । द्यं[5] । दिष्ट्या । पशु । सह[6] । आँनुषक्[7] । भाजक् । अङ्ग । स्रांक्[8] । अरे । चटु[9] । चाटु । हुम् ।

**ऋतमिति** सत्यार्थे । 'ऋतं ब्रवीषि' । **नो चेन्न चेदिति** निषेधे । 'नो चेत् कार्यम्' । **जातु** इति कदाचिदर्थे । 'न जातु कामः कामानामुपभोगेन शाम्यति' । **कथमिति** प्रकारप्रश्ने । 'कथं कृतम् । इत्थं कृतम्' । **कुत** इति प्रश्ननिह्नवयोः । 'कुत आगच्छति' । 'कुतो मे हिरण्यम्' । **कुत्रेति** । देशप्रश्ने[10] । 'कुत्र तिष्ठति देवदत्तः' । **अनु अव** इति उपसर्गप्रतिरूपकौ[11] । अनु अव इत्येतयोरर्थे वर्तेते । उपसर्गप्रतिरूपकयोरपि पाठः प्रपञ्चार्थः । **हाहौ हैहौ[12] इहौ** एते त्रयोपि स्तोभार्थाः । **शंबाडिति** अन्तःकरणे आभिमुख्येपि । '[13]शंबट् शुद्धचा सर्वं[14] जयति' । 'शंबट्[15] सुखो धावति' । **द्यं[16]** इति पाद-पूरणेऽहिंसाप्रातिलोम्येषु । '[17]द्यं हिनस्ति मृगं व्याधः' । **दिष्ट्येत्यानन्दे** । 'दिष्ट्या वर्धामहे' । सभाजनदर्शनप्रातिलोम्येष्वित्येके । **पशु** इति सम्यगर्थे । 'पशु मन्यमानाः' । दर्शनीयमात्मानं सम्यक् प्रतिपद्यमाना इत्यर्थः । **सहेति** सार्धमित्यर्थे । **आनुषगित्यानुपूर्व्ये** । 'आँनुषग्ब्रवीतीह बान्धुता' । **भाजक्** इति शैघ्र्ये । 'भाजक् गच्छति' । **अङ्गेति** संबोधने । 'अङ्ग कुरु' । **स्रांगिति** झटित्यर्थे । **अरे** इति नीचसंबोधने । 'अरे शूद्र' । **चटु चाटु** इत्येतौ प्रियवाक्ये । 'चटु वदति चाटुकारः' । **हुमित्यनिच्छाभयभर्त्सनकोपेषु** । 'हुं मुञ्च' । हुं राक्षसोयम्' । 'हुं निर्लज्जापसर' । 'हुं मातर्दैवतानि धिक्' ।

---

१. After it—न चेत् $D_1$, $D_3$, $D_4$, $D_5$, $B_2$. २. है हा dropped $B_2$. ३. इह $B_2$; इहा P; C, $D_2$, $D_3$, $D_4$, $D_5$, $B_1$. ४. Dropped $D_1$. ५. Dropped $D_1$, $D_3$; अद्य $D_4$; द्या $D_5$. ६. मह C. ७. आमुक् C. ८. श्राक् $B_2$, स्रक् $D_3$. ९. बटु $D_2$, $D_3$, $D_5$, $B_1$, $B_2$, P, C. १०. Before it—कथं कृतम् । इत्थं कृतम् । $Dc_4$. ११ °रूपके $Bc_1$. १२. हे हा हं हौ K. १३. संवट् संबुद्धया $Bc_1$ or विशुद्धया. १४. सर्वे जयन्ति $Dc_3$. १५. संवट्सुखो K. १६. य $Bc_1$; ब K. १७. य $Bc_1$; ब K. १८. अ° $Bc_1$. १९ द्राग्द्रुते । स्त्रागित्यन्ये K.

कुम्[1] । लुम् । खुम्[2] । वै । उपसर्गविभक्तिस्वरप्रति-रूपकाश्च । भूयस् । अलम् । सुष्ठु । कामम् । पुरस् । आशु[3] । तर्हि[4] । रहस्[5] । सपदि । इत्यादयो निपाताः । प्रादयश्च । ऊरी[6] । उँरी[7] । उररी ।

---

**कुं लुं खुम्** इति मन्त्रस्तोभवचनाः । वै पादपूरणे । 'बृहस्पतिर्वै देवानां पुरोहितः' । विशेषेपि । **उपसर्गेति** । उपसर्गप्रतिरूपके उपसर्ग-सदृशाश्च निपाता ज्ञेयाः । ते च केचित् दर्शिताः । अन्ये प्रयोगा-नुसारेण ज्ञेयाः । **भूय** इति पुनरर्थे । **अलमिति** व्याख्यातम् । **सुष्ठु** इति प्रशंसायाम् । 'सुष्ठूक्तम्' । **पुर** इत्यग्रे पूर्वदेशपूर्वकालयोश्च । पुरोगाः[10] । पुरस्तिष्ठति । पुरःकृतम्[11] । **आश्विति** । क्षिप्रे । आशु करोति । **तर्हीति** विशेषे । बलवानर्जुनः कृष्णस्तर्हि बलवत्तरः । **रह** इत्येकान्ते । रहः करोति । **सपदीति** क्षिप्रार्थे । **इत्यादयः** । इतिशब्देन चादीनां प्रत्यवमर्शः[12] । आदिशब्देन 'प्रादयः' इत्यादिभिः 'अधिरीश्वराः' इत्येतत्पर्यन्तैः सूत्रैरुक्ता उच्यन्ते इति सर्वे निपाता ज्ञेया इत्यर्थः । अनेन 'प्राग्रीश्वरान्निपाताः' इति सूत्रं व्याख्यातम् । तांश्च 'प्रादयः' इत्यादिभिः सूत्रैः कथितान् निपातान् दर्शयति । प्रादयश्च ऊरी उररी उरी इत्यादयः पठिताः कथितार्थाश्च । ऊर्यादयस्त्रयोप्यङ्गी-कारे विस्तारे च । 'ऊरीकृत्याज्ञां याति' । अङ्गीकृत्येत्यर्थः । 'ऊरीकृत्य पटं गतः' । विस्तार्येत्यर्थः । आदिशब्देन पांपी ताली इत्यादिः ऊर्यादिगणः च्व्यन्ता डाजन्ता अनुकरणं सत् असत् इत्यादयो गतिसंज्ञाः कर्म-प्रवचनीयाश्चाधिपर्यन्ता उच्यन्ते ।

---

१. Dropped $D_3$; क्रिम् $D_1$. २. Dropped $D_1$; शुम् C. ३. आअ $D_1$; आस् $D_5$. ४. Dropped $D_3$, $B_1$, P, C. ५. For रहस् $B_2$ has तर्हि. ६. Dropped $D_2$, $D_3$. ७. उररी । ऊररी $D_1$; उरी dropped $D_4$, Com.; ऊररी $D_4$; ऊरी उररी इत्यादयः समासे एव । अन्येपि प्रयोग-वशात् ज्ञेयाः । $B_2$. ८. °रूपका उपसर्गसदृशा विभक्तिप्रतिमदिशाः स्वर-प्रतिरूपका अच्सदृशाश्च $Bc_1$; °रूपका उपसर्गसदृशा विभक्तिप्रतिरूपका विभक्तिसदृशाः स्वरप्रतिरूपका अच्सदृशाश्च निपाता ज्ञेयाः $Dc_3$, $Dc_4$. ९. Before it—काममिति निश्चये $Bc_1$. १०. पुरोगः $Dc_4$. ११. पुरस्कृतम् $Dc_4$. १२. परामर्शः $Dc_3$, $Dc_4$.

इत्यादयोन्येपि प्रयोगवशाज्ज्ञेयाः ।

**तद्धितश्चासर्वविभक्तिः** ॥१।१।३८॥

यस्मान्न सर्वविभक्तेरुत्पत्तिः स तद्धितान्तोप्यव्ययं स्यात् । ततः । यतः । तत्र । यत्र ।

---

**अन्येपि प्रयोगवशात् ज्ञेया** इति । कथितेभ्योन्येपि प्रयोगवशान्निपाता ज्ञेया इत्यर्थः । एतच्च चादिगणस्याकृतिगणत्वाल्लभ्यते । ते च हये सुदि वदि प्रत्युतेत्यादयः । अर्थकथनं चैषामुपलक्षणं वेदितव्यम् । तथा चोक्तम् ।

'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥' इति

तद्धितः । **यस्मान्न सर्वविभक्तेरुत्पत्तिरिति** । सर्वस्या निरवशेषाया विभक्तेर्यस्मान्नोत्पत्तिर्येषां त्रयाणां वचनानां विभक्तिसंज्ञा कृता तानि सर्वाणि यतो नोत्पद्यन्ते इत्यर्थः । केवलस्य ताद्धितस्याव्ययत्वप्रयोजनाभावात् तद्धितान्तस्य संज्ञा विज्ञायत इत्यभिप्रेत्याह । **स तद्धितान्त** इति । ततः यतः इति । तदो यदश्च पञ्चमीसमर्थात् 'पञ्चम्यास्तसिल्' इति तसिल् सुप् लुक् । प्राग्दिश इति । विभक्तित्वात् त्यदाद्यत्वम् । पररूपत्वम् । **तत्र यत्रे**ति । 'सप्तम्यास्त्रल्' । एते सर्वे ततः प्रभृतयो विभक्त्यर्थप्रधानाः । स च विभक्त्यर्थः प्रातिपदिकार्थः संपन्न इति प्रातिपदिकार्थे प्रथमैव स्यात् । सापि संख्याविशेषाभावात् न सर्वा किं तर्हि सुरेव तस्योत्सर्गत्वात् । तथा चोक्तं **महाभाष्ये** । 'एकवचनमुत्सर्गः करिष्यते' इति । तस्यापि 'अव्ययादाप्सुपः' इति लुक् । तद्धित इति किम् । एकः । द्वौ । बहवः । असर्वविभक्तिः किम् । औपगवः । औपगवौ । औपगवाः । स चासर्वविभक्तिस्ताद्धिते नियत एवाश्रयणीयः । तथाहि । तसिलादयः प्राक् पाशपः शसादयः आसमासान्तात् मान्तः कृत्वोर्थः तसिवती नानाञाविति । अन्यथा संख्यायाः संज्ञा संघेति संज्ञायां कनि स्वार्थे कृते पञ्चकाः शकुनय इत्यत्र पञ्चकशब्दस्यासर्वविभक्तिकत्वादतिप्रसङ्गः स्यात् ।

---

१. ताद्धितो° $D_2$. २. °प्यव्ययसंज्ञः C. ३. ततः । तत्र । C. ४. अर्थे $Dc_2$. ५. तद्धितश्च $Bc_1$. ६. Dropped $Dc_2$. ७. संज्ञेति संज्ञायां $Bc_1$.

**कृन्मेजन्तः ॥१।१।३९॥**

कृद्यो मान्त एजन्तश्च सोऽप्यव्ययं स्यात्[1] ॥ स्मारं स्मारम् । जीवसे । पिबध्यै ।

**क्त्वातोसुन्कसुनः ॥१।१।४०॥**

एते अव्ययसंज्ञाः स्युः ॥ कृत्वा । उदेतोः । [2]विसृपः ।

---

कृन्मेजन्तः । **स्मारं स्मारमिति** । स्मृ आध्याने अस्मात् 'आभीक्ष्ण्ये णमुल् च' इति णमुल् । **जीवसे** इति । जीव प्राणधारणे अस्मात् 'तुमर्थे—' इत्यादिनासेप्रत्ययः । **पिबध्यै** इति । पा पाने अस्मात् शध्यैप्रत्ययः । पः पिबादेशः । येन विधिस्तदन्तस्येत्यनेनैव मेजन्त इति सिद्धे अन्तग्रहणमौपदेशिक[3]स्य मेजन्तत्वस्य प्रतिपत्तये तेन आधये चिकीर्षवे कुम्भकारेभ्य इत्यत्राव्ययसंज्ञा न । ननु चात्र लक्षणप्रतिपदोक्तपरिभाषया असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया वा न भविष्यति । सत्यमेतत् । एवमर्थप्रतिपत्तौ साध्यायां प्रतिपत्तिगौरवं स्यादित्यन्तग्रहणमेव कृतम् । **क्त्वातोसुन्** । **कृत्वेति** । कृञः 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा । **उदेतोरिति** । उत्पूर्वादिणो 'भावलक्षणे स्थेण्—' इति तोसुन् । **विसृप इति** । 'सृपितृदोः—' इति कसुन् । ननु च 'तद्धितश्चासर्वविभक्तिः' इत्यादिकं सर्वं[4] न पठितव्यम् । यतस्तस्याव्ययत्वं स्वरादित्वेनैव सिद्धम् । तथा हि स्वरादौ पठ्यते । तसिलादिस्तद्धित एधाच्पर्यन्त इत्यादि । तथा क्त्वातोसुन्कसुनः कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्चेति । उच्यते । तस्य पुनर्वचनमव्ययसंज्ञाया अनित्यत्वज्ञापनार्थम् । तेन 'पुरा क्रूरस्य विसृपो विरप्शम्' इत्यादौ 'न लोकाव्यय—' इति षष्ठीनिषेधो न । उपाग्निकामित्यादावकच् न । क एव स्यात् ।

---

१. सोऽव्ययसंज्ञः $B_1$. २. विश्वसृपः $D_3$. ३. °कमेजन्त° $Bc_1$. ४. सर्वं काण्डं $Dc_2$, $Dc_3$, $Dc_4$.

**अव्ययादाप्सुपः ॥२।४।८२॥**

अव्ययात् परस्यापः सुपश्च लुक् स्यात् ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥१॥

---

अव्ययात् । ननु चाव्ययस्यालिङ्गत्वात् टाप्प्राप्तिरेव नास्ति स हि स्त्रियां विधीयते । अतो व्यर्थमेतत् । लुक्वचनं चानर्थकम् । स्त्रियामिति गुणिप्रधानो निर्देशः । स्त्रीत्ववति टाबादय इति स्त्रीत्ववत्त्वाच्च शालादौ तत्रेत्याद्यव्ययं वर्तत इत्यापो लुग्वाच्यः । ननु च स्वादिषु विधायकं सूत्रं 'बहुषु बहुवचनम्' इत्यादिना एकवाक्यत्वं प्राप्य प्रवर्तते । तथा च सत्यव्ययस्यासंख्यत्वात् स्वादयो नोत्पद्यन्ते एवेति सुपो लुग्वचनं व्यर्थम् । एवं तर्ह्येतदेव ज्ञापयति निःसंख्येभ्योव्ययेभ्यः स्वादयो भवन्तीति । तथा चोक्तं **महाभाष्ये** । 'अथवाचार्यप्रवृत्तिर्ज्ञापयति उत्पद्यन्तेऽव्ययात् स्वादयः' इति । यदयम् 'अव्ययादाप्सुपः' इति 'सुपो लुकं शास्ति इति' । अत्युच्चैसौ इत्यादौ उपसर्जनस्याव्ययत्वप्रतिषेधार्थं परमश्च इत्यादौ तदन्तस्याव्ययत्वप्रतिपत्त्यर्थमव्ययसंज्ञाया अन्वर्थत्वं दर्शयितुम् । आथर्वणीं प्रणवविद्यास्थां श्रुतिमाह । **सदृशमित्यादि** । यन्न व्येति विविधं नाना न गच्छति तदव्ययम् । क्व पुनर्न व्येतीत्याशङ्क्याह । **सदृशमित्यादि** । त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं तुल्यम् । लिङ्गविशेषापरिग्रहात् लिङ्गसामान्योपादानाच्च । **सर्वासु च विभक्तिषु** इति । विभक्तिनिमित्तत्वात् विभज्यते वा प्रातिपदिकार्थ एभिरिति कर्मादीनि कारकाणि शक्तिरूपाणि विभक्तिशब्देनोच्यन्ते । **वचनेषु चेति** । वचनान्येकवचनबहुवचनानि । इह त्वभिधेयेभिधानोपचारादेकादिका संख्या गृह्यते तदेव कारकसंख्याविशेषानुपादानात् तत्सामान्यरूपोपादानाच्च विभक्तिषु वचनेषु च सदृशं भवति । एवं यस्माल्लिङ्गकारकविशेषानुपादानान्न व्येत्यतोव्ययमित्यन्वर्थसंज्ञा ।

---

१. °वत्यां च Dc2 ; °वत्यां वा Dc4.

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं[1] चैव[2] हलन्तानां यथा वाचा निशा दिशा ॥२॥
वगाहः । अवगाहः । पिधानम् । अपिधानम् ।

इत्यव्ययानि ॥

---

**वष्टीति** । भागुरिर्ऋषिरत्रावाप्योरुपसर्गयोरकारस्य लोपं वष्टि इच्छति तथा हलन्तानामापं चैवं वष्टि । **वाचेत्यादि** । यथा हि दृश्यत इत्यर्थः । **वगाह** इति । गाहू विलोडने । घञ् । **पिधानमिति** । डुधाञ् धारणपोषणयोः । ल्युट् ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादेऽव्ययगणकथनं सार्थकं सातिमागात् ॥

---

१. टापं $B_1$, $B_2$. २. चैवं $Dc_3$.

# अथ[1] स्त्रीप्रत्ययाः ।

**अजाद्यतष्टाप् ॥४।१।४॥**

अजादिभ्योकारान्ताच्च टाप्[2] स्यात् स्त्रियाम् ।

अथ स्त्रीप्रत्ययाः कथ्यन्ते । **अजाद्यतः** । अत्र 'ङ्याप्प्रातिपदिकात्' इति वर्तते । तत्रात्र[3] प्रकरणे प्रातिपदिकमात्रं संबध्यते । ङ्यापोरनेनैव विधानात् । **स्त्रियामिति** । 'स्त्रियाम्' इत्याधिकारसूत्रानुवृत्तेः । तस्य चायमर्थः । स्त्रियां वाच्यायामथवा स्त्रियां यत् प्रातिपदिकं वर्तते तस्मात् टाबादयः प्रत्ययाः स्युरिति । केयं स्त्री । उच्यते । स्त्रीलिङ्गं[4] तच्च सविशेषं[5] **भर्तृहरिणा** प्रकीर्णककाण्डे[6] व्याख्यातम् । तथापि कियद्विशेषं कथ्यते । अग्रे 'प्रातिपदिकार्थ—'[7] इति सूत्रे कश्चित् प्रकारः कथयिष्यते । यद्वशेन इयं स्त्रीति लोके संप्रत्ययः स धर्मः स्त्रीत्वम् । स च गोत्वादिवत् सामान्यविशेषः । तथा च **पाणिनीयमतदर्पणे** उक्तम् ।

'इयमयमिदमिति येषु व्यपदेशो दृश्यते लोके ।
स्त्रीपुंनपुंसकानि प्रोच्यन्ते तानि लोकेन ॥१॥

गोत्वादि[8] स्वाश्रयैर्यद्वत्[9] सामान्यमुपलक्ष्यते ।
व्यञ्जकैरनुवृत्तत्वात् स्त्रीत्वपुंस्त्वादिकं तथा ॥२॥

भावानां शक्तीनां लोके प्रतिनियतविषयत्वात् ।
किंचित् केनचिदेवाश्रयेण सामान्यमुन्मिषति ॥३॥

ततो व्यञ्जकवैचित्र्याद्येनात्र स्त्रीत्वमेव हि ।
व्यज्यते न तु पुंस्त्वादिः सोर्थः स्त्रीत्यभिधीयते ॥४॥

१. Heading dropped P, $B_1$, $B_2$, $D_2$, $D_5$. २. स्त्रियां टाप् स्यात् $D_3$; प्रातिपदिकाट्टाप् $D_4$. ३. अत्र dropped $Bc_1$. ४. स्त्रीलिङ्गं च $Bc_1$. ५. विशेषं $Nc_1$. ६. प्रकीर्णकाण्डे $Nc_1$. ७. प्रातिपदिकार्थे सूत्रे $Bc_1$. ८. Before it—तथा $Bc_1$, $Dc_4$. ९. स्वाश्रयं य° $Dc_4$.

आबिति सामान्योक्त्यर्थो यस्तदविघातार्थष्टः[1]। अन्यथैकेद्ग्रहणे[2] अनेकेतौ डाप्चापौ न गृह्येयाताम्। अजाद्युक्तिर्ङीप्प्रतिषेधार्था।

---

पुमान् नपुंसकं चैवं द्वित्रिलिङ्गं तथैव च।
यथा गौरी गिरिर्गेहमर्धर्चस्तटमत्र दिक् ॥५॥
अत्यन्तमाश्रयाणां सादृश्याद् व्यञ्जकाभावात्।
उपदेशैकव्यङ्ग्यं क्वचिद्यथा ब्राह्मणत्वादि ॥६॥
आश्रयस्यातीन्द्रियत्वात्तथा स्त्रीत्वादिकं क्वचित्।
उपदेशव्यङ्ग्यमेव स्यात् दिगात्मा गगनं यथा ॥७॥' इति।

**आबिति**। **सामान्योक्त्यर्थ** इति। 'ङ्याप्प्रातिपदिकात्' इत्यादौ डाप्चापोरिवास्यापि ग्रहणं यथा स्यादिति सामान्यग्रहणार्थं[3] पकारोऽनुबध्यते। असति हि पकारे अस्य ग्रहणं न स्यादिति भावः। **तदविघातार्थष्ट** इति। तस्य सामान्यस्य विघातो मा भूदिति टकारोऽनुबध्यते। एतदेव व्यतिरेकेणोपपादयति। **अन्यथेत्यादि**। यदि टकारो नानुबध्येत तदा 'ङ्याप्प्रातिपदिकात्—' इत्यादौ एकेतोस्य ग्रहणे सति अनेकेतौ डाप् चापौ न गृह्येयातामेकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति परिभाषयेति भावः। अजादीनां प्रायशोऽदन्तत्वादत इत्येव[4] सिद्धे अजादिग्रहणं व्यर्थमित्याशङ्क्याह। **अजाद्युक्तिरिति**। ङीबित्युपलक्षणं ङीषोपि ङीप्निषेधार्थेत्येतदुपलक्षणमप्राप्तटाब्विधेरपि। तथाहि क्वचिज्जातिलक्षणे ङीषि प्राप्ते तन्निषेधार्थं टाब्विधिः। क्वचिद् द्व्यालेक्षणे ङीपि क्वचित् पुंयोगलक्षणे ङीषि क्वचित् पुष्पफलमूलोत्तरपदे ङीषि क्वचित् टिल्लक्षणे ङीपि[5] हलन्तानां त्वप्राप्त एव। एतच्च

---

१. °दविघानार्थ° P; C, B₁; °दभिधानार्थ° D₅. २. Before it—एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणम् D₅. ३. सामान्यग्रहणस्य Dc₃, Dc₄, Bc₁. ४. °दत एव Nc₂, Dc₃. ५. ङीषि Dc₃.

अजा । एडका । अश्वा[1] । चटका । मूषिका[2] । बाला । होडा[3] । पाका । वत्सा[4] । मन्दा । विलाता । मेधा[5] । सर्वा ॥

हलन्ताद्वा* । वाचा । वाक् । दिशा । दिक्[6] । तपरः किम् । सोमपाः । शूद्रा चामहत्पूर्वा जातिः[7] ।

---

यथास्थानमनन्तरमेव वक्ष्यामः । अजादिगणं पठति । अजेत्यादि । मूषिकेत्यन्ता जातिवचना इति 'जातेः—' इति ङीषि प्राप्ते । बालादयो विलातान्ता वयोवचनाः । तत्र 'वयसि प्रथमे' इति ङीपि पूर्वापहाणा अपरापहाणेति च गणे पठ्यते तदपि ज्ञेयम् । अत्र 'टिड्ढाणञ्—' इति टिल्लक्षणे ङीपि । तथा क्रुञ्चा देवविशा उष्णिहेति च गणे पठ्यते तदपि ज्ञेयम् । अत्र हलन्तत्वादप्राप्तष्टाब् विधीयते । अदन्तत्वादुदाहरति । **मेधा सर्वेति हलन्ताद्वेति** । एतच्च **भागुरिमतम्** । आपं चैव हलन्तानामित्युक्तत्वात् । **तपरः किमिति** । अत इत्यकारस्तपरः किमर्थमुच्यत इत्याशङ्का[8][9] । उत्तरमाह । **सोमपा** इति । अयं भावः । अत इति तपरकरणं कालावधारणार्थं[10] ततश्च द्विमात्रात् सोमपाशब्दात् टाप् न । यदि हि टाबत्राभविष्यत् 'हल्ङ्याब्भ्यः' इति सुलोपोभविष्यदिति । **शूद्राचामहत्पूर्वाज्जातिरिति** । गणसूत्रमर्थतः पठति ।

---

१. अश्वा । चटका । dropped C. २. मूषिका before अश्वा $D_1$. ३. होडा $D_5$. ४. Dropped $D_3$. ५. Before it—त्रिफला C; अतः मेधा । त्रिफला । सर्वा । $B_2$; अतः मेधा । सर्वा । $D_5$. ६. After it—निशा । निट् । $D_2$. ७. Before it—महणवता प्रातिपदिकेन तदन्तविधिर्न । यथा विशिष्टवाक् $B_2$. ८. अत्राह° $Nc_2$. ९. °शङ्क्य $Dc_4$, $Dc_3$. १०. कालावधानार्थं $Nc_2$.

शूद्रा। जातिः[1] किम्। शूद्रस्य स्त्री शूद्री। अमहत्पूर्वेति[2] किम्। महाशूद्री। अत्र[3] प्रकरणे तदन्तग्रहणमिष्यते[4]। संभस्त्राजिनशणपिण्डेभ्यः फलात्*॥ संफलेत्यादि[5]।

---

शूद्रा चेति। शूद्रशब्दादपि अमहत्पूर्वात् टाप् स्यात् जातिश्चेत् समुदायेन वाच्या स्यादित्यर्थः। शूद्रस्य स्त्री शूद्रीति। 'पुंयोगादाख्यायाम्' इति ङीष्[6]। महाशूद्रीति। जातित्वाद् ङीष्[7]। आभीरजातिस्त्री महाशूद्री। यदा तु महती चासौ शूद्रा चेति विग्रहस्तदा महाशूद्रेत्येव स्यात् महत्पूर्वनिषेधे जातिरित्यनेन संबन्धात्। ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् महत्पूर्वात् टापोऽप्राप्तिरेव तद् व्यर्थो महत्पूर्वनिषेध इत्याशङ्क्याह। अत्र प्रकरण इति। अयमेव महत्पूर्वनिषेधो ज्ञापयति यदत्र प्रकरणे तदन्तग्रहणमिष्यत इति भावः। ननु च यद्यत्र प्रकरणे तदन्तग्रहणमिष्टं तर्हि पञ्चानामजानां समाहारः पञ्चाजीति 'द्विगोः'[8] इति तदन्तविधिना टाप् स्यात्। मैवम्। 'अजाद्यतः—' इति षष्ठी। तत्राजादिभिः स्त्रियं विशेषयिष्यामः। अजादीनां या स्त्रीति अजादिशब्दानां वाच्येऽर्थे यत् स्त्रीत्वं समवेतं तत्र टाबिति। न च पञ्चाजीत्यत्राजशब्दवाच्येऽर्थे[9] स्त्रीत्वं समवेतं किं तर्हि समाहारस्य वाच्ये[10]। संभस्त्रेत्यादि। संभस्त्रादिभ्यः परो यः फलशब्दस्तस्माट्टाप् स्यादित्यर्थः। इत्यादीति। आदिशब्दात् भस्त्रफला अजिनफला शणफला पिण्डफला।

---

१. जातेः किम् P, C, $B_1$, $B_2$. २. अमहत्पूर्वादिति $B_1$; अमहत्पूर्वस्येति किम् $D_3$. ३. Before अत्र C has आभीरजातिः. ४ C has after it—इहापि तर्हि द्विगोरिति ङीपं बाधित्वा टाप् प्राप्नोति। पञ्चाजा। दशाजी। नैवम्। अजादिसूत्रे अजादिभ्यः स्त्रीवृत्तिभ्य इति विशेषणात्। न चात्र अजाशब्दः स्त्रियाम्। किं तर्हि। समास इति। ५. संफला। भस्त्रफला। इत्यादि। $D_3$. ६. ङीप् $Dc_3$. ७. ङीप् $Bc_1$. ८. द्विगोरपि $Bc_1$, $Dc_4$. ९. °त्यत्र शब्द° $Nc_1$; पञ्चाजी अत्रा° $Dc_4$. १०. समाहारवाच्ये $Bc_1$.

एकफलेति केचित्[१]। सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्[२]*॥ सत्पुष्पेत्यादि[३]। ज्येष्ठाकनिष्ठामध्यमेति पुंयोगे[४]पि। कोकिला जातावपि। मूलान्नञः* ॥ अमूला। ऋन्नेभ्यो ङीप्[५]। कर्त्री। दण्डिनी। अर्वती। राज्ञी। शुनी। मघोनी। मघवती।

---

**एकफलेति केचिदिति**। तथा चोक्तं बोपदेवपण्डितैः। 'जातेरस्त्रीयुङ्सत्प्राक्काण्डप्रान्तशतैकादिपुष्पसंभस्त्राजिनैकाशणपिण्डादि—फलनादिमूलात्' इति। सत्प्रागिति। एतेभ्यः परात् पुष्पशब्दात् टाप् स्यादित्यर्थः। प्राक्[६]पुष्पा। काण्ड[७]पुष्पा। शतपुष्पा। एकपुष्पा। 'पाककर्णपर्णपुष्पफल—' इति प्राप्तस्य ङीषोपवादः। ज्येष्ठेत्यादि। एते पुंयोगेपि टाबन्ताः साधव इत्यर्थः। 'पुंयोगादाख्यायाम्' इति प्राप्तङीषोपवादः। **कोकिलेति** जातावपि टाबन्तः साधुः। **मूलादिति**। नञ्पूर्वात् मूलात् टाप् स्यात्। '**ऋन्नेभ्यो ङीप्**' इति। इदं सूत्रमजन्तस्त्रीलिङ्गे[८] व्याख्यातम्। **अर्वतीति**। अर्वन्शब्दात् ङीपि कृते 'अर्वणस्त्रसावनञः' इति तृ अन्तादेशः। एतच्चासावित्यस्य पर्युदासत्वे। प्रसज्यप्रतिषेधे त्वस्मिन् प्रथमं त्रादेशस्तत उगित्त्वात् ङीप्। तथा च कैयटा[९]दिभिरुदाहृतम्। उगितश्चेत्यत्रार्वतीति। **राज्ञीति**। 'अल्लोपोनः' इत्यल्लोपः। **शुनी**। **मघोनीति**। 'श्वयुवमघोनामतद्धिते' इति संप्रसारणम्। **मघवतीति**। ङीपि कृते 'मघवा बहुलम्' इति त्रन्तादेशः।

---

१. After it—चरन्ति $B_2$. २. पुष्यात् $D_1$. ३. सत्पुष्ये° $D_1$. ४. After it—टाप् $D_5$. ५. P has after it ऋदन्तेभ्यो नान्तेभ्यश्च ङीप् स्यात्।. ६. Before it—आदिना $Bc_1$. ७. काण्डपुष्पा। शतपुष्पा dropped $Dc_4$. ८. °स्त्रीलिङ्गेषु $Bc_1$. ९. कैय्यट° $Nc_1$.

उगितश्च ॥४।१।६॥

यथाकथंचिदुगितः शब्दात् स्त्रियां ङीप् स्यात्[1] ॥ विदुषी ॥ [2]श्रीमती । [3]भवती । [4]अतिभवती । अत्रभवती । शप्श्यनोर्नित्यम् । पचन्ती । दीव्यन्ती । ‘आच्छीनद्योर्नुम्[5]’ । तुदन्ती । तुदती । भान्ती । भाती । धातोरुगितो न । उखास्रत् । पर्णध्वत् । अञ्चतेस्त्विष्टः । [6]प्रतीची । प्रत्यञ्ची । तिरश्ची[7] । तिर्यञ्ची । अमुमुईची । उदीची ।

---

उगितः । यथाकथंचिदिति । येन केनचित् प्रकारेण य उगित् तस्माद्यद्यादेशवर्ण उगित् संभवति यदि वा प्रत्ययः [8]अथापि प्रातिपदिकं [9]सर्वथा यत्रैषामन्यतम उगित् स्यात् तच्छब्दरूपमुगित्तेनोगित इति शब्दस्य विशेषणं न प्रातिपदिकस्येति भावः । विदुषीति । ‘विदेः शातुर्वसुः’ इति [10]लटो वसुरादेशः । वसोः संप्रसारणम् । श्रीमतीति मतुब् । भवतीति । सर्वादिगणे भवतु [11]इत्युदिदुच्यते । अतिभवतीति । तदन्तविधेरिष्टत्वात् । पचन्ती दिव्यन्तीति । लटः शता । उखास्र-दित्यादि । स्रंसुध्वंसु अधःपतने । क्विप् । वसुस्रंसु—’ इति दत्वम् । प्रतीची इति । ‘अचः’ इत्यलोपः । ‘चौ’ इति दीर्घः । प्रत्यञ्चीति । ‘नाञ्चेः पूजायाम्’ इति [12]न्लोपो न ।

---

१. $D_1$ omits it. २. गोमती $D_4$. ३. Dropped $D_3$. ४. Before it—भवन्तमतिक्रान्ता P, $B_1$, $B_2$. ५. °र्नुम् वा $B_2$. ६. प्राची for प्रतीची $B_1$, C, P. ७. तिर्यञ्ची । उदञ्ची । प्राची । प्रतीची । तिरश्ची । अदमुईची । उदीची B, C, P (C has अमुमुईची). ८. Corrected into तथापि $Bc_1$, $Dc_3$. ९. सर्वथाप्यत्रैषा° $Dc_3$. १०. शतुर्वसु° $Dc_3$. ११. इत्युदित पठ्यते $Dc_4$. १२. लोपो न $Bc_1$.

**वनो र च ॥४।१।७॥**

वन्नन्तात् स्त्रियां ङीप् स्यात् रश्चान्तादेशः ॥ धीवरी । हरिदृश्वरी ।

वनो न हशः* । राजयुध्वा[1] । सहयुध्वा स्त्री । शतयुध्वा स्त्री । णान्ताद्धातोर्वनो ङीब्राविवत्येके । अवावरी[4] । बहुव्रीहौ वा* ॥ बहुधीवा । बहुधीवरी ।

---

**वनः** । अत्र वन इति क्वनिब्वनिपोः प्रत्ययोर्ग्रहणं नान्यस्य वनः । **धीवरीति** । धाञ् । आतो मनिन् क्वनिब्वनिपश्च । 'अन्येभ्योपि दृश्यन्ते' इति निरुपपदादपि क्वनिप् । 'घुमास्था—' इतीत्वम् । **हरिदृश्वरीति** । हरिं दृष्टवती । दृशेः क्वनिप् । **वन इति** । हशान्ताद्धातोर्विहितो यो वन् तदन्तात् प्रातिपदिकात् ङीप्रौ न भवतः । **राजयुध्वेति** । राजानं योधितवती । 'राजनि युधि—' इति क्वनिप् । **सहयुध्वेति** । 'सहे च' इति क्वनिप् । 'सर्वनामस्थाने च' इति दीर्घः । नलोपः विहितविशेषणम् । हश्ग्रहणं किम् । शर्वरीत्यत्र ङीप्रौ यथा स्याताम् । अत्र यद्यपि रेफात् हशः परो वन् तथापि हशन्तान्न विहितः किं तु शॄ अस्मात् 'अन्येभ्योपि दृश्यन्ते' इति वनिपि गुणे रपरे च पश्चाद्धशः परो वनिबिति निषेधो न । **णान्तादिति** । **एक** इति । **न्यासकारादयः** । तथा च **न्यासकारेणोक्तम्** । **अवावरीति** । हशन्ताद्धातोः परो वनिब् विहितः तथापि प्रतिषेधो न भवति । ओणृ अपनयने । 'अन्येभ्योपि दृश्यन्ते' इति वनिप् । 'विड्वनोरनुनासिकस्यात्' इति णस्यात्वम् इति । **बहुव्रीहौ वेति** । एतच्च 'डाबुभाभ्यामन्यतरस्याम्' इत्यन्यतरस्यांग्रहणात् सिद्धं तथा च **वृत्तिकृतोक्तम्** । अन्यतरस्यांग्रहणं किमर्थम् । 'बहुव्रीहौ वनोरच' इत्यस्यापि विकल्पो यथा स्यादिति । **बहुधीवेति** बहवो धीवानो यस्यां सा ।

---

१. Before it—पीवरी । ण्यन्ताद्धातोर्वनोर्ङीप्राबिति केचित् । अवावरी । B₁, C, P. २. हश्प्रत्याहारात् परस्य वनो ङीप्रौ न स्तः । राजयुध्वा । सहयुध्वा । P; B₁, C; (After स्तः C has विहितविशेषं हश्ग्रहणं तेन शर्वरीत्यत्र ङीप्रौ यथा स्याताम् ); B₂ has हश्प्रत्याहारात् विहितो यो वन् तदन्तस्य ङीप्रौ न स्याताम्. ३. राजयुध्वा B₂. ४. After it—धीवरी D₃. ५. युधि कृञः Bc₁, Dc₄. ६. वनिप् Dc₃. ७. दृश्यते Bc₃.

**पादोऽन्यतरस्याम् ॥४।१।८॥**

पाच्छब्दान्तात् स्त्रियां ङीप् स्याद्वा ॥ द्विपाद् । द्विपदी ।

**टाबृचि ॥४।१।९॥**

ऋचि वाच्यायां पादान्तात् टाप् स्यात् न ङीप् । द्विपदा ऋक्[2] । न षट्स्वस्रादिभ्यः । पञ्च । चतस्रः । पञ्चेत्यत्र नलोपे कृतेऽपि ष्णान्ता षडिति षट्संज्ञां प्रति नलोपः । सुप्स्वरेति नलोपस्यासिद्धत्वान्न षट्स्वस्रादीति न[3] टाप्[4] ।

---

**पादः** । पादिति कृतसमासान्तः पादशब्दो गृह्यते । **द्विपदीति** । द्वौ पादौ अस्या[1] इति बहुव्रीहिः । 'संख्यासुपूर्वस्य' इति पादस्यान्तलोपः । 'पादः पद्' इति पद्भावः ।

**टाबृचि** । यदि ऋचि इति विषयनिर्देशः स्यात् तदा सं[5]ग्रन्थेयः[6] पाच्छब्दनिर्देशः स्यादित्याशङ्क्य ऋ[7]गित्यभिधेयनिर्देश इत्यभिप्रेत्याह । **ऋचि वा[8]च्यायामिति** । **पञ्चेत्यत्रेत्यादि** । अयमर्थः । पञ्च ब्राह्मण्य इत्यत्र 'ऋन्नेभ्यः—' इति प्राप्तस्य ङीपो 'न षट्स्वस्रादिभ्यः' इति निषेधे कृते 'षड्भ्यो लुक्' इति जसो लुकि न[9]लोपे च कृते अकारान्ततायामुपजातायां टाप् प्राप्तः स 'न षट्स्वस्रादि—' इति निषिध्यते । ननु च 'ष्णान्ता षट्' इति नान्तस्यैव षट्संज्ञा विधीयते । तथा चात्र नान्तत्वाभावात् षट्संज्ञा नास्तीति न टापो निषेध इत्याशङ्क्याह । **न लोपे कृतेऽपि ष्णान्ता षडित्यादि** ।

---

१. After it—बहुव्रीहिः $B_1$. २. After it—द्विपदा गायत्री $B_1$. ३. न ङीप्टापौ $D_4$. ४. After it—न ङीप् $B_1$. ५. यस्याः $Bc_1$. ६. ऋक्ग्रन्थेयः पाच्छब्द इत्यर्थः स्यादित्याशङ्क्य $Bc_3$, $Dc_3$. ७. ऋचीत्य° $Bc_3$, $Dc_4$, $Dc_3$. ८. व्याख्यायां $Nc_1$. ९. कृते न लोपे च $Nc_1$, $Bc_3$.

**मनः ॥४।१।११॥**

मन्नन्तात् स्त्रियां न डीप्[1] ॥ सीमा[2] । सीमानौ । अतिमहिमानौ[3]

**अनो बहुव्रीहेः ॥४।१।१२॥**

अन्नन्ताद्बहुव्रीहेर्न[4] डीप्[5] ॥ [6]बहुयज्वानौ ।

**डाबुभाभ्यामन्यतरस्याम् ॥४।१।१३॥**

मन्नन्तादन्नन्ता[7]द्बहुव्रीहेश्च डाब् वा स्यात् । टिलोपः[8] । [9]बहुसीमे । बहुसीमानौ । बहुयज्वानौ ।

---

**मनः** । अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति परिभाषयात्रार्थवद्ग्रहणपरिभाषा नोपतिष्ठत इत्यभिप्रेत्यानर्थकं मनमुदाहरति । **सीमा** । **सीमानावि**त्यादि । 'ऋन्नेभ्यः—' इति प्राप्तस्य डीपो निषेधः ।

**अनः** । उपधालोपिनो विकल्पं वक्ष्यतीत्यनुपधालोपी बहुव्रीहिरिहोदाहरणमित्यभिप्रेत्याह । **बहुयज्वानावि**ति । 'न संयोगाद्वमन्तात्' इत्ययमनुपधालोपी ।

**डाबुभाभ्याम्** । इ[10]हान्यतरस्यांग्रहणं डापामुक्ते [11]डीप्निषेधार्थं वा टाप्निषेधाभ्यामुक्ते ङीबर्थं वा । न प्रथमः । डाबपि ह्युच्यते निषेधोपि तौ वचनसामर्थ्यात् स्याताम् । द्वितीयं विकल्पयामः । स ङीप्पक्षे भवन् अनुपधालोपिनो वा स्यादुपधालोपिनो वा । नाद्यः । निषेधवचनानर्थक्यप्रसङ्गात् । न द्वितीयः ।

---

१. ङीप् स्यात् $D_2$. २. C has सामा । सामानौ before it. ३. Dropped $Bc_3$; अतिमहिमा । अतिमहिमानौ । $D_4$, $D_5$. ४. C has स्त्रियाम् before न. ५. ङीप् स्यात् $D_2$. ६. Before it—बहुयज्वा $D_3$. ७. °न्तबहु° $D_1$; °न्ताच्च बहुव्रीहेर्वा डाप् $D_2$. ८. P drops डित्वात् टिलोपः; डित्वात् before टिलोपः $D_4$, $B_1$. ९. सीमे । सीमाः । पामे । पामाः । सीमानौ । पामानौ । बहुयज्वे । बहुयज्वानौ C; सीमे । सीमानौ । बहुयज्वा । बहुयज्वे । बहुयज्वानौ P; सीमा । सीमे । सीमानौ । बहुयज्वे । बहुयज्वानौ $D_1$, $Bc_3$; सीमे । सीमानौ बहुयज्वे $D_5$, $D_4$, $D_3$, $B_2$. १०. इह dropped $Nc_1$, $Bc_3$. ११. ङीप् $Bc_1$, $Dc_3$.

**अन उपधालोपिनोन्यतरस्याम् ॥४।१।२८॥**

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा[1] ङीप् स्यात् ॥ पक्षे डाप्ङीप्निषेधौ ॥ बहुराज्ञ्यौ[2] । बहुराजे । बहुराजानौ ।

**प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः ॥७।३।४४॥**

प्रत्ययस्थात् ककारात् पूर्वस्य अकारस्य इकारः[4] स्यादापि परे स आप् सुपः[5] परो न चेत् ॥ सर्विका । कारिका । अतः किम् । नौका[6] । असुपः किम् ।

---

'अन उपधालोपिनोन्यतरस्याम्' इति प्रतिपदं ङीपो विधास्यमानत्वात् । न ह्यन्यतरस्यांग्रहणमवश्यं कर्तव्यम् । उपधालोपिनो[7] ङीपामुक्ते डाब्निषेधौ स्यातामिति । बहुराज्ञ्यौ बहुराजानौ बहुराजे इति । तस्मादत्रान्यतरस्यांग्रहणं व्यर्थम् । अन्यतरस्यामिति योगविभागः क्रियते । बहुव्रीहिरनुवर्तते । 'वनो र च' इति मण्डूकप्लुत्याधिक्रियते[8] । तथा च वन्नन्ताद्बहुव्रीहेर्ङीप्रौ[9] वा भवतः । तथा च 'वनो र च' इत्यत्रोक्तं 'बहुव्रीहौ वा' बहुधीवा[10] बहुधीवरीति । अनः । उपधालोपिनः किम् । बहुयज्वा । बहुयज्वे । बहुयज्वानौ ।

**प्रत्ययस्थात्** । **सुपः पर इति** । सुबन्तात् पर इत्यर्थः । **सर्विकेति** । 'अव्ययसर्वनाम्नाम्—' इत्यकच् । अज्ञाताद्यर्थे । **कारिकेति** । कृञो ण्वुल् । प्रत्ययग्रहणं किम् । शक्नोतेः पचाद्यचि शका । ककारमात्रं प्रत्ययो[11] नास्तीति सामर्थ्यादेव प्रत्ययग्रहणे[12] सिद्धे स्थग्रहणं विस्पष्टार्थम् । कादिति किम् । नन्दना । पूर्वस्य किम् । परस्य मा भूत् । मृदुका । पटुका । अत्र ककारात्परस्याकारस्य मा भूत् । **नौकेति** । 'प्रागिवात् कः' इत्यज्ञाताद्यर्थे कः । तपरकरणं किम् । धाका । दधातेरौणादिकः[13]

---

१. ङीब् वा C. २. डाब्निषेधौ $D_1$. ३. बहुराज्ञ्यौ dropped $Bc_3$. ४. इत् $B_1$. ५. सुप्परो $B_1$. ६. After it—तपरः किम् । राका $B_1$; प्रत्ययग्रहणं किम् । राका $B_2$; तपरः किम् । कन्थाका । प्रत्ययग्रहणं किम् । शका । $Bc_3$. ७. °लोपिनोन्यतरस्यामिति ङीपा° $Bc_3$. ८. °धिकमनुवर्तते $Dc_3$. ९. °द्बहुव्रीहौ ङी° $Dc_4$. १०. $Nc_1$, $Bc_3$ drop बहुधीवा. ११. °योस्तीति $Bc_3$. १२. प्रत्ययस्थग्रहणे $Bc_3$. १३. °रौणादिकप्रत्ययः $Nc_1$.

बहवः परिव्राजका यस्यां सा बहुपरिव्राजका।

मामकनरकयोरुपसंख्यानम्* ॥ मामिका । नरिका ।

त्यक्त्यपोश्च* ॥

---

कप्रत्ययः। आपीति किम्। कारको हारकः। ननु चापीत्यनेन किं विशेष्यते। यद्युच्येत ककार इति तदा सर्विका कारिकेत्यत्रापि न स्यात्। अकारेण व्यवधानात्। न च वाच्यमेकादेशे कृते नास्ति व्यवधानमिति तस्य 'अचः परस्मिन्—' इति स्थानिवद्भावादिति चेदुच्यते। येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते। रथकट्या पुत्रकाम्येत्यादौ तु श्रुतिकृतमनेकेन वर्णेन व्यवधानमितीत्वं न स्यात्। बहव इत्यादि। परिव्राजकशब्दो ण्वुलन्तः तस्मात् सुबन्तादयमाबिति निषिध्यतेत्रेत्वम्। असुबिति च प्रसज्यप्रतिषेधोयं न पर्युदासः। तथा चोक्तम्। **स आप् सुपः परो न चेदिति**। पर्युदासत्वे हि असुबन्तात् समुदायात् पर आबिति बहुपरिव्राजकेत्यत्रेत्वं स्यादेव। अविद्यमानः सुबत्र सोयमसुबिति बहुव्रीहिरपि नाश्रीयते। यतो बहूनि चर्माण्यस्यां सन्तीति बहुचर्मिका। 'शेषाद्विभाषा' इति कप्। तत्र प्रत्ययलक्षणेन सुपो विद्यमानत्वादिति। इत्वं न स्यादिति। **मामकनरकयोरिति**। **उपसंख्यानमिति**। संख्यायते संक्षिप्यते प्रतिपाद्यतेनेनार्थ इति संख्यानं सूत्रं तस्योपोच्चारि संख्यानमुपसंख्यानम्। सूत्रसमीपे इदमपि सूत्रं पठितव्यमित्यर्थः। **मामिकेति**। ममेयम्। 'तस्येदम्' इत्यण्। 'तवकममकावेकवचने' इति ममकादेशः। वृद्धिः। ननु चात्र 'टिड्ढाणञ्—' इति ङीपा भाव्यम्। तत्कथं टाप्। नैष दोषः। 'केवलमामक' इति सूत्रेण संज्ञाछन्दसोरेव ङीपो नियमितत्वात्। **नरिकेति**। नरान् कायतीति नरिका। कै शब्दे। 'आदेच उपदेशेशिति' इत्यात्वम्। 'आतोनुपसर्गे कः' इति कः।

---

१. यस्यां शालायां $B_1$. २. यद्युच्यते $Dc_4$. ३. Before it—असुपः किम् $Dc_3$. ४. °चारितमुपसंख्यानम् $Dc_3$. ५. °नामकभाग—' $Nc_1$; °मामिक—' $Bc_3$; °मामक—' $Dc_3$. ६. °सर्ग—' इति $Nc_1$.

दाक्षिणात्यिका ॥ इहत्यिका । क्वत्यिका ।

**न यासयोः** ॥७।३।४५॥

कात् पूर्वस्य यत्तदोरस्य इन्न[1] स्यात् ॥ यका । सका । यकाम् । तकाम्[2] ।

त्यकनश्च निषेधः* ॥ अधित्यका । उपत्यका[3] ।

आशिषि वुनश्च न* ॥ जीवका । भवका[4] ।

उत्तरपदलोपे न* ॥ देवदत्तिका । देवका । यज्ञदत्तिका । यज्ञका । क्षिपकादीनां न* ॥ क्षिपका । ध्रुवका[5] । चटका ।

---

दाक्षिणात्यिकेति । दाक्षिणायां दिशि भवा । 'दक्षिणापश्चात्पुरसस्त्यक्' 'किति च' इति वृद्धिः । अज्ञाताद्यर्थे कः । **इहत्यिका । क्वत्यिकेति** । अव्ययात् त्यप् । कः । उभयत 'उदीचामातः स्थाने यकपूर्वायाः' इति प्राप्तस्य विकल्पस्यापवाद इत्वम् ।

**न या** । पूर्वेण नित्यमित्त्वे प्राप्ते निषेधः । **यका । सकेति** । यत्तदोरकच् । त्यदाद्यत्वम् । टाप् । सत्वम् । या सा इति निर्देशोऽतन्त्रं[6] केवलं यत्तदोरुपलक्षणमेतदित्यभिप्रेत्याह । **यकां तकामिति** । ननु च यत्तदोरित्येव किं नोक्तम् । सूत्रवैचित्र्यार्थम्[7] । **अधित्यका । उपत्यकेति** । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन् । **जीवका भवकेति** । 'आशिषि च' इति वुन् । **देवदत्तिका । देवकेत्यादि** । देवदत्तयज्ञदत्तशब्दात् 'अनुकम्पायाम्' इति कनि कृते । अत्र प्रकरणे हलादौ प्रत्यये द्वितीयादचः परस्य लोपो वा वाच्यः इति द्वितीयादचः परस्य वा लोपः । **क्षिपकादीनामिति** । इत्वं नेत्यनुवर्तते । **क्षिपका ध्रुवकेति** । क्षिप् प्रेरणे । ध्रुव स्थैर्ये । आभ्याम् 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः[8] । ततोऽज्ञाताद्यर्थे कः । **चटकेति** ।

---

१. इर्न D₁, B₂, D₂, Bc₃. २. तकाम् dropped D₂, D₅, C, B₁; D₅ drops यकाम् also. ३. C drops it. ४. B₁ drops it. ५. ध्रुवका D₁. ६. °तन्त्रः Nc₁. ७. सूत्रे । वैचि° Bc₃. ८. कः । Dc₄, Dc₃; कः प्रत्ययः । Bc₃.

तारका ज्योतिषि* ॥ अन्यत्र तारिका । वर्णका तान्तवे* ॥ अन्यत्र वर्णिका । वर्तका शकुनौ प्राचाम्* ॥ उदीचां तु वर्तिका । अष्टका पितृदेवत्ये* ॥ अष्टिकान्या । सूतकादीनां वा* ॥ सूतका । सूतिका । पुत्रका । पुत्रिका । वृन्दारका । वृन्दारिका ।

**उदीचामातः स्थाने यकपूर्वायाः ॥७।३।४६॥**

यकपूर्वस्य स्त्रीप्रत्ययस्याकारस्य स्थाने योकारस्तस्य कात्पूर्वस्येत् स्याद्वापि[1] ॥ आर्यका । आर्यिका । चटकका[2] ।

---

चटति भिनत्ति गृहीतधान्यादिकं मुखेनेति चटका[3] । चट स्फुटभेदे । दण्डका । इष्टका । हलका । ध्रुवका । चरका । पिप्पका । एडका । अलका । करका । मेनका । कन्यका । एरका । इत्यादयोऽन्ये प्रयोगात् ज्ञेयाः। **तारकेति** । तरतेर्ण्वुल् । **वर्णका तान्तव** इति । तन्तूनां विकारः । ओरञ् । तान्तवः प्रावरणविशेषः । तत्र वर्णकेति इत्वाभावेन साधुः । वर्ण क्रियाविस्तारगुणवचनेष्विति चौरादिः[4] । ततो ण्वुल् । **अन्यत्र वर्णिकेति** । व्याख्यायिकेत्यर्थः । **वर्तकेति** । वृतु वर्तने । ण्वुल् । **अष्टका पैतृदेवत्ये** कर्मविशेषे[5] । अंशू[6] व्याप्तौ । अस्मात् 'इष्याशिभ्यां तकन्' इति तकन् । व्रश्चादिना षत्वम् । तिष्टुत्वम् । **अष्टिकान्येति** । अष्टौ परिमाणमस्याः । 'संख्याया अतिशदन्तायाः कन्' । **सूतकेत्यादयः** पृषोदराद्यन्तःपातिनस्ततः साधवः ।

**उदीचाम्** । नित्यमित्त्वे प्राप्ते विकल्पार्थं वचनम् । **यकपूर्वस्येति** । यकौ पूर्वौ यस्येति । यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः स्त्रीविषयस्याकारस्य प्रतिपत्त्यर्थमित्यभिप्रेत्याह । **स्त्रीप्रत्ययस्येति** । स्त्रीवाचकस्य प्रत्ययस्येत्यर्थः । **आर्यकेत्यादि**[7] । सर्वत्राज्ञाताद्यर्थे कः ।

---

१. °स्य इः D1, D5, B2, D2, इद्वा स्याद्वापि D3; After it—'क्षेपः' इति ह्रस्वः D1, B2, P; C. २. Dropped D2. ३. चटका । चाटिका D2. ४. चौरादिकः Dc3. ५. कर्मणि Nc1. ६. अशूङ् Nc1, Bc3. ७. आर्यिकेति Bc1, Bc3, Dc3.

चटकिका। आतः किम्। साङ्काश्ये भवा साङ्काश्यिका। यकेति किम्। अश्विका। स्त्रीप्रत्ययः किम्। शुभंयिका।

धात्वन्तयकोस्तु नित्यम्* ॥ सुनायिका[1]। सुपाकिका।

---

'केणः' इति ह्रस्वः। साङ्काश्ये भवा साङ्काश्यिकेति। संकाशेन निर्वृत्तं साङ्काश्यम्। 'वुञ्छण्—' इति संकाशादित्वात् ण्यः। ततो भवार्थे 'धन्वयोपधाद्वुञ्' इति वुञ्। स च साङ्काश्ये भवां स्त्रियमाहेति भवति स्त्रीप्रत्ययो यपूर्वश्च न तु स आकार इति कृत्वा तस्य स्थाने 'युवोरनाकौ' इति अकादेशे कृते अकारो जातस्तस्येत्त्वं विकल्पेन न किं तु नित्यमेव जातम्। ननु च यद्यपि[2] वुञ् दैवगत्या स्त्रियमाह तथापि नायं स्त्रीप्रत्ययः स्त्र्यधिकारविहितत्वाभावात्। स्त्र्यधिकारविहित एव हि स्त्रीप्रत्ययः। अतो द्व्यङ्गविकलमिति चेत् कश्चिदाशङ्केत तदा तं प्रत्येवं ब्रूयात् साक्षात् सूत्रे स्त्रीप्रत्ययस्यैतन्नास्तीति कृत्वा प्रत्युदाहृतमिति[3] न द्व्यङ्गविकलता। तथा चानन्तरमेव उक्तार्थलभ्यता स्त्रीप्रत्ययस्येत्येतस्यास्माभिः कार्यकालं संज्ञापरिभाषमिति षष्ठी स्थाने योगेति परिभाषाविधावेवोपतिष्ठत इति अत इत्यस्य विशेषणे आत इत्यत्रानुवादे परिभाषानुपस्थानादथवा आत इत्यस्य विशेषणत्वेनाप्रधानत्वात् परिभाषाया अनुपस्थानात् स्थानषष्ठीत्वं न ज्ञायेतेति स्थानग्रहणम्। शुभंयिकेति। शुभं याति। 'आतो मनिन्—' इत्यादिना यातेर्विच्। ततः शुभंया इति स्थिते कप्रत्ययः। 'केणः' इति ह्रस्वः। अयमाकारः स्त्रीप्रत्ययो न भवतीति विकल्पो न। नित्यमेवेत्त्वं स्यात्। सुनयिकेति। णीञ् एरच्। शोभनो नयो यस्याः सा सुनया। ततः कः। 'केणः' इति ह्रस्वः। सुपाकिकेति। पचो भावे घञ्। 'चजोः—' इति कुत्वम्। शोभनः पाको यस्याः[4]। पूर्ववत् कः। ह्रस्वः।

---

१. सुनायिका D5. २. यदि No1. ३. °मिति कृत्वा Bc3. ४. पाकोस्याः। टाबादि पूर्ववत्°। Bc3, Dc4, पाको यस्याः। टाबादि पूर्ववत् Dc3.

**भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥७।३।४७॥**

एषामत[1] इद्वा स्यात् नञ्पूर्वाणामपि ॥ भस्त्रका । भस्त्रिका । अभस्त्रका । अभस्त्रिका । एषका[2] । एषिका । अजका । अजिका । [3]ज्ञिका । ज्ञका[4] । स्विका । स्वका । द्वके[5] । द्विके ।

एषाद्वा* ॥ एतयोर्नञ्पूर्वयोर्नेत्वम् ॥ अनेषका । अद्वका[6] ॥ भस्त्रादेरुपसर्जनत्वेपि वा इत्वम् । निर्भस्त्रिका । निर्भस्त्रका ।

---

**अभस्त्रकेति** । बहुव्रीहिस्तत्पुरुषो वा । **द्वके द्विके** इति । अकच् । **एषाद्वा** । **एतयो**रिति । अयं भावः । एतयोरकचि कृते पश्चान्नञ्समासः । अथवा पूर्वमुभयथापि समासादुत्पन्नायां विभक्तौ त्यदाद्यत्वे सति टाप् स्यात् सोन्तवर्तिन्या विभक्त्या सुबन्तात् पर इति इत्वस्याप्राप्तेरेव विकल्पाभावः । प्राप्तिपूर्वकत्वाद्विकल्पस्येति । एवं चेत् स्वशब्दस्यापि नञ्पूर्वस्येत्यत्वं न स्यात् पूर्ववत् । मैवम् । स्वशब्दस्य ज्ञातिधनाख्यायामसर्वनामत्वादकच् नास्त्येवेति कप्रत्यये कृते सुपः परष्टाप् न भवति केन व्यवधानादितीत्वं स्यादेवेति नञ्पूर्वस्यापि विकल्पः । **भस्त्रादे**रिति । एतच्च नञ्पूर्वाणामपीत्यस्मादपिशब्दाल्लभ्यते । स हि अन्यपूर्वाणां केवलानां च विकल्पो यथा स्यादित्येवमर्थः । यदि ह्यन्यपूर्वाणां केवलानामपि[9] वार्यं विधिरिष्यते तर्हि नञ्पूर्वाणामिति[10] वचनं व्यर्थम् । यतो नञादिपूर्वाणां तदन्तविधिना स्यात् केवलानां व्यपदेशिवद्भावेन । अयमेवार्थो मन्दबुद्धिप्रत्ययार्थं नञ्पूर्वाणामपीत्यनेनानूद्यते ।

---

१. °मतः स्थाने C. २. C and P drop these instances; C, $D_2$ have द्विके; $D_1$ drops from एषका to स्वका; $Bc_3$, $D_3$, $D_4$ drop from एषका to स्वका. ३. Before it—अनजिका । अनजका । अज्ञका । अज्ञिका $B_2$. ४. After it—भज्ञका । अज्ञिका $D_2$. ५. द्वके । द्विके dropped $D_2$. ६. $B_1$, $B_2$, $D_5$ have अद्वके ।. ७. द्विके । द्वके इति $Bc_3$. ८. Dropped $Dc_3$. ९. केवलानामपि $Nc_1$, $Bc_3$. १०. अपि dropped $Bc_1$, $Dc_3$.

## अभाषितपुंस्काच्च ॥७।३।४८॥

एतस्मादत इत् स्याद्वा ॥ गङ्गका । गाङ्गिका । अगङ्गका । अगाङ्गिका । परमगङ्गका । परमगाङ्गिका ॥ बहुव्रीहौ तु नित्यम् ॥ अखट्विका ।

---

**अभाषित** । **एतस्मादिति** । अभाषितपुंस्काद्विहितस्यातः स्थाने योकारस्तस्य इद्वा स्यादित्यर्थः । **गङ्गकेति** । कप्रत्ययः । ह्रस्वः । गङ्गाशब्दोयमाविष्टलिङ्गो नित्यस्त्रीलिङ्गः । **अगङ्गिकेति** । 'नञ्' इति तत्पुरुषः । **परमगाङ्गिकेति** । 'सन्महत्—' इति तत्पुरुषः । ततः 'प्रागिवात् कः' । ततः 'केणः' इति ह्रस्वः । **बहुव्रीहौ त्विति** । तुर्विशेषे । बहुव्रीहौ समासे तु विशेषः । तमेव विशेषं दर्शयति । **नित्यमिति** । **अखट्विकेति** । अखट्विका । अत्र नित्यमित्त्वमित्यर्थः । अयं भावः । न विद्यते खट्वा यस्याः सा अखट्वा । अल्पा अखट्वा 'अल्पे' इति कः । 'केणः' इति ह्रस्वः । तस्य नित्यमेवेत्वं न विकल्पः । भाषितपुंस्काद्बहुव्रीहेर्विहितस्यातः स्थाने अकारस्य विहितत्वादिति । यदा तु बहुव्रीहौ 'शेषाद्विभाषा' इति कपि 'आपोन्यतरस्याम्' इति ह्रस्वः क्रियते तदा त्वभाषित-पुंस्काद्विहितस्यातः स्थाने जातोकार इति कृत्वा भवति विकल्पः । अविद्यमाना खट्वा यस्याः सा अखट्विका । यद्वा खट्वामतिक्रान्ता अतिखट्वा । अल्पा अतिखट्वा अतिखट्विकेत्यत्र प्रादिसमासे कृते उपसर्जनह्रस्वत्वेन ततष्टापि ततः कप्रत्यये पुनः 'केणः' इति ह्रस्वत्वम् । भाषितपुंस्कात् तत्पुरुषात् विहितस्यातः स्थाने विहितमिति विकल्पो न । 'आत्' । 'नञ्पूर्वाणामपि' इति निवृत्तम् । पूर्वसूत्रे चानुकृष्टत्वात् । इत्वापवादः । 'केणः' इति ह्रस्वत्वापवादश्च योगः

---

१. अभाषितपुंस्कादत इद्वा स्यात् D3. २. इद्वा स्यात् C, Bc3, D4. ३. न विद्यमाना खट्वा यस्याः सा before it in B1. ४. नित्यं Dc3. ५. भवति dropped Nc1. ६. °ह्रस्वत्वे Dc3, Dc4.

**आद्राचार्याणाम् ॥७।३।४९॥**

अभाषितपुंस्कादतः स्थाने आद्वा स्यात् । गङ्गाका । अगङ्गाका । पक्षे प्रागुक्तम् । उक्तपुंस्कस्य तु शुभ्रिका ।

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ॥४।१।१५॥**

टिदादिभ्योनुपसर्जनेभ्यः स्त्रियां ङीप् स्यात् ॥ यस्येति च । कुरुचरी । नैदट् । नदी । सौपर्णेयी ।

---

**आचार्याणामिति** । उदीचामित्युक्तम् । ततोन्येषामाचार्याणामित्यर्थः । अथवा पाणिनेराचार्यस्येति । गुरुत्वाद्बहुवचनम् । सर्वथा त्रैरूप्यं स्यादित्यभिप्रेत्याह । **पक्षे प्रागुक्तमिति** ।

**टिड्ढाणञ्** । 'अतः' इत्यनुवर्तते सर्वत्र तत्संभवे सति विशेषकं स्यात् । **अनुपसर्जनेभ्य इति** । 'अनुपसर्जनात्' इत्यस्मादधिकारसूत्रादेतल्लभ्यते । **कुरुचरीति** । टित उदाहरणम् । 'चरेष्टः' इति टः । **नदट् इति** । पचादौ नदडिति टिदयं पठ्यते । तेन नदीत्यत्र ङीप् । पचमानेत्यादौ स्थानिवद्भावेन शानचष्टित्त्वेपि ङीप् न । एकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति लटो ग्रहणं नास्तीति हेतोः । ल्युडादेस्तु द्व्यनुबन्धकत्वेपि टित्करणस्य प्रयोजनान्तराभावात् तत्सामर्थ्यादेवास्तीह ग्रहणम् । लटस्तु टित आत्मनेपदानां टेरेत्वं प्रयोजनम् । ननु पठिता विद्येत्यत्रापि ङीप् स्यात् । प्रत्ययभक्तस्येडागमस्य टित्त्वेन प्रत्ययस्यापि टित्त्वात् । मैवम् । सायं चिरमित्यत्र तुटष्टित्त्वेपि पुनष्ट्युट्युलू प्रत्यययोष्टित्करणात् ज्ञायते नात्रागमटित्त्वं ङीप्निमित्तमिति । **सौपर्णेयीति** । ढस्य । सुपर्णशब्दाज्जातिलक्षणङीषन्तादपत्यार्थे

---

१. गङ्गका । गङ्गाका । पक्षे प्रागुक्तम् । गङ्गिका $B_2$; after it—गङ्गका $D_2$. २. तु न शुचिका $D_2$. ३. Dropped $D_3$. ४. त्रिरूपं $Dc_4$. ५. विशेषणकं $Nc_1$, $Bc_3$, $Dc_4$. ६. अत्र dropped $Nc_1$. ७. °निवृत्तमिति $Nc_1$.

ऐन्द्री । औत्सी[1] । उरुद्वयसी । उरुदघ्नी । उरुमात्री[2] । पञ्चतयी । आक्षिकी[3] । लावणिकी[4] । यादृशी[5] । इत्वरी । आढ्यंकरणी ॥
अनुपसर्जनात् किम् । बहुकुरुचरा ॥

---

'स्त्रीभ्यो ढक्' इति ढक् । 'शिलाया ढः' । 'ढश्छन्दसि' । इत्येतयोर्ढयोः स्त्रियां प्रयोगाभावात् । अननुबन्धग्रहणे न सानुबन्धकस्येति परिभाषात्र न प्रवर्तत इत्यभिप्रेत्य ढगुदाहृतः । ऐन्द्रीति । अणः । इन्द्रस्येयम् । 'तस्येदम्' इत्यण् । औत्सीति । अञः । उत्सस्येयम् । 'उत्सादिभ्योऽञ्' । 'शार्ङ्गरवाद्यञो ङीन्' इति सिद्धे पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुम् । यदि तत्र 'जातेः' इति वर्तते तर्हि स्पष्टार्थम् । उरुद्वयसीति । द्वयसचः । उरुदघ्नीति । दघ्नचः । उरुमात्रीति । मात्रचः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' । पञ्चतयीति । तयपः । 'संख्याया अवयवे तयप्' । आक्षिकीति । ठकः । 'तेन दीव्यति' इति ठक् । लावणिकीति । ठञः[6] । लवणं पण्यमस्याः । 'लवणाट्ठञ्' । ठक्ठञोर्भेदेनोपादानं ठनादिनिवृत्त्यर्थम् । तेन दण्डोऽस्त्यस्या दण्डिका काशिकेत्यादौ न ङीप् । यादृशीति । कञः । 'त्यदादिषु दृशोऽनालोचने कञ्च' । इति कञ् । सानुबन्धकग्रहणम् 'आतोऽनुपसर्गे कः' इत्यादिनिवृत्त्यर्थम् । इत्वरीति । क्वरपः । 'इण्नशजिसर्तिभ्यः क्वरप्' । सानुबन्धकग्रहणं वरचो निवृत्त्यर्थम्[7] । ईश्वरेति । आढ्यंकरणीति । ख्युनः । अनाढ्यः आढ्यः क्रियते अनया । 'आढ्यसुभग:—' इत्यादिना ख्युन् । ख्युनः सानुबन्धग्रहो लाघवार्थः[8] । अन्यथा[9] आमि नुटि दीर्घत्वे[10] च गुरूच्चारणं स्यात् ख्यूनामिति । अनुपसर्जनात् किमिति । अनुपसर्जनादित्युपसर्जननिषेधः किमर्थमित्यर्थः[11] । उत्तरमाह । बहुकुरुचरेति । बहवः कुरुचरा अस्यामिति बहुव्रीहिः । तस्यान्यपदार्थप्रधानत्वात् । चर इति । टिदत्रोपसर्जनमिति ङीप् न ।

---

१. Before it—अण् $B_2$. २. $D_1$ drops उरुमात्री. ३. ठकुठञोराक्षिकीति $B_2$, $D_2$; ठकुठञोराक्षिकी । $Bc_3$. ४. लावणकी $D_3$. ५, C has आध्यात्मिकी before it. ६. ठञ् $Nc_1$. ७. सानुबन्धकग्रहो $Dc_3$, $Dc_4$. ८. लाघवार्थम् । $Nc_1$, $Bc_3$. ९. अथवा $Nc_1$. १०. दीर्घत्वेपि $Nc_1$, $Bc_3$. ११. किमर्थ इत्यर्थः $Bc_3$.

णेऽपि क्वचित्* ॥ चौरी ॥ क्वचिन्न । दाण्डा ।

नञ्स्नञीकक्ख्युंस्तरुणतलुनानां च* ॥ स्त्रैणी । पौंस्नी । शाक्तीकी[2] । तरुणी[3] । तलुनी[4] ।

**यञश्च** ॥४।१।१६॥

यञन्तात् स्त्रियां ङीप् स्यात् ॥ अकारलोपे कृते

---

**णेऽपि क्वचिदिति** । ङीबिति शेषः । एतच्च 'कार्मस्ताच्छील्ये' इति सूत्राद् गम्यते । तच्च तद्धिते तत्रैव प्रतिपादयिष्यामः । **चौरीति** । चुरा शीलमस्या इति । 'छत्रादिभ्यो णः' इति णः । णित्त्वाद्वृद्धिः । **दाण्डेति** । दण्डः प्रहरणमस्यां क्रीडायाम् । 'तदस्यां प्रहरणम्' इति क्रीडायां ण इति णः । **स्त्रैणी** । **पौंस्नीति** । स्त्रिया इयं पुंस इयम् । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्स्नञौ । **शाक्तीकीति** । शक्तिः प्रहरणमस्याः । 'शक्तियष्ट्योरीकक्' । **तरुणी** । **तलुनीति** । वयो यदा न विवक्ष्यते तदेदं[5] वयोविवक्षायां तु गौरादिपाठाद् ङीषा भाव्यम् । तत्र स्वरे विशेषः । 'त्रोरश्च लो वा'[6] इति उनन्प्रत्ययान्तावेतौ तित्स्वरेणाद्युदात्तौ । तत्र ङीपि सति आद्युदात्तत्वमेव स्यात् । ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वम् ।

**यञः** । पृथग्योगकरणमुत्तरार्थम् । **अकारलोपे कृते इति** । गर्गस्य गोत्रापत्यम् । 'गर्गादिभ्यो यञ्' । गार्ग्यशब्दात् ङीप् । गार्ग्य इति स्थिते 'यस्येति च' इत्यकारलोपे कृते सतीत्यर्थः ।

---

१. स्त्रीषु भवा स्त्रैणी । पुंसि भवा पौंस्नी । C. २. शाक्तिकी $B_1$; After it—'शक्तियष्ट्योरीकक्' । आश्विकी $D_5$. ३. Before this—याष्टकी $B_2$, याष्टीकी $D_2$. ४. After this—$B_1$, $D_4$ have साधारणात् स्वार्थेञो विकल्पोक्तेर्ङीपोपि विकल्पोक्तिः । साधारणा । साधारणी । तलुनी dropped $Bc_3$. ५. तदेवं $Nc_1$, $Bc_3$. ६. लः' इति $Dc_3$, $Dc_4$.

**हलस्तद्धितस्य** ॥६।४।१५०॥

हल[1] उत्तरस्य तद्धितयकारस्य ईति[2] लोपः स्यात् ॥ गार्गी[3] । अनपत्यान्न ङीप् । द्वीपे भवा द्वैप्यां[4] ।

**प्राचां ष्फ तद्धितः** ॥४।१।१७॥

यञन्तात् प्राचा[5] मते स्त्रियां ष्फः स्यात् । स च तद्धितसंज्ञः[6] ।

**षः प्रत्ययस्य** ॥१।३।६॥

प्रत्ययस्यादिः[7] षः इत् स्यात् ॥

---

हलः । हलन्तस्येति । अन्तशब्दोयं समीपवाची । हलन्तः[8] हलः समीपवर्ती यो[9] यकारस्तस्य हल उत्तरस्येति यावत् । **अनपत्यादिति** । न विद्यतेपत्यमर्थो यस्य सोयमनपत्यस्तस्मादनपत्यात् । यञो ङीप् न स्यादित्यर्थः । **द्वीपे भवा द्वैप्येति** । 'द्वीपादनुसमुद्रं यञ्' इति यञ् । द्वीपे भवेति तु विग्रहवाक्यमनपत्यार्थत्वद्योतनार्थम् ।

**प्राचाम्** । षकारो ङीषर्थः । ननु च स्त्रीत्वस्य ष्फप्रत्ययेनैवोक्तत्वात् कथं ङीष् स्यात् । उच्यते । प्रत्ययद्वयेनेह स्त्रीत्वं व्यज्यते ष्फेन ङीषा च । न त्वेकेन ष्फेनैव । तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम् । उत्तरसूत्रात् सर्वत्रग्रहणमिहानुकृष्यते । बाधकबाधनार्थम् । तेन 'आवट्याच्च' इति परमपि चापं बाधित्वा प्राचां मते ष्फ एव स्यात् । आवट्यायनीति । उदीचा तु आवट्या ।

**षः** । प्रत्ययस्येति किम् । षट् दन्ताः अस्य षोडन् । तमाचष्टे । णिचि पचाद्यच् । षोडः । अनुकम्पिता षडङ्गुलिः षडिकः । 'बह्वचो मनुष्यनाम्नष्ठज्वा' । 'ठाजादावूर्ध्वं द्वितीयादचः'

---

१. हलः परस्य $D_3$, $D_4$; हलन्तस्य Com. २. ईपि $B_2$, $Bc_3$; ईति परे $D_4$. ३. वात्सी $Bc_3$. ४. $B_1$ has after it—द्वीपादनुसमुद्रं यञ् ।; 'द्विगोर्लुगनपत्ये'। द्विगोर्निमित्तं यस्तद्धितोनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । द्वीपे भवा द्वैप्या । $D_5$. ५. $B_1$ has प्राचां मते after स्यात्. ६. °संज्ञकः C. ७. प्रत्ययादिः $B_1$. ८. हलोन्तः $Nc_1$. ९. यस्य $Dc_3$.

## आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥७।१।२॥

प्रत्ययादिभूतानां फादीनामायनादयः क्रमादादेशाः स्युः ॥ कृत्तद्धितेति प्रातिपदिकसंज्ञायां

---

इति द्वितीयादचः परस्य लोपः। 'यस्य—' इति लोपः। अन्तर्वर्तिनीं विभक्तिमाश्रित्य षान्तस्यावधेः पदत्वात् जश्त्वम्। अत्रोभयत्र षस्येत्संज्ञायां स्त्रीविवक्षायां ङीष् प्रसज्येत। आदिः किम्। 'अविमह्योष्टिषच्' । अविषः। महिषः।

**आयन** । शास्त्रलाघवार्थमुपदिष्टानां फादीनामनेनायनादयो विधीयन्ते। ते च फादेर्व्यञ्जनमात्रस्यैव स्युः। अन्ते 'घाम्' इत्यनच्क-निर्देशात्। अन्यथा 'घानाम्' इत्यवक्ष्यत्। तत्र फस्य आयन्। ढस्य एय्। खस्य ईन्। छस्य ईय्। घस्य इय् इत्यर्थः। प्रत्ययग्रहणं किम्। ढौकते खनति। छिनत्ति। घूर्णते। आदिग्रहणं किम्। उरुदघ्नम्। एते आयन्नादय उपदेशकाल एव स्युः। पश्चात् प्रत्ययाद्युदात्तत्वम्। लाघवार्थम् 'ऋतेः छङ्' इत्येवं वाच्ये 'ऋतेरीयङ्' इत्याह तत् ज्ञापयति धातुप्रत्ययानामादेशा न भवन्तीति। तेन घञादीनां न। 'प्राचामवृद्धात् फिन् बहुलम्' इति फिनो 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तार्थं नित्वं ज्ञापयत्यायनादिनां नकारस्येत्संज्ञा नेति। अन्यथायनो नित्त्वात् फिनो नित्त्वं व्यर्थं स्यात्। कृत्तद्धितेतीति। गार्ग्यायणशब्दस्य प्रातिपदिकसंज्ञायाम्।

---

१. °मायनादेशाः C; क्रमादायनादयः D3, D1, B2. २. क्रमात् स्युः C; P, drops क्रमात्. ३. ङीप् Bc1. ४. प्रसज्यते Dc3. Dc4. ५. Before it—फक्कति Dc3, Dc4. ६. घूर्णुते Bc3.

## षिद्गौरादिभ्यश्च ॥४।१।४१॥

**षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष्[1] स्यात् ॥ गार्ग्यायणी ।**

---

एतच्च 'ङ्याप्प्रातिपदिकात्' इत्यधिकारेणोच्यमानस्य 'षिद्गौरादिभ्यश्च' इत्यस्य[2] पीठिकारचनापरम् ।

षित् । 'अन्यतो ङीष्' इति व्याख्याय 'षिद्गौर—' इति ङीष् इति वक्ष्यते । तत्र 'सूर्यतिष्य—' इत्यादि सूत्रं व्याख्याय कांश्चिद् गौरादीन् पठिष्यति तत्र समग्रं गणं पठिष्यामः । अत्र ह्येतत्सूत्रव्याख्यानं प्रासङ्गिकम् । 'प्राचां ष्फ तद्धितः' इति सूत्रव्याख्यानेनैव व्याख्यातप्रायत्वादुपेक्षितं सूत्रद्वयं व्याख्यायते । 'सर्वत्र लोहितादिकतन्तेभ्यः' । ४ । १ । १८ ॥ पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् । यञन्तेभ्यो लोहितादिभ्यः कतपर्यन्तेभ्यः स्त्रियां ष्फः स्यात् । कतन्तेभ्य इति निपातनात् पररूपम् । लोहितादिगणो[3] गर्गाद्यन्तर्गणः । तत्र कपिशब्दात् परो यः कतशब्दः स्वतन्त्रं प्रातिपदिकं तदिहावधित्वेन गृह्यते न कुरुकतेति प्रातिपदिकावयवः । लौहित्यायनी । शांसित्यायनी[4] । बाभ्रव्यायणी । गर्गादिगणे कपि । कत । कुरुकत । अनडुह् । कण्व । शकल इत्यनयानुपूर्व्या प्रातिपदिकानि पठ्यन्ते । तत्र वार्तिककारोऽन्यथा पठितव्यमित्याह[5] ।

'कण्वात्तु शकलः पूर्वः[6] कतादुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ[7] तत्र प्रयोजनम्' ॥ इति ।

शकलशब्दः कण्वात् पूर्वः कतशब्दादुत्तर इष्यते । एतदुक्तं भवति । कुरुकत अनडुह इत्येतौ शब्दौ एतत्स्थानादपकृष्य[8] लोहितादिषु कुत्रचित् स्थाने पठितव्यौ । शकलशब्दस्तु कतिकण्वशब्दयोर्मध्ये पठितव्यः कत शकल कण्वेति । किमेवं सति स्यादित्यत आह । पूर्वोत्तरावित्यादि । तच्छब्देन शकलशब्दस्य परामर्शः ।

---

१. ङीष् स्यात् । स्वरे विशेषः । D5. २. इति तस्य Nc1. ३. लोहितादिर्गणो Nc1, Bc3. ४. शांसित्यायनी Bc3, Dc3, Dc4; Kas'ikâ has शाशित्यायनी. ५. °मित्याशङ्क्याह Dc3. ६. पूर्वं Dc3. ७. फाणौ Bc1; स्फाणौ Bc3. ८. अतःस्थाना° Bc3, Dc3, Dc4.

**वयसि प्रथमे** ॥४।१।२०॥

प्रथमवयोवाचिनोदन्तात् स्त्रियां ङीप् स्यात् ॥ कुमारी ।

---

शाकलशब्दोन्त आदिश्च यथाक्रमं ययोस्तौ तदन्तादी पूर्वोत्तरौ गणौ स्तः । पूर्वो गणो लोहितादिः शाकलान्तः स्यात् । उत्तरो गणः कण्वादिः शाकलादिः स्यात् । तथा च किं प्रयोजनमत आह । ष्फाणावित्यादि । ततश्चायं सूत्रार्थः स्यात् । कतशब्दोन्तो येषां ते कतन्ता लोहितादयः । कतस्यान्तः कतन्तः शाकलशब्दः । कतन्ताश्च कतन्तश्च कतन्ताः । स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यत इति । बहुव्रीहेः शेषः । ततो लोहितादिसूत्रे कतन्तस्यान्त इति तत्पुरुषसंगृहीतस्य यञन्तस्य शाकलशब्दस्य शाकल्यायनीति ष्फः स्यात् । 'कण्वादिभ्यो गोत्रे' इत्यत्र पूर्ववदेकशेषात् कण्वस्यादिरिति संगृहीतस्य यञन्तस्य शाकलशब्दस्य शाकल्यस्य इमे छात्राः शाकला इत्यण् स्यात् इति ष्फाणौ प्रयोजनम् । 'कौरव्यमाण्डूकाभ्यां च' ॥४।१।१९॥ कौरव्यमाण्डूकाभ्यां स्त्रियां ष्फः स्यात् । कुरुशब्दात् कुर्वादिण्ये कृते मण्डूकशब्दात् ढक् च मण्डूकात् इत्यणि च यथाक्रमं टाप्ङीपोरपवादः ष्फः । कौरव्यायणी । माण्डूकायनी । कौरव्येति ण्यान्तस्य ग्रहणात् 'तस्येदम्' इत्यणन्तात् कौरवीति स्यात् । आसुरेरुपसंख्यानम् । आसुरायणी ।

**वयसि** । कालकृता शरीरावस्था यौवनादिर्वयः । **कुमारीति** कुमारीशब्दः प्रथमवयसि रूढः । यस्तु वृद्धायामपि वृद्धकुमारीति प्रयोगः स कुमारीसाधर्म्यात् पुंयोगाभावात् । भवति हि साधर्म्यात् ताच्छब्द्यम् । यथा गौर्वाहीक इति । ननु च उत्तानशया लोहितपादिकेत्यत्रापि ङीषा भाव्यम् । यतो बाल्यमत्र गम्यते । बाल्ये हि उत्तानशया लोहितपादिका स्यात् । मैवम् । नैतौ वयोवचनौ किं तु उत्तानशयनलोहितपादवचनौ । वयस्तु प्रकरणादिना गम्यते ।

---

१. C has after it—किशोरी । कलभी ।. २. फाणा° $Bc_1$; स्फाणा° $Bc_3$. ३. सकल° $Nc_1$, $Dc_1$. ४. शरीराविन्यवस्था $Dc_3$. ५. °पादतावचनौ $Dc_4$, $Bc_3$, $Dc_3$.

वयस्यचरमे इति वाच्यम्* ॥ चिरण्टी । चरमे तु । वृद्धा ।
अदन्तात् किम् । शिशुः ॥ कन्याया नेष्टः* ॥

---

**वयस्यचरम** इति । अनन्ते वयसीति वाच्यमित्यर्थः । एतच्च येषां चत्वारि त्रीणि वा वयांसीति पक्षस्तन्मते वक्तव्यम् । यावता चिरण्टीवधूटीशब्दयोः प्राज्ययौवनस्त्रीवाचिनोर्द्वितीयवयोवाचित्वात् प्रथमवयोवाचित्वं न । येषां च द्वे एव वयसी तन्मते तु न वक्तव्यम् । तन्मते यौवनस्यापि प्रथमवयोरूपत्वात् । तथा च मतभेदाः । केचित् कौमारयौवनमध्यत्ववृद्धत्वानि चत्वारि वयांसीच्छन्ति । तथा चाहुः ।

'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि' ॥

अन्येपि कौमारयौवनस्थविरत्वानि त्रीणीच्छन्ति । तथा चाहुः ।

'पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति' ॥ इति ।

केचित्तु बाल्यमध्यत्ववृद्धत्वानि त्रीणीच्छन्ति । तथाहुः ।

'आषोडशाद् भवेद्बालो यावत् क्षीरनिवर्तकः ।
मध्यमः सप्ततिर्यावत् परतो वृद्ध उच्यते' ॥ इति ।

केचित्तु द्वे वयसीच्छन्ति । यावत्यो वृद्धिमत्योवस्थास्ताः सर्वा राशीकृत्य प्रथमं वयः । यास्त्वपचयवत्यस्ता राशीकृत्य द्वितीयम् । तथा चोक्तम् । 'वर्द्धतां यावदनेन वर्धितव्यं पश्चादपायेन युज्यताम्' इति । **कन्याया** नेष्ट इति । 'कन्यायाः कनीन च' इति निर्देशात् ज्ञापकादिति भावः ।

---

१. चिरिण्टी D1. २. B1 has स्थविरा after it. ३. तु Bc3, Dc3, Dc4. ४. प्रथमे Dc3, Dc4. ५. करिष्यति Dc3. ६. अन्ये तु Bc3, Dc3. ७. स्थविरीभावे Bc3, Dc3, Dc4.

**द्विगोः ॥४।१।२१॥**

द्विगुसमासादतो ङीप् स्यात् स्त्रियाम् ॥ पञ्चपूली । अजादित्वात् त्रिफला ।

**अपरिमाणबिस्ताचितकम्बल्येभ्यो**

---

**द्विगोः**। पञ्चपूलीति। पञ्चानां पूलानां समाहारः। 'तद्धितार्थ—' इति समाहारे द्विगुः। अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीलिङ्गता। अजादित्वादिति। त्रिफलेति। अजादिषु द्रष्टव्य इति भावः। त्रयाणां फलानां समाहारः।

अपरि। पूर्वेण प्राप्तो ङीप् प्रतिषिध्यते। बिस्तादीनां परिमाणार्थं ग्रहणम्। परितः सर्वतः आरोहपरिणाहाभ्यां मानं परिमाणं प्रस्थाद्यं न संख्या कालश्च। तथोक्तम्।

'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः' ॥ इति।

कालसंख्ययोरपरिमाणत्वं ज्ञापकात्। तथा हि। यदयं 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्येव द्विसांवत्सरिकः द्विषाष्टिकः इत्यादावुत्तरपदवृद्धौ सिद्धायां 'संख्यायाः संवत्सरसंख्यस्य च' इति संख्यासंवत्सरग्रहणं करोति तज् ज्ञापयति कालः संख्या परिमाणं नेति। अत एवात्रात्रार्यैर्द्वित्रिवर्षेत्युदाहृतम्। 'कालाः परिमाणिना' इत्यत्र तु कालस्यौपचारिकं परिमाणत्वमित्यविरोधः।

---

१. स्त्रियां ङीप् स्यात् C, $D_3$; ङीष् $D_1$, $D_5$. २. After this—संज्ञा छन्दसि। एभ्यो ङीप् स्यात्। केवली। मामकी। भागधेयी च। लोके तु केवलेत्यादि $D_2$. ३. पञ्चमूलीति $Nc_1$. ४. मूलानां $Nc_1$. ५. ङीष् निषिध्यते। $Bc_3$, $Dc_3$. ६. निषिध्यते $Nc_1$, $Dc_4$. ७. संख्या च $Bc_3$, $Dc_3$. ८. °द्विवर्षि (वार्षि?) के° $Nc_1$; द्विवार्षिके° $Bc_3$.

**न तद्धितलुकि ॥४।१।२२॥**

अपरिमाणान्ताद् बिस्ताद्यन्ताच्च द्विगोस्तद्धितलुकि न ङीप्[1]। पञ्चाश्वा । द्विवर्षा[2] । द्विबिस्ता[3] । द्व्याचिता[4] । द्विकम्बल्या । परिमाणात्तु[5] द्व्याढकी* । 'अध्यर्ध—[6]' इति ठको लुक् ॥

पञ्चाश्वा । द्विवर्षेति । अपरिमाणान्तस्योदाहृतिः । पञ्चभिरश्वैः क्रीता । 'तेन क्रीतम्' इति ठक् । 'तद्धितार्थ—' इति द्विगुः । 'अध्यर्धपूर्व—' इति ठको लुक् । द्विवर्षेति । द्विवर्षे[7] भूता । 'तमधीष्टो भृतो भूतो भावी' इत्यनेन विहितस्य ठको 'वर्षाल्लुक्—' इति पाक्षिको लुक् । चित्तवत्त्वे तु प्रत्ययार्थस्य विवक्षिते 'चित्तवति नित्यम्' इति नित्यमेव लुक् । द्विबिस्तेति । द्वौ बिस्तौ पचति । 'संभवत्यवहरति पचति' इति ठक् । 'अध्यर्ध—' इति ठको लुक् । केचिद् बिसशब्द[8] उन्मानं मन्यन्ते । 'सुवर्णबिस्तौ हेम्नोक्षे' इति । बिस्तग्रहणादुन्मानमपि परिमाणग्रहणेन गृह्यत इति । तन्मते ठञो[9] लुक् । एवं द्वावाचितौ पचति । 'आचितो दशभारा:[10]' । द्व्याचिता । द्विकम्बल्या । द्वाभ्यां कम्बलाभ्यां क्रीता । कम्बल्यमूर्णाशतम् । 'कम्बलाच्च संज्ञायाम्' इति यत् । द्व्याढकीति । द्वौ आढकौ पचति । 'आढकाचितपात्रात् खोऽन्यतरस्याम्' । इति वर्तमाने 'द्विगोः ष्ठंश्च' इति ठञ्[11]खञोरभावपक्षे[12]ऽप्यनुज्ञातष्ठञ् । तस्य च 'अध्यर्ध—' इति लुक् स्यादित्याह । अध्यर्धेति ठको लुगिति । तद्धितलुकिति[13] किम् । पञ्चानामश्वानां समाहारः पञ्चाश्वी ।

१. C and $Bc_3$ have after it 'अध्यर्ध—' इति ठको लुक् |; $D_5$ has 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' । अध्यर्धपूर्वात् द्विगोश्च परस्यार्हीयप्रत्ययस्य लुक् स्यात्. २. कालसंख्यावचनपरिमाणे द्विवर्षा $B_2$. ३. Before it—द्विशता C. ४. $B_1$ drops द्व्याचिता । द्विकम्बल्या and has 'तेन क्रीतम्' इति ठक् |; $D_1$, $B_2$, $D_3$, $Bc_3$ drop द्व्याचिता । द्विकम्बल्या. ५. परिमाणे तु C, $B_2$. ६ C drops 'अध्य......लुक् ; $Bc_3$ drops this and has instead प्रमाणे लुक् द्विगोर्नित्यमिति द्वयसो लुक् |. ७. द्वे वर्षे $Bc_3$, $Dc_3$, $Dc_4$. ८. °शब्दस्तु $Nc_1$. ९. ठको $Bc_1$. १०. After it—स्युः $Dc_1$. ११. ठन् $Dc_3$, $Dc_4$. १२. °भावे पक्षे $Bc_3$. १३. Before it—द्विवर्षादौ तूक्तौ विशेषो ज्ञेयः । $Dc_3$; द्विवर्षादौ तूक्ते विशेषो ज्ञेयः । $Dc_4$.

**काण्डान्तात् क्षेत्रे ॥४।१।२३॥**

परिमाणवाचिकाण्डान्ताद् द्विगोस्तद्धितलुकि न [1]ङीप्[2] क्षेत्रे वाच्ये ॥ द्विकाण्डा भूमिः[3]। [3]प्रमाणे लो[4] द्विगोर्नित्यम्* ॥ इति द्वयसो[5] लुक्। [6]क्षेत्रे किम्। द्विकाण्डी रज्जुः।

**पुरुषात् प्रमाणेन्यतरस्याम् ॥४।१।२४॥**

प्रमाणवाचिपुरुषान्तात् द्विगोस्तद्धितलुकि वा ङीप्[7] ॥ द्विपुरुषी। द्विपुरुषा[8]।

---

काण्डात्। **परिमाणवाचीति**। अत्र परिमाणशब्दो मानसामान्यलक्षकः। सत्काण्डविशेषणत्वात्। प्रमाणे पर्यवस्यति। काण्डशब्दो हि मानदण्डवाची प्रमाणविशेषमाह। तथा च **काशिकायां** वृत्तावुक्तम्। 'काण्डशब्दस्यापरिमाणवाचित्वात्' पूर्वेणैव प्रतिषेधे सिद्धे क्षेत्रे नियमार्थं वचनम्। इह मा भूत्। द्विकाण्डी त्रि[9]काण्डी रज्जुः प्रमाणविशेषः काण्ड इति। अथवा प्रमाणवाचीति पाठः। **द्विकाण्डेति[10]**। द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिः। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः[11]'।

**पुरुषात्**। अपरिमाणान्तत्वात् निषेधे प्राप्ते विकल्पार्थं वचनम्। **द्विपुरुषीति**। द्वौ पुरुषौ प्रमाणमस्याः। पूर्ववत् द्वयसच्। तस्य लुक्। प्रमाणे किम्। द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा। तद्धितलुकीत्येव। पञ्चानां पुरुषाणा समाहारः पञ्चपुरुषी।

---

१. After it—स्यात् $D_3$. २. Dropped $D_3$. ३. C has after it—द्विकाण्डा रज्जुः।. ४. लोपो $B_2$, लुक् $D_2$, $D_4$. ५. द्वयसचो $B_1$, $B_2$, $D_4$. ६. C drops क्षेत्रे......रज्जुः. ७. After it—स्यात् $D_3$. ८. After it—एकपुरुषी। त्रिपुरुषी $B_2$. ९. Dropped $Nc_1$. १०. द्विकाण्डीति $Bc_3$. ११. After it—इति द्वयसच् $Bc_3$, $Dc_3$, $Dc_4$.

[1]ऊधसोनङ् ॥५।४।१३१॥

ऊधसन्तस्य बहुव्रीहेरनङादेशः[2] स्यात् स्त्रियाम्[3] ॥

बहुव्रीहेरूधसो ङीष् ॥४।१।२५॥

ऊधसन्ताद्बहुव्रीहेः स्त्रियां ङीष् स्यात् ॥ पीनोध्नी[4] । बहुव्रीहेः[5] किम् । प्राप्तोधाः । स्त्रियां[6] किम् । महोधा गोगणः[7] ।

---

ऊध । ङित्त्वादेशोयं न प्रत्ययः प्रत्ययत्वे हि ङित्त्वं व्यर्थं स्यादित्यभिप्रेत्याह । **अनङादेशः स्यादिति** । अनङोकारादित्वं 'धनुषश्च' इत्येतदर्थम् । इह तु तेन विनापि सिद्धेः । अत्र च स्त्रियामिति वक्तव्यमित्यभिप्रेत्याह । **स्त्रियामिति** । ततश्च 'गवां गणाः प्रस्नुतपीवरोधसः' इत्यादि सिद्धम् ।

**बहु** । 'ऊधसोनङ्' इति । समासान्ते कृते 'अनो बहुव्रीहेः' । डाबुभाभ्याम्—' इति डाप्निषेधयोः प्राप्तयोरिदमुच्यते । 'अन उपधालोपिनः—' इयस्यापि ङीपोयं बाधक इष्यते । **पीनोध्नीति** । पीनमूधो यस्याः सा । 'अल्लोपोनः' इत्यकारलोपः[8] । बहुव्रीहेः किम् । प्राप्तो ऊधः प्राप्तोधाः स्त्री । 'प्राप्तापन्ने च द्वितीयया' इति समासः । स्त्रियां किम् । महोधाः पर्जन्यः । ङीषः षकारो ङीपा सामान्यग्रहणार्थः । 'आद्युदात्तश्च' इत्युदात्तो ङीष् ङीप् तु 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तः । इति स्वरभेदोनयोः । 'बहुव्रीहेरूधसो ङीष्' इत्यस्य व्याख्यानेनैव व्याख्यातप्रायत्वात् अनतिविशेषोदाहरणत्वाच्चोपेक्षितं सूत्रं व्याख्यायते । 'संख्याव्ययादेर्ङीप्' ।४।१।२६। पूर्वेण ङीषि प्राप्ते ङीप् विधीयते । संख्यादेरव्ययादेरूधःशब्दान्तात् बहुव्रीहेर्ङीप् स्यात् । द्व्यूध्नी । अत्यूध्नी । आदिग्रहणाद् व्यवधानेपि स्यात् । द्विविधोध्नी ।

---

१. The Sûtra and the Vṛitti dropped $B_2$. २. आदेशः dropped $B_1$. ३. Dropped $Bc_3$. ४. After it—कुण्डोध्नी $D_4$. ५. $B_1$ has स्त्रियां किम्......गोगणः before it. ६. C has instead of this—समासान्तः स्त्रियामेव । इह न भवति । महदूधा यस्यासौ महोधाः पर्जन्यः; समासान्तस्य स्त्रियामेव । इह न भवति । महोधा गोगणः $B_2$. ७. पर्जन्यः $D_1$; पर्यन्यः $D_2$, $D_3$. ८. इत्यलोपः । $Dc_3$.

**दामहायनान्ताच्च ॥४।१।२७॥**

संख्यादेर्बहुव्रीहेर्दा[1]म्नोऽन्ताद्धायनान्ताच्च स्त्रियां ङीप्[2] स्यात् । द्विदाम्नी ।

हायनान्ताद्वयसि ङीप्[3] णत्वं[4] च*॥ त्रिचतुर्भ्यां हायनस्य इति[5] । त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र त्रिहायना[6] शाला ।

**अन्तर्वत्पतिवतोर्नुक् ॥४।१।३२॥**

एतयोः स्त्रियां नुक् स्यात् ॥ नान्तत्वात् ङीप्[7] ।

---

**दाम** । संख्याग्रहणमेवेह स्वरितत्वादनुवर्तते नाव्ययग्रहणमस्वरितत्वादित्यभिप्रेत्याह । **संख्यादेरित्यादि** । दामान्तात् डाप्निषेधविकल्पेषु प्राप्तेषु नित्यार्थं वचनम् । हायनान्तात् टापि । **हायनान्तादित्यादि** । हायनशब्दान्ताद् बहुव्रीहेर्वयसी गम्यमाने ङीप् स्मृतः । त्रिचतुर्भ्यां परस्य हायनशब्दस्य णत्वं च वयसि गम्यमाने स्मृतमित्यर्थः ।

**अन्तर्वत्** । अन्तर्वदित्यत्रान्तःशब्दस्याधिकरणप्रधानत्वेन प्रथमासमर्थत्वाभावादस्तिना सामानाधिकरण्यासंभवादप्राप्तो मतुब् निपात्यते । वत्वं तु 'मादुपधायाश्च' इति सिद्धम् । पतिवच्छब्दे वत्वमेव निपात्यते मतुपः सिद्धत्वात् तयोर्नुगागमोऽनेन विधीयत इत्याभिप्रेत्याह ।

**एतयोरित्यादि** । **नान्तत्वादिति** । 'ऋन्नेभ्यो ङीप्' इति निपातनसामर्थ्यात् कार्यान्तरवदर्थविशेषवृत्तिश्च स्यादित्याह ।

---

१. दामन्नन्ता° $B_1$. २. ङीष् $D_1$, $D_4$. ३. ङीष् $B_2$, $D_3$, $D_4$. ४. णत्वं च dropped $D_3$, $D_4$. ५. C has णत्वम् and $D_3$ णत्वं च after it ६. चतुर्हायणा P; त्रिहायना शाला $B_2$. ७. Dropped $Nc_1$.

अन्तर्वत्नी। पतिवत्नी। गर्भभर्तृयोगे एताविष्येते। अन्यत्र। अन्तर्वती। पतिमती।

---

**गर्भभर्तृयोग** इति। गर्भयोगे अन्तर्वत्नीशब्द इष्यते। गर्भयोगश्च तस्याः स्यात् यस्याः कुक्षौ गर्भः स्यात्। भर्तृयोगे पतिवत्नीशब्दः। इह च भर्ताग्निविप्रसाक्षिकेण पाणिग्रहणेन संबन्धी यः स एव गृह्यते। तस्याश्च भर्तृयोगः स्यात् यस्याः पतिर्जीवति। तथा चान्तर्वत्नी गर्भिणी पतिवत्नी जीवद्भर्तृकेत्यर्थः। तथा चोक्तं **वार्तिककारेण**। 'अन्तर्वत्पतिवतोर्नुक्। मतुब्वत्त्वे निपातनात्। गर्भिण्यां जीवत्पत्यां त्र वा च च्छन्दसि नुग्विधिः' इति। **अन्यत्रेति**। गर्भभर्तृयोगाभावे इत्यर्थः। अन्तर्वती। शालेति शेषः। ननु च अन्तर्वतीति मतुब् नोपपद्यते अधिकरणप्रधानत्वादन्तःशब्दस्य। तथा चान्तर्विद्यते यस्यां शालायामिति वाक्यमेव प्रत्युदाहार्यम्। तथा चोक्तं **महाभाष्ये**। 'अथान्तःशब्दस्य गर्भयोगे किं प्रत्युदाह्रियते। अन्तरस्यां शालायामस्तीति। किं पुनः कारणं वाक्यं प्रत्युदाह्रियते। न पुनर्मतुप्। मतुबस्तिसामानाधिकरण्ये। अस्तिना सामानाधिकरण्ये मतुब् विधीयते। न चात्रास्तिना सामानाधिकरण्यम्' इति। किं पुनरित्यादि भाष्यं **कैयटेन** व्याख्यातम्। 'किं पुनरिति। अन्तर्वतीति नुगभाव एव प्रत्युदाहार्य इति मन्यते। न चात्रेति। अन्तःशब्दस्याधिकरणप्रधानत्वादिति भावः' इति। अतोन्तर्वतीति प्रत्युदाहरणं नोपपद्यत इति चेदुच्यते। सत्यं मध्यवाचिनोन्तःशब्दादधिकरणप्रधानत्वान्मतुब् नेति वाक्यमेव प्रत्युदाहार्यम्। यस्तु परिग्रहवाच्यन्तःशब्दः स आधेयप्रधानोप्यस्तीति चेतसि कृत्वाचार्यैः प्रत्युदाहृतम्। बहुतरप्रयोगदर्शनात्। तथा चानेनैवाभिप्रायेण **बोपदेवपण्डितैर्विचारचिन्तामणावुक्तम्**। 'अन्तर्वत्नी च गर्भिणी। सधवा पतिवत्यन्यान्तर्वती पतिमत्यपि' इति। तथा च **पाणिनीयमतदर्पणेप्युक्तम्**। 'अन्यथान्तर्वती शाला पतिमती पृथिवी' इति। पतिः स्वामी विद्यते यस्याः सा पतिमती।

---

१. पतिमती भूमिः B2. २. °ग्रहणसंबन्धी Bc3. ३. तत्र प्रत्यु° Dc3.

**पत्युर्नो यज्ञसंयोगे ॥४।१।३३॥**

पत्युर्नान्तादेशः स्यात् स्त्रियां यज्ञसंयोगे ॥ नान्तत्वात् ङीप् । पत्नी । अन्यत्र गवां पतिः स्त्री । वृषलपत्नीत्युपमानात्[1] ।

**विभाषा सपूर्वस्य ॥४।१।३४॥**

सपूर्वस्य पत्युः प्रागुक्तं वा[2] ॥ दृढपत्नी । दृढपतिः[3] ।

**नित्यं सपत्न्यादिषु ॥४।१।३५॥**

एषु पूर्वोक्तं नित्यं स्यात् ॥ [4]सपत्नी । एकपत्नी[5] ।

---

**पत्यु** । **यज्ञसंयोगे** इति । यज्ञेन संयोगो यज्ञसंयोगः । पतिशब्दवाच्यस्यार्थस्य[6] भार्याया यज्ञसंबन्धे गम्यमाने इत्यर्थः । यजमानस्य हि भार्याया यागं प्रति साधनत्वमस्ति । न हि भार्यारहितस्त्रैवर्णिको यज्ञेऽधिक्रियते । अतो यज्ञसाधनत्वात् पत्न्या यज्ञसंयोगः । यज्ञफलभाक्त्वाच्च पत्न्या यज्ञसंयोगः स्वस्वामिलक्षणः । ननु[7] शूद्रस्यैव तावद् यज्ञेन संबन्धो नास्त्यनधिकृतत्वात् किं पुनस्तद्भार्याया इत्याशङ्क्याह । **वृषलपत्नीत्युपमानादिति** । पत्नीसाधर्म्यात् पत्नीव पत्नी ।

**विभाषा** । सपूर्वस्येति किम् । विद्यमानः पूर्वो यस्य स सपूर्वः । **प्रागुक्तं** वेति । नान्तादेशो वा । नान्तत्वाच्च ङीप् । अयज्ञसंयोगादप्राप्तविभाषेयम् । **दृढपतिरिति** । **दृढपत्नीति** दृढः पतिः यस्याः सा । सपूर्वस्य किम् । पतिरियम् ।

**नित्यम्** । पूर्वेण विकल्पे[8] नित्यार्थं वचनम् । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं विस्पष्टार्थम् । लाघवार्थं समानादेरिति वाच्ये सभावार्थं सपत्न्यादिष्वित्युक्तम् । **सपत्नीति** । समानः पतिरस्याः । **एकपत्नी** । एकः पतिरस्याः । वीरपत्नी पिण्डपत्नी भ्रातृपत्नी पुत्रपत्नी ।

---

१. °त्युपचारात् $B_1$, $B_2$. २. वा स्यात् $D_1$, $D_3$. ३. दृढपत्नी । दृढपतिः $D_2$, $B_2$, $D_3$, $D_4$, $D_5$, P, C. ४. समानः पतिर्यस्याः सा before it in C. ५. After this $B_1$ has—वीरपत्नी । पिण्डपत्नी । पुत्रपत्नी । भ्रातृपत्नी । दासपत्नी । पूर्वजपत्नी ।; C has वीरपत्नी । पिण्डपत्नी । भ्रातृपत्नी । पुत्रपत्नी ।. ६. अर्थस्य dropped $Nc_1$. ७. Dropped $Nc_1$. ८. Dropped $Dc_1$, $Bc_1$. ९. विकल्पे प्राप्ते $Bc_3$, $Dc_3$, $Dc_4$.

**पूतक्रतोरै च ॥४।१।३६॥**

अस्य स्त्रियामै आदेशो ङीप् च ॥ पूतक्रतायी । पुंयोगे-इत्येव । पूतक्रतुः स्त्री ।

**वृषाकप्यग्निकुसितकुसिदानामुदात्तः ॥४।१।३७॥**

एषां पुंयोगे उदात्त ऐ[२]आदेशः स्यात् ङीप् च ॥ वृषाकपायीत्यादि ।

---

पूत । उत्तरसूत्रे उदात्तवचनादैकार आदेशः । प्रत्ययत्वे हि प्रत्ययस्वरेणोदात्तत्वे उदात्तवचनं व्यर्थं स्यादित्यभिप्रेत्याह । **ऐ आदेश** इति । **पुंयोगे** इत्येवेति । इत आरभ्य त्रयो योगा ङीप्सहिताः पुंयोगादाख्यायामिति प्रकरणे अनुवर्तन्ते । ततश्च पुंयोग इत्यत्रैवार्थे एतत् कार्यं नान्यत्रेति भावः । तथा चोक्तं **महाभाष्ये** । 'पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् । पूतक्रत्वादयः पुंयोगप्रकरणे वक्तव्याः । पूतक्रतोः स्त्री पूतक्रतायी यया हि पूताः क्रतवः पूतक्रतुः सा भवति' इति । एतच्च भाष्यं कैयटेन व्याख्यातम् । 'पूतक्रत्वादीनामिति । त्रय एते योगा ङीप्सहिताः 'पुंयोगादाख्यायाम्' इत्यत्रानुवर्तयितव्या इत्युक्तं भवति । तेन यदा पुंयोगात् स्त्रियां पूतक्रत्वादयो वर्तन्ते तदायं विधिर्नान्यथा' इति ।

**वृषा** । वृषाकपिशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुः' । इति फिट्सूत्रेण मध्योदात्तः । उदात्तवचनं प्रयोजयति । अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम् । **वृषाकपायी**ति । वृषाकपेः स्त्री । आदिना अग्नायी कुत्सितायी कुसिदायी । पुंयोगे किम् । वृषाकपिः स्त्री ।

---

१. इति dropped D4. २. ऐकारादेशः B1. ३. Dropped D3. ४. तथा हि Dc3. ५. इति किम् Bc3.

**मनोरौ वा ।।४।१।३८।।**

मनोर्वा औ स्यादै च वा ङीप्[1] ।। मनोः स्त्री मनावी मनायी मनुः ।

**वर्णादनुदात्तात् तोपधात्तो नः ।।४।१।३९।।**

अनुदात्तान्ताद्[2]वर्णवाचिनस्तोपधात् ङीष्[3] वा स्यात् तकारस्य न[4]कारश्च । एता । एनी । [5]अनुदात्तात् किम् । श्वेता । अत इत्येव । [6]शितिः स्त्री ।

पिशङ्गाच्च* । पिशङ्गी ।

असितपलितयोर्न* । असिता । पलिता । क्रमेके[7] । असिक्नी । पलिक्नी ।

---

**मनोः** । मनुशब्द आद्युदात्तः । तस्यादेशौ[9]वौकारैकारावुदात्तौ स्तः । उदात्त इत्यनुवृत्तेः ।

**वर्णात्** । **एता** । एनीति । 'वर्णानां तणतिनितान्तानाम्' इति फिट्सूत्रेणाद्युदात्तः । ततश्च 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तान्तः । **श्वेतेति** । 'घृतादीनां च' इति फिट्सूत्रेणान्तोदात्तः । **पिशङ्गाच्चेति** । पिशङ्गशब्दो 'लघावन्ते—' 'इत्यादिना मध्योदात्तस्ततः 'अन्यतो ङीष्' इति ङीषि प्राप्ते ङीप उपसंख्यानम् । **असितेत्यादि** । 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तौ । **क्रमेक** इति । एके आचार्या असितपलितशब्दयोस्तस्य स्थाने क्नमिच्छन्ति । तथा चोक्तं **महाभाष्ये** । 'छन्दसि क्नमेके' इति । आचार्यास्तु[11] छन्दसीति नोक्तवन्तः । भाषायामपि दर्शनात् । तथा चोक्तं **काशिकायां वृत्तौ** । भाषायामपीष्यते । '[12]गतो गणस्तूर्णमसिक्निकानाम्' इति । वर्णादिति किम् । प्रकृता । 'गतिरनन्तरः' इत्याद्युदात्तः । तोपधात् किम् । अन्यतो ङीषं वक्ष्यति ।

---

१. ङीप् च Bc3, D3. २. °त्तोपधाद्वर्णवाचिनः D2. ३. ङीप् D4, D1 Bc3. ४. नश्च D1, D4, B2 ; नकारः D2, D3, Bc3. ५. अनुदात्तान्तात् D1. ६. शतिः D2, D5, B1, P, C. ७. After it—इच्छन्ति D2, D3, D4 ; क्नमिच्छन्त्येके Bc3. ८. Dropped D3. ९. वैकारौकारा° Dc3. १०. °दात्तत्वम् । Dc3. ११. तु dropped Bc1. १२. °तौ Bc1, Nc1, Dc3, Dc4.

**अन्यतो ङीष् ॥४।१।४०॥**

तोपधादन्यतो वर्णादनुदात्तात्[1] ङीष् स्यात् । स्वरे विशेषः[2] । शैवली[3] । अनुदात्तात् किम् । कपिला ।

षिद्गौरेति ङीष् । नर्तकी । गौरी ।

**सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥६।४।१४९॥**

एषा[4]मीति तद्धिते च उपधाया य[5]स्य लोपः स्यात् ॥

---

**अन्यतः** । तोपधापेक्षयान्यत्वमित्याह । **तोपधादन्यत** इति । **स्वरे** विशेष इति । ङीप्ङीषोरिति शेषः । ङीपः 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वम् । ङीषस्तु 'आद्युदात्तश्च' इति प्रत्ययाद्युदात्तत्वेनो-दात्तत्वमिति स्वरे विशेष इत्यर्थः । **शवलीति** । 'शपेर्बश्च' इति कलप्रत्ययः । पकारस्य च बकारः प्रत्ययाद्युदात्तत्वेन मध्योदात्तः । शबलशब्दोनुदात्तान्तः । **कपिलेति** । कमु कान्तौ । 'कमेः पश्च' इति इलच् मकारस्य च[6] पकारः । चित्स्वरेणान्तोदात्तः । **षिद्गौरेति** । **ङीष् इति** । **नर्तकीति** । 'शिल्पिनि ष्वुन्' । **गौरीति** । गौरशब्दस्य वर्णवा[7]च्चित्वे प्रातिपदिकस्वरेणान्तोदात्तत्वात् पूर्वेण ङीष् न प्राप्नोतीति गौरादिषु पाठः ।

**सूर्य** । अत्र च 'भस्य' इत्यनुवर्तते । तत्र यदि भसंज्ञत्वेन सूर्यादयो विशेष्येरन् तदा सूर्येणैकादिक् सौरी वलाकेत्यत्र लोपो न स्यात् । न ह्यत्र सूर्यशब्द इति भसंज्ञकः । किं तर्हि । अन्यदेवाणन्तं शब्दान्तरम् । ततश्चैवं योजना । भस्य भसंज्ञकस्य उ[8]पधाया यलोपः स्यात् । सा चेद् भसंज्ञा सूर्यादीनामिति । तेन यदापि सूर्यादीनां भत्वं नास्ति तदापि तस्योपधाया य[9][10]कारलोपः स्यादेव । आचार्यत्रयैस्तु 'भस्य' इत्येदनुवर्तमानमप्युपेक्षितम् । विषयपरिगणनादत्र तस्यानुवृत्ते-रनुपयोगात् । विषयपरिगणनं चात्र कर्तव्यमित्याह ।

---

१. °दात्तान्तात् $D_3$. २. भेदः $D_3$. ३. शबली $D_1$. ४. इति P, C; ईपि $B_2$. ५. यलोपः C, P, $D_1$, $Bc_3$, $D_4$. ६. Dropped $Dc_3$. ७. °वाच्चिक-त्वेपि $Nc_1$; °वाच्चित्वेपि $Dc_3$, $Dc_4$. ८. उपधायलोपः $Bc_1$, $Dc_4$, $Dc_3$. ९. °पधायकारस्य $Dc_3$, $Dc_4$. १०. यलोपः $Bc_3$.

मत्स्यस्य ङ्याम्* ॥ सूर्यागस्त्ययोश्छे च ङ्यां च* ॥ तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्* ॥ मत्सी । अनडुही । अनड्वाही । मातामही । पितामही । इत्यादि । अनित्यः

---

मत्स्यस्येत्यादि । सौकर्यायोदाहरणप्रत्युदाहरणानि कथ्यन्ते । मत्सी । इह मा भूत् । मत्स्यस्येदं मात्स्यम् । सूर्यागस्त्ययोरिति । सौरी । सौरीयम् । आगस्ती । आगस्तीयः । इह न । सौर्यं चरुम् । आगस्त्यम् । तिष्यपुष्ययोरिति । नक्षत्राणि[1] नक्षत्रसंबन्धी योण् तस्मिन्नित्यर्थः । तिष्येण नक्षत्रेण युक्तः कालस्तैषः[3] । पौषः । उपधाया इति किम् । मत्स्यचरी । यग्रहणं 'हलस्तद्धितस्य' इत्याद्यर्थम्[2] । अत्र सूत्रे अन्यदपि वाच्यम् । अन्तिकशब्दस्य तसि प्रत्यये परे कादेरवयवस्य लोप आद्युदात्तत्वं च वाच्यम् । अन्तित आगतो न दूरात् । तमप्रत्यये परेऽन्तिकशब्दस्य तादेः कादेश्चावयवस्य लोपो वाच्यः । तादिलोपः । अन्तमः । कादिलोपः । अन्तितमः । कादिलोपो बहुलम् । अन्यत्रापि दृश्यते । अन्तिके सीदतीति अन्तिषत् । 'पूर्वपदात्—' इति षः । ये च । अन्तियः । मत्सी । गौरादित्वात् ङीष् । मत्स्यशब्दस्य योपधत्वात् 'जातेरस्त्री—' इति ङीष् प्राप्त इति गौरादिषु पाठः । अनडुही । अनड्वाहीति । गौरादिगणे ङीषन्तयोः पाठोऽस्ति स आम्भावार्थः पुंवद्भावप्रतिषेधार्थश्चेति दर्शयितुं गणमध्यस्थावेतौ शब्दौ पठति । अनडुहीत्यादि । तथा चानडुही भार्येत्यत्र पुंवद्भावो न । पितृव्यमातुलमातामहपितामहा इत्यत्र पितृमातृभ्यां पितरि वाच्ये डामहच् निपात्यते । मातरि षिच्चेति मातरि वाच्यायां डामहजेव तस्य च षित्वम् । अतः षित्त्वादेव ङीषि सिद्धे पुनर्गणेनयोः पाठोऽनित्यः[4] ।

---

१. नक्षत्रे अणि C. २. B₁ has before it—उपधाया इति किम् । मत्स्यचरी । भूतपूर्वे चरट् । टित्वात् ङीप् । भवत्यमत्स्यचरशब्दो भसंज्ञकः । मत्स्यसंबन्धी च यकारः । न त्वसौ भसंज्ञकस्योपधेति लोपो न प्रवर्तते । हलस्तद्धितस्येत्यत्रानुवृत्त्यै यग्रहणम् । ३. °स्तैष्यः $Bc_3$. ४. Dropped $Bc_3$.

## षितां ङीष्[1] ।

षितां ङीषित्यस्यार्थस्य ज्ञापनार्थमिति दर्शयितुं पठितवान् । मातामहीत्यादि । इत्यादीनि । गौरादिगणो ज्ञेय इत्यर्थः । स च पठ्यते । मनुष्य । शृङ्ग । गवय । हय । मुकय । ऋष्य । शृङ्गशब्दवर्जितानामेषां योपधत्वात् जातिलक्षणस्य ङीषो निषेधे प्राप्ते पाठः । शृङ्गशब्दस्य तु अस्त्रीविषयत्वान्निषेधे । पुट । द्रुण । द्रोण । हरिण । कण । पंटर[2] । उकण । आमलक । कुवल । बदर । बिम्ब । तंर्कार[3] । पुष्कर । शष्कण्ड । सुषव । सनन्द । गडुंल[4] । षाण्डसं[5] । आढक । आछक । आनन्द । सृपाट । शष्कुल । सूर्य । शूर । शूर्प । शूंर्ष[6] । वातक । सलूक । हाँलक[7] । मालत । शाल्वक । वेतस । पृंस[8] । अतस । उभय । भृङ्ग । मह । मंठ[9] । छेद । पेश । मेद । एतेषामानन्दवर्जितानां स्त्रीविषयत्वादस्त्रीविषयादिति निषेधे प्राप्ते आनन्दशब्दस्य त्वजातित्वात् ङीष्यप्राप्ते । श्वन् तक्षन् अनयोः ऋन्नेभ्यो ङीपि प्राप्ते । एषण करणे । इष्यतेनयेत्येषणी । करणे किम् । इष्यते तस्यामित्यधिकरणे ङीबेव स्यात् । एषणी । स्वरे विशेषः । देह । टापि प्राप्ते । देहन । काकादन । गवादन । टेपंन[10] । रंभंन[11] । भोजन । लवण । पान । एतेषां टिल्लक्षणे ङीपि प्राप्ते । मेध । अस्याजातित्वात् ङीष्यप्राप्ते । गौतम । शार्ङ्गरवादित्वात् ङीनि प्राप्ते पक्षे वचनात् सोपि स्यात् । आपं[12] । स्थूण । भौरिकि । भौलिकि । भौलिङ्गि । औद्गाहमानि । आलम्बि ।

१. ङीष् स्यात् $D_2$ ; ङीप् $D_5$. २. पिटर $Bc_1$ ; पेटर $Dc_3$. ३. तर्कार $Dc_3$. ४. गण्डुल । $Bc_3$. ५. सण्डस् $Bc_3$ ; खण्डश $Dc_3$ ; खण्डस $Dc_4$. ६. सूर्ष $Bc_1$. ७. हांलक $Bc_3$. ८. पृश $Dc_3$, $Bc_3$; मृश $Dc_4$. ९. मेठ $Bc$. १०. टेभन $Dc_3$, $Bc_1$ ; टौभन $Dc_4$. ११. रभन $Bc_1$. १२. आय । स्थौण $Bc_3$.

दंष्ट्रा ।

एतेभ्यो 'णित्रोः' इति ष्यङि प्राप्ते । आपिञ्जक । अस्माज्जनपद-शब्दात् क्षत्रियाद्ञन्तात् ङीपि । आलिचि । कोरट । नट । नाट । मूलाट । एषा स्त्रीविषयत्वात् ङीष्यप्राप्ते । शातन । पातन । पावन । आस्तरण । अधिकरण । एषां टिल्लक्षणे ङीपि । अधिकार । अस्मात् टापि । आग्रहायणी । अण्णन्तत्वात् ङीपि । ईकारान्तस्य पाठः पुंवद्-भावनिषेधार्थः । आग्रहायणी भार्या इति । सेवन । प्रत्यवरोहिणी । टिल्लक्षणे ङीपि । ईकारान्तस्य पाठः पुंवत्त्वनिषेधार्थः । प्रत्यवरोहिणी-भार्यः । सुमङ्गलात् संज्ञायाम् । 'केवल—' इत्यादिना ङीपि प्राप्ते वचनात् पक्षे सोपि । सुन्दर । मन्दर । मण्डल । मङ्गल । पट । पिण्ड । ऊर्द । गूर्द । सूर्द । पाण्ड । लोहाण्ड । दर्दूर । कन्दर । कटल । कलन्द । स्त्रीविषयत्वात् ङीष्यप्राप्ते । तरुण । तलुन । वयोलक्षणे ङीपि । सौधर्म । 'अणिञो—' इति ष्यङि । रोहिणी नक्षत्रे । रेवती नक्षत्रे । विकल । निष्कल । पुष्कल । टापि प्राप्ते । कटाच्छ्रोणिवचने । पिप्पलादयश्च । पिप्पली । हरीतकी । कोशातकी । शमी । शेरी । पृथिवी । ईकारान्तनिपातनं पुंवद्भावनिषेधार्थम् । पृथिवीभार्यः । अवृत्-करणादाकृतिगणोयम् । दंष्ट्रेति । दंश दशने । 'दाम्नीशसयुयुज—' इति ष्ट्रन् ।

१. पुंवद्भाव° Bc3. २. °रोहणी Nc1, Dc3, Dc4. ३. मन्दन Bc1. ४. Dropped Nc1, Bc3. ५. Dropped Nc1, Dc3, Bc3, Dc4. ६. कदर Bc3. ७. कण्टल Bc1, Bc3, कण्डल Dc3. ८. Before it— बृहत् । महत् । उगित्त्वात् ङीपि Bc3, Dc3, Dc4. ९. शरारी Dc4.

**जानपदकुण्डगोणस्थलभाजनागकालनीलकुश-**
**कामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णा-**
**नाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥४।१।४२॥**

एभ्यो यथाक्रमं वृत्त्यादिष्वर्थेषु ङीष् स्यात् ॥ जानपदी । वृत्तिश्चेत् । अन्यत्र अञन्तत्वात् ङीप्[1] । जानपदी । स्वरे भेदः[2] । कुण्डी । अमत्रं चेत् । कुण्डान्या[3] । इत्यादि । औषधौ[4] प्राणिनि च* । नीली । संज्ञायां[6] वा* । नीला । नीली ।

---

जानपद । जानपदीति । जनपदे भवा जानपदी । 'उत्सा-दिभ्योऽञ्' । वृत्तिरिति । वर्तते यया सा वृत्तिः । जीवनोपाय इति यावत् । **अन्यत्रेत्यादि** । वृत्तिव्यतिरिक्तेऽर्थे अञन्तत्वात् 'टिड्ढाणञ्—' इति ङीप् । ननु चोभयत्रापि जानपदीत्येवं रूपं भवति को विशेष इत्याह । **स्वरे भेद इति** । ङीषि सति प्रत्ययस्वरेणान्तोदात्तः स्यात् ङीपि तु सत्याद्युदात्तः स्यात् । जानपदशब्दस्य तित्स्वरेणाद्युदात्तत्वात् । **अमत्रं चेदिति** । पात्रं चेद्वाच्यमित्यर्थः । **कुण्डान्येति** । क्रियाशब्दः । कुडि दाहे । 'गुरोश्च हलः—' इत्यकारः । टाप् । यस्तु द्रव्यवाची कुण्डशब्दः स नित्यं क्लीब एवेति न प्रत्युदाहार्यः । **इत्यादीति** । आदिना गोणी भवति आवपनं चेत् । आवपनमिति यत्र प्रक्षिप्य धान्यादि नीयते तत् पात्रम् । गोणान्या । स्थली स्यादकृत्रिमा चेत् । स्थलान्या । भाजी । श्राणा पक्का चेत् । भाजान्या । नागी स्थूला चेत् । नागशब्दस्य गुणवचनस्येदं ग्रहणम् । जातिवाचिनस्तु ङीष् सिद्ध एव । काली वर्णश्चेत् । कालान्या । नीली अनाच्छादनं चेत् । अनाच्छा-दनेपि औषधौ प्राणिनि वा प्रयोग इत्याह । **औषधौ प्राणिनि चेति** । **संज्ञायां चेति** । अनाच्छादने एवायं विकल्पः । कुशी अयोविकारश्चेत् । कुशान्या । कामुकी मैथुनेच्छावती चेत् । कामुकान्या । कबरी केशवेशश्चेत् । कबरान्या ।

---

१. After it स्यात् $D_2$, $B_2$, P, C. २. विशेषः $D_3$, $D_5$, $Bc_3$.
(For Notes see Next Page)

## शोणात् प्राचाम् ॥४।१।४३॥

शोणा[1] । शोणी ।

## वोतो गुणवचनात् ॥४।१।४४॥

उदन्ताद् गुणवचनात्[2] स्त्रियां वा[3] ङीप्[4] ॥

---

शोणात् 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तत्वात् अन्यतो ङीषि प्राप्ते विकल्पार्थं वचनम् ।

वोतः । गुणमुक्तवान् गुणवचनः । स पुनर्यः प्राग् गुणमभिधाय पश्चाद् मतुब्लोपादभेदोपचाराद्वा द्रव्यमभिधत्ते स ज्ञेयः। ननु च गुणो नाम कः । उच्यते ।

'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः' ॥

सत्त्वं द्रव्यम् । वाक्यं हि व्यवच्छेदफलं स्यादिति सत्त्व एव निविशत इति व्याख्येयम् । अनेन सत्ता व्यावर्त्यते । सा हि न केवलं द्रव्ये वर्तते अपि तु द्रव्यगुणकर्मसु । तर्हि द्रव्यत्वं द्रव्य एव वर्तते तत्रातिव्याप्ति-

---

(Continued From Page 355)

३. After it—गौणी आवपनं चेत् । गौणा अन्या । स्थली अकृत्रिमा चेत् । स्थला अन्या । लाजी भाणा चेत् पक्वेत्यर्थः । लाजा अन्या । नागी स्थौल्यं चेत् । नागा अन्या । काली वर्णश्चेत् । काला अन्या । नीली अनाच्छादनं चेत् । नीला अन्या । कुशी अयोविकारश्चेत् । कुशा अन्या । कामुकी मैथुनेच्छा चेत् । कामुका अन्या । कबरी केशवेशश्चेत् । कबरा अन्या । इत्यादि । $B_2$., $D_2$. (भाजी... भाजा $D_2$–अन्या गुणवचना इत्यादि $D_2$.) ; From नीली to कबरा अन्या इत्यादि $D_5$. ४. Before it—नीलात् $B_1$. ५. नीली औषधिः । नीली च गौः $B_1$ ; नीलशब्दात् ङीप् । नीली गौः । प्राणिनि च नीली $B_2$. ६. नीला । नीली सञ्ज्ञायां वा $B_1$ ; नीला संज्ञायां वा $D_1$. ७. शब्दस्य $Bc_3$, $Nc_1$. ८. °वचनस्तु $Nc_1$, $Bc_3$. ९. केशश्चेत् $Nc_1$.

---

१. शोणी । शोणा $D_1$. २. गुणवाचिनः P. ३. ङीप् स्याद्वा P. ४. C. $D_5$ have स्यात् after it ; ङीष् $D_1$ ; ङीष् स्यात् $D_3$.

मृद्वी। मृदुः[1]। उतः किम्। शुचिः स्त्री। गुणेति किम्।

---

रत आह। अपैति। अपगच्छति। अर्थात् सत्त्वादेव। यथा पीततायां जातायामाम्रादेर्नीलता। नैवं द्रव्यत्वं द्रव्यादपैति। एवं चेद् गोत्वं स्वस्तिमत्यादौ वर्तते अश्वादेश्चापैति तत्रातिव्याप्तिरत आह। पृथग्जातिषु दृश्यते इति। गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते स गुणस्तु दृश्यते। यथाभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते। एतेन समुदितेन सकलजातेर्व्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्तते ततोपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह। आधेयश्चाक्रियाजश्चेति। आधेय उत्पाद्यः। यथा पुष्पयोगाद् गन्धो वस्त्रे। अक्रियाजो नित्यः। यथाकाशादौ महत्त्वादिः। कर्म तु न तथा उत्पाद्यमनुत्पाद्यं किं तूत्पाद्यमेव। एवं तर्हि[2] द्रव्येतिव्याप्तिः। तद्धि द्रव्य एवारम्भके वर्तते तद्विनाशेपैति च पृथग्जातिषु अवयवेषु दृश्यते। निवर्त्यानिवर्त्यस्वरूपं च अवयविनो निवर्त्यत्वात् आकाशादेश्चानिवर्त्यत्वादिति। अत आह। सोसत्त्वप्रकृतिरिति। गुणो न द्रव्यस्वभावः द्रव्यं तु द्रव्यस्वभावमिति। ननु पूर्वार्धं व्यर्थमुत्तरार्धेनैव जाति[3]व्यावृत्तेः। निवर्त्यत्वेन तासामुत्पाद्यस्वभावात्। न। असति पूर्वार्धे यथा तैजसं परमाणुरूपं कार्यद्रव्यरूपं च मिलितमुत्पाद्यानुत्पाद्यस्वभावमिति द्वयोरपि गुणत्वं तथा पाक्य[4]द्रव्यरूपं जातिश्चेति मिलितमुत्पाद्यानुत्पाद्यस्वभावमिति जातिरपि गुणः स्यात्। अतः पूर्वार्धेन जातिव्यावृत्तिरिति वार्तिकार्थः। विचारविशेषः प्रकीर्णकाण्डादवगन्तव्यः।

मृद्वीत्यादि। मृदुशब्दो मृदुत्वं गुणमुक्त्वा द्रव्यमभिधत्त इति गुणवचनः। 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इति कुप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तो मृदुशब्दः। शुचिशब्दो गुणवचनो न तूकारान्तः।

---

१. After it—तन्वी। तनुः $D_5$. २. तर्हीति $Bc_1$. ३. सर्वाजाति° $Bc_1$; सर्वजाति° $Bc_3$. ४. पाक्य° $Dc_4$.

आखुः । खरुसंयोगोपधान्न* ।। खरुः । पाण्डुः ।

**बह्वादिभ्यश्च** ।।४।१।४५।।

बह्वी । बहुः । पद्धतिः । पद्धती । इत्यादि ।

---

**आखुरिति** । जातिवचनोयं न गुणवचनः । अत्र च ङीबिति वक्तव्यम् । तथा चोक्तं **भाष्ये** । 'गुणवचनात् ङीबाद्युदात्तार्थः । गुणवचनात् ङीब् वक्तव्यः । किं प्रयोजनम् । आद्युदात्तार्थः । आद्युदात्ताः प्रयोजयन्ति । वस्विति' । एतच्च कैयटेन भाष्यदीपे व्याख्यातम् । वस्वीति । 'धान्ये नित्' इत्यतः 'नित्' इति वर्तमाने स्तृणु स्तुहीति वसुशब्द आद्युदात्तो व्युत्पादितः । तस्मात् ङीपि सति ईकारोनुदात्तो भवति । ङीबुदात्तः स्यात् । अन्तोदात्तात्तु ङीप्ङीषोर्विशेषाभावः । 'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वविधानादिति । **खरुसंयोगोपधान्नेति** । खरुशब्दात् संयोगोपधाच्च ङीप् नेत्यर्थः । खरुः पतिंवरा कन्या ।

**बह्वादिभ्यः** । बह्वीति । बहुशब्दस्य गुणवाचिन इह पाठो 'नित्यं छन्दसि' इत्येतदर्थः । आदिना अञ्चति । अंहति । वहति । शकटि । शक्तिः शस्त्रे । शक्तिः । शक्ती । शस्त्रे इति किम् । शक्तिः सामर्थ्यम् । अन्ये तु शक्ति शस्त्रीति द्वयं पठन्ति । शक्ती । शस्त्री । शारि । वारि । राति । अहि । कपि । मुनि । यष्टि । चण्ड । अराल । कमल । कृपाण । विकट । विशाल । विशङ्कट । भरुज । चन्द्रभागान्नद्याम् । चन्द्रभागी । चन्द्रभागा नदी । नद्यां किम् । चन्द्रभागा नाम देवता । कल्याण । उदार । पुराण । अहन् । अयं केवलः स्त्रियां नास्तीति तदन्त उदाहार्यः । दीर्घाह्नी शरत् । पक्षे डाप्निषेधौ । दीर्घाहा । दीर्घाहे ।

---

१. After it–पतिंवरा कन्येत्यभिधानात् । युवतिः । युवती $D_2$. २. $B_1$ has बभ्रुः before it. ३. पद्धती । पद्धतिः $D_1$, $B_2$, $Bc_3$. ४. भाष्ये $Bc_3$. ५. वसुहृ $Bc_3$. ६. ङीषु° °$Dc_4$. ७. बह्वादिभ्यश्च $Bc_3$. ८. इति $Bc_1$. ९. From शस्त्रे to शस्त्री omitted $Nc_1$. १०. शक्तिः । शक्ती । शस्त्रिः । शस्त्री $Bc_3$. ११. शति $Nc_1$ ; शनि $Bc_3$. १२. मराल $Nc_1$, $Bc_3$. १३. तरुज $Bc_3$. १४. Dropped $Nc_1$.

इतः प्राण्यङ्गात् ॥ अङ्गुली । अङ्गुलिः[1] । कृदिकारादक्तिनः[2] । सर्वतोक्तिन्नर्थादित्येके । राजिः[3] । राजी । आजिः[4] । आजी । अक्तिनः किम् । बुद्धिः[5] । मतिः[6] ।

**पुंयोगादाख्यायाम् ॥४।१।४८॥**

या[7] पुमाख्या पुंयोगात् स्त्रियां वर्तते ततः[8] स्त्रियां ङीष् स्यात् ॥

---

इतः प्राण्यङ्गादिति गणसूत्रम् । कृदिकारादक्तिन इत्यपि गणसूत्रम् । तस्यायमर्थः । कृते[9] इकारः कृदिकारः । तदन्तात् ङीप् स्यात् । सर्वतोक्तिन्नर्थादित्येके इति च । एके आचार्याः सर्वतः सर्वस्मादिकारात् कृतोकृतोपि अक्तिन्नर्थात् न विद्यते क्तिन्नर्थो यस्य सोयमक्तिन्नर्थस्तस्मात् ङीप् स्यादित्याहुरित्यर्थः । अक्तिन्नर्थादिति किम् । अकरणिः । अहरणिः । सर्वतोक्तिन्नर्थादित्येव सिद्धे शाकटयादीनां पाठः प्रपञ्चार्थः । बह्वादिराकृतिगणः ।

**पुंयोगात्** । पुंयोगादिति हेतौ पञ्चमी । आख्यायामिति पञ्चम्यर्थे सप्तमी इत्यभिप्रेत्याह । **या पुमाख्येत्यादि** । पुंस आख्या पुमाख्या पुंसो वाचकः शब्द इत्यर्थः । पुंयोगात् स्त्रियां वर्तत इति पुंसो योगः संबन्धः तस्येयमिति तस्माद्धेतोः स्त्रियां वर्तते । अयं यः शब्दः पुंसो वाचकोभूत् पश्चात्पुरुषसंबन्धाद्धेतोः स्त्रियां वाक्यार्थः । वर्तते तस्मात् शब्दात्[10] ङीष् स्यादिति[11] ।

---

१. बह्वादिराकृतिगणः after it in $B_1$. २. After it—वा ङीष् $B_1$. ३. Before it–युवतिः । युवती । $D_5$, $B_1$, $B_2$; तेन युवतिः । युवती $Bc_3$; राज्ञी । राज्ञिः । आज्ञी । आज्ञिः $D_1$, $Bc_3$; From राज्ञिः to आज्ञी dropped $D_3$. ४. P drops आज्ञिः । आज्ञी; $D_4$ has after it–दाक्षिः । दाक्षी ।. ५. मतिः । बुद्धिः C. ६. After it—अक्तिन्नर्थात् किम् । ग्लानिः । म्लानिः । अहरणिः $B_1$, $B_2$, $D_2$. ( $B_2$ drops अहरणिः, $D_2$ drops it and also म्लानिः ) ; $D_5$ ( $D_5$ drops ग्लानिः and म्लानिः and has अकरणिः । अहरणिः ). ७. Before it—C has मतिबुद्धिपूजार्थेभ्यश्च ' इति क्तिन्नाख्यायां. ८. ततो ङीप् स्त्रियाम् P. ९. कृत इति इकारः $Bc_1$. १०. Dropped $Nc_1$; स्त्रियां ङीष् स्यादिति $Bc_3$. ११. Dropped $Bc_1$.

गोपी[1] ॥ गोपालिकादीनां न* ॥ गोपालिका ॥ सूर्याद्देवतायां चाप्* ॥ सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ।

---

**गोपीति** । गाः पातीति गोपः । 'आतोनुपसर्गे कः' । गोपस्य स्त्री गोपी । अत्र गोपशब्दस्य गोरक्षणं यत् प्रवृत्तिनिमित्तं तस्य पुंसि संभवो न स्त्रियाम् । तस्मात् पुंवाचको गोपशब्दः पुंसंबन्धात् स्त्रियमाहेति । अतो ङीष् जातः । पुंयोगात् किम् । देवदत्ता । अत्र देवदत्ता शब्दो न पुंयोगात् स्त्रियमाह । यतः स्त्रिय इयं संज्ञा । आख्यायामिति किम् । प्रसूता । अयं जातप्रसवामात्रष्टे । तस्य हि प्रसवस्य पुंयोगो निमित्तम् । तस्मात् पुंयोगात् प्रसूताशब्दः स्त्रियां वर्तते न तु पुंवाचकः । **गोपालिकादीनां नेति** । पालकशब्दान्तात् प्रतिषेध इत्यर्थः । तथा चोक्तं **पाणिनीयमतदर्पणे** । 'अपालकान्तादित्यत्र वाच्यं गोपालिकेति दिक्' इति । तथा **रामकौतुकेपि** । 'पालकान्तान्निषेधो गोपालिका पशुपालिका[2]' इति । **सूर्यादिति** । चकारोन्तादात्तार्थः पकारः सामान्यग्रहणार्थे । हल्ङ्याबिति । **सूर्येति** । 'राजसूयसूर्य—' इति क्यबन्तोयमाद्युदात्तः । तस्माच्चापि 'चितः' इत्यनेनान्तोदात्तो भवति । **अन्या सूरीति** । अदेवता सूरी । ङीष् । 'सूर्यतिष्य—' इति यलोपः ।

---

१. $B_1$ has after it—गोपाली । पुंयोगादिति किम् । देवदत्ता ।; पालशब्दात् प्रतिषेध इत्यर्थः । पुंयोगादिति किम् । देवदत्ता । आख्यायां किम् । प्रसूता । प्रजाता । $B_2$. २. पशुपालिका $B_2$. ३. तस्य $Dc_3$, $Dc_4$, $Bc_3$. ४. शब्दः dropped $Bc_1$.

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥४।१।४९॥**

इन्द्रादेः स्त्रियां ङीष् आनुक् चागमः स्यात् ॥ इन्द्राणीत्यादि । ब्रह्माणीति केचित् । हिमारण्ययोर्महत्त्वे* ॥ महद्धिमं हिमानी । अरण्यानी ॥ यवाद्दोषे*॥ दुष्टो यवो यवानी ॥ यवनाल्लिप्याम्* ॥ यवनानी ॥ मातुलोपाध्यायाभ्यां वा* ॥ मातुलानी मातुली वा । उपाध्यायानी । उपाध्यायी वा ॥

---

इन्द्र । येषामत्र पुंयोग इष्यते तेषामागममात्रंविधिः । ङीष् तु पूर्वेणैव सिद्धः । अन्येषां तूभयं विधीयते । आनुका सिद्धावनुकरणमिन्द्रमाचष्टे इन्द्रयति ततः क्विपि इन्द्रः स्त्रीत्यत्र इन्द्राणीति दीर्घश्रवणार्थम् । इत्यादीति । आदिना वरुणानी भवानी शर्वाणी रुद्राणी मृडानी । ब्रह्माणीति केचिदिति । तथा च मुग्धबोधे उक्तम् । ब्रह्मरुद्रभवशर्वमृडेन्द्रवरुणादीनङ्घेति । हिमारण्ययोरिति । महत्त्वे गम्यमाने हिमशब्दात् अरण्यशब्दाच्च स्त्रियामानुक्ङीषौ । अरण्यानीति । महदरण्यम् । यवाद्दोषे इति । यवाद् दोषे गम्यमाने स्त्रियां पूर्ववत् । यवानीति । दुष्टो यवो यवानी । यवनानीति । यवनानां लिपिः । तस्येदमित्यण्प्रसङ्गे ङीष् आनुक् चागमः । अण् तु तदर्थस्य ङीषैवोक्तत्वात् न । मातुलानीत्यादि । मातुलस्य स्त्री । उपाध्यायस्य स्त्री ।

---

१. सर्व $B_1$. २. स्यादानुगागमश्च C; आनुगागमश्च $D_5$. ३. महदरण्यमरण्यानी $B_2$. ४. $D_1$, $D_4$, $D_5$ drop दुष्टो यवो. ५. $B_1$ has got लिपि : after it. ६. °ध्याययोर्वा $B_1$. ७. C, $B_1$, $D_1$, $D_4$ drop मातुली वा; $D_3$ drops वा. ८. C drops उपाध्यायानी । उपाध्यायी वा; $B_1$ drops वा $D_5$. ९. $D_1$, $D_3$, $D_5$ drop it. १०. मात्रं $Nc_1$. ११. °दीनङ्घेति $Bc_3$, $Dc_4$. १२. °त्यणि $Bc_1$.

आचार्यादणत्वं च[1]* ॥ आचार्यानी[2] । अर्यक्षत्रियाभ्या[3] वा स्वार्थे* ॥ अर्याणी[4] । अर्या । क्षत्रियाणी । क्षत्रिया । पुंयोगे तु[5] ङीषेव[6] । अर्यी[7] । क्षत्रियी । सूर्याणी[8] वेति केचित् ।

**क्रीतात् करणपूर्वात् ॥४।१।५०॥**

क्रीतान्तात् करणादेः[9] स्त्रियां ङीष्[10] स्यात् ॥ वस्त्रक्रीती । क्वचिन्न । धनक्रीता ।

---

**आचार्यादणत्वं** चेति । क्षुभ्नादिषु द्रष्टव्योयमिति भावः । **आचार्यानी**ति । आचार्यस्य स्त्री । **सूर्याणी वेति केचि**दिति । तथा चोक्तं **मुग्धबोधे** । 'मातुलोपाध्यायक्षत्रियाचार्यसूर्याद्वा—' इति । आनङनुवर्तते ।

**क्रीतात्** । **क्रीतान्तात् करणादे**रिति । अदन्तात् प्रातिपदिकादिति शेषः । प्रातिपदिकादत इति सर्वत्रानुवृत्तेः । **वस्त्रक्रीती**ति । वस्त्रशब्दस्य करणस्य क्रीतशब्देन 'कर्तृकरणे कृता बहुलम्' इति गतिकारकोपपदानां कृद्भिः सह समासः प्राक् सुबुत्पत्तेरिति परिभाषया[11] सुबुत्पत्तेः प्राक् समासः । **क्वचिन्न** । **धनक्रीते**ति । अयं भावः । धनेन क्रीता धनक्रीता । टाबन्तेन समासः । अत्र च 'अतः' इत्यनुवर्तते । ततो न ङीषिति । ननु चात्रापि सुबुत्पत्तेः प्राक् समासेन भाव्यम्[12] । उच्यते । कर्तृकरणे कृता बहुलमिति बहुलवचनात् 'गतिकारकोपपदानां कृद्भिः समासः प्राक् सुबुत्पत्तेः' इत्येतदपि बहुलम् । करणपूर्वात् किम् । सुक्रीता ।

---

१. C drops this Vârtika and the instance. २. आचार्यानी । आचार्या B₂; आचार्यी । आचार्यानी । Bc₃. ३. आर्य C, B₁, D₁. ४. आर्याणी । आर्या C, B₁, D₁, D₅. ५. Dropped Bc₃. ६. ङीष् D₃. ७. आर्या C, B₁, D₁. ८. सूर्याणीति केचित् D₂, B₁, D₄, D₆, P, C. ९. करणपूर्वादेः B₁. १०. ङीप् D₅. ११. Dropped Bc₁. १२. भवितव्यम् Dc₃.

**क्तादल्पाख्यायाम् ॥४।१।५१॥**

करणादेः क्तान्तादल्पाख्यायां ङीष् स्यात् ॥ अभ्रलिप्ती द्यौः।[1][2]

**बहुव्रीहेश्चान्तोदात्तात् ॥४।१।५२॥**

बहुव्रीहेः क्तान्तादन्तोदात्तात् स्त्रीयां ङीष्[3] स्यात् ॥ ऊरुभिन्नी । जातान्तान्न[4]* ॥ दन्तजाता ॥ बहुनञ्सुकालसुखादिपूर्वाच्च न* ॥ बहुकृता । इत्यादि ।

---

क्तात् । अल्पाख्या समुदायोपाधिः। अभ्रलिप्तीति । लिप उपदेहे । क्तः । अल्पैरभ्रैर्लिप्ता इत्यस्मिन्नर्थे विवक्षिते सुबुत्पत्तेः प्राक् समासः । अल्पशब्दो गतार्थत्वान्न प्रयुज्यते। अल्पाख्यायां किम् । चन्दनानुलिप्ता । बहुचन्दनानुलिप्तेत्यर्थः । बहु । अस्वाङ्गपूर्वपदाद्विकल्पं वक्ष्यतीति स्वाङ्गपूर्वामुदाहरति । ऊरुभिन्नीति । भिन्नौ ऊरू यस्याः सा[5] । 'जातिकालसुखादिभ्यः परा निष्ठा' इति क्तान्तस्य परनिपातः[6] । 'जातिकालसुखादिभ्योनाच्छादनात् क्तोकृतमितप्रतिपन्नाः' इत्यन्तोदात्तत्वम् । जातिवाची हि ऊरुशब्दः । बहुव्रीहेः किम् । पादपतिता। अन्तोदात्तात् किम् । वस्त्रच्छन्ना । दन्तजातेति । जाता दन्ता यस्याः । पूर्ववत् क्तान्तस्य परत्वमन्तोदात्तत्वं च। बहुकृतेति । बहु कृतं यया । पूर्ववत् परत्वान्तोदात्तत्वे । आदिना अकृता सुकृता मांसकृता सुखकृता दुःखकृता ।

---

१. Dropped द्यौः $D_1$, $Bc_3$, $D_4$, $D_5$. २. C has after it—अक्षरलिप्ती जिह्वा। अल्पाख्यायां किम् । चन्दनानुलिप्ता ।; अल्पाख्यायां किम् । चन्दनानुलिप्ता $B_2$, $D_3$, $D_5$. ३. ङीप् $D_3$, $D_5$. ४. Before it—अल्पाख्यायां किम्। शंखभिन्नी। ऊरुभिन्नी। गलकोत्कृत्ती केशलूनी। बहुव्रीहेरिति किम्। पादपतिता। अन्तोदात्तादिति किम् । वस्त्रच्छन्ना । $B_2$. ५. Dropped $Bc_3$. ६. परनिपातत्वम्° $Dc_3$. ७. Dropped $Bc_3$.

पाणिगृहीती भार्यायाम् * ॥ पाणिगृहीता अन्या ।

**अस्वाङ्गपूर्वपदाद्वा ॥४।१।५३॥**

अस्वाङ्गादेः क्तान्ताद्बहुव्रीहेर्वा ङीष् ॥ सुरापीती । सुरापीता । अन्तोदात्तात् किम् । वस्त्रच्छन्ना ।

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥४।१।५४॥**

असंयोगोपधात् स्वाङ्गादुपसर्जनात् स्त्रियां ङीष् वा स्यात् ॥ सुमुखी । सुमुखा ।

---

**पाणिगृहीतीति** । यस्यास्त्वग्निसाक्षिकं पाणिर्गृहीतः सा भार्या तस्यां वाच्यायामित्यर्थः । **पाणिगृहीतान्येति** । यस्या यथा कथंचित् पाणिर्गृहीतः सा ।

**अस्वाङ्ग** । **अस्वाङ्गादेरिति** । स्वाङ्गलक्षणमनन्तरमेव पठिष्यति । न स्वाङ्गमस्वाङ्गं तदादिर्यस्य बहुव्रीहेः । **सुरापीतीति** । पीता सुरा यया । 'जातिकाल—' इति परनिपातः । 'जातिकालसुखादि—' इत्यन्तोदात्तत्वम् । अत्र 'अन्तोदात्तात्' इत्यनुवर्तते इत्यभिप्रेत्याह । **अन्तोदात्तात् किमिति** । **वस्त्रच्छन्नेति** । अनाच्छादनेति अन्तोदात्तत्वनिषेधात् 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । 'अनुदात्तं पदमेकवर्जम्' इति शेषमनुदात्तम् । बहुलं संज्ञाछन्दसोरिति वाच्यम् । प्रवृद्धविलूनी । प्रवृद्धविलूना । प्रवृद्धा चासौ विलूना चेति । नायं बहुव्रीहिः ।

**स्वाङ्गात्** । **सुमुखीति** । सुष्ठु मुखं यस्या इति बहुव्रीहिः । अत्र च 'प्रथमानिर्दिष्टम्—' इति मुखशब्दस्योपसर्जनत्वम् ।

---

१. क्तान्तादन्तोदात्ताद्बहुव्रीहे B$_2$. २. B$_1$, D$_1$ have स्यात् after it. ३. P has वा after it; C and Bc$_3$ have after it—स्वाङ्गपूर्वपदात् किम् । ऊरुभिन्ना । शङ्खभिन्ना । (Bc$_3$ has ऊरुभिन्नी । शङ्खभिन्नी ). ४. वा ङीष् स्यात् C, B$_2$, ङीष् स्याद्वा P; ङीप् D$_1$, वा ङीप् D$_5$. ५. तु dropped Dc$_3$. ६. इत्यभिप्रायः । Dc$_4$. ७. Dropped Nc$_1$, Dc$_3$.

अतिकेशी । अतिकेशा[1] । संयोगोपधात् तु[2] । सुगुल्फा । अङ्गगात्रकण्ठेभ्यास्त्विष्यते[3] । स्वङ्गी । स्वङ्गा । इत्यादि ।

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।

---

**अतिकेशीति** । 'कुगतिप्रादयः' इति तत्पुरुषः । 'एकविभक्ति च—' इति केशशब्दस्योपसर्जनत्वम् । स्वाङ्गात् किम् । बहुयवा । उपसर्जनात् किम् । अशिखा । नञ्तत्पुरुषः । स्वाङ्गलक्षणमाह ।

**अद्रवमित्यादि** । मुखनासिकासंचारी वायुः प्राणः सोस्यास्तीति प्राणी । तत्र यत् तिष्ठति तत् प्राणिस्थं मुखादि स्वाङ्गमुच्यते । यद्येवं स्वेदोपि स्वाङ्गं स्यात् प्राणिस्थत्वादत आह[4] । **अद्रवमिति** । स्वेदस्तु द्रवरूपोतो न तत्र प्रसङ्गः । एवमपि ज्ञानं स्वाङ्गं स्यात् प्राणिस्थत्वादद्रवत्वाच्चेत्यत आह । **मूर्तिमदिति** । असर्वगतस्य द्रव्यस्य परिमाणं मूर्तिः सा यस्यास्ति तन्मूर्तिमत् । न च सा ज्ञानस्यास्ति निर्गुणत्वाद्गुणानां ज्ञानस्यात्मगुणत्वात् । यन्मते-काठिन्यादि स्पर्शविशेषो मूर्तिस्तन्मतेनापि नैव मूर्तिमत् ज्ञानम् । न हि ज्ञानस्य स्पर्शोस्ति । एवमपि शोफस्य श्वयथुसंज्ञस्य स्वाङ्गत्वं स्यात् । यथोक्तविशेषणविशिष्टत्वादत आह । **अविकारजमिति** । विकारो वातादिवैषम्यम्[5] । तज्जं विकारजम् । न विकारजम-विकारजम् । शोफस्तु विकारजः । एवं चेत् रथ्यापरिगतानां केशादीनां स्वाङ्गता न स्यादप्राणिस्थत्वादत आह ।

---

१. $B_1$ has after it—बहुलं संज्ञाछन्दसोरिति वक्तव्यम् । प्रवृद्धविलूनी । प्रवृद्धविलूना ।. २. असंयोगोपधात् किम् $B_1$ ; Before it—स्वाङ्गात् किम् । बहुयवा । उपसर्जनात् किम् । आशिषा $B_2$. ३. °कण्ठेभ्यो वेष्यते $B_2$. ४. आह: $Dc_3$. ५. धातुवैषम्यम् । $Dc_4$.

अतत्स्थं तत्र दृष्टं चेत् तेन चेत् तत् तथायुतम् ॥ १ ॥

बहुस्वेदा । द्रवत्वात् । सुज्ञाना । अमूर्तत्वात्[1] । सुमुखा शाला । अप्राणिस्थत्वात्[2] । सुशोफा । विकारजत्वात् । सुकेशी । सुकेशा । रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । सुस्तनी । सुस्तना । प्रतिमा । प्राणिवत् प्राणिसदृशे स्थितत्वात् ।

---

अतत्स्थं तत्र दृष्टं चेदिति । तस्मिन् प्राणिनि तिष्ठतीति तत्स्थम् । अतत्स्थमप्राणिस्थमपि[3] केशादि स्वाङ्गं स्यात् यदि तत्र प्राणिनि दृष्टं स्यात् । एवमपि प्रतिमावयवानां मुखादीनां स्वाङ्गता न स्यात् । अप्राणिस्थत्वादत आह । तेन चेत् तत् तथायुतमिति । तेन प्राणिना येन प्रकारेण संस्थानविशेषेण संबद्धं तथा यद्यप्राणिना संबद्धं स्यात् एवमपि स्वाङ्गं स्यात् । अथवा तेन चेत् मुखादिना तत् अप्राणिद्रव्यं तथा युक्तं स्याद्यथा प्राणिद्रव्यमेवमपि स्वाङ्गं स्यादिति । सर्वथायमर्थः[4] । यादृशं प्राणिनो मुखादि स्वाङ्गं तादृशमेव यद्यप्राणिनः स्यात् एवमपि स्वाङ्गं भवतीति । स्वाङ्गलक्षणपद्ये पूर्वस्थपदानां प्रयोजनं दर्शयन् प्रत्युदाहरणान्याह । बहुस्वेदेत्यादिना विकारजत्वादित्यन्तेन । अत्र सर्वत्र स्वाङ्गत्वाभावाद् ङीषोभावः । सुकेशी । सुकेशा रथ्येति । तृतीयचरणार्थस्योदाहरणम् । अप्राणिस्थस्येत्यादि । तत्र लक्षणप्रदर्शनम् । सुस्तनीत्यादि । चतुर्थचरणार्थस्योदाहरणम् । प्राणिवदित्यादि लक्षणप्रदर्शनपरम् । सर्वमेतच्छ्लोकव्याख्यान एव[5] व्याख्यातप्रायम् ।

---

१. अमूर्तित्वात् $B_2$. २. °स्थित° $Bc_3$; अप्राणित्वात् $D_3$. ३. अप्राणिस्थमपि $D_2$, P; C, $B_1$, $B_2$. ४. °मर्थ इत्यर्थः । $Bc_3$. ५. एव dropped $Bc_3$.

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥४।१।५५॥**

एतदन्तात्[१] स्त्रियां वा ङीष्[२] ॥ सुनासिकी। सुनासिका। इत्यादि ॥ पुच्छाच्च* ॥ सुपुच्छी ॥ सुपुच्छा ॥ कबरमणिविषशरेभ्यो नित्यम्* ॥ कबरपुच्छी[३]। इत्यादि। मणिपुच्छी। इत्यादि। उपमानात् पक्षपुच्छाभ्याम्* ॥ श्येनपक्षी । श्येनपुच्छी । सेना ।

**न क्रोडादिबह्वचः ॥४।१।५६॥**

क्रोडादेर्बह्वचश्च स्वाङ्गात् स्त्रियां[४] न ङीष् । सुक्रोडा[५] । आकृतिगणोयम् । सुजघना[६] ।

---

नासिका । 'स्वाङ्गाच्चोपसर्जनात्' इत्येव । बह्वच्लक्षणे संयोगोपधलक्षणे निषेधे प्राप्ते वचनम् । सहनञ्विद्यमानपूर्वलक्षणस्तु[७] निषेधः स्यादेव । आदिना शातोदरी शातोदरा बिम्बोष्ठी बिम्बोष्ठा दीर्घजङ्घी दीर्घजङ्घा समदन्ती समदन्ता चारुकर्णी चारुकर्णा तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा । पुच्छाच्चेति वक्तव्यम् । कबरेत्यादि । एभ्यः परात् पुच्छान्नित्यं ङीषित्यर्थः। आदिना मणिपुच्छी विषपुच्छी शरपुच्छी श्येनपक्षी इत्यादि । श्येनवत् पक्षौ यस्याः श्येनवत् पुच्छं यस्याः ।

न क्रोडादि । स्वाङ्गादिप्राप्तो ङीष् निषिध्यते । सुक्रोडेति । सुष्ठु क्रोडा यस्याः सा सुक्रोडा । अश्वानामुरः क्रोडा । स्त्रीलिङ्गोयम् । उत्तरपदस्य 'गोस्त्रियोः—' इति ह्रस्वः। ततो ङीषो निषेधे टाप् । खुर । शाखा । बाल । शफ । गुल्फ । आकृतिगणोयमिति । अ क्रोडादिराकृतिगणः । ततः स्वसुभगा सुमङ्गलेत्यादि सिद्धम् । सुजघनेति । बह्वच उदाहरणम् ।

---

१. After it—बहुव्रीहेः $D_2$, $D_3$, $B_1$, $B_2$. २. After it—स्यात् P, $D_2$, ङीप् स्यात् $D_5$. ३. कबरवत् पुच्छो यस्याः सा कबरपुच्छी $B_1$, $D_5$. ४. स्त्रियां dropped P, $Bc_3$, $D_3$, $D_4$, $D_5$. ५. After it—शातोदरी—रा । बिम्बोष्ठी—ष्ठा । दीर्घजङ्घी—ङ्घा । समदन्ती—न्ता । चारुकर्णी—र्णा । तीक्ष्णशृङ्गी—ङ्गा । $B_2$. ६. C has पद्मवदना after it. ७. °पूर्वस्तु $Bc_3$; °विद्यमानलक्षणस्तु $Dc_3$.

**सहनञ्विद्यमानपूर्वाच्च** ॥४।१।५७॥

एतत्पूर्वात् स्वाङ्गात् स्त्रियां न ङीष् ॥ सकेशा । अनासिका । विद्यमानोदरा ।

**नखमुखात् संज्ञायाम्** ॥४।१।५८॥

सूर्पणखा[2] । गौरमुखा[3] । असंज्ञायां तु ताम्रनखी[4] ।

---

**सह** । **स्वाङ्गाच्चेति** । 'नासिकोदर—' इति प्राप्तो ङीष् निषिध्यते । **सकेशेति** । सह केशैर्वर्तते । 'तेन सहेति तुल्ययोगे' इति समासः । 'वोपसर्जनस्य' इति सहस्य सः । **अनासिकेति** । अविद्यमाना नासिका यस्याः । 'नञोस्त्यर्थानाम्' इति समासः ।

**नख** । **सूर्पणखेति** । 'पूर्वपदात् संज्ञायामगः' इति णत्वम् । स्पष्टत्वात् त्यक्तं सूत्रं व्याख्यायते । 'दिक्पूर्वपदात् ङीष्' ॥ ४।१।६०॥ स्वाङ्गाच्चोपसर्जनादित्यादि विधिशास्त्रमिहानुवर्तते । न क्रोडादीति निषेधशास्त्रं च । ततो यत्र तेन विहितस्तत्र विधेयः । यत्र निषिद्धस्तत्र निषेध्यः । दिक्पूर्वपदात् प्रातिपदिकात् ङीप् स्यात् । स्वरे विशेषः । प्राङ्मुखी । प्राङ्मुखा । इह न । प्राक्क्रोडा । प्राक्जघना ।

---

१. C, D$_1$, Bc$_3$, D$_5$, D$_4$ omit it. २. शूर्प° D$_1$. ३. गौरमुखी D$_5$. ४. After this C, D$_4$ have दिक्पूर्वपदात् ङीष् । वा डाप् स्यात् ॥ प्राङ्मुखा । इह न । प्राग्गुल्फा । प्राक्क्रोडा । प्राग्जघना । न क्रोडादिबह्वच इति प्रतिषेधात् ॥; B$_2$ has—दीर्घजिह्वी च छन्दसि । दिक्पूर्वपदात् ङीष् । प्राङ्मुखी । प्राङ्मुखा । इह न । प्राग्गुल्फा । प्राक्क्रोडा । प्राग्जघनेति न क्रोडेत्यादि निषेधात् ।; D$_2$, D$_3$ follow B$_2$, dropping दीर्घजिह्वी च छन्दसि ।. ५. इति च Bc$_3$, Dc$_3$. ६. शूर्प° Dc$_4$. ७. ङीप् Dc$_3$.

**वाहः** ॥४।१।६१॥

वाहन्तात् स्त्रियां ङीष् स्यात् ॥ भारौही ।

**सख्यशिश्वी भाषायाम्** ॥४।१।६२॥

एतौ[1] निपात्येते भाषायाम् ॥

**जातेरस्त्रीविषयादयोपधात्** ॥४।१।६३॥

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् ॥

---

**वाहः** । वाह इति वहेर्ण्विप्रत्ययान्तस्य निर्देशः । कर्मणि चोपपदे वहेर्ण्विविधानात् केवलस्य वाहः संभवो नास्तीति सामर्थ्यात् तदन्तविधिर्विज्ञायते इत्यभिप्रेत्याह । **वाहन्तादिति** । अत्र स्वरितत्वात् ङीषनुवर्तते । न ङीप् । अस्वरितत्वादित्यभिप्रेत्याह । **ङीष् स्यादिति** । **भारौहीति** । भारं वहतीति 'वहश्च'[4] इति ण्विः । ण्वेः सर्वापहारी लोपः । प्रत्ययलक्षणेनोपधावृद्धिः । ङीष् । 'वाह ऊठ्' इति संप्रसारणम् । 'एत्येधत्यूठ्सु' इति वृद्धिः ।

**सखी** । एताविति । सखीशब्दात् ङीष् । सखी । नास्याः शिशुरस्ति । अशिशुशब्दादपि ङीष् । अशिश्वीति निपात्यत इत्यर्थः । भाषायां किम् । सखा सप्तपदी[5] भव । अशिशुरिव ।

**जातेः** । जातिवाचकत्वात् । प्रातिपदिकं जातिशब्देनोक्तम्[6] । अभिधेयेभिधानोपचारात् । अत एवाह । **जातिवाचीति** । **अस्त्रीविषयादिति** । विषयशब्दोनन्यत्रभावे वर्तते । अत एवाह । **यन्न च स्त्रियां नियतमिति** । जातिलक्षणं चोक्तम् । 'आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह' ॥ इति । गृह्यते अनेनेति ग्रहणम् । करणे ल्युट् ।

---

१. Dropped $D_4$. २. एते निपात्ये $B_1$. ३. $B_1$ drops it. ४. 'वहेश्च' $Bc_3$, $Dc_3$. ५. °पदा $Dc_3$, $Dc_4$. ६. °नोच्यते $Dc_3$.

आकृतिः संस्थानं ग्रहणं यस्याः सा आकृतिग्रहणा । उपसर्जनत्वाच्च ङीष् । अवयवविशेषव्यङ्ग्येत्यर्थः । एतेन गोत्वमृगत्वतटत्वादि-जातिर्लक्षिता । ब्राह्मणक्षत्रियाद्याकारेऽसौ[1] सादृश्याद् ब्राह्मणत्वजातिरनेन न[2] संगृहीतेति तामाह । लिङ्गानां न च सर्वभागिति । या सर्वाणि लिङ्गानि न भजते साकारव्यङ्ग्यापि जातिः । एतच्चाप्राप्तप्रापणाय विधिर्नाकृतिग्रहणेत्यस्य[3] संकोचकमिति तटादेः सर्वलिङ्गत्वेपि आकृति-व्यङ्ग्यत्वाज्जातित्वं सिद्धम् । ब्राह्मणादिर्हि ब्राह्मणो ब्राह्मणीति द्वे लिङ्गे भजति न तु क्लीबमिति लिङ्गानां न सर्वभाक् । सर्वशब्दस्योप-पदस्य लिङ्गापेक्षत्वेपि गमकत्वाद् भजो ण्विप्रत्यय उपपदसमासश्च । लिङ्गानामिति कर्मणि षष्ठी । सकृदाख्यातनिर्ग्राह्येति । सकृदुपदिष्टा सती निश्चेतुं शक्येत्यर्थः । अनेन ब्राह्मणजातिवद्देवदत्तादेरसर्वलिङ्गत्वेपि सकृदाख्यातनिर्ग्राह्यत्वाभावान्न जातित्वम् । एकत्वं नित्यत्वं प्रत्येक-परिसमाप्तत्वमित्येते जातिधर्माश्च सकृदाख्यातनिर्ग्राह्येत्यनेनोक्ताः । तथा हि यद्येका न स्यात् एकस्मिन् पिण्डे[4] गौरिति सकृदुपदिष्टा पिण्डान्तरे न गृह्येत । नित्या चेन्न स्यात् यत्रोपदिष्टा तस्मिन् पिण्डे नष्टे न[5] स्यात् । यदि प्रत्येकं परिसमाप्ता न स्यात् यत्राख्याता तस्मिन्नपि पिण्डे सर्वात्मना न गृह्येत किं पुनर्पिण्डान्तरे । अनुक्तं संगृह्णाति । गोत्रं च चरणैः सहेति । गोत्रमिति पूर्वाचार्याणामपत्यस्य संज्ञा । अपत्यप्रत्ययान्ता च जातिरित्यर्थः । सा हि नाकारव्यङ्ग्या नाडायनो नाडायनी नाडायनमिति सर्वलिङ्गभाक् च । अतः पृथक् ग्रहणम् । चरणशब्दा वेदशाखाध्ययनक्रियासंबन्धात् क्रियाशब्दा न जातिशब्दाः । तेषां जातित्वप्रतिपादनाय चरणैः सहेत्युक्तम् । विचारविशेषः प्रकीर्ण-काण्डादवगन्तव्यः ।

---

१. असौ ब्राह्मणत्वं जाति &c. correct. कैयट is followed, see it. २. Dropped Bc3, Dc4. ३. वचनं Nc1, विधानं Dc4. ४. गोपिण्डे सकृदुपदिष्टापि Bc1; गोपिण्डे Dc3. ५. For न स्यात्—नश्येत् Dc4, Dc3.

मृगी । हंसी । ब्राह्मणी । घटी ।

गोत्रचरणावपि जातिरिष्यते। नाडायनी। कठी । बह्वृची । जातेः किम् । मुण्डा । स्त्रीविषयात्तु वलाका । योपधात्तु क्षत्रिया । गवयहयमुकयमत्स्यमनुष्याणां न निषेधः* ॥ गवयी । इत्यादि ॥

पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च—॥४।१।६४॥

पाकाद्युत्तरपदात् जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात् ॥ ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली ।

---

**मृगी** । **हंसी**ति । आकृतिग्रहणाया जातेरुदाहरणम् । **ब्राह्मणी**ति असर्वलिङ्गभाजः । **घटी**ति तु पूर्वाया एव ।

**गोत्रचरणावपी**ति । एतच्च व्याख्यातम् । **नाडायनी**ति गोत्रलक्षणा जातिः । **कठी बह्वृची**ति चरणलक्षणा । **मुण्डे**ति । मुण्डगुणयोगान्मुण्डा । गुणशब्दोऽयम् । **वलाके**ति । जातिवाच्यप्ययं सर्वदा स्त्रियामेव नियतः । **क्षत्रिये**ति । गोत्रमिह जातिः । 'क्षत्राद् घः' इत्यपत्ये घविधानात् । असर्वलिङ्गभाक्त्वे सति सकृदाख्यातनिर्ग्राह्यत्वाद्वा जातित्वम् । **गवयहये**त्यादि । गौरादिषु गवयादीनां पाठ इदानीन्तनः । तथा चोक्तं **भाष्यदीपे कैयटेन** । गौरादिष्विदानीन्तनैर्गवयादयः प्रक्षिप्ता इति वार्तिकारम्भाद्विज्ञायत इतीति ।

**पाक** । स्त्रीविषयत्वात् पूर्वेणाप्राप्तो ङीष् विधीयते ।

पाककर्णादयः समुदाया जातिविशेषवाचिनः ।

---

१. मन्दा $D_3$. २. Dropped $D_5$. ३. लम्बकर्णी $B_1$. ४. शालिपर्णी C. ५. सस्यफली C, $B_2$ ; गन्धफली $D_2$, C, $B_1$, $B_2$. ६. After it—इत्यादि $D_5$.

इतो मनुष्यजातेः ॥४।१।६५॥

इदन्तान्मनुष्यजातेः स्त्रियां ङीष् स्यात् ॥ अवन्ती । दाक्षी । इतः किम् । विट् । मनुष्यजातेः किम् । तित्तिरिः । इञ उपसंख्यानमजात्यर्थम् । सौतङ्गमी । सुतङ्गमादिभ्यश्चातुरर्थिक इञ् ॥

ऊङुतः ॥४।१।६६॥

मनुष्यजातेरुदन्तात् स्त्रियामूङ् स्यात् ॥

---

इतः । अवन्तीति । अवन्तेरपत्यं स्त्री । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति तस्य लुक् । दाक्षीति । 'अत इञ्' । उभयत्र गोत्रं जातिः । इतः किम् । विशोपत्यं विट् । 'जनपदशब्दात् क्षत्रियादञ्' । 'अतश्च' इति तस्य स्त्रियां लुक् । मनुष्यग्रहणं किम् । तित्तिरिः । आकृतिग्रहणा जातिः । जातेरित्यनुवर्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात् । उदमेयस्यापत्यम् । 'अत इञ्' । औदमेयी । इञ उपसंख्यानमजात्यर्थम् । सुतङ्गमेन निर्वृत्ता सौतङ्गमी । 'वुञ्छण्—' आदिसूत्रेण चातुरर्थिक इञ् । न चेयं जातिः । तपरकरणात् क्यजन्तादवन्तीयतः क्विपि न ङीप् । अवन्तीरिति ।

ऊङुतः । ङकारो 'नोङ्धात्वोः' इति विशेषणार्थः । सवर्णदीर्घत्वेनैव दीर्घत्वे सिद्धे यद्दीर्घोच्चारणं तत् 'शेषाद्विभाषा' इति प्राप्तस्य कपो बाधनार्थम् । तेन ब्रह्मबन्धूरिति नित्यमूकारान्त एव स्यात् । वृत्तस्वाधायहीनायां ब्राह्मणजातावयं बहुव्रीहिर्वर्तते । तथा जीवबन्धूः ।

---

१. Dropped $D_1$, $B_2$. २. Before it—कुन्ती $Bc_1$. ३. From इतः to इञ् dropped C, P, $D_1$, $D_3$, $D_5$; $Bc_3$; from इञ उप' to इञ् dropped $D_4$; $B_2$ has from इतः to विट् after सौतङ्गमी. ४. $B_2$ drops from सुत° to इञ्. ५. उदन्तान्मनुष्यजातेः C, $D_2$, $D_3$, $D_4$; उदन्तादयोपधान्मनुष्यजातेः $B_2$. ६. Dropped $B_1$. ७. निर्वृत्ता $Bc_1$, $Bc_3$. ८. ङीष् $Dc_3$.

सवर्णदीर्घः ।

**अन्तादिवच्च ॥६।१।८५॥**

योयमेकादेशः स पूर्वस्यान्तवत् परस्यादिवत् स्यात् ॥ इत्यादिवद्भावात् स्वाद्युत्पत्तिः । कुरूः । अयोपधादित्येव । अध्वर्युः । अप्राणिजातेश्चारज्ज्वादीनामिति वाच्यम्* ।

---

**सवर्णदीर्घ** इति । कुरोरपत्यं स्त्री । 'कुरुनादिभ्यो ण्यः' । 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति लुक् । गोत्रत्वाज्जातिः । ततः कुरुशब्दादूङ् । 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घ इत्यर्थः । ततः कुरू इति स्थिते ।

**अन्त** । **योयमिति** । 'एकः पूर्वपरयोः' इत्यधिकारेण य एकादेशो विधीयते **स पूर्वस्येत्यादि** । यथा तस्यान्त आदिर्वा तदन्ततस्तद्ग्रहणेन गृह्यते तद्वदेकादेशोपि तद्ग्रहणेन गृह्यते इत्यतिदेशार्थः । पूर्वपरयोरिति स्थानषष्ठ्यन्तत्वेन श्रवणात् पूर्वपरसमुदाय एकादेशस्य साक्षात् स्थानी । न पूर्वपरौ समुदायिनौ । समुदायो हि एकदेशेन निवर्त्यते तत्रावयवनिवृत्तिं विना समुदायनिवृत्तिर्नेति अवयवौ नान्तरीयकतया निवर्त्येते इति अवयवयोरानुमानिकं स्थानित्वं ततश्च श्रुतानुमानिकयोः श्रुतेनैव संबन्धो बलीयानिति अवयवाश्रयं कार्यं स्थानिवद्भावादप्राप्तमित्यन्तादिवद्भावो विधीयते । एवं स्थिते कुरु इत्यत्र प्रातिपदिकान्तो य उकारो यश्चोङ उकारस्तयोर्य एकादेशस्तस्य पूर्वस्यान्तवदित्यन्तवद्भावे सति यदिष्टं सिध्यति तदाह । **इत्यादिवद्भावादित्यादि** । आदिवद्भावः पूर्ववद्भावः प्रस्तुते प्रातिपदिकवद्भाव इति यावत् । ततो 'ङ्याप्प्रातिपदिकात्' इत्यधिकारेण विधीयमानानां स्वादीनामुत्पत्तिः स्यादित्यर्थः ।

---

१. सवर्णे Dc3. २. Before it— 'अकः सवर्णे दीर्घः' इत्यर्थः Dc3.
३. °रिति Nc1, Dc3, Dc4.

कर्कन्धूः[1] । प्राणिजातेस्तु धेनुः । रज्ज्वादेस्तु रज्जुः । हनुः ।[2]

**पङ्गोश्च ॥४।१।६८॥**

पङ्गूः ॥ श्वशुरस्योकाराकारयोर्लोपश्च[3]* ॥ श्वश्रूः ।

---

वर्णाश्रयविधावन्तर्भावो नेष्यते । तेन खट्वाभिरित्यत्रान्तवद्भावात् 'अतो भिस ऐस्' इति न । उभयत आश्रये नान्तादिवदिति च ज्ञेयम् ।

**कर्कन्धूरिति** । ननु चात्र ऊङि सति को विशेषः । यत ऊङ्यसत्यपि तदेव रूपं स एव स्वरः । तथा हि जम्बूपेलू[4]कर्कन्धू इत्यूप्रत्ययान्त एव व्युत्पादित इति चेदुच्यते । कर्कन्ध्वा कर्कन्ध्वै इत्यत्र 'नोङ् धात्वोः' इति विभक्त्याद्युदात्तत्वनिषेधार्थम् । अन्यथा खर्ज्वा खर्ज्वै इत्यत्र स न तथेहापि न स्यात् । स्पष्टत्वात् त्यक्तं सूत्रं व्याख्यायते । 'बाह्वन्तात् संज्ञायाम्' ॥४।१।६७॥ बाह्वन्तात् ऊङ् स्यात् संज्ञायाम् । भद्रबाहूः । संज्ञायां किम् । वृत्तौ[5] बाहू यस्याः वृत्तबाहुः ।

**पङ्गोः** । श्वशुरस्येति । अस्मादूङ्प्रत्ययः । अस्योकाराकारयोर्लोपश्च वक्तव्यः । श्वश्रूरिति । 'श्वशुरः श्वश्र्वा' इति तृतीयान्त[6]-निर्देशात् ज्ञापकात् स्वाद्युत्पत्तिः ।

---

१. After it—अलाबूः $Bc_2$. २. After it the Sûtra—बाह्वन्तात् संज्ञायाम् ॥ ४।१।६७॥ बहुशब्दान्तात् प्रातिपदिकात् स्त्रियामङू् स्यात् संज्ञायाम् । भद्रबाहूः । संज्ञायां किम् । वृत्तौ बाहू यस्याः सा वृत्तबाहुः । $D_4$, $D_5$, $B_1$ ; $B_2$ drops the वृत्ति up to भद्रबाहूः । ; वृत्तौ बाहू यस्याः सा dropped $B_2$, $D_4$ ; for all up to वृत्ता...बाहुः, $D_5$ has चित्रबाहुः ( $D_5$ drops प्रातिपदिकात् ). ३. °कारालोपश्च $D_3$, $D_1$, $D_2$, $Bc_3$. ४. कफेलू for पेलू, $Dc_3$; फेलू $Dc_4$. ५. Before it—यथा $Dc_4$. ६. प्रत्ययान्त for तृतीयान्त $Bc_1$, $Dc_1$.

**उरूत्तरपदादौपम्ये ॥४।१।६९॥**

ऊर्वन्तात् स्त्रियामूङ् स्यात् औपम्ये ॥ करभोरूः[1]।

**संहितशफलक्षणवामादेश्च ॥४।१।७०॥**

संहितादेरूर्वन्तात्[2] स्त्रियामूङ् स्यादनौपम्येपि[3] ॥ संहितोरूः। इत्यादि ॥ सहितसहाभ्यां च* ॥ सहितोरूः। सहोरूः[4]। तन्वादेर्वेति केचित्* ॥ तनुः[5]। तनूः। चञ्चुः। चञ्चूः।

---

उरू। करभोरूरिति। करभवदूरू यस्याः सा। लाघवार्थमूर्वन्तादिति वाच्ये उत्तरपदादित्युक्तम्। यत्र केवल ऊरुशब्द उत्तरपदं तत्र यथा स्यादिह मा भूत्। स्वामिन ऊरुः स्वाम्यूरुः हस्तिन इव स्वाम्यूरुरस्या हस्तिस्वाम्यूरुरिति। भवति ह्येतदूर्वन्तं प्रातिपदिकं न तूरूत्तरपदं किं तु स्वाम्यूरूत्तरपदम्। औपम्ये किम्। वृत्तोरुः।

संहित। आदिना शफोरूः। शफशब्दः संश्लिष्टवाची। लक्ष्मणोरूः। लक्ष्मीवद्वाची लक्ष्मणशब्दः। वामोरूः। तन्वादेरिति। तथोक्तं मुग्धबोधे। 'तन्वादेर्वा' इति। स्पष्टत्वात्त्यक्तं सूत्रं व्याख्यायते। 'संज्ञायाम्' ॥४।१।७२॥ कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ् स्यात्। अच्छन्दोर्थं[6] वचनम्। कद्रूः। कमण्डलूः। संज्ञायां किम्। कद्रुः। कमण्डलुः।

---

१. After this औपम्ये किम्। वृत्तोरुः स्त्री। $D_2$, $B_1$, $B_2$ ($D_2$ and $B_2$ drop स्त्री). २. संहिताद्यादे° $B_2$. ३. अपि dropped $B_2$, $D_5$, $D_3$, $D_2$, $Bc_3$. ४. $D_1$ drops it. ५. तनूः। तनुः। चञ्चूः। चञ्चुः $D_1$, $B_2$. ६. °च्छन्दार्थं $Bc_1$.

**शार्ङ्गरवाद्यञो ङीन् ॥४।१।७३॥**

शार्ङ्गरवादेरञन्ताच्च जातिवाचिनः स्त्रियां ङीन् स्यात् ॥ स्वरे भेदः ॥ शार्ङ्गरवी । इत्यादि । वैदी ॥

नृनरयोर्वृद्धिश्च* ॥ नारी ।

---

शार्ङ्ग । आदिना कापटव । बाहव । गौतम । गौडुल । एते अणन्ताः । ततो ङीषि प्राप्ते वचनम् । गौतमशब्दात् गौरादित्वात् ङीषपि । कामण्डलेयः । ब्राह्मणकृतेयः । आनिधेयः । आशोकेयः एते ढगन्ताः । अत्रापि ङीपि । वात्स्यायन । मौञ्जायन । जातित्वात् ङीषि । कैकेय । ढगन्तः । काव्यशैव्यौ यङन्तौ । ततश्चापि प्राप्ते । एहि । पर्येहि । कृदिकारान्तौ । ततो ङीषि । आश्मरथ्या यञन्तः । ततो ङीषि । औदपानम् । शुण्डिका । घणन्तः । अराल । चण्डाल । वतण्ड । जातित्वात् ङीषि । भोगवद्गौरिमतोः संज्ञायाम् । उगिल्लक्षणे ङीपि प्राप्ते । ननु चेमावाद्युदात्तौ । ततश्च ङीपि ङीनि वा विशेषाभावेति आह । घादिषु नित्यं ह्रस्वार्थम् । भोगवतितरा । गोमतितरेति । अन्यथा 'उगितश्च' इति वा ह्रस्वत्वं स्यात् । इति शार्ङ्गरवादिः । वैदीति । 'अनृष्यानन्तर्ये विदादिभ्योञ्' । गोत्रत्वात् जातिलक्षणे ङीषि प्राप्ते ङीन्विधिः । स्वरे विशेषः ।

नृनरयोर्वृद्धिश्चेति । शार्ङ्गरवादिगणस्थं सूत्रम् । नृशब्दादृदन्तत्वाज्जातित्वात् ङीपि नरशब्दादपि प्राप्ते वचनम् । जातित्वात् ङीषि वा ।

---

१. Before it— 'संज्ञायाम्' ॥४।१।७२॥ कद्रुकमण्डलुशब्दाभ्यां स्त्रियामूङ् स्यात् संज्ञायाम् । अच्छन्दोर्थवचनम् । कमण्डलूः । संज्ञायां किम् । कद्रुः । कमण्डलुः ॥ P; C, $B_1$, $B_2$ ($B_2$ has अच्छन्दोर्थं वचनम् । कद्रूः । कमण्डलूः ।). २. विशेषः $D_3$. ३. ङीपि $Dc_3$, $Dc_4$. ४. °शैल्यौ $Bc_3$. ५. यङन्तः $Dc_3$. ६. ङीपि $Bc_3$. ७. भोभगवद् $Bc_3$.

**यङश्चाप् ॥४।१।७४॥**

यङन्तात् स्त्रियां चाप् स्यात् ॥ चेकारः स्वरार्थः[1] । कौमुदगन्ध्या । कारीषगन्ध्या । वाराह्या ।

षात्पराद्यञश्चाप् वाच्यः* । पौतिमाष्या ।[2][3]

---

**यङ** । चः स्वरार्थ इति । 'चितः' इत्यन्तोदात्तार्थः । पकारः सामान्यग्रहणार्थः । **कौमुदगन्ध्येत्यादि** । कुमुदस्येव गन्धोस्याः कुमुदगन्धिः । करीषगन्धिः । तस्य गोत्रापत्यं स्त्री । अण् । वाराहस्य गोत्रापत्यं स्त्री । 'अत इञ्' । ततः 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' इति अणिञोः ष्यङादेशस्ततश्चाप् । **पौतिमाष्येति** । पूतिमाषस्य गोत्रापत्यम् । गर्गादित्वाद्यञ् । ततश्चाप् । व्याख्यातप्रायत्वात् त्यक्तम् ।

'आवट्याच्च' । ॥४।१।७५॥ गर्गादियञन्तादवट्शब्दात् चाप् स्यात् । आवट्या । 'यञश्च' इति ङीपि प्राप्ते वचनम् ।

---

१. चः P, $D_5$. २. शार्कराक्ष्या । पौतिमाष्या । गौकक्ष्या $B_2$. ३. After this the Sûtra—आवट्याच्च ॥४।१।७५॥ अवटो गर्तादिस्तस्माद्यञन्तात् ङीपोपवादश्चाप् स्यात् । आवट्या P, C, $B_1$, $B_2$ तदपवाद° P ; °चाप् स्यात् । तदपवादे ङीष् । आवट्या । आवट्यायनी । पिप्पलादेयश्च । पिप्पली । हरीतकी । कौशातकी । शमी । शरी । पृथिवी । इ( ई? )कारनिपातश्च पुंवद्भावनिषेधार्थः । पृथिवीभार्यः । यूनास्तिः । &c. $B_2$.

यूनस्तिः ॥४।१।७७॥

युवन्शब्दात् स्त्रियां तिः स्यात् ङीपोपवादः । तद्धितत्वात् स्वाद्युत्पत्तिः । युवतिः ।

इति स्त्रीप्रत्ययाः ॥

इति श्रीरामचन्द्रविरचितायां प्रक्रियाकौमुद्यां स्त्रीप्रत्यय-प्रकरणं पूर्णम् ॥

---

यूनस्तिः । ङीपोपवाद इति । ऋन्नेभ्यः प्राप्तस्य । तद्धितत्वादिति । 'तद्धिताः' इत्यनुवृत्तेरिति भावः । कथं युवतीति । यौतेरौणादिके कतिप्रत्यये 'कृदिकारात्—' इति ङीष् ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्याने गुः प्रसादे सुविशदमबलाप्रत्ययाः संप्रदिष्टाः ॥

इति स्त्रीप्रत्ययाः ।

---

१. Before it—स्वादिष्वसर्वनामस्थान इति पदसंज्ञायां नलोपः $B_2$.
२. P and $B_1$ have इति श्रीरामचन्द्रविरचितायां प्रक्रियाकौमुदीव्याकरणे (प्रक्रिया कौमुद्यां $B_1$) स्त्रीप्रत्ययप्रक्रिया समाप्ता (स्त्रीप्रत्ययप्रकरणं पूर्णम् $B_1$).
३. °भगमन् प्रत्ययाः स्त्रीवदन्तः । $Dc_4$.

# अथ विभक्त्यर्था उच्यन्ते ।

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥२।३।४६॥**

प्रातिपदिकार्थः सत्ता ।

---

अथ[1] विभक्त्यर्था उच्यन्ते । **प्रातिपदिकार्थलिङ्ग** । **प्रातिपदिकार्थः सत्तेति** । सत्तेत्युपलक्षणम् । यत्रार्थान्तरानपेक्षया शब्दस्य प्रवृत्तिः स सर्वः प्रातिपदिकार्थः । शब्दप्रवृत्तिनिमित्तमिति यावत् । लिङ्गं पुंस्त्रीनपुंसकशब्दवाच्यः क्रमादुपचयापचयस्थितिरूपो वस्तुधर्मः । तथा चोक्तं **महाभाष्ये** । संस्त्यानप्रसवौ लिङ्गमिति । संस्त्यानं संहतिरपचयः । प्रसवः प्रसूतिरुपचय इत्यर्थः । तथा संस्त्यानविवक्षायां स्त्री । प्रसवविवक्षायां पुमान् । उभयोरविवक्षायां नपुंसकमिति । तत्र क्वचिदुपचयो यथा वृक्षः । क्वचिदपचयो यथा गङ्गा । क्वचिदुपचयापचयाभावो यथा ज्ञानम् । क्वचिदुपचयापचयौ । यथा मृगः मृगी । क्वचित् त्रयं यथा तटस्तटी तटमिति । अयं च लिङ्गस्यैकः[2] प्रकारो वर्णितः । लिङ्गप्रकारविशेषास्तु भर्तृहरिणा प्रकीर्णकाण्डे उक्ता ज्ञेयाः । तेन च

'स्तनकेशादिसंबन्धो विशिष्टा वा स्तनादयः ।
तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा ॥१॥
शब्दोपजनितोर्थात्मा शब्दसंस्कार इत्यपि ।
लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः ॥२॥'

इत्यारभ्य

'इदमयमियं चेति शब्दसंस्कारमात्रकम् ।
निमित्तदर्शनादर्थः कैश्चित् सर्वत्र वर्ण्यते ॥३॥
नावश्यं विषयत्वेन निमित्तं व्यवतिष्ठते ॥'

---

१. Before it—ओं नमः सरस्वत्यै Dc4. २. लिङ्गैकदेशो वर्णितः Dc1.

मात्रशब्दस्य प्रत्येकं योगः[1]। सत्तामात्रादिष्वर्थेषु[2] प्रथमा स्यात् ॥ उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् ।

---

इत्यन्तेन ग्रन्थसंदर्भेण सर्वप्रकारविशिष्टं लिङ्गं सम्यग् विचारितम् । परिमाणं खारी द्रोणः प्रस्थ इत्यादिकं सर्वतो मानम् । तच्चोन्मानादेरप्युपलक्षणम् । वचनमेकत्वद्वित्वबहुत्वानि । **मात्रशब्दस्येति** । मात्रशब्दस्य प्रातिपदिकार्थादिभिः प्रत्येकं संबन्धः । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति न्यायात् । ततश्च प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे प्रथमेत्यर्थः । उच्चैः नीचैरिति प्रातिपदिकार्थस्योदाहरणम्[3] । अलिङ्गसंख्यावेतौ केवलजात्यादिनिरपेक्षं[4] स्वार्थमाहतुः । यदि प्रातिपदिकार्थमात्रे प्रथमा नोच्यते[5] तत[6] उच्चैरित्यादौ 'षष्ठी शेषे' इति षष्ठी स्यात् । ततश्च ग्राम उच्चैस्तव स्वमित्यत्र 'सपूर्वायाः प्रथमाया विभाषा' इति विकल्पेन तेमयादिविधिर्न स्यात् । कृष्णः । श्रीः । **ज्ञानमिति** लिङ्गस्योदाहरणम् । ननु चात्रापि प्रातिपदिकार्थ इत्येव प्रथमा सिद्धा । लिङ्गस्यापि प्रातिपदिकार्थत्वात् । न सिद्धा । तथा हि विभक्तिं विना कृष्णादयः शब्दाः किं पुंस्त्वमाचक्षते उत स्त्रीत्वं क्लीबत्वं वेति संदेहो भवति । तत्र यथा राज्ञः पुरुष इति प्रातिपदिकेनानुपात्ते स्वस्वामिसंबन्धे तस्याभिधानार्थं षष्ठ्यपेक्ष्यते[7] तथात्रापि पुंस्त्वादीनामभिधानार्थं षष्ठी स्यात् । अन्यच्च यदा स्त्रियामभिधेयायां टाबादय इत्यर्थस्तदा स्त्रीत्वस्याप्रातिपदिकार्थत्वात् शालाकुमारीत्यादौ प्रथमा न स्यात् । तस्माल्लिङ्गग्रहणं कार्यम् ।

---

१. मात्रशब्दः प्रत्येकमभिसंबध्यते C. २. सन्मात्रा° P, C, D, Bc₃. ३. प्रातिपदिकस्यो° Nc₁, Dc₁. ४. केवलं Bc₃, Dc₄, Dc₃. ५. नोच्येत Dc₂, Dc₄, Dc₃. ६. तर्हि Dc₂. ७. °मपेक्षते Bc₃, Dc₃, Dc₄.

खारी । द्रोणः । आढकम् । एकः । द्वौ । बहवः ।

---

खारी द्रोण इति परिमाणस्योदाहरणम् । ननु चात्र प्रातिपदिकार्थ इत्येव सिद्धा प्रथमा । तथा हि द्रोणादयः शब्दा लौहे दारुमये वा परिमाणेऽर्थान्तरनिरपेक्षा एव वर्तन्ते । सत्यं सिद्धा यदा परिमाणे वर्तन्ते । यदा तु तत्[1]परिमिते धान्यादौ सोयमित्यभिसंबन्धात् वर्तन्ते द्रोणपरिमितो व्रीहिर्द्रोण इति तत्र[2] प्रथमा न स्यात् । अतः परिमाणग्रहणम् । यद्येवं निमित्तरूपेण निमित्तिनोभिधानादव्यतिरिक्त एव प्रातिपदिकार्थ इति प्रातिपदिकार्थ इत्येव प्रथमा स्यात् । न स्यात् । मुख्ये सति गौणस्य ग्रहणायोगात् । नन्वेवमपि लिङ्गग्रहणादेव प्रथमा स्यात् । नैवम् । यत्र हि परिमाणं नास्ति सोवकाशो लिङ्गग्रहणस्य स्यात् । तत्र तु परिमाणस्याधिक्यात् षष्ठ्येव स्यात् । तस्मात् परिमाणग्रहणम् । तच्चोन्मानादेरप्युपलक्षणम् । तेन शतं पलं हस्तः पटः[3] दीर्घं काष्ठमित्यत्रापि प्रथमा स्यात् । एकः द्वौ बहव इति व[4]चनग्रहणस्योदाहरणम् । उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति वचनग्रहणम् । अन्यथानभिहिताधिकारादुक्तेष्वेकत्वादिषु न स्यात् । ननु प्रातिपदिकात् प्रथमा विधीयते । तत्रासत्यपि प्रातिपदिकग्रहणे अर्थग्रहणमात्रे सति प्रातिपदिकार्थ एवेति विज्ञास्यते । तत् किं प्रातिपदिकग्रहणेन । उच्यते । निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तम् । ततोपि यथा स्यात् । प्रलम्बते । अध्यागच्छतीति । 'कृत्तद्धितसमासाश्च' इति कृदन्तस्य तद्धितान्तस्य समा[5]सस्य च प्रातिपदिकत्वात् तदर्थस्य च प्रातिपदिकार्थत्वात् कृदर्थादौ प्रातिपदिकार्थेत्यनेनैव प्रथमा स्यादित्याह ।

---

१. तत्परिमाणपरिमिते $Nc_1$, $Dc_2$, $Dc_3$. २. अत्र $Dc_2$, $Dc_4$, $Dc_3$. ३. पटः $Dc_1$, $Dc_2$. ४. वचनस्यो° $Dc_1$, $Bc_3$. ५. समासान्तस्य $Bc_1$; dropped $Bc_3$.

कृदर्थे युङ् । ताद्धितार्थे औपगवः । समासार्थे चित्रगुः ॥

**संबोधने च ॥२।३।४७॥**

संबोधने प्रथमा स्यात् ॥ हे राम ।

---

कृदर्थ इत्यादि । युङ् । युजिर् योगे अस्मात् कर्तरि 'ऋत्विक्—' इति क्विन् च । औपगव इति । उपगोरपत्यम् । तस्यापत्यमित्यर्थेण् तद्धितः । चित्रगुरिति । चित्रा गावो यस्येति 'अनेकमन्यपदार्थे' इत्यन्यपदार्थे बहुव्रीहिः समासः ।

संबोधने । अभिमुखीकरणं हि संबोधनम् । तस्य प्रातिपदिकार्थादधिकत्वात् पूर्वेण न प्राप्नोति इत्यारम्भः । हे पचन् हे पचमानेत्यत्र संबोधनस्य शतृशानच्भ्यामुक्तत्वात् प्रातिपदिकार्थान्तर्भूतत्वात् पूर्वेणैव प्रथमा । स्पष्टत्वात् त्यक्तं सूत्रं व्याख्यायते । 'सामन्त्रितम्' । २।३।४८॥ संबोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं स्यात् । आमन्त्रिप्रदेशाः 'आमन्त्रितस्य' । इत्येवमादयः । सेति वचनं प्रातिपदिकार्थेति या संबोधने प्रथमा विहिता तस्या अपि यथा स्यादित्येवमर्थम् । हे पचन्निति । अन्यथा अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्यनन्तरसूत्रेण या विहिता तत्रैव स्यान्नात्र ॥

इति निरूपिता प्रथमा ॥

---

१. D1 drops संबोधने; संबोधने च B2. २. च dropped Dc2. ३. संबोधने च Dc2;, संबोधने च । संबोधने च प्रथमा स्यात्; हे राम । मू० । Dc1. ४. वा विधि° Dc1, Bc3.

## कर्तुरीप्सिततमं कर्म ॥१।४।४९॥

### कर्तुः क्रियया[1] आप्तुमिष्टतमं[2] कर्मसंज्ञं[3] स्यात् ॥

कर्तुः[4]— अत्र यद्यपि क्रिययेति नोक्तं तथापि कर्तुः शब्दस्य संबन्धिशब्दत्वात् क्रियोपस्थानमित्यभिप्रेत्याह । **कर्तुः क्रिययेति** । ईप्सितशब्दोयमस्ति रूढोभिप्रेते अस्ति च क्रियाशब्दः प्राप्तुमिष्ट[5] इति । तत्र रूढिशब्दस्य कर्तृसाध्यया क्रियया संबन्धाभावात् क्रियाशब्दोत्र गृह्यत इत्यभिप्रेत्याह । **आप्तुमिष्टतममिति** । तच्च कर्म त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं चेति । तत्र निर्वर्त्यं यदसदेव जायते यथा कटं करोतीति । विकार्यं लब्धसत्ताकमेवावस्थान्तरमापद्यते । तदपि द्विविधम् । एकं प्रकृत्युच्छेदसंभूतम् । यथा काष्ठं भस्म करोतीति । अपरं गुणान्तराधानेन व्यपदेशान्तरनिमित्तम् । यथा सुवर्णं कुण्डलं करोतीति । प्राप्यं तु यत्र निर्वर्त्यविकार्यसंबन्धिनो विशेषाः प्रत्यक्षेणानुमानेन वा न प्रतीयन्ते केवलं प्राप्तिमात्रं प्रतीयते । यथा आदित्यं पश्यतीति । यथा चायमर्थो **भर्तृहरिणोक्तः** ।

> 'यदसज्जायते पूर्वं जन्मना यत् प्रकाशते ।
> तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् ॥ १ ॥
> प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् ।
> किंचित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ २ ॥
> क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
> दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते ॥ ३ ॥'

इति । एवमीप्सिततमं त्रिविधम् । तथा युक्तं द्वेधा । द्वेष्यमितरच्च । अकथितं चापरम् । संज्ञान्तरप्रसङ्गे[6] चान्यत् । 'दिवः कर्म च' इत्यादि । तदेवं कर्म सप्तधा । तथोक्तम् ।

---

१. त्रियार्थमिष्टतमं कारकं $D_2$ ; क्रियया यदा° $D_3$, $D_5$. २. प्राप्तु° $D_4$. ३. C has कारकम् before it. ४. कर्तुरीप्सिततमं कर्म । कर्तुः क्रियया आप्तुमिष्टतमं कर्मसंज्ञं स्यात् । मू. $Dc_1$. ५. आप्तु° $Dc_4$. $Dc_3$. ६. °प्रसङ्गेन $Dc_4$.

## कर्मणि द्वितीया ॥२।३।२॥

'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥१॥
औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥ २॥' इति ॥

कर्तुरिति किम् । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा न कर्तुः । ईप्सित इति किम् । अग्नेर्माणवकं वारयति । तमग्रहणं किम् । पयसोदनं भुङ्क्ते । 'अधिशीङ्स्थासां कर्म' इत्यतः कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारानिवृत्त्यर्थम् । तद्धि आधारेण संबद्धं तदनुवृत्ता-वाधारस्याप्यनुवृत्तिः स्यात् । ततश्च गेहं प्रविशतीत्यादावेव स्यात् । पुनः कर्मग्रहणात्तु सर्वत्र सिध्यति ।

**कर्मणि** । अनभिहित इत्यनुवर्तते । तत्राभिपूर्वो दधातिर्हस्वा-भिधानमाधत्त इति बन्धने वर्तते श्लोकोभिहित इत्युच्चारणे अर्थोभिहित इति प्रतिपादने हिनोतेरपि गतिवृद्ध्यर्थस्याभिपूर्वस्या-भिहितमिति स्यात् । तत्र कर्मादीनां बन्धनाद्यर्थासंभवात् प्रतिपादनार्थोत्राभिहितशब्दः । तथा च यद्यनभिहिते कर्मणि द्वितीयेति सामान्येनोच्येत ततो यथा कृतः कट इत्यत्र क्तेन कर्मण उक्तत्वात् द्वितीया न तथा कटं करोति भीष्ममुदारं दर्शनीय-मित्यमित्यत्रापि कटशब्दादुत्पद्यमानया द्वितीयया भीष्मादिगतस्य

१. कल्पिकम् $Bc_3$. २. After it—ओदनं पचतीत्यत्र न स्यात् $Dc_4$, $Dc_3$. ३. कर्मणि द्वितीया । तिङ्कृत्तद्धितसमासैरनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । तिङाद्यभिहिते तु कर्मादिकारके प्रातिपदिकार्थे प्रथमा । सेव्यते सेवितो लक्ष्म्या प्राप्तानन्दः सदा हरिः ॥ तद्धितोक्तौ । शतेन क्रीतः । शत्यः । मूल. $Dc_1$.

तिङ्कृत्तद्धितसमासैरनुक्ते कर्मणि द्वितीया स्यात् ॥ हरिं भजति ।
तिङाद्यभिहिते तु कर्मादिकारके प्रातिपदिकार्थेति प्रथमा ।

---

कर्मण उक्तत्वात् भीष्मादिभ्यो द्वितीया न स्यादतः परिगणनं कर्तव्यमित्येतत् सर्वं चेतसि कृत्वाह । **कृत्तद्धितसमासैरनुक्ते कर्मणीति** । एतैरनुक्तकर्माश्रितायां संख्यायां द्वितीया स्यादित्यर्थः। संख्याया विभक्त्यर्थत्वात् । तथा चोक्तं **भर्तृहरिणा**

'निमित्तमेकमित्यत्र विभक्त्या नाभिधीयते ।
तद्गतं तु यदेकत्वं विभक्तिस्तत्र वर्तते' ॥ इति ।

तथा च सति अनभिहिते कर्मणि द्वितीया बहुषु बहुवचनमित्यादेरेकवाक्यता सिध्यति । तथा चोक्तं **काशिकायां वृत्तौ** । बहुषु बहुवचनमित्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टा । तत्र विशेषणार्थमिदमारभ्यते । अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या इति । हरिं भजतीति । देवदत्त इति शेषः । अत्र देवदत्तस्य कर्तुर्भजनक्रियया हरिराप्तुमिष्टतम इति कर्म । तच्च प्राप्यम् । एवं निर्वर्त्यादावुदाहार्यम् । **तिङाद्यभिहिते त्विति** । तिङ्कृत्तद्धितसमासैरुक्ते कर्मादौ कारके 'प्रातिपदिकार्थ—' इति सूत्रेण प्रथमेत्यर्थः । तथा चोक्तं **कारकपरीक्षायाम्** । 'तत्कर्मादिषु कारकेष्वनभिहितेषु द्वितीयादयः कर्तव्याः अभिहितेषु प्रथमेत्येवं विभक्तीनां विषयविभागः' इति । अत एवोक्तं **भाष्यकृता** । 'अभिहितो योर्थः संपन्नः प्रातिपदिकार्थः' इति । तत्र तिङाद्यभिहितस्य कर्मण उदाहरणान्याह ।

---

१. तिङाद्यनुक्ते D3. २. After it—कारके P, C, B1. ३. प्रातिपदिकार्थेपि D1.

सेव्यते सेवितो लक्ष्म्या प्राप्तानन्दः सदा हरिः ।
तद्धितोक्तौ शतेन क्रीतः शत्यः ।

## तथायुक्तं चानीप्सितम् ॥१।४।५०॥

ईप्सिततमवत् क्रियया युक्तमनीप्सितं च कर्मसंज्ञं स्यात् ॥[1]

---

**सेव्यत** इत्यादि । सदा प्राप्तानन्दो लक्ष्म्या सेवितो हरिः मया सेव्यत इत्यन्वयः । सेव्यते इति षेवृ सेवे अस्मात् 'लः कर्मणि—' इति कर्मणि लट् । 'भावकर्मणोः' इत्यात्मनेपदम् । 'सार्वधातुके यक्' । अत्र हरिः कर्म । स तु तिङोक्त इति प्रथमामूत । **सेवित** इति । तस्मादेव धातोः 'तयोरेव—' इति कर्मणि क्तः । स च कृतेनोक्तं कर्मेति सेवित इति प्रथमा । **प्राप्तानन्द** इति । प्राप्त आनन्दो यमिति कर्मण्यन्यपदार्थे 'अनेकमन्यपदार्थे' इति बहुव्रीहिः समासः । तत्र समासेनोक्तं कर्मेति प्राप्तानन्द इति प्रथमा । **शत्य** इति । 'शताच्च ठन्यतावशते' इति क्रीतार्थे ताद्धितो यत् । तेन क्रयस्य कर्मोक्तमिति शत्य इति प्रथमा । तिङ्कृत्ताद्धितसमासैरिति परिगणनं न कर्तव्यं वा । तथोक्तं न्यासे । 'कटशब्दस्तु विशिष्टद्रव्यवचन इति तत उत्पद्यमाना द्वितीया तद्गतमेव कर्म शक्नोत्यभिधातुं नान्यत् । तत् कथं तया भीष्मादिकर्माभिधीयते । तथा च निरर्थकं परिगणनम् । तस्मात् कृत्तद्धितसमासैरेवाभिधानं संभवतीति संभवदुदाहरणप्रदर्शनपरमेतत् परिसंख्यानं वेदितव्यम्' इति ।

**तथायुक्तं चानीप्सितम्** । ईप्सिततमवत् क्रियायुक्तमिति । येन प्रकारेणेप्सिततमं कर्तुः क्रियया युज्यते तेनैव चेत् प्रकारेणानीप्सितमपि युज्यते तर्हि अनीप्सितमपि कर्मसंज्ञं स्यादित्यर्थः ।

---

१. क्रियायुक्तं $B_2$, $D_2$, $D_5$, $D_4$, $Bc_3$. २. अपि C. ३. $B_1$, $D_4$ have ओदनं भक्षन् तत्संसृष्टं and $B_2$, $Bc_3$ द्वेष्यमितरच्च; and $D_5$ has अन्नं भक्षन् before it. ४. तथा चोक्तं $Dc_4$.

**विषं भुङ्क्ते । ग्रामं गच्छन् तृणं स्पृशति ॥**

**अकथितं च ॥१।४।५१॥**

**अपादानादिविशेषैरकथितं कारकं कर्मसंज्ञं स्यात् ॥**

---

ईप्सितादन्यदनीप्सितमिति पर्युदासोयम् । तेन यद् द्वेष्यं यच्चोपेक्षणीयं तद् द्वयमप्यनीप्सितम् । एतदेवाभिप्रेत्योदाहरणद्वयमाह । **विषं भुङ्क्ते** इति द्वेषस्योदाहरणम् । **ग्रामं गच्छन् तृणं स्पृशती**त्युपेक्षणीयस्य[1] ।

**अकथितं च** । **अपादानादी**ति । अपादानसंप्रदानकरणाधिकरणकर्मकर्तृभिः कारकविशेषैरनुक्तमित्यर्थः । **कारकमिति**[2] । अत्र च 'कारके' इत्यधिकारोस्ति । तस्य चायमर्थः । कारकं निमित्तं तच्चापादानादिसंज्ञाविषयं विशेषणत्वेनाधिक्रियते । कारके इति निर्धारणे सप्तमी । जात्यभिप्रायं चैकवचनमिति । ततश्चात्रायमर्थः । कारकेषु मध्ये अपादानादिविशेषैरकथितं यत् क्रियाया निमित्तं तत् कर्मसंज्ञं स्यादिति । कारकं किम् । माणवकस्य पितरं पन्थानं पृच्छति । माणवकस्येत्यत्राकारकत्वादकथितेपि कर्मसंज्ञा न । नटस्य गाथां शृणोतीत्यादि । अन्यधातुव्यवच्छेदार्थं परिगणनं करोति दुह्याच्यर्थेत्यादिना श्लोकेन । तेन दुहादीनामेव प्रयोगे अकथितस्य कर्मसंज्ञा नान्येषाम् । श्लोकस्यायमर्थः । अपादानादिविशेषैरकथितं कारकं कर्मसंज्ञं स्यादित्युक्तम् ।

---

१. Before it—गङ्गां द्रष्टुं प्रसारितनेत्रो जनानपश्यत् D1. २. After it—उदाहरणम् Dc3. ३. कारक इति Bc3. ४. यदपा° Bc1.

दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासुजिकर्मयुक् ।
नीहृकृष्मन्थवहदण्डिग्रहमुष्पचकर्मभाक् ॥१॥

तच्च कारकं विशिनष्टि दुह्याच्यर्थेत्यादिना । दुह प्रपूरणे । याच्यर्था याच्ञार्थाः । रुधिर् आवरणे । प्रछ ज्ञीप्सायाम् । चिञ् चयने । ब्रूञ् व्यक्तायां वाचि । शासु अनुशिष्टौ । जि जये । एतेषां धातूनां द्वन्द्वः । तेषां कर्म कर्तुरीप्सिततममश्वादि तेन सह युनक्तीति कर्मयुक् । एतद्धातुकर्मसंबद्धमित्यर्थः । तथा णीञ् प्रापणे । हृञ् हरणे । कृष विलेखने । मन्थ विलोडने । वह प्रापणे । दण्ड दण्डने । ग्रह उपादाने । मुष स्तेये । डुपचष् पाके—एतेषामपि यत् कर्म तद् भजतीति कर्मभाक् । एवंविधं यदकथितं कारकं तत् कर्मसंज्ञमित्यर्थः । तथा चोक्तं वार्तिककारेण ।

'दुहियाचिरुधिप्रछिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना' ॥

इति । दुहादीनां प्रयोगे अपूर्वविधौ सति यदुपयोगनिमित्तं तदकीर्तितमाचरितं कविना सूत्रकारेणेत्यन्वयः । उपयुज्यत इत्युपयोगे मुख्यं दुग्धादि कर्म तस्य निमित्तं संपादकम् । अपूर्वविधिरपादानादीनामविवक्षा । गुणेन कर्मणा सचते संबन्धं प्राप्नोतीति । तथा

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणम्—' इति ।

अत्रापि चकारेण जयत्यादीनां समुच्चयः । तथा चोक्तं न्यासकारेण । 'अत्रापि श्लोके चकारो जयतिप्रभृतीनामनुक्तसमुच्चयार्थः' इति ।

१. बूञ् for ब्रू B$_1$. २. °शासि B$_1$. ३. °ष्मथ D$_3$. ४. °मुष्पाचि B$_2$ : °मुष्पच्य् द्विकर्मभाक् D$_2$. ५. जयप्रभृतीनां Nc$_2$, Bc$_1$. ६. प्रभृतीनां प्रयोगेऽकथितस्य समुच्चयार्थः । Nyâsa, p. 298.

**यो दुदोह धरामन्नं ययाचे वसुधां बलिम् ।**

दुहादीनां प्रयोगे[1] क्रमेणोदाहरणान्याह सार्धश्लोकचतुष्टयेन **यो दुदोह** इत्यादिना । **तं हरिं भजे** इत्यग्रिमेणान्वयः । तं कम् । यः पृथुरूपधरः सन् धरामन्नमदनीयं वस्तु दुदोह क्षारयामास । दुहेर्लिट् । अत्रान्नं मुख्यं कर्म । तत्र 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञा । कर्तुः क्रियया ईप्सिततमत्वात् । धरा त्वप्रधानम् । तत्र 'अकथितं च' इति कर्मसंज्ञा । अपादानादिविशेषैरकथितत्वात् । ननु चात्रोक्तापादानसंज्ञा । तथा हि धरान्नं क्षरति । तद् दोग्धा हरिः क्षारयति । एवं तत् क्षार्यमाणं[2] ततोपक्रामतीति स्पष्ट एवापायस्ततो नेदमुदाहरणमिति चेन्मैवम् । यद्यप्यत्रापायोस्ति तथापि नात्र धराया अवधित्वं विवक्षितं किं त्वन्नं प्रति निमित्तत्वमात्रमतः स्यादेवोदाहरणम् । ननु धरामित्यादौ 'तथायुक्तं चानीप्सितम्' इति कर्म स्यादिप्सितादन्यत्वात् । मैवम् । धरादेपि प्रकर्षरहितस्येप्सितत्वस्य[3] विवक्षितत्वात् । अतः 'अकथितं च' इत्यनेनैव कर्मत्वम् । 'कर्मणि द्वितीया' इति द्वितीया । तथा यो वामनरूपधरः सन् बलिं दैत्यं वसुधां पृथिवीं ययाचे याचितवान् । अत्र वसुधामित्येतदीप्सिततमं कर्म । बलिमित्येतदकथितम् । पूर्वत्र 'कर्तुरीप्सिततमम्' इति कर्मत्वम् । उत्तरत्र 'अकथितं च' इति । एवमत्र सर्वत्र ज्ञेयम् । ननु चात्रापि बलेः सकाशात् वसुधां याचत इत्यस्त्यपायः[4] । ततोपादानत्वं स्यात् । मैवम् । न हि याचनादेवापायः स्यात् । किं तर्हि । याचितोसौ यदा दास्यति तदा । यतो याचनसमये नापायः । अथवापायो न विवक्षितः ।

१. प्रयोगक्रमेण Dc2, Dc3. २. क्षरमाणं Nc2. ३. °प्सितत्वाविवक्षित° Nc2, Dc4, ४. इत्यपायोस्ति । Dc3.

रुरोध दैत्यान् पातालं पप्रच्छेन्द्रं च वाञ्छितम् ॥२॥
धर्मानवाचिनोद्वेदमब्रवीत् तान् स्वसेविनः।

तथा यो दैत्यान् दितेरपत्यानि पातालमधोभुवनं रुरोध प्रवेशयामास स्थापयामास वा पातालेन हेतुना दैत्यान् स्थापयामासेति यावत्। अत्र दैत्यानिति ईप्सिततमं मुख्यं कर्म पातालमित्यप्रधानमकथितम्। ननु चात्र प्रवेशयामासेत्यत्रार्थे 'कर्तुः—' इति कर्मसंज्ञा स्यात्। स्थापयामासेत्यत्रार्थे 'आधारोधिकरणम्' इत्यधिकरणसंज्ञा। सत्यम्। यदा पातालस्येप्सिततमत्वमाधारत्वं वा विवक्ष्यते तदैते स्याताम्। न चेह ते विवक्षिते। किं तर्हि। अवरोधनक्रियां प्रति निमित्तत्वमात्रं विवक्षितमतोकथितत्वम्। तथा य उपेन्द्रः सन्निन्द्रममराधीश्वरत्वं वाञ्छितमभिलषितं पप्रच्छ च पृष्टवांश्च। अत्र चशब्दः सर्वत्र संबध्यते। वाञ्छितमित्येतत् मुख्यं कर्म। इन्द्रमित्येतदकथितम्। ननु चात्राप्यपायोस्ति। स हि तस्मादुपदेशमादित्सत। मैवम्। नैवात्रापायो विवक्षित। किं तु प्रश्नक्रियानिमित्तमात्रम्। तथा यो वेदं धर्मानवाचिनोच्च। वेदेन कारणेन धर्मावचयं चकारेति यावत्। अत्र च धर्मानिति मुख्यं कर्म। वेदमित्यकथितम्। ननु चात्राप्यपायोस्ति। वेदाद्धि धर्मानादत्ते। मैवम्। तस्याविवक्षितत्वात्। धर्मावचयं प्रति हेतुत्वमात्रस्य विवक्षितत्वात्। तथा यस्तान् धर्मान् स्वसेविनः स्वसेवकानब्रवीत् प्रत्यपादयत्। स्वसेविभिर्निमित्तभूतैर्धर्मानदादिति यावत्। अत्र धर्मानिति मुख्यं कर्म। स्वसेविन इत्यकथितम्। ननु चात्र संप्रदानत्वं स्यात्। धर्मेण हि संप्रदेयेन स्वसेविनामभिप्रेयमाणत्वात्। मैवम्। अविवक्षितत्वात् संप्रदानत्वस्य। धर्मदानक्रियानिमित्तत्वमात्रस्य विवक्षितत्वात्।

१. तथा च Bc1. २. °मादिशते Dc4. ३. नात्रा° Dc. ४. °मात्रत्वम् Dc3.

पार्थिवानन्वशाद्भक्तिं त्रिलोकीमजयद्रिपून् ॥२॥
द्वारकामनयद्बन्धून् रुक्मिणीमहरत् पुरम् ।
चकर्ष कंसं विपिनं ममन्थ क्षीरधिं सुधाम् ॥३॥
अवहन्मन्दरं सिन्धुमदण्डयदरीनसून् ।
जग्राह द्युतरुं शक्रममुष्णाद्दितिजान् सुधाम् ॥४॥

---

तथा यः पार्थिवान् पृथिवीश्वरान् भक्तिमन्वशात् प्रत्यपादयत् । अत्र भक्तिमिति मुख्यं कर्म । पार्थिवानित्यकथितम् । अत्र संप्रदानत्वप्रसङ्गपरिहारावनन्तरवत् । एवमुत्तरत्रापि अपादानादित्वाशङ्कायामविवक्षैवोत्तरं ज्ञेयम् । तथा यस्त्रिलोकीं त्रयाणां लोकानां समाहारस्त्रिलोकी तां रिपूनजयत् जिगाय । अत्र रिपूनिति मुख्यं कर्म त्रिलोकीमित्यकथितम् । यो बन्धून् स्वसुहृदो द्वारकां पुरीमनयत् नीतवान् । अत्र बन्धवो मुख्यं कर्म द्वारका त्वकथितम् । तथा यो रुक्मिणीं भीष्मककन्यां पुरं द्वारकामहरत् जहार नीतवानिति यावत् । अत्र रुक्मिणीमिति मुख्यं कर्म पुरमित्यकथितम् । तथा यः कंसं स्वमातुलं विपिनं गहनं चकर्ष आकृष्टवान् । अत्र कंसो मुख्यं कर्म विपिनमकथितम् । तथा यः क्षीरनिधिं क्षीरसमुद्रं सुधाममृतं ममन्थ मथितवान् । अत्र सुधा मुख्यं कर्म क्षीरनिधिरकथितम् । तथा यः सिन्धुं समुद्रं मन्दरं मन्दरनामानं पर्वतमवहत् समुद्रेण निमित्तेन मन्दरं दधारेति यावत् । मन्दरो मुख्यं कर्म सिन्धुरकथितम् । तथा योऽरीन् वैरिणोऽसून् प्राणानदण्डयत् दण्डितवान् । वैरिभिर्निमित्तभूतैः प्राणान् जग्राहेति यावत् । अत्रासवो मुख्यं कर्म वैरिणोऽकथितम् । तथा यो द्युतरुं पारिजातवृक्षं शक्रं जग्राह गृहीतवान् । शक्रेण निमित्तेन द्युतरुं जहारेति यावत् । अत्र द्युतरुर्मुख्यं कर्म शक्रोऽकथितम् । तथा यो दितिजान् दैत्यान् सुधाममृतममुष्णादपजहार । अत्र सुधा मुख्यं कर्म दितिजास्त्व-

---

१. पुरीम् Dc1, Bc3. २. °तं कर्म। Dc3. ३. बन्धून् Dc3. ४. द्वारकापुर° Dc3. ५. After it—उवाह Dc3, Dc4. ६. निमित्तभूतेन Dc2.

पचति प्राणिनां कर्म यः फलं तं हरिं भजे ॥ इत्यादि ।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥१।४।५२॥**

गत्यर्थादीनामणौ यः कर्ता स ण्यन्तानां कर्मसंज्ञः स्यात् ॥

---

कथितम् । तथा यः प्राणिनां कर्म धर्माधर्मलक्षणं फलं स्वर्गनिरयादिलक्षणं पचति । कर्मणा निमित्तेन फलं निष्पादयतीत्यर्थः । अत्र फलं मुख्यं[2] कर्म कर्मत्वकथितम् । तं हरिं भजे सेवे इत्यर्थः । एवं द्विकर्मका उदाहृताः । इत्यादीत्यादिनाकर्मकधातुभिः प्रयोगे देशकालाध्वभावा अपि अकथितं कर्म भवन्ति । तेप्युदाहार्या उच्यन्ते । तथा चोक्तं **महाभाष्ये** ।

'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।
देशश्चाकर्मकाणां च कर्मसंज्ञा भवन्त्विति ॥१॥'

देश उदाह्रियते । कुरूनास्ते । कुरून् स्वपिति । कालः । मासमास्ते । अध्वा । क्रोशमास्ते । भावः । गोदोहमास्ते । इति । देशादयोकथिताः । तथोक्तं **न्यासकारेण** । 'सर्वे चैते कालादयोकथिताः पूर्वविधेः कस्यचिदविषयत्वात्[3]' इति ।

**गति** । अर्थशब्दो गतिबुद्धिप्रत्यवसानैः प्रत्येकमभिसंबध्यते इत्याह **गत्यर्थादीनामिति** । प्रत्यवसानमभ्यवहारः । गत्यर्थानां ज्ञानार्थानामभ्यवहारार्थाना धातूनां तथा शब्दकर्मकाणामकर्मकाणां च अणौ यः कर्तेति 'हेतुमति च' इति प्रयोजकव्यापारे विधीयमानो यो णिच् तस्मिन्नसति य एषां धातूनां कर्ता स ण्यन्तानामेषां कर्मसंज्ञः स्यादित्यर्थः । गत्यर्थादीन् क्रमेण सार्धपद्येनोदाहरति ।

---

१. इत्याद्यो द्विकर्मका इति केचित् C, B2, D2; न्याद्यो द्विकर्मका इति केचित् Dc1, Bc3, इत्याद्यो द्विकर्मकाः D3. २. कर्म dropped Dc2. ३. °दप्रवृत्तत्वात् । Nyâsa p. 299.

शत्रूनगमयत् स्वर्गं वेदार्थं स्वानवेदयत् ।

आशयच्चामृतं देवान् वेदमध्यापयद्विधिम् ॥१॥

आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥

शत्रूनित्यादि । स श्रीहरिर्मे मम गतिः । स कः । यः शत्रून् स्वर्गमगमयत् प्रापयत् । अत्राण्यन्तस्य गत्यर्थस्य गमेर्धातोः स्वर्गं गच्छन्तः शत्रवः कर्तारस्ते ण्यन्तस्य तस्यैव कर्मसंज्ञा जाताः । ततः शत्रूनिति द्वितीया । यः स्वान् स्वकीयान् वेदार्थमवेदयत् ज्ञापयामास । अत्राण्यन्तस्य ज्ञानार्थस्य विदेः कर्तारो वेदार्थं विदन्तः स्वे ते ण्यन्तस्य तस्यैव कर्मसंज्ञा जाताः । यो देवानमृतमाशयच्च भोजयामास । अत्राप्यमृतमश्नन्तो देवाः प्रत्यवसानार्थस्याश्नोतेरण्यन्तस्य कर्तारो ण्यन्तस्य तस्यैव कर्माभूवन् । तथा यो विधिं ब्रह्माणं वेदमध्यापयत् पाठयामास । अत्रापीङो धातोर्वेदलक्षणशब्दकर्मणोण्यन्तस्याधीयानो विधिः कर्ता स ण्यन्तस्य कर्म । तथा यः सलिले उदके पृथ्वीमासयत् स्थापयामास । अत्राकर्मकस्यासेरण्यन्तस्य कर्त्री पृथिवी सा ण्यन्तस्य कर्माभूत् । एवंसामर्थ्यः स श्रीहरिर्मे गतिः । ननु चैतत् सूत्रं व्यर्थं यतो ण्यन्ते धातौ प्रयोजकव्यापारेण प्रेषणादिना प्रयोज्यस्य कर्तुर्व्याप्तुमिष्टतमत्वात् 'कर्तुरीप्सिततमं कर्म' इत्येव कर्मसंज्ञा सिद्धा । सत्यम् । नियमार्थमेतद्वचनम् । प्रयोजकव्यापारेण व्याप्यमानस्य यदि कर्मसंज्ञा स्यात् तर्हि गत्यर्थादीनामेव स्यान्नान्येषामिति ।

१. °नबोधयत् $Dc_1$, $Bc_3$. २. °न्तगत्य° $Dc_2$. ३. कर्म $Bc_2$, $Dc_2$, $Dc_3$. ४. तस्यैव dropped $Bc_1$, $Dc_2$, $Dc_3$; तस्य कर्म जाताः $Dc_4$. ५. °व्यापारैः $Dc_1$, व्यापारे $Bc_3$. ६. हि स्या° $Dc_3$.

नीवह्योर्न* ॥ नाययति वाहयति वा भारं भृत्येन। नियन्तृकर्तृकस्य वहेरनिषेधः। वाहयति रथिनं वाहान् सूतः। आदिखाद्योर्न*॥ आदयति खादयति वान्नं बटुना। भक्षेरहिंसार्थस्य न* ॥ भक्षयत्यन्नं बटुना। हिंसार्थस्य तु भक्षयत्यमात्यमरीन् राजा ॥ श्रुग्रहदृशामिति केचित्। श्रावयति गीतं श्रोतन्।

---

**नीवह्योरिति**। णीञ् प्रापणे। वह प्रापणे। गत्यर्थत्वादण्यन्तयोः कर्ता ण्यन्तयोः कर्मसंज्ञः प्राप्तः स निषिध्यते। भृत्येनेति। अण्यन्तस्य कर्तरि भृत्ये णौ सत्यपि 'कर्तृकरणयोस्तृतीया' इति तृतीया जाता। **नियन्तृ** इति। नियच्छति विशिष्टे विषये स्थापयतीति नियन्ता सारथिः। नियन्ता कर्ता यस्य स नियन्तृकर्तृकः। तस्य 'वहेरनिषेधः' इति अण्यन्तस्य कर्ता णौ कर्मसंज्ञो भवत्येवेत्यर्थः। **वाहयतीति**। वाहा रथिनं वहन्ति तान् सूतः सारथिर्वाहयतीत्यर्थः। अत्र वाहानित्यत्राण्यन्तकर्तरि णौ सति कर्मत्वाद् द्वितीया। **आदीति**। अद भक्षणे। खाद भक्षणे। प्रत्यवसानार्थत्वात् प्राप्ता कर्मसंज्ञा निषिध्यते। **भक्षयतीत्यादि**। बटुरन्नं भक्षयति। तमन्यो भक्षणे प्रेरयतीत्यर्थः। ननु चात्राणौ कर्ता नास्ति पूर्वमपि स्वार्थिकणिजन्तत्वाद्भक्षयतेः। ततः प्राप्तिरेव नास्तीति व्यर्थो निषेधः। नैवम्। गतिबुद्ध्यादिसूत्रे हेतुमण्णिच एव ग्रहणं तस्य पूर्वकर्तुः संभवात्। न स्वार्थिकस्य। तस्य पूर्वकर्तुरसंभवात्। ततश्च हेतुमण्णिचः पूर्वं कर्ता बटुस्तस्मिन्नागते कर्मत्वं प्राप्नोतीति निषेधः। **भक्षयत्यमात्यमिति**। हिंसयतीत्यर्थः। **श्रुग्रहेति**। **केचिदिति**। **भाष्यकारादयः**। तथोक्तं **महाभाष्ये**। 'शृणोत्यादीनां चोपसंख्यानमशब्दक्रियत्वात्। के पुनः शृणोत्यादयः। शृणोति विजानाति उपलभत इति।

---

१. ग्रन्थं P. २. पूर्वकर्ता $Dc_2$, $Dc_3$.

ग्राहयति बटुं वेदम् । दर्शयति भक्तान् देवम्[1] । अयक्रन्दशब्दायह्वेञां नेति केचित् । आययति[2] सैनिकैररीन् । क्रन्दयति सैनिकैररीन् । शब्दाययति ह्वाययति वा शूरै[3] रिपून्[4] ।

**हृक्रोरन्यतरस्याम् ॥१।४।५३॥**

हृक्रोरणि कर्ता स णौ वा कर्मसंज्ञः[5] स्यात् ॥

---

तथा दृशेः सर्वत्रोपसंख्यानं कर्तव्यम् । पश्यति रूपतर्कः कार्षापणम् । दर्शयते रूपतर्कं[6] कार्षापणम्' इति । **कालिदासस्तु** ग्रहिं ण्यन्तं द्विकर्मकं प्रयुक्तवान् । 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति । तथा **भट्टिकाव्येपि**[7] प्रयोगः । 'अजिग्रहत्तं जनको धनुस्तत्' इति । अयेति । केचिदिति । **भाष्यकारादयः** । तथोक्तं **महाभाष्ये** । 'शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेत् ह्वयतीत्यादीनां प्रतिषेधो वक्तव्यः । के पुनर्ह्वयत्यादयः । ह्वयति क्रन्दयति[8] शब्दायते' इति । तथा **बोपदेवपण्डितैरपि मुग्धबोधे** उक्तम् । 'खादादेस्तु

रक्षांस्यखादयदनाययदूर्ध्वलोक-
माक्रन्दयत् कपिभिराययदाशु रामः ।
शब्दाययन्निपुमजूहवदादयच्च
शैलानवाहयदभक्षयदिष्टभक्ष्यम्[9] ॥' इति

**हृक्रोः** । गत्यर्थादयो निवृत्तास्तेनोभयत्र विभाषेयम् । यदा हरतिर्गत्यर्थोऽभ्यवहारार्थो वा । हरति भारं देवदत्तः । अभ्यवहरत्योदनमिति करोतेश्चाकर्मकः स्यात् ओदनस्य पूर्णाश्छात्रा विकुर्वत

---

१. आत्मानम् $D_2$, $B_1$, $B_2$; C has a marginal note—वेणुमश्रावयद्धेनूर्गैयमग्राहयत् सखीन् । योदर्शयत् परं रूपं पार्थे कृष्णः स मे गतिः ॥. २. आययति सैनिकैः शब्दाययति वा शूरो रिपून् $B_1$. ३. शौरै $D_1$. ४. रिपुम् C, $D_2$, $D_4$, $D_5$. ५. कर्म P, C, $D_1$, $B_2$, $D_2$, $D_3$, $D_4$, $D_5$. ६. तर्कं रूपकार्षा° $Dc_3$. ७. अपि dropped $Dc_1$, $Bc_3$. ८. क्रन्दति $Dc_2$, $Dc_4$, $Bc_1$. ९. °भक्षम् $Dc_1$, $Dc_2$, $Bc_3$, $Dc_3$, $Dc_4$.

हारयति कारयति वा[1] भृत्यं भृत्येन वा कटम् ।

अभिवादिदृशोरात्मनेपदे वेति वाच्यम्* ॥ अभिवादयते दर्शयते वा देवं भक्तेन[2] भक्तं वा ।

## अधिशीङ्स्थासां कर्म ॥१।४।४६॥

अधिपूर्वाणामेषामाधारः कर्म[3] स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥

## अभिनिविशश्च ॥१।४।४७॥

अभिनिपूर्वस्य विशतेराधारः[4] कर्म[5] स्यात् ॥ अभिनिविशते सन्मार्गम् । क्वचिन्न । पापेभिनिवेशः[6] ।

---

इति तदा प्राप्ते । यदा हरतिः स्तेयाद्यर्थः हरति सुवर्णं चोरयति करोतिश्च सकर्मकः स्यात् करोति कटं देवदत्त इति तदा त्वप्राप्ते । **अभिवादयते दर्शयत इति** । 'णिचश्च' इत्यात्मनेपदम् ।

**अधिशीङ्** । 'आधारोधिकरणम्' इति अधिकरणसंज्ञायां प्राप्तायां तदपवादः कर्मसंज्ञानेन विधीयते । **एषामिति** । शीङ् स्वप्ने । ष्ठा गतिनिवृत्तौ । आस उपवेशने ।

**अभिनि** । अधिकरणत्वापवादः । **विशतेरिति** । विश प्रवेशने अस्य । **अभिनिविशते सन्मार्गमिति** । सदाचारे तत्परो भवतीत्यर्थः । **क्वचिन्नेति** । 'परिक्रयणे संप्रदानमन्यतरस्याम्' इत्यतः 'अन्यतरस्याम्' इत्यनुवर्तते[7] सा च व्यवस्थितविभाषा तेन क्वचिन्नेत्यर्थः ।

---

१. Dropped $B_2$. २. भक्तं भक्तेन वा C. ३. कर्मसंज्ञः C, $D_5$, $B_1$. ४. विशेरा° $D_2$. ५. कर्मसंज्ञः C, $D_2$, $B_1$, $B_2$. ६. पापेभिनिविशते $B_2$. ७. °त्यनुवृत्ते : $Nc_1$.

उपान्वध्याङ्वसः ॥१।४।४८॥

उपादिपूर्वस्य वसतेराधारः कर्म[1] स्यात् ॥ उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः ।

अभुक्त्यर्थस्य न* । वने उपवसति । अभुक्त्यर्थस्य काले* । हरिदिनमुपवसति ।

उभसर्वतसोः[4] कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते ॥१॥

उभयतो[5] गोपाः कृष्णम् । सर्वतः कृष्णम् । धिक् कृष्णाभक्तम् ।

---

उपान्व । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति परिभाषया वस निवास इति भौवादिर्गृह्यते[6] न वस आच्छादन इत्यदादिरित्यभिप्रेत्याह । उपादिपूर्वस्य वसतेरिति । अभुक्त्यर्थस्येति । अभोजनार्थस्येत्यर्थः । उभसर्वतसोरिति । उभसर्वशब्दयोस्तसिप्रत्ययान्तयोर्योगे द्वितीया कार्या । षष्ठ्यपवादोयम् । अत्र यद्यप्युभशब्दः[7] पठितस्तथापि सामर्थ्यादुभयशब्दो गृह्यते नोभशब्दः । तस्य नित्यं द्विवचनटाब्विषयत्वात्तसोभावात् । तथा चैवोदाहरिष्यति । उभयतो गोपाः कृष्णमिति । तथा धिक्शब्देनापि योगे द्वितीया कार्या । तथोपर्यादिषु त्रिषु उपरि अधि अधस्तु आम्रेडितान्तेषु कृतद्विर्वचनेषु सत्सु तद्योगे द्वितीया कार्या । ततो यथोक्तादन्यत्रापि द्वितीया दृश्यत इति वार्तिकार्थः । क्रमेणोदाहरति ।

उभयत इत्यादि । पञ्चम्यास्तसिल् । धिगित्यादि । धिक्शब्दः कुत्साद्योती । धिग्जाल्मेत्यादौ जाल्मादयः कुत्स्यत्वेन न विवक्षिताः किं तु संबोध्यत्वेन । तस्मान्न द्वितीया ।

---

१. कर्मसंज्ञः C, $B_2$, $D_2$, $D_6$. २. अभुक्त्य...वसति dropped $D_1$, $D_2$, $Bc_3$. ३. P, $D_5$ have न निषेधः after it.; C has स्यादेव after it ; $B_2$ has अधिकरणे after it. ४. अभि for उभ $B_1$. ५. अभितो $B_1$. ६. भौवादिको गृह्यते $Dc_3$. ७. यद्यप्यु° $Bc_1$.

उपर्युपरि लोकं[1] हरिः। अध्याधि लोकम्। अधोधो लोकम्।
अभितःपरितःसमयानिकषाहाप्रतियोगेष्वपि।[2][3] अभितः कृष्णम्।
परितः कृष्णम्।[5] इत्यादि।[6]

**अन्तरान्तरेण युक्ते ॥२।३।४॥**

आभ्यां योगे द्वितीया स्यात्॥

---

**उपर्युपरीत्यादि**। 'उपर्यधसः सामीप्ये' इति द्विर्वचनम्। ततोन्यत्रापि दृश्यत इत्युक्तम्। क्वान्यत्र दृश्यत इत्याशङ्क्याह। **अभित इत्यादि**। अभितः परितः इति शब्दौ सर्वत इत्यर्थौ। समयानिकषाशब्दौ सामीप्यलक्षणसंबन्धद्योतकौ स त्वोभयाश्रित इति यद्यप्युभयोरपि ताभ्यां योगस्तथापि यत्र षष्ठी प्राप्ता तत्रैव द्वितीया स्यात् षष्ठ्यपवादत्वात्। अपवादो ह्युत्सर्गनिवर्तक इति तद्विषयमेवावलम्बते। प्रतिशब्दः क्रियाविशेषणं न कर्मप्रवचनीयः। **कृष्णं प्रतीति**। भाति भक्तिरिति शेषः। अपिशब्दो विकल्पार्थः। तेन हा[7] मातः हा पितरित्यादि सिद्धं स्यात्।

**अन्तरा**। एतौ द्वावपि निपातावत्र गृह्येते। तेन त्वान्तरायां[8] पुरि वसतीति टाबन्तस्यान्तराशब्दस्य योगे न द्वितीया।[9] तथा[10] किं तव तयोरन्तरेण ज्ञातेनेति विशेषवाचिना तृतीयान्तेनान्तरेणेति शब्देन योगे न द्वितीया।

---

१. लोकं हरिः D3. २. उभयतः B. ३. प्रतियोगेपि C, D4. ४. उभयतः B1. ५. C drops परितः कृष्णम्. ६. After this—प्रति कृष्णं भाति भक्तिरिति शेषः। इत्यादि D2; प्रति कृष्णम्। इत्यादि D4; कृष्णं प्रति Com. ७. हा मातरो हा पितर इत्यादि Dc2. ८. चान्तरायां Bc3. ९. द्वितीया न Dc3, Dc4. १०. From तथा to न द्वितीया dropped Bc3.

अन्तरा त्वां मां हरिः। अन्तरेण हरिं न सुखम्।

**अनुर्लक्षणे ॥१।४।८४॥**

लक्षणे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञः स्यात्॥ गत्युपसर्गसंज्ञापवादः।

**कर्मप्रवचनीययुक्ते द्वितीया ॥२।३।८॥**

कर्मप्रवचनीयैर्योगे द्वितीया स्यात्॥ जपमनु प्रावर्षत्।

---

**अन्तरा त्वां मां च हरिरिति** तव मम च मध्ये हरिरित्यर्थः। अत्र हरिशब्दस्य स्वार्थे प्रवृत्तिः युष्मदस्मदोस्तु परार्थे हरिविशेषणार्थं प्रवृत्तत्वात्। तत्र हरिशब्दात् स्वार्थे वर्तमानात् प्राधान्ये स्थितात् प्रातिपदिकार्थादप्रच्युतात् प्रथमैव स्यात्। युष्मदस्मद्भ्यां त्वप्रधानाभ्यां प्रथमान्तेन हरिणोपजनिते व्यतिरेके षष्ठ्यां प्राप्तायां तदपवादो द्वितीया विधीयते। **अन्तरेण हरिमिति**। हरिं विनेत्यर्थः। युक्त इति किम्। अन्तरा त्वां मां च बटोः पटः। अत्र न बटुशब्दस्यान्तराशब्देन योगः।

**अनु**। कर्मप्रवचनीया इत्यधिकारसूत्रादनुवर्तते कर्मप्रवचनीयग्रहणम्। कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इत्यन्वर्थसंज्ञाविज्ञानार्थं महती संज्ञा क्रियते। ततश्च ये क्रियां द्योतितवन्तो न तु संप्रति क्रियां द्योतयन्ति केवलं संबन्धविशेषं द्योतयन्ति ते कर्मप्रवचनीया इत्युक्तं स्यात्। लक्षणमिह हेतुर्विवक्षितः। ननु च 'लक्षणेत्थम्—' इत्यादिनैव सिद्धावेतस्सूत्रारम्भस्य किं प्रयोजनम्। तच्च 'लक्षणेत्थम्—' इत्यत्र सूत्रे ग्रन्थकार एव वक्ष्यति।

**कर्म**। **जपमनु प्रावर्षादिति**। जपेन हेतुना प्रावर्षत्। जपमनुनिशम्य प्रावर्षदित्यर्थः।

---

१. कर्मप्रवचनीयः Bc3. २. पर्जन्यो जप° D5. ३. After it B, D2 have घनमनु प्रावृड् मेघः। प्रावृट्कालस्य लक्षणमित्यर्थः।. ४. अत्र Dc1.

**तृतीयार्थे ॥१।४।८५॥**

अनुस्तृतीयार्थे उक्तसंज्ञः। नदीमन्ववसिता सेना। नद्या सह संबद्धेत्यर्थः।

**हीने ॥१।४।८६॥**

हीने द्योत्ये अनुरुक्तसंज्ञः॥ अनु हरिं सुराः।

**उपोधिके च ॥१।४।८७॥**

उपशब्दोधिके हीने च कर्मप्रवचनीयः। आधिके सप्तमी वक्ष्यते। उप हरिं सुराः[६]।

---

**तृतीया**। **उक्तसंज्ञः** कर्मप्रवचनीयसंज्ञ इत्यर्थः। अवसितेति षिञ् बन्धने इत्यस्य निष्ठायां रूपम्। सहार्थोत्र तृतीयार्थः। 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीयाविधानादित्यभिप्रेत्याह। **नद्या सह संबद्धेत्यर्थ** इति।

**हीने**। **अनु हरिं सुरा** इति। हरिमपेक्ष्यान्ये देवा हीना इत्यपेक्षयात्र जनितः संबन्धः। तत्र षष्ठ्यां प्राप्तायां तदपवादो द्वितीया। अभिधानशक्तिस्वाभाव्यादुत्कृष्टादेव स्यात्। तत्रैकयैव विभक्त्या संबन्धस्य द्योतितत्वात् सुरा इत्यत्रापरसंबन्धविभक्तिर्न।

**उप**। अधिकमित्यारूढमुच्यते न चाधिकेन विनाधिकं संभवति। ततश्चाधिकानधिकसंबन्धेध्यारूढक्रियाजनिते संज्ञेयम्। चकाराद्धीने च। **अधिके सप्तमी** वक्ष्यत इति। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति सूत्रेण। **उप हरिमिति**। हरेर्हीना देवा इत्यर्थः।

---

१. After this—स्यात् C; कर्मप्रवचनीयसंज्ञः $D_3$. २. 'मनुवसिता $B_1$, $D_2$. ३. After it—हरेर्हीना इत्यर्थः C, $B_1$, $D_2$, $D_3$, $D_5$. ४. कर्मप्रवचनीय इत्यर्थः $Dc_1$, $Bc_3$. ५. After it—हरेर्हीना इत्यर्थः $D_2$, $B_1$, C has हीना इत्यर्थः and $D_6$ has in its place उपार्जुनं योद्धारः।. ६. कर्मप्रवचनीयसंज्ञः स्यात् C, $B_2$., कर्मप्रवचनीयसंज्ञकः $D_1$; कर्मप्रवचनीयसंज्ञः $D_3$, $D_4$, $Bc_3$. ७. इत्यत्र नापरसंबन्धविभक्तिः $Dc_2$. ८. °श्चाना-धिकाधिक° $Dc_3$.

**लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥१।४।९०॥**

एष्वर्थेष्वेते उक्तसंज्ञाः स्युः । लक्षणे हरिं प्रति हरिं परि हरिमनु वा ते[1] भक्तिः । हेतौ[2] तृतीयां बाधितुमनुर्लक्षणे इति सूत्रम् । इत्थंभूताख्याने । भक्तो विष्णुं प्रति परि अनु वा । भागे । लक्ष्मीर्हरिं प्रति पर्यनु वा । वीप्सायाम् । भूतं भूतं प्रति परि अनु वा प्रभुः ।

---

**लक्षण** । लक्षणं चिह्नमिहाभिप्रेतम् । **इत्थंभूत** इति । अयं प्रकार इत्थम् । तमभविष्ट प्राप्तवान् । किंचित्प्रकारं प्राप्त इत्यर्थः । तस्याख्यानमित्थंभूताख्यानम् । भज्यत इति भागः स्वीक्रियमाणोंशः[3] । पदार्थानां व्याप्तुमिच्छा वीप्सा । **लक्षणं हरिं प्रती**ति । प्रकाशते भक्तिरिति शेषः । हरिर्लक्षणं प्रकाशमाना भक्तिर्लक्ष्यम् । हरिं प्राप्य भक्तिः प्रकाशते इति प्राप्तिक्रियाजनितो लक्ष्यलक्षणभावः संबन्धः प्रतिना द्योत्यते । एवं हरिं परीत्यादावपि पर्यादिभिः स एव संबन्धो द्योत्यते इति ज्ञेयम् । ननु अनुशब्दोपि लक्षणे वर्तमानोत्र कर्मप्रवचनीयश्चेत् स्यात् तर्हि 'अनुर्लक्षणे' इति सूत्रं व्यर्थमित्याशङ्क्याह । हेताविति । **इत्थंभूताख्याने भक्तो विष्णुं प्रती**त्यादि । भक्तरूपं प्रकारं प्राप्तस्य देवदत्तस्य विष्णोश्च विषयविषयिभावं प्रत्यादयः प्रकाशयन्ति । विष्णोर्भक्त इति तात्पर्यार्थः । **भागे लक्ष्मीर्हरिं प्रती**त्यादि । लक्ष्मीरूपभागस्य हरिणा स्वीकारजनितस्वस्वामिभावः प्रत्यादिभिर्द्योत्यते । हरेर्भागो लक्ष्मीरिति तात्पर्यार्थः । **वीप्सायां भूतं भूतं प्रती**त्यादि । व्याप्तुमिष्टस्य भूतसमुदायस्य प्रभोः सद्भावेन संबन्धः प्रत्यादिभिर्द्योत्यते । एकैकस्मिन् भूते प्रभुरस्तीत्यर्थः ।

---

१. P and C, $B_2$, $D_5$ drop ते भक्तिः, $D_1$, $Bc_3$, $D_3$ drop वा ते भक्तिः; जगत् for ते भक्तिः $D_4$. २. हेतोस्तृतीयां $D_1$. ३. स्वीक्रियमाणांशः $Nc_1$.

एषु किम् । परिषिञ्चति । अत्रोपसर्गत्वेन[1] षत्वम् ।

**अभिरभागे ॥१।४।९१॥**

भागवर्जिते[2] लक्षणादौ अभिरुक्तसंज्ञः[3] ॥ हरिमभिवर्तते । भक्तो हरिमभि[4] । देवं देवमभिसिञ्चति । अभागे किम् । यदत्र मामभिष्यात् तद्दीयताम्[5] ।

**अतिरतिक्रमणे च ॥१।४।९५॥**

अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयः[6] ॥

---

**परिषिञ्चती**त्यादि । परितः सर्वतः सिञ्चतीत्यर्थः । कर्मप्रवचनीयसंज्ञाभावस्य फलमाह । **अत्रे**त्यादि । अत्र कर्मप्रवचनीयत्वाभावादुपसर्गत्वम् । ततश्च 'उपसर्गात् सुनोति—' इत्यादिना षत्वमित्यर्थः ।

**अभि** । **हरिमभिवर्तते** इति लक्षणे । **भक्तो हरिमभी**तीत्थंभूताख्याने । **देवं देवमभिसिञ्चती**ति वीप्सायाम् । अत्र कर्मप्रवचनसंज्ञयोपसर्गसंज्ञाया बाधितत्वान्न षत्वम् । **यदत्र मामभिष्या**दिति । 'श्नसोरल्लोपः' इत्यकारलोपः । कर्मप्रवचनीयत्वाभावादुपसर्गत्वमस्त्येव तेन 'उपसर्गप्रादुर्भ्याम्—' इत्यादिना षत्वम् । **मामि**ति । यद्यप्यस्तिरकर्मकस्तथाप्यकर्मका अपि धातवः सोपसर्गा सकर्मका भवन्तीति कर्मणि द्वितीया ।

**अतिः** । निष्पन्ने फले क्रियाप्रवृत्तिरतिक्रमणम् ।

---

१. अत्रोपसर्जनत्वेन षत्वम् C, $D_3$, $D_4$, $D_5$; अत्र 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौति—' इत्यनेन षत्वम् $B_1$. २. भागवर्जे $D_1$, $B_2$. $D_4$, $D_5$. ३. C has स्यात् after it. ४. विष्णुमाभि $Bc_3$. ५. After it—यदत्र मम भवति $D_2$; अस्तेरकर्मकस्य सोपसर्गत्वेन सकर्मकत्वात् मामिति कर्मणि द्वितीया । $Bc_3$. ६. कर्मप्रवचनीयसंज्ञः स्यात् C, $B_2$; after it—स्यात् $D_4$.

अति देवान् कृष्णः ।

## कालाध्वनोरत्यन्तसंयोगे ॥२।३।५॥

गुणक्रियाद्रव्यैः कालाध्वनोरत्यन्तसंयोगे द्वितीया स्यात् ॥ मासं कल्याणी । मासमधीते । मासं गुडधानाः ।

---

**अति देवान् कृष्ण** इति । दीव्यन्तीति देवास्तान् देवनेनातिक्रम्य वर्तते कृष्ण इत्यर्थः । पूजायामुदाहार्यम् । अति सिक्तं भवता साधु कृतम् । प्रकृतानुपयोगित्वात् त्यक्तानि चत्वारि सूत्राणि प्रसङ्गाद् व्याख्यायन्ते । 'अधिपरी अनर्थकौ' ॥ १।४।९३॥ एतावनर्थकौ कर्मप्रवचनीयसंज्ञौ स्तः । कुतोध्यागच्छति । कुतः पर्यागच्छति । गत्युपसर्गसंज्ञे मा भूतामिति वचनम् । 'सुः पूजायाम्' । १।४।९४॥ कर्मप्रवचनीयः । सुसिक्तम् । सुस्तुतं भवता । उपसर्गसंज्ञाश्रयः षो न । पूजायां किम् । सुषिक्तम् । 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' । १।४।९६॥ एष्वपिः कर्मप्रवचनीयः । अप्रयुक्तपदस्यार्थः पदार्थः । सर्पिषोपि स्यात् । मात्राद्यर्थोपिः । संभावने । अपि सिञ्चेद्धनम् । अन्ववसर्गः स्वरानुज्ञा । अपि सिञ्च । अपि स्तुहि । गर्हायाम् । अपि सिञ्चेत् पलाण्डुम् । समुच्चये । अपि सिञ्च । अपि स्तुहि । 'विभाषा कृञि' । अधिः कर्मप्रवचनीयो वा । यदत्र मामधिकरिष्यति । कर्मप्रवचनीयपक्षे 'तिङि चोदात्तवति' इति निघातो न ।

**काल** । अन्तमवसानमतिक्रान्तोत्यन्तः स चासौ संयोगश्च अत्यन्तसंयोगः । साकल्येन संबन्ध इत्यर्थः । **मासं कल्याणीति** । कल्याणगुणेन कालस्य मासस्यात्यन्तसंबन्धः । **मासमधीते** इति । अध्ययनक्रियया मासस्यात्यन्तसंबन्धः । **मासं गुडधाना** इति । गुडेन मिश्रा धाना गुडधानाः । गुडधानाभिर्द्रव्येणात्यन्तसंयोगो मासस्य ।

---

१· $B_1$ has after it—निष्पन्नेपि फले क्रियाप्रवृत्तिरतिक्रमणम्; C has अतिकृष्णम् after it; देवान् अति कृष्णः $B_2$.

क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । अत्यन्तसंयोगे[1] किम् । मासस्य द्विरधीते । क्रोशे द्वारका । क्रोशैकदेशे इत्यर्थः[4] ।

**स्वतन्त्रः कर्ता ॥१।४।५४॥**

क्रियायां स्वातन्त्र्येण विवक्षितोर्थः

---

**क्रोशं कुटिला** नदीत्यत्र कुटिलगुणेनात्यन्तसंयोगोऽध्वनः क्रोशस्य । **क्रोशमधीते** अध्ययनक्रिययात्यन्तसंयोगोऽध्वनः क्रोशस्य । **क्रोशं गिरिरिति** गिरिणा द्रव्येणात्यन्तसंयोगोऽध्वनः क्रोशस्य । अत्यन्तसंयोगे इति किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥

इति निरूपिता द्वितीया ॥

**स्वतन्त्रः कर्ता** । **क्रियायामिति** । क्रियासिद्धौ स्वातन्त्र्येण प्राधान्येनागुणीभावेन विवक्षितो योर्थः स कर्तृसंज्ञः । यद्यपि क्रियासिद्धौ सर्वेषां व्यापारस्तथापि यस्य स्वातन्त्र्यं विवक्ष्यते स एव स्वतन्त्रः कर्ता नान्य इति भावः । स्वातन्त्र्यं नाम इतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम् । ननु चैवमिहैव स्यात् । देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीति । इह न स्यात् । देवदत्त आस्ते शेते इत्यादौ । तत्प्रयोज्यानां करणादीनामसंभवात् । एवं तर्हि धातूक्तक्रियत्वं स्वातन्त्र्यं यदीयो व्यापारो धातुनोच्यते स कर्ता । तथा चोक्तम् ।

'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' । इति ।

सर्वथा गुणीभावः स्वातन्त्र्यमिति तात्पर्यम् ।

---

१. P and $D_1$ drop from अत्यन्त° to इत्यर्थः. २. °संयोगेति $D_5$. ३. क्रोशस्यैकदेशे पर्वतः $D_5$, $B_1$, $D_2$. ४. After it—C, $B_2$ have अति ऋते येन तेन योगे द्वितीयेति केचित् । देवानति कृष्णः । ऋते कृष्णमित्यादि ; $Dc_1$ and $Bc_3$ have also अति ऋते येन तेन योगे द्वितीयेति केचित् । देवा अति कृष्णम् । येन कृष्णम् । तेन कृष्णम् ।. It drops क्रोशे द्वारका...इत्यर्थः । $D_4$ follows $Dc_1$, $Bc_3$, but has देवानति कृष्णः । ऋते कृष्णम् ।. ५. स्वातन्त्र्ये $B_1$. ६. Dropped $Dc_3$. ७. After it—स्यादित्यर्थः $Dc_3$ ; इत्यर्थः $Dc_4$. ८. Dropped $Dc_2$. ९. तात्पर्यार्थः $Dc_3$.

कर्ता स्यात् ॥

**साधकतमं करणम् ॥१।४।४२॥**

क्रियासिद्धौ प्रकृष्टोपकारकं करणं स्यात् ॥

---

कर्तृप्रदेशाः 'कर्तृकरणयोस्तृतीया' इत्येवमादयः । स्पष्टत्वात् त्यक्तं सूत्रं व्याख्यायते । 'तत्प्रयोजको हेतुश्च' ।१।४।५५॥ तस्य कर्तुः प्रयोजकस्तत्प्रयोजकः । निपातनात् समासः । अन्यथा 'कर्तरि च' इति निषेधः स्यात् । अथवा निर्देशोयं ज्ञापयति 'कर्तरि च' इति निषेधोनित्य इति । ततश्च दम्भेर्हल्ग्रहणस्य जातिवाचकत्वादित्यादयः प्रयोगा उपपन्नाः स्युः । स्वतन्त्रप्रयोजको योर्थस्तत्कारकं हेतुसंज्ञं स्यात् चकारात् कर्तृसंज्ञं च । कुर्वाणं प्रयुङ्क्ते कारयति । हेतुत्वाण्णिचो निमित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते । हेतुप्रदेशाः 'हेतुमति च' इत्येवमादयः ।

**साधक । क्रियासिद्धावित्यादि ।** यत् क्रियासिद्धौ विषये प्रकृष्टमत्यर्थमुपकारकम् । अथवा प्रकर्षः प्रकृष्टम् । नपुंसके भावे क्तः । प्रकर्षेणोपकारकं विवक्ष्यते तत्करणसंज्ञं स्यादित्यर्थः । तथा चोक्तं हरिणा प्रकीर्णकाण्डे

'क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्' ॥ इति ।

ननु चात्र साधकतमामित्यत्र तमग्रहणं न कार्यम् । विनापि हि तेनात्र प्रकर्षो गम्यते । तथा हि कारकाधिकारादसाधके संज्ञायाः प्रवृत्तिर्नास्तीति साधकं करणमित्युक्ते अन्तरेणापि तमग्रहणं साधकतममिति गम्यते यथानभिरूपाय कन्यादानप्रतीतिर्नास्तीत्यभिरूपाय कन्या देयेत्युक्ते विनापि प्रकर्षप्रत्ययमभिरूपतमायेति गम्यते तत् किं तमग्रहणेनेति चेदुच्यते । ज्ञापकार्थं तमग्रहणम् । एतदनेन ज्ञाप्यते अन्यत्र तमग्रहणं विनापि प्रकर्षो नाश्रीयत इति ।

---

१. कर्तृसंज्ञः $B_2$. २. भर्तृहरिणा $No_1$. ३. तत्र $Dc_2$. ४. $Dc_3$, $Dc_2$ drop अपि.

कर्तृकरणयोस्तृतीया ॥२।३।१८॥

तिङाद्यनुक्ते कर्तरि करणे च तृतीया स्यात् ॥ रामेण बाणेन हतो वाली[1]। तिङाद्युक्तौ[2] तु हरिः करोति। जीवनः। शाब्दिकः। कृतविश्वः॥

प्रकृत्यादिभ्यस्तृतीया* ॥ प्रकृत्या चारुः। प्रायेणालसः[3]। गोत्रेण गार्ग्यः। समेनैति[4]।

---

ततश्च 'आधारोऽधिकरणम्' इत्यनेन गङ्गायां घोष इत्यादावमुख्यस्याप्याधारस्य गङ्गादेरधिकरणसंज्ञा स्यात्।

**कर्तृ**। **तिङाद्यनुक्त** इति। तिङ्कृत्तद्धितसमासैरनुक्त इत्यर्थः। **रामेणे**त्यादि। अत्र हननक्रियां प्रति स्वातन्त्र्येण रामो विवक्षित इति कर्तृत्वं तस्य। बाणस्तु तत्र प्रकृष्टोपकारकमिति करणम्। तत्रोभयत्र तृतीया। **तिङाद्युक्तौ** त्विति। तत्र तु विशेषः। प्रथमा स्यादिति भावः। **हरिः करोती**ति। अयं तिङ् कर्तरि जात इति हरिरिति प्रथमा। **जीवन** इति। जीवन्ति येन स जीवनः। 'करणाधिकरणयोश्च' इति करणे ल्युट्। तेन कृता करणमुक्तमिति प्रथमा। शाब्दिकः। शब्दं करोतीत्यर्थे 'शब्ददर्दुरं करोति' इति कर्तरि ठक् तद्धितः। तेनोक्तः कर्तेति शाब्दिक इति प्रथमा। **कृतविश्व** इति। कृतं विश्वं येनेति समासेनोक्तः कर्तेति प्रथमा।

**प्रकृत्यादिभ्य** इति। वक्तव्येति शेषः। **प्रकृत्या चारुरि**ति। अत्र क्रियाया अभावात् कर्तृकरणयोरभावः। केवलः संबन्धः प्रतीयते। अतोऽत्र षष्ठी प्राप्नेति तृतीयाविधिः। एवं **प्रायेणालसः गोत्रेण गार्ग्य** इत्यत्रापि ज्ञेयम्। **समेनैति**।

---

१. वालिः। $Bc_3$. २. °द्युक्ते $D_2$, $D_4$, P, C, $B_1$, $B_2$. ३. प्रायेण शक्त C, $D_2$, $D_3$, $D_4$. प्रायेण समः $B_2$. ४. समेन धावति P.

विषमेणैति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् गृह्णाति। सुखेन दुःखेन यातीत्यादि।

**दिवः कर्म च ॥१।४।४३॥**

दिवः साधकतमं कर्मसंज्ञं वा स्यात्॥ अक्षैरक्षान् वा दीव्यति।

---

**विषमेण**। एतीति शेषः। यद्यप्यत्र क्रियास्ति तथापि नात्र समविषमशब्दौ करणत्वेन विवक्षितौ किं तु कर्मत्वेन। अतो द्वितीया स्यात्। **द्विद्रोणेन धान्यं क्रीणातीत्यादावपि** कर्मत्वेन विवक्षा। तथा हि द्वौ द्वौ द्रोणौ क्रीणात्येषोऽर्थो विवक्षितः। **पञ्चकेन पशून् गृह्णातीत्यत्र** पञ्च परिमाणमस्य पञ्चकः सङ्घः। पञ्चकं वर्गं कृत्वा पशून् गृह्णातीत्यर्थः। **सुखेन दुःखेन यातीति**। सुखयुक्तो दुःखयुक्तो यातीत्यर्थः। आदिना नाम्ना मैत्रो द्विजो जात्या स्वभावेन मनोहर इत्यादि।

**दिवः**। दिवुः क्रीडाद्यर्थः। तस्येत्यर्थः। **अक्षैरित्यादि**। पाशैः क्रीडयतीत्यर्थः।

---

१. विषमेण धावति P; C has एवं नामजातिजन्मादिषु। सुखदुःखादिभ्यो वा। सुखेन सुखं वा करोति दुःखेन दुःखं वा इत्यादि। समविषमादिभ्यो वा। समेन याति विषमेण वा। द्विद्रोणपञ्चकादिभ्यः कर्मणि वीप्सायाम्। द्विद्रोणेन धान्यं विक्रीणाति। द्वौ द्वौ द्रोणौ क्रीणातीत्यर्थः। पञ्चकेन पशून् गृह्णाति। for समेनैति इत्यादि; विषमेण। $D_1$, $Bc_3$, Com. २. वा याति $D_1$, $D_2$, $D_5$, P, C, $B_1$, $B_2$. ३. P, $D_1$, $B_2$, $Bc_3$ drop वा; वा कर्मसंज्ञं $D_2$. ४. $D_2$ drops it; स्याद्वा $D_3$, $D_4$. ५. वा याति $D_1$, $D_2$, $D_5$, P, C, $B_1$, $B_2$. ६. दिव् $Dc_2$. ७. क्रीडतीत्यर्थः $Dc_2$.

**अपवर्गे तृतीया ॥२।३।६॥**

अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् ॥ अह्ना क्रोशेन वानुवाकोधीतः । अपवर्गे किम् । मासमधीतो नायातः ।

**सहयुक्तेप्रधाने ॥२।३।१९॥**

सहार्थेन युक्तेप्रधाने तृतीया स्यात् । पुत्रेण सहागतः ।

---

अपवर्गे । **मासमधीतो नायात** इति । अत्र केवला कर्तृव्यापृतिः न तु फलप्राप्तिः ।

**सह** । अत्र च युक्तग्रहणात् सहार्थोभिप्रेत इत्याह । **सहार्थेन युक्ते** इति । सहार्थो नाम क्रियागुणद्रव्यैस्तुल्ययोगो विद्यमानता च । यस्य शब्देन क्रियादिसंबन्धः प्रत्याय्यते तत् प्रधानमितरदप्रधानम् । पुत्रेण सहागत इत्यत्रागमनक्रियासंबन्धः पितुरेव शब्देनोच्यते । शब्दशक्तिस्वाभाव्यात् । अतः पिता प्रधानम् । अत एवागत इत्येकवचनम् । अन्यथा द्विवचनं स्यात् । यथा पितापुत्रावागतावित्यादौ । पुत्रस्य तु तुल्ययोगादर्थात् प्रतीयते इति सोप्रधानम् । ततस्तृतीया । गुणद्रव्याभ्यां तुल्ययोगस्योदाहरणं तु । पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । विद्यमानतायां तु । सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति विद्यमानैरित्यर्थः । सहार्थेन योगे विधानात् पर्याययोगेपि स्यादित्याह ।

---

१. After it—गुणाक्रियाद्रव्यैस्तुल्ययोगो विवक्षितो विद्यमानता वा । पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । पुत्रेण सह धनी । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । धावति । पुत्रेण सहागतः । $D_5$. २. सहागतः पिता C ; सहायातः $D_1$, $D_5$, $B_1$. ३. अत्र च dropped $Dc_2$. ४. °द्रव्यगुणै° $Bc_3$. ५. प्रत्याख्यातः $Nc_1$. ६. आगमनक्रियासंबन्धस्तुल्ययोगाद° $Dc_2$.

एवं साकंसार्धंसमंयोगेपि। विनापि तद्योगं तृतीया। 'वृद्धो यूना' इति निर्देशनात्॥

**येनाङ्गविकारः॥२।३।२०॥**

येनाङ्गेन विकृतेनाङ्गिनोङ्गविकारस्ततस्तृतीया स्यात्॥ अक्ष्णा काणः।

---

एवं **साकंसार्धंसमंयोगेपीति** । **विनापीति** । सहशब्दार्थे गम्यमाने सहशब्दयोगं विनापि तृतीया स्यादित्यर्थः। तत्र हेतुमाह। **वृद्धो यूनेति दर्शनादिति**। यूनेति तृतीयानिर्देशदर्शनादित्यर्थः।

**येन**। अङ्गानि सन्त्यस्याङ्गं शरीरम्। अर्शआदित्वादच्। येनेति तदवयवो हेतुत्वेन निर्दिश्यत इत्यभिप्रेत्याह। **येनाङ्गेनेत्यादि**। **तत इति**। विकृतादङ्गात्। **अक्ष्णा काण इति**। अत्रावयवधर्मेणावयवी व्यपदिश्यते। ननु चात्र कस्मादक्षिशब्दः प्रयुज्यते। यतो विनापि तं काणत्वविशिष्टो देहः प्रतीयत एव। सत्यम्। लोकस्य शब्दप्रयोगे गुरुलाघवं प्रत्यनादरात्। तथा चोक्तं **पाणिनीयमतदर्पणे**। 'अक्ष्यादिशब्देन विनापि देहः, स्यादेव काणादिगुणप्रतीतितः। अथापि लोको गुरुलाघवं प्रत्यनादराच्छब्दमपि प्रयुङ्क्ते'॥ इति। अङ्गेत्यङ्गिग्रहणं किम्। अक्षि काणमस्येति। असति शरीरवाचिन्यङ्गग्रहणे काणशब्दात् तृतीया स्यात्। लक्ष्यते हि काणशब्देन समुदायावयवस्याक्ष्णो विकारः। कृतादिक्रियाध्याहारेण 'कर्तृकरणयोः—' इत्येव तृतीयासिद्धौ संबन्धषष्ठीबाधनार्थं वचनम्।

---

१. सार्धंसाकं $D_1$. २. तद्योगेन $B_1$. ३. दर्शनात् Com. ४. अङ्ग dropped C, $D_2$, $Dc_1$. ५. °स्तस्मात्तृ° $B_1$, $D_2$; after it—लक्ष्यते $D_5$. ६. After it—पादेन खञ्जः। अङ्गविकार इति किम्। अक्षि काणमस्य $D_4$ C; $B_1$ has पादेन खञ्जः। हस्तेन कुब्जः। शिरसा खल्वाटः। कर्णेन बधिरः। $D_2$ and $D_3$ have पादेन खञ्जः। only. C has अङ्गिविकार for अङ्गविकार. ७. सार्धंसाकं...$Dc_1$, $Dc_3$, $Dc_4$. ८. अत्र $Dc_1$, $Dc_2$, $Bc_3$ ९. निदर्शनादिति $Nc_1$. १०. प्रतीतेः $Dc_1$, $Dc_3$. ११. °त्यङ्ग° $Nc_1$, $Dc_4$

**इत्थंभूतलक्षणे ॥२।३।२१॥**

कंचित् प्रकारं प्राप्त इत्थंभूतः। तल्लक्षणे[1] तृतीया स्यात् ॥ छात्रेणोपाध्यायमद्राक्षीत् ॥

**संज्ञोन्यतरस्यां कर्मणि ॥२।३।२२॥**

संपूर्वस्य जानातेः कर्मणि तृतीया वा[2] स्यात् ॥ पित्रा पितरं वा संजानीते[3]।

---

**इत्थम्—** । कंचित् प्रकारमित्यनेनेत्थंशब्दस्यार्थमाचष्टे । तथा हि । प्रकारवचने इदमस्थमुप्रत्यये कृते इत्थमिति स्यात् । सामान्यस्य च भेदको विशेषः प्रकारः । **प्राप्त** इत्यनेन भूत इत्यस्यार्थमाचष्टे । तथा हि प्राप्त्यर्थस्य भूधातोः क्तान्तस्य भूत इति स्यात् । **तल्लक्षणादिति** । तस्य कञ्चित् प्रकारं प्राप्तस्य लक्षणं लक्ष्यतेनेनेति लक्षणं चिह्नं तस्मादित्यर्थः । **छात्रेणेत्यादि** । अत्र मनुष्यत्वस्य सामान्यस्योपाध्यायत्वमध्यापकत्वं प्रकारस्तमुपाध्यायः प्राप्तस्तस्य चिह्नं छात्रः । इह न । कमण्डलुपाणिश्छात्र इति । लक्षणस्य समासेन्तर्भूतत्वात् । इत्थंभूतलक्षणे किम् । वृक्षं प्रति विद्योतते विद्युत् । नात्र विद्योतनप्रकारं प्राप्तस्य कस्यचिद्वृक्षो लक्षणम् । किं तर्हि । विद्योतनस्यैव ।

**संज्ञः** । **पित्रा पितरं वा संजानीते** इति । अवेक्षत इत्यर्थः । 'संप्रतिभ्यामनाध्याने' इति तङ् । स्मरणे तु 'अधीगर्थ—' इति परत्वात् षष्ठी । मातुः संजानातीति । कृत्प्रत्यययोगे तु अनाध्यानेपि कर्तृकर्मणोः कृति' इति परत्वात् षष्ठी । मातुः संज्ञेति ।

---

१. तल्लक्षणा $B_1$; तल्लक्षणात् Com. २. $D_1$, $D_3$, $D_4$ drop it. ३. After it—अस्मरणार्थ एव। स्मरणे तु पितरं संजानाति। स्मरतीत्यर्थः $D_2$, $D_3$, $B_1$, C (स्मरतीत्यर्थः dropped C).

हेतौ ॥२।३।२३॥

हेतुवाचिनस्तृतीया स्यात् ॥ पुण्येन दृष्टो हरिः । मानाद्वीप्सायां कर्मणि तृतीया वेति केचित् । शतं शतं वत्सान् पाययति पयः । शतेन शतेन वा ।

वारणार्थयोगे तृतीया ॥ अलं विलम्बेन । 'तृतीया तत्कृतार्थेन—' इति तृतीयासमासोक्तेरर्थशब्दयोगे तृतीया । सतामर्थो हरिभक्त्या । पूर्वावरोनार्थादियोगेऽपि । मासेन पूर्वः । मासेनावरः । पुण्येन हीनः । शास्त्रेण कलहः । गुडेन मिश्रः ।

---

हेतौ । 'तत्प्रयोजको हेतुश्च' इति शास्त्रीये हेतौ कर्तरीत्येव तृतीया सिद्धा । अतः फलमनिष्पादयन्नपि फलसाधनयोग्यो लोके हेतुरित्युच्यमान इह गृह्यते । तथोक्तं भर्तृहरिणा—

'अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते' इति ।

पुण्येन दृष्टो हरिरिति । अत्र पुण्यव्यापारादनन्तरं दर्शनक्रियानिष्पत्तिरविवक्षिता केवलं क्रियासाधनयोग्यता विवक्षिता । अतः पुण्यं हेतुः । तथा धनेन कुलं विद्यया यश इत्यादौ । अत एव करणत्वाभावादसिद्धा तृतीया । मानादित्यादि । मीयतेऽनेनेति मानम् । तथोक्तं मुग्धबोधे । 'मानाद्वीप्सायां ढे' इति । वारणार्थेति । एतच्च 'प्रकृत्यादिभ्य उपसंख्यानम्' इति सिद्धम् । अथवा करणविवक्षया । विलम्बेन न किंचित् साध्यमित्यर्थावगमात् । 'तृतीया तत्कृत—' इति । अर्थशब्दयोगे तृतीयासमासविधानं तृतीयाविधिज्ञापकमिति भावः । पूर्वावरोनार्थादियोगेपीति । अत्रापि 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इत्येभिर्योगे तृतीयासमासविधानं ज्ञापकं तृतीयाविधेः ।

---

१. Before it—फलसाधनयोग्यः पदार्थो हेतुरुच्यते । C, $B_2$, $D_4$, $D_5$. २. Dropped P, $D_1$, $D_4$. ३. मानाद्वीप्सायां तृतीयेति । वेति केचित् । $Dc_1$, $Bc_3$. ४. द्वितीया $D_2$. ५. P, C, $B_2$, $D_2$, $D_3$, $Dc_1$, $Bc_3$ have after it—इति केचित्. ६. After it—भवति $D_3$. ७. मासेन पूर्वः अवरः $B_2$. ८. अत्र च $Nc_1$.

अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया । दास्या संयच्छते कामुकः । धर्मे तु । भार्यायै संयच्छति ।

**कर्मणा यमभिप्रैति स संप्रदानम् ॥१।४।३२॥**

दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् ॥

---

**अशिष्टव्यवहार** इति । अत्रापि 'दाणश्च सा चेच्चतुर्थ्यर्थे' इति संपूर्वाद्दाणश्चतुर्थ्यर्थे तृतीयायोगे आत्मनेपदविधानं ज्ञापकम् । सा चाशिष्टव्यवहारे स्यादित्यत्र लौकिकः प्रयोगो नियामकः । अथवा वक्तव्यमेवैतत् । तथोक्तं काशिकावृत्तौ । 'वक्तव्यमेतदशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवति' इति । **दास्या संयच्छते कामुक** इति । यो धर्मशास्त्रविरुद्धं दासीं कामयितुं तस्यै ददाति तस्यासावशिष्टव्यवहारो भवतीत्यत्राशिष्टव्यवहारः ॥

इति निरूपिता तृतीया ॥

**कर्मणा** । संप्रदानमिति महत्याः संज्ञायाः करणात् सम्यक् प्रकर्षेण दीयते यस्मै तत् संप्रदानं इत्यन्वर्थता विज्ञायते । तथा चोक्तम्—

'संप्रदानं तदेव स्यात् पूजानुग्रहकाम्यया ।
दीयमानेन संयोगात् स्वामित्वं लभते यदि' ॥ इति ।

ततश्च ददातिकर्मणैव यमभिप्रैतीति विज्ञायत इत्यभिप्रेत्याह । **दानस्य कर्मणा यमभिप्रैतीति** । दानं हि मानपूजानुग्रहकाम्ययात्मीयद्रव्यस्य परित्यागेन परस्वत्वापादनम् । ततश्च रजकस्य वस्त्रं दत्तमित्यादौ न । **अभिप्रैतीति** । अभिसंबध्नाति । सुसंबध्नातीति यावत् । अथवाभिप्रैतीप्सतीत्यर्थः । कर्मणेति किम् । यमभिप्रैति स संप्रदानमित्येतावत्युक्ते कर्मण एव संप्रदानसंज्ञा स्यात् ।

---

१. संप्रयच्छते $B_1$. २. संप्रयच्छति $B_1$. ३. वक्तव्यमेव तत् $No_1$, $Bo_1$. ४ अस्मै $No_1$, ५. इत्यन्वर्थता $Do_1$, $No_1$. ६. परसत्तापादनम् । $Do_1$, $Bo_3$. ७. °ध्नातीति यावत् $Do_3$.

## चतुर्थी संप्रदाने ॥२।३।१३॥

संप्रदानेर्थे चतुर्थी स्यात् ॥ विप्राय गां ददाति। अनभिहिते इत्येव। दानीयो विप्रः। क्रियया यमभिप्रैति सोपि संप्रदानम्* ॥

---

कर्मसंज्ञायास्तु ददातिकर्मणोन्यत्कर्मावकाशः स्यात्। यमिति किम्। कर्मणाभिप्रैति स संप्रदानमित्युच्यमाने योभिप्रैति तस्य संप्रदानसंज्ञा स्यात्। कर्तृसंज्ञायास्तु यत्र कर्मसंबन्धो नास्ति सोवकाशः स्यात्। आस्ते देवदत्त इत्यादि। अभिप्रग्रहणं किम्। कर्मणा यमेति स संप्रदानमित्युक्ते कालविवक्षा स्यात्। ततश्च विप्राय गामदात् दास्यतीत्यत्र न स्यात्। अभिप्रग्रहे तु[1] सर्वत्र स्यात्। अभिराभिमुख्ये वर्तते। तच्चातीते भाविन्यप्यस्ति। प्रशब्दः प्रारम्भे। स चातीतायां भाविन्यामपि स्यात्। ततश्चोपसर्गद्वयोपादानसामर्थ्यात् कालानवच्छिन्ना क्रियाश्रीयेत। यदा त्वीप्सतीत्यर्थस्तदाभिप्रग्रहणं कार्यम्। संप्रदानं त्रिविधम्। अनिराकर्तृ प्रेरकमनुमन्तृ चेति। तत्रानिराकर्तृ यथा। आदित्याय पुष्पं ददाति। नात्रादित्यः प्रार्थयते नानुमन्यते न च निराकरोति। प्रेरकं यथा। विप्राय गां ददाति। विप्रेण गां मह्यं देहीति[2] प्रेरितो ददाति। अनुमन्तृ यथा। उपाध्यायाय गां ददाति। उपाध्यायो हि पूर्वं न प्रार्थितवान्। अथ च दीयमानामनुमन्यते[3] भद्रं कृतमिति। तथोक्तं भर्तृहरिणा

'अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम्।
प्रेरणानुमतिभ्यां च लभते संप्रदानताम्' ॥ इति।

चतुर्थी। दानीयो विप्र इति। दीयतेस्मै दानीयः। 'कृत्यल्युटो बहुलम्' इति संप्रदानेनीयर् कृत्। क्रिययेति। एतच्च वक्तव्यं प्रयोगदर्शनविषयम्।

---

१. तु सति $Nc_1$, $Bc_3$, $Dc_3$. २. ददातीति $Dc_2$. ३. दीयमानमेवानुमन्यते $Nc_1$; दीयमानमनुमन्यते $Bc_3$.

पत्ये शेते । यजेः कर्मसंप्रदानयोः करणकर्मत्वे वाच्ये* ॥ पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

**रुच्यर्थानां प्रीयमाणः ॥१।४।३३॥**

रुच्यर्थानां धातूनां योगे प्रीयमाणोऽर्थः संप्रदानसंज्ञः ॥ हरये रोचते भक्तिः ।

---

पत्ये शेते इति । शयनेन पतिमभिप्रैति पतिमाभिमुख्येनारभ्य शेते इत्यर्थः । **कर्मसंप्रदानयोरिति** । एतत् पशुना रुद्रं यजते इत्यत्रैव ज्ञेयम् ।

**रुच्य** । रुचिरर्थो येषां ते रुच्यर्थाः । रुचिना समानार्था इति यावत् । यद्यपि रुचिर्दीप्तौ पठ्यते तथापीहान्यकर्तृकेऽभिलाषे वर्तते । तत्रैव प्रीयमाणार्थस्य संभवात् । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणस्तर्प्यमाणो योऽर्थस्तत् कारकं संप्रदानसंज्ञं स्यादित्यर्थः । **हरये रोचते भक्तिरिति** । भक्तिर्हरेरात्मविषयमभिलाषमुत्पादयतीत्यर्थः । हरिस्थस्याभिलाषस्य भक्तिः कर्त्रीत्यन्यकर्तृकताभिलाषस्य । ततश्च देवदत्तो मोदकमभिलषतीत्यत्र देवदत्तस्य संप्रदानसंज्ञा न । अभिलाषस्यान्यकर्तृकताभावात् । प्रीयमाणः किम् । देवदत्ताय रोचते मोदकः पथि । इहाधिकरणस्य पथोऽप्रीयमाणस्य संप्रदानत्वं मा भूदिति ।

---

१. $D_1$, $D_4$ drop यजेः. २. रुच्यर्थानां...प्रीयमाणोऽर्थः dropped $D_1$. ३. प्रयोगे $B_1$; रुच्यर्थानां प्रयोगे $B_2$, $Bc_3$. ४. प्रीयमाणः $B_1$; प्रीयमाणो योऽर्थः स $B_2$, $Bc_3$; यः प्रीयमाणः स संप्र $D_3$; प्रीत्यर्थानां धातूनां यः प्रीयमाणः स संप्रदानसंज्ञः स्यात् $D_4$. ५. संप्रदानं स्यात् C, $D_2$. ६. °कर्तृकेऽप्यभि° $Dc_2$. ७. °त्वाभावात् $Dc_4$, $Dc_2$, $Dc_3$.

**श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥१।४।३४॥**

श्लाघादेर्ज्ञापयितुमिष्टः संप्रदानं[2] स्यात्[3] ॥ गोपी स्मरात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपते[4] ।

**धारेरुत्तमर्णः ॥१।४।३५॥**

उत्तसंज्ञः[5] स्यात्[6] ॥ भक्ताय धारयति मोक्षं हरिः ।

---

**श्लाघ** । श्लाघृँङ् कत्थने । ह्नुङ् अपनयने । ष्ठा गतिनिवृत्तौ । शप उपालम्भने । **एतेषां प्रयोगे ज्ञापयितुमिष्ट** इति । बोधयितुमभिप्रेत इत्यर्थः । **गोपी स्मरात् कृष्णाय श्लाघत** इति । गोपी मदनावस्थया[8] कृष्णं श्लाघमाना स्तुवती तां श्लाघां तमेव ज्ञापयितुमिच्छतीत्यर्थः । अथवात्मानमेव श्लाघमाना तां श्लाघां कृष्णं बोधयितुमिच्छति । आत्मानं सगुणां बोधयतीति यावत् । ह्नुते । संनिहितमेव कृष्णं सपत्नीभ्यो निह्नुवाना तामेव निह्नुतिं तमेव ज्ञापयतीत्यर्थः । अथवा ह्नोतव्यवस्तुषु इदमहं ह्नुवे इति कृष्णं ज्ञापयतीत्यर्थः । तिष्ठते । स्वाभिप्रायं कृष्णं प्रति प्रकाशयतीत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । शपते । सत्यमेतदिति प्रकटयतीत्यर्थः । ज्ञीप्स्यमान इति किम् । देवदत्तं श्लाघते ।

**धारे** । धृङ् अवस्थाने । अस्य हेतुमण्णिजन्तस्य प्रयोगे उत्तमर्णो धनस्वामी धनप्रयोक्ता उक्तसंज्ञः संप्रदानसंज्ञः स्यात् । **भक्ताय धारयति मोक्षं हरिरिति** । अत्र भक्त उत्तमर्णो हरिरधमर्णः । उत्तमर्ण इति किम् । देवदत्ताय शतं धारयति[9] ग्रामे । अत्र ग्रामस्यानुत्तमर्णस्य न ।

---

१. संप्रदानसंज्ञः $B_2$. २. Dropped $B_2$. ३. एवं before it in $B_1$. ४. वा after it in C, $D_4$, $D_5$. ५. धनस्य स्वामी उत्तमर्णः । धारयतेः प्रयोगे उत्तमर्णो योर्थः स उक्तसंज्ञः । $D_5$. धारेरुत्तमर्णः संप्रदानं स्यात् C; धारयतेः प्रयोगे उत्तमर्णो योर्थः स संप्रदानसंज्ञः स्यात् $B_2$, $D_3$. ६. Dropped in $D_1$, $Bc_3$, $Dc_1$, P, $D_2$. ७. श्लाघृ $Dc_1$, $Bc_3$. ८. मदनावस्थायां $Nc_1$. ९. धारयति शतं $Dc_3$.

**स्पृहेरीप्सितः ॥१।४।३६॥**

स्पृहयतेरिष्टः संप्रदानं स्यात् ॥ हरये स्पृहयति[२] ।

**क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥१।४।३७॥**

[३]क्रुधाद्यर्थानां [४]योगे यं प्रति कोपः स उक्तसंज्ञः[५] ॥ हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति[६] गोपी स्मरात् । यं प्रति कोप [७]इति किम् । भार्यामीर्ष्यति मैनामन्योद्राक्षीदिति[८] ।

---

**स्पृहे** । स्पृह ईप्सायां चुरादावदन्तः । इष्टोभिप्रेतः । **हरये स्पृहयतीति** । हरिमभिलषतीत्यर्थः । ईप्सित इति किम् । पुष्पेभ्यो वने स्पृहयति ।

**क्रुध** । **क्रुधाद्यर्थानामिति** । क्रुधद्रुहेर्ष्यासूयार्थानां धातूनामित्यर्थः । क्रोधोमर्षः । द्रोहोपकारः । ईर्ष्या परसंपत्त्यसहनम् । असूया गुणेषु दोषारोपः । यं प्रति कोप इति सर्वेषां सामान्येन विशेषणम् । यतः क्रोधः कोप एव द्रोहादयोपि कोपप्रभवा एव गृह्यन्ते । **हरये क्रुध्यतीत्यादि** । गोपी स्मराद्धेतोः हरिं प्रति क्रोधादिकं करोतीत्यर्थः । **भार्यामीर्ष्यतीति** । अस्ति भार्यायामीर्ष्या न तु तां प्रति कोपः । केवलं परैर्दृश्यमानां तां न क्षमते । ननु च योस्मान् द्वेष्टीत्यत्र कुतः संप्रदानत्वं न । उच्यते । द्विषेरक्रोधाद्यर्थत्वात् । अप्रीतौ ह्येनं स्मरन्ति । तथाचेतनेष्वपि प्रयुज्यते । औषधं द्वेष्टि । नाभिनन्दतीति गम्यते । क्रुधद्रुहोरकर्मकत्वात् षष्ठ्यां प्राप्तायामारम्भः । इतरयोः सकर्मकत्वाद् द्वितीयायाम् ।

---

१. संप्रदानसंज्ञः $B_2$, $D_2$. २. $B_1$ has after it—चेति केचित् । हरिं स्पृहयति. ३. Before it $Dc_1$, $Bc_3$ have अमर्षः क्रोधः । अपकारो द्रोहः । अक्षमा असहिष्णुत्वम् । दोषारोपो गुणेष्वसूया ।. ४. प्रयोगे C. ५. स्यात् after it in C, $D_3$, $D_4$, $B_2$. ६. वा after it in C. ७. Dropped in $B_1$, $D_3$, P, $D_1$, $Dc_1$. ८. इति is dropped in $B_1$, $Dc_1$. $Bc_3$, $D_4$, $D_5$. ९. °लष्यती° $Nc_1$. १०. °द्रोहे° $Bc_1$, $Dc_2$. ११. कोपः क्रोधः $Dc_3$. १२. द्रुहा° Dc.

**क्रुधद्रुहोरुपसृष्टयोः कर्म ॥१।४।३८॥**

उपसृष्टयोरेतयोः प्राग्[1]उक्तः कर्म स्यात् ॥ क्रूरमभिक्रुध्यति अभिद्रुह्यति ।

**राधीक्ष्योर्यस्य विप्रश्नः ॥१।४।३९॥**

एतयोः कारकं[2] संप्रदानं स्यात् यस्य विविधः प्रश्नः क्रियते ॥ कृष्णाय राध्यति ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः ।

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥१।४।४०॥**

आभ्यां परस्य शृणोतेर्योगे पूर्वस्याः प्रवर्तनक्रियायाः कर्ता संप्रदानं[3] स्यात् ॥

---

**क्रुध** । **उपसृष्टयोः** । उपसर्गसंबद्धयोः । **प्रागुक्त** इति । यं प्रति कोपः स इत्यर्थः ।

**राधीक्ष्योः** । राध संसिद्धौ । ईक्ष दर्शनाङ्कनयोः । एतावत्रोदाहरणे शुभाशुभपर्यालोचने वर्तेत इत्यभिप्रेत्याह । **पृष्ट** इत्यादि । यस्येति ग्रहणं विस्पष्टार्थम् । 'यं प्रति' इति हि वर्तते । तत्र यं प्रति विप्रश्न इत्येतावतैव यस्येत्यस्यार्थो[4] गम्यत एव ।

**प्रत्याङ्** । प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमरूपे प्रतिज्ञाने वर्तते । स चाभ्युपगमः परेण प्रयुक्तस्य सतः स्यात् । तथा ह्यन्येन केनचिदिदं क्रियतामिति प्रयुक्तो हि प्रतिजानीते करिष्यामीत्यभिप्रेत्याह । **पूर्वस्या** इत्यादि । सूत्रेषु लिङ्गनिर्देशोऽर्थापेक्षया । स चार्थो विचार्यमाणः क्रियैव स्यात् । यतः क्रियाया एव कर्ता नान्यस्येत्यभिप्रेत्याह । **प्रवर्तनक्रियायाः** कर्तेति ।

---

१. प्रागुक्तं कर्मसंज्ञं स्यात् C, $B_1$. २. कर्मकारकं $B_2$, $D_4$, $D_5$. ३. संप्रदानसंज्ञं C. ४. °र्थोऽवगम्यत $No_1$.

विप्राय गां प्रतिशृणोति आशृणोति । प्रतिजानीत इत्यर्थः ।

अनुप्रतिगृणश्च ॥१।४।४१॥

अस्य धातोः कारकं पूर्वस्य कर्तृभूतं संप्रदानं स्यात्[1] ॥ होत्रे अनुगृणाति[2] । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ।

---

**विप्राय गां प्रतिशृणोतीति** । अत्र विप्रः पूर्वस्या याचनक्रियायाः कर्ता । विप्रेण हि पूर्वं गां मह्यं देहीति याचितो ददामीति प्रतिजानीते । अत्र हेतुसंज्ञायां प्राप्तायामयमारम्भः । पूर्वस्याः प्रवर्तनक्रियायाः कर्ता हि प्रतिज्ञातुः प्रयोजकः । **पूर्वस्य कर्तेति** । एतस्मिन्नसति गवादेरभ्युपेयमानस्य कर्मण एव स्यात् । पुरस्तादपवादत्वेनानन्तरकर्मत्वस्यैव बाधात् । सति तु तस्मिन् हेतुसंज्ञामेव बाधते ।

**अनुप्रतिगृण** इति । श्नाप्रत्ययान्तेन निर्देशात् गॄ शब्द इति ऋयादिपठितस्य ग्रहणं न तौदादिकस्य गॄ निगरण इत्यस्य । **अस्य धातोरित्यादि** । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं स्यादित्यर्थः । **होतारं शंसन्तमित्यनेन** पूर्वस्याः स्तुतिक्रियाया होता कर्तेति दर्शयति । **प्रोत्साहयतीत्यर्थः** । इत्यनेनानुगृणातिप्रतिगृणातिशब्दयोरर्थमाचष्टे पूर्वस्य । कर्तेति किम् । होत्रे अनुगृणाति सदसीत्यत्राधिकरणस्य मा भूत् ।

---

१. तथा for संप्रदानं स्यात् $B_1$, $D_1$, $D_2$, $D_5$. २. After it—प्रतिगृणाति $D_1$, $D_3$.

## परिक्रयणे संप्रदानमन्यतरस्याम् ॥१।४।४४॥

नियतकालं भृत्यास्वीकरणं परिक्रयस्तत्करणं संप्रदानं वा[1] स्यात् ॥ शताय[2] शतेन वा[3] परिक्रीतः ।

तादर्थ्ये चतुर्थी वाच्या* ॥ मुक्तये हरिं भजति । क्लृप्त्यर्थे संपद्यमाने च* ॥

---

**परि** । क्रयः क्रयणं वेतनादिनात्यन्तिकं स्वीकरणम् । परिपूर्वेण क्रयणशब्देन नियतकालं स्वीकरणमुच्यते क्रयणस्य समीपमिति व्युत्पत्त्येत्यभिप्रेत्याह । **नियतकालमित्यादि** । **भृत्या** वेतनेन ।

**तादर्थ्ये** इति । तच्छब्देन कार्यं निर्दिश्यते । तस्मै इदं तदर्थम् । चतुर्थीसमासः । तदर्थशब्दः कार्यप्रयोजनं कारणमाह । तदर्थस्य भावस्तादर्थ्यम् । ष्यञ् । तादर्थ्यशब्दः कार्यप्रयोजनस्य कारणस्य कार्यस्य च यः संबन्धस्तमाह । तत्र षष्ठ्यां प्राप्तायां चतुर्थी विधीयते । यत्तु दुर्गसिंहेन 'यस्मै दित्सा रोचते धारयते वा तत् संप्रदानम्' इत्याद्युक्त्वोक्तं 'तादर्थ्यचतुर्थ्या सिद्धम्' इति तदसत् । विप्राय गां ददातीत्यादौ न विप्रादयो दानादीनां प्रयोजनानि किं तु साधनानि । अतस्तादर्थ्याभावान्न तादर्थ्यचतुर्थ्या सिद्धम् । **मुक्तये हरिं भजतीति** । मुक्तिलक्षणकार्यप्रयोजनाय हरिं सेवते इत्यर्थः । **क्लृप्त्यर्थ** इति । क्लृपेत्यस्य धातोरर्थ एवार्थो यस्य धातोस्तस्य प्रयोगे संपद्यमाने संपत्ति-रिहाभूत[4]प्रादुर्भावस्तत्र यद्रूपं संपद्यते ततो विकाराच्चतुर्थी वाच्येत्यर्थः ।

---

१. Dropped in $B_1$; वा संप्रज्ञानं $D_1$; स्याद्वा $D_3$. २. शतेन शताय $D_1$. ३. वार्यं $B_1$. ४. °रिहाभूतस्तद्भावस्तत्र $Bc_1$; $Dc_3$, $Dc_4$. °रिहाभूतस्तत्र यद्रूपं $Bc_3$.

भक्तिर्ज्ञानाय कल्पते संपद्यते जायते[1] इत्यादि[2] । उत्पातेन ज्ञापिते च* ॥ वाताय कपिला विद्युत्[3] ॥

हित[4]योगे च* ॥ ब्राह्म[5]णाय हितम् ।

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥२।३।१४॥**

क्रिया[6] क्रियार्था उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य

---

**भक्तिर्ज्ञानाय कल्पत** इति । भक्तिर्ज्ञानलक्षणविकाररूपेण भवति । भक्तिर्ज्ञानं भवतीति यावत् । विकाररूपापत्तौ चतुर्थीविधानादिह न भवति देवदत्तस्य संपद्यन्ते शालय इति । यदा च प्रकृतिविकारयोरभेदविवक्षा तदा परत्वात् प्रथमैव स्यात् । ज्ञानमियं संपद्यते भक्तिरिति । यदा तु 'जनिकर्तुः प्रकृतिः' इत्येतत्कृतमपादानत्वं विवक्ष्यते तदा भक्तेः पञ्चम्येव स्यात् । ज्ञानं संपद्यते भक्तेरिति । **उत्पातेनेति** । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः । **वाताय कपिला विद्युदिति** । अत्र कपिला विद्युदुत्पातस्तेन ज्ञापिते वाते चतुर्थी ।

**क्रिया** । उपपदमिह 'तत्रोपपदं सप्तमीस्थम्' इति पारिभाषिकं गृह्यते । तच्चोपपदं क्रियार्थं क्रियाप्रयोजनं विचार्यमाणं तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्येतस्मिन् सूत्रे या सप्तमी निर्दिष्टा क्रिया सैव भवति[7] । नान्यदिति । क्रियार्थोपपदग्रहणेन अर्थविषयो लक्ष्यते इत्यभिप्रेत्याह । **क्रियार्थेत्यादि** । क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था । एवंविधा क्रिया उपपदं यस्य तस्य । स्थानिन इति पदं व्याचष्टे । **अप्रयुज्यमानस्येति** । अयं भावः । तिष्ठत्यस्मिन् शब्दार्थ इत्यर्थः स्थानम् । तदस्यास्तीति स्थानी । यस्यार्थो ज्ञायते न च स प्रयुज्यते स स्थानीत्युच्यत इति ।

---

१. Dropped in C. २. इति Bc3. ३. C, B2, D4. complete the verse—आतपायातिलोहिता ( लोहिती B2.)। पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥. ४. बलिरक्षितहितयोगे च । कुबेराय बलिः । गोभ्यो रक्षितम् । ब्राह्मणाय हितम् । D4, D6. ५. ब्राह्मणेभ्यः B1, D2. ६. क्रियार्था क्रिया B1, D1, Dc1, Bc3. ७. भवतीति Bc3.

तुमुनः कर्मणि चतुर्थी स्यात्[1] ॥ फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः ।

**तुमर्थाच्च भाववचनात् ॥२।३।१५॥**

तुमर्था ये भाववाचिनो[2] घञादयस्तदन्ताच्चतुर्थी स्यात् ॥ योगाय याति । यष्टुं यातीत्यर्थः[4] ।

---

**तुमुन** इति । प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमिति न्यायात् तुमुन्प्रत्ययान्तस्य धातोः कर्मणि चतुर्थी स्यादित्यर्थः । **फलेभ्यो यातीति** । आङ्पूर्वो हरतिस्तुमुन्प्रत्ययान्तोत्र स्थानी । फलानि कर्म । ननु चात्र तादर्थ्य इत्येव चतुर्थी सिद्धा । सत्यम् । नियमार्थं वचनम् । अप्रयुज्यमानस्यैव कर्मणि यथा स्यात् प्रयुज्यमानस्य मा भूत् । **फलान्याहर्तुं यातीति** । क्रियार्थोपपदस्य किम् । प्रविश पिण्डीम् । अत्र गृहं प्रविश पिण्डीं भक्षयेति गम्यमानत्वात् भक्षिरत्र स्थानी न तु क्रियार्थोपपदस्तुमुन्प्रत्ययान्तत्वाभावात् ।

**तुमर्थात्** । तुमुना समानार्थास्तुमर्थाः 'भाववचनाश्च' इति यान् घञादीन् वक्ष्यति तेषामिदं ग्रहणम् । त एव तुमर्था भाववचनाः संभवन्ति नान्ये इत्यभिप्रेत्याह । **तुमर्था ये भाववचना घञादय इति** । **यागाय यातीति** । यजेः 'भाववचनाश्च' इति तुमर्थे भावे घञ् । यद्यप्यत्र तादर्थ्यं गम्यते तथापि चतुर्थी न स्यात् । तादर्थ्यस्य भाववचनेनैव द्योतितत्वात् । यथा पाचको व्रजतीत्यत्र । तेन चतुर्थीविध्यर्थमिदम् । अथवा भाववचनादेव यथा स्यादिह मा भूत् पाचको व्रजतीति नियमार्थम् । नायं भाववचनः किं तु कर्तृवचनः ।

---

१. Dropped in $D_1$, $B_2$, $Dc_1$, $D_3$, $Bc_3$. २. भाववचना P, C. ३. $B_1$ has त्यागाय याति । त्यक्तुं यातीत्यर्थः । एवं यागाय यातीत्यादि योज्यम् । ; $D_2$ has पाकाय व्रजति । त्यागाय व्रजति । पाचनाय व्रजति । यागाय व्रजति । यष्टुं यातीत्यर्थः । before it—पाकाय याति । $D_6$. ४. After it—तुमर्थादिति किम् । यागः । त्यागः । भाववचनादिति किम् । कारको व्रजति । $D_4$, $D_5$ ( त्यागः dropped $D_5$. ).

**नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥२।३।१६॥**

एभिर्योगे चतुर्थी स्यात् ॥ हरये नमः[1]। इत्यादि[2]। अलमिति [3]पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः [4]समर्थ इत्यादि। आशिषि षष्ठीं बाधितुं चकारः। स्वस्ति गोभ्यो भूयात्[5]। उपपदविभक्तेः कारकविभक्तिर्बलीयसी। [6]तेन नमस्करोति देवान्।

---

**नमः**। संबन्धषष्ठ्या [7]बाधार्थं वचनम्। **हरये नम इत्यादीति**। आदिना स्वस्ति प्रजाभ्यः। स्वाहाग्नये। स्वधा पितृभ्यः। वषडिन्द्राय। **अलमिति पर्याप्त्यर्थग्रहणमिति**। सामर्थ्यार्थस्य ग्रहणमित्यर्थः। 'तस्मै प्रभवति संतापादिभ्यः' इत्यलमा [8]समानार्थेन प्रभवतिना योगे चतुर्थीनिर्देशाल्लिङ्गात्। तेन सामर्थ्यपर्यायाणां प्रयोगे स्यादित्याह। **तेन दैत्येभ्यो हरिरलं प्रभुः समर्थ इत्यादि**। अलमित्यस्य तु पर्याप्त्यर्थस्यैव योगे चतुर्थी स्यात्। तेन कन्यामलंकुरुते इत्यादौ भूषणाद्यर्थयोगे न। **आशिषीत्यादि**। 'चतुर्थी चाशिषि–' इत्यादिनाशीर्विवक्षायां पक्षे या षष्ठी विधीयते तामपि बाधित्वा चतुर्थ्येव भाव्येति चकार इत्यर्थः। **नमस्करोति देवानिति**। देवानित्यत्र नमो योगेन प्राप्ता चतुर्थी उपपदविभक्तिः। 'कर्मणि द्वितीया' इति प्राप्ता द्वितीया कारकविभक्तिः। सैव बलीयसीति सैव जाता।

---

१. After it—राज्ञे स्वस्ति। सोमाय स्वाहा। पितृभ्यः स्वधा। अलं मल्लो मल्लाय। $D_6$. २. $B_1$, $D_2$ drop it. ३. पर्याप्त्यर्थस्य ग्रहणम् $B_1$. ४. समर्थः शक्तः $D_1$, P, $D_4$, $B_2$, $D_5$; शक्तः समर्थः $D_3$, C, $Dc_1$. ५. $B_1$ has इत्यादि after it. ६. P, $D_1$ drop तेन; तेन नमसायोगेपि द्वितीयैव। नमस्करोति देवान्। C, $B_2$; तेन नमस्योगे द्वितीयैव। $D_2$, $D_6$, (एव dropped $D_5$); तेन नमसा योगे द्वितीयैव $Dc_1$, $D_3$, $D_4$. (नमसो $D_3$, $D_4$). ७. बाधनार्थं $Dc_1$, $Dc_3$, $Bc_3$. ८. समार्थेन $Nc_1$.

**मन्यकर्मण्यनादरे विभाषाप्राणिषु ॥२।३।१७॥**

प्राणिवर्ज्ये[१] मन्यतेः कर्मणि चतुर्थी वा स्यात् अनादरे । न[२] त्वां तृणाय मन्ये । न त्वां तृणं मन्ये । अनादरे किम् । देवं[३] त्वां मन्ये । अप्राणिष्विति नौकाकान्नशुकशृ[४]गालवर्जे[५]ष्विति वाच्यम्* । नेह[६] । न त्वां नावं मन्ये[७] इत्यादि ।

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥२।३।१२॥**

गत्यर्थानां धातूनां[८] कर्मण्य[९]ध्ववर्जे[१०] द्वितीया[११]चतुर्थ्यौ स्तश्चेष्टायाम् ।

---

**मन्य** । अनादरस्तिरस्कारः । परिभवोवज्ञानमिति यावत् । न त्वां तृणाय मन्यत[१२] इति । तृणादपि निकृष्टतरं त्वां मन्यत[१३] इत्यर्थः । ननु च युष्मदः कस्मान्न चतुर्थी तदपि हि मन्यतेः कर्म । व्यवस्थितविभाषाविज्ञानात् । मन्यतेः किम् । न त्वां तृणं चिन्तयामि । मन्यतेरिति श्यन्विकरणनिर्देशात् तनादिकस्य मनु अवबोधे इत्यस्य कर्मणि न । न त्वां तृणं मन्वे । अप्राणिष्वितीति । व्यवस्थितविभाषाविज्ञानादिति भावः । इह तु स्यादेव चतुर्थी । न त्वां श्वानं मन्ये । न त्वां शुने मन्ये ।

**गत्यर्थे** । यदि हि क्रियामात्रमत्राभिप्रेतं स्याच्चेष्टाग्रहणमनर्थकं स्यात् ।

---

१. °वर्जे C, $D_1$, $Bc_3$, $D_4$, $D_5$ ; °वर्जिते P, $D_3$. २. न त्वां तृणं मन्ये तृणाय मन्ये । P. ३. त्वां देवं मन्ये C. ४. °सृगाल° $B_1$, $D_1$ ; °शृगालमिति वाच्यम् $Bc_3$. ५. °वर्जामिति $D_3$. ६. तेन $D_4$; तेनेह न । $B_1$, $Bc_3$. ७. काकं मन्ये इत्यादि $D_4$, $B_1$. ८. Dropped $B_1$, $D_1$, $D_5$. ९. अध्ववर्जे कर्मणि $B_1$. १०. °वर्जिते P, $D_2$, $D_4$, $Dc_1$, $Bc_1$. ११. चतुर्थीद्वितीये $D_2$. १२. मन्ये $Dc_3$, $Dc_4$. १३. मन्ये $Dc_3$, $Dc_4$.

व्रजं[1] व्रजाय वा व्रजति कृष्णः । चेष्टायां किम् । मनसाकोशं[2] [3] याति[4] । अनध्वनि किम् । मार्गं[5] याति । उत्पथगतौ तु स्यादेव । उत्पथेन पथे गच्छति । द्वितीयाग्रहणं कृद्योगे[6] षष्ठीं बाधितुम् । ग्रामाय[7] गता । ग्रामं गता ॥

---

सर्वो हि धातुः क्रियार्थ एव । तस्माच्चेष्टाग्रहणात् शरीरव्यापार-वाच्यत्र चेष्टाशब्दः । अध्वनीत्यर्थग्रहणमर्थप्रधानत्वान्निर्देशस्येत्यभि-प्रेत्याह । **अनध्वनि किम् । मार्गं यातीति** । मार्गमाक्रम्य याति मार्गेण यातीति यावत् । **उत्पथगताविति** । उत्पथेनामार्गेण चेदध्वानं प्रति गतिः स्यात्तदा चतुर्थी स्यादेवेत्यर्थः । **द्वितीयाग्रहणमित्यादि** । कर्मणि चतुर्थ्यां विकल्पितायां पक्षे न्यायप्राप्तायां द्वितीयायां द्वितीयाग्रहणं 'कर्तृकर्मणोः कृति' इति कृद्योगे या षष्ठी स्यात् तस्या बाधनार्थ-मित्यर्थः । ननु च 'गत्यर्थ–' इत्यत्रार्थग्रहणं किमर्थं यतो गतिरर्थ एव । उच्यते । या गतिर्गमिनैव शब्दान्तरसंनिधानाद्यनपेक्षेणोच्यते पादग्रहणात्मिका प्रधानभूता तस्या ग्रहणं यथा विज्ञायेतेत्येवमर्थम् । तेनेह न । स्त्रियं गच्छति । अजां ग्रामं नयतीति । अत्र हि गमेर्मैथुनमर्थः स्त्रीशब्दसंनिधानाद् गम्यते न तु गमेरेव केवलात् । नयतौ च प्रापणमेव प्रधानं तद्विशेषणं तु पादविहरणमप्रधानम् ॥

इति निरूपिता चतुर्थी ॥

---

१. व्रजं व्रजति व्रजाय व्रजति वा P, $D_4$, $Dc_1$, $Bc_3$; व्रजं व्रजति व्रजाय व्रजति C; व्रजं व्रजति व्रजाय व्रजति कृष्णः $D_1$; व्रजाय व्रजति व्रजं व्रजति वा कृष्णः $D_2$. २. मनसा वनं याति P, $D_1$, $D_5$; मनसा ईशं याति $Dc_1$, $Bc_3$. ३. काशीं $B_2$; व्रजं $D_2$. ४. व्रजति $D_3$. ५. Dropped P, C. ६. कृद्योगेपि $B_1$, $D_1$, $Bc_3$. ७. ग्रामाय ग्रामं वा गता । $B_1$. ८. ग्रामं dropped $Dc_1$, $Bc_1$, $Bc_3$.

**ध्रुवमपायेऽपादानम् ॥१।४।२४॥**

अपायो विश्लेषस्तस्मिन् साध्ये यद् ध्रुवमवधिभूतं तदपादानं स्यात् ॥

**अपादाने पञ्चमी ॥२।३।२८॥**

अपादाने कारके पञ्चमी स्यात् ॥ ग्रामादायाति । धावतोऽश्वात् पतति ।

---

ध्रुवम्[१] । **अपाय** इति । विश्लेषो विभागस्तद्धेतुभूतो गतिविशेष इति यावत् । तस्मिन् साध्य इति विषयसप्तमी । अपाये साध्यत्वेन विषयभूत[२] इत्यर्थः । यद्यपि ध्रुवशब्दो लोके एकरूपतामाचष्टे ध्रुवमस्य रूपमिति तथाप्यपायं गतिविशेषं प्रति या ध्रुवतोपयुज्यते[३] सैवेहोपादीयते । सा चापायेनानाविष्टता तदुपयोगिता चौदासीन्येन सा चार्थादवधिभाव एव । तस्मादपायसंनिधौ प्रयुक्तो ध्रुवशब्दोऽवधिभावमाचष्ट इत्याह । **यद् ध्रुवमवधिभूतमिति** । तेन चलेऽप्यपादानसंज्ञा सिद्धा स्यादित्यभिप्रेत्य[४] **धावतोऽश्वात्पततीति** द्वितीयमुदाहरणमाह । तथोक्तम्[५] ।

'अपाये यदुदासीनं चलं वा यदि वाचलम् ।
ध्रुवमेवातदावेशात् तदपादानमुच्यते' ॥ इति ।

तथा पततः पतित इत्यत्रापि ध्रुवत्वं युक्तम् ।

'पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्य त्वश्वस्य पतने कुड्यादि ध्रुव[६] इष्यते' ॥ इति ।

तथा परस्परस्मान्मेषावपसर्पत इत्यत्राप्युक्तम् ।

'मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं[७] कर्तृत्वं च पृथक् पृथक्' ॥ इति ।

---

१. $D_1$ drops ध्रुवम्. २. विषयीभूते $Nc_1$. ३. ध्रुवेणोप° $Bc_3$. ४. °प्रेत्याह $Dc_1$, $Nc_1$, $Bc_1$, $Dc_3$, $Dc_4$. ५. तथा चोक्तम् $Dc_3$, $Dc_4$. ६. °ध्रुव $Bc_3$, $Dc_3$. ७. °पेक्षे $Dc_3$.

जुगुप्साविरामप्रमादार्था यतस्तदप्यपादानम्* ॥ पापाज्जुगुप्सते । पापाद्विरमति । धर्मात् प्रमाद्यति ।

**भीत्रार्थानां भयहेतुः ॥१।४।२५॥**

भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानं स्यात् ॥ चौराद्बिभेति । चौरात् त्रायते ।

---

जुगुप्सेति । जुगुप्सा निन्दा । विरामो विरतिः । प्रमादोनवधानता । एतेर्था यतः स्युस्तदप्यपादानसंज्ञं स्यादित्यर्थः ।

**भीत्रा** । भयं भीः । त्राणं त्राः । संपदादित्वाद् भावे क्विप् । भीत्रावर्थौ येषां ते भीत्रार्थास्तेषां भीत्रार्थानां प्रयोगापेक्षया षष्ठीत्येतत् सर्वं चेतसि कृत्वाह । **भयार्थे**त्यादि । भयहेतुरिति किम् । अरण्ये बिभेति । नात्रारण्याद्भयं किं तु तत्स्थेभ्यश्चौरादिभ्यः । ननु चात्र परत्वादधिकरणसंज्ञा बाधिका स्यात् किमेतन्निवृत्त्यर्थेन[3] भयहेतुग्रहणेन । उच्यते । पूर्वस्यायं योगः प्रपञ्चः । न हि देहसंबन्धपूर्वक एवापायः । किं तर्हि । ज्ञानसंबन्धपूर्वकोपि । तथा हि । यो हि पण्डितः स तु यदि मां चौराः पश्येयुर्ध्रुवो मे मृत्युरिति विचारयंस्तान् ज्ञानेन प्राप्य ततो निवर्तत इत्यस्त्यपायः । एवं सर्वत्र । उत्तरेपि योगाः पूर्वस्यैव प्रपञ्चा ज्ञेयाः । तत्राप्यपायस्तस्य संभवात् । यथा चापायोस्ति तथा भाष्य उपपादितम् । प्रपञ्चे च गुरुलाघवं न चिन्त्यमित्यदोषः ।

---

१. अपि dropped $D_3$, $D_2$. २. After it—स्यात् $D_1$. ३. तत् किमे° $Bc_3$, $Dc_3$, $Dc_4$. ४. निवर्तेत $Dc_2$; निवर्त्स्यत $Dc_1$. ५. °त्यपायस्य संभ° $Nc_1$, $Dc_2$, $Dc_3$, $Dc_4$. ६. Dropped $Nc_1$. ७. विचिन्त्य° $Nc_1$.

**पराजेरसोढः ॥१।४।२६॥**

पराजेः प्रयोगेसह्योर्थोपादानं स्यात् ॥ पापात् पराजयते[1] ।

**वारणार्थानामीप्सितः ॥१।४।२७॥**

वारणार्थानां प्रयोगे ईप्सितोर्थोपादानं स्यात् ॥ यवेभ्यो गां वारयति ।

**अन्तर्धौ येनादर्शनमिच्छति ॥१।४।२८॥**

अन्तर्द्धिर्व्यवधानं तन्निमित्तमात्मनो येनादर्शनमिच्छति तदपादानं स्यात् ॥

---

**पराजेः** । सोढुं शक्यः सह्यः । न सह्यः असह्यः । **पापात् पराजयत** इति । पापमभिभवितुं न पारयति । पापं कर्तुं न शक्नोतीति यावत् । असोढ इति किम् । शत्रून् पराजयते ।

**वार** । प्रवृत्तिविघातो वारणम् । ईप्सितशब्दोयं क्रिययाप्तुमिष्टमाह नाभिप्रेतम् । स चेप्सितः कर्तुः कर्मणो वा । विशेषाभावात् । ततश्चाग्नेर्माणवकं वारयति कूपादन्धमित्याद्यपि सिद्धम् । **यवेभ्यो गां वारयतीति** । गां इत्यत्र परत्वादीप्सिततमे कर्मसंज्ञा । ईप्सित इति किम् । यवेभ्यो गां वारयति क्षेत्रे ।

**अन्तः** । अन्तर्द्धाविति निमित्तसप्तमी विषयसप्तमी सत्सप्तमी वा । येनेत्यदर्शनस्य कर्ता । ननु चात्र 'कर्तृकर्मणोः कृति' इति षष्ठ्या भाव्यम् । न । 'उभयप्राप्तौ कर्मणि' इति नियमात् कर्मण्येव स्यात् कर्म त्वत्रादर्शनस्यात्मा । यद्यप्यत्र सूत्रे तच्छब्दो नोपात्तस्तथापि यत्तदोर्नित्यसंबन्धाल्लभ्यत इत्येतत् सर्वं चेतसि कृत्वाह । **अन्तर्धिरित्यादि** ।

---

१. After it—असोढ इति किम् । शत्रून् पराजयते । $B_2$, $D_5$. २. योगे P. ३. गा $B_1$, $D_2$, $D_4$, $D_5$. ४. जेतुं $Dc_2$; पराकर्तुं $Dc_3$. ५. गां Dc, $Bc_3$ $Dc_3$. ६. गामित्यत्र $Dc_3$. ७. गां $Bc_3$, $Dc_3$, $Dc_4$.

मातुर्निलीयते कृष्णः[१] ।

आख्यातोपयोगे ॥१।४।२९॥

उपयोगो विधिपूर्वकं विद्याग्रहणम् ।[२] उपयोगे विद्यास्वीकारे[४] आख्याता अपादानं स्यात् ॥ उपाध्यायादधीते[५] ।

जनिकर्तुः प्रकृतिः ॥१।४।३०॥

[६]जायमानस्य प्रकृतिर्हेतुरपादानं स्यात्[७] ॥ ब्राह्मणः प्रजाः [८]प्रजायन्ते ।

---

मातुर्निलीयते कृष्ण इति । मां माता मा द्राक्षीदिति निलीयते । अत्र कृष्णो मात्रा कर्त्र्या आत्मनः कर्मभूतस्यादर्शनं व्यवधाननिमित्तमिच्छति । अन्तर्धाविति किम् । चौराद्न दिदृक्षते । इच्छतिग्रहणं सत्यपि दर्शने अदर्शनेच्छायां यथा स्यात् ।

आख्याता । विद्यास्वीकारो[९] नियमपूर्वकं विद्याग्रहणं तस्मिन् सति । आख्याता प्रतिपादयिता । उपयोगे इति किम् । नटस्य गाथां शृणोति ।

जनि । जनेः कर्ता जनिकर्ता । अयमेव निर्देशो ज्ञापयति 'कर्तरि च' इति समासनिषेधोनित्य इति । जन्यर्थस्य जन्मनः कर्ता स च जायमान एवेत्यभिप्रेत्याह । जायमानस्येति । प्रकृतिशब्दोत्र कारणसामान्यवाची । नोपादानमात्रवाची । अन्यथा पुत्रात् प्रमोदो जायते अत्र न स्यादित्यभिप्रेत्याह । प्रकृतिर्हेतुरिति ।

---

१. After it—माता मां मा द्राक्षीदिति $D_3$. २. विधिपूर्वकं विद्याग्रहणमुपयोगः C, $B_2$; उपयोगो विद्यास्वीकारः $B_1$; $D_1$, $D_2$, $Dc_1$, $Bc_3$, $D_3$, $D_4$ drop from उपयोगो to °ग्रहणम्; नियमपूर्वको विद्यास्वीकार उपयोगः । विद्यास्वीकारे तस्मिन्नुपयोगे आख्याता &c. $D_5$. ३. तस्मिन् साध्ये $B_1$. ४. °स्वीकरणे C. ५. C, $B_2$ have after it—उपयोगे किम् । गायनस्य शृणोति । नटस्य गाथां शृणोति $D_5$. ६. जायमानप्रकृति° $Bc_3$. ७. $D_1$, $D_2$ drop it. ८. जायन्ते $B_2$, $Dc_1$. ९. °स्वीकारोत्र $Nc_1$.

**भुवः प्रभवः ॥१।४।३१॥**

भवनं भूः । भूकर्तुः प्रभवस्तथा ॥ हिमवतो गङ्गा प्रभवति । प्रथमं दृश्यत इत्यर्थः ।

ल्यब्लोपे कर्मण्यधिकरणे च[1] पञ्चमी वाच्या* ॥ प्रासादात्[2] प्रेक्षते[3] । आसनात् प्रेक्षते । प्रासादमारुह्य[4] आसने उपविश्य[5] प्रेक्षत[6] इत्यर्थः ।

प्रश्नाख्यानयोश्च* ॥ कस्मात्त्वम् । नद्याः ।

---

**भुवः** । **भवनं भूरिति** । संपदादित्वात् क्विप् । ननु हिमवत इत्यत्र पूर्वेणैव सिद्धम् । यतोऽत्रायमर्थो हिमवतो गङ्गा जायत इति तद् व्यर्थमेतदित्याशङ्क्याह । **प्रथमं दृश्यत इत्यर्थ** इति । एष चार्थो धातूनामनेकार्थत्वात् । तेनात्र जन्यर्थो न । न हि हिमवान् गङ्गायाः कारणं किं तु कारणान्तरोत्पन्ना केवलं तत्र प्रथमं दृश्यते ।

**ल्यब्लोपे** इति । प्रासादात् प्रेक्षते । आसनात् प्रेक्षते इत्यत्र प्रासादमारुह्य आसने उपविश्य प्रेक्षत इति गम्यमानार्थत्वाद-प्रयुज्यमानस्यापि ल्यबन्तस्य शब्दस्य[8] संबन्धे कर्मणि द्वितीया अधिकरणे सप्तमी च प्राप्नोतीति इह पञ्चमी विधीयते ।

**प्रश्नाख्यानयोरिति** । कस्मात्त्वमित्यादौ आगच्छसीत्याद्य-विवक्षायामेतद्वक्तव्यम् । आगच्छसीत्याद्यनुमाने तु 'अपादाने' इत्येव सिद्धा[9] ।

---

१. Dropped $D_2$, $Dc_1$, $Bc_3$. २. आसनात् प्रेक्षते । प्रासादात् प्रेक्षते । $Dc_1$, $Bc_3$, $D_4$. ३. After it—प्रासादमारुह्येत्यर्थः $B_1$. ४. प्रासादमारुह्य dropped $B_1$. ५. उपविश्येत्यर्थः $B_1$. ६. वीक्षते $D_3$. ७. Dropped $Dc_1$, $Bc_3$. ८. शब्द° $Dc_1$. ९. सिद्धम् $Dc_2$.

यतश्चाध्वकालनिर्माणं तत्र पञ्चमी* ॥ तद्युक्तादध्वनः प्रथमासप्तम्यौ* ॥ कालात् सप्तमी* ॥ वनाद् ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ।

अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहि— युक्ते ॥२।३।२९॥

[1]एतैर्युक्ते पञ्चमी [2]स्यात् ॥ [3]अन्य इत्यर्थग्रहणम् । अन्यः कृष्णात् । भिन्नो रामात् । [4]आराद्वनात् । इतरो रामात् । ऋते कृष्णात् ।

---

**यतश्चेति** । यस्मादवधेरध्वनः कालस्य वा निर्माणं परिच्छेदस्तत्र पञ्चमी । तद्युक्तस्तेन युक्तो योस्त्यध्वा तस्मात् प्रथमासप्तम्यौ स्तः तद्युक्तात् कालात् सप्तमी भवतीति वक्तव्यार्थः । पञ्चमी अपादानत्वादेव सिद्धा ।

**अन्या** । **अन्य इत्यर्थग्रहणमिति** । तेन पर्याययोगेपि स्यादिति भावः । तथा चोदाहृतम् । **अन्यः कृष्णात्** । **भिन्नो रामादिति** । अथान्यो देवदत्ताद्यज्ञदत्त इत्यत्र यज्ञदत्तादपि पञ्चमी कस्मान्न । उच्यते । तद्विशिष्टमन्यत्वमेकत एवोत्पन्नया शक्यं प्रतिपादयितुमिति द्वितीयात् संबन्धिनः पञ्चमी न । **आराद्वनादिति** । आराच्छब्दो दूरान्तिकयोर्वर्तते । तत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति प्राप्ते पञ्चम्युच्यते । **इतरो रामादिति** । इतरशब्दोयं निर्दिश्यमानस्य प्रतियोगिनमाह । यथा क्वचिद् द्वौ प्रकृतौ रामश्चान्यश्च तत्रैकस्तावन्निर्दिश्यते । रामः शूर इति । तस्य निर्दिश्यमानस्य यो द्वितीयः प्रतियोगी स इतरशब्देनोच्यते । इतरो रामात् कातर इति । अतोन्यार्थादन्यः । **ऋते कृष्णादिति** । ऋते इत्यव्ययं वर्जने ।

---

१. एतैर्युक्तैः C. २. P, $D_1$, $B_2$, $Dc_1$, $Bc_3$ drop it. ३. $B_1$ drops अन्य इत्यर्थग्रहणम्. ४. $B_1$ drops आराद्वनात्; आराद्ग्रामात् $D_2$, $Dc_1$; आराद्ग्रामात् $Bc_3$, $D_4$.

दिक्[1]शब्दाः । पूर्वो ग्रामात् ।[2]अयमस्मात् पूर्वः । अञ्चूत्तरपदात्[3] । प्राक् ग्रामात् । आच् । दक्षिणा ग्रामात् ।[4]आहि । दक्षिणाहि ग्रामात् । आरभ्यार्थयोगेपीति केचित् । [5]भवादारभ्य भवात् प्रभृति सेव्यो हरिः ॥ बहिर्योगे च ॥ [6]ग्रामाद्बहिः ।

---

दिक्शब्दा इति । शब्दग्रहणात् दिशि दृष्टाः शब्दा दिक्शब्दाः । तेन यद्यपि संप्रति दिक्शब्दो देशे काले च वर्तते सोपि दिशि दृष्टः शब्द इति तद्योगे पञ्चमी स्यादिति चेतसि कृत्वा देशवर्तिना योगे उदाहृतं **पूर्वो ग्रामादिति** । कालवर्तिना च **अयमस्मात्पूर्व** इत्युदाहृतम् । दिग्वर्तिना तु योगे इयमस्याः पूर्वेत्युदाहरणं ज्ञेयम् । **प्राग् ग्रामादिति** । प्रपूर्वादञ्चतेः क्विनि तदन्तात् 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इत्यस्तातिः । तस्य '[7]अञ्चेर्लुक्' इति लुकि कृते प्रागिति उदाहरणम् । एवं चेत् दिक्शब्देत्येव सिद्धे किमर्थं पृथग्ग्रहणम् । अतसर्थषष्ठीबाधनार्थमिति ब्रूमः । **आच्** इति । 'दक्षिणादाच्' इति विहित आच्प्रत्ययः । आहीति 'आहि च दूरे' 'उत्तराच्च' इति विहित आहिः । **आरभ्येति** । आङ्पूर्वस्य रभेर्ल्यपि रूपम् । प्रभृत्यर्थयोग इति यावत् । तथा हि **कालिदासेन** प्र[8]युक्तम् ।

'असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि' । इति । तथा **मुग्धबोधे**प्युक्तम् । 'अन्यारभ्यार्थारात्—' इत्यादि । **बहिर्योगे चेति** । तथा च **महाभाष्ये** । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यत्रोक्तम् । 'इदं तर्हि प्रयोजनं बहिःशब्देन योगे पञ्चमी न विधीयते तत्रापि यथा स्यात्' इति । तथा 'कथमिवैतत् सिध्यति । पञ्चमीग्रहणसामर्थ्यात्' इति चोक्तम् ।

---

१. दिग्वाचकशब्दात् $B_1$; दिक्शब्दात् C, $D_4$, $D_5$, $B_2$. २. अयमस्मात् पूर्वः dropped $B_1$. ३. °पदः P, $D_1$; °पदाः $Dc_1$, $Bc_3$; °पदे $D_2$, $D_3$. ४. From आहि to ग्रामात् dropped $B_1$. ५. भवादारभ्य शुचिः । अर्थग्रहणात् भवात् । $B_1$. ६. बहिर्ग्रामात् $B_1$, $D_2$. ७. अञ्चतेर्लुक् $Dc_1$, $Dc_2$, $Bc_3$. ८. उक्तम् $Dc_1$, $Bc_3$.

**अपपरी वर्जने ॥१।४।८८॥**

एतौ वर्जने कर्मप्रवचनीयौ[1] स्तः ॥

**आङ् मर्यादावचने ॥१।४।८९॥**

आङ् मर्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिविधावपि[2] ॥

---

**अप** । प्रकृतेन संबन्धिना कस्यचिदसंबन्धो वर्जनम् । वर्जने किम् । ओदनं परिषिञ्चति । कर्मप्रवचनीयत्वाभावात् उपसर्गत्वेन 'उपसर्गात् सुनोति--' इति षत्वम् ।

**आङ्** । मर्यादा अवधिः । अत्राभिविधिग्रहणाभावादभिविधौ वर्तमानस्य आङः कर्मप्रवचनीयता नेति भ्रमं निराचिकीर्षुराह । **वचनग्रहणादिति** । वचनग्रहणे हि सति मर्यादेत्येतद्वचनं यस्मिन् सूत्रे तन्मर्यादावचनम् । 'आङ् मर्यादाभिविध्योः' इति सूत्रम् । तत्र सूत्रे उपात्त आङ् कर्मप्रवचनीयः स्यात् । तत्र च आङ् मर्यादाभिविध्योर्वर्तमान उपात्त इत्युभयत्रापि सिध्यति । अथवाभिविधिर्मर्यादाविशेष एव । तथा हि या मर्यादा कार्यसंबन्धा[3] साभिविधिरुच्यते । या तु कार्यासंबद्धा[4] सा मर्यादेति । एवं स्थिते वचनग्रहणाद्विशेषो नाश्रीयते । तेन मर्यादोक्तिमात्रे स्यात् । अन्यथा वचनग्रहणं व्यर्थं स्यात् । यदि मर्यादाविशेष एवाभिविधिस्तर्हि 'आङ् मर्यादाभिविध्योः' इत्यादावभिविधिग्रहणं व्यर्थम् । न व्यर्थम् । मर्यादासामान्यस्य प्रपञ्चार्थम् ।

---

१. °प्रवचनीयसंज्ञौ C. २. Dropped in $B_1$, $D_2$, $Dc_1$, $D_3$, $Bc_3$.
३. °महाद° $Dc_1$. ४. °संबद्धा $Dc_2$, $Dc_3$.

**पञ्चम्यपाङ्परिभिः ॥२।३।१०॥**

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्॥ अप हरेः परि हरेः[1] संसारः। परिरत्र वर्जने। लक्षणादौ तु। हरिं परि। आ मुक्तेः संसारः। आ सकलाद्ब्रह्म।

**प्रतिः प्रतिनिधिप्रतिदानयोः॥१।४।९२॥**

एतयोरर्थयोः[2] प्रतिः कर्मप्रवचनीयः स्यात्॥

**प्रतिनिधिप्रतिदाने च यस्मात्॥२।३।११॥**

यस्मात् प्रतिनिधिप्रतिदाने स्तस्तत्र[3] कर्मप्रवचनीययुक्ते पञ्चमी स्यात्॥ प्रद्युम्नः कृष्णात् प्रति[4]॥ तिलेभ्यः प्रतियच्छति माषान्।

---

**पञ्चमी**। अप हरेरित्यादि। हरिं वर्जयित्वा संसार इत्यर्थः। **परिरत्र वर्जने** इति। अत्र 'पञ्चम्यपाङ्परिभिः' इति सूत्रे परिर्वर्जनार्थः एव गृह्यते। न लक्षणाद्यर्थः। अपेन साहचर्यादित्यर्थः। परेर्वर्जने इत्यत्र परेर्वर्जने वावचनमिति वक्तव्याद्[6] द्विर्वचनाभावः। **आ मुक्तेरि**ति। मुक्तिं मर्यादीकृत्येत्यर्थः। **आ सकला**दिति। सकलमभिव्याप्य ब्रह्म वर्तत इत्यर्थः।

**प्रतिः**। मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्।

**प्रतिनिधिः**। **प्रद्युम्नः कृष्णात् प्रती**ति। कृष्णो मुख्यस्तत्सदृशः प्रद्युम्नः स कृष्णमनुकरोति। अत्रानुकार्यानुकरणभावः संबन्धः प्रतिना द्योत्यते। **तिलेभ्य** इत्यादि। अत्रोत्तमर्णाधमर्णभावलक्षणसंबन्धः प्रतिना द्योत्यते। तिलान् गृहीत्वा माषान् ददातीति यावत्।

---

१. $D_1$ drops परि हरेः. २. एतयोरर्थे $D_1$; अनयोरर्थे $Dc_1$, $D_4$. ३. स्तः dropped $D_2$. ४. प्रतिनिधिः $B_2$. ५. Dropped $Bc_3$. ६. वक्तव्यं $Nc_1$.

## अकर्तर्यृणे पञ्चमी ॥२।३।२४॥

ऋणाद्धेतोरकर्तृत्वेन विवक्षितात् पञ्चमी स्यात् ॥ शताद्बद्धः । [1]अकर्तरि किम् । शतेन [2]बन्धितः[3] ।

## विभाषा गुणेऽस्त्रियाम् ॥२।३।२५॥

[4]गुणे हेतावस्त्रीलिङ्गे वा पञ्चमीतृतीये स्तः । [5]जाड्येन जाड्याद्वा बद्धः । [6]गुणे किम् । धनेन कुलम् । [7]अस्त्री किम् । बुद्ध्या [8]मुक्तः ।

---

अकर्तरि । तृतीयापवादो योगः । ऋणादित्यादि । ऋणे यो हेतुरकर्तृत्वेन विवक्षितस्तस्मादित्यर्थः । अकर्तरि किम् । शतेन बन्धितः । शतमत्र ऋणं भवति किं तु प्रयोजककर्ता ।

विभाषा । धनेन कुलमिति । धनं द्रव्यं न गुणः । द्रव्याश्रितो हि गुणो न तु द्रव्यमेव । धूमाद्वह्निः । उपलब्धेः । पट इत्यादौ तु विभाषेति योगविभागात् पञ्चमी । योगविभागादिष्ट-सिद्धिरिति धनेन कुलमित्यादौ न । अथवा धूमादिकमुपलभ्याग्न्यादिकं जानातीति ल्यब्लोपे पञ्चमी ।

---

१. अकर्तरीति C, D₂; D₁, D₃, Com. drop from अकर्तरि to बन्धितः. २. बद्धः D₄, D₅, Bc₃. ३. After it—अत्र प्रयोजकत्वात् कर्तृसंज्ञा B₂, D₄. ४. गुणहेता° C. ५. जाड्याद्बद्धो जाड्येन वा C; जाड्याज्जाड्येन वा D₁, D₂, D₄, B₂. ६. गुण इति किम् C. ७. अस्त्रीति किम् C; अस्त्रियां किम् D₅. ८. युक्तः D₃; after it—योगविभागात् धूमादग्निः C, B₂. ९. Dropped Dc₃.

**पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ॥२।३।३२॥**

एभिर्योगे तृतीया वा[1] स्यात् पक्षे पञ्चमीद्वितीये ॥ पृथग्[2] रामेण रामाद्रामं वा इत्यादि ।

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥२।३।३३॥**

एभ्यो द्रव्यवचनेभ्यः[3] करणे[4] तृतीयापञ्चम्यौ स्तः ॥ स्तोकेन[5] मुक्तः[6] । स्तोकान्मुक्तः[7] ।

असत्त्वे[8] किम् । स्तोकेन विषेण हतः ।

---

पृथक् । सर्व इमे पृथगादयो सहार्थे वर्तन्ते । भेदेन तूपादानं पर्यायान्तरनिवृत्त्यर्थम् । तेन हिरुक् देवदत्तस्येत्यादौ न । मण्डूकप्लुत्या पञ्चम्यनुवर्तते । 'पृथग्विनानानाभिः' इति योगविभागात् पक्षे द्वितीया चेत्यभिप्रेत्याह । **पक्षे पञ्चमीद्वितीये** इति ।

**करणे** । अत्र करणे तृतीयासिद्धौ पक्षे पञ्चमी विधीयते । यद्योगाद् द्रव्यं स्तोकादिव्यपदेशं प्राप्नोति स गुणो यदा स्तोकादिशब्दैरभिधीयते तदैषामद्रव्यवचनता । यदा तु[9] सोयमित्यभिसंबन्धादभेदेन द्रव्यमाहुस्तदैषां द्रव्यवाचित्वम् । करणे[10] किम् । क्रियाविशेषणे कर्मणि मा भूत् । स्तोकं पचति । सर्वत्र हि क्रिया साध्यत्वात् कर्मेति तद्विशेषणमपि कर्म भवति । तच्चाद्रव्यं क्रियायाः । अद्रव्यत्वेन तद्विशेषणस्याप्यद्रव्यत्वात्[11] । स्तोकादीनामेकार्थत्वेपि भेदेनोपादानं पर्यायान्तरनिवृत्त्यर्थम् । तेनेह न । मात्रया मुक्त इति ।

---

१. Dropped $D_2$, $Dc_1$, $Bc_3$. २. पृथग् ग्रामाद्ग्रामेण ग्रामं वा C. ३. °वाचिभ्यः C. ४. करणेर्थे $B_1$. ५. Before it C has—यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यं तदा स्तोकादीनामसत्त्ववचनता ।. ६. स्तोकाद्वा मुक्तः $B_1$. ७. After it—इत्यादि $D_2$, $D_3$, $D_4$, $D_5$. ८. Before it—स्तोकादीनामेकार्थत्वेपि भेदेनोपादानं पर्यायान्तरनिवृत्त्यर्थम् । तेनेह न । मात्रया मुक्तः । करणे इति किम् । स्तोकं पचति । $B_2$; इति किम् C, $D_1$, $Dc_1$. ९. तु dropped $Dc_2$, $Dc_4$. १०. द्रव्ये $Bc_3$. ११. तद्विशेषस्यापि $Bc_3$.

## दूरान्तिकार्थेभ्यो द्वितीया च ॥२।३।३५॥

एभ्योसत्त्वर्थेभ्यः प्रातिपदिकार्थे द्वितीयापञ्चमीतृत्तीयाः स्युः[1] । ग्रामस्य[2] दूरं दूरात् दूरेण वा वसति ।

## षष्ठी शेषे ॥२।३।५०॥

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः ।

---

दूरा । द्वितीया साक्षादुच्यते । पञ्चम्यनुवर्तते । तृतीया चकारेण समुच्चीयत इति चेतसि कृत्वाह । **द्वितीयापञ्चमी-तृतीयाः स्युरिति** । सत्त्ववाचिभ्यस्तु यथायथं विभक्तयः स्युः । दूरः पन्थाः । दूराय पथे देहि । दूरस्य पथः स्वम् ।

इति निरूपिता पञ्चमी ॥

शेषः । प्रकृतादन्यं शेषशब्दो वदन् प्रकृतेभ्यः कारक-प्रातिपदिकार्थेभ्योन्यं तस्येदं भावरूपं संबन्धमाहेत्याह । **कारकेत्यादि** । **स्वस्वामिसंबन्धादिरिति** । संबन्ध इति शेषः । आदिनावयवावयवि-भावादेर्ग्रहणम् । तथोक्तं **भर्तृहरिणा** प्रकीर्णकाण्डे ।

'संबन्धः कारकेभ्योन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां च क्रियायां सोभिधीयते' ॥ इति ।

---

१. वा स्युः Bc3. २. ग्रामस्य दूरं ग्रामस्यान्तिकं दूरात् दूरेण वा । P, D1, D5, Bc3; ग्रामस्यान्तिकमन्तिकेनान्तिकाद्वा दूरं दूरात् दूरेण वा B2, D4; ग्रामस्यान्तिकं दूरं दूरात् दूरेण वा । D2, D3; ग्रामस्य दूरम् । ग्रामस्यान्तिकम् । दूरात् दूरेण वा । Dc1.

तत्र[1] षष्ठी स्यात् । यद्वाप्रधानं शेषस्तेन द्वयोः[2] पर्यायेण वा न स्यात् ॥

तत्र श्रुतायां क्रियायां माषाणामश्नीयादित्यादि । अश्रुतायां तु राज्ञः पुरुष इत्यादि । तत्र संबन्धस्य द्विष्ठत्वादुभयोरपि अपर्यायेण पर्यायेण वा षष्ठी स्यादित्याशङ्क्याह । यद्वाप्रधानं शेष इति । अथवा अप्रधानं शेषशब्देनोच्यत इत्यर्थः । अप्रधानस्य शेषत्वं परार्थत्वात् । एवं ह्यभियुक्ता वदन्ति । परार्थः शेष इति । फलमाह । तेनेत्यादि । तेन कारणेन द्वयोरप्यपर्यायेण पर्यायेण वा षष्ठी न भवति[3] । अप्रधानस्यैव शेषत्वेन तत एव षष्ठ्या उत्पत्स्यमानत्वादिति[4] भावः । तथा च काशिकायां वृत्तावुक्तम् । 'शेषे संबन्धे यदप्रधानं तच्छेषशब्देनोच्यते । तेनोभयत्र पर्यायेण वा न भवति षष्ठी[5]' । तथा न्यासकारेणोक्तम् । 'एकस्मादप्युत्पद्यमाना षष्ठी विशेषणादेव भवति । विशेष्यात्तु प्रथमैव । यस्माच्छेषशब्दो यथा प्रकृतादन्यमाचष्टे तथा परार्थमपि' इति । तथा भर्तृहरिणा[6] प्रकीर्णकाण्डे उक्तम् ।

'द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते' ॥ इति ।

तथा कैय्यटेनापि[7] भाष्यदीपे उक्तम् । 'संबन्धो गुणपदं तस्य द्विष्ठत्वात् प्रधानमपि संस्पृशति' इति ।

१. अत्र $D_2$. २. पर्यायेण द्वयोः $D_1$. ३. भवतीति $Dc_4$. ४. उत्पद्यमानत्वा° $Nc_1$. ५. षष्ठीति $Bc_1$, $Dc_4$. ६. भर्तृहरिणापि $Bc_1$, $Dc_4$, $Bc_3$, $Nc_1$. ७. अपि dropped $Bc_1$, $Nc_1$, $Bc_3$, $Dc_3$, $Dc_4$.

राज्ञः पुरुषः[1]। कर्मण्यपीति केचित्। भजे[2] शंभोश्चरणयोः।

राज्ञः पुरुष इति। अत्र राजा विशेषणत्वादप्रधानं ततः षष्ठी जाता। पुरुषस्तु विशेष्यत्वात् प्रधानमिति। ततः 'प्रातिपदिकार्थ--' इति प्रथमा। तथोक्तं[3]।

'परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम्।
विशेष्यं तु प्रधानं स्यात् स्वार्थस्यैव प्रकाशनात्॥
भेद्यभेदकयोः श्लिष्टिः संबन्धोन्योन्यमुच्यते।
द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात्'॥ इति।

यदा तु पुरुषो विशेषणं स्यात् तदा पुरुषस्य राजेति स्यात्। यदा तु द्वावप्यप्रधानत्वेन विवक्ष्येते तदा द्वयोरपि षष्ठी। राज्ञः पुरुषस्य वस्त्रमिति। शेषग्रहणं किम्। 'कर्मणि द्वितीया' इत्यादौ प्रत्ययनियमोर्थनियमश्चेति द्वौ पक्षौ। तत्र प्रत्ययनियमपक्षे यदि शेषे इति नोच्येत[4] कर्मण्येव द्वितीयेति कर्मादिरनियत इति तत्रापि षष्ठी स्यात्। अतः शेषग्रहणं शेष एव यथा स्यादन्यत्र मा भूदिति। अर्थनियमे तु शेषग्रहणं न कार्यम्। **कर्मण्यपीति। केचिदिति। कालिदासबोपदेवपण्डितादयः।** तथा च **कुमारसंभवे कालिदासेन** प्रयुक्तम्[5]।

'न केवलं यो महतां विभाषते शृणोति तस्मादपि यः स पापभाक्।' इति।

तथा **बोपदेवपण्डितैर्मुग्धबोधे** उक्तम्[6]। 'समर्थैर्नार्यस्तस्ताद्धित-[7] सुखैर्निधारे संबन्धे ढे च षी'। इति। तथोदाहृतं च तैः। 'वर्यस्य[8] पदयोर्भजे' इति। पाणिनीयानां तु मते कर्माविवक्षया[9]

१. नराणामधिपः। राज्ञः पुरुषः $B_2$. २. हरेर्भजति। कटस्य करोति $B_2$; अनुकरोति भगवतो नारायणस्य $D_3$; ग्रामस्य गच्छति। भजे शंभोश्चरणयोः। माषाणामश्नीयात्। $D_4$. ३. तथा चोक्तम् $Dc_4$. ४. नोच्यते $Dc_1$, $Bc_3$. ५. तथा कुमारसंभवेपि $Dc_1$, $Bc_3$. ६. उक्तम् $Dc_4$. ७. समानार्थै° $Bc_3$. ८. सर्वस्य $Dc_3$. ९. °क्षायां $Bc_3$, $Dc_3$, $Dc_4$.

**षष्ठी हेतुप्रयोगे ॥२।३।२६॥**

हेतुशब्दप्रयोगे[1] हेतौ द्योत्ये[2] षष्ठी स्यात् ॥ अन्नस्य हेतोर्वसति ।

**सर्वनाम्नस्तृतीया च ॥२।३।२७॥**

सर्वनाम्नो हेतुप्रयोगे तृतीया[4] स्यात् षष्ठी च ॥ कस्य हेतोः । केन हेतुना इत्यादि ।

सर्वनामप्रयोगे[5] निमित्तकारणहेत्वर्थेषु सर्वासामिष्टिः । किं निमित्तं केन निमित्तेनेत्यादि । एवं किं कारणं

---

संबन्धविवक्षयैतत् सिध्यति । एतदेवाभिप्रेत्य हरिणोक्तं 'श्रुतायाम्' इति । तथा **पाणिनीयमतदर्पणे कविदर्पणेनोक्तम्** । श्रुतायां यथा । माषाणामश्नीयात् । सुभाषितस्य शिक्षते । न ते सुखस्य जानन्ति । अन्नस्य नो देहि । अक्ष्णोर्दीव्यति । घ्नतः पृष्ठं ददाति । नटस्य शृणोति । वृक्षस्य पत्रं पतति । महतां विभाषते इति । अनुदरा कन्येति वत्सतामपि कर्मादीनामविवक्षयात्र शेषत्वमिति ।

**षष्ठी** । हेतुरिति हेतुशब्दो गृह्यते प्रयोगस्य शब्दधर्मत्वादित्यभिप्रेत्याह । **हेतुशब्दप्रयोग** इति । ननु चान्नस्येत्यत्र शेषविवक्षयैव षष्ठी स्यात् तत्सामानाधिकरण्याच्च हेतुशब्दात् । सत्यम् । सैव शेषविवक्षानेन द्योत्यते मन्दधियोनुग्रहीतुम् । हेतुतृतीयापवादो वा योगः ।

**सर्व** । **सर्वनामेत्यादि** । **निमत्तकारणेत्यादि** । पर्यायग्रहणम् । अथ निमित्तवाचिनां शब्दान्तराणामुपलक्षणार्थमित्यभिप्रेत्योदाहृतम् ।

---

१. शब्द dropped $D_2$. २. योगे $Bc_3$. ३. After it—च $B_1$, $B_2$.
४. तृतीया वा स्यात् $B_1$; तृतीया षष्ठी च स्यात् $B_2$. ५. °योग $Bc_3$, $D_4$.

राज्ञः पुरुषः। कर्मण्यपीति केचित्। भजे शंभोश्चरणयोः ।

राज्ञः पुरुष इति। अत्र राजा विशेषणत्वादप्रधानं ततः षष्ठी जाता। पुरुषस्तु विशेष्यत्वात् प्रधानमिति। ततः 'प्रातिपदिकार्थ--' इति प्रथमा। तथोक्तं[3]।

'परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम्।
विशेष्यं तु प्रधानं स्यात् स्वार्थस्यैव प्रकाशनात्॥
भेद्यभेदकयोः श्लिष्टिः संबन्धोन्योन्यमुच्यते।
द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात्'॥ इति।

यदा तु पुरुषो विशेषणं स्यात् तदा पुरुषस्य राजेति स्यात्। यदा तु द्वावप्यप्रधानत्वेन विवक्ष्येते तदा द्वयोरपि षष्ठी। राज्ञः पुरुषस्य वस्त्रमिति। शेषग्रहणं किम्। 'कर्मणि द्वितीया' इत्यादौ प्रत्ययनियमोर्थनियमश्चेति द्वौ पक्षौ। तत्र प्रत्ययनियमपक्षे यदि शेषे इति नोच्येत[4] कर्मण्येव द्वितीयेति कर्मादिरनियत इति तत्रापि षष्ठी स्यात्। अतः शेषग्रहणं शेष एव यथा स्यादन्यत्र मा भूदिति। अर्थनियमे तु शेषग्रहणं न कार्यम्। कर्मण्यपीति। केचिदिति। कालिदासबोपदेवपण्डितादयः। तथा च[5] कुमारसंभवे कालिदासेन प्रयुक्तम्[6]।

'न केवलं यो महतां विभाषते शृणोति तस्मादपि यः स पापभाक्।' इति।

तथा बोपदेवपण्डितैर्मुग्धबोधे उक्तम्। 'समार्थैर्नार्यस्तस्ताद्धित-[7] सुखैर्निर्धारे संबन्धे ढे च षी'। इति। तथोदाहृतं च तैः। 'वर्यस्य[8] पदयोर्भजे' इति। पाणिनीयानां तु मते कर्माविवक्षया[9]

१. नराणामधिपः। राज्ञः पुरुषः $B_2$. २. हरेर्भजति। कटस्य करोति $B_2$; अनुकरोति भगवतो नारायणस्य $D_3$; ग्रामस्य गच्छति। भजे शंभोश्चरणयोः। माषाणामश्नीयात्। $D_4$. ३. तथा चोक्तम् $Dc_4$. ४. नोच्यते $Dc_1$, $Bc_3$. ५. तथा कुमारसंभवेपि $Dc_1$, $Bc_3$. ६. उक्तम् $Dc_4$. ७. समानार्थै° $Bc_3$. ८. सर्वस्य $Dc_3$. ९. °क्षायां $Bc_3$, $Dc_3$, $Dc_4$.

**षष्ठी हेतुप्रयोगे ॥२।३।२६॥**

हेतुशब्द[1]प्रयोगे[2] हेतौ द्योत्ये[3] षष्ठी स्यात् ॥ अन्नस्य हेतोर्वसति ।

**सर्वनाम्नस्तृतीया च ॥२।३।२७॥**

सर्वनाम्नो हेतुप्रयोगे तृतीया[4] स्यात् षष्ठी च ॥ कस्य हेतोः । केन हेतुना इत्यादि ।

सर्वनामप्रयोगे[5] निमित्तकारणहेत्वर्थेषु सर्वासामिष्टिः । किं निमित्तं केन निमित्तेनेत्यादि । एवं किं कारणं

---

संबन्धविवक्षयैतत् सिध्यति । एतदेवाभिप्रेत्य हरिणोक्तं 'श्रुतायाम्' इति । तथा **पाणिनीयमतदर्पणे कविदर्पणेनोक्तम्** । श्रुतायां यथा । माषाणामश्नीयात् । सुभाषितस्य शिक्षते । न ते सुखस्य जानन्ति । अन्नस्य नो देहि । अक्ष्णोर्दीव्यति । घ्नतः पृष्ठं ददाति । नटस्य शृणोति । वृक्षस्य पत्रं पतति । महतां विभाषते इति । अनुदरा कन्येति वत्सतामपि कर्मादीनामविवक्षयात्र शेषत्वमिति ।

**षष्ठी** । हेतुरिति हेतुशब्दो गृह्यते प्रयोगस्य शब्दधर्मत्वादित्यभिप्रेत्याह । **हेतुशब्दप्रयोग** इति । ननु चान्नस्येत्यत्र शेषविवक्षयैव षष्ठी स्यात् तत्सामानाधिकरण्याच्च हेतुशब्दात् । सत्यम् । सैव शेषविवक्षानेन द्योत्यते मन्दधियोनुग्रहीतुम् । हेतुतृतीयापवादो वा योगः ।

**सर्व** । **सर्वनामेत्यादि** । **निमत्तकारणेत्यादि** । पर्यायग्रहणम् । अथ निमित्तवाचिनां शब्दान्तराणामुपलक्षणार्थमित्यभिप्रेत्योदाहृतम् ।

---

१. शब्द dropped $D_2$. २. योगे $Bc_3$. ३. After it—च $B_1$, $B_2$. ४. तृतीया वा स्यात् $B_1$; तृतीया षष्ठी च स्यात् $B_2$. ५. °योग $Bc_3$, $D_4$.

किं प्रयोजनं किमर्थमित्यादि[1]। निमित्तादिप्रयोगे[2] सर्वनामाप्रयोगेपि[3] प्रातिपदिकमात्रात्[4] तृतीयादय इति केचित् । ज्ञानेन निमित्तेन हरिः सेव्यः ।

**षष्ठ्यतसर्थप्रत्ययेन ॥२।३।३०॥**

एतद्योगे षष्ठी स्यात् ॥ दक्षिणतो ग्रामस्य । पुरस्ताद्ग्रामस्य ।

---

**किं प्रयोजनमिति । निमित्तादावित्यादि । केचिदिति ।** कविदर्पणादयः । तथा चोक्तं **पाणिनीयमतदर्पणे** । प्रायग्रहणादसर्वनाम्नस्तृतीयाद्याः । धनेन हेतुना वसति । श्रुताय[5] हेतवे इत्यादि । बन्धनेन निमित्तेनेत्यादि । तथा **पदमञ्जर्यामप्युक्तम्** । भाष्यकारेण तु हेताविल्यत्र पठितत्वादसर्वनाम्नोप्येतद्विधानं मन्यन्ते । तत्र प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न भवतः । अन्येभ्यस्तु यथादर्शनं भवतः । अन्नेन कारणेन वसतीत्यादि ।

**षष्ठ्यत ।** 'दक्षिणोत्तराभ्यामतसुच्' इति । अतसर्थप्रत्यया दिक्शब्देभ्यः स्वार्थे विहितास्तदन्तानां योगे 'अन्यारादितरर्ते—' इति पञ्चम्यां प्राप्तायामिदं वचनम् । **दक्षिणतो ग्रामस्येति ।** 'दक्षिणोत्तराभ्यामतसुच्' । **पुरस्ताद्ग्रामस्येति ।** 'दिक्शब्देभ्यः—' इत्यादिनास्तातिः । 'अस्ताति च' इति पुरादेशः । एवमुत्तरतो ग्रामस्य । पुरो ग्रामस्य । उपरि ग्रामस्य । उपरिष्टाद्ग्रामस्य । ततः पश्चाद् व्रजतीति **भाष्यकारप्रयोगात्** पञ्चमी ।

---

१. C has before it—किं कार्यम्. २. निमित्तादियोगे $D_1$. ३. असर्वनामयोगेपि $Dc_1$, $Bc_3$. ४. °मात्रे $D_1$, $D_5$. ५. धनाय $Dc_3$.

**एनपा द्वितीया ॥२।३।३१॥**

एनपायोगे द्वितीया स्यात्[1] षष्ठी च ॥ दक्षिणेन[2] ग्रामं ग्रामस्य वा[3] ।

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥२।३।३४॥**

एतैर्योगे षष्ठी स्यात्[4] पक्षे पञ्चमी[5] ॥ दूरं निकटं वा[6] ग्रामस्य ग्रामाद्वा ।

**ज्ञोविदर्थस्य करणे ॥२।३।५१॥**

जानातेरज्ञानार्थस्य करणे षष्ठी स्यात्[7] ॥ सर्पिषो जानीते ।

---

**एनपा** । 'एनबन्यतरस्यामदूरे पञ्चम्याः' इति एनपं वक्ष्यति । तेन योगेन[8] पूर्वेण[9] षष्ठ्यां प्राप्तायामिदं वचनम् । एनपोप्यतसर्थत्वात् । एनपेति योगविभागः षष्ठ्यर्थं कार्यः । अन्यथा हि द्वितीययासौ बाध्येतेत्यभिप्रेत्याह । **षष्ठी चेति** ।

**दूरा** । 'पृथग्विना—' इत्यतोन्यतरस्यांग्रहणेनुवर्तमानेपि पुनरन्यतरस्यांग्रहणं पक्षे पञ्चम्यर्थम् । अन्यथा पूर्वेणान्यतरस्यांग्रहणेन पक्षे पूर्वसूत्र[10]श्रुता तृतीया स्यादित्यभिप्रेत्याह । **पक्षे पञ्चमीति** ।

**ज्ञोवि** । यद्यपि बहवो विदस्तथापि यस्यार्थे ज्ञो वृत्तिः संभवति तदर्थस्यैव निषेधे ग्रहो युक्तः । विद ज्ञाने अस्य चार्थे ज्ञो वृत्तिः संभवति ततोविदर्थस्येति ज्ञानार्थनिषेध इत्यभिप्रेत्याह । **जानातेरज्ञानार्थस्येति** । **सर्पिषो जानीत इति** ।

---

१. षष्ठी च स्यात् $B_2$. २. दक्षिणेन ग्रामस्य दक्षिणेन ग्रामं वा $Bc_3$. ३. Dropped $D_2$. ४. वा स्यात् $D_1$, $D_2$, $Bc_3$, $D_4$. ५. पञ्चमी च $Bc_3$. ६. $B_1$, $B_2$ drop it. ७. वा स्यात् $D_3$. ८. योगे $Dc_3$, $Dc_4$. ९. Dropped $Dc_1$. १०. °सूत्रे श्रुता $Dc_3$.

सर्पिषो प्रवर्तत इत्यर्थः[२] । अविदर्थस्य किम् । स्वरेण पुत्रं जानाति ।

## अधीगर्थदयेशां कर्मणि ॥२।३।५२॥

एषां कर्मणि शेषत्वेन विवक्षिते[३] षष्ठी स्यात् ॥ अधीगर्थाः स्मृत्यर्थाः । मातुरध्येति[४] । पितुः स्मरति । सर्पिषो दयते ।

---

'अकर्मकाच्च' इति ज्ञस्तङ् । सर्पिषेत्यादि । अनेकार्थत्वाद् धातूनां प्रवृत्तिरिह ज्ञोर्थः । अथवा भ्रान्त्या सर्वमुदकादिकं सर्पीरूपेण प्रतिपद्यत इति मिथ्याज्ञानं वा ज्ञोर्थः । तदपि ह्यज्ञानमेव ।

अधीगर्थ । अधीगर्था इति । अधिपूर्व इक् स्मरणे अधीक् । तदर्थो येषां ते तथा । दय दानगतिरक्षणेषु । ईश ऐश्वर्ये । कर्मणि शेषत्वेन विवक्षित इति । कर्माद्यविवक्षा शेषः । कर्मत्वेनाविवक्षिते कर्मणि केवलं संबन्धित्वेन विवक्षिते इत्यर्थः । सतोपि ह्यविवक्षा स्याद्यथानुदरा कन्येति । ननु शेषत्वविवक्षाया तु 'षष्ठी शेषे' इत्यनेनैव सिद्धा । सत्यम् । नियमार्थं प्रकरणम् । अत्र विषये षष्ठी स्यादेव । श्रूयत एव न तु लुप्यते ततश्च समासो नेत्युक्तं स्यात् । तेन प्रतिपदविधाना षष्ठी न समस्यत इति सिद्धम् । तेनेदं प्रकरणं शेषषष्ठीसमास-निषेधार्थम् । मातुः स्मरणम् । कारकषष्ठीसमासस्तु स्यादेव । मातृस्मरणम् । कः पुनर्विशेषः शेषषष्ठिसमासे कारकषष्ठीसमासे वा । अयमस्ति विशेषः । कारकषष्ठ्याः समासे सति कृत्स्वरः स्यात् ।

---

१. After it—करणभूतेन हवने $B_1$, $B_2$; $D_3$ has उपायेन; C has करणभूतेन. २. C has after it—अथवा भ्रान्त्या सर्पिर्मिथ्या जानातीत्यर्थः. ३. विवक्षितात् $Dc_1$. ४. मातुः P, $B_2$, $Dc_1$, $Bc_3$. ५. Dropped $Dc_1$, $Bc_3$, $Dc_3$, $Dc_4$. ६. त्वज्ञान° $Dc_1$, $Bc_3$. ७. Dropped $Dc_1$, $Bc_3$, $Dc_3$, $Dc_4$. ८. °षष्ठ्यां $Dc_3$.

जगतामीष्टे । शेषे[२] इत्येव । मातरं स्मरति ।

**कृञः प्रतियत्ने ॥२।३।५३॥**

गुणाधानेर्थे[३] कृञः कर्मणि षष्ठी स्यात् ॥ एधोदकस्योपकुरुते ।

**रुजार्थानां भाववचनानामज्वरेः ॥२।३।५४॥**

भावकर्तृकाणां रुजार्थानां ज्वरिवर्जितानां[४] कर्मणि षष्ठी स्यात् ॥

---

शेषषष्ठ्याः[५] समासे समासान्तोदात्तत्वमिति । **मातरं स्मरतीति** । अत्र कर्मणः कर्मत्वेन विवक्षितत्वात् संबन्धस्याविवक्षितत्वान्न षष्ठी । कर्मणीति किम् । मातुर्गुणैः स्मरति । कर्मग्रहणाद् गुणानां करणभूतानां शेषविवक्षायामपि तेभ्यः षष्ठी न ।

कृञः । सतो गुणान्तराधानं प्रतियत्नः । अत एवाह । **गुणाधानेर्थे** इति । **एधोदकस्योपस्कुरुत** इति । 'जातिरप्राणिनाम्' इत्येकवद्भावः । 'गन्धना—'[६] इति सूत्रेण तङ् । 'उपात् प्रतियत्ने' इति सुट् । कृञः किम् । एधोदकमीक्षते । प्रतियत्ने किम् । कटं करोति । शेषत्वेन विवक्षिते इत्येव । एधोदकमुपस्कुरुते । कर्मणीत्येव । एधोदकस्योपस्कुरुते । प्रज्ञया ।

**रुजा** । सर्वे रुजार्था धातवो भाववचना एवेति भाववचनग्रहणसामर्थ्यान्नात्र धातुवाच्यो भावो विवक्षितः किं तु घञादिप्रत्ययवाच्यः । वक्तीति वचनः । कर्तरि ल्युट् । भावो वचनो येषां ते तथा । रुजर्थानां भावस्य वचनक्रियाकर्तृत्वं न संभवतीति सामर्थ्यात् वचनशब्देन प्रकृत्यर्थं परित्यज्य प्रत्ययार्थमात्रं कर्तृत्वं विवक्षितमिति ज्ञायते[७] ततश्च भावकर्तृका इत्यर्थः सिद्ध इत्यभिप्रेत्याह । **भावकर्तृकाणामिति** । सूत्रे भावकर्तृकाणामिति वाच्ये भाववचनानामिति वैचित्र्यार्थमुक्तम् । **रुजार्थानामिति** ।

---

१. शेषमित्येव $D_2$. २. Before it—सतो गुणान्तराधानं प्रतियत्नः । $Bc_3$. ३. भावकर्तृणां $B_1$. ४. ज्वर° $D_2$. ५. शेषषष्ठ्यास्तु समासान्तो° $Dc_3$; शेषषष्ठ्यास्तु समासे $Dc_4$. ६. गन्धनादिसूत्रेण $Dc_4$, $Bc_1$, $Nc_1$, $Bc_3$. ७. विज्ञायते $Dc_3$.

चौरस्य रुजाति रोगः । भावेति[1] किम् । नदी कूलं रुजाति । अज्वरिसंताप्योर्वाच्यम्[2] * ।। चौरं ज्वरयति संतापयति[3] । [4]शेषे एव । चौरं रुजति[5] ।

**आशिषि नाथः ।।२।३।५५।।**

नाथतेः कर्मणि षष्ठी स्यादाशिषि[6] ।। सर्पिषो नाथते[7] । आशिषि किम् । बटुं नाथाति । याचते इत्यर्थः ।

---

रुजाशब्दस्य भिदादिपाठात् केचित् साधुत्वं वदन्ति । केचित्त्वस्मादेव निपातनात्[9] । रुजा अर्थो येषां[10] ते रुजार्थाः । तेषाम् । चौरस्येत्यादि । अत्र रोगो भावः कर्ता । नदी कूलं रुजतीति । अत्र नदी द्रव्यं कर्त्रीति न भावकर्तृको रुजिः । ननु त्र रूढ्या रुजाशब्दो व्याधिमेवाह । भङ्गवाची चात्र रुजिः । एवं तर्हि प्रत्युदाहरणदिगियं प्रदर्शिता[11] । इदं त्वत्र प्रत्युदाहरणम् । श्लेष्मा पुरुषं रुजतीति । चौरं ज्वरयति संतापयति वेति[12] । रोग इति शेषः । ज्वर रोगे । घटादिः[13] । रुजार्थानां किम् । एति जीवन्तमानन्दो नरं वर्षशतादपि । शेष इत्येवेति । शेषे इत्यस्यानुवृत्तिं प्रति शङ्का न कार्येत्यर्थः । चौरं रुजतीत्यत्र कर्मणो विवक्षितत्वान्न षष्ठी ।

**आशिषि** । नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु । **सर्पिषो नाथत** इति । सर्पिर्मे भूयादित्याशास्ते इत्यर्थः[14] । 'आशिषि नाथः' इत्युपसंख्यानात्तङ् ।

---

१. भावे $B_1$. २. $B_1$ has इति before वाच्यम्; From भावे to चौरं रुजति dropped $D_2$. ३. C, $D_1$, $B_2$, $Dc_1$ have वा after it. ४. शेषे इत्येव $B_1$, $D_4$, Com. ५. After it—रोगः $D_5$. ६. °दाशिषि गम्यायाम् $B_2$. ७. After it—सर्पिर्मे भूयादित्यर्थः $B_1$. ८. नाथयति $D_2$, $D_5$. ९. निर्वचनात् $Nc_1$. १०. विद्यते येषां ते $Nc_1$. ११. दर्शिता $Dc_4$, $Dc_3$, $Dc_2$, $Bc_1$. १२. वेति dropped $Dc_1$, $Bc_3$. १३. इति घटादिः $Dc_1$, $Bc_3$. १४. Dropped $Dc_1$, $Bc_1$, $Bc_3$.

जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥२।३।५६॥

एषां[1] हिंसार्थानां कर्मणि षष्ठी[2] ॥ चौरस्योज्जासयति[3] । निप्रौ संहतौ[4] व्यस्तौ वा । चौरस्य निप्रहन्ति प्रणिहन्ति[5] निहन्ति वा । चौरस्योन्नाटयति क्राथयति[7] पिनष्टि । हिंसायां किम् । धानाः पिनष्टि । शेषे एव । चौरं निहन्ति ।

व्यवहृपणोः समर्थयोः ॥२।३।५७॥

एतयोर्द्यूतव्यवहारे समर्थयोः[9] कर्मणि षष्ठी स्यात्[10] ॥ शतस्य व्यवहरते[11] पणते वा । समर्थयोः[12] किम् ।

---

जासि । जसु हिंसायां ताडने चेति चुरादिः[13] । न जसु मोक्षणे इति दिवादिः । निप्रपूर्वो हन्तिः । नटक्रथौ चुरादी हिंसार्थौ । जासीति विकृतनिर्देशो यत्रास्यैतद्रूपं तत्र यथा स्यादिह मा भूत् । दस्युमजीजसत् । नटेरपि विकृतनिर्देशात् दस्युमनीनटत् इत्यत्र न षष्ठी । क्रथेस्तु विकृतनिर्देशो दस्युम-चिक्रथदित्यत्र षष्ठ्यभावार्थे । घटादित्वेऽपि क्राथयतीत्यादौ निपाताद् वृद्ध्यर्थश्च । धानाः पिनष्टीति । अत्र हिंसा नास्तीति । तस्याः प्राणिधर्मत्वात् । एषां किम् । चौरं हन्ति । अभावकर्तृकार्थं वचनम् ।

व्यवहृपणोः । व्यवपूर्वो हृञ् हरणे । पण व्यवहारे स्तुतौ च । शतस्य व्यवहरते पणते वेति । शतं क्रयविक्रयेण विनियुङ्क्ते । दीव्यतीत्यर्थः । पणते इत्यत्रास्तुत्यर्थत्वान्नायः ।

---

१. हिंसार्थानामेषां $B_1$. २. After it—स्यात् $D_1$, $D_2$, $B_1$, C. ३. °ज्जासयते C. ४. विपर्यस्तौ वाच्यौ $D_1$, $D_3$; विपर्यस्तौ $B_2$; व्यस्तौ विपर्यस्तौ वा । $Bc_3$, $D_5$ ; विपर्यस्तौ च $D_4$. ५. निहन्ति प्रहन्ति प्रणिहन्ति वा । $D_1$, $D_5$, $Dc_4$. ६. प्रहन्ति प्रणिहन्ति वा । P, $D_2$; प्रणिहन्ति निहन्ति प्रहन्ति वा C, $Dc_1$, $Bc_3$. ७. चौरस्योत्क्राथयति चौरस्य पिनष्टि । C. ८. Dropped $D_2$. ९. समानार्थयोः P, $D_1$. १०. Dropped P, $D_1$, $D_4$, $D_5$, $Dc_1$, $Bc_3$. ११. व्यवहरति P. १२. C has before it—द्यूते क्रयविक्रये च समानार्थत्वमनयोः ।. १३. चौरादिः $Bc_3$.

शलाकां[1] व्यवहरति । विक्षिपतीत्यर्थः[2] । ब्राह्मणं[3] पणायति । स्तौतीत्यर्थः । शेषे एव । शतं व्यवहरति[4][5] ।

**दिवस्तदर्थस्य ॥२।३।५८॥**

द्यूतार्थस्य दिवः कर्मणि षष्ठी स्यात् ॥ शतस्य दीव्यति[6] ॥

**विभाषोपसर्गे ॥२।३।५९॥**

शतस्य[7] शतं वा प्रतिदीव्यति[8] ॥

**कृत्वोर्थप्रयोगे कालेधिकरणे ॥२।३।६४॥**

कृत्वोर्थानां प्रयोगे कालवाचिनि अधिकरणे षष्ठी स्यात्[9] ॥

---

स्तुत्यर्थस्यैवायस्येष्टत्वात् । शलाकां व्यवहरतीति । गणयतीत्यर्थः । अत्र चार्थे पणिर्निवर्तत इत्यसमानार्थत्वम् । स्तौतीत्यर्थ इति । पणायतीत्यस्य । अत्र चार्थे व्यवहरतिर्निवर्तत इत्यसमर्थत्वम् ।

**दिवः** । तदर्थस्येति । व्यवहृपणसमानार्थतोच्यत इत्यभिप्रेत्याह । द्यूतार्थस्येति । द्यूतव्यवहारार्थस्येत्यर्थः । तदर्थस्य किम् । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः । योगविभाग उत्तरार्थः ।

**विभाषा** । तदर्थस्येत्येव । शलाकाः[10] प्रतिदीव्यति । क्रीडादिरत्रार्थः ।

**कृत्वोर्थे** । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति वक्ष्यति कृत्वसुचम् । तदर्थानां प्रत्ययानामित्यर्थः ।

---

१. शिलाकां $D_1$. २. प्रतिक्षिपतीत्यर्थः $B_1$; $Bc_3$ drops विक्षिपतीत्यर्थः; $D_3$ has द्यूतव्यवहारे किम् for विक्षिपतीत्यर्थः. ३. Before it—द्यूतव्यवहारे किम् $D_4$. ४. व्यवहरते $B_1$, $D_2$. ५. After it—द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः $B_2$. ६. Dropped P, $D_2$, $D_4$, $D_5$, $Dc_1$, $Bc_3$. ७. शतं शतस्य वा $D_1$; Before it C has the Vṛitti—उपसर्गे सति दिवः कर्मणि षष्ठी वा स्यात् ।; $D_1$ has उपसर्गप्रयोगे दिवः कर्मणि वा षष्ठी ।. ८. प्रदीव्यति C, $D_2$, $D_3$, $D_4$, $D_5$. ९. Dropped $Bc_3$. १०. शलाकाः is dropped in $Dc_1$, $Bc_1$, $Bc_3$.

पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नो[1] भुङ्क्ते । शेषे एव द्विरह्न्यधीते[2] ।

## कर्तृकर्मणोः कृति ॥२।३।६५॥

कृत्प्रयोगे कर्तरि कर्मणि च[3] षष्ठी स्यात्[4] । कृष्णस्य कृतिः ।

---

पञ्चकृत्वोऽह्नो भुङ्क्त इति । पञ्चवारं दिवसे भुङ्क्ते इत्यर्थः । द्विरह्नो भुङ्क्ते । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच् । शेष एवेति । अधिकरणत्वेनाविवक्षित एवाधिकरण इत्यर्थः । कृत्वोर्थग्रहणं किम् । अहनि शेते । प्रयोगग्रहणं किम् । अहनि भुङ्क्ते । अत्र प्रकरणादेर्गम्यते द्विस्त्रिर्वेति न तु प्रयुक्तम् । काले किम् । द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरणे किम् । द्विरह्ना भुङ्क्ते ।

कर्तृकर्मणोः । कृष्णस्य कृतिरिति । भावे कर्मणि वा 'स्त्रियां क्तिन्' इति क्तिन् । जगतः कर्तेति । कर्तरि तृच् । कृतपूर्वी कटमिति । पूर्वं कृतमनेन । 'सपूर्वाच्च' इतीनिः । अत्र कर्ता तद्धितेनैवोक्त इति तत्र षष्ठीप्राप्तिरेव न । कर्म तु नोक्तमित्यसति कृद्ग्रहणे[5] कटात् षष्ठी स्यात् । ननु वाक्यमेवैतन्न घटते । तथा हि कर्म निष्ठयोक्तमिति द्वितीया न स्यात् । नापि तद्धितोऽसामर्थ्यात् । तच्च सापेक्षत्वात् । तथा हि कृतशब्दः कटमपेक्षते । नैते दोषाः । धातोर्ह्युत्पन्ना निष्ठा कर्मसामान्यमेवाभिधातुं समर्था न कर्मविशेषं कटगतम् । वाक्ये

---

१. द्विरह्नो भुङ्क्ते dropped $D_1$, $D_4$, C. २. After it—शेष इति निवृत्तम् । P, $D_4$. ३. Dropped $D_2$. ४. Dropped $D_3$, $D_4$, $B_1$, P. ५. °ग्रहे $Dc_2$.

जगतः कर्ता[1] कृष्णः । कृति[2] किम् । तद्धिते मा भूत् । कृतपूर्वी[3] कटम् । शेष इति निवृत्तम् ।

### उभयप्राप्तौ कर्मणि ॥२।३।६६॥

उभयोः[3] प्राप्तिर्यस्मिन् कृति[4] तत्र कर्मण्येव षष्ठी[5] ॥

---

तु कृत इत्यनेन सामानाधिकरण्यात् कटस्यापि[6] कर्मत्वमुच्यते। तद्धिते तूत्पन्ने[7] एकार्थीभावात् सामानाधिकरण्यं[8] निवृत्तमिति केन कटादेः कर्मत्वमुच्येत । क्रिया तु .प्रकृत्यर्थत्वाद्यथा वाक्ये गुणभूता साधन-संबन्धमनुभवति तथा वृत्तावपीति करोत्यर्थापेक्षं कटस्य कर्मत्वं घटते । तस्मात् स्यादेव द्वितीया वृत्तिसमानार्थं च वाक्यं स्यात् । न च वृत्तौ बाह्यं कटादि कर्म गम्यते तेन प्रत्यये क्रियमाणे वाक्ये कटादिकर्मापेक्षा व्यर्थेति न क्रियते । अत एवैवं विगृह्यते कृतं पूर्वमनेनेति । अतो न सापेक्षतेति स्यादेव तद्धितः । शेष इति निवृत्तमिति । कर्मणीत्यनुवर्तमानेपि पुनः कर्मग्रहणं पूर्वस्य कर्मग्रहणस्य निवृत्तिमाख्याति । तन्निवृत्तौ तत्संबद्धं शेषग्रहणमपि निवृत्तमिति भावः ।

**उभय** । पूर्वेण प्राप्ता षष्ठी नियम्यते । उभयप्राप्ताविति न तत्पुरुषः किं तु बहुव्रीहिरित्यभिप्रेत्याह । **उभयोः प्राप्ति-र्यस्मिन् कृतीति** । एकस्मिन्नेव कृति यदि कर्तरि कर्मणि च षष्ठी प्राप्नोति तर्हि कर्मण्येव षष्ठी स्यादित्यर्थः ।

---

१. Dropped D4. २. कृतीति C, Dc1. ३. उभयप्राप्ति° D1. ४. B1 drops कृति. ५. C, D1 have स्यात् after it. ६. अपि dropped Dc2. ७. त्युत्पन्ने Dc2. ८. °करण्यनिवृत्तिरिति Dc3.

चित्रं[1] गवां दोहो गोपेन[2] ।

स्त्रीप्रत्यययोरककारयोः प्रयोगे नेति वाच्यम्* ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः[3] ॥ शेषे स्त्रीप्रत्यये वा* ॥ विचित्रा जगतः कृतिर्हरेर्हरिणा वा ॥ केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येण आचार्यस्य वा ।

**क्तस्य च वर्तमाने ॥२।३।६७॥**

वर्तमानार्थक्तस्य[4] योगे षष्ठी स्यात्[5] ॥ सतां ज्ञातः[6] ।

---

**चित्रमित्यादि** । दोह इति घञ् कृत् तत्प्रयोगे गवामित्यत्र कर्मण्येव षष्ठी जाता नागोपे कर्तरि । बहुव्रीहिः किम् । आश्चर्यमिदमोदनस्य पाको विप्राणां च प्रादुर्भावः । अत्रौदनः पाकस्य कर्म विप्राः प्रादुर्भावस्य कर्तार इत्येकस्मिन् कृति नोभयोः प्राप्तिः । **स्त्रीप्रत्यययोरिति** । स्त्रियामित्यधिकारेण विहितयोरकाकारयोः प्रयोगे नियमो नेति वाच्यम् । अकः पर्यायार्हणोत्पत्तिषु ण्वुजित्यादिः । अकारोऽप्रत्ययादिति । **भेदिकेत्यादि** । रुद्रेण जगतो भेदनं भेत्तुमिच्छा वेत्यर्थः । यथाक्रमं ण्वुजकारौ[7] । **शेष इति** । अकाकारव्यतिरिक्ते । **केचिदिति** । तथा[8] **काशिकाकारेणैतदेव** पठितम् । **केचिदविशेषेणेत्यादि** ।

**क्तस्य** । 'न लोक—' इति षष्ठीनिषेधापवादः । **सतां ज्ञात इति** । 'मतिबुद्धि—' इति वर्तमाने क्तः । सतामिति कर्तरि षष्ठी । शीलितो देवदत्तेनेत्यादौ यद्यपि वर्तमाने क्तो विहितस्तथाप्यत्र 'चतुर्थ्यर्थे बहुलं छन्दसि' इत्यतो बहुलग्रहणानुवृत्तेर्न षष्ठी । कान्तो हरिश्चन्द्र इव प्रजानामित्यादौ तु स्यात् । क्तस्य किम् । अन्नं पचमानः । वर्तमाने किम् ।

---

१. विचित्रं $D_2$. २. P, $D_4$ have °गोपालकेन. ३. जगतां $D_2$. ४. वर्तमानार्थस्य क्तस्य C, $B_2$, $D_2$, $D_4$, $Bc_3$. ५. $B_1$ drops it. ६. मतः P, $D_4$. ७. °लकारौ $Dc_3$. ८. यथा $Dc_1$, $Bc_3$.

नपुंसके भावे क्तस्य योगे शेषविवक्षायां वा ॥ सतां [1]गतम् । [2]कर्तृत्वे तु सद्भिर्गतम् ॥

**अधिकरणवाचिनश्च ॥२।३।६८॥**

[3]क्तस्य योगे षष्ठी[4] ॥ इदमेषामासितम्[5] ॥

**न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥२।३।६९॥**

[6]एषां प्रयोगे [7]न षष्ठी[8] ॥ [9]लादेशाः । कुर्वन् कुर्वाणः चकृवान्

---

ग्रामं गतः । नपुंसके भाव उपसंख्यानमित्युपसंख्यानम् । शेषविज्ञानात् सिद्धमित्युपसंख्यानप्रत्याख्यानं चार्थतः पठति । **नपुंसक** इत्यादि । नपुंसके भावे यो क्तो विहितस्तस्य योगे च षष्ठी स्यात् । सा च शेषविवक्षायां कर्माद्यविवक्षायां तथा चोपसंख्यानं विना 'षष्ठी शेषे' इत्यनेनैव सिद्धेत्यर्थः । **कर्तृत्वे त्विति** । यदा कर्तृत्वं विवक्ष्यते तदा शेषाभावात् तृतीयैव स्यात् । तथा च सद्भिर्गतमिति स्यादित्यर्थः ।

**अधिकर** । **इदमेषामासितमिति** । 'क्तोधिकरणे च' इत्यधिकरणे क्तः । इदमेषां भुक्तमोदनस्येत्यत्र उभयप्राप्तौ कर्मणीति नियमो न । मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति परिभाषया ।

**न लोक** । 'कर्तृकर्मणोः कृति' इति प्राप्ता षष्ठी निषिध्यते । **कुर्वन् कुर्वाण** इति । 'लटः शतृशानचौ' इति शतृशानचौ । **चकृवानिति** । 'क्वसुश्च' इति लिटः क्वसुः । क्त्वादि ।

---

१. ज्ञातम् D2. २. साद्भिर्वा गतम् B1; कर्तृत्वेन तु D3; कर्तृत्वे साद्भिर्गतम् Bc3, कर्तृत्वे तु dropped D3. ३. C has अधिकरणवाचिनः before it; B1 has एतदर्थस्य on the margin. ४. After it—स्यात् D1, D5. ५. B1 has गतं भुक्तं वा after it. ६. एतेषां प्रयोगे षष्ठी न D2. ७. कर्तृकर्मणोः षष्ठी न स्यात् C. ८. After it—स्यात् D5. ९. लादेशाःशतृशानच्क्कसुकानच्किकिनः B2. १०. Dropped Bc3, Dc4; प्रयोगे षष्ठी Dc3.

चक्राणः चक्रि[1]र्वा सृष्टिं हरिः । उ—हरिं दिदृक्षुरलंकरिष्णुर्वा ॥
उक—दैत्यान् घातुको हरिः । कमेरनिषेधः । लक्ष्म्याः [2]कामुकः । अव्ययम् । जगत् सृष्ट्वा । सुखं कर्तुम् । निष्ठा । दैत्यान् हतवान्[3] । वि[4]ष्णुना हता दैत्याः । [5]खलर्थः । ईषत्करः प्रपञ्चो हरिणा[6] । तृन्निति [7]शतृतृकारेण तृनो नकारेण प्रत्याहारः ।

---

चक्राण इति । 'लिटः कानज्वा' इति कानच् । चक्रिरिति । 'आदृगमहनजनः किकिनौ लिट् च' इति किकिनौ । यद्यपि किकिनोरलादेशत्वेन ल इति ग्रहो नास्ति तथापि लिड्वत्त्वातिदेशेन स्यात् । विशेषातिदेशे हि नान्तरीयकः सामान्यातिदेशः । विशेषस्य सामान्येन्तर्भावात् । ल इति सामान्याश्रितो निषेधः किकिनोरपि स्यादिति युक्तं चक्रिरित्युदाहरणम् । सृष्टिमित्यत्र षष्ठी न जाता । दिदृक्षुरिति । 'सना शंसभिक्ष उः' इत्युः । अलंकरिष्णुरिति । 'अलं कृञ्—' इत्यादिना इष्णुच् । घातुक इति । 'लषपत—' इत्यादिनोकञ् । कमेरिति । कमु कान्तौ अस्मात् परस्योकञः प्रयोगे षष्ठ्या अनिषेधः । सृष्ट्वेति । 'समानकर्तृकयोः' इति क्त्वा । कर्तुमिति । 'तुमुन्ण्वुलौ' इति तुमुन् । अव्ययनिषेधे तोसुन्कसुनोरनिषेधः । सूर्यस्योदेतोः । पुराक्रूरस्य विसृपः । हतवान् । हता इति । निष्ठेति । क्तक्तवतू । ईषत्कर इति । 'ईषद्दुःसुषु—' इत्यादिना खल् । तृन्नितीति । ततः 'लटः शतृशानचौ' इत्यारभ्य 'तृन्' इति

---

१. चाक्रिवान् $D_1$. २. कामुको हरिः C, $B_2$. ३. P, $D_2$, $D_4$, $B_2$ have विष्णुः after it. ४. हरिणा $B_1$. ५. खलर्थाः $D_3$, $D_5$. ६. ईषत्पानः सोमो भवता after it in C. ७. शतृतृकारस्य तृनो नकारेण C, $B_1$, $B_2$. ८. शानच् $Bc_3$. ९. अलंकरिष्णुर्वेति $Bc_3$, Dc, $Dc_4$.

शानन्[1] । सोमं पवमानः[2] । चानश् । आत्मानं मण्डयमानः । शतृ[3] । वेदमधीयन् । तृन् । कर्ता लोकान्[4] ।

द्विषः शतुर्वा* ॥ मुरस्य मुरं वा द्विषन् ।

**अकेनोर्भविष्यदाधमर्ण्ययोः ॥२।३।७०॥**

भ[5]विष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे कर्मणि न[6] षष्ठी । स[7]तः पालकोवतराति । व्रजं गामी । सुखमृणं दायी ।

---

सूत्रपर्यन्ताः प्रत्यया गृह्यन्ते तेन शा[8]नन्चानश्शतॄणामपि निषेधः । **पवमान** इति 'पूङ्यजोः शानन्' । **मण्डयमान** इति । 'ताच्छील्यवयोवचनशक्तिषु चानश्' । **अधीयन्निति** । 'इङ्धार्योः' इति शतृ ।

**अकेनोर्भविष्य** । **भविष्यत्यकस्येति** । आधमर्ण्ये तस्यासंभवात् । **भविष्यदाधमर्ण्यार्थेन** इति । इन उभयत्रापि संभवात् । **सतः पालक** इति । 'तुमुन्ण्वुलौ' इति ण्वुल् । सतः पालयितुमवतरतीत्यर्थः । **व्रजं गमीति** । 'गमेः' इत्यौणादिक इनिः । स च 'भविष्यति गम्यादयः' इति भविष्यति । **सुखमृणं दायीति** । 'आवश्यकाधमर्ण्ययोर्णिनिः । भविष्यदाधमर्ण्ययोः किम् । यवानां लावकः । वर्तमाने ण्वुल् । अवश्यंकारी कटस्य । आवश्यके णिनि कथं वर्षशतस्य पूरकः । पुत्रपौत्राणां दर्शक इति नायं भविष्यदधिकारविहितो[10]कः । किं तु 'ण्वुल्तृचौ' इति सा[11]मान्यविहितः ।

---

१. शानच् $Bc_3$, $Dc_3$. २. देवं यजमानः after it in C. ३. शत्रुं निघ्नानः after it in C. ४. P has विष्णुः and C हरिः after it. ५. भविष्यत्वकस्य C. ६. षष्ठी न स्यात् C; षष्ठी न $D_2$. ७. Before it—ओदनं भोजको व्रजति । सतः पालको व्रजति P; जगत्पालको $D_3$; $D_4$ follows P but has सतः पालकोवतरति ।. ८. शानच् $Dc_3$. ९. After it—कर्त्तेति । 'तृन्' इति तृन् । द्विष इति । द्विषः परो यः शता तस्य प्रयोगे वा निषेध इति वाच्यम् । द्विषन्निति । द्विषोमित्र इति शत्रु । $Dc_3$, $Dc_4$. १०. °विहितः । किं तु $Bc_3$. ११. सामान्यं विहितः $Bc_1$.

## कृत्यानां कर्तरि वा ॥२।३।७१॥

कृत्यानां प्रयोगे कर्तरि वा[१] षष्ठी स्यात् ॥ मया मम वा सेव्यो हरिः। उभयप्राप्तौ कृत्ये षष्ठी न ॥ नेतव्या व्रजं गावः कृष्णेन।

## तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ २।३।७२॥

[२]तुल्यार्थैर्योगे तृतीयाषष्ठ्यौ[३] स्तः[४]॥ कृष्णस्य कृष्णेन वा [५]तुल्यः सदृशः समो वा प्रद्युम्नः। अतुलोपमाभ्यामिति[६] किम्। शेषे षष्ठ्येव। तुला उपमा वा[७] कृष्णस्य नास्ति[८]।

---

कृत्यानाम्। कर्तरि किम्। गेयो माणवकः साम्नाम्। 'भव्यगेय—' इति कर्तरि गेयो निपातितः। साम्नामिति [९]कर्मणि षष्ठी। नेतव्या इति। कर्मणि तव्यः। वक्तव्यादुभयत्र न षष्ठी।

तुल्य। शेषविषयत्वात् पक्षे षष्ठीत्यभिप्रेत्याह। तृतीयाषष्ठ्यौ स्त इति। तुल्यार्थैरित्यत्र बहुवचननिर्देशादेव स्वरूपविधेर्निरस्तत्वेऽप्यर्थ-ग्रहणं ये पदान्तरनिरपेक्षतया तुल्यतामाहुस्तत्परिग्रहार्थम्। तेन द्योतका इवादयो निवर्तिताः। गौरिव गवयः। यथा गौस्तथा गवय इति। वेत्यनुवर्तमानेऽन्यतरस्यांग्रहणमुत्तरसूत्रे चकारेण तस्यानुकर्षणार्थम्। इतरथा हि तृतीयानुकृष्येत। 'तुलां यदारोहति दन्तवाससा' इति सहार्थतृतीयेति न दोषः।

---

१. षष्ठी वा $B_1$. २. Before it—तुलोपमाव्यतिरिक्तैः $B_2$. ३. After it—वा $B_1$, $D_2$, P, C. ४. After it—तुलोपमाभ्यां न $D_1$. ५. सदृशः तुल्यः &c, $D_2$. ६. P, $D_1$, $D_2$ drop इति. ७. Dropped $Bc_3$. ८. $B_1$ has शेषे षष्ठ्येव after this; नास्त्येव $B_2$. ९. कर्मणि नित्यं षष्ठी $Dc_2$.

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ २।३।७३॥**

आयुष्यार्थादियोगे[1] चतुर्थीषष्ठ्यौ स्त आशिषि ॥ कृष्णाय कृष्णस्य वा[2] चिरं जीवितं भूयात् । एवमायुष्यादिभिः[3] ।

तृप्त्यर्थानां करणे षष्ठी वा । फलैः फलानां वा[4] तृप्तः[5] ।

---

चतुर्थी । तृतीयान्तनिर्देशेपरिसमाप्तत्वादस्य वाक्यस्य योग इत्यध्याह्रियते स च योगोर्थैरेव स्यान्न शब्दैरिति सामर्थ्यादर्थग्रहणं सिद्धमतोर्थशब्दः पृथगेव निमित्तमिति ज्ञायते । कृष्णाय इत्यादि । चिरंजीवितमायुष्यपर्यायः । एवमायुष्यादिभिरिति । कृष्णाय कृष्णस्य वा चिरमायुष्यं भूयात् । मद्रं भद्रं कुशलं सुखमर्थो हितं वा कृष्णाय कृष्णस्य वा भूयात् । एवं तत्पर्याया अप्युदाहार्याः[6] । आशिषि किम् । आयुष्यं देवदत्तस्य तपः ॥

इति निरूपिता षष्ठी ॥

---

१. आयुष्यादियोगे P; आयुष्यादिभियोंगे C. २. $B_1$, $D_3$ drop it. ३. C has after it—आशिषीति किम्-आयुष्यं देवदत्तस्य भूयात्; $D_3$ has the same after it as C, and has एवमायुष्यादिभिः after it. ४. तृप्तो वा $B_2$. ५. $B_1$ has हरिः after it. ६. अपि dropped $Dc_2$.

आधारोऽधिकरणम् ॥१।४।४५॥

क्रियाश्रययोः कर्तृकर्मणोराधारोऽधिकरणसंज्ञः स्यात् ॥

सप्तम्यधिकरणे च ॥२।३।३६॥

अधिकरणे सप्तमी स्यात् । चात् दूरान्तिकार्थेभ्यः[2] । औपश्लेषिकः सामीपिको विषयो व्याप्त इत्याधारश्चतुर्धा ।

---

आधारः । आध्रियन्ते क्रिया अस्मिन्नित्याधारः । 'अध्यायन्याय—' इत्यादिना घञन्तोऽधिकरणे निपातितः । अत्र यद्यपि 'कारके' इत्यधिकारात् तस्य च क्रियासापेक्षत्वात् क्रियाया आधारः सोऽधिकरणमिति स्थिते कर्तृकर्मणोरेवाधिकरणसंज्ञा स्यात् तयोरेव साक्षात्क्रियाधारत्वात् तदाधारस्य व्यवधानात् तथापि परत्वादनवकाशत्वाच्च कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् कर्तृकर्मणोर्न किं तु व्यवहितस्यापि तदाधारस्य भवतीति चेतसि कृत्वाह । **क्रियाश्रययोरिति** । तथोक्तं भर्तृहरिणा ।

'कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्' ॥ इति ।

गौणस्याप्याधारस्याधिकरणत्वं स्यादिति 'साधकतमं करणम्' इति तमग्रहणेन ज्ञापितं तत् तत्रैव प्रतिपादितम् ।

**सप्तमी** । **औपश्लेषिक** इत्यादि । आधाराधेययोरन्यत्र सिद्धयोः प्रादेशिकः संबन्ध उपश्लेषः । तत्र भव औपश्लेषिकः । सामीप्यं सांनिध्यं तत्र भवः सामीपिकः । विषयस्त्वनन्यत्र भावः । तत्र भवोऽप्युपचारेण विषयः । अपृथग्देशयोराधाराधेययोर्यः सकलावयवसंबन्धस्तत्र भवो व्याप्तः । एवमाधारश्चतुर्धा स्यादित्यर्थः ।

---

१. °र्थे आधारः सोऽधिकरणसंज्ञः P. २. °र्थेभ्योऽपि $B_1$. ३. वैषयिकः $D_2$, $B_1$. ४. आध्रियते $Dc_3$, $Dc_4$. ५. तथा चोक्तं $Dc_3$, $Dc_4$. ६. °भिन्याप्तः $Dc_3$.

कटे आस्ते । स्थाल्यां पचति । नद्यामास्ते । तर्के कुशलः । सर्वस्मिन् स्थितः । वनस्य दूरे अन्तिके वा ।

---

कटे आस्ते । स्थाल्यां पचत्यौपश्लेषिकस्योदाहरणे । तत्र कटे आस्ते इति क्रियाश्रयकर्त्राधार आसनक्रियाश्रयस्य देवदत्तस्य कर्तुः कटे आधार इति । स्थाल्यां पचतीति क्रियाश्रयकर्माधारो विक्लित्त्याश्रयस्यौदनस्य कर्मणः स्थाल्याधार इति । नद्यामास्ते इति सामीपिक आधारः । नदीसमीपे घोष आस्ते इत्यर्थः । नद्या सह घोषस्य संयोगाभावान्नौपश्लेषिकोयम् । नापि वैषयिको व्याप्तो वा । विषयाद्यभावात् । अतोयं पृथक् । तर्के कुशल इति विषयस्योदाहरणम् । तर्कविषयं कौशलमस्यास्तीत्यर्थः । देवदत्तस्य कौशलं तर्कादन्यत्र नास्तीति तर्कस्य विषयत्वम् । ननु चास्तिक्रियाश्रयस्य कर्तृभूतस्य कौशलस्य न तर्केण सह संयोगः समवायो वा तत् कथमयमाधारः । आधारो ह्याश्रयः स च संयोगेन समवायेन वा स्यात् । नैष दोषः । यतो यदधीना यस्य स्थितिः स विनापि संयोगसमवायाभ्यां तस्याश्रयो भवति । यथा पुरुषस्य राजा । अत्र यद्यपि राज्ञा पुरुषस्य संयोगसमवायौ न तथापि तदायत्तस्थितित्वाद्राजाश्रयः पुरुष इत्युच्यते लोके । तथात्रापि कौशलस्य तर्काधीनस्थितिरत्वाद्युक्तस्तर्कस्य कौशलं प्रत्याधारभावः । गुरौ वसतीत्याद्यपि विषयस्योदाहरणं ज्ञेयम् । सर्वस्मिन् स्थित इति व्याप्तस्योदाहरणम् । सर्वमभिव्याप्य स्थितो विष्णुरित्यर्थः । अत्र यद्यपि विष्णोः सर्वेण सह संबन्धोस्ति तथापि देशविभागाभावात् संश्लेषव्यवहारो नास्तीत्यौपश्लेषिकात् पृथगुच्यते । तिलेषु तैलमित्याद्यपि व्याप्तस्योदाहरणं ज्ञेयम् ।

---

१. Before it—अनन्यत्र भावो विषयः । $D_5$. २. विषयको $Bc_3$. ३. Dropped $Bc_1$.

[1]क्तस्येन्विषयस्य कर्मण्यपि* ॥ अधीती व्याकरणे ।

[2]साध्वसाधुप्रयोगे च* ॥ साधुः कृष्णो मातरि असाधुर्मातुले । अर्हाणां कर्तृत्वे अनर्हाणामकर्तृत्वे तद्वैपरीत्ये च* ॥ सत्सु तरत्स्वसन्त आसते । [3]असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु शूद्रास्तरन्ति[4] । निमित्तात् कर्म[5]योगेपि* ॥ चर्मणि द्वीपिनं हन्ति[6] ।

---

क्तस्येति । इन्विषयो यः क्तस्तदीये कर्मण्यपि सप्तमी वाच्या । कश्चेन्विषयः क्तो यस्तेनैव सह प्रयुज्यते । **अधीती व्याकरण** इति । अधीतमनेनाधीती । 'इष्टादिभ्यश्च' इतीनिः ।

**साध्वसाधुप्रयोग** इति । अनर्चार्थं साधुग्रहणम् । अर्चायां साधुनिपुणाभ्यामित्येव सिद्धत्वात् । **अर्हाणामित्यादि** । क्रियां प्रति येषां कर्तृत्वं न्याय्यं तेषामेव कर्तृत्वे सति सप्तमी वाच्या । क्रियां प्रति येषां कर्तृत्वमन्याय्यं तेषामकर्तृत्वे[7] च सप्तमी वाच्येत्यर्थः । **सत्स्वित्यादि** । तरणक्रियां प्रति ये साधनभावमनुभवन्ति सन्तस्तेषामेव चेह कर्तृत्वमिति सप्तमी जाता । **असत्स्वित्यादि** । अत्र तरणक्रियां प्रति येषामकर्तृत्वं न्याय्यं तेषामसतामकर्तृत्वम् । **सत्सु तिष्ठत्स्विति** । अत्र तरणक्रियां प्रति येषां कर्तृत्वं न न्याय्यं तेषामेव कर्तृत्वम् । एतत् सर्वं 'यस्य च भावेन' इति सिद्धम् । **निमित्तादिति** । कर्मणा योगे सति निमित्तादपि सप्तमी वाच्येत्यर्थः । **चर्मणि द्वीपिनं हन्तीति** । अत्र हननस्य निमित्तं चर्म तस्य द्वीपिना कर्मणा सह संयोगः ।

---

१. Before it—इन्विषयस्य योगे कर्मणि सप्तमी स्यात् $B_2$. २. Before it—लक्षणभावाविवक्षायामपि यथा स्यादिति वचनम् । $B_2$. ३. °श्चरन्ति $D_1$. ४. After it—असत्सु तरत्सु सन्तास्तिष्ठन्ति $B_2$, $D_5$, $D_2$; असत्सु तरत्सु सन्त आसते $D_3$; शूद्रेषु तरत्सु सन्तास्तिष्ठन्ति । $D_4$. ५. °योगे च $D_4$. ६. C, $D_5$ have got the whole verse—दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥;—दन्तयोर्हन्ति कुञ्जरम् $B_2$, (वालेषु चमरीं $D_5$.) ७. °कर्तृत्वेपि $Dc_3$.

**यस्य च भावेन भावलक्षणम् ॥२।३।३७॥**

भावः क्रिया। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः[1] सप्तमी स्यात्॥ गोषु दुह्यमानासु गतः।

**सप्तमीपञ्चम्यौ कारकमध्ये ॥२।३।७॥**

कारकद्वयमध्यस्थयोः कालाध्वनोरेते स्तः॥ अद्य भुक्त्वायं द्व्यहे[2] द्व्यहाद्वान्नं भोक्ता। इहस्थोयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्[3]। अधिकेन योगेपीति केचित्। लोके लोकाद्वाधिको हरिः।

---

**यस्य।** यस्य क्रिययेति। प्रसिद्धयैव क्रियया क्रियान्तरं लक्ष्यते। न हि स्वयमप्रसिद्धा परस्य लक्षणं घटते।

**सप्तमीपञ्चम्यौ।** कारकं नाम क्रियानिमित्तभूता शक्तिः। **अद्य[4] भुक्त्वेति।** अत्र भुजिक्रियायाः कर्तरि द्वे शक्ती व्यवस्थिते एकाद्यभुजेः साधनभूता अपरा द्व्यहेतीते इति भिन्नयोर्द्वयोः कर्तृशक्त्योर्मध्ये वर्तते तद्द्व्यहलक्षणः काल इति। तत्र सप्तमीपञ्चम्यौ जाते[5]। **इहस्थ इति।** इहस्थोयं कर्ता लक्ष्यं कर्म तयोः कारकयोर्मध्ये वर्तते क्रोश इति तत्र सप्तमीपञ्चम्यौ[6] जाते। अथवा यतः शरो निर्याति तदपादानं यच्च लक्ष्यं तत् कर्म तयोर्मध्ये क्रोशः। अथवेहेत्यनेन निर्दिश्यते यदधिकरणं यच्च लक्ष्यं कर्म तयोर्मध्ये क्रोशः। अथ कालात् सप्तम्यध्वनः पञ्चमीति संख्यातानुदेशः कस्मान्न। अस्वरितत्वात्। स्वरितेनाधिकार इत्यत्र स्वरितेनेति योगविभागात् यत्र स्वरितत्वं तत्र यथासंख्यमिति व्याख्येयम्। **अधिकेनेति।** तथोक्तं बोपदेवपण्डितैः।

'निर्धारेधिकेन क्रियान्तः कालाध्वनोश्च पी च' इति।

---

१. ततः सप्तमी P; तत्र for ततः $B_1$. २. द्व्यह्नि द्व्यह्नाद्वा C. ३. विध्यति C. ४. अद्य dropped $Bc_3$. ५. जायेते $Bc_3$. ६. पञ्चमीसप्तम्यौ $Dc_3$.

**अधिरीश्वरे ॥१।४।९७॥**

स्वस्वामिसंबन्धे[1]ऽधिः कर्मप्रवचनीयसंज्ञः[2] [3]।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ २।३।९॥**

अधिकार्थेनेश्वरार्थेन च कर्मप्रवचनीयेन[4] युक्ते सप्तमी स्यात् ॥ उप परार्धे[5] हरेर्गुणाः ॥ स्वात् स्वामिनो वा विभक्तिः । अधि भुवि रामः । अधि रामे भूः[6] ।

**षष्ठी चानादरे ॥२।३।३८॥**

अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ स्तः ॥ रुदति रुदतो वा प्राव्राजीत् ।

---

**अधि** । ईश्वरः स्वामी स च स्वमपेक्षते ततश्च स्वस्वामिसंबन्धे इत्यर्थो लभ्यत इत्यभिप्रेत्याह । **स्वस्वामिसंबन्धे** इति ।

**यस्मात्** । **उप परार्धे**[7] इति । 'उपोधिके च' इत्युपशब्दस्य कर्मप्रवचनीयता । **स्वात् स्वामिन** इति कथम् । स्वस्वामिसंबन्धेधिः कर्मप्रवचनीय इत्युक्तम् । तत्र यदा स्वमप्रसिद्धत्वाद्विधीयते तदा तत् प्रधानं स्वाम्यप्रधानमिति ततः षष्ठ्यां प्राप्तायां तदपवादः सप्तमी स्यात् । यदा तु स्वाम्यप्रसिद्धो विधीयते तदा विपर्ययो ज्ञेयः । कथं पुनर्यस्य चेश्वरवचनमित्युच्यमाने स्वादपि विभक्तिः स्यात् । न हि स्वस्येश्वरव्यपदेशोस्ति । नैष दोषः । अनुक्तसमुच्चयार्थश्चकारः क्रियते । तेन यस्य च स्ववचनमित्यस्याप्यर्थस्य विज्ञानात् ।

**षष्ठी** । **रुदतीत्यादि** । रुदन्तमनादृत्य प्रव्रज्यां कृतवानित्यर्थः ।

---

१. °संबोधे P. २. कर्मप्रवचनीयः स्यात् P, $B_2$, $Bc_3$, $D_4$, $D_5$. ३. After it—स्यात् $D_2$; $D_3$. ४. कर्मप्र° वचनीययुक्ते C; कर्मप्रवचनीययोगे $D_3$. ५. °परार्ध्ये $D_1$, $D_4$, $Bc_3$, $Dc_1$. ६. वा भः $B_2$. ७. °र्ध्य $Bc_3$.

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ २।३।३९॥**

एभिर्योगे षष्ठीसप्तम्यौ स्तः। गवां स्वामी । गोषु स्वामी । इत्यादि ।

**आयुक्तकुशलाभ्यां चासेवायाम् ॥२।३।४०॥**

आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे ॥ आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किम् । आयुक्तः शकटे गौः । ईषद्युक्त इत्यर्थः ।

**यतश्च निर्धारणम् ॥२।३।४१॥**

जातिगुणक्रियाभिरेकदेशविवेचनं यतः स्यात् ततः षष्ठीसप्तम्यौ स्तः ॥

---

**स्वामी** । स्वामीश्वराधिपतीनां ग्रहणं पर्यायान्तरनिवृत्त्यर्थम् । शेषलक्षणायां षष्ठ्यामेव प्राप्तायां वचनम् ।

**आयुक्त** । आयुक्तो व्यापृतः । कुशलो निपुणः । आभ्यां योगे षष्ठीसप्तम्यौ स्तः । तात्पर्ये गम्ये । आयुक्तता निपुणता च हरिपूजनविषयेति सप्तम्यामेव प्राप्तायां पक्षे षष्ठीविध्यर्थो योगः । आसेवायां किम् । आयुक्तः शकटे गौः। ईषद्युक्त इत्यर्थः ।

**यतश्च** । निर्धार्यमाणोवयवः समुदायाभ्यन्तर इति स यदा तदाधारत्वेन विवक्ष्यते तदा सप्तमी सिद्धैव । यथा वृक्षे शाखा इति । यदा त्ववयवसंबन्धस्तदा षष्ठी । यथा वृक्षस्य शाखेति ।

---

१. गोषु स्वामी । गवां स्वामी । $D_1$. २. Dropped C. ३. P drops स्तः ४. °स्तात्पर्ये $Bc_3$, $Dc_1$; °स्तात्पर्यार्थे $D_4$. ५. तात्पर्यार्थे किम् C; P, $Dc_1$, $Bc_2$, $D_3$, Com. drop from आसेवायां to इत्यर्थः; तात्पर्ये किम् $D_1$; तात्पर्येऽर्थे किम् $D_2$, $D_4$. ६. गौः शकटे $D_1$, $B_2$, $D_3$, $D_4$. ७. °रेकदेशस्यस्य P. ८. तत्र $B_1$. ९. P and $D_1$, $D_4$, $B_2$, $Bc_3$ drop it.

नृणां नृषु वा द्विजः श्रेष्ठः । गवां गोषु वा कृष्णा गौर्बहु-क्षीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः ।

**पञ्चमी विभक्ते ॥२।३।४२॥**

विभक्तवति निर्धारणाश्रये[2] पञ्चमी स्यात्[3] ॥ उदीच्या दाक्षिणात्येभ्यः श्रोत्रियाः ।

---

किमर्थं वचनम् । तस्यैव प्रपञ्चार्थमित्यदोषः । जातिगुणक्रिया-भिरित्येतत्प्रदर्शनममीषां छात्राणां देवदत्तः पटुरिति संज्ञयापि निर्धारणप्रदर्शनात् ।

**पञ्चमी** । विभागो विभक्तं तद्यस्मिन्नास्ति स विभक्तो निर्धारणाश्रय इत्यभिप्रेत्याह । **विभक्तवति निर्धारणाश्रय** इति । सर्वस्मिन्नेव निर्धारणाश्रये विभागोस्तीति विशेषणसामर्थ्याद्विभाग एव सर्वदा यत्र न कदाचिदात्मन्यन्तर्भावः स इह निर्धारणाश्रयो विज्ञायते । तेन कृष्णा गवां बहुक्षीरेत्यत्र न भवति । यतोत्र यद्यपि कृष्णा गौर्गोमण्डलात् पृथक् क्रियते तथापि गवात्मनान्तर्भवतीति न विभाग एव । उदीच्या दाक्षिणात्येभ्यः श्रोत्रिया इत्यत्र यद्यपि प्राणित्वेनान्तर्भावोस्ति तथापि शब्दोपात्ताकारापेक्षया नान्तर्भाव इति विभाग एवेत्ययमस्य योगस्य विषयः । अन्ये त्वेवमाहुः । यत्र राशीकृतस्य पृथक् क्रिया स पूर्वसूत्रस्य[4] विषयः । यत्र पुनः पृथक्कृतस्यैव गुणाविष्करणं सोस्येति । अयमपि योगः प्रपञ्चार्थ एव । अपादानत्वादेवात्र सिद्धा पञ्चमी ।

---

१. कृष्णगौः $B_2$, $Bc_3$. २. निर्धारणेर्थे C. ३. After it—न षष्ठी सप्तम्यौ $D_1$, $B_2$. ४. पूर्वस्य $Bc_3$.

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥२।३।४३॥**

आभ्यां योगे सप्तमी स्यात् ॥ मातरि साधुर्निपुणो वा[1] । अर्चायां किम् । साधुर्भृत्यो राज्ञस्तत्त्वकथनेन । अप्रतेः किम् । साधुर्मातरं प्रति ।

अप्रत्यादौ वाच्यम्* ॥ साधुर्मातरं प्रतिपर्यनु वा[5] ।

**प्रसितोत्सुकाभ्यां तृतीया च ॥२।३।४४॥**

[6]चात् सप्तमी । प्रसितः प्रसक्त उत्सुको वा हरिणा हरौ वा ।

---

साधु । पदमञ्जरीकारमते 'साधुर्भृत्यो राज्ञस्तत्त्वकथनेन' इति प्रत्युदाहरणमन्याय्यं तत्र 'साध्वसाधुप्रयोगे च' इति सप्तमी भाव्यैव । अर्चाग्रहणं निपुणार्थं निपुणो भृत्यो राज्ञ इति तत्त्वकथने प्रत्युदाहरणं न्याय्यम् । अप्रत्यादाविति । ये 'लक्षणेत्थंभूत—' इत्यादिसूत्रे कर्मप्रवचनीयसंज्ञा उक्ता प्रतिपर्यनवस्ते गृह्यन्ते ।

प्रसित । प्रकृष्टः सितः शुक्ल इति गुणवाच्यप्यस्ति । प्रसितशब्दः क्रियावाच्यप्यस्ति । षिञ् बन्धन इत्यस्य क्तान्तस्य प्रपूर्वस्य । तत्रौत्सुकशब्देन क्रियावाचिना साहचर्यात् क्रियावाच्यत्र गृह्यत इत्याह । प्रसितः प्रसक्त इति । अधिकरणे सप्तमी सिद्धौ पक्षे तृतीयार्थं वचनम् ।

---

१. $B_1$ drops it. २. साधुर्मातरि निपुणो वा हरिः $B_1$. ३. After it—कृष्णः $D_3$. ४. P, $D_1$, $Dc_1$, drop प्रति. ५. Dropped $B_2$, $Bc_3$, $D_3$, $D_5$. ६. C has before it—आभ्यां योगे तृतीया स्यात् $D_5$. ७. अर्चाया ग्रह° $Bc_3$. ८. तृतीयार्थवचनम् $Bc_1$.

**नक्षत्रे च लुपि ॥२।३।४५॥**

लुबन्तान्नक्षत्रात्[1] तृतीया स्यात् । अधिकरणत्वात् पक्षे[2] सप्तमी । पुष्ये पुष्येण वा गच्छेत् । पुष्ययुक्ते काले इत्यर्थः । लुपि किम् । पुष्ये शनिः ।

अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो[4] वा द्वितीयेति केचित् ॥

---

**नक्षत्रे** । नक्षत्रे च लुपीति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी । अत एवाह । **लुबन्तान्नक्षत्रादिति** । **पुष्ये पुष्येण वेति** । 'नक्षत्रेण युक्तः कालः' इति विहितस्याणो 'लुबविशेषे' इति लुप् । उत्तराभ्यां फल्गुनीभ्यां नोत्तरां गच्छेदित्यत्र तु लुबन्तविशेषणत्वादुत्तराभ्यामित्यत्र तृतीया स्यात् । अथवा नक्षत्रे प्रकृत्यर्थे सति यो लुप्संज्ञया लुप्तस्तस्य प्रत्ययस्यार्थस्तत्र वर्तमानादिति लुबन्तादित्यादेरर्थस्तेन स्यात् । **पुष्ये शनिरिति** । सामीप्येधिकरणे सप्तमी । अत्र नक्षत्रेण युक्त इत्यस्याविवक्षितत्वादण् न ।

**अकर्मकेति** । देशो जनपदादिर्नद्यादिरपीति केचित् । कालो निमेषादिव्यपदेश्यो निमेषादिक्रियापरिच्छिन्न आदित्यादीनां क्रियासन्तानः । अध्वा क्रोशादिशब्दव्यपदेश्यः क्षितिविशेषः । भावो नाम संसर्गिभिः परिच्छिन्नो यागादिशब्दव्यपदेश्यो धात्वर्थः । **केचिदिति** ।

---

१. नक्षत्रवाचिनः $B_1$. २. स्याद्वा $B_1$; वा स्यात् $D_6$. ३. Dropped $D_6$.
४. °भाववचनेभ्यो $Dc_1$, $Bc_3$.

नदीं नद्यां वा वसति । रात्रिं[1] रात्रौ वा शेते । क्रोशं क्रोशे वा वसति । यागं यागे वा तिष्ठति ॥

इति विभक्त्यर्थाः[2][3] ॥

---

भर्तृहरिप्रमुखाः । तथा हि भर्तृहरिरन्तर्भूतक्रियान्तरैरेव सर्वैरकर्मकैर्धातुभिर्योगे देशादीना कर्मतेत्याह । तथा च यदान्तर्भूतक्रियान्तरताकर्मकाणां विवक्ष्यते तदा देशादिभ्यो द्वितीया । यदा न विवक्ष्यते तदाधिकरणत्वात् सप्तमी देशादिभ्यो भवति । तथोक्तम्[4] ।

'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते' ॥ इति ।

ततश्च नदीमित्यादेरयमर्थः द्वितीयापक्षे । वसन्नदीमतिक्रामतीति । सप्तमीपक्षे तु नदीसमीपे वसतीति तथा शयानो रात्रिमतिक्रामतीत्यादि ज्ञेयम् । स्वमते तु क्रियान्तर्भावं विनाप्यकर्मकयोगे देशादीनां कर्मतैवेति । तच्चोपपादितम् ॥

इति निरूपिता सप्तमी ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे सुविशदमधुनोक्तो विभक्त्यर्थ ईदृक् ॥

---

१. रात्रौ रात्रिं वा $Dc_1$, $Bc_3$. २. इति कारकप्रक्रिया C. ३. After it—समाप्ताः $D_1$, $D_2$. ४. तथा चोक्तम् $Dc_4$.

# अथ समासा निरूप्यन्ते ।

## समर्थः पदविधिः ॥२।१।१॥

पदयोः पदानां वा[1] विधिः समर्थान्वित एव स्यात्[2] ॥ [3]समासश्चतुर्धा[4] । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः ।

---

अथ समासा निरूप्यन्ते । **समासश्चतुर्धेति** । समसनं समासः संक्षेपः । स चानेकपदैक्यम् । स चतुर्धा चतुःप्रकारः स्यात् । प्रधानार्थस्य चातुर्विध्यात् । तथा चोक्तं **महाभाष्ये** । इह कश्चित् समासः पूर्वपदार्थप्रधानः । कश्चिदुत्तरपदार्थप्रधानः । कश्चिदन्यपदार्थप्रधानः । कश्चिदुभयपदार्थप्रधान इति । तदेव चातुर्विध्यं दर्शयति । **पूर्वपदार्थे**त्यादिना । समासवर्तिपदयोर्मध्ये पूर्वपदस्य योऽर्थः स प्रधानं यस्मिन् समासे प्रायेण स समासोऽव्ययीभाव इत्युच्यते । तथोक्तं **काशिकायां वृत्तौ**[5] । अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयतीति । **उत्तरपदार्थेति** । उत्तरपदस्य योऽर्थः स प्रधानं यस्मिन् समासे प्रायेण स तत्पुरुषो नाम समासः । तथोक्तं **काशिकायाम्** । पूर्वाचार्यसंज्ञा चेयं महती तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम् । उत्तरपदार्थप्रधानस्तत्पुरुष इति । ननु द्विगुकर्मधारयावपि पृथक् समासौ स्तस्तत् कथं चातुर्विध्यमेवेत्यत आह ।

---

१. च $D_2$. २. C has after it—तेन अग्नेः शैत्यम् । जलस्यौष्ण्यम् । उपगोः वस्त्रम् । अपत्यं चैत्रस्य पुरुषोऽयं राज्ञः फलिताश्चामी द्रुमाः । अत्र न भवति । $D_1$ has after it—अधिकृतो ज्ञातव्यः । परस्परान्वययोग्यत्वे सति इतरसंबन्धनैरपेक्ष्यं सामर्थ्यम् ।; The Sûtra and the Vṛitti dropped in $D_3$. ३. Before it—समसनं समासः । $D_4$. ४. $B_1$ has a marginal note—द्वन्द्वोऽहं द्विगुरपि मद्गेहे नित्यमव्ययीभावः । तत्पुरुष कर्मधारय येनाहं स्यां बहुव्रीहिः ॥; अव्ययीभावस्तत्पुरुषो बहुव्रीहिर्द्वन्द्वश्चेति after चतुर्धा P, $B_1$, C ५. वृत्ति° $Bc_3$.

द्विगुकर्मधारयौ तत्प्रभेदौ । [1]अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । समासार्थबोधकं[2] वाक्यं विग्रहः[3] ।

---

**द्विगुकर्मधारयाविति** । तस्य तत्पुरुषस्य भेदौ उत्तरपदार्थप्राधान्यादिति भावः । **अन्यपदार्थप्रधान** इति । वृत्ति[4]पदव्यतिरिक्तं यत् पदं तस्यार्थः प्रधानं यत्र प्रायेण स बहुव्रीहिसंज्ञः स्यात् । **उभयेति** । उभयोर्वृत्ति[5]पदयोर्यावर्थौ तौ प्रधानं यस्मिन् समासे प्रायेण स द्वन्द्वसंज्ञः[6] स्यात् । एतदेव[7] चोक्तं **महाभाष्ये** । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्व इति[8] । अत्र हि द्वौ[9] पक्षौ । वाक्यमेव समासीस्यादित्येकः । समासोन्यो वाक्यमन्यदेव रूढमिति द्वितीयः । कृत्तद्धितसमासानामभिधानलक्षणत्वात् । तत्र द्वितीयं पक्षं सूचयन् विग्रहलक्षणमाह । **समासेति** प्रथमं त्वग्रे सूचयिष्यति । तस्य चतुर्विधस्यापि समासस्यार्थं बोधयति यद्वाक्यं तद्विग्रह इत्युच्यते । समासेत्युपलक्षणं वृत्तेः । वृत्त्यर्थबोधकं यद्वाक्यं तद्विग्रह इत्यर्थः । तेन तद्धितार्थादिबोधकमपि विग्रहः । विशेषेण गृह्यते ज्ञायते अनेनेति विग्रह इति व्युत्पत्त्येति भावः । समासार्थो वाक्यार्थ एव । वाक्यं पुनर्मतभेदेनैकप्रयोजनसाकाङ्क्षपदसमूहाद्यनेकलक्षणम् । तच्च मतभेदानुपन्यस्य **वाक्यपदीये** सम्यगुपपादितं ज्ञेयम् । तत्र[10]

'साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते' ॥

---

१. अन्यपदार्थे बहुव्रीहिः $B_1$. २. समासार्थावबोधकं C. ३. After it—अविग्रहो नित्यसमासः । $D_5$. ४. वार्ति $Dc_2$, $Dc_3$, $Dc_4$. ५. °र्वर्ति° $Dc_2$, $Dc_3$. ६. °संज्ञकः $Dc_2$, $Bc_1$; °संज्ञकः समासः $Bc_3$; °संज्ञः समासः $Dc_4$. ७. एतदेवोक्तं $Dc_3$. ८. इति dropped $Bc_3$. ९. Dropped $Dc_1$, $Bc_3$, $Dc_4$. १०. तत्र लोके $Dc_2$; तथात्र $Dc_4$.

इतिलक्षणं प्रायशोभिप्रेतम् । वाक्यार्थः पुनः संसर्गो भेदो भेदसंसर्गौ वा । संसर्गः संबन्धः । भेदो व्यावृत्तिः । तत्र राज्ञः पुरुष इत्यनेन स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य स्वविशेषेण यः संबन्धः स उच्यते । स्वान्तरेभ्यः स्वाम्यन्तरेभ्यश्च या व्यावृत्तिः सार्थसिद्धा । न ह्यव्यावर्तमानयोः संबन्ध्यन्तरेभ्यः संसर्गो घटत इति संसर्गं वाक्यार्थं मन्वानस्य मतम् । भेदं वाक्यार्थं मन्वानस्य तु मते व्यावृत्तिरुच्यते । संसर्गोर्थगृहीतो न ह्यन्यस्माद्व्यावृत्तस्य संबन्ध्यन्तरेणासंबन्धस्यावस्थानं संभवति । उभयं वाक्यार्थं मन्यमानस्य तु मते भेदसंसर्गौ[1] गृह्येते इति विवेकः । अयं पुनर्वाक्यार्थात् समासार्थस्य भेदो यदेकार्थीभावः । समासे हि भिन्नार्थानां पदानां साधारणार्थतावस्थाविशेषः स्यात् । वाक्ये तु भिन्नार्थत्वात् साधारणार्थता नास्ति । अत एव भेदनिबन्धनात्र षष्ठ्युपजायते राज्ञः पुरुष इति । अयं भावः । समासे हि विशेषणं विशेष्यमनुप्रविशति एकीभवति विशेष्येण[2] । वाक्ये तु विशेष्यतः पृथग् जायते । तथा हि वाक्ये[3] एकार्थीभावाभावाद् राज्ञो गौश्चाश्वश्च पुरुषश्चेति भिन्नार्थनिबन्धनसमुच्चयप्रतिपादनाय चशब्दः प्रयुज्यते । समासे त्वेकार्थीभावसद्भावान्न प्रयुज्यते । राजगवाश्वपुरुषा इति । एतच्चान्यच्च महाभाष्ये । इह[4] द्वौ पक्षौ वृत्तिपक्षोवृत्तिपक्षश्चेत्याद्युक्त्वा अथ ये वृत्तिं वर्तयन्ति किं त आहुः । परार्थाभिधानं वृत्तिमाहुः । अथ तेषामेवं ब्रुवतां जहत्स्वार्था वृत्तिराहोस्विदजहत्स्वार्था वृत्तिर्भवतीत्यादिना ग्रन्थसंदर्भेणोभयविधामपि वृत्तिं प्रतिपाद्य सम्यगुपपादितं तत्ततोवगन्तव्यम्[5] । तत्राव्ययीभावं समासमाह । स च द्विधा । अव्ययपूर्वपदो नामपूर्वपदश्चेति तत्र तावदव्ययपूर्वपदमाह ।

---

१. संसर्गाभेदौ Bc3. २. विशेषणं वाक्ये Dc1, Dc4, Bc3. ३. वाक्ये हि Bc3. ४. इह Bc3. ५. तत्ततोवगन्तव्यम् dropped Bc3.

**अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्य—साद्दश्यसंपत्तिसाकल्यान्तवचनेषु ॥२।१।६॥**

एष्वर्थेषु वर्तमानं सुबन्तं समर्थमव्ययं सुबन्तेन समर्थेन

---

अव्ययमित्यादि । एष्वर्थेष्विति । विभक्त्यादिषु षोडशस्वर्थेष्वित्यर्थः । वचनग्रहणं प्रत्येकमभिसंबध्यते । **सुबन्तं समर्थमिति।** अन्वययोग्यमित्यर्थः । एतच्च 'समर्थः पदविधिः' इत्यस्याः परिभाषाया लभ्यते । अस्याश्चायमर्थः । विधीयत इति विधिः । पदानां विधिः पदविधिः समासादिः । यः कश्चनेह शास्त्रे पदविधिः स समर्थो ज्ञेयः । समर्थः शक्तः स्वार्थप्रतिपादने यो विग्रहवाक्यार्थस्याभिधाने शक्तः स समर्थो ज्ञेयः । अथवा समर्थपदाश्रयत्वात् समर्थः । ततश्च समर्थानां संबद्धानां पदानां विधिस्तथा समर्थानां संसृष्टार्थानां च पदानां विधिर्ज्ञेय इत्यर्थः । तथा च समर्थपदेन व्यपेक्षा एकार्थीभावश्चोक्तो भवति । तत्र वाक्ये व्यपेक्षालक्षणं सामर्थ्यम् । तथा हि राज्ञः पुरुष इत्यत्र वाक्ये राजा पुरुषमपेक्षते ममायमिति पुरुषोपि राजानमपेक्षते अहमस्येति । समासे त्वेकार्थीभावः सामर्थ्यं तच्चानन्तरमेवोपपादितम् । **सुबन्तेनेति** । एतच्च 'सह सुपा' इत्यस्मादधिकाराल्लभ्यते । अस्य चायमर्थः । 'सुबामन्त्रित—' इत्यतः सुबित्यनुवर्तते सहेति सुपेति च सुबिति च त्रयमधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रेति । सहग्रहणं योगविभागार्थम् । ततश्च यस्य समासस्यान्यल्लक्षणं नास्ति तस्येदं

---

१. समर्थेन सुबन्तेन समस्यते नित्यं सोव्ययी° $D_3$. २. पदार्थानां $Bc_3$.
३. 'सुप् सुपा' $Bc_3$. ४. सुबिति वर्तते $Bc_1$, $Dc_2$, $Dc_3$.

नित्यं समस्यते स समासोऽव्ययीभावसंज्ञः स्यात्[1] ।[2] ऐकपद्यं समासप्रयोजनम्[3][4] ।

---

विधायकं स्यात् । **सह सुप् समस्यत** इति । ततश्चानुप्रावर्षदिति तिङन्तेनाप्यनुः समस्यते । ततः समासान्तोदात्तत्वं स्यात् । **नित्यं समस्यत** इति । संक्षिप्यते समाससंज्ञयैकार्थीभावं प्राप्यत इत्यर्थः । अनेन वृत्तिपक्षोऽभिप्रेत इत्याख्यायते । समस्यत इत्येतत् 'प्राक् कडारात् समासः' इत्यस्मात् सूत्राल्लभ्यते । अस्य त्वायमर्थः । 'कडाराः कर्मधारयः' इति कडारसंशब्दनात् प्राक् यानत ऊर्ध्वमनुक्रमिष्यामः समाससंज्ञास्ते वेदितव्याः । प्राक्वचनं संज्ञासमावेशार्थमिति । **समासोऽप्यव्ययीभावसंज्ञः स्यादिति** । एतच्च 'अव्ययीभावः' इत्यस्मादधिकारसूत्राल्लभ्यते । ननु समास-संज्ञयाव्ययीभावादिसंज्ञया च किं प्रयोजनम् । न च वाच्य-मेकार्थीभूतार्थवाचित्वं पूर्वपदार्थादिवाचित्वं च पदानां क्रियत इति । यतः शब्दानां पदार्थाभिधानं स्वाभाविकं न वाचनिकमित्यर्थाना-देशनादित्यादिना ग्रन्थसंदर्भेण **भाष्यकृतोपपादितमिति** शङ्का-मपनुदन्नाह । **ऐकपद्यमिति** । समाससंज्ञायाः प्रयोजनमैकपद्य-मित्यर्थः । ऐकपद्यमित्युपलक्षणमैकस्वर्यमैकविभक्तिकत्वं च । अत एवोक्तं **धर्मकीर्तिना** । ऐकपद्यमैकस्वर्यमैकविभक्तिकत्वं च समास-प्रयोजनमिति । अव्ययीभावादिसंज्ञानां स्वरसमासान्तादि प्रयोजनं ज्ञेयम् ।

---

१. $B_1$ drops स्यात्. २. C has after it—वचनग्रहणं प्रत्येकमभि-संबध्यते. ३. ऐकपद्यमैकस्वर्यमैकविभक्तिकत्वं समासप्रयोजनम् $D_3$, $D_4$, $D_5$, $Dc_1$, $B_1$, $B_2$; (ऐकविभक्तिकत्वं dropped $D_4$). ४. After it—उन्मत्तगङ्गमित्यत्र अन्यपदार्थसंज्ञायामित्यव्ययीभावसमासः । $D_5$.

विभक्तौ तावत्[1] । हरौ अधिकृत्येति विग्रहे हरौ अधि इति स्थिते ।

**प्रथमानिर्दिष्टं समास उपसर्जनम् ॥१।२।४३॥**

**विभक्तौ** तावदिति । विभक्त्यर्थे वर्तमानस्याव्ययस्यादौ समासप्रकारः कथ्यत इत्यर्थः । **हरौ अधिकृत्येति विग्रह** इति । अधिहरीत्यस्य समासस्यार्थबोधके वाक्ये एतादृशे स्थिते सतीत्यर्थः । ननु चाव्ययं नित्यं समस्यत इत्युक्तत्वान्नित्यसमासोयं नित्यसमासश्चाविग्रह इति वदन्ति वृद्धास्तत् कथमयं विग्रहः क्रियते । नैष दोषः । अस्वपदविग्रहस्यापि नित्यसमासस्याङ्गीकारात् । तथा चोक्तं **धर्मकीर्तिना** । अविग्रहो नित्यसमासोस्वपदविग्रहो वेति । अत्र च वृत्तिपदव्यतिरिक्तेनाधिकृत्येति पदेन विग्रहः क्रियते । **हरौ अधि इति स्थित** इति । तिङ्कृत्तद्धितसमासैरित्यनभिहितसूत्रे परिगणितत्वात् अधिना अधिकरणे सप्तम्यर्थे[2] द्योतितेपि हरिशब्दात् सप्तमी भवतीति सप्तम्यन्तो हरिशब्दः समस्यते । अधिशब्दस्तु प्रथमान्तः । ततश्चायमर्थः । अधीत्येतस्मिन् प्रथमान्ते विभक्त्यर्थेऽव्ययं सप्तम्यन्तेन हरिशब्देन समस्यमाने हरौ अधि इति स्थिते इति कर्तव्यतोच्यत इति ।

**प्रथमा** । समासा हि कष्टाश्रितादयो न तेषु किमपि प्रथमानिर्दिष्टं समस्ति । समासे तु कृते या प्रथमोत्पद्यते सा समासादेव न तु[3] तदवयवात् । अन्तर्वर्तिनी च या प्रथमा सा श्रितशब्दात् सा च समासात् प्रागेवोत्पन्ना । अतो मुख्यस्य समासस्यासंभवात् तद्विधायि शास्त्रं तादर्थ्यात् समासशब्देनोच्यत इत्यभिप्रेत्याह ।

१. After it—अविग्रहो नित्यसमासोस्वपदविग्रहो वा । $D_6$. २. वर्ति' $Dc_3$, $Dc_4$. ३. Dropped $Dc_3$.

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥

उपसर्जनं पूर्वम् ॥२।२।३०॥

समासे उपसर्जनं प्राक् प्रयोज्यम् ॥

---

**समासशास्त्रे** इति । प्रथमान्तं यदुच्चारितं समासशास्त्रे इत्यर्थः । अत्र चाव्ययं प्रथमान्तमुच्चारितमिति तस्योपसर्जनत्वम् । यद्येवमव्ययशब्दादेवोपसर्जनता स्यात् नाधिशब्दादीनाम् । न हि ते शास्त्रे प्रथमानिर्दिष्टाः । नैष दोषः । यतो य एवाव्ययस्य प्रथमानिर्देशः स एवाधिशब्दादीनां तत्परत्वात्तस्य । अत्र चोपसर्जनमिति महासंज्ञाश्रयणेनान्वर्थता विज्ञायते । यथा हि लोके अप्रधानमुपसर्जनमुच्यते एवमत्राप्यप्रधानमेवोपसर्जनम् । प्रधानाप्रधानशब्दौ त्र संबन्धिशब्दावेतौ । तेन यत् प्रति यदप्रधानं तदेव प्रति तदुपसर्जनं स्यात् । तेन राजकुमारीं पश्येत्यत्र 'द्वितीया श्रित—' इत्यत्र प्रथमानिर्दिष्टस्यापि कुमारीशब्दस्य संज्ञा न । यदि स्यात् पूर्वनिपातानियम उपसर्जनह्रस्वत्वं च स्यात् । अन्वर्थत्वे तु श्रितादीनेवापेक्ष्य द्वितीयान्तमुपसर्जनमिति नेह प्रसङ्गः । यद्यन्वर्थसंज्ञा तर्हि याचकवृन्दारकः पुरुषव्याघ्रः अर्धपिप्पली पूर्वकाय इत्यादौ प्रधानेपि कथमुपसर्जनत्वम् । उच्यते । 'विशेषणं विशेष्येण बहुलम्' इत्यादिनैव समासे सिद्धे 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' इत्यादीनां प्रथमानिर्देशानामुपसर्जनतैव प्रयोजनम् । अथवा 'एकविभक्ति चापूर्वनिपाते' इति अत्र वर्तमानस्य चशब्दस्यानुक्तसमुच्चयार्थत्वादुपसर्जनत्वं स्यात् ।

**उपसर्जनम्** । पूर्ववचनं परप्रयोगनिवृत्त्यर्थम् । यद्यपि प्रयोगविपर्ययो न दृष्टस्तथापि पुरुषापराधाद्विपरीतप्रयोगोपि संभाव्येत । यन्मते वाक्यमेव समासीभवति तन्मते वाक्यस्यानियतक्रमत्वात् तद्विकारोपि समासो नियतक्रमः स्यादिति ।

---

१. प्रथमान्तं B1, D2, Bc3. २. °मुपसर्जनं स्यात् D5. ३. स्यात् D3. ४. अन्वर्थे तु Bc3. ५. याचक° Bc3, Dc3, Dc4. ६. °भाव्यते Dc1, Bc3.

इत्यधेः प्राक् प्रयोगः । कृत्तद्धितेति प्रातिपदिकत्वम् ।

**सुपो धातुप्रातिपदिकयोः** ॥२।४।७१॥

एतयोरवयवस्य सुपो लुक् स्यात् ॥ स्वाद्युत्पत्तिः[1] ।

**अव्ययीभावश्च** ॥१।१।४१॥

अव्ययीभावोप्यव्ययं स्यात् । सुपो लुक् । अधिहरि प्रवृत्ता कथा ।

---

**इत्यधेरि**ति । प्रथमानिर्दिष्टमित्युपसर्जनत्वादनेनाधिशब्दस्य प्राक् प्रयोगः स्यादित्यर्थः । **कृत्तद्धिते**त्यादि । समासत्वादधिहरावित्यस्य प्रातिपदिकसंज्ञेत्यर्थः ।

**सुपः** । धातुप्रातिपदिकयोः किम् । वृक्षः । अनेन सूत्रेणाधिहरावित्यत्र वर्तमानाया विभक्तेः सप्तम्या लोपः । **स्वाद्युत्पत्ति**रिति । अधिहरि इति स्थिते 'स्वौजसमौट्' इति स्वाद्युत्पत्तिः ।

**अव्ययीभावः** । अव्ययीभावस्याव्ययत्वे किं प्रयोजनमित्याशङ्क्याह । **सुपो लुगि**ति । 'अव्ययादाप्सुपः' इत्यनेन मुखस्वरोपचारनिवृत्तिश्च प्रयोजनम् । उपाग्निमुखम् । 'मुखं स्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्द–' इति तस्मिन्निषिद्धे पूर्वपदप्रकृतिस्वर एव स्यात् । उपपयःकाम इति विसर्गस्थानिकस्य सकारस्योपचार इति संज्ञा । तत्राव्ययत्वात् 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति पर्युदासः सिद्धः स्यात् । नन्वन्यान्यप्यव्ययत्वप्रयोजनानि सन्ति । उपाग्निकमित्यत्राकच् । उपकुम्भमन्य इति मुमः प्रतिषेध इत्यादीनि । तत् कथमेतान्येवेति नियमः । उच्यते । एतद्धि सूत्रं स्वरादावपि पठ्यते । पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेनैतद्व्यतिरिक्तं कार्यमनित्यं स्यादिति ।

---

१. प्रातिपदिकत्वात् $B_1$. २. $B_1$ drops it. ३. $D_1$, $Bc_3$, $D_4$ drop अपि.

[१]सन्ति गुणा हरौ । अधिगच्छ तान् । [२]अत्रानन्वयान्न समासः । समीपे । कृष्णस्य उप[३] । अत्र प्राग्वत् [४]समासादि ।

**नाव्ययीभावादतोम् त्वपञ्चम्याः ।२।४।८३॥**

अदन्तादव्ययीभावात् [५]सुपो न लुक्[६] तस्य[७] पञ्चमीं

---

**सन्तीत्यादि** । अत्र हरौ गुणाः सन्ति तानधिगच्छेत्यन्वयः । तत्र हरौ अधि अनयोरन्वयाभावात् समासो न जात इत्यर्थः । **समीपे** इति । समीपे वर्तमानमव्ययं समस्यते । **कृष्णस्य उपेति** । समीपार्थेनोपशब्देनोपजनिते व्यतिरेके कृष्णशब्दात् षष्ठी स्यादिति षष्ठ्यन्त एव समस्यते । अत्र **प्राग्वदिति** । समासः । प्रथमानिर्दिष्टमित्युपसर्जनत्वमुपशब्दस्य पूर्वनिपातः प्रातिपदिकत्वम् । सुपो लुक् । स्वाद्युत्पत्तिः । अव्ययत्वम् । ततः सुपो लुकि प्राप्ते उच्यते ।

**नाव्ययी** । अत्र द्वे वाक्ये नाव्ययीभावादत इत्येकं लुङ्निषेधकम् । अम्त्वपञ्चम्या इति द्वितीयमम्विधायकम् । तत्र अपञ्चम्या इत्यनन्तरत्वात् अम एव निषेधो न तु लुकः । यदि ह्येकमेव वाक्यं स्यात् तदा कार्यद्वयस्यैकत्रावृत्त्याविधीयमानत्वात् कार्यद्वयस्यापि पञ्चम्याः प्रतिषेधः स्यात् । तच्चानिष्टमित्येतच्चेतसि कृत्वाह । **अदन्तादित्यादि** । उक्तोऽर्थस्तुशब्देनैव द्योतितः । ननु चाव्ययीभावस्य पूर्वपदार्थप्रधानत्वं पूर्वपदस्य चाव्ययत्वेन तदर्थस्यासत्त्वभूतत्वं ततस्तस्य क्रियान्तरेण संबन्धो नास्तीत्यपादानादित्वाभावादव्ययीभावात् पञ्चम्यादिसंभव एव नास्ति तत् कथमपञ्चम्या इति निषेधः । नैष दोषः । पूर्वपदार्थप्रधानभूतेपि

---

१. Before it—समर्थं किम् $D_1$, $Bc_3$, $D_3$, $D_4$, $D_5$; समर्थः किम् $B_2$. २. अत्रानन्वयत्वात् P. ३. After it—समीपम् $D_1$. ४. समासादिः P; प्राग्वत् only for अत्र प्रा॰ समासादि $Bc_3$. ५. न सुपो C. ६. After it—स्यात् $D_3$. ७. तस्य च $B_1$. ८. न समास इत्यर्थः । $Dc_3$. ९. Dropped $Dc_4$.

विनामादेशः[१] । कृष्णस्य[२] समीपमुपकृष्णम् । उपकृष्णं[३] दूतः ।

तृतीयासप्तम्योर्बहुलम् ॥२।४।८४॥

[४]अदन्तादव्ययीभावात् तृतीयासप्तम्योर्बहुलमम्भावः स्यात् ॥ [५]उपकृष्णमुपकृष्णेन कार्यम् । उपकृष्णमुपकृष्णे स्थितः[६] । बहुलमिति क्वचित् स्यात् । क्वचिन्न स्यात् । क्वचिन्निषिद्धमपि स्यात् । क्वचिद्वा स्यात् । क्वचिदन्यदेव[७] स्यादित्यर्थः[८] ।

---

गुणभूतोत्तरपदार्थापेक्षः क्रियायोग उपपद्यते । [९]उन्मत्तगङ्गादित्यादिरन्यपदार्थप्रधानत्वात् सत्त्ववाच्यव्ययीभावः क्रियासंबन्धसद्भावादपादानत्वात् पञ्चम्या मुख्यमुदाहरणम् ।

**तृतीया** । बहुलशब्दार्थमाह । बहुलमितीत्यादि । बहूनर्थान् लात्यादत्त इति बहुलम् । ते च बहवोर्थाः क्वचित् प्रवृत्त्यादयः । तथा चोक्तम् ।

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति' ॥

इति । क्वचित् प्रवृत्तिरित्यनेनैव क्वचिन्निषिद्धमपि स्यादिति संगृहीतम् ।

---

१. C, $D_1$, $D_3$ have after it—स्यात् ।. २. In place of कृष्णस्य···दूत : $B_1$ has—उपकृष्णम् । अपञ्चम्या इत्युक्तेः उपकृष्णात् गतः ।. ३. In place of उपकृष्णं दूतः—$D_1$, $B_2$, $D_2$, $D_5$ have उपकृष्णाद् गतः उपकृष्णादागतः $Dc_1$, $Bc_3$; अपञ्चम्याः किम् । उपकृष्णाद् गतः । $D_3$. ४. $B_1$ has only अम्भावः in place of the whole Vritti. ५. उपकृष्णं कृतमुपकृष्णेन वा $B_1$; उपकृष्णेन कार्यमुपकृष्णम् । $D_4$. ६. वा स्थितः $B_1$, $B_2$. ७. °दन्यथा स्यात् $Dc_1$, $Bc_3$. ८. इत्यर्थः dropped $D_3$. ९. उन्मत्तगङ्गादिश्च $Dc_2$.

तेन सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः[1]। समृद्धौ। मद्राणां समृद्धिः सुमद्रम्[2]। व्यृद्धौ[3]। यवनानां व्यृद्धिर्दुर्यवनम्[4]। अर्थाभावे।

**अव्ययीभावश्च ॥२।४।१८॥**

अव्ययीभावो[6] नपुंसकं स्यात् ॥ क्लीबत्वाद्ध्रस्वता। मक्षिकाणामभावो निर्मक्षिकम्। अत्यये। अतीतानि हिमानि

---

**उन्मत्तगङ्ग**मिति। 'अन्यपदार्थे च संज्ञायाम्' इति समासः। **सुमद्र**मिति। मद्राणामाधिक्येन ऋद्धिर्वर्तत इत्यर्थः। यदा समृद्धेः प्राधान्यं तदाव्ययीभावः। यदा तु तस्या अप्राधान्यं तदा तत्पुरुषः सुमद्रा इति। ऋद्धिमन्तो मद्रा इत्यर्थः। व्यृद्धाविति। ऋद्धेर्विगमो व्यृद्धिः। **दुर्यवन**मिति। यवनानामृद्धिविगमो वर्तत इत्यर्थः। ननु च ऋद्धिविगमोर्थाभाव एव तत् किं पृथगुच्यते व्यृद्धिरिति। उच्यते। अर्थाभावो ह्युत्तरपदार्थाभावः। तथा हि निर्मक्षिकमिति मक्षिकाणामभाव उच्यते। न तथा दुर्यवनमिति यवनानामभावः किं तु तदीयऋद्धेरभावः। **अर्थाभाव** इति। अर्थाभावे वर्तमानमव्ययं समस्यते। ननु चाभाव इत्येव सिद्धे अर्थग्रहणं किमर्थम्। धर्माभावे इतरेतराभावे च समासाभावार्थम्। धर्माभावे। न भवति ब्राह्मणः। अत्र ब्राह्मणत्वं धर्मो निषिध्यते इति नार्थाभावोयम्। इतरेतराभावे। गौरश्वो न भवतीति। अत्राप्यर्थान्तरत्वं निषिध्यते। नार्थः।

**अव्ययी**। पूर्वपदार्थप्रधानस्यालिङ्गत्वे प्राप्ते अन्यपदार्थप्रधानस्योन्मत्तगङ्गमित्यादावभिधेयवल्लिङ्गे प्राप्ते वचनम्। **क्लीबत्वात् ह्रस्वते**ति। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति। **अत्यय** इति।

---

१. उपसुमद्रं C. २. After it—उन्मत्तगङ्गमित्यत्र 'अन्यपदार्थे च संज्ञायाम्' इत्यव्ययीभावसमासः। $D_5$. ३. वृद्धौ $Dc_1$; वृद्धौ $B_1$, $B_2$. ४. दुर्यवनम् P, $D_1$, $D_2$ drop यवनानां व्यृद्धिः। वृद्धौ दुर्यवनम् $D_4$, $D_5$. ५. व्यृद्धिर्वैरागः दुर्यवनम् C. ६. अव्ययीभावेपि $B_1$.

निर्हिमम् । असम्प्रति । नायं निद्राकालोऽतिनिद्रम् । शब्दप्रादुर्भावे । इतिहरि हरिशब्दप्रकाशित इत्यर्थः । पश्चात् । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । विष्णुं विष्णुं प्रति प्रतिविष्णु । आनुपूर्व्ये । ज्येष्ठमनुक्रम्य अनुज्येष्ठम् । यौगपद्ये ।

---

अत्ययोऽतिक्रमः प्रध्वंसाभावस्तत्र वर्तमानमव्ययं समस्यते । ननु चात्ययोऽर्थाभाव एव पृथग्वचनं व्यर्थम् । नैवम् । अर्थाभावः क्वचिद्देशविशेषे वस्तुनः कालत्रयेऽप्यभावः । अत्ययः पुनरुत्पन्नस्य प्रध्वंस इत्यर्थाभावाद्भिन्नत्वात् पृथगुच्यते । असंप्रतीति । संप्रत्यभाव इत्यर्थः । अनेनोपभोग्यस्य वस्तुनो यो वर्तमानः कालस्तस्य निषेधः क्रियत इत्यर्थाभावादत्ययाच्च पृथगुच्यते । **शब्दप्रादुर्भाव इति** । शब्दप्रादुर्भावः शब्दप्रकाशः । **पश्चादिति** । पश्चादर्थे यदव्ययं तत् समस्यते । **अनुरूपमिति** । योग्यतार्थे वर्तमानोऽत्रानुः समस्यते । **विष्णुं विष्णुं प्रतीति** प्रतिविष्णु इत्यस्य विग्रहः । ननु च नित्यसमासत्वाद् वाक्याभावात् स्वपदविग्रहः कथं क्रियत इति चेदुच्यते । अर्थमर्थं प्रतीत्यादि भाष्यप्रयोगात् वाक्यमपि स्यात् । यद्वा प्रतिशब्दस्य वीप्सार्थे कर्मप्रवचनीयसंज्ञा विहिता तद्योगे द्वितीयाप्राप्त्यर्थं तस्याश्च वाक्य एव प्रयोग इति वाक्यमपि स्यादिति स्वपदविग्रहः कृतः । **पदमञ्जरीकारमते** तु नात्राव्ययं वीप्सावृत्ति किं तर्हि कर्मप्रवचनीयत्वात् संबन्धावच्छेदकं वीप्सा तु द्विर्वचनद्योत्येत्यस्वपदविग्रहः । पदार्थानतिक्रमवाच्यव्ययसमासोदाहरणं 'यथासादृश्ये' इत्यत्र वक्ष्यति । सादृश्योदाहरणं चानन्तरमेव वक्ष्यति । **यौगपद्य इति** । यौगपद्यमेककालता ।

---

१. C has before it हरौ इति. २. हरिः $D_3$. ३. प्रकाशक $D_1$; प्रकाशत $B_2$; शब्दः प्रकाशते $D_4$, $D_5$. ४. Dropped in $B_1$. ५. प्रतीति C. ६. °देशे विशेषवस्तुनः $Dc_3$. ७. वर्तमानकाल° $Dc_1$. ८. °स्तस्यैव $Dc_2$, $Dc_3$, $Dc_4$.

**अव्ययीभावे चाकाले ॥६।३।८१॥**

सहस्य सः स्यादव्ययीभावे न तु काले । चक्रेण युगपद्धेहि धेनुः[1] सचक्रम् । काले तु सहपूर्वाह्णम् । सादृश्ये । हरेः सादृश्यं सहरि । यथार्थत्वेन सिद्धे[2] गुणभूतेपि[3] सादृश्ये स्यादिति[4] पुनर्वचनम् । सदृशः सख्या ससखि । संपत्तौ[5] । क्षत्राणां संपत्तिः सक्षत्रम् । ऋद्धेराधिक्यं समृद्धिः । अनुरूप आत्मभावः[6] संपत्तिरिति भेदः ।

---

**अव्ययी** । **न तु काल** इति । कालवाचिन्युत्तरपदे न भवतीत्यर्थः । **चक्रेणेत्यादि** । चक्रं शार्ङ्गं च युगपद् धारयतीत्यर्थः । **सादृश्ये** इति । सादृश्यं तुल्यता । **गुणभूतेपि सादृश्ये स्यादिति** । यदि सादृश्ये इति नोच्येत तदा पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात् प्रधानं स्यात् तदैव स्यात् समासः । यदा तु सादृश्यं विशेषणत्वादप्रधानं स्यात् तदा न स्यात् । अस्मात्तु[7] वचनात्तदापि स्यात् । **सदृशः सख्येति** । सादृश्यवतः प्राधान्यदर्शनेन सादृश्यस्य गुणभावं दर्शयितुं सदृश इत्युक्तम् । ननु च संपत्तिः समृद्धिरेव तत् कस्मात् पुनरुच्यते संपत्तिरित्याशङ्क्याह । **ऋद्धेरित्यादि** । ऋद्धेर्हस्त्यश्वादिकाया आधिक्यं समृद्धिरित्यर्थः । **अनुरूप आत्मभाव** इति । अनुरूपः सदृशो य आत्मभावः संपत्तिरित्यर्थः । **सक्षत्रमिति** । शालङ्कायनानामिति शेषः । क्षत्रभावोनुरूपः शालङ्कायनानामित्यर्थः । तथा सब्रह्म बाभ्रवाणामित्यादि संपत्त्युदाहरणं ज्ञेयम् । तत्रापि बाभ्रवाणामनुरूपो ब्रह्मभाव इत्यर्थः ।

---

१. D1, Dc1, D3 drop धनुः. २. सिद्धेपि गुणभूते D3. ३. गुणभूते गौणत्वेपि D5. ४. यथा स्यादिति C; D4. ५. After it—विशेषणत्वात् गौणम् D4; Before it—गौणत्वाद्विशेषणम् । D5. ६. आत्मलाभः C. ७. तु dropped Dc2. ८. स संपत्ति° Bc1, Dc1, Dc4. ९. Dropped Dc3.

साकल्ये । तृणेन सकलमत्ति सतृणम्[1] । अन्तवचने । अग्निग्रन्थ-पर्यन्तमधीते साग्नि ।

**यथासादृश्ये ॥२।१।७॥**

[2]असादृश्यार्थो यथाशब्दः सुपा नित्यं समस्यते[3] । सादृश्य-निरासायैतत् । शक्तिमनतिक्रम्य[4] यथाशक्ति । सादृश्ये तु[5] । यथा [6]हरिस्तथा हरः ।

**यावदवधारणे ॥२।१।८॥**

यावदित्येतदवधारणेऽर्थे[7] सुपा नित्यं समस्यते सोऽव्ययी-भावः । यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामाः यावच्छ्लोकम्[8] ।

---

**साकल्य** इति । साकल्यमशेषता । **तृणेनेत्यादि** । न किंचिद-भ्यवहार्यं परित्यजतीत्यर्थः । अधिकार्थवचनेन साकल्यं प्रतिपाद्यते । **अन्तवचने** इति । अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते । **अग्निग्रन्थेत्यादि** । इयं समाप्तिरसकलेप्यध्ययने स्यादिति साकल्यात् पृथगुच्यते ।

**यथा** । ननु च यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे किमर्थं वचनमित्याशङ्क्याह । **सादृश्यनिरासायैतदिति** ।

**यावत्** । अवधारणं परिमाणनिश्चयः । **यावन्त** इत्यादि । निर्ज्ञातपरिमाणैः श्लोकैः प्रणामपरिमाणमिहावधार्यते । अवधारणे किम् । यावद्दत्तं तावद् भुक्तं नावधारयामि कियन्मया भुक्तमिति । स्पष्टत्वात् त्यक्तं नामपूर्वपदाव्ययीभावप्रतिपादनपरं सूत्रत्रयं व्याख्यायते ।

---

१. सतृणमत्ति P. २. असादृश्येऽर्थे $D_2$. ३. After it—सोऽव्ययीभावः $B_1$. ४. करोतीति after it in C. ५. Dropped $D_3$. ६. हरस्तथा हरिः C. ७. °धारणार्थे $B_1$, $D_1$. ८. इति before it in $B_1$.

## सुप्[1] प्रतिना मात्रार्थे ॥२।१।९॥

मात्रा बिन्दुस्तोकमिति[2] पर्यायाः[3]। मात्रार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते सोऽव्ययीभावः। अस्त्यत्र किंचित् सूपः[4]। सूपप्रति। शाकप्रति। मात्रार्थे[5] इति किम्। वृक्षं[6] प्रति विद्योतते विद्युत्।

---

'सुप्प्रतिना मात्रार्थे' ॥२।१।९॥ अल्पार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते सोऽव्ययीभावः। सूपोल्पोस्मिन् भोजने सूपप्रति। शाकप्रति। मात्रार्थे किम्। वृक्षं प्रति विद्योतते विद्युत्। सुबिति वर्तमाने पुनः सुप्ग्रहणमव्ययनिवृत्त्यर्थम्। 'अक्षशलाकासंख्याः परिणा' ॥२।१।१०॥ अक्षादयः परिणा समस्यन्ते सोऽव्ययीभावः। कितवव्यवहारे चायमिष्यते। पञ्चिका नाम द्यूतं तच्च पञ्चभिरक्षैः शलाकाभिर्वा स्यात्। तत्र यदा सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयिता जयति। अन्यथा पाते तु पराजयते। अक्षेणेदं न तथा वृत्तं यथा पूर्वजये। अक्षपरि। शलकापरि। संख्या। एकपरि। द्विपरि। त्रिपरि। चतुःपरि। पञ्चसु त्वेकरूपासु जय एव। तथा चोक्तं[7] वार्तिके।

'अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेक्षशलाकयोः' ॥ इति

'विभाषा' ॥२।१।११॥ यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र विभाषेत्यधिकृतं ज्ञेयम्।

---

१. Before it— 'विभाषा'—विभाषेत्ययमधिकारादित ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा विकल्पेन भवति। $D_4$. This Sûtra and Vṛitti dropped $D_5$, Com. २. °स्तोकमल्पमिति P. ३. पर्यायः $D_1$. ४. सूपमात्रं $D_1$; सुपम् $B_2$, $D_3$, $D_4$. ५. मात्रार्थ किम् P; $D_3$, मात्रार्थेति किम् $B_1$. ६. वृक्षं वृक्षं $D_3$. ७. च dropped $Dc_1$, $Bc_1$, $Dc_4$.

**अपपरिबहिरञ्चवः पञ्चम्या ॥२।१।१२॥**

एते पञ्चम्या वा समस्यन्ते स प्राक्संज्ञः ॥ अपविष्णु संसारः । अपविष्णोः । परिविष्णु । परिविष्णोः । बहिर्वनम् । बहिर्वनात् । प्राग्वनम् । प्राग्वनात् ।

**आङ् मर्यादाभिविध्योः ॥२।१।१३॥**

आङ् सीमाद्यर्थः[2] पञ्चम्या वा[3] समस्यते स प्राक्संज्ञः । आ मुक्ति संसारः । आ[4] मुक्तेर्वा[5] । अभिविधौ । आबालं हरिभक्तिः । आ बालेभ्यः[6] ।

**लक्षणेनाभिप्रती आभिमुख्ये ॥२।१।१४॥**

---

अप । **अपविष्णोरित्यादि** । 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । **बहिर्वनादिति** । अत एव ज्ञापकाद्बहिर्योगे पञ्चमी । **प्राग्वनादिति** । 'अन्यारात्–' इति पञ्चमी ।

आङ् । **आमुक्तेरित्यादि** । 'आङ् मर्यादावचने' इत्याङ् कर्मप्रवचनीयः । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी ।

**लक्षणेन** । **अभ्यग्नि शलभा इत्यादि** । अग्निमभि अग्निं प्रति शलभाः पतन्तीति विग्रहः । अभेः 'अभिरभागे' इति कर्मप्रवचनीयता । प्रतेस्तु 'लक्षणेत्थम्–' इति । 'कर्मप्रवचनीययुक्ते द्वितीया' इति अग्निशब्दाद् द्वितीया । अत्राग्निर्लक्षणं[7] तेन शलभपातो लक्ष्यते ।

---

१. B has the Sûtra विभाषा ॥ २।१।११॥ अधिकारोऽयम् । विभाषेत्ययमधिकारः । before it; $B_2$, $D_2$ have—विभाषेत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा स्यात्. २. मर्यादाद्यर्थः $D_3$. ३. समस्यते वा $D_3$. ४ आ मुक्तेः संसारः C; P. ५. वा dropped $D_1$, $D_3$, $D_4$, $D_5$. ६. C has a marginal note तेन विना मर्यादा । तेन सहेत्यभिविधिः. ७. अत्र चाग्नि° $Bc_1$, $Dc_3$.

चिह्नवाचिना सह अभिप्रती आभिमुख्यार्थे वा समस्येते[1] से प्राक्संज्ञः[2] । अभ्याग्नि[3] शलभाः पतन्ति[4] अग्निमभि । प्रत्यग्नि आग्निं प्रति ।[5]

## अनुर्यत्समया[6] ॥२।१।१५॥

समया[7] सामीप्यम्[8] । यत्सामीप्यवाच्यनुशब्दस्तेने[9][10][11][12] सह

---

अभिप्रती आभिमुख्ये वर्तेते । तथा हि अभ्यग्नि प्रत्यग्नि इत्यग्नेरभि[13]-मुखमेव शलभाः पतन्ति न पार्श्वतो न पृष्ठत इति प्रतीयते । लक्षणेनेति किम् । स्रुघ्नान्मथुरां प्रस्थितो दिङ्मोहात् स्रुघ्नमेव प्रतिनिवृत्तः । यदुद्दिश्याभिगच्छन्ति तदेव लक्षणं स्यादिति नात्र स्रुघ्नो लक्षणम् । अभिप्रतीति किम् । येनाग्निस्तेन गतः । भवत्यत्राग्निर्लक्षणम् । आभिमुख्यमप्यस्ति । किं तु अभिप्रती न स्तः । आभिमुख्ये किम् । अभिनवोऽङ्को यासां ता अभ्यङ्काः । प्रतिनवोऽङ्को यासां ताः प्रत्यङ्काः । अङ्कोऽत्र लक्षणं भवति । आभिमुख्यं तु नास्ति । ननु चात्र परत्वाद्बहुव्रीहिर्बाधकः स्यात् । किमाभिमुख्यग्रहणेन[14] । मैवम् । अशेषत्वाद्बहुव्रीहिर्न स्यात् । अथवैतत् ज्ञापयति यद्बहुव्रीहिरव्ययीभावेन बाध्यते । ततश्च द्वौ मुनी वंश्यौ यस्य द्विमुनि[15] व्याकरणमिति सिद्धम् । अन्यथा स्वपदार्थे कृतार्थोऽव्ययीभावो द्विमुनि व्याकरणमित्यत्र बहुव्रीहिणा बाध्येत । स्पष्टत्वात् त्यक्तं सूत्रं व्याख्यायते ।

'अनुर्यत्समया'। २।१।१५ । यस्य सामीप्यमाहानुस्तेन[16] सह

---

१. Dropped $D_3$. २. स प्राक्संज्ञः dropped P, $D_1$, $D_3$. ३. अभ्यग्नि अग्निमभि शलभाः पतन्ति $B_1$, C, P. ४. पतन्ति dropped $D_2$, $D_3$. ५. After it—लक्षणेनेति किम् । द्वारकां प्रति । लक्षणे किम् । द्वारकां प्रति गतः । $D_5$. ६. This and the next (२।१।१६) Sûtra with the Vritti dropped $D_5$, Com. ७. $B_1$ drops समया सामीप्यम् ८. समीपम् P, $D_3$. ९. अनुर्यस्य समीपवाची तेन लक्षणभूतेन सुबन्तेन सह । $D_3$ ; अनुर्यस्य सामीप्यवाची तेन लक्षणभूतेन सुबन्तेन सह वा समस्यते सोऽव्ययीभावः । $D_4$. १०. °समीप° P, $D_2$. ११. शब्दः dropped $D_2$. १२. तेन लक्षणभूतेन सुबन्तेन सह $B_2$. १३. °राभिमुख्य° $Dc_1$. १४. °ग्रहेण $Dc_1$, $Dc_4$, $Bc_1$. १५. After it—त्रिमुनि $Dc_2$. १६. समीप° $Dc_1$.

समस्यते[१] स[२] प्राक्संज्ञः । अनुवनमशनिर्गतः[३] । वनसमीपे[४] [५] गत इत्यर्थः । 'अव्ययं[६] विभक्तिसमीप—' इति सिद्धे पुनर्वचनं विभाषार्थं ।

**यस्य[७] चायामः ॥२।१।१६॥**

यस्य[८] दैर्घ्यवाची अनुस्तेन लक्षणेन समस्यते[९] [१०] सोऽव्ययी[११]-भावः । अनुगङ्गं काशी । गङ्गादैर्घ्येणात्र काशीदैर्घ्यं लक्ष्यते ।

---

समस्यते सोऽव्ययीभावः । अनुवनमशनिर्गतः । वनस्य समीपं गत इत्यर्थः । अनुः किम् । वनं समया । समया किम् । वृक्षमनु विद्योतते विद्युत् । 'अव्ययं विभक्तिसमीप—'इत्येव सिद्धे पुनर्वचनं विभाषार्थम् ।

**यस्य** । अत्रोपचारेणायामवाचित्वादनुरेवायामशब्देनोच्यते इत्यभिप्रेत्याह । **यस्य दैर्घ्यवाच्यनुरिति** । **अनुगङ्गमिति** । यथा गङ्गा प्रागायता तथा काशी[१२] प्रागायतेत्यर्थः । यद्यप्यत्र गङ्गा-काश्यावायामवत्यौ तथापि दीर्घवत्तया प्रसिद्धत्वात् गङ्गैवात्र लक्षणं न काशी । प्रसिद्धं हि लक्षणं स्यात् । **गङ्गादैर्घ्येणेत्यादि** । हेतोरेषा तृतीया । गङ्गादैर्घ्येण हेतुना तद्वत्या गङ्गया लक्षणभूतया करणत्वमापन्नया काश्यायामो लक्ष्यत इत्ययमर्थो ज्ञेयः ।

---

१. After it–वा $B_1$. २. सोऽव्ययीभावः $D_1$, $B_2$. ३. $B_1$ has अत्रेः समीपमन्वद्रि for अनुवन...विभाषार्थं ।. ४. वन...विभाषार्थं dropped P. ५. समीपं $D_1$, $B_2$. $D_4$. ६. अव्ययं...विभाषार्थं dropped $D_1$, $D_4$. ७. $B_1$, $D_2$ have 'अनुर्यत्समया' ॥२।१।१५॥ before it. ८, Before it–आयामो दैर्घ्यम् C. ९. Before it—सह $B_1$, $Dc_1$, $D_4$, $D_5$; लक्षणार्थेन सह $B_2$, १०. After it—वा $B_1$. ११. सोऽव्ययीभावः dropped $B_1$, $D_1$, $D_3$, $D_4$. १२. काशीत्यर्थः । $Dc_1$.

## तिष्ठद्गुप्रभृतीनि च ॥२।१।१७॥[1]

कालविशेषे निपात्यन्ते[2] सोऽव्ययीभावः[3] ॥ तिष्ठन्ति गावो यस्मिन् काले स[4] तिष्ठद्गु । एवं[5] वहद्गु[6] । आयतीगवम्[7] । खलेयवम् । लूनयवम् । पूतयवम् । संहृतयवमित्यादि ।

---

'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावत्वादव्ययत्वमित्यग्रे वक्ष्यति । तेन व्याख्यातप्रायत्वात् त्यक्तं सूत्रं व्याख्यायते । 'तिष्ठद्गुप्रभृतीनि च' ।२।१।१७। एते समुदाया एव निपात्यन्तेऽव्ययीभावसंज्ञाः । तिष्ठन्ति गावो यस्मिन् कालविशेषे दोहनाय स तिष्ठद्गु कालः । खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेणैव संबध्यन्ते अन्यपदार्थे च वर्तन्ते । चकारोऽवधारणार्थः । तेनान्यः समासो न । परमातिष्ठद्गु इति । तिष्ठद्गु । वहद्गु । आयतीगवम् । खलेयवम् । खलेबुसम् । लूनयवम् । लूयमानयवम् । पूतयवम् । पूयमानयवम् । संहृतयवम् । संह्रियमाणयवम् । संहृतबुसम् । संह्रियमाणबुसम्– एते कालवाचिनः । समभूमि । समपदाति । सुषमम् । विषमम् । दुःसमम् । अपरसमम् । आयतीसमम् । प्ररथम् । प्रमृगम् । प्रदक्षिणम् । अपरदक्षिणम् । संप्रति । असंप्रति । पापसमम् । पुण्यसमम् । आयतीसमम् । प्राह्णम् । 'इच् कर्मव्यतिहारे' । केशाकेशि ।

---

१. The Com. drops the Sûtra. २. Before it—एते D₄. ३. C drops सोऽव्ययीभावः; स प्राक्संज्ञः D₁; तिष्ठद्गुप्रभृतीनि शब्दरूपाणि उक्तसंज्ञानि स्युः । D₄. ४. तिष्ठद्गुकालविशेषे B₂. ५. खलेयवम् । लूनयवम् in C; for एवं to °मित्यादि; D₁ drops एवम्. ६. After it—आसद्गु D₁; इत्यादि D₄. ७. D₁ drops it; D₄ drops from आयती° to °त्यादि. ८. कालविशेषः । Dc₃.

**पारेमध्ये षष्ठ्या वा ॥२।१।१८॥**

पारे मध्ये शब्दौ षष्ठ्या वा समस्येते सोऽव्ययीभावः। षष्ठीसमासापवादः। एदन्तत्वं चानयोर्निपात्यते ॥ पारे गङ्गायाः पारे गङ्गम्। मध्ये गङ्गम्। पक्षे तत्पुरुषः। गङ्गापारम्। गङ्गामध्यम्। महाविकल्पेन वाक्यमपि। गङ्गायाः पारम्।

**संख्या वंश्येन ॥२।१।१९॥**

वंशो द्विधा विद्यया जन्मना च। तत्र भवो वंश्यस्तद्वाचिना संख्या वा समस्यते स प्राक्संज्ञः ॥ द्वौ मुनी वंश्यौ द्विमुनि त्रिमुनि व्याकरणस्य। विद्यातद्वतामभेदविवक्षायां त्रिमुनि व्याकरणम्।

---

**पारे**। विभाषेत्यनुवर्तमानेपि पुनर्वाग्रहणं पक्षे षष्ठीसमासाभ्यनुज्ञानार्थमित्याह। **पक्षे तत्पुरुष** इति। यदि पक्षे तत्पुरुषो वावचनात् स्यात्तदा महाविभाषया किं क्रियत इत्यत आह। **महाविकल्पेनेति**।

**संख्या**। वंशः प्राणिनामेकस्वभावः संतानः। विद्यया वैयाकरणवंशः उपाध्यायवंशः। जन्मना ब्राह्मणवंशः क्षात्रियवंशः। तत्र भवो वंश्य इति। दिगादित्वाद्यत्। **द्वौ मुनी** इति। पाणिनिकात्यायनौ। **त्रिमुनी**ति। पूर्वोक्तौ द्वौ भाष्यकारश्चेति। त्रयो मुनयो व्याकरणस्येति संबन्धे षष्ठी। विद्यावतां पाणिनिप्रभृतीनामतिशयेन विद्यायोगमाख्यातुं यदा व्याकरणाख्यया विद्ययाभेदो विवक्ष्यते तदा सामानाधिकरण्यं स्यादित्याह। **विद्यातद्वतामिति**।

---

१. वा षष्ठ्या $D_6$. २. $B_1$ has a marginal note—सम्यक्साधितसिद्धरूपपठनं निपातः. ३. $B_1$, $B_2$ have नेहैत्वम् before it. ४. तद्वाच्चिनो P. ५. $D_1$ drops स. ६. प्राक्संज्ञकः P.

## नदीभिश्च ॥२।१।२०॥

नदीभिः संख्या समस्यते सोऽव्ययीभावः ॥ समाहारे चायमिष्यते । सप्तगङ्गम् । द्वियमुनम् ।

## अन्यपदार्थे च संज्ञायाम् ॥२।१।२१॥

नदीभिः सह सुबन्तं समस्यतेऽन्यपदार्थे नाम्नि सोऽव्ययीभावः ॥ उन्मत्तगङ्गं देशः । वाधिकारेप्ययं नित्यसमासः । न हि वाक्येन संज्ञा गम्यते । नाम्नि किम् । शीघ्रगङ्गो देशः ।

---

नदी । चकारेण संख्यानुकृष्यत इत्यभिप्रेत्याह । **संख्येति** । नदीभिरिति बहुवचननिर्देशादर्थस्येदं ग्रहणम् । तेन सर्वैस्तद्वाचिभिः समासः स्यात् । **समाहारेति** । चशब्दोवधारणे । समाहार एव नान्यत्रेति । **सप्तगङ्गमिति** । सप्त गङ्गाः समाहृताः । **द्वियमुनमिति** । द्वे यमुने समाहृते । 'तृतीयासप्तम्योर्बहुलम्' इत्यत्रोन्मत्तगङ्गमित्युदाहरणोक्त्यैव व्याख्यातप्रायत्वात् त्यक्त्वं व्याख्यायते ।

'अन्यपदार्थे च संज्ञायाम्' ॥२।१।२१॥ संख्येति निवृत्तम् । नदीग्रहणमनुवर्तते । नदीभिः सह सुबन्तमन्यपदार्थे समस्यते संज्ञायां सोऽव्ययीभावः । विभाषाधिकारेपि नित्यसमास एवायम् । न हि वाक्येन संज्ञा गम्यते । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् । तूष्णींगङ्गम् । शनैर्गङ्गम् । अन्यपदार्थे किम् । कृष्णा चासौ वेणा च कृष्णवेणा । संज्ञायां किम् । शीघ्रगङ्गो देशः । इतः प्रभृति अव्ययीभावसंज्ञशब्देन ये समासान्ता उच्यन्ते तान् दर्शयति तथा तत्पुरुषादौ वक्ष्यति । साधारणांस्तु समासान्तानग्रे स्वतन्त्रे समासान्तप्रकरणे वक्ष्यति ।

---

१. स प्राक्संज्ञः । $Dc_1$. २. °न्यार्थे $D_1$, $D_4$. ३. स प्राक्संज्ञः $B_1$. ४. महाविभाषेति वाधि° $D_4$.

अव्ययीभावे शरत्प्रभृतिभ्यः ॥५।४।१०७॥

शरदादिभ्यष्टच् स्यात् समासान्तोऽव्ययीभावे ॥ उपशरदम् । प्रतिविपाशम् ।

शरद् । विपाश् । अनस् । मनस्[1] । उपानह्[2] । दिव्[3] । हिमवत् । अनडुह् । दिश् । दृश् । विश् । चेतस् । चतुर्[4] । त्यद् । तद् । यद् । कियत् । जराया जरस् च । उपजरसम् । प्रतिपरसमनुभ्योऽक्ष्णः । एभ्योऽक्ष्णष्टच् स्यात्[5][6] । अक्षिशब्दात् टचि कृते भसंज्ञायाम् ।

---

अव्ययी । समासान्त इति । समासान्त इत्यधिकारसूत्राल्लभ्यते । अस्यायमर्थः । इत आरभ्यापादसमाप्तेर्ये प्रत्यया विधास्यन्ते ते समासस्यान्ता अवयवाः स्युस्तद्ग्रहणेन गृह्यन्त इति ज्ञेयम् । प्रयोजनमव्ययीभावादिसंज्ञाः । तेन उपशरदमित्यादौ 'नाव्ययीभावाद्–' इति विधिः स्यात् । द्विपुरीत्यत्र 'द्विगोः' इति ङीप् स्यात् । कोशनिषादिनी 'द्वन्द्वोपतापगर्ह्यात्—' इतीनिः स्यात् । विधुरः । 'तत्पुरुषे तुल्यार्थ—' इति पूर्वपदप्रकृतिभावः स्यात् । उच्चैर्धुरः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्येतत् स्यात् । उपशरदमिति । सामीप्येऽव्ययीभावः । प्रतिविपाशमिति । 'लक्षणेनाभिप्रती–' इति समासः । गणं पठति । शरदित्यादि । येत्र झयन्तास्तेषां नित्यार्थं वचनम् । जराया जरस् चेति । गणसूत्रम् । अस्यायमर्थः । जराशब्दादच् स्यात् जरसादेशश्च । प्रतिपर इत्यादि । अस्यापि गणसूत्रस्यायमर्थः । प्रतिपरःसमनुभ्यः परस्मादक्षिशब्दादच् स्यादिति । अक्षिशब्दादिति । प्रत्यक्षि । अस्मात् टचि कृते 'यचि भम्' इति भसंज्ञायाम् ।

---

१. $B_1$ drops it. २. Before it—अयस् $D_4$. ३. दिव् । उपानह् $B_1$. ४. $D_1$ drops it. ५. $B_1$ drops it. ६. P drops from एभ्यो to स्यात्. ७. C has after it—समासान्तोऽव्ययीभावे ; After it—अव्ययीभावे $D_3$.

**तद्धिताः ॥४।१।७६॥**

अतः[1] परमापञ्चमाध्यायान्ताद्ये[2] प्रत्ययास्ते तद्धितसंज्ञाः[3] स्युः । 'यस्येति च' । प्रत्यक्षम् । परोक्षम् । परोक्षमित्यत्र पारस्करादित्वात् सुट् । श्रीभोजस्तु परःशब्दं निपातं मन्यते । सम[4]क्षम् । अन्वक्षम् ।

**अनश्च ॥५।४।१०८॥**

अन्नन्तादव्ययीभावात् टच् स्यात्[5] ।

---

तद्धिताः । बहुवचनमनुक्ततद्धितपरिग्रहार्थम् । तेन[6] पृथिव्या ञाञौ इत्यादयो लब्धाः स्युः । महासंज्ञाकरणमन्वर्थताज्ञापनार्थम् । तेभ्यो हितास्तद्धिता इति । तदित्यनेन वैदिका लौकिकाश्च शब्दाः प्रत्यवमृश्यन्ते । तेषां व्युत्पाद्यत्वेन प्रकृतत्वात् । तेन तत्रैवाणादयः स्युः यत्र भवन्तस्तेषामुपकारिणः स्युर्नान्यत्रेत्यभिधानलक्षणं तद्धितानामुपपन्नं स्यात् । **प्रत्यक्षमिति** । अक्ष्णोराभिमुख्यम् । 'लक्षणेनाभिप्रती-' इति समासः । अथवाक्ष्यक्षि प्रतीति वीप्सायां समासः । **परोक्षमिति** । अक्षिभ्यां परं परोक्षम् । अत एव समासान्तविधानादव्ययीभावः समासः[7] परार्थे । श्रीभोजस्त्वन्यथा व्याख्यदित्याह । **श्रीभोज** इति । **समक्षमन्वक्षमिति** । अक्ष्णोः समीपम् । पूर्वत्र 'अव्ययम्' इति समासः । उत्तरत्र 'अनुर्यत्-समया' इति ।

**अनश्च** । समासान्तः ।

---

१. अत ऊर्ध्वं P, Dc1. २. °माध्यायान्तं ये P, D1; °माध्यायन्ता ये C. ३. ज्ञेयाः P, dropped D5. ४. अन्वक्षम् । समक्षम् C, B2. ५. D1, D3, D4, D5 drop it. ६. ततः Dc1, Dc4. ७. After it—परः शब्दः Dc2, Bc3.

**नस्तद्धिते ॥६।४।१४४॥**

नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते ॥ उपराजम्[1] । अध्यात्मम् ।

**नपुंसकादन्यतरस्याम् ॥५।४।१०९॥**

अन्नन्तं यत्[2] क्लीबं तदन्तादव्ययीभावाट्टच् वा[3] स्यात् ॥ उपचर्मम् । उपचर्म ।

---

**नस्तद्धिते** । उपराजमिति । सामीप्येऽव्ययीभावः । **अध्यात्ममिति** । आत्मन्यधीति विभक्त्यर्थे । नः किम् । सात्वतः । तद्धितेति किम् । शर्मणा । नान्तस्य टिलोपे सब्रह्मचारि-पीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरस-द्मसुपर्वणां टिलोपस्योपसंख्यानम् । अत्र ये इन्नन्तास्तेषाम् 'इनण्यनपत्ये' इति प्रकृतिभावः प्राप्तो ये त्वन्नन्तास्तेषामन्निति । सब्रह्मचारिण इमे साब्रह्मचाराः पीठसर्पिण इमे पैठसर्पाः । कलापिना प्रोक्तमधीयन्ते कालापाः । कुथुमिन इमे कौथुमाः । तैतिलिजाजलिनावाचार्यौ तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलि-शब्दाभ्यामुच्यते तमधीयते तैतिला जाजला । एवं लाङ्गलाः । शिलालिन इमे शैलालाः । शिखण्डिन इमे शैखण्डाः । सूकरसद्मन इमे सूकरसद्माः । सुपर्वण इमे सौपर्वाः । चर्मणः कोश उपसंख्यानम् । चार्मः कोशः । चार्मणोन्यः । शुनः संकोच उपसंख्यानम् । शौवः संकोचः । शौवनोन्यः ।

**नपुंसकात्** । नपुंसकग्रहणमुत्तरपदविशेषणमित्यभिप्रेत्याह **अन्नन्तं यदित्यादि** । पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम् ।

---

१. राज्ञः समीपमुपराजम् $B_2$. २. यन्नपुंसकं P; $Dc_1$. ३. Dropped $D_2$.

नदीपौर्णमास्याग्रहायणीभ्यः ॥५।४।११०॥

ए[1]भ्यो वा[2] टच् स्या[3]त् ॥ उपनदम् । उपनदि । उप-पौर्णमासम् । उ[4]पपौर्णमासि । इ[5]त्यादि ।

झयः ॥५।४।१११॥

झयन्तादव्ययीभावाट्टच्[6] वा[7] स्यात् ॥ उपसमिधम् । उपसमित् ।

गिरेश्च सेनकस्य ॥५।४।११२॥

गिर्यन्तादव्ययीभावाट्टच्[8] वा स्यात् ॥

---

नदी । एभ्य इति । नद्याद्यन्तादव्ययीभावाद्वा टच् स्यादित्यर्थः । नदीग्रहणेन स्वरूपं गृह्यते न संज्ञा । यदि संज्ञाग्रहः स्यात् पौर्णमास्यादिग्रहं न कुर्यात् । इत्यादीत्यादिना उपाग्रहायणम् । उपाग्रहायणि ।

झयः । झय इति प्रत्याहारग्रहणम् ।

गिरेः[10] । ननु च 'नपुंसकादन्यतरस्याम्' इत्यतोन्यतरस्यां-

---

१. एतदन्ताट्टच् वा $B_1$. २. टच् स्याद्वा $D_1$. ३. Dropped $D_5$. ४. $B_1$ drops उपपौर्णमासि. ५. In place of इत्यादि $D_1$ has—उप आग्राहयणम् । उप आग्राहायणि ; $B_2$ drops it. ६. वा टच् स्यात् $D_1$. ७. स्याद्वा $B_1$; वा dropped $D_3$ ; स्यात् dropped $D_4$. ८. वा टच् स्यात् $D_1$ ; स्याद्वा $D_3$. ९. वा स्या° $Dc_3$. १०. गिरेश्च $Dc_3$.

सेनकग्रहणं पूजार्थम्। उपगिरम्। उपगिरि॥

इत्यव्ययीभावः।

---

ग्रहणेनुवर्तमानेपि सेनकग्रहणं किमर्थमित्याशङ्क्याह। **सेनकग्रहणमिति**।

इत्यव्ययीभावः॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम्।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेगात् प्रसादे सुविशदममलो ह्यव्ययीभावसंज्ञः॥

---

१. उपगिरि। उपगिरम्। D4.

# अथ तत्पुरुषः।

द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥२।१।२४॥

द्वितीयान्तं सुबन्तं समर्थं श्रितादिभिर्वा समस्यते स समासस्तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि। गम्यादेरिष्टिः। ग्रामं गमी ग्रामगमी। ग्रामं गामी ग्रामगामी।

---

अथ तत्पुरुषः। स तु त्रेधा। व्यधिकरणपदः समानाधिकरणपदः संख्यापूर्वपदश्चेति। तत्र तावद् व्यधिकरणपदमाह।

**द्वितीया**। **स समासस्तत्पुरुष** इति। तत्पुरुष इत्यधिकारसूत्राल्लब्धम्। द्वितीयान्तस्य श्रितादिभिः समासविधिर्ज्ञायते। श्रितादिषु कर्तरि क्त इति। स च 'गत्यर्थ—' इत्यादिना। तत्र येन गत्यर्थादयस्तेभ्योनुक्तसमुच्चयार्थाच्चकारात्। **कृष्णं श्रित** इति। समासे कृते 'प्रथमानिर्दिष्टम्—' इत्युपसर्जनत्वाद् द्वितीयान्तस्य पूर्वनिपातः। प्रातिपदिकत्वम्। सुपो लुक्। स्वाद्युत्पत्तिः। एवमुत्तरत्र प्रक्रिया ज्ञेया। **इत्यादी**ति। आदिना भवमतीतो भवातीतः कूपं पतितः कूपपतितो ग्रामं गतो ग्रामगतस्तरङ्गानत्यस्तस्तरङ्गात्यस्तः सुखं प्राप्तः सुखप्राप्तः सुखमापन्नः सुखापन्न इति। **गम्यादेरि**ति। गम्यादेः समासस्येष्टिः। द्वितीयान्तं गम्यादिभिः समस्यते इत्यर्थः। गम्यादयश्च प्रयोगतो ज्ञेयाः। **ग्रामगमी**ति। ग्रामं गमीति विग्रहः। 'गमेरिनिः' इत्यौणादिको भविष्यतीनिः। **ग्रामगामी**ति। आवश्यकाधमर्ण्ययोर्णिनिः। उभयत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीनिषेधः।

---

१. Before it—अथ तत्पुरुषः C. २. समर्थं सुबन्तं P, Dc1. ३. समासः dropped C, D1, D3, D4, Dc1. ४. °स्तत्पुरुषसंज्ञकः P. ५. भवमतीतः कूपं पतितः ग्रामं गतः तरङ्गानत्यस्तः सुखमापन्नः D4. ६. ग्रामं गामी ग्रामगामी dropped D1, D3, D4, D5, B2. ७. Dropped Dc4. ८. द्वितीयेति Dc4. ९. °लभ्यते Dc3.

अन्नं बुभुक्षुरन्नबुभुक्षुः । सुखेप्सुः[1] । तत्त्वबुभुत्सुः[2] । समर्थं[3] किम् । पश्य कृष्णं श्रितस्त्वं साधून् ।

**स्वयं क्तेन ॥२।१।२५॥**

स्वयं क्तेन समस्यते स प्रोक्संज्ञः ॥ स्वयंकृतम्[4] ।

**खट्वा क्षेपे ॥२।१।२६॥**

खट्वा द्वितीयान्ता क्तेन समस्यते निन्दायाम्[5][6] ॥ खट्वारूढो जाल्मः । निन्दायां किम् । खट्वामारूढो व्याचष्टे[7] ।

---

अन्नं बुभुक्षुरिति । भुजेः सन्नन्तात् 'सना शंसभिक्ष उः' । पश्य कृष्णमित्यादि । अत्र कृष्णशब्दस्य पश्येत्यनेन संबन्धः श्रितशब्दस्य साधूनित्यनेन । अतः कृष्णश्रितशब्दयोरन्वयाभावात् समासो न ।

स्वयम् । स्वयमित्यस्याव्ययत्वाद् द्वितीयासंबन्धो नास्तीति द्वितीयाग्रहणमुत्तरार्थमनुवर्तते । स्वयंकृतमिति । आत्मना कृतमित्यर्थः । ऐकपद्यमैकस्वर्यं च समासात् स्यात् ।

खट्वा । खट्वारूढ इति । आङ्पूर्वाद्रुहेः क्तप्रत्यये आरूढ इति स्यात् । अत्र विमार्गप्रस्थानेन निन्दा क्रियते जाल्मस्य । यतोधीत्य गुरुभिरनुज्ञातेन खट्वारोहणं न्याय्यं यत्त्वन्यथा खट्वारोहणं तद्विमार्गप्रस्थानम् । खट्वारोहणमिदं विमार्गप्रस्थानस्योपलक्षणं ज्ञेयम् । सर्व एवाविनीतः खट्वारूढ उच्यते । निन्दात्र समासार्थ एव तेन विभाषाधिकारेपि नित्यसमास एवायम् । न हि वाक्येन निन्दा गम्यते ।

---

१. P, $B_2$, $D_3$ drop सुखेप्सुः । तत्त्वबुभुत्सुः; C has सुखमीप्सुः सुखेप्सुः । तत्त्वं बुभुत्सुः तत्त्वबुभुत्सुः. २. $D_1$ drops तत्त्वबुभुत्सुः; $D_5$, $Dc_1$ drop it and also सुखेप्सुः. ३. तत्पुरुषः $B_2$; C, $D_1$, $D_4$. ४. C has स्वयं भुक्तम् after it. ५. स तत्पुरुषो निन्दायाम् $D_1$. ६. C has स तत्पुरुषः after it. ७. $B_1$ has a marginal note:—क्षेपस्य समासार्थत्वान्नित्यसमासोयं वाक्ये तस्याप्रतीतेः ।; $D_4$ follows $B_1$'s marginal note, $D_1$ gives क्षेपस्य &c. for निन्दायां...to व्याचष्टे ; dropped from निन्दायाम् to व्याचष्टे $D_3$, $D_5$.

**सामि ॥२।१।२७॥**

सामि[1] क्तेन समस्यते ॥ सामिकृतम्[2] ।

[3]**ईषदकृता ॥२।२।७॥**

ईषदित्यव्ययमकृता[4] समस्यते स तत्पुरुषः । ईषत्[5] पिङ्गलः ।

**कालाः ॥२।१।२८॥**

कालवाचिनो द्वितीयान्ताः क्तेन समस्यन्ते[6] । अनत्यन्तसंयोगेपि । मासप्रमितश्चन्द्रः[7] ।

---

**सामी** । सामीत्येतदप्यव्ययमर्धपर्यायं तस्यासत्त्ववाचित्वाद् द्वितीयासंबन्धो नास्ति तत् सुबन्तेन क्तान्तेन समस्यते स तत्पुरुषः ।

**कालाः** । 'अत्यन्तसंयोगे च' इत्येव सिद्धेनत्यन्तसंयोगार्थं वचनमित्याह ।

**अनत्यन्तसंयोगेपीति** । **मासप्रमित** इति । माङ् मान इत्यस्मादादिकर्मणि क्तः । 'द्यतिस्यति—' इतीत्वम् । मासं प्रमातुमारब्ध इत्यर्थः । चन्द्र इति प्रतिपत्संबन्धी चन्द्रोत्र[8] विवक्षितः । ततश्च प्रतिपच्चन्द्रमसा न मासस्य व्याप्तिरिति नास्तीहात्यन्तसंयोगः ।

---

१. Vṛitti dropped P, $B_2$, $D_4$, $Dc_1$; सामि इत्यव्ययं कृदन्तेन समस्यते C; सामीत्येतदर्धपर्यायः स क्तान्तेन समस्यते स च तत्पुरुषः $D_3$. २. After it—अधिकृतमित्यर्थः । क्षेपस्य समासार्थत्वान्नित्यसमासोयम् $D_5$. ३. The Sûtra and the Vṛitti dropped P, $D_3$. ४. °मकृदन्तेन C, $B_2$, $D_4$; °मकृतेन $D_1$. ५. ईषत् कृत्यम् $D_1$. ६. After it—स तत्पुरुषः P. ७. °श्चन्द्रमाः $B_2$. ८. अत्र dropped $Dc_3$.

**अत्यन्तसंयोगे च ॥२।१।२९॥**

मुहूर्तं सुखं मुहूर्तसुखम् ।

**तृतीया तत्कृतार्थेन गुणवचनेन ॥२।१।३०॥**

तृतीयान्तं समर्थं तृतीयान्तार्थकृतगुणेनार्थेन च समस्यते सं तत्पुरुषः । शङ्कुलया खण्डः शङ्कुलाखण्डः ।

---

**अत्यन्त** । काला इति वर्तते । क्तेनेति निवृत्तम् । अत्यन्तसंयोगः कृत्स्नसंयोगः । कालस्य स्वेन संबन्धिनानवयवेन व्याप्तिः । कालवाचिनो द्वितीयान्ताः सुबन्तेन समस्यन्तेत्यन्तसंयोगे गम्ये । मुहूर्तं सुखमिति । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ।

**तृतीया** । तत्कृतेत्येतदसमस्तमेव 'सुपां सुलुक्' इति लुप्तविभक्तिकं गुणवचनेनेत्येतस्य विशेषणम् । तृतीयान्तेन गुणस्य करणं न संभवत्यतः सामर्थ्यादर्थकृतेनेति ज्ञायत इत्येतत् सर्वं चेतसि कृत्वाह । तृतीयान्तार्थकृतगुणेनेति । तृतीयान्तार्थेन कृतस्तृतीयान्तार्थकृतः । तृतीयान्तार्थकृतो गुणो यस्य गुणिनः स तृतीयान्तार्थकृतगुणो गुणी तद्वाचिनेत्यर्थः । ननु गुणवचनेनेत्येतावतैव कथं गुणी लभ्यते । उच्यते । गुणमुक्तवान् गुणवचनः । अथवा गुण उक्तो येन स गुणवचनः । कर्तरि करणे वा 'कृत्यल्युटो बहुलम्' इति ल्युट् । यश्च पूर्वं गुणे वर्तित्वा पश्चाद् गुणवर्तिद्रव्ये वर्तते स गुणवचनः । एतच्च वचनग्रहणसामर्थ्याल्लभ्यते । अन्यथा गुणेनेत्येवावक्ष्यत् । ततश्च घृतेन पाटवं शङ्कुलया खण्डनमित्येवमादौ गुणेन समासो न । शङ्कुलया खण्ड इति ।

---

१. C, D5 have before it—क्तेनेति निवृत्तम् । कालवाचिनो द्वितीयान्ताः अत्यन्तसंयोगे च समस्यन्ते. २. सुबन्तं before it in C, D1. ३. तृतीयार्थकृत° B1; तृतीयान्तकृत D1; तत्कृतेन गुणेनार्थेन च B2. ४. स समासस्तत्पु° Dc1. ५. °त्यस्य Dc4. ६. ननु च Dc2. ७. शङ्कुलाखण्ड इति Bc1.

धान्येनार्थः धान्यार्थः । तेत्कृतेति किम् । अक्ष्णा काणः । सेमर्थं किम् । नार्थः शङ्कुलया खण्डोसौ ग्राव्णा । सेमर्थानुवृत्तिः सर्वत्र समासे तद्धिते च ज्ञेया ।

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥२।१।३१॥**

एभिस्तृतीया समस्यते[४] । मासेन पूर्वो मासपूर्वः । एवं सदृशादौ । अवरस्येष्टिः । मासावरः ।

---

खण्डशब्दो गुणे खण्डने वर्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद्वा वद्गति द्रव्ये वर्तत इति गुणवचनः । **अक्ष्णा काण** इति । 'येनाङ्गविकारः' इति तृतीया । नात्र तृतीयान्तार्थेनाक्ष्णा देवदत्तस्य काणत्वम् । किं तर्हि । अन्येनैव केनचित् । अक्ष्णा तु केवलं काणगुणयुक्तो लक्ष्यते । गुणवचनेनेति किम् । गोभिर्वपावान् । गोभिः स वपावान् कृतो न तु वपावानित्ययं शब्दो गुणमुक्तवान् । [५]गुणवचनत्वात् । **नार्थः** शङ्कुलयेति । अत्र शङ्कुलयेत्यस्यार्थ-शब्देन संबन्धः । खण्डशब्दस्य ग्राव्णेत्यनेन संबन्धः । ततः शङ्कुलया खण्ड इत्यनयोः संबन्धाभावेनासामर्थ्यान्न समासः । **समर्थानुवृत्तिरिति** । समर्थानुसरणं सर्वत्र ज्ञेयं विशेषतः समासे तद्धिते च । समर्थः पदविधिरिति परिभाषयेत्यभिप्रायः ।

**पूर्व** । **मासेन पूर्व** इति । अस्मादेव समासविधिसामर्थ्यात् तृतीया । **एवं सदृशादाविति** । पित्रा सदृशः पितृसदृशः । मात्रा समः मातृसमः । पापेनोनः पापोनः । पापेन हीनः पापहीनः । शा[६]स्त्रेण कलहः शा[७]स्त्रकलहः । आचारेण निपुणः आचारनिपुणः । तिलैर्मिश्रः तिलमिश्रः । वाचा श्लक्ष्णः वाक्श्लक्ष्णः ।

---

१. तत्कृतेन किम् $D_1$; तत्कृते किम् $D_3$ ; तत्कृतार्थेनेति किम् $D_4$. २. समर्थः $B_1$ ; समर्थेति C. ३, Before it—एवं $D_4$. ४. After it—स तत्पुरुषः $D_1$. ५. न गुण° $Bc_1$. ६. शस्त्रेण $Dc_4$, $Dc_3$. ७. शस्त्र° $Dc_4$. $Dc_3$.

**कर्तृ[1]करणे कृता बहुलम् ॥२।१।३२॥**

कर्तरि करणे च[2] तृतीया कृदन्तेन समस्यते बहुलम् ॥ हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः ।

**कृ[4]त्यैरधिकार्थवचने ॥२।१।३३॥**

क[5]र्तृकरणवाचि तृतीयान्तं कृत्यैः समस्यते स्तुतिनिन्दाधिक्यारोपे ॥

---

कर्तृ । हरिणा त्रात इति कर्तरि तृतीया । नखैर्भिन्न इति करणे । कर्तृकरण इति किम् । भिक्षाभिरुषितः । हेतावेषा तृतीया । बहुलग्रहणं सर्वोपाधिव्यभिचारार्थं तेन दात्रेण लूनवानित्यादौ न । पादहारको गले चोपक इत्यादौ स्यात् । पूर्वस्यैव सूत्रस्य प्रपञ्च इति तद्व्याख्यानेनैव व्याख्यातप्रायत्वात् त्यक्तं सूत्रं व्याख्यायते ।

'कृत्यैरधिकार्थवचने' ॥२।१।३३॥ स्तुत्यर्थं निन्दार्थं वा असतः समा[7]रोपितार्थस्य वचनमधिकार्थवचनं तस्मिन् द्योत्ये कर्तरि करणे च या तृतीया सा कृत्यैः सह समस्यते । कर्तरि

---

१. कर्तरि कारके $Dc_1$. २. च या तृतीया सा C. ३. After it—C has बहुलोक्तेर्वृक्षारूढ इत्यादावपि स्यात् । दात्रेण लूनवानेवमादौ च न स्यात् ।; $B_2$ has—बहुलग्रहणात् भिक्षाभिरुषितः । दात्रेण लूनवान् । खड्गैश्छिन्नवान् । कर्तृकरणे किम् । भिक्षाभिरुषितः । बहुलग्रहणं किम् । दात्रेण लूनवान् । खड्गेन छिन्नवान् $D_4$; $D_5$ follows $B_2$ and has इत्यादौ न after छिन्नवान्. ४. The Sûtra and the Vritti dropped $D_3$, $D_5$, Com. ५. तृतीयान्तं समर्थमधिकोक्तौ कृत्यैः सह समस्यते । तत्स्तुतिर्निन्दा वाधिकार्थता । काकपेया नदी । बाष्पैश्छेद्यानि तृणानि बाष्पच्छेद्यानि तृणानि । $B_2$; तृतीयान्तं कर्तृकरणं सुबन्तं कृत्यैः सह समस्यते अधिकार्थे स्तुतिनिन्दाधिक्यारोपे । $D_4$. ६. इत्यादि $Dc_3$ ७. समारोपितस्या° $Bc_1$.

काकपेया नदी । बाष्पच्छेद्यानि तृणानि । कृत्यग्रहणे[1] यण्यतोर्ग्रहणम् । नेह[2] । काकैः पातव्या ।

**अन्नेन व्यञ्जनम् २।१।३४॥**

व्यञ्जनवाचि तृतीयान्तमन्नवाचिना समस्यते[3] ॥ क्षीरेण सिक्त ओदनः क्षीरोदनः ।

**भक्ष्येण[4] मिश्रीकरणम् ॥२।१।३५॥**

मिश्रीकरणवाचि तृतीयान्तं भक्ष्येण[5] समस्यते ॥ गुडेन मिश्रा धाना गुडधानाः ।

---

काकपेया नदी । करणे । बाष्पच्छेद्यानि तृणानि । एवं नाम पूर्णतोया नदी यत् तटस्थैः काकैरपि शक्या पातुम् । एवं नाम कोमलानि तृणानि यद् बाष्पेणापि छिद्यन्ते । एवं स्तुतिप्रयुक्ते अधिकार्थवचने उदाहरणे एते । एते एव निन्दार्थ-[6]प्रयुक्तेप्यधिकार्थवचने । एवं[7] नामाल्पतोया नदी यत् काकैरपि शक्या पातुम् । एवं नाम क्वथितानि तृणानि यद् बाष्पेणापि छिद्यन्ते ।

**अन्नेन** । संस्कार्यमभ्यवहार्यमन्नमोदनादि । संस्कारकं व्यञ्जनं क्षीरादि । **क्षीरोदन** इति । उपसेचनादिक्रियां विना संस्कार्यं संस्कारकं च न संभवतीति वृत्तावुपसेचनादिक्रियान्तर्भावादन्न-व्यञ्जनयोः सामर्थ्यम् । अत एवेदृशं वाक्यं दर्शितं क्षीरेण सिक्त ओदन इति ।

**भक्ष्येण** । खरविशदमभ्यवहार्यं भक्ष्यं तस्य संस्कारकं मिश्रीकरणम् । अमिश्रं मिश्रं क्रियतेनेनेति मिश्रीकरणम् । **गुडधाना** इति । वृत्तौ मिश्रक्रियाया अन्तर्भावात् पूर्वोत्तरपदयोः सामर्थ्यम् ।

---

१. कृत्यानां ग्रहणे $D_4$. २. काकैः पातव्या नदी । C. ३. तृतीयान्त-मन्नेन सह समस्यते । $B_1$. ४. भक्षेण $D_3$, $D_5$. ५. भक्षेण $D_1$, $D_3$, $D_5$ ; भक्ष्येण सह $B_1$. ६. निन्दार्थं $D_2$. ७. तथाहि । एवं° $Bc_1$. ८. प्रयुक्त $Dc_1$.

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥२।१।३६॥**

[1]चतुर्थ्यन्तार्थाय यत् [2]तद्वाचिनार्थादिभिश्च [3]चतुर्थी वा समस्यते॥ [4]तदर्थेन प्रकृतिविकारभाव एवेष्टिः। यूपाय दा[5]रु यूपदारु। अन्यत्र न। रन्धनाय स्थाली॥ अर्थेन नित्यसमासः सर्वलिङ्गता च* ॥ द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। [6]भूतबलिः। [7]गोहितम्। गोसुखम्। गोरक्षितम्।

---

**चतुर्थी**। तदर्थशब्दे तच्छब्देन सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते तस्मै इदं तदर्थमिति। एतदभिप्रेत्याह। **चतुर्थ्यन्तार्थाय यदिति**। **अर्थादिभिश्चेति**। अर्थबलिहितसुखरक्षितैः। **तदर्थेनेति**। तदर्थेन सह समासः प्रकृतिविकारभाव एव स्यादितीष्टिः। **यूपाय दारु** इति। तादर्थ्ये चतुर्थी। अत्र दारु प्रकृतिर्यूपो विकृतिः। **रन्धनाय स्थालीति**। तादर्थ्ये एवं चतुर्थी। अत्र स्थाली न रन्धनस्य प्रकृतिः किं त्वाधारमात्रम्। **अर्थेनेति**। अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमासः स्यात् सर्वलिङ्गता च समासे सति स्यादिति वक्तव्यम्। अन्यथा विभाषाधिकारादनित्य एव समासः स्यात्। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परपदलिङ्गतैव च स्यात्। **भूतबलिरिति**। भूतेभ्यो बलिः। तादर्थ्ये चतुर्थी। पूर्वत्रापि सर्वत्र तादर्थ्ये एव चतुर्थी। **गोहितमिति**। गोभ्यो हितम्। 'हितयोगे च' इति चतुर्थी। **गोसुखमिति**। गोभ्यः सुखम्। 'चतुर्थी चाशिष्या—' इति चतुर्थी। **गोरक्षितमिति**। तादर्थ्ये चतुर्थी।

---

१. चतुर्थ्यन्तं यत् $B_1$, $D_2$. २. तदर्थवाचिना $B_1$; तदर्थादिभिः $B_2$. ३. $B_1$ drops it; चतुर्थी वा dropped $D_3$. ४. तदर्थेति C. ५. दारुः $D_3$. ६. भूतेभ्यो बलिः $B_1$. ७. गोभ्यो रक्षितं गोरक्षितम् before this in $B_1$. ८. Dropped $Dc_2$. ९. Dropped $Dc_2$.

**पञ्चमी भयेन ॥२।१।३७॥**

वा[1] समस्यते । चौराद् भयं चौरभयम् ।

भयभीतभीतिभीभिरिति वाच्यम्* ॥ वृकभीतः[2] । वृकभीतिः[3] । वृकभीः ।

बहुलोक्तेर्[4]ग्रामनिर्गतः[5] । अधर्मजुगुप्सुरित्यादि[6] ।

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः॥ २।१।३८॥**

एभिः पञ्चमी क्वचित् समस्यते ॥ सुखादपेतः[7] सुखापेतः । इत्यादि । अल्पशः[8] किम् । प्रासादात् पतित[9] इत्यादौ क्वचिन्न ।

---

**पञ्चमी** । **वा समस्यत** इति । पञ्चम्यन्तं भयशब्देन वा समस्यत इत्यर्थः । **चौराद् भयमिति** । 'भीत्रार्थानाम्—' इत्यपादानत्वात् पञ्चमी । **बहुलोक्तेरिति** । 'कर्तृकरणे कृता बहुलम्' इति बहुलोक्तेर्ग्रामनिर्गतोधर्मजुगुप्सुरित्यादौ समास इत्यर्थः । तस्यैव बहुलग्रहणस्यायं योगः प्रपञ्चः ।

**अपेत** । अल्पश इत्यनेन समासस्याल्पताख्यायते अल्पेभ्य उत्पन्ना पञ्चमी समस्यत इति । तदिदमाह । **क्वचिदिति** । आदिना कल्पनापोढः चक्रमुक्तः स्वर्गपतितः तरङ्गापत्रस्तः ।

---

१. पञ्चम्यन्तं सुबन्तं भयवाचिना before it in C, $B_2$, $D_5$; पञ्चमी भयेन before it $D_2$, $D_4$; पञ्चमी भयेन समस्यते $D_3$. २. Before it—वृकभयम् $D_4$; dropped $D_5$. ३. वृकभीः । वृकभीतिः । $D_3$. ४. बहुलमिति $D_3$, $D_5$. ५. °ग्रामान्निर्गतो ग्रामनिर्गतः । $D_4$. ६. Before it—अधर्माज्जुगुप्सुः $D_4$. ७. दुःखादपेतो दुःखोपेतः $B_1$. ८. अल्पश इति $B_1$. ९. After it—भोजनादपत्रस्तः $D_4$.

**स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥२।१।३९॥**

एतानि पञ्चम्यन्तानि[1] क्तेन समस्यन्ते ॥ स्तोकान्मुक्तः । अल्पान्मुक्तः । एवमन्तिकार्थदूरार्थयोः । कृच्छ्रान्मुक्तः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् ।

**षष्ठी ॥२।२।८॥**

षष्ठ्यन्तं समर्थं[2] सुबन्तेन समस्यते वा[3] ॥ राज्ञः पुरुषो राजपुरुषः । कृद्योगलक्षणा षष्ठी समस्यते इति वाच्यम्* ॥ षष्ठीसमासनिषेधापवादः । व्यासकृतिः । भरतश्रवणम्[4] ।

---

**स्तोक** । **स्तोकान्मुक्त** इति । 'करणे च स्तोकाल्प–' इति पञ्चमी । ननु च 'सुपो धातुप्रातिपदिकयोः' इति पञ्चमीलोपेन भाव्यम् । समासस्य प्रातिपदिकत्वादित्याशङ्क्याह । **'पञ्चम्याः स्तोकादिभ्यः'** इत्यलुगिति ।

**षष्ठी** । **राजपुरुष** इति । सुपो लुक्यन्तर्वर्तिनीं विभक्ति-माश्रित्य पदत्वान्न लोपः । **कृद्योगलक्षणेति** । 'कर्तृकर्मणोः कृति' इति प्राप्ता षष्ठीत्यनेनैव समासे सिद्धे पुनर्वचनं व्यर्थमित्याशङ्क्याह । **षष्ठीसमासेत्यादि** । प्रतिपदविधानषष्ठ्या न समास इत्यग्रे भविष्यता वक्तव्येन यः षष्ठीसमासनिषेधस्यापवाद इत्यर्थः । **व्यासकृतिरित्यादि** । व्यासस्य कृतिः । कर्तरि षष्ठी । भरतस्य श्रवणम् । कर्मणि ।

---

१. Dropped $D_3$. २. सुबन्तं $B_1$, $D_1$. ३. सह वा C; वा समस्यते $D_5$, B, P, C. ४. भारतश्रवणम् $D_2$, $D_3$, $D_5$.

## याजकादिभिश्च ॥२।२।९॥

एतैः षष्ठी समस्यते । वक्ष्यमाणनिषेधापवादः[1] ॥ द्विजयाजकः । याजक । पूजक । परिचारक । परिवेषक । स्नातक । अध्यापक । उत्सादक[2] । उन्मादक[3] । उद्वर्तक[4] । होतृ । पोतृ । भर्तृ । रथगणक[5] । पत्तिगणक ।

## न निर्धारणे ॥२।२।१०॥

निर्धारणे या षष्ठी सा न समस्यते ॥ नृणां द्विजः श्रेष्ठः ।[6]

---

याजका । वक्ष्यमाणेति । 'तृजकाभ्यां कर्तरि' 'कर्तरि च' इति वक्ष्यमाणस्य निषेधस्यापवाद इत्यर्थः । रथगणकपत्तिगणकेति समस्तपाठो गणकशब्दस्य रथपत्तिशब्दाभ्यामेव समास इति दर्शयितुम् ।

न । निर्धारणं जातिगुणक्रियाभिरेकदेशविवेचनम् । नृणामिति । 'यतश्च निर्धारणम्' इत्यनेन षष्ठी । ननु च प्रतिपदविधानषष्ठ्या न समास इत्यनेनैव निषेधे सिद्धे व्यर्थं वचनम् । मैवम् । यतः 'यतश्च निर्धारणम्' इत्यनेन सप्तम्येव विधीयते षष्ठी तु 'षष्ठी शेषे' इत्यनेनैव प्राप्ता सप्तम्या मा बाधीति चकारेणानुकृष्यते । अत एव गृहस्वामीत्यादौ 'स्वामीश्वर—' इत्यादिना सामान्यविहिताया एव षष्ठ्याश्चकारेणानुकृष्टिरेवेति समासः ।

---

१. Before it—कर्तरि चेति $D_4$. २. C has आच्छादक for उत्सादक । उन्मादक. ३. P, $Dc_1$. $D_1$, $D_3$, $D_4$, $D_5$ omit उन्मादक. ४. After it—उत्पादक $D_2$. ५. $B_1$ has—महरथपत्तयो गणकेन समस्यन्त इति वाच्यम् । महगणकः । रथगणकः । पत्तिगणकः । $B_2$ follows $B_1$, dropping रथगणकः । पत्तिगणकः; $D_2$ has भर्तृ । कर्तृ and then महरथपत्तयो &c. as in $B_2$. ६. इति षष्ठी । $Dc_4$, $Bc_1$.

प्रतिपदविधानषष्ठ्या न समास इति वाच्यम्* ॥ सर्पिषो ज्ञानम् ।

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधि-
करणेन ॥२।२।११॥

एतदर्थैः[2] षष्ठी न समस्यते ॥ पूरणे । सतां षष्ठः । गुणे । पटस्य शौक्ल्यम् । भावप्रत्ययान्तो गुणवाच्यत्र निषिध्यते ।

---

**प्रतिपदविधानेति** । 'षष्ठी शेषे' इति सामान्यविहितां[3] षष्ठीं मुक्त्वान्या विशेषविहिता षष्ठी प्रतिपदविधाना । **सर्पिषो ज्ञानमिति** । 'ज्ञोविदर्थस्य करणे' इति षष्ठी ।

**पूरण** । अर्थशब्दः प्रत्येकमभिसंबध्यते तेन स्वरूपविधानं[4] नेत्यभिप्रेत्याह । **एतदर्थैरिति** । **सतां षष्ठ** इति । षण्णां पूरणः । 'तस्य पूरणे डट्' । 'षट्कतिकतिपयचतुरां थुक्' इति थुक् । **सतामिति** । समुदायसमुदायिसंबन्धे शेषलक्षणैव षष्ठी । एवं पटस्य शौक्ल्यमित्यादिषु गुणगुणिभावादिसंबन्धे शेषलक्षणैव षष्ठी ज्ञेया । **भावप्रत्ययान्त** इत्यादि । गुणवाची गुणशब्दो भावप्रत्ययान्तोत्र सूत्रे निषिध्यते । तथोदाहृतं **पटस्य शौक्ल्यमिति** । **काशिका-वृत्तावप्युदाहारि** बलाकायाः शौक्ल्यं काकस्य कार्ष्ण्यमिति । **भाष्यकारेणापि** बलाकायाः शौक्ल्यमित्याद्युक्त्वोक्तम् । 'एतदेव तास्मिन् योग उदाहरणम्' इति । अथवा पुनःपुनर्गुणमेव वक्तीति गुणवाची । आभीक्ष्ण्ये णिनिः । न कदाचिद् द्रव्यवाचीति यावत् । भावप्रत्ययान्त एव सन् यः केवलगुणवाची[5] भाव-प्रत्ययान्तताभावे तु गुणवाची गुणि द्रव्यवाची च सोत्र निषिध्यत इत्यर्थः । तेन पटस्य शौक्ल्यं पटस्य शुक्लो गुणः

---

१. C has a marginal note—प्रतिपदे विधानेति षष्ठी । शेषेति सामान्य-विहितां षष्ठीं मुक्त्वान्या विशेषविहिता षष्ठी प्रतिपदविधाना ।. २. एतैः सह षष्ठी समस्यते C. ३. सामान्यलक्षणविहितां $Bc_1$. ४. स्वरूपविधिर्नै° $Dc_3$, $Dc_4$. $Dc_1$, $Bc_1$. ५. केवलं $Dc_3$.

सदा गुणवाचिनो न निषेधः । चन्दनगन्धः । सुहितं तृप्तिः । फलानां तृप्तः । सत् । द्विजस्य कुर्वन् ।

ब्राह्मणस्य शुक्ला दन्ता इति सर्वत्र समासो न । तथोक्तम् ।
कदाचित्कः प्रयोगोस्ति गोः शुक्लो गुण इत्ययम् । तेनैवमादिषु बुधैः समासोपि निषिध्यत इति । **सदा गुणवाचिन** इति । यः सदा गुणमेव वक्ति न कदाचिद् द्रव्यं तस्य समासनिषेधो न । तथा चोक्तं **महाभाष्ये** । 'तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् । ब्राह्मणवर्णः । चन्दनगन्धः । पटहशब्दः । नदीघोषः । न तु तद्विशेषणैरिति वक्तव्यम् । घृतस्य तीव्रो गन्धः चन्दनस्य मृदुः' इति । तस्मिन् गुण एव तिष्ठन्तीति तत्स्थाः सदा गुणवाचिन इत्यर्थः । उदाहरति चन्दनगन्ध इति । गन्धो हि केवलं गुण एव वर्तते न कदाचिद् गुणिनि । तथोक्तम् ।

'न कदाचित् प्रयोगोस्ति चन्दनं गन्ध इत्ययम् ।
चन्दनस्यैव गन्धो हि स्वप्रधानः प्रतीयते' ॥ इति ।

कथं गोविंशतिः । यतः संख्याया गुणत्वान्निषेधः स्यात् । नैष दोषः । यदयम् 'शतसहस्रान्ताच्च निष्कात्' इत्याह तज् ज्ञापयति संख्यायाः समासः स्यादिति । न हि तं विना शतसहस्रान्तता प्रातिपदिकस्य स्यात् । 'संज्ञाप्रमाणत्वात्' 'उत्तरपदार्थप्राधान्यम् ।' इत्यादिमुनित्रयप्रयोगादनित्यो गुणेन निषेध इति करणपाटवं बुद्धिमान्द्यं यत्नगौरवमित्यादि सिद्धम् । **फलानां तृप्त** इति । 'तृप्त्यर्थानां करणे षष्ठी वा' इति शेषविवक्षायां षष्ठी । सदिति शतृशानचोः संज्ञा । द्विजस्येत्यादौ शेषे षष्ठी । कुर्वन् । किङ्कर इत्यर्थः ।

१. °वाचिनां D3. २. सुहितार्थाः तृप्त्यर्थाः C. ३. केवले Dc3. ४. तदेव Dc3.

सतां कुर्वाणः । अव्ययम् । सतां कृत्वा । तव्य । सतां कर्तव्यम् । तव्यता भवत्येव । द्विजकर्तव्यम् । समानाधिकरणे । राज्ञो नलस्य । सति समासे पूर्वनिपातानियमः स्यात् । कर्मधारयः स्यादेव ।

**क्तेन च पूजायाम् ॥२।१।१२॥**

पूजायां विहितक्तेन षष्ठी न समस्यते ॥

---

सतां कर्तव्यमित्यत्र 'कृत्यानां कर्तरि वा' इति षष्ठी । तव्यतेत्यादि । निरनुबन्धग्रहणे न सानुबन्धकस्येति परिभाषया तव्यतोऽत्राग्रहणात् तेन समासो भवत्येवेत्यर्थः । **द्विजकर्तव्यमिति** । 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरकृत्स्वरेणान्तस्वरितमुत्तरपदं स्यात् । तव्यतस्तित्त्वात् । यदि तु निरनुबन्धकेनापि समासः स्यात्तदा द्विज-कर्तव्यमित्यत्र प्रकृतिस्वरे कृते तव्यस्य प्रत्ययस्वरेणाद्युदात्तत्वे सति मध्योदात्तत्वं स्यात् । तच्च नेष्टम् । अतो निरनुबन्धेन समास-निषेधो न सानुबन्धेन । ननु च समानाधिकरणस्य षष्ठीसमास-निषेधेपि 'विशेषणं विशेष्येण बहुलम्' इति समासः स्यादेव । एवं चावश्यंभाविनि समासे यदि षष्ठीसमासः स्यात् को बाधः स्यादित्याशङ्क्याह । **सति समासे** इत्यादि । यदि षष्ठीसमासः स्यात् तदा द्वयोरपि षष्ठ्यन्तयोः प्रथमानिर्दिष्टत्वात् पूर्वनिपातोऽनियमेन स्यात् कर्मधारये तु विशेषणस्यैव प्रथमानिर्दिष्टत्वात् पूर्वनिपातो नियम्यत इति कर्मधारयः स्यादेवेत्यर्थः ।

**क्तेन** । पूजायामित्यनेन 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनेन सूत्रेण यः क्तो मत्यादौ विहितः स सर्वो लक्ष्यते इत्याह ।

---

१. तव्यता सानुबन्धेन समासो भवत्येव $B_1$, अत्र तु अनुबन्धोः भवत्येव $B_2$. २. कर्मधारये $D_1$, $D_5$. ३. षष्ठीसमासो न । $B_2$. ४. निरनुबन्धकग्रह° $Dc_2$, $Dc_4$. ५. लक्षित $Bc_1$,

पूजोक्तिरुपलक्षणम् । राज्ञां मतो बुद्धः पूजितो वा[१] ।

**अधिकरणवाचिना च ॥२।२।१३॥**

क्तेन षष्ठी समासो न ॥ इदमेषामासितं गतं भुक्तं वा[२] ।

**कर्माणि[३] च ॥२।२।१४॥**

उभयप्राप्तौ कर्मणि[४] षष्ठ्या समासो[५] न ॥ आश्चर्यो[६] गवां दोहोगोपेन[७] ।

---

**पूजोक्ति**रित्यादि । **राज्ञा**मिति । 'क्तस्य च वर्तमाने' इति षष्ठी[८] । पूजायां किम् । छात्रहसितम् । नपुंसके भावे क्तः । शेषे षष्ठी ।

**अधि** । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणे विहितस्य क्तस्येदं ग्रहणम् । **इदमेषामासित**मित्यादि । आस्यतेऽस्मिन्नित्यासितम् । गम्यतेऽस्मिन्निति गतम् । भुज्यतेऽस्मिन्निति भुक्तम् । एषामिति 'अधिकरणवाचिनश्च' इति षष्ठी । अधिकरणवाचिना किम् । छात्रहसितम् ।

**कर्मणि** । यदि या काचन कर्मणि[९] षष्ठी सा सर्वेह गृह्येत तर्हि 'कर्तरि च' इति निषेधं न कुर्यात् । अनेनैव सिद्धत्वात् । यत्र हि कर्तरि तृजकौ नियोगतस्तत्र कर्मण्येव[१०] षष्ठी स्यात् तस्मात् 'कर्तरि च' इति पुनर्निषेधवचनात् 'उभयप्राप्तौ कर्मणि' इति या षष्ठी तस्या इदं ग्रहणमिति ज्ञायत इत्यभिप्रेत्याह । **उभयप्राप्तौ कर्मषष्ठ्याः समासो नेति** ।

---

१. B₁ has after it—पूजायां किम् । छात्रहसितम् । नपुंसके भावे क्तः । शेषे षष्ठी । २. After it—क्तेनेति निवृत्तम् । D4. ३. Before it—क्तेनेति निवृत्तम् । D5. ४. कर्मषष्ठ्या P D3, Com.; कर्मणि षष्ठी सा न समस्यते । D4. ५. न समासः । C. ६. चित्रं D4. ७. °गोपालकेन P; °गोपकेन D5. ८. 'क्तस्य च' इति षष्ठी Dc1, Bc1. ९. कर्मषष्ठी Dc2. १०. एव dropped Dc3.

## तृजकाभ्यां कर्तरि ॥२।२।१५॥

कर्तरि[1] षष्ठ्यास्तृजकाभ्यां न समासः ॥ भवतः शायिका[2]। कर्तर्येव तृज्विधानात् तद्योगे कर्तृषष्ठी नेति तृजुत्तरार्थः । कर्तरि किम् । इक्षुभक्षिका ।

## कर्तरि च ॥२।२।१६॥

कर्त्रर्थ[3]तृजकाभ्यां [4]षष्ठ्या न समास[5]ः ॥ अपां स्रष्टा[6] । वज्रस्य भर्ता ।

---

तृज । भवतः शायिकेति । 'पर्यायार्हणोत्पत्तिषु ण्वुच्' । 'कर्तृकर्मणोः' इति कर्तरि षष्ठी । ननु तृचः किमित्युदाहरणं न [7]प्रदर्शितमित्याशङ्क्याह । कर्तर्य[8]वेति । तद्योगे कर्तृषष्ठी नेतीति । तृचैव कर्तुरभिहितत्वात् । तर्हि तृचो ग्रहणं किमर्थमित्यत आह । तृजुत्तरार्थ इति । इक्षुभक्षिकेति । पूर्ववत् ण्वुच् । अत्रेक्षुशब्दात् कृद्योगे क[9]र्मणि षष्ठी ।

कर्तरि । कर्तरीत्येतदकस्य विशेषणम् । तस्य कर्मणि भावे च विधानाद्व्यभिचारसंभवात् । न तृचः । तस्य कर्तर्येव विधानाद्व्यभिचा[10]राभावात् । अपां स्रष्टेति । 'ण्वुल्तृचौ' इति तृच् । 'सृजिदृशोः—' इत्यम् । ननु च भर्तृशब्दो याजकादिषु पठ्यते तत् कथं वज्रस्य भर्तेति प्रत्युदाहृतमित्याशङ्क्याह ।

---

१. कर्तृषष्ठ्यां P, $D_2$, $D_4$; कर्तृविहिततृजकाभ्यां $D_6$. २. शायिकाः $D_1$. ३. कर्तरि यौ तृजकौ ताभ्यां C $D_4$, $B_2$; कर्त्रर्थे $D_5$. ४. कर्मणि षष्ठी न समस्यते $B_2$; षष्ठी न समस्यते $D_4$. ५. C, $Dc_1$, $D_4$ have after it—सामर्थ्यादकस्य विशेषणार्थं कर्तृग्रहणम् । इतरथाव्यभिचारात् ।; $B_2$ follows C but has विशेषग्रहणार्थं for विशेषणार्थं; कर्तरि तृजकाभ्यां $D_2$, $D_3$. ६. $B_1$ has after it—पुरां भेत्ता ।. ७. दत्त° $Dc_1$. ८. °त्याशङ्क्याह $Dc_2$, $Dc_4$. ९. कर्मषष्ठी $Dc_2$. १०. °चारासंभवात् $Dc_2$.

पत्यर्थभर्तृशब्दस्य याजकादित्वात् समासः । भूभर्ता । सतामर्चकः ।

## नित्यं क्रीडाजीविकयोः ॥२।२।१७॥

षष्ठीसमासः ॥ उद्दालकपुष्पभञ्जिका । जीविकायाम् । दन्तलेखकः । तृजत्र नास्ति ।

---

पत्यर्थभर्तृशब्दस्येति । होतृशब्देन संबन्धिशब्देन साहचर्यात् भर्तृशब्दोपि संबन्धिशब्द एव याजकादौ गृह्यते न क्रियाशब्दः । वज्रस्य भर्तेत्ययं तु क्रियाशब्द इति भावः । अकमुदाहरति । सतामर्चक इति । कर्तरि ण्वुल् । कर्मणि षष्ठी । नंनु च तृचः सानुबन्धस्य ग्रहणं किम् । न च तृनो निवृत्त्यर्थमिति वाच्यम् । तद्योगे 'न लोक—' इति षष्ठीनिषेधात् । एवं तर्ह्येतज् ज्ञापयति तद्योगेपि क्वचित् षष्ठी स्यादिति । ततश्च भीष्मः कुरूणां भयशोकहन्तेत्यादि सिद्धम् । अपि चायं निषेधोनित्य इति 'जनिकर्तुः प्रकृतिः' 'तत्प्रयोजको हेतुश्च' इत्यादिनिर्देशा ज्ञापयन्ति । ततश्च 'निजत्रिनेत्रावतरत्वबोधिकाम्' इत्याद्युपपन्नम् ।

नित्यम् । उद्दालकपुष्पभञ्जिकेति । क्रीडाविशेषः । 'संज्ञायाम्' इति ण्वुल् । उद्दालकं पुष्पेषु । कर्मणि षष्ठी । दन्तलेखक इति । 'ण्वुल्तृचौ' इति ण्वुल् । क्रीडायां विकल्पेन षष्ठीसमासे प्राप्ते 'जीविकायां कर्तरि च' इति षष्ठीनिषेधे प्राप्ते वचनम् । तत्र नित्यग्रहणं जीविकार्थमुत्तरार्थं च । तृजत्रेति । क्रीडाजीविकयोस्तृच् नास्तीति नोदाहृत इति भावः । वामनमते तु तृच् जीविकायामस्ति रमणीयकर्तेति ।

---

१. पतिपर्यायस्य भर्तृ° C, Dc1. २. ननु Dc2. ३. सानुबन्धकस्य Dc2, Dc3. ४. निर्देशो ज्ञापयति Dc3. ५. नोदाहृतमिति Dc2.

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥२।२।१॥**

पूर्वादयोवयवा अवयविना समस्यन्ते एकं चेद् द्रव्यम् । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । एकदेशिना किम् । पूर्वं नाभेः कायस्य । एकाधिकरणे किम् । पूर्वं छात्राणाम्[1] ।

---

पूर्वापर । एकदेशोस्यास्तीत्येकदेश्यत्रयवी तद्वाचिना पूर्वादयः समस्यमानाः सामर्थ्यादवयववाचिन एव स्युरित्यभिप्रेत्याह । **पूर्वादयोवयवा** इति । छन्दोवत् सूत्राणि भवन्तीति व्यत्ययेन तृतीयार्थे एकाधिकरण इति सप्तमी । ततश्चैकदेशिन एतद्विशेषणम् । अधिकरण-शब्दश्चात्र द्रव्यवाचीत्येतच्चेतसि कृत्वाह । **एकं चेद् द्रव्यमिति** । एकत्वसंख्याविशिष्टं चेद् द्रव्यमवयवी स्यादित्यर्थः । **पूर्वं कायस्येति** । अवयवावयविसंबन्धे षष्ठी । काय एकदेशी । एकं च द्रव्यम् । **पूर्वं नाभेः कायस्येति** । नाभेरिति दिग्योगलक्षणा पञ्चमी । नाभेर्यत् पूर्वत्वं तत् कायस्येत्येषोत्रार्थो विवक्षितः । तेन नाभिर्नात्रावयवी किं त्ववधिभूता तद्वाची नाभिशब्दः पञ्चम्यन्तो न समस्यते । **पूर्वं छात्राणामिति** । अत्र बहुत्वसंख्या युक्ता अवयविनश्छात्रा इति न समासः । ननु चात्र छात्राणां पूर्वमामन्त्रयस्वेति[2] यां काञ्चन क्रियामध्याहृत्य निर्धारणं परिकल्प्यते ततश्च 'न निर्धारणे' इत्येव परत्वात् षष्ठीसमासनिषेधः स्यात् किमेकाधिकरणग्रहणेन । उच्यते । एवं सति पूर्वं कायस्येत्यत्रापि निर्धारणं स्यात् । अस्त्यत्रावयवस्यापकृष्टिक्रिया निर्धारणहेतुः । तथा[3] च तस्यैव योगस्य विषय आरभ्यमाणो योगस्तदपवादः स्यात् ।

---

१. B₁ drops it. २. After it—आमन्त्रयस्व । D₄. ३. तथापि Dc₁.

सर्वैणैकदेशेनाह्नः समासः। संख्याविसायेति ज्ञापकात्। मध्याह्नः। सायाह्नः।

**अर्धं नपुंसकम् ॥२।२।२॥**

समांशवाच्यर्धशब्दः क्लीबे। स[1] च तथा समस्यते॥ अर्धं पिप्पल्या[2] अर्धपिप्पली। क्लीबे[3] किम्। ग्रामार्धः। द्रव्यैक्ये एव। अर्धं पिप्पलीनाम्।

**द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥२।२।३॥**

एतानि वा तद्वत्। पूरणगुणेति[4] निषेधं[5] बाधित्वा पक्षे षष्ठीसमासः।

---

**सर्वैणेति**। यदयं 'संख्याविसायपूर्वस्य' इत्याह ततो ज्ञायते सर्वैणावयवेनाह्नः समास इति। अन्यथा हि सायंपूर्वत्वमह्नस्य न घटत इत्ययुक्तं तद्वचनं स्यात्। केचित्तु सर्वैणैकदेशवाचिना एकदेशिवाचिनः समासः स्यात् न त्वहःशब्दस्यैवेति ज्ञापनमाहुः। तेन मध्यरात्र इत्यपि सिध्यति।

**अर्धम्**। **समांशेत्यादि**। समांशः समप्रविभागः[6] तं वदति योऽर्धशब्दः स नपुंसके वर्तते स चावयववाच्यवयविवाचिना समस्यते एकं चेद् द्रव्यमवयवी स्यादित्यर्थः। **अर्धपिप्पलीति**। 'परवल्लिङ्गम्'– इति स्त्रीलिङ्गता। विभाषानुवृत्तेरर्धपिप्पलीत्यादौ नोपसर्जनत्वमिति 'गोस्त्रियोः—' इति ह्रस्वो न। एकदेशिना किम्। अर्धं पशोर्देवदत्तस्य। देवदत्तशब्देन समासो न।

**द्वितीय**। **एतानि वा तद्वदिति**। एतान्यवयववाचिन्यवयविवाचिना समस्यन्ते एकं चेद् द्रव्यम्। यद्यत्र 'पूरणगुण—' इति षष्ठीसमासनिषेधः स्यादन्यतरस्यां[7] ग्रहणमनर्थकं स्यात् वाक्यस्य महाविभाषयैव सिद्धत्वादित्यभिप्रेत्याह। **पूरणगुणेतीत्यादि**।

---

१. C drops स. २. $B_1$ drops अर्धं पिप्पल्याः. ३. क्लीबं $D_4$, $D_5$. ४. पूरणेति C. ५. निषेधविधिं P. ६. समविभागः $Dc_4$. ७. स्यात्तर्ह्य° $Dc_2$

द्वितीयं भिक्षाया द्वितीयाभिक्षा । भिक्षाद्वितीयम् । एवं तृतीयादि । तुरीयस्येष्टिः । तुरीयाभिक्षा[2] । भिक्षातुरीयम् ।[3]

**प्राप्तापन्ने च द्वितीयया ॥२।२।४॥**

एते[4] वा तद्वत् ॥ पक्षे द्वितीयासमासः । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः ।

**कालाः परिमाणिना ॥२।२।५॥**

परिमाणवद्वाचिना[5] कालाः समस्यन्ते ॥

---

**द्वितीयभिक्षेति** । भिक्षाया द्वितीयो भाग इत्यर्थः । एकदेशिनेत्येव । द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरण इत्येव । द्वितीयं भिक्षाणाम् ।

**प्राप्ता** । **पक्षे द्वितीयासमास** इति । 'द्वितीया श्रित—' इत्यादिना द्वितीयासमासविधिसामर्थ्यादिति भावः । **प्राप्तजीविक** इति । उपसर्जनत्वात् 'गोस्त्रियोः—' इति ह्रस्वः । अत्र 'परवल्लिङ्गम्—' इति न भवति । 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु न' इति निषेधात् । यदा तु प्राप्ता जीविकामिति विगृह्य समासः क्रियते तदा प्राप्तजीविकेति स्यात् । 'स्त्रियाः पुंवत्' इति योगविभागेन पुंवद्भावात् । अथवा 'प्राप्तापन्ने च' इत्यत्र चेति विच्छिद्य प्राप्तापन्नयोः समासे जातेत्वं च विधीयते ।

**कालाः** । सामर्थ्यात् कालाः परिमाणवाचिनो गृह्यन्ते ।

---

१. Dropped B1, P, C. २. तुरीयं भिक्षायाः before it in C, B2. ३. After it—तलपादाग्रहस्तयोर्वेति वाच्यम्. पादस्य तलं तलपादं. पादतलं वा । एवं हस्ताग्रम् । अग्रहस्तम् । B3, D4. ४. एतौ P, C. ५. परिमाणं यस्यास्ति तद्वाचिना B1; परिमाणवाचिना D1.

मासो जातस्य मासजातः ।

**सप्तमी शौण्डैः ॥२।१।४०॥**

सप्तम्यर्थं समर्थं शौण्डादिभिर्विभाषा समस्यते स तत्पुरुषः ॥ अक्षेषु शौण्डः अक्षशौण्डः ॥ शौण्ड । धूर्त । कितव । व्याड । संवीत । अन्तर । अधि । पटु । पण्डित । कुशल । चपल । निपुण ।

---

मासादयो हि जातादेः संबन्धिनीरादित्यगतीर्गमयन्तीति भवन्ति परिच्छेद्यहेतुत्वात् परिमाणं गौणम् ।

**सप्तमी** । शौण्डैरिति बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह । **शौण्डादिभिरि**ति । **अक्षेषु शौण्ड** इति । वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिष्वधिकरणे सप्तमी । अन्तःशब्दोत्राधिकरणप्रधान एव पठ्यते । अतस्तत्प्रयोगे तत्सामानाधिकरण्यमेव सप्तम्याः कारणम् । वनेन्तः वनान्तर्वसतीति । पूर्वपदार्थप्राधान्ये विभक्त्यर्थेऽव्ययीभावः । अन्तर्वणमिति । अधिशब्दोत्र पठ्यते तस्याप्यधिकरणप्राधान्येऽव्ययीभावः । अधिस्त्रीति । आधेयप्राधान्ये तु तत्पुरुषः । ब्राह्मणेष्वधि ब्राह्मणाधीन इति । ब्राह्मणाधिशब्दः केवलो न प्रयुज्यते । 'अषडक्षाशितं—' इत्यादिना अध्युत्तर-पदान्नित्यस्य स्वार्थिकस्य खस्य विधानात् ।

---

१. वा P, C, B1, B2. २. Before it—प्रवीण D4. ३. पवीण । अधिक । पटु । &c. D2; अन्तर् Com. ४. Before it—प्रवीण B1, D5. ५. °करणसप्तमी Dc3, Dc2.

'कर्तृकरणे कृता बहुलम्' इति बहुलोक्तेरन्यत्रापि द्वितीयादिविभक्तीनां प्रयोगवशात् समासो ज्ञेयः ॥

'सिद्धशुष्कपक्वबन्धैश्च' इत्येवमादीनि तत्पुरुषविधायीनि सूत्राणि 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणस्य सर्वविधिव्यभिचारार्थस्यैवोदाहरणप्रपञ्चभूतानीत्याभिप्रेत्याह । कर्तृकरण इत्यादि । अत एव व्याख्यातप्रायत्वात् त्यक्तान्यष्टौ सूत्राणि वैशद्यार्थं व्याख्यायन्ते । 'सिद्धशुष्कपक्वबन्धैश्च' ॥२।१।४१॥ एभिः सह सप्तम्यन्तं समस्यते वा स तत्पुरुषः । काम्पिल्ये सिद्धः काम्पिल्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः । 'ध्वाङ्क्षेण क्षेपे' ॥२।१।४२॥ ध्वाङ्क्षवाचिना सुबन्तेन सह सप्तम्यन्तं समस्यते निन्दायां गम्यमानायाम् । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । अनवस्थित इत्यर्थः । तीर्थकाकः । तीर्थवायसः ।

१. अपि dropped $D_1$. २. After it the Sûtras २।१।४१-४२-४३-४४-४६ ४७-४८ are given with their Vṛittis and instances in $B_1$, $D_1$, $D_4$; C gives only २।१।४१-४२-४३.

**सिद्धशुष्कपक्वबन्धैश्च ॥ २।१।४१॥**

एतैः सप्तमी समस्यते स तत्पुरुषः ॥ काम्पिल्यसिद्धः* । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ।

**ध्वाङ्क्षेण क्षेपे ॥ २।१।४२॥**

†ध्वाङ्क्षवाचिना ‡सप्तम्यन्तं समस्यते §क्षेपे वाच्ये स तत्पुरुषः । ¶तीर्थे ध्वाङ्क्ष $इव तीर्थध्वाङ्क्षः । अनवस्थित इत्यर्थः ।

* After it—सान्तपासिद्धः $D_1$. † ध्वाङ्क्षेण C. After it—सह $D_1$. ‡ सुबन्तं $D_1$; सह सुबन्तं $D_4$. § क्षेपे वाच्ये omitted in $B_1$, $D_1$, $D_4$. ¶ After it—क्षेपे निन्दायाम् $D_1$. $ $D_1$ drops it.

क्षेपे किम् । तीर्थे ध्वाङ्क्षस्तिष्ठति । 'कृत्यैर्ऋणे' ॥२।१।४३॥ ऋणे गम्ये सप्तम्यन्तं कृत्यान्तैः सह समस्यते । यत्प्रत्ययेनैवेष्यते । मासे देयमृणं मासदेयम् । ऋणग्रहणं नियोगोपलक्षणार्थम् । इहापि स्यात् । पूर्वाह्णे गेयं साम पूर्वाह्णेगेयम् । ऋणे किम् । मासे देया भिक्षा । 'संज्ञायाम्' ॥ २।१।४४॥ संज्ञायां विषये सप्तम्यन्तं समस्यते । संज्ञा समुदायोपाधिस्तेन नित्यसमासोयम् । न हि वाक्येन[1] संज्ञा गम्यते । अरण्येतिलकाः । 'हलदन्तात्' इति सप्तम्या अलुक् । 'क्तेनाहोरात्रावयवाः' ॥ २।१।४५॥ अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते । पूर्वाह्णकृतम् । पूर्वरात्रकृतम् । अवयवाः किम् । दिवा वृत्तम् । रात्रौ वृत्तम् । 'तत्र' ॥२।१।४६॥ तत्रेत्येतत् क्तान्तेन सह समस्यते । तत्रकृतम् । तत्रपीतम् । ऐकपद्यमैकस्वर्यं च समासप्रयोजनं समासत्वात् स्यात् । 'क्षेपे' ॥२।१।४७॥

१. Dropped Dc3.

**कृत्यैर्ऋणे ॥ २।१।४३ ॥**

*ऋणे वाच्ये सप्तम्यन्तं समस्यते स तत्पुरुषः ॥ मासे देयं मासदेयमृणम् । ऋणग्रहणं नियोगोपलक्षणार्थम् । पूर्वाह्णेगेयं साम । सप्तम्या अलुक् ।

**संज्ञायाम् ॥ २।१।४४॥**

संज्ञायां विषये सप्तम्यन्तं सुपा समस्यते स तत्पुरुषः । अरण्येतिलकः । नित्यसमास एवायम् । न हि वाक्येन संज्ञा गम्यते ।

**तत्र ॥ २।१।४६ ॥**

तत्रेत्येतत् क्तान्तेन समस्यते स तत्पुरुषः । तत्रकृतम् ।

**क्षेपे ॥ २।१।४७ ॥**

* सप्तम्यन्तात् समस्यते स तत्पुरुषः । ऋणे वाच्ये $B_1$; $D_1$ drops the Vṛitti; $D_4$ follows $B_1$ but has कृत्यैः for सप्तम्यन्तात् ।.

निन्दायां गम्यमानायां सप्तम्यन्तं क्तान्तेन समस्यते । अवतप्तेनकुलस्थितम् । चापलमेतदनवस्थितत्वं तवैतदित्यर्थः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । भस्मनिहुतम् । निष्फलं यत् क्रियते तदेवमुच्यते । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । 'पात्रेसमितादयश्च' । २।१।४८॥ समुदाया एव तत्पुरुषसंज्ञा निपात्यन्ते निन्दायां गम्यमानायाम् । ये त्वत्र क्तान्तास्तेषां पूर्वेणैव सिद्धे पुनःपाठो युक्तारोह्यादित्वेन पूर्वपदाद्युदात्तत्वं यथा स्यादिति । तत्र हि पात्रेसमितादयश्चेति पठ्यते । पात्रेसमिताः । पात्रेबहुलाः । अवधारणेनात्राक्षेपो गम्यते । पात्रे एव समिताः न पुनः क्वचित् कार्ये । उदुम्बरमशकादिषूपमयाक्षेपः । मातरिपुरुष इति निषिद्धसेवया । पिण्डीशूरादिषु निरीहतया । वृत्करणाभावादाकृतिगणोयम् । पात्रेसमिताः । पात्रेबहुलाः । उदुम्बरमशकः । उदुम्बरकृमिः । कूपकच्छपः । अवटकच्छपः । कूपमण्डूकः । उदपानमण्डूकः । नगरकाकः । नगरवायसः । मातरिपुरुषः । पिण्डीशूरः । गेहेशूरः । गेहेनर्दी । गेहेक्ष्वेडी । गेहेविजिती । गेहेव्याडः । गेहेतृप्तः । आखनिकबकः । गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेक्ष्वेडी । गेहेमेही । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिरिटिरा[1] । कर्णेचुरुचुरा[2] । चकारोवधारणार्थः । तेन समासान्तरं न भवति परमपात्रे समिता इति ।

---

१. °टिरटिरा Dc3. २. °चुरचुरा Dc3.

निन्दायां सप्तम्यन्तं क्तान्तेन समस्यते स तत्पुरुषः ॥ उदकेविशीर्णः । तत्पुरुषे कृति बहुलमित्यलुक् ।

**पात्रेसमितादयः ॥ २।१।४८ ॥**

पात्रेसमिताः ।

## कुगतिप्रादयः ॥२॥२।१८॥

कुशब्दो गतिसंज्ञाः प्रादयश्च समर्थेन नित्यं समस्यन्ते। स तत्पुरुषः[१]। कुपुरुषः[२]। गतिः[३]। ऊरीकृत्य[४]। समासत्वादत्र क्त्वो[५] ल्यप्। अत्र 'सुप् सुपा' इत्यननुवृत्तेस्तिङापि

---

**कुगति**। कुशब्दोत्राव्ययं पापाद्यर्थे गृह्यते गत्यादिसाहचर्यात्। न पृथिव्यादिद्रव्य[६]वाची। गतिग्रहणेनैव प्रादिग्रहणे सिद्धे क्रियायोगाभावेपि समासो यथा स्यादित्येवमर्थं प्रादिग्रहणम्। **कुपुरुष** इति। कुत्सितः पापः पुरुषः। **ऊरीकृत्येति**। 'ऊर्यादिच्विडाचश्च'। इत्यूरीशब्दो गतिसंज्ञः। 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा। **समासत्वादिति**। समासे नञ्पूर्वे क्त्वो ल्यबिति। **अत्र 'सुप् सुपा' इत्यननुवृत्तेरिति**। अयं भावः। 'उपपदमतिङ्' इत्युत्तरसूत्रस्थमतिङ्ग्रहणमुभयोर्योगयोः शेषः। गतिः समस्यते अतिङन्तश्च समासः स्यात्। ततः प्रपचतीत्यत्र न समासः। उपपदं समस्यते अतिङन्तश्च समासः स्यादिति। ततो माङि लुङ्। मा कार्षीदिति न समासः। ततश्चातिङ्ग्रहणात् 'सुप् सुपा' इति नानुवर्तत इति ज्ञायते। ततस्तिङापि समास इति। असुपो सुपा समासात् केनचित् तिङा गतिमता उदात्तवतापि समास इत्यर्थः। तथोक्तं[७] भाष्ये[८]। उदात्तवता तिङा गतिमता चाव्ययस्य समासो वक्तव्यः। अनुव्यचलत्। अनुप्राविशत्।

---

१. C has after it—उदात्तवता तिङा गतिमता वाव्ययस्य समासो वक्तव्यः। कुपापीषदर्थयोः. २. Before it—कुत्सितो विप्रः कुविप्रः। ईषदुष्णं कोष्णम् C, $B_1$, $B_2$ ($B_1$ has कवोष्णम् for कोष्णम्); C and $D_2$ drop कुपुरुषः. ३. उर्यादयो गतिसंज्ञा C; P drops गति. ४. After it—उररीकृत्य P, C, $B_1$, $B_2$. ५. Dropped $D_1$, $D_2$, $D_3$. ६. °शब्दवाची $Bc_3$, $Bc_1$, $Dc_1$, $Dc_2$. ७. तथा चोक्तं $Dc_3$. ८. महाभाष्ये $Dc_2$.

समासः । ऊरीकरोति । प्रोदि । प्रकृत्य । प्रकरोति ।

**ऊर्यादिच्विडाचश्च ॥१।४।६१॥**

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च गतिसंज्ञाः ॥

---

व्याकरोति । तत्परियन्तीति । ऊरीकरोतीति । अत्र यदिति शेषः । तत्र 'निपातैर्यद्यदि—' इति तिङन्तनिघातनिषेधात् उदात्तवता तिङा समासः । एवं प्रकरोतीत्यादावपि यदित्यध्याहारः । अन्येन तिङा गतीनां न समासः । विभक्तिस्तु सत्यपि समासत्वे न प्रातिपदिकत्वेन भवति । तिङैवैकत्वादेरुक्तत्वात् । गतिसंज्ञकान् दर्शयितुमाह ।

ऊर्यादय इत्यादि । एषामव्ययानामिति । ऊर्यादिकानां तिरसन्तानामव्ययानां प्रादीनां विंशतेश्च 'गतिश्च' इत्यादिभिः सूत्रैरर्थविशेषेषु क्रियायोगे गतिसंज्ञा विधीयत इति ज्ञेयम् । स्पष्टत्वात् त्यक्तान्येकादशसूत्राणि क्रमेण व्याख्यायन्ते । 'गतिश्च' ॥१।४।६०॥ प्रादयो गतिसंज्ञकाश्च स्युः क्रियायोगे । चकारो गत्युपसर्गसंज्ञयोः समावेशार्थः । तेन प्रणीतमभिषिक्तमत्र 'गतिरनन्तरः' इति स्वरः 'उपसर्गात्—' इति णत्वषत्वे च स्तः । 'ऊर्यादिच्विडाचश्च' । १।४।६१॥ ऊर्यादयः शब्दाश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । च्विडाचोः कृभ्वस्तियोगे विधिस्तत्साहचर्यात् ऊर्यादीनामपि तैरेव योगे गतिसंज्ञा ज्ञेया । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । ऊरी । उररी । ऊररी । एतेऽङ्गीकारे । पापी । ताली । आताली । वेताली । धूसी । एते विस्तृतौ । सकला । संशकला । ध्वंसकला । भ्रंसकला । पेशलादयो हिंसायाम् ।

---

१. Dropped P. २. The Com. omits the Sūtra. ३. C, $B_1$, $D_4$ have स्युः after it. ४. °परिपचन्तीति $Dc_3$. ५. समासत्वेपि $Dc_1$. ६. व्याख्यामः । $Dc_4$; व्याख्यास्यामः $Dc_3$.

सकलां कृत्यसंकल्पां लाकृत्येत्यादि । हिंसित्वेत्यर्थः । गुलुगुधा पीडार्थे । गुलुगुधाकृत्य । सजूः सहार्थे । सजूःकृत्य । फलूकृत्य । फलीकृत्य । विक्लीकृत्य । आक्लीकृत्य । एते वैकृत्ये । आलाष्टी केवासी सेवाली वर्षाली पश्पसा मस्मसा एते हिंसायाम् । श्रौषट् वौषट् स्वाहा स्वधा एते दाने । प्रादुस् आविस् प्रकाशने । 'अनुकरणं चानितिपरम्' । १।४।६२।। इतिः परो यस्मादिति बहुव्रीहिः । अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं स्यात् । खाट्कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठीवत् । 'आदरानादरयोः सदसती' । १।४।६३।। प्रीतिसंभ्रम आदरः । परिभवौदासीन्यमनादरः । आदरानादरयोर्यथासंख्यं सदसच्छब्दौ गतिसंज्ञौ स्तः । सत्कृत्य । असत्कृत्य । आदरानादरयोः किम् । सत्कृत्वाकाण्डं गतः । असत्कृत्वाकाण्डं गतः । कारिकाशब्दस्योपसंख्यानम् । कारिकाकृत्य । 'भूषणेलम्' । १।४।६४।। अलंशब्दो भूषणे गतिसंज्ञः । अलंकृत्य । भूषणे किम् । अलं भुक्त्वौदनं गतः । 'अन्तरपरिग्रहे' । १।४।६५।। अपरिग्रहेर्थे अन्तःशब्दो गतिसंज्ञः । अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा मूषिकां श्येनो गतः । परिगृह्य गत इत्यर्थः ।

१. भूषणे अलम् before it—$B_2$. २. P, $D_3$ drop it. ३. Dropped $B_2$. ४. Dropped $D_3$. ५. मष्मसा $Dc_1$; मष्मषा $Dc_4$, $Dc_3$. ६. Dropped $Dc_1$, $Dc_2$.

कणे। मनस्। पुरस्। अस्तम्। अदस्। तिरस्। एषामव्ययानां प्रादीनां च 'गतिश्च' इत्यादिभिः सूत्रैरर्थविशेषेषु क्रियायोगे गतिसंज्ञा ज्ञेया।

'कणेमनसी श्रद्धाप्रतिघाते'। १।४।६६॥ कणेमनःशब्दौ अभिलाषातिशयार्थौ श्रद्धाप्रतिघाते गतिसंज्ञौ स्तः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत् पिबति यावदस्याभिलाषो निवृत्तः। श्रद्धा प्रतिहतेत्यर्थः। श्रद्धाप्रतिघाते किम्। कणे हत्वा गतः। मनो हत्वा गतः। अत्र कणेशब्दोधिकरणभूते तण्डुलावयवे वर्तते मनःशब्दश्चेतसि। 'पुरोऽव्ययम्'। १।४।६७॥ असिप्रत्ययान्तः पुरःशब्दोऽव्ययं स गतिसंज्ञः स्यात्। समासस्वरोपचाराः प्रयोजनम्। पुरस्कृत्य। 'नमस्पुरसोर्गत्योः' इति विसर्गस्य सः। अव्ययं किम्। पुरः कृत्वा गतः। नगरीः कृत्वा गत इत्यर्थः। 'अस्तं च'। १।४।६८॥ अव्ययमिति वर्तते। अनुपलब्धौ वर्तमानो मान्तोऽस्तंशब्दोऽव्ययं स गतिसंज्ञः। अस्तं गत्य सविता पुनरुदेति। अव्ययं किम्। अस्तं काण्डम्। निक्षिप्तमित्यर्थः। 'अदोऽनुपदेशे'। १।४।७०॥ उपदेशः परस्यार्थकथनम्। स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेशः। तस्मिन् विषयेऽदःशब्दो गतिसंज्ञः। अदः कृत्य। अनुपदेशे किम्। अदः कृत्वा काण्डं गत इति परस्य कथयति। 'तिरोऽन्तर्धौ'। १।४।७१॥ व्यवधाने तिरःशब्दो गतिसंज्ञः। तिरोभूय। अन्तर्धौ किम्। तिरोभूत्वा स्थितः। अनृजुर्भूत्वा पार्श्वतो वा भूत्वेत्यर्थः

१. $B_1$ drops it; $B_2$ has श्रद्धाप्रतिघाते before it. २. गतिसंज्ञाः स्तुः $B_2$. ३. °प्रतीघाते Dc3, Dc4. ४. Dropped $Dc_2$, Dc3. ५. विसर्जनीयस्य Dc3. ६. °संज्ञकः Dc3. ७. नोपदेशः $Dc_4$.

अच्छ गत्यर्थवदेषु ॥१।४।६९॥

अच्छगत्य । अच्छगच्छति । अच्छोद्य । अच्छवदति ।[३]
तिरस्[४] ।

उपाजेन्वाजे ॥१।४।७३॥

साक्षात्प्रभृतयः ॥१।४।७४॥

---

अच्छ । अव्ययमिति[६] वर्तते । अभिशब्दार्थोच्छशब्दोव्ययं स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञः । तिरस् इत्यादि । एते तिरस्प्रभृतयः करोतौ धातौ परे 'विभाषा कृञि' इत्यादिभिः सूत्रैर्वा गतिसंज्ञा विधीयन्त इत्यर्थः । तानि पञ्च सूत्राणि व्याख्यायन्ते । 'विभाषा कृञि' । १।४।७२॥ अन्तर्धाविति वर्तते । प्राप्तविभाषेयम् । तिरःशब्दः करोतौ परे वा गतिसंज्ञः । तिरःकृत्य[७] । तिरःकृत्वा । अन्तर्धौ किम् । तिरः[८] कृत्वा काष्ठं गतः । 'उपाजेन्वाजे' ।१।४।७३॥ एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते । तौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्य । अन्वाजेकृत्वा । 'साक्षात्प्रभृतीनि च' ।१।४।७४॥ साक्षात्प्रभृतीनि कृञि परे वा गतिसंज्ञानि स्युः । साक्षात्प्रभृतिषु च्व्यर्थवचनम् । साक्षात्कृत्य । साक्षात्कृत्वा । साक्षात् । मिथ्या । चिन्ता । भद्रा । लोचना । अमा । आस्था । अद्धा । प्राजर्या । प्राजरुहा ।

---

१. अच्छगति $D_1$; गत्यर्थोच्छशब्दोव्ययम् । गत्यर्थे वदे च गतिसंज्ञः स्यात् $B_2$. २. Dropped $D_3$. ३. After this—विभाषा कृञि ॥ १।४।७२॥ तिरस् $D_1$, $B_1$, P; C. ४. Dropped $B_2$, $D_3$. ५. °प्रभृतीनि च $B_2$, Com. ६. °मित्यनुवर्तते $Dc_2$. ७. तिरस्कृत्य । तिरःकृत्य । $Dc_3$. ८. तिरस्कृत्वा $Dc_3$.

उरसिमनसी ॥१।४।७५॥

मध्ये पदे निवचने च ॥१।४।७६॥

एते कृञि परे 'विभाषा कृञि' ॥१।४।७२॥ इत्यादिभिर्वा गतिसंज्ञाः ॥

---

वीजर्या । वीजरुहा । संजर्या । अर्थे । लवणम् । उष्णम् । शीतलम् । उदकम् । आर्द्रम् । गतिसंज्ञासंनियोगेन लवणादीनां मान्तता निपात्यते । अग्नौ । वशे । विकसने । प्रतपने । विकम्पने । विहसने । प्रादुस् । नमस् । आविस् । 'अनत्याधान उरसिमनसी' ।१।४।७५॥ अत्याध्यानमुपश्लेषणम् । तदभावे उरसिमनसीशब्दौ विभक्तिप्रतिरूपकौ निपातौ वा गतिसंज्ञौ स्तः । उरसिकृत्य । उरसिकृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसिकृत्वा । निश्चित्येत्यर्थः । अनत्याधाने किम् । उरसि कृत्वा पाणिं शेते । 'मध्येपदेनिवचने च' । १।४।७६॥ मध्ये पदे इति सप्तम्यन्तप्रतिरूपकौ निपातौ । निवचन इत्यर्थाभावेऽव्ययीभावः । एते शब्दा अनत्याध्याने कृञि परे वा गतिसंज्ञाः । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः । अनत्याधान इत्येव । हस्तिनः पदे कृत्वा शिरः शेते ।

---

१. अनत्याधाने उरसि मनसी $B_2$, $D_4$, Com. २. Dropped $D_2$. ३. After it—स्युः C, $B_1$. ४. °णार्थम् । $Bc_1$. ५. After it—आश्चर्यं वा । $Dc_3$.

तिरसोऽन्यतरस्याम् ॥८।३।४२॥

गतिसंज्ञस्य तिरसो विसर्जनीयस्य सो[1] वा स्यात् कुप्वोः [2]परयोः ॥ [3]तिरः कृत्य । तिरस्कृत्य । [4]तिरस्कृत्वेत्यादि ।

[5]हस्ते पाणौ[6]

प्राध्वम्[7]

जीविकोपनिषद्—एते कृञि 'नित्यं हस्ते पाणावुपयमने' ॥१।४।७७॥ इत्यादिभिर्नित्यं गतिसंज्ञाः[8] ॥ हस्ते कृत्येत्यादि ॥

---

तिरसः । 'कुप्वोः≍क≍पौ च' इति प्राप्ते वचनमिदम् । गतिग्रहणं चेह स्मर्यत इत्यभिप्रेत्याह । गतिसंज्ञस्येति । हस्त इत्यादि । हस्ते इत्यादयो 'नित्यं हस्तेपाणावुपयमने' इत्यादिभिः सूत्रैर्नित्यं गतिसंज्ञाः स्युः । तानि च सू[10]त्राणि व्याख्यायन्ते । 'नित्यं हस्तेपाणावुपयमने' ।१।४।७७॥ हस्तेपाणावित्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ स्त उपयमने विवाहकर्मणि । हस्तेकृत्य । पाणौकृत्य । दारकर्म कृत्वेत्यर्थः । उपयमने किम् । हस्ते कृत्वा कार्षापणं गतः । 'प्राध्वं बन्धने' । १।४।७८॥ प्राध्वमिति मान्तमव्ययम् । आनुकूल्ये वर्तते । तदानुकूल्यं बन्धननिमित्तं यदा स्यात्तदा प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञः स्यात् । प्राध्वंकृत्य । [11]बन्धनेन निमित्तेनानुकूल्यं कृत्वेत्यर्थः । बन्धने किम् । प्रगतमध्वानं प्राध्वं कृत्वा शकटं गतः । 'जीविकोपनिषदावौपम्ये' ॥१।४।७९॥ जीविकाशब्दो जीवनोपायवाची उपनिषच्छब्दो रहस्यवाची तौ कृञि परे औपम्यविषये नित्यं गतिसंज्ञौ स्तः । जीविकाकृत्य । जीविकामिव कृत्वेत्यर्थः । उपनिषत्कृत्य । उपनिषदमिव कृत्वेत्यर्थः । औपम्ये किम् । जीविकां कृत्वा गतः ।

---

१. वा सः $B_1$. २. परतः $B_1$; dropped $D_2$, $D_3$, $D_4$. ३. C, $D_4$ have कुप्वोः≍क≍पौ च before it. ४. तिर≍कृत्येत्यादि C ; तिरः कृत्वेत्यादि P. ५. नित्यं हस्ते पाणौ $B_2$. ६. After it—उपयमने $D_4$. ७. After it—बन्धने $D_4$. ८. $D_1$ drops it. ९. After it—ज्ञेयाः $B_2$. १०. त्रीणि सूत्राणि $D_2$, $Dc_3$. ११. बन्धननिमित्तेन.

प्रादयो गताद्यर्थे प्रथमया* ॥ प्रगत आचार्यः प्राचार्यः[1] । प्रान्तेवासी[2] ।

[4]दुर्निन्दाकृच्छ्रयोः ॥ दुष्टो नरो दुर्नरः । निन्दित इत्यर्थः[5] । दुःकृतम् ।

स्वती पूजायाम् ॥ सुश्रीः[6] । अतिराजा ।

अतिशयातिक्र[7]मयोश्च ॥ सूक्तः । अतिज्ञः ।

आङ् ईषदर्थाभिव्याप्तौ ॥ [8]आबद्धम् । आनगरम् ॥

---

प्रासङ्गिकीं गतिसंज्ञां परिसमाप्य प्रकृतं 'कुगतिप्रादयः' इत्यस्मिन् सूत्रे उपाधिवचनवक्तव्यैर्विधीयमानं समासमाह । **प्रादय** इत्यादि । तत्र [9]दुर्निन्दायाम् । कुः पापार्थे । स्वती पूजायाम् । आङीषदर्थे इत्यादीन्युपाधिव[10]चनानि वक्तव्यानि प्रायिकत्वात् त्यक्तानि । तथा चोक्तं **काशिकायां वृत्तौ** । 'प्रायिकं चैतदुपाधिवचनमन्यत्रापि हि समासो दृश्यते । कौष्णम् । दुःकृतम् । सुकृतम् । अतिस्तुतम् । आबद्धम्' इति । **प्रादय इति** । प्रादयो गताद्यर्थे वर्तमानाः प्रथमया प्रथमाविभक्त्यन्तैः समस्यन्त इति व[11]क्तव्यम् । नित्यसमासत्वात् पदान्तरेण विग्रहं करोति । **प्रगत आचार्य इति** । **प्रान्तेवासीति** । प्रगतोन्तेवासी[12] । आदिशब्दादपरेपि वृद्धप्रयोगानुसारेण ज्ञेयाः । यथा प्रगतः पितामहः प्रपितामहः ।

---

१. After it–उक्तार्थानामप्रयोगः $D_4$. २. प्रकृष्टोन्तेवासी before it–$D_2$, $B_1$, $B_2$. ३. After it—वेला उद्गतः उद्वेलः । मुखमभिप्रपन्नः अभिमुखः । अक्षि प्रति गतः प्रत्यक्षः । प्रत्यर्थी पक्षः प्रतिपक्षः । प्रतिकूलो नायकः प्रतिनायकः । $B_2$; $D_2$ has प्रवासी । प्रतिनायकः । प्रतिपक्षः । $D_4$. ४. दुर्निन्दा to आनगरम् dropped P, $D_1$, $D_3$, $D_5$. ५. निन्दित इत्यर्थः dropped C, $D_2$, $D_4$. ६. सुधीः $D_4$. ७. °क्रमणयोश्च C. ८. आनगरम् । आबद्धम् । $D_1$; ईषद्बद्धमाबद्धम् । आनगरम् । $B_2$. ९. कुःपापार्थे । दुर्निन्दायाम् । $Dc_3$, $Dc_4$. १०. वचनवक्तव्यानि $Bc_1$, $Dc_1$. ११. वाच्यम् $D_3$. १२. After it—प्रान्तेवासी $D_3$.

अत्यादयः क्रान्ताद्यर्थे द्वितीयया* ॥ अतिक्रान्तो मालामिति विग्रहे।

एकविभक्ति चापूर्वनिपाते ॥१।२।४४॥

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं[1] स्यात् न तु तस्य पूर्वनिपातः।

---

प्रमातामहः। दुष्टः पुरुषो दुष्पुरुषः[2]। शोभनोऽश्वो स्वश्व इत्यादयः। **अत्यादय** इति। क्रान्ताद्यर्थवृत्तयोऽत्यादयो द्वितीयाविभक्त्यन्तैः समस्यन्त इति वक्तव्यमित्यर्थः। आदिशब्दादन्येऽपि उद्गतो वेलामुद्वेल इत्यादयः प्रयोगानुसाराद् ज्ञेयाः। **अतिक्रान्तो मालामिति विग्रह** इति। [3]समासस्यार्थप्रतिपादके वाक्य इत्यर्थः।

**एक**। 'प्रथमानिर्दिष्टं समासे' इत्यतः समास इत्यनुवर्तते। तच्च समासार्थं यद्वाक्यं तदाहेत्यभिप्रेत्याह। **विग्रह** इति। एकविभक्तिशब्दार्थमाह। **नियतविभक्तिकमिति**। नियता विभक्तिर्यस्य तन्नियतविभक्तिकम्। विभक्तिर्वचनः सुब्वचनः कारकशक्तिवचनो वा विभज्यते प्रातिपदिकार्थोऽनयेति। द्वितीये संबन्धिनि बह्वीभिर्विभक्तिभिर्युज्यमानेऽपि यदेकयैव विभक्त्या युज्यते तदुपसर्जनसंज्ञं स्यादित्यर्थः। **न तु तस्य पूर्वनिपात** इति। अनेन यस्योपसर्जनत्वं कृतं तस्य पूर्वनिपातो नेत्यर्थः। एतच्चाग्रे अतिमाल इत्युदाहरणे स्पष्टीकरिष्यामः।

---

१. °तुपसर्जनम् D2. २. दुःपुरुषः Dc4. ३. Before it–अतिमाल इति Dc3. ४. °शब्दः Dc4.

## गोस्त्रियोरुपसर्जनस्य ॥१।२।४८॥

गोन्तस्त्रीप्रत्ययान्तयोरुपसर्जनयोर्ह्रस्वः स्यात् ॥ अतिमालः ।

---

**गोस्त्रियोः** । गो इति स्वरूपग्रहणं स्त्रीति प्रत्ययग्रहणं स्वरितत्वादुपसर्जनग्रहणं तयोर्विशेषणमित्यभिप्रेत्याह । **गोन्तस्त्रीप्रत्ययान्तयोर्ह्रस्वः स्यादिति** । गोशब्दोन्तो गोन्तः स्त्रीप्रत्ययोन्तो यस्य तत् स्त्रीप्रत्ययान्तं तयोर्गोन्तस्त्रीप्रत्ययान्तयोरुपसर्जनयोरित्यर्थः। अत्र च प्रातिपदिकस्येति वर्तते । तस्योपसर्जनगोशब्देन उपसर्जनस्त्रीप्रत्ययान्तेन च तदन्तविधिर्ज्ञेयः । ततश्चायमर्थः स्यात् । उपसर्जनगोशब्दान्तस्य प्रातिपदिकस्य उपसर्जनस्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्वः स्यादिति । तेन गोकुलं राजकुमारीपुत्र इत्यत्र ह्रस्वो न । **अतिमाल इति** । मालामतिक्रान्तोतिमालः । मालाशब्दोतिक्रमणक्रियापेक्षया कर्मशक्तियोगाद् द्वितीयान्त एव । न तस्य क्रियान्तरमपेक्ष्य शक्त्यन्तरावेशः संभवति । अतिशब्दस्तु अतिक्रान्तप्रधानो नानाशक्तिभिर्युज्यत इति तस्मिन्ननेकाभिर्विभक्तिभिर्युज्यमानेपि मालाशब्दो द्वितीयान्त एवेत्युपसर्जनसंज्ञः । तस्य च 'गोस्त्रियोः—' इति ह्रस्वः । अतिशब्दस्य तु प्रधानस्यापि 'अत्यादयः' इति प्रथमानिर्देशसामर्थ्यादुपसर्जनत्वम् । अथवा 'एकविभक्ति च—' इति चस्यानुक्तसमुच्चयार्थत्वाद्वा । नेनु[1] 'एकविभक्ति च—' इत्यस्यावकाशोतिमालः 'प्रथमानिर्दिष्टम्—' इत्यस्यावकाशो नीलोत्पलादिकष्टश्रित[2] इत्यादौ । उभयप्रसङ्गे परत्वात् 'एकविभक्ति—' इत्युपसर्जनता स्यात् ततश्चापूर्वनिपात इति पूर्वनिपातानिषेधप्रसङ्गः[3] । मैवम् । नायं प्रसज्यप्रतिषेधः पूर्वनिपाते नेति किं तु पर्युदासोयम् । पूर्वनिपातेन विधिर्न निषेधः[4] । अथवा प्रसज्यप्रतिषेधोपि भवतु ।

---

१. ननु च Dc3. २. °त्पल इत्यादि । Dc3. ३. After this च Bc1. ४. प्रतिषेधः Dc3.

अतिगङ्गः। विभाषानुवृत्तेरर्धपिप्पलीत्यादौ नोपसर्जनत्वम्। स्त्रीप्रत्ययान्तत्वाभावात् अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः। इत्यादौ ह्रस्वो न। ईयसो बहुव्रीहेर्न। बहुश्रेयसी राजा[2]। बहुव्रीहेः किम्। अतिश्रेयसि।

---

तथाप्यदोषः। यतः 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति अनन्तरा प्राप्तिर्निषिद्धा पूर्वा त्वनिषिद्धैवेति तथा स्यात्। न चानन्तरा प्राप्तिः पूर्वां प्राप्तिं बाधत इति वाच्यम्। तस्या निषिद्धत्वाद्बाधकत्वाभावात्। **अतिगङ्ग** इति। गङ्गामतिक्रान्तोऽतिगङ्गः। **विभाषानुवृत्तेरिति**। अत्र 'विभाषा छन्दसि' इत्यतो मण्डूकप्लुतिन्यायेन विभाषाग्रहणमनुवर्तते। व्यवस्थितविभाषा च सा। तेनार्धं पिपल्या अर्धपिप्पलीत्यादौ पिप्पल्यादीनामेकविभक्तियुक्तानामप्युपसर्जनसंज्ञा न स्यात्। यदि हि स्यात् ह्रस्वत्वं स्यादित्यर्थः। **स्त्रीप्रत्ययान्तत्वाभावादिति**। 'स्त्रियाम्' इत्यधिकारेण विहिताः प्रत्ययाः स्त्रीप्रत्ययाः। अतितन्त्रीरतिलक्ष्मीरतिश्रीरित्यादौ तु 'अवितॄस्तृतन्त्रीभ्य ईः'। 'लक्षेर्मुट्च' 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च'। इति विहिताः प्रत्यया न स्त्र्यधिकारविहिता इति कृत्वात्र ह्रस्वो नेत्यर्थः। **ईयस** इति। ईयसन्ताद्यः स्त्रीप्रत्ययो विहितस्तदन्तस्य बहुव्रीहेर्ह्रस्वो न स्यादिति वक्तव्यमित्यर्थः। **बहुश्रेयसीति**। 'प्रशस्यस्य श्रः' इति प्रशस्यशब्दस्येयसुनि श्रादेशः। 'उगितश्च' इति ङीप्। बह्व्यः श्रेयस्योऽस्येति बहुव्रीहिः। 'नद्यृतश्च' इति प्राप्तस्य कपः 'ईयसश्च' इति निषेधः। पुंस्यपि सोर्हल्ङ्यादिलोपः। बहुव्रीहेः किम्। अतिश्रेयसिः।

---

१. B1 has एकविभक्ति चेत्यादौ षष्ठीवर्जमुपसर्जनसंज्ञेति वाच्यम्। तेनार्धपिप्पलीत्यादौ &c; एकविभक्ति चेत्यादौ षष्ठीवर्जमुपसर्जनसंज्ञं भवति। तेन विभाषा° B2. २. पुरुषः C; राजा। बहुव्रीहेः किम्। अतिश्रेयसि B1, P.

अवादयः क्रुष्टाद्यर्थे तृतीयया* ॥ अवक्रुष्टः कोकिलया अवकोकिलः[1]।

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या* ॥ परिग्लानोऽध्ययनाय पर्यध्ययनः। [2]अलं कुमार्यै [3]अलंकुमारिः ।

निरादयः [4]क्रान्ताद्यर्थे पञ्चम्या* ॥ निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः[5] ।

---

अवादय इति । क्रुष्टाद्यर्थे वर्तमाना अवादयस्तृतीयान्तेन समस्यन्त इत्यर्थः । अवकोकिल इति । अतिमालवदुपसर्जनत्व-ह्रस्वत्वे । आदिशब्दादन्येपि वृद्धप्रयोगस्थाः परिणद्धो वीरुधा परिवीरुत् संनद्धो वर्मणा संवर्मेत्यादयो ज्ञेयाः ।

पर्यादय इति । ग्लानाद्यर्थे वर्तमानाः पर्यादयश्चतुर्थ्यन्तेन समस्यन्त इति वक्तव्यमित्यर्थः । अलंकुमारिरिति । अलं कुमार्यै । आदिशब्दाद्वृद्धप्रयोगस्था अन्येपि उद्युक्तः संग्रामाय उत्संग्राम इत्यादयो ज्ञेयाः ।

निरादय इति । क्रान्ताद्यर्थवृत्तयो निरादयः पञ्चम्यन्तेन सह समस्यन्त इति वक्तव्यमित्यर्थः । निष्कौशाम्बिरिति । कुशाम्बेन निवृत्ता कौशाम्बी नगरी । उपसर्जनत्वह्रस्वत्वे पूर्ववत् । आदिशब्दे-नापगतः शाखाभ्य अपशाख इत्यादयोन्येपि वृद्धप्रयोगस्था ज्ञेयाः ।

---

१. After it—वर्मणा संनद्धः संवर्मा । अर्थेनानुगतः अन्वर्थः । अर्थेन वियुक्तो व्यर्थः $B_1$, $B_2$, C (C dropping वर्मणा संनद्धः संवर्मा). २. $D_1$, $D_2$, $D_3$, $D_5$ drop अलं कुमार्यै. ३. अलंकुमारी P. ४. निः क्रान्ताद्यर्थे $B_1$. ५. After it—निर्गतमङ्गुलिभ्यः निरङ्गुलम् । 'तत्पुरुषस्याङ्गुलेः' इत्यनेनाच् । $D_2$.

इवेन[1] समासो विभक्त्यलोपश्च[2]* ॥ ताविव । वासंसीव[3] ।
कर्मप्रवचनीयानां[4] न समासः । वृक्षं प्रति ।

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥२।१।४९॥**

एते समानाधिकरणेन समस्यन्ते[5] स तत्पुरुषः ॥ पूर्वकालार्थस्त्वपरकालार्थेन[6] । स्नातानुलिप्तः[6] ।

---

**इवेनेति** । इवेन समासः स्याद्विभक्त्यलोपश्चेति वक्तव्यमित्यर्थः । **कर्मप्रवचनीयानामिति** । कर्मप्रवचनसंज्ञानां प्रादीनां समासो न स्यादिति वक्तव्यमित्यर्थः । समानाधिकरणपदं तत्पुरुषमाह ।

**पूर्वकाल** । पूर्वकाल इत्यर्थग्रहणमर्थपरत्वान्निर्देशस्य । स च पूर्वकालार्थः संबन्धिशब्दत्वादपरकालार्थमपेक्ष्यैव स्यादिति तेनैव समस्यत[7] इति चेतसि कृत्वाह । **पूर्वकालार्थस्त्वपरकालार्थेनेति** । एकादीनां स्वरूपग्रहणं शब्दप्रधानत्वान्निर्देशस्य भिन्नप्रवृत्तिनिमित्तप्रयुक्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । भिन्नप्रवृत्तिनिमित्तप्रयुक्तानामिति पर्यायनिवृत्त्यर्थम् । एकस्मिन्निति गौरश्वइत्यादिनिवृत्त्यर्थम् । **स्नातानुलिप्त** इति । पूर्वं स्नातः पश्चादनुलिप्तः । अत्र स्नातशब्दः स्नानेन निमित्तेन प्रयुक्तः । अनुलिप्तशब्दस्त्वनुलेपनेन निमित्तेन प्रयुक्तस्तयोरेकार्थे[8] देवदत्ते वृत्तिरस्तीति अस्ति सामानाधिकरण्यम् । पूर्वनिपातनियमाद्यर्थ आरम्भः ।

---

१. इवेन विभक्त्यलोपः समासनित्यता च । $D_2$. २. $D_1$ drops च; C, $B_2$ have after it—पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ।. ३ असाविव for वाससीव । $D_3$. ४. C, $B_2$ have प्रादिप्रसङ्गे before it. ५. C has समस्यन्ते after it. ६. Before it पूर्वं स्नातः पश्चादनुलिप्तः P, $B_1$ ७. समस्यते $Dc_2$. ८. °रेकत्रार्थे $Dc_3$.

**तत्पुरुषः समानाधिकरणः कर्मधारयः ॥१।२।४२॥**

समानाभिधेयो यस्तत्पुरुषः स कर्मधारयाख्यः[1] ॥

**पुंवत् कर्मधारयजातीयदेशीयेषु ॥६।३।४२॥**

कर्मधारये जातीयदेशीययोश्च[2] परतो भाषितपुंस्कमनूङन्तं पूर्वं पुंवत्[3] स्यात् ।

---

**तत्पुरुषः** । अत्र समानाभिधेय इत्यनेन समानाभिधेयपदस्तत्पुरुष उपचारात् समानाभिधेय इत्युच्यते । यद्युपचारो न व्याख्यायते मुख्य एव तत्पुरुषः समानाभिधेय इत्युच्येत[4] तदा राजपुरुषः शोभन इत्यत्र कर्मधारयसंज्ञा स्यात् । बाह्येन शोभनपदेन कर्मधारस्य सामानाधिकरण्यात् । परमराज्यमित्यत्र न स्यात् । शब्दान्तरस्याप्रयोगात् । तत्पुरुषः किम् । पाचिकाभार्यः । समानाधिकरण इति किम् । ब्राह्मणराज्यम् । कर्मधारयप्रदेशाः 'कर्मधारयेनिष्ठा' इत्येवमादयः ।

**पुंवत् कर्मधारय** इत्यादि । अत्र भाषितपुंस्कादनूङिति वर्तते इत्यभिप्रेत्याह । **कर्मधारय** इत्यादि । कर्मधारये समासे जातीयदेशीययोः प्रत्यययोः परतोपि भाषितपुंस्कं भाषितः पुमान् यस्मिन्नर्थे सोर्थो भाषितपुंस्कस्तद्वाचकं शब्दरूपमप्युपचाराद् भाषितपुंस्कमनूङन्तमूङोभावोनूङ् सोन्ते यस्य तदनूङन्तं पूर्वं स्त्रीवाचकं शब्दरूपं पुंवत् स्यादित्यर्थः । अत्र स्त्रीशब्दस्य पुंशब्दोतिदिश्यते न तु स्त्र्यर्थस्य पुमर्थः । न वा स्त्रीप्रत्ययस्य पुंवदित्यनेन निवृत्तिः । उभयोरपि पक्षयोर्दोषवत्त्वात् पूर्वत्रैव दोषाभावात् । एतच्च **महाभाष्ये वृत्तिन्यासयोश्च** प्रतिपादितम् । तच्च 'स्त्रियाः पुंवद् भाषितपुंस्कात्—' इत्यत्र सूत्रे विशदं वक्ष्यामः ।

---

१. C, $D_4$ have स्यात् after it. २. देशीययोः परतश्च $D_6$, $D_4$, $D_1$; देशीययोः परयोश्च $D_2$. ३. C. $D_3$ have स्त्रीप्रत्ययान्तं and $B_2$ स्त्रीलिङ्गं before it. ४. °इत्युच्यते $Dc_2$, $Dc_3$.

पुंवत्त्वात् स्त्रीप्रत्ययलोपः ॥ एका चासौ शाटी च एकशाटी[2] । कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री[3] । पञ्चमभार्या । दत्तभार्या[4] । स्रौघ्नभार्या । सुकेशभार्या ।

**पुंवत्त्वात् स्त्रीप्रत्ययलोप** इति । पुंवाचकशब्दातिदेशात् स्त्रीवाचकः प्रत्ययो यस्मात् स स्त्रीप्रत्ययः स्त्रीवाचकः शब्दस्तस्य निवृत्तिरित्यर्थः । अथवा स्त्री प्रतीयते यस्मात् सोयं स्त्रीप्रत्ययः स्त्रीवाचकः शब्दस्तस्य निवृत्तिरित्यर्थः । **एकशाटीति** । 'पूर्वकालैक—' इति समासः । पुंवद्भावः । ननु च कर्मधारयसमासे 'स्त्रियाः पुंवत्—' इत्यादिनैव पुंवत्त्वं सिद्धं जातीयदेशीयपरतोपि 'तसिलादिषु—' इत्यादिना तद् व्यर्थमिदं सूत्रमित्याशङ्क्याह । **कोपधादेरित्यादि** । 'न कोपधायाः' इत्यादिना सूत्रसन्दर्भेण कोपधादेः पुंवद्भावो निषिद्धः । स कर्मधारयादावनेन सूत्रेण पुनः प्रसूयते । 'न कोपधायाः' इत्यादि प्रतिषेधविषयेपि कर्मधारयसमासे जातीयदेशीययोः परतश्च पुंवद्भावो यथा स्यादित्येवमर्थमिदं सूत्रमित्यर्थः । क्रमेण प्रतिषेधविषयमुदाहरति । **पाचकस्त्रीत्यादि** । पाचिका चासौ स्त्री च पाचकस्त्री । 'न कोपधायाः' इति निषेधः प्राप्तः स बाधितः । **पञ्चमभार्येति** । पञ्चमी चासौ भार्या च पञ्चमभार्या । दत्तभार्या । दत्ता चासौ भार्या चेति । अत्रोभयत्र 'संज्ञापूरण्योश्च' इति निषेधः प्राप्तः । **स्रौघ्नभार्येति** । स्रुघ्ने भवा स्रौघ्नी । सा चासौ भार्या च स्रौघ्नभार्या । 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति । **सुकेशभार्येति** । सुकेशी चासौ भार्या च सुकेशभार्या । 'स्वाङ्गाच्चेतः' अमानिनीति* ।

१. पुंवद्भावात् D3. २ After it—समानाधिकरणे किम् । एकस्याः शाटी B2. ३. B1 has पाचिका चासौ स्त्री च before it; पाचकभार्या after it D3. ४. ब्राह्मणभार्या । स्रौघ्नभार्या । एवं पाचकजातीया C.

ब्राह्मणभार्या । एवं पाचकजातीया पाचकदेशीयेत्यादि । सर्वदेवाः[1] । जरत्पतिरित्यादि ।

---

**ब्राह्मणभार्येति** । ब्राह्मणी चासौ भार्या चेति । 'जातेश्च' इति । **एवं पाचकजातीया पाचकदेशीयेति** । पाचिकाप्रकारा पाचकजातीया । 'प्रकारवचने जातीयर्' । ईषदूना पाचिका पाचकदेशीया । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयर् । **इत्यादीति** । आदिना पञ्चमजातीया पञ्चमदेशीया दत्तजातीया दत्तदेशीया स्रौघ्नजातीया स्रौघ्नदेशीया सुकेशजातीया सुकेशदेशीया ब्राह्मणजातीया ब्राह्मणदेशीयेति । **सर्वदेवा** इत्यादि । 'पूर्वकाल—' इत्यास्योदाहरणशेषः । **इत्यादीति** । आदिना पुराणान्नम् । नवान्नम् । केवलान्नमिति । समानाधिकरणेनेति किम् । एकस्याः शाटी । स्पष्टत्वात् त्यक्तं सूत्रत्रयम् ।[2] 'दिक्संख्ये संज्ञायाम्' । २।१।५०।। दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते स तत्पुरुषः । संज्ञायां विषये पूर्वेषुकामशमी । पञ्चाम्राः । सप्तर्षयः । संज्ञायां किम् । उत्तरा वृक्षाः । पञ्च ब्राह्मणाः । 'कुत्सितानि कुत्सनैः' ॥२।१।५३॥ कुत्सितवाचीनि सुबन्तानि कुत्सनवाचिभिः सुबन्तैः सह समस्यन्ते स तत्पुरुषः । शब्दप्रवृत्तिनिमित्तकुत्सायामयमिष्यते । 'विशेषणं विशेष्येण' इति विशेष्यस्य परनिपाते प्राप्ते पूर्वनिपातार्थ आरम्भः । वैयाकरणखसूचिः । निष्प्रतिभ[3] इत्यर्थः । याज्ञिककितवः[4] । अयाज्ययाजनातृष्णापर इत्यर्थः । मीमांसकदुर्दुरूढः । नास्तिक इत्यर्थः । कुत्सितानीति किम् । वैयाकरणश्चोरः । न ह्यत्र वैयाकरणत्वं कुत्स्यते । कुत्सनैरिति किम् । कुत्सितो ब्राह्मणः । 'पापाणके कुत्सितैः' । २।१।५४।। पापाणकशब्दौ कुत्सिताभिधायिनौ तयोः पूर्वेण समासे परनिपातः स्यात् । पूर्वनिपातार्थोऽयमारम्भः । पापनापितः । अणकनापितः ।

---

१. सर्वे च ते देवाश्च before it and जरच्चासौ पतिश्च before जरत्पतिः in B1. २. After it—व्याख्यायते Dc3. ३. निःप्रतिभ Bc1, Dc1, Dc4. ४. °याजक° Dc2.

**उपमानानि सामान्यवचनैः ॥२।१।५५॥**

उपमानोपमेयैकधर्मवचनैरुपमानानि समस्यन्ते ॥ [1]घन इव श्यामो घनश्यामः ।

**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥२।१।५६॥**

उपमेयमुपमानैर्व्याघ्रादिभिः समस्यते[2] ॥ पुरुषो [3]व्याघ्र इव पुरुषव्याघ्रः । सामान्याप्रयोगे किम् । पुरुषो व्याघ्र इव शूरः[4] ॥

---

**उपमानानि** । इह सूत्रे उपमानस्य श्रुतत्वात् तस्य चोपमेयापेक्षत्वात् उपमानोपमेययोरेव यः साधारणो धर्मः स सामान्यशब्देनोच्यते इत्याह । **उपमानोपमेयैकधर्मवचनैरिति** । उपमीयते येन तदुपमानम् । उपमीयते यत्तदुपमेयम् । तयोरेकः साधारणो यो धर्मस्तमुक्तवन्तो ये उपमेयवचनाः शब्दास्तैः सहोपमानवाचिनः शब्दाः समस्यन्त इत्यर्थः । **घन इव श्यामो घनश्याम** इति । उपमानं घनः प्रसिद्धत्वादुपमेयं कृष्णोऽप्रसिद्धत्वात् तयोः सामान्यवचनमेको धर्मः श्यामत्वं तत् श्यामत्वमुक्त्वा श्यामशब्दः श्रीकृष्णे मतुब्लोपादभेदोपचाराद्वा वर्तत इति सामान्यवचनः । सामान्यवचनैरिति किम् । पर्वता इव वलाहकाः ।

**उपमितम्** । उपमितमुपमेयं तच्च सामर्थ्यादुपमानवचनैः शब्दैः सह समस्यते न चेत् सामान्यवाची शब्दः प्रयुज्यत इतीमं सूत्रार्थमभिप्रेत्याह । **उपमेयमित्यादि** । व्याघ्र । सिंह । ऋक्ष । ऋषभ । [5]वृषल । वृक । वृष । वराह । हस्तिन् । कुञ्जर । रुरु । पृषत् । पुण्डरीक । पलाश । कितव । आकृतिगणश्चायम् । तेनेदमपि स्यात् । मुखपद्मम् । मुखकमलम् । करकिसलयम् । पार्थिवचन्द्र इत्यादि ।

---

१. घन इव श्यामः dropped $D_3$. २ After it—सामान्याप्रयोगे $B_1$. ३. P and C have अयम् before it. ४. After this—व्याघ्र । सिंह । ऋषभ । वृषभ । पुण्डरीक । पद्म । पल्लव । किसलय । इन्दु । चन्द्रादयः $D_2$, $D_4$, C, $B_1$, $B_2$ (पर्यङ्क । पल्लव । किशलय $D_2$) चन्द्र । वराह । हस्तिन् । कुञ्जर । इत्यादि $D_4$; शार्दूल । सिंह for सिंह । वृषभ $D_2$, $B_2$ (वृषभ dropped $B_2$). ५. वृषभ $Dc_1$.

**विशेषणं विशेष्येण बहुलम् ॥२।१।५७॥**

भेदकं[1] भेद्येन[2] समानाधिकरणेन बहुलं समस्यते[3] ॥

बहुलोक्तेः कृष्णसर्प इत्यादौ नित्यम् । रामो[4] जामदग्न्य इत्यादौ न[5] । क्वचिद्वा[6] । नीलमुत्पलं नीलोत्पलम्[7] ।

---

**विशेषणम्** । विशेषणस्य लक्षणमाह । **भेदकमिति** । यत् सामान्याकारेण प्रवृत्तमनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थापयति तद् भेदकम् । **भेद्यमिति** । विशेष्यस्य लक्षणम् । यदनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थाप्यं तद् भेद्यम् । **रक्तलतेति** । रक्ता चासौ लता च रक्तलता । शुक्लतादिभ्यो लतार्थं व्यावर्तयतीति रक्तशब्दो विशेषणम् । लतार्थस्तु व्यावर्त्यत्वाद्विशेष्यम् । बहुलग्रहणस्यार्थमाह । **बहुलोक्तेरि-** त्यादि । अत्र विशेष्येणेत्येतावतैव संबन्धिशब्दाद्विशेषणमिति लब्धे पुनर्विशेषणोपादानमुत्तरपदस्य विशेषणत्वप्रतिपत्त्यर्थम् । ततश्चायमर्थः । तच्चेद्विशेष्यं विशेषणमर्थाद्विशेषणमपि विशेष्यमिति । अतस्तक्षकः सर्प इत्यत्र न । सर्पस्याविशेषणत्वात् । लोहितस्तक्षक इत्यत्रापि न । तक्षकस्याविशेष्यत्वात् ।

---

१. After it—सुबन्तं C, $D_2$, $B_1$, $B_2$. २. After it—सुबन्तेन C, $D_2$, $B_1$, $B_2$ (समानाधिकरणेन सुबन्तेन C). ३. After it—स तत्पुरुषः $B_1$; After it the Sûtra—तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ १।२।४२॥ रक्ता चासौ लता च रक्तलता । $D_3$, $B_1$, $B_2$ ($B_2$ drops the Sûtra only). ४. Before it—लोहिताहिः C ; अर्जुनकार्तवीर्यः $B_2$. ५. न भवति $D_4$. ६. °द्वा स्यात् $D_4$. ७. After it—कुत्सितानि कुत्सनैः ॥ २।१।५३॥ कुत्सितवचनानि कुत्सितवचनैः सह समस्यन्ते स तत्पुरुषः । शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते । वैयाकरणखसूचिः । निःप्रभ इत्यर्थः । याज्ञिकाकितवः ॥ पापाणके कुत्सितैः॥ २।१।५४॥ पापाणकशब्दौ कुत्सिताभिधायिनौ कुत्सितैः सह समस्येते । पापकुलालः । अणकनापितः ॥ C, $D_2$, $D_3$, $D_4$, $B_1$, $B_2$ (निमित्तकुत्सित° $B_1$; कुत्सितवचनानि सुबन्तानि $B_2$, $D_4$) स तत्पुरुषः स्यात् C; शब्दप्रवृत्ति-कुत्सायां $B_1$; यथावैयाकरणखसूचिः $B_1$; निःप्रतिभ $B_2$, $D_3$, $D_4$; याजक-कितवः $D_4$; कुत्सितवचनैः सह $B_2$, $D_3$ : समं for सह $B_1$. ८. °द्यैकप्रकारे $Dc_3$, $Dc_4$.

शाकपार्थिवादीनामुत्तरपदलोपश्च[1]* ॥ शाकप्रियः[2] पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ।

**शाकपार्थिवादी**नामिति । शाकपार्थिवादीनां समास उत्तरपदलोपश्च स्यादिति वक्तव्यमित्यर्थः । **शाकप्रिय** इत्यादि । अत्र प्रियशब्दस्योत्तरपदस्य लोपः । 'विशेषणं विशेष्येण बहुलम्' इत्यस्य प्रपञ्चत्वात्त्यक्तानि पञ्चदश सूत्राणि व्याख्यायन्ते । 'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' ।२।१।५८॥ एते समानाधिकरणेन समस्यन्ते[3] स तत्पुरुषः । पूर्वपुरुषः । अपरपुरुषः । इत्यादि । 'श्रेण्यादयः कृतादिभिः ।२।१।५९॥ श्रेण्यादयः समानाधिकरणैः समस्यन्ते । श्रेण्यादिषु च्व्यर्थवचनम् । अश्रेणयः श्रेणयः कृताः श्रेणीकृताः । च्व्यन्तानां तु 'कुगतिप्रादयः' इति नित्यसमासः । श्रेणीकृताः । श्रेणि । एक । पूग । कुण्ड । राशि । विशिख । निधान । देव । मुण्ड । भूत । श्रवण । वदान्य । अध्यापक । अभिरूपक[4] । क्षत्रिय । पटु । पण्डित । कुशल । चपल । निपुण । कृपण । श्रेण्यादिः । कृत । मत । मित । भूत । उक्त । समाम्नात । समाख्यात । संभावित । अवधीरित । निराकृत । अवकल्पित । उपकृत । उपाकृत । कृतादिराकृतिगणः । 'क्तेन नञ्विशिष्टेनानञ्' ॥२।१।६०॥ नञेव विशेषोस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तन्नञ्विशिष्टं तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सहानञ् क्तान्तं समस्यते स तत्पुरुषः । कृतं च तदकृतं च कृताकृतम् । भुक्ताभुक्तम् । नुडिटौ तद्भक्तत्वान्नैव भेदकौ । अशितानशितेन जीवति । क्लिष्टाक्लिशितेन जीवति । कृतापकृतादीनामुपसंख्यानम् । कृतापकृतम् ।

---

१. C has वाच्यः after it. २. शाकप्रियश्चासौ पार्थिवश्च $B_1$. ३. समानाधिकरणेन समस्यन्ते स तत्पुरुषः । $Dc_1$. ४. अभिरूप $Dc_1$.

भुक्तविभुक्तम् । पीतविपीतम् । गतप्रत्यागतम् । यातानुयातम् क्रयाक्रयिका । फलाफलिका । मानोन्मानिका । 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' ।२।१।६१।। सदादयः पूजावचनाः पूज्यमानैः समानाधिकरणैः समस्यन्ते स तत्पुरुषः । महापुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । पूज्यमानैः किम् । उत्कृष्टा गौः कर्दमात् । 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' । २।१।६२।। एतैः पूजावचनैः पूज्यमानं समस्यते । गोवृन्दारकः । गोनागः । गोकुञ्जरः । पूज्यमानं किम् । सुभीमो नागः । 'कतरकतमौ जातिपरिप्रश्ने' ।२।१।६३।। समानाधिकरणेनेत्यापादसमाप्तेर्वर्तते । जातिपरिप्रश्ने वर्तमानौ कतरकतमौ सुपा समस्येते । कतरकठः । कतमकठः । 'किं क्षेपे' ।२।१।६४।। किमित्येतत् क्षेपगम्ये सुपा समस्यते । किंराजा यो न रक्षति । 'किमः क्षेपे' इति समासान्तनिषेधः । क्षेपे किम् । को राजा पाटलिपुत्रे ।'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः' ।२।१।६५।। एतैर्जातिः समस्यते । स्त्री पुंसलक्षणा पोटा । गृष्टिरेकवारप्रसूता । धेनुर्नवप्रसवा । वशा वन्ध्या । वेहद्गर्भघातिनी । बष्कयणी तरुणवत्सा । इभपोटा । इभयुवतिः । अग्निस्तोकम् । उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । जातिः किम् । देवदत्तः प्रवक्ता । धूर्तग्रहणमकुत्सार्थम् । 'प्रशंसावचनैश्च' ।२।१।६६।। जातिवाचि सुबन्तं प्रशंसावचनैः समस्यते । रूढा मतल्लिकादयः प्रशंसावाचिनो गृह्यन्ते । गोप्रकाण्डम् । गोमतल्लिका । 'युवाखलतिपलितवलिनजरतीभिः' ।२।१।६७।। खलत्यादिभिः समानाधिकरणैः युवशब्दः समस्यते । जरतीभिरिति स्त्रीलिङ्गनिर्देशः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ज्ञापनार्थः । युवा खलतिः

१. पूज्यमानैः Bc[1].

युवखलतिः । युवतीः खलती युवखलती । इत्यादि । 'कृत्यतुल्याख्या अजात्या' ॥२।१।६८॥ कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्चाजातिवचनेन समस्यन्ते । भोज्योष्णम् । भोज्यलवणम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या किम् । भोज्य ओदनः । 'वर्णो वर्णेन' ॥२।१।६९॥ कृष्णसारङ्गः । अवयवद्वारेण कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति । 'कुमारः श्रमणादिभिः' ।२।१।७०॥ श्रमणादिषु ये स्त्रीलिङ्गाः पठ्यन्ते तैः स्त्रीलिङ्ग एव कुमार-शब्दः समस्यते । अन्यैस्तु पुंलिङ्गः स्त्रीलिङ्गश्च । कुमारी श्रमणा कुमारश्रमणा । कुमारोध्यापकः कुमाराध्यापकः । कुमारी अध्यापिका कुमाराध्यापिका । श्रमणा । प्रव्रजिता । कुलटा । गर्भिणी । तापसी । दासी । बन्धकी । अध्यापक । अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण । 'चतुष्पादो गर्भिण्या' ॥२।१।७१॥ चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन समस्यन्ते । गोगर्भिणी । अजागर्भिणी । जातिः किम् । कालाक्षी गर्भिणी । चतुष्पादः किम् । ब्राह्मणी गर्भिणी । 'मयूरव्यंसकादयश्च' ॥२।१।७२॥ समुदाया एव निपात्यन्ते । चकारोवधारणार्थः । तेन परममयूरव्यंसक इति समासान्तरं न । मयूरव्यंसकः । छात्रव्यंसकः । कम्बोजमुण्डः । यवनमुण्डः । छन्दसि । हस्तेगृह्य । पादेगृह्य । लाङ्गूलेगृह्य । पुनर्दाय । भाषायां तु हस्ते गृहीत्वेत्यादि । एहीडादयोन्यपदार्थे । एहीडेति यत्र कर्मणि तदेहीडं वर्तते । एहियवम् । एहिवाणिजा । अपेहिवाणिजा । प्रेहिवाणिजा । एहिस्वागता । प्रेहिस्वागता । एहिद्वितीया । अपेहिद्वितीया । प्रेहिद्वितीया । एहिकटा । प्रेहिकटा । अपेहिकटा । एहिकर्दमा । प्रेहिकर्दमा । उद्धमचूडा । आहरचेला । आहरवसना । आहरवितता । कृन्धिविचक्षणा । उद्धरोत्सृजा । उद्धमविधमा । उत्पतनिपता । उच्चावचम् । आचोपचम् । उच्चनीचम् । आचपराचम् । निश्चप्रचम् । अकिञ्चनम् । सकिञ्चनम् । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहितकः । प्रोष्यपापीयान् । उत्पत्यपाकला । निपत्यरोहिणी । निषण्णश्यामा ।

**नञ् ॥२।२।६॥**

नञ् समर्थेन सुपा[1] समस्यते[2] ।[3]

**नलोपो नञः ॥६।३।७३॥**

नञो नलोपः[4] स्यादुत्तरपदे[5] ॥

---

अपेहिप्रघसा । इहपञ्चमी । इहद्वितीया । जहिकर्मणा बहुलमाभीक्ष्ण्ये समस्यते समासेन कर्ताभिधीयते चेत् । जहिजोडः । उज्जहिजोडः । उज्जहिस्तम्बः[6] । आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता । पचतभृज्जता । खादतमोदता । खादतवमता । आहरनिवपा । आवपनिष्किरा । उत्पचनिपचा । भिन्धिलवणा । पचलवणा । पचप्रकूटा । अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः ।

नञ् । अकारो नलोपो नञिति विशेषणार्थः ।

नलोपः । नञः सानुबन्धस्य ग्रहणं पामनपुत्रो नैकधेत्यत्र मा भूदिति । ननु च क्रियमाणेपि सानुबन्धग्रहणे स्त्रैणार्थ इत्यत्र 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति जातस्य नञः कस्मान्नलोपो न । उच्यते । विभाषानुवर्तते । तस्याश्च व्यवस्थितविभाषात्व-विज्ञानादत्र न स्यात् । यद्येवं पामनपुत्रो नैकधेत्यत्राप्यत एव न स्यात् । एवं तर्हि विस्पष्टार्थं सानुबन्ध[7]ग्रहणम् ।

---

१. सुबन्तेन $D_3$. २. C has नित्यं समस्यते. ३. After it—तदन्यतद्विरुद्ध-तदभावेषु नञ् प्रवर्तते । $B_2$. ४. नस्य लोपः $B_1$, $B_2$, $D_1$. ५. °दुत्तरे पदे P. ६. $Dc_1$ has हस्तिबन्धः before it, $Dc_2$ जहिस्तम्बः after it. ७. °बन्धक° $D_3$.

**तस्मान्नुडचि ॥६।३।७४॥**

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् ॥

**तस्मात्** । सप्तमीपञ्चमीनिर्देशयोः परत्वात् पञ्चमीनिर्देश एव बलीयानित्यभिप्रेत्याह । **लुप्तनकारा**दित्यादि । तस्मादिति किम् । नञ एव हि स्यात् पूर्वान्ते हि क्रियमाणे 'ङमो ह्रस्वादचि—' इति ङमुट् स्यात् । अतः किन्न कृतस्तस्मादित्येवोक्तम् । अचि किम् । अब्राह्मणः । ननु चायं नञ्समासः किंप्रधानः । उत्तरपदार्थप्रधानः । तत्पुरुषत्वात् । यदि पूर्वपदार्थप्रधानः स्यात्तर्ह्यव्ययीभावः स्यात् अमक्षिकमिति । अन्यपदार्थप्राधान्ये पुनर्बहुव्रीहिः स्यात् अब्राह्मणको देश इति । अत उत्तरपदार्थप्रधानस्तत्पुरुषोयम् । ननु च नञ् निषेधवाची स किं सतो निषेधं ब्रूते अथासतः । न तावत् सतः । तस्याशक्यसाधनत्वात् । यदि सतोपि निषेधे नञः सामर्थ्यं स्यात् तर्हि राजानो हस्त्यश्वादीन् न बिभृयुः । न सन्ति शत्रव इत्येवं ब्रूयुः । नाप्यसतः । तस्य स्वत एव निषिद्धत्वात् । न च प्रकारान्तरं संभवति । उच्यते । सर्वो हि शब्दः प्रयुज्यमानः स्वार्थज्ञानमपेक्षते । स्वयं हि ज्ञातमर्थं परं प्रतिपादयितुकामेन शब्दः प्रयुज्यते । तच्चार्थज्ञानं द्विविधं सत्यं मिथ्या चेति । द्वयमप्येतत् ब्राह्मणशब्दं प्रवर्तयति । तत्र सम्यग्ज्ञानपूर्वके ब्राह्मणशब्दप्रयोगे नास्ति नञो व्यापारः । न हि तेन तत्र किंचित् क्रियते । ब्राह्मणशब्दस्य सत्यत्वेन तदर्थस्य निषेद्धुमशक्यत्वात् । मिथ्याज्ञानपूर्वके त्वस्ति व्यापारः । तत्र हि तेन ब्राह्मणशब्दस्य मिथ्याज्ञानप्रभवत्वमाख्यायते । स च निषेधो द्विविधः पर्युदासवृत्तिः प्रसज्यवृत्तिश्च । तत्राद्यपक्षे ब्राह्मणसदृश एव क्षत्रियादिरब्राह्मण इत्युक्ते प्रतीयते । मिथ्याज्ञानमिन्द्रियहेतुकं सादृश्यमन्तरेण न भवतीति सादृश्यस्य

१. °स्तवा Dc2. २. प्राधान्येन बहु° Dc1. ३. इत्येव Dc2, Dc4. ४. तथार्थ° Dc4. ५. तत्राद्ये पक्षे Dc3.

अश्वादन्योनश्वः । धर्मविरुद्धोधर्मः । पापाभावोपापम् ।

नञ्विशिष्टेनोत्तरपदेन लक्षणात् । तथोक्तम् । नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिरिति । द्वितीये तु मिथ्याज्ञाननिवृत्तिः क्रियते । अश्वो न भवत्यनश्व इत्यादि । तत्र मिथ्याज्ञाननिवृत्त्या नञ्विशिष्टेन परपदेनान्यत्वविरुद्धत्वाभावविशेषा लक्ष्यन्ते । तत्र सादृश्यस्योदाहरणमब्राह्मण इत्येतत् प्रसिद्धत्वान्नोक्तम् । तदन्यतद्विरुद्धतदभावविशेषाणामुदाहरणान्याह । अश्वादन्योनश्व इत्यादि । तत्र नञ्विशिष्टेनाश्वपदेनान्यत्वं लक्ष्यते । नञ्विशिष्टेन तु धर्मशब्देन विरुद्धत्वम् । नञ्विशिष्टेन च पापशब्देनाभावविशेष इत्येते त्रयोपि तत्पुरुषाः । उत्तरपदार्थप्राधान्यात् । तथोक्तं विचारचिन्तामणौ ।

नञ्नलोपो द्वेवित्रिप्रोयशोनभिरभाषणम् ।
सदृग्विरुद्धान्याभावा नञर्था एव्वनुक्रमात् ॥
समासे तूत्तरपदप्राधान्यं मासजातवत् ।
नञर्थमिलितं तद्धि सदृशादीनि लक्षयेत्' ॥ इति ।

ननु चापापमित्यत्राव्ययीभावो युक्तः । पूर्वपदार्थस्यैवाभावस्य प्राधान्यात् । सत्यम् । यदाभावमात्रमुच्यते तदापापमित्यव्ययीभाव एवार्थाभावे । यदा त्वभावविशेष उच्यते न तदाव्ययीभावः । अभावविशेषस्य नञर्थत्वाभावेन पूर्वपदार्थप्राधान्याभावात् । तथोक्तं नरेन्द्राचार्यैः । 'अग्रहणमिति ग्रहणाभावमात्रविवक्षायामव्ययीभावोदाहरणम् । अभावविशेषस्य विवक्षायां तत्पुरुषस्योदाहरणं ग्रहणस्याभावविशेषो ग्रहणाभाव इति तस्मिन्नेवार्थे वैकल्पिकः प्रयोगो विशेषस्य मुख्यवृत्त्या नञर्थत्वाभावात्' इति ।

१. धर्मविरोधोधर्मः C, D3. २. प्रविशिष्ट° Dc1,

नञो नलोपस्तिङि क्षेपे* ॥ अपचसि त्वं जाल्म ।[१]

[२]नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक-नक्षत्रनक्रनाकेषु प्रकृत्या ॥६।३।७५॥

[३]नग्ननाग[४]नाभागनाराचनाचिकेतनापितनमेरु[५]ननान्दनभस-[६]नान्तरीयकादिषु वाच्यम्* ॥ निषेधार्थनकारस्य समासत्वान्न-लोपाभावो नैकधेत्यादौ ज्ञेयः ।

**आन्महतः समानाधिकरणजातीययोः ॥६।३।४६॥**

महत आकारोन्तादेशः स्यात् समानाधिकरणे जातीये च परे ॥ महादेवः ।

---

नञो नलोप इति । तिङन्ते परे नञो नकारस्य लोपो भवतीति वाच्यं निन्दायां गम्यमानायामित्यर्थः । ननु च नैकधेत्यादौ नलोपो नुट् च कस्मान्न स्यादित्याशङ्क्याह ।

निषेधार्थेत्यादि । अमानो नाः प्रतिषेधे इति निषेधार्थो योस्ति नकारस्तेन सह समासोयं न तु नञेति कृत्वा नलोपाभावो नैकधेत्यादौ वेदितव्य इत्यर्थः ।

आत् । महादेव इति । महांश्चासौ देवश्च महादेवः । 'सन्महत्—' इति समासः । समानाधिकरणजातीययोरिति किम् ।

---

१. After this—निषेधार्थेन नञा समासत्वान्नलोपाभावो नैकधेत्यादौ ज्ञेयः $D_5$, $Dc_1$. २. The Sûtra and the Vârtika following it up to वाच्यम् dropped P, $D_1$, $D_3$. ३. For नग्न...ज्ञेयः $D_5$ has—एतेषु नञ् प्रकृत्या तिष्ठति. ४. नभाग $B_1$. ५. ननान्द्र $B_1$. ६. नोत्तरीयकादिषु C.

महान्[1] प्रकारो[2]ऽस्य महाजातीयः ।

घासकरविशिष्टेष्वपि वाच्यम्* ॥ जातीयघासादौ तीशब्दस्याप्यात्वम् । महत्या घासो महाघासः । महाकरः[3] । महाविशिष्टः ।

---

महतः पुत्रो महत्पुत्र इत्यत्र मा भूत् । ननु च लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न्याय्यमिति परिभाषया 'सन्महत्—' इत्यादिना प्रतिपदोक्ते समासे यः पूर्वपदो महच्छब्दः स एव ग्रहीष्यते न महत्पुत्र इत्यत्र लाक्षणिके । एवं च समानाधिकरणपदं व्यर्थम् । न व्यर्थम् । बहुव्रीहावपि यथा स्यादित्येवमर्थम् । तेन महाबाहुरिति सिध्यति । अत्र समानाधिकरणग्रहणसामर्थ्यात् लक्षणप्रतिपदोक्तपरिभाषा नायाति । तेन बहुव्रीहावपि स्यादन्यथा लाक्षणिकत्वात् तत्र न स्यात् । अमहान् महान् संपन्नो महद्भूतश्चन्द्रमा इत्यत्र गौणत्वं महदर्थस्येति न भवत्यात्वम् ।

घासेति । घासकरविशिष्टइत्येतेष्वपि परपदेषु महत आत्वं स्यादिति वाच्यमित्यर्थः । जातीयघासादाविति । तीशब्दस्याप्यात्वमित्यस्यायं भावः । जातीयघासादौ महतीशब्दस्य पुंवद्भाव आत्वं च वक्तव्यमिति तथा वाच्ये लाघवार्थमेवमुक्तम् । तथा चोक्तं कात्यायनेन । महदात्वे घासकरविशिष्टेषूपसंख्यानम् । पुंवद्भावश्चासमानाधिकरणार्थ इति । स्पष्टत्वात् त्यक्तं सूत्रम् । 'ईषदकृता'। २।२।७।। ईषदित्यव्ययं शब्दो गुणवाचिनाकृदन्तेन समस्यते । ईषत्पिङ्गलः । अकृता किम् । ईषत्कारकः । अनेकपद्यमेकस्वर्थमेकविभक्तिकत्वं च न । गुणवाचिना किम् । ईषद्गार्ग्यः ।

---

१. D1, Dc1, D3, D5 drop from महान् to महाजातीयः. २. प्रकारो यस्य C. ३. महत्याः करः before it in B1. ४. ज्ञेय° Dc2.

## [1]तद्धितार्थोत्तरपदसमाहारे च ॥२।१।५१॥

[2]तद्धितार्थविषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये एकार्थेन समस्येते स तत्पुरुषः॥ पूर्वस्यां शालायां भव इति विग्रहे।

---

तद्धित। यदि तद्धितार्थे वाच्ये इति स्यात् तर्हि पाञ्चनापितिरित्यादौ तद्धितो न स्यात्। तदर्थस्य समासेनैवोक्तत्वात्। अत एकापि सप्तमी विषयभेदेन भिद्यमाना तद्धितार्थापेक्षया विषयसप्तमी उत्तरपदापेक्षया परसप्तमी समाहारापेक्षयाभिधेयपरे[3]त्येतच्चेतसि कृत्वाह। तद्धितार्थे विषये इत्यादि। तद्धिता अणादयस्तेषामर्थोपत्यादिस्तस्मिन् विषये। अनन्यत्रभावो विषयार्थः। एकार्थेनेति। समानाधिकरणेनेत्यर्थः। ननु च समाहारः समूहः स तद्धितार्थ एवेति समाहारग्रहणं पृथक् न कार्यम्। मैवम्। पञ्चकुमारीत्यत्र समूहप्रत्ययस्य 'द्विगोर्लुगनपत्ये' इति लुकि कृते 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक् स्यात्। समाहारस्य पृथग्ग्रहणे तु तद्धितानुत्पत्तिरेवात्र विषये व्याख्यायत इति न स्यादेष दोषः। तथा ह्याह। समाहारे वाच्ये इति। समाहरणं समाहारः विप्रकीर्णानामेकराशीकरणम्। भिन्नदेशानामपि बुद्ध्या राशीकरणं स्यात्। पूर्वस्यामित्यादि। पौर्वशाल इत्यस्यार्थबोधके वाक्ये सति तद्धितार्थे विषयभूते समासे सु[4]ब्लुकि वसतीत्यर्थः।

---

१. Before this—

**दिक्संख्ये संज्ञायाम् ॥ २।१।५०॥**

दिग्वाचिनः शब्दाः संख्या चोत्तरपदेन समानाधिकरणेन समस्यन्ते संज्ञायां विषये स तत्पुरुषः स्यात्॥ पूर्वा चासौ दिक् च पूर्वदिक्। सप्तर्षयः। $B_1$.

२. तद्धितार्थे विषये $D_1$, $D_3$, $D_5$. ३. °भिधेये $Dc_3$. ४. सुपि लुकि $Dc_1$.

## दिक्पूर्वपदादसंज्ञायां ञः ॥४।२।१०७॥

अस्माद्[1] भवाद्यर्थे ञः[2] स्यादसंज्ञायाम्। कर्मधारये पुंवद्भावे च कृते ञनिमित्ता आदिवृद्धिः। पौर्वशालः।[3] उत्तरपदे। पूर्वशालाप्रियः। दिक्षु समाहारो नास्ति।

---

**दिक्पूर्व**। असंज्ञायामिति प्रकृतिविशेषणम्। ततश्च असंज्ञाविषयाद्। दिक्पूर्वपदात् प्रातिपदिकात् ञः स्यादित्यर्थः। असंज्ञायां किम्। पूर्वेषुकामशमी। 'दिक्संख्ये संज्ञायाम्' इति समासः। 'प्राचां ग्रामनगराणाम्' इत्युत्तरपदवृद्धिः। पदग्रहणं स्वरूपविधिनिरासार्थम्। अन्यथा दिग्दाह इत्यादिः प्रकृतिः स्यात्। पदग्रहे तु दिग्विशेषो गृह्यते। कथम्। पदग्रहणसामर्थ्यात्। दिशः पूर्वं पदं यस्येति त्रिपदो व्यधिकरणो बहुव्रीहिः। दिश इति वाचकापेक्षया षष्ठी। तेनेह तदभिधायी दिक्शब्दो गृह्यते। कर्मधारय इत्यादि। समानाधिकरणस्तत्पुरुषोयमिति कर्मधारयसंज्ञा। तस्यां च सत्यां 'पुंवद्—' इत्यादिना पूर्वपदस्य पुंवद्भावस्तस्मिंश्च कृते 'ञ्णिति—' इत्यनुवर्त्य विधीयमानात् 'तद्धितेष्वचामादेः' इत्यनेनादेरचो वृद्धिः स्यादित्यर्थः। **उत्तरपदे** इति। उत्तरपदे परतः समासः कथ्यत इत्यर्थः। **पूर्वशालाप्रिय** इति। पूर्वा शाला प्रिया यस्येति विग्रहे प्रियशब्दे उत्तरपदे परतो भाविनि विवक्षिते पूर्वा शालानयोस्तत्पुरुषः। पुंवद्भावः समासान्तोदात्तत्वेन शालान्तोदात्ता। ततः प्रियशब्देन बहुव्रीहिः। **दिक्षु समाहारो नास्तीति**। समाहारः समूहः स च भिन्नानामेककालानां स्यात्। न त्वभिन्नस्य वस्तुनः।

---

१. एतस्माद् C. २. ञप्रत्ययः C; D3. ३. After it—यस्येत्याकारलोपः D2.

**संख्यापूर्वो द्विगुः ॥२।१।५२॥**

तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः[1] स्यात्[2] । पञ्चसु कपालेषु संस्कृत इति विग्रहे ।

**संस्कृतं भक्षाः ॥४।२।१६॥**

सप्तमीसमर्थात् संस्कृतार्थे[3] यथाविहितं[4] प्रत्ययः[5] भक्षाश्चे[6]द्वाच्याः स्युः[7] । इत्यण् । द्विगौ विभक्तिलोपे[8] च[9] कृते

---

संख्यैव हि भेदमाचष्टे न दिक्शब्दास्तेषां प्रतिनियतार्थविषयत्वाद् विभक्तिरपि समासे नास्ति । तस्मात् समाहारे दिक्शब्दा न संभवन्त्येवेति न तत्र समस्यन्ते । ननु[10] यथा काकसमूह इत्यत्र विभक्त्यभावेपि भेदावगतिस्तथात्रापि स्यात् । एवं तर्हि दिक्षु समाहाराभावे प्रयोगाभाव एव हेतुर्वाच्य इति न दिक्शब्दानां समाहारोदाहरणमिति भावः । इदानीं संख्यापूर्वपदं तत्पुरुषमाह ।

**संख्या**[11] । **पञ्च**स्वित्यादि । पञ्चकपाल इत्यस्यार्थबोधके वाक्ये एवंविधे सतीत्यर्थः ।

**संस्कृतम्** । संस्कृतमिति सामान्यशब्दत्वात् संस्कृतशब्दस्य क्लीबत्वैकवचने । भक्षा[12] इति विशेषवाचित्वाद् भक्षशब्दस्य पुंस्त्व-बहुवचने । **भक्षाश्चेद्वाच्या स्युरिति** । संस्कृतं वाच्यं तद्भक्षाश्चेत् स्युरित्यर्थः । इत्यण् । **द्विगौ विभक्तिलोपे च कृते** इति । प्रथमं द्विगुस्ततो विभक्तिलोपस्ततः 'प्राग्दीव्यतोण्' इत्यधिकारादण् इति भावः । खरविशदमभ्यवहार्यं भक्ष्यम् । सत उत्कर्षाधानं संस्कारः । भक्षाः किम् । पुष्पपुटे संस्कृतो मालागुणः ।

---

१. द्विगुः D3. २. B1 drops it. ३. संस्कृताद्यर्थे B1; संस्कृतेर्थे D3 ; संस्कृतमित्यर्थे D4. ४. °विहितः D3. ५. प्रत्ययाः स्युः C; प्रत्ययः स्यात् D6, D4, D3, D1, Dc1. ६. भक्ष्या° P, D2, D3, D5, C, B1, B2. ७. C drops it. ८. विभक्तेर्लोपे कृते C. ९. D1 drops it. १० ननु च Dc1. ११. संख्येति Dc3. १२. भक्षार्थे Dc4.

**द्विगोर्लुगनपत्ये ॥४।१।८८॥**

द्विगोर्निमित्तं यस्तद्धितोनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चकपालः पुरोडाशः । अनपत्ये किम् । द्वयोर्मित्रयोरपत्यं द्वैमित्रिः । पञ्चभिर्गोभिः क्रीत इत्यत्र द्विगौ कृते

**तेन क्रीतम् ॥५।१।३७॥**

तेनेति तृतीयासमर्थात् क्रीतार्थे यथाविहितं प्रत्ययः स्यात् । इति ठक् ।

---

द्विगोः । द्विगोरिति षष्ठी संबन्धे तच्च संबन्धित्वं निमित्तेनेत्याह । **द्विगोर्निमित्तमिति** । **प्राग्दीव्यतीयस्यस्येति** । 'प्राग्दीव्यतोण्' इत्यधिकारे यो विहितस्तस्येत्यर्थः । ननु च पञ्चकपालस्येदं पाञ्चकपालमत्र कथं लुक् न । उच्यते । प्रथमं तद्धितो योभूत् स एव हि द्विगोर्निमित्तमित्येष द्वितीयो नात्र लुप्यते । **द्वैमित्रिरिति** । 'अत इञ्' । **पञ्चभिर्गोभिः क्रीत इत्यत्र द्विगौ कृते** । इति । तद्धितार्थे विषये पञ्चभिर्गोभिरितीत्यत्र द्विगुसमासे कृते इत्यर्थः ।

तेन । 'प्राग्वतेष्ठञ्' इत्यारभ्य आदयस्त्रयोदश प्रत्ययाः पूर्वमुक्तास्तेषामनेन समर्थविभक्तिः प्रत्ययाश्च निर्दिश्यते । तेनेति मूल्यात् करणे या तृतीया विभक्तिः सा समर्थविभक्तिस्तेनान्यत्र न भवति । देवदत्तेन क्रीतं पाणिना क्रीतमिति । द्विवचनबहुवचनान्ताच्च न भवति प्रत्ययोनभिधानात् । प्रस्थाभ्यां क्रीतं प्रस्थैः क्रीतमिति । यत्र तु प्रकृत्यर्थस्य संख्याभेदावगतौ प्रमाणमस्ति तत्र द्विवचनबहुवचनान्तादपि प्रत्ययः स्यात् । द्वाभ्यां क्रीतं द्विकम् । त्रिकम् । पञ्चकम् । तथा मुद्रैः क्रीतं मौद्रिकम् । न ह्येकेन द्वाभ्यां वा मुद्राभ्यां क्रयः संभवति । इति ठगिति । 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्' इति पञ्चगोशब्दात् ठगित्यर्थः ।

---

१. क्रीताद्यर्थे $B_1$. २. प्रत्ययाः स्युः C. ३. संबन्धे षष्ठी $Dc_3$. ४. प्राग्वहते° $Dc_4$. ५. समर्था $Dc_2$ ; न समर्थ° $Dc_3$. ६. समर्था $Dc_2$. ७. मौद्रकम् $Dc_2$.

**अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्** ॥५।१।२८॥

अध्यर्धपूर्वाद् द्विगोश्च परस्यार्हीयप्रत्ययस्य लुक् स्याद-संज्ञायाम्॥ पञ्चगुः। उत्तरपदे पञ्च गावो धनं यस्येत्यत्र द्विगौ कृते

**गोरतद्धितलुकि** ॥५।४।९२॥

गोन्तात् तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि। अवादेशः। ततो बहुव्रीहिः।

---

**अध्यर्धपूर्वादित्यादि**। अध्यर्धशब्दः पूर्वो यस्य सोऽध्यर्धपूर्वस्तस्मात्। **आर्हीयप्रत्ययस्येति**। 'आर्हादगोपुच्छ—' इत्यधिकारे विहितस्य। अध्यर्धेन कंसेन क्रीतम्। 'कंसाट्टिठन्'। तस्य लुक्। अध्यर्धकंसम्। ननु चाध्यर्धशब्दः संख्यैवेति 'द्विगोः' इत्येव सिद्धे भेदेनोपादानं क्वचिदस्य संख्याकार्यं नेति ज्ञापनार्थम्। तेन 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच् न। **पञ्चगुरिति**। तद्धितलुको जातत्वान्न टच्। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। 'एच इग्' इतीक्। एवं तद्धितार्थे विषये संख्योदाहरणमुक्त्वा उत्तरपदे परतो वक्तुमाह। **उत्तरपदे** इत्यादि। **पञ्च गावो धनं यस्येत्यादि**। अत्र त्रिपदे बहुव्रीहौ धनशब्दे उत्तरपदे पूर्वयोः पदयोः 'तद्धितार्थ—' इति समासे कृते तस्य च 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायामेकसंज्ञाधिकारेऽपि 'द्विगुश्च' इत्यत्र सूत्रे चकारेण तत्पुरुषसंज्ञासमावेशादत्र तत्पुरुषकार्यमुच्यत इत्यर्थः।

**गोरतद्धित**। **न तु तद्धितलुकीति**। तद्धितलुग्विषये न भवतीत्यर्थः। अतद्धितलुकीति किम्। पञ्चभिः गोभिः क्रीतः पञ्चगुः। तद्धितग्रहणं किम्। सुब्लुकि निषेधो मा भूत्। राज्ञो गौः। राजगवः। लुग्ग्रहणं किम्। तद्धित एव निषेधो मा भूत्। पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम्। **अवादेश** इति। 'एचोऽयवायावः' इति। ततो बहुव्रीहिः।

---

१. °पूर्वाद् C, B1. २. लुगसंज्ञायाम् P, C, B1. ३. B1 has अश्वः after it. ४. C drops तु. ५. टच् न Dc1.

पञ्चगवधनः । समाहारे । पञ्च गावः समाहृता इत्यत्र समासान्ते कृते

**द्विगुरेकवचनम् ॥२।४।१॥**

द्विगोरर्थः समाहारे एकवत् स्यात् ॥

---

**पञ्चगवधन** इति । ततो द्विगुगर्भः पञ्चगवधन इत्येव बहुव्रीहिः स्यान्न तु विभाषाधिकारात् पञ्चगोधन इत्यपि स्यादिति वाच्यमिति भावः । तथा चोक्तम् । द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् । समाहारोदाहरणं वक्तुमाह । **समाहार** इत्यादि । **पञ्च गावः समाहृता** इति । पञ्चानां गवां समाहार इति यावत् । समुदायात् समुदायिनामभेदविवक्षयैवं विगृहीतम् । तत्र समाहारेऽर्थे द्विगौ विभक्तिलोपे 'गोरतद्धितलुकि' इति समासान्ते टचि कृते इत्यर्थः ।

**द्विगुरेक** । ब्रवीतीति वचनम् । एकस्यार्थस्य वचनमेकवचन-मित्यन्वर्थमेकवचनं गृह्यते न पारिभाषिकं तद्ग्रहेनुप्रयोगे एकवचनं न स्यात् पञ्चपूलीयं स्थूलेति तस्याद्विगुत्वादतो द्विगोरर्थस्यैकवद्भावो विधीयत इत्यभिप्रेत्याह । **द्विगोरर्थ** इत्यादि । ननु च द्विगोः पुल्लिङ्गत्वात्तद्विशेषणस्यैकवचनशब्दस्यापि पुल्लिङ्गता स्यात् । नैष दोषः। यतो लिङ्गसामान्यविवक्षयोपक्रमात् क्लीबत्वं पश्चात् द्विगुरित्यस्य पुँल्लिङ्गस्य संबन्धः । यदि द्विगुमात्रस्यार्थ एकवत् स्यात् तर्हि तद्धितार्थद्विगोरप्येकत्वं स्यात् ततश्च पञ्चकपालौ पञ्चकपाला इत्येतन्न स्यादतः समाहारद्विगोरिति वक्तव्यमित्यभिप्रेत्याह । **समाहार** इति । ननु च समाहारद्विगोश्चेद् ग्रहणं तर्हि व्यर्थं वचनं समाहारस्यैकत्वादेवैकत्वस्य सिद्धत्वात् । नैष दोषः । समुदायिभ्यो नान्यः समुदाय इत्यस्मिन् मतेनेकद्रव्यात्मकत्वात् समुदायस्यैकत्वं न स्यादित्यतोयमारम्भः । समुदायिभ्योन्यः समुदाय इति मते

---

१. Dropped D3. २. स्यात् dropped Dc1, Bc1, Dc4. ३. °वचनमिति Dc2, Dc3. ४. °क्रमत्वात् Dc1. ५. पुल्लिङ्गसंबन्धः Dc3. ६, एतत् dropped Dc4, Dc2, Dc3. ७. स्यादित्यस्यारम्भः Bc1, Dc1, Dc4. ८. अन्यः समुदायिभ्यः Dc3, Dc1, Dc4, Bc1.

स नपुंसकम् ॥२।४।१७॥

यस्यैकवद्भावः स नपुंसकं स्यात् ॥ पञ्चगवम् । द्विगोरन्यत्र । परमगवः[1] । देवगवः[2] । देवगवी ।

अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः ॥ 'द्विगोः' इति ङीप् । त्रिलोकी । आबन्तो वा । त्रिखट्वम् । त्रिखट्वी । अनो न-

---

प्रत्याख्यातमेव सूत्रं भाष्यकृता । एताः पञ्च पूल्य इत्यत्र तु पूर्वं द्विग्वर्थस्य पञ्चसंख्यायुक्तस्यैकवद्भावः कृतः । ततो बहूनां द्विगूनां द्विग्वर्थत्वाभावान्नैकवद्भावः ।

**स नपुंसकम्** । परवल्लिङ्गतापवादे[3] योगः । नपुंसकमित्येतावत्युच्यमाने 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यनन्तरस्य द्वन्द्वस्यैव स्यान्न द्विगोस्तस्मात् सग्रहणं कृतम् । यस्यैकवद्भावो विहितो द्विगोर्द्वन्द्वस्य वा तस्यैकवत्त्वं[4] यथा स्यादित्यभिप्रेत्याह । **यस्यैकवद्भाव** इति । **द्विगोरन्यत्रेति** । द्विगुव्यतिरिक्ते तु समानाधिकरणपदे व्यधिकरणपदे तु तत्पुरुषे एवं स्यादित्यर्थः । **परमगव** इत्यादि । परमश्चासौ गौश्च । 'सन्महत्परम—' इति समासः । देवगवः देवानां गौः । 'षष्ठी—' इति समासः । **देवगवीति** । 'टिड्ढाणञ्—' इति ङीप् ।

**अकारान्त** इति । अकारान्तमुत्तरपदं यस्य द्विगोः स स्त्रीलिङ्गे वर्तते इतीष्यते । **त्रिलोकीति** । त्रयाणां लोकानां समाहारः । **आबन्तो वेति** । आबन्तोत्तरपदो द्विगुः स्त्रियां वेष्यत इत्यर्थः । **त्रिखट्वमित्यादि** । पूर्ववत् । **अनो न-**

---

१. परमगावः C. २. P drops देवगवः. ३. °पवादो Dc1, Dc2, Dc4. ४. तस्य सर्वस्य नपुंसकत्वं यथा Dc2.

लोपश्च वा स्त्रियाम् । पञ्चकर्मी । पञ्चकर्मम ॥ पात्रादौ न ॥ पञ्चपात्रम । चतुर्युगम् । त्रिभुवनम ।

तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥५।४।८६॥

संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्याच् प्रत्ययः स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । निर्गतमङ्गुलिभ्यः निरङ्गुलम् ।

अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥५।४।८७॥

एभ्यो रात्रेरच् स्यात् चकारात् संख्याव्ययादेः ॥ अहश्च रात्रिश्च अहोरात्रम् ।

---

लोपश्चेति । अन्नन्तोत्तरपदस्य द्विगोर्नलोपः स्यात् स चान्नन्तो द्विगुर्वा स्त्रियां वर्तते । **पञ्चकर्म**मित्यादि । पञ्चानां कर्मणां समाहारः । **पात्रादौ नेति** । पात्राद्युत्तरपदे द्विगौ अकारान्तेपि स्त्रीत्वं नेत्यर्थः । पात्रादिराकृतिगणः ।

**तत्पुरुषस्य** । **द्वे अङ्गुलीत्यादि** । 'तद्धितार्थ—' इति समासः 'प्रमाणे द्वयसच्' इत्यादिना विहितस्य मात्रचः 'प्रमाणे लोद्विगोर्नित्यम्' इति लुक् । **निरङ्गुलमिति** । 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति समासः ।

**अहः** । ननु चात्र तत्पुरुषस्येत्यनुवर्तते । तत् कथमहश्च रात्रिश्च अहोरात्रमिति द्वन्द्व उदाह्रियते इत्याशङ्क्येष्टिमाह ।

---

१. After it—अन्नन्तोत्तरपदस्य द्विगोरन्तस्य नलोपः स्यात् । २. पञ्चकर्म । पञ्चकर्मी $D_1$, $B_2$, $D_4$. ३. Dropped $D_3$. ४. After this—अत्यङ्गुलम् । तत्पुरुषस्येति किम् । पञ्चाङ्गुलिर्हस्तः $B_2$, $D_3$, $D_4$. ५. Dropped $D_5$. ६. $Bc_1$ drops पात्राद्युत्तरपदे द्विगौ.

इहैव द्वन्द्वः । एकवद्भावात् क्लीबता । इतरत्र तत्पुरुषः ।

इहैव द्वन्द्व इति । इह अहोरात्रमित्यत्रैव द्वन्द्वोदाहृतिरपीष्यते । ज्ञापकादित्यर्थः । तच्च ज्ञापकं 'हेमन्तशिशिरावहोरात्रे च छन्दसि' इति समासान्तस्याहःशब्दात् परस्य रात्रिशब्दस्य निपातनम् । ननु चाहःशब्दादे रात्रिशब्दस्य तत्पुरुषो न संभवतीति द्वन्द्व उदाह्रियते । न त्वियं द्वन्द्वस्यापीष्टिः । मैवं वोचः । तत्पुरुषस्यापि संभवात् । तथा हि अहर्गुणा रात्रिरहःशब्देनोच्यते रात्रिगुणं वाहो रात्रिशब्देनोच्यते तदा अहश्च तद्रात्रिश्चेत्यहोरात्र इति समानाधिकरणस्तत्पुरुषः संभवति । अथवा अह्ना सहिता रात्रिरहोरात्रमिति मध्यमपदलोपी तत्पुरुषः संभवति ।[1] ततो द्वन्द्वेपि अहःशब्दात् पराद्रात्रिशब्दादजिष्यते । तथा चोक्तं न्यासकारेण । अहर्ग्रहणं द्वन्द्वार्थमितीष्टिरियं न तु तत्पुरुषस्यासंभवाद् द्वन्द्वार्थमित्येषोर्थः प्रतिपत्तव्य इति । अथवा इहैव द्वन्द्व इत्यस्यायमर्थः । इह अहोरात्रमित्यत्र द्वन्द्व एव तत्पुरुषस्यासंभवात् । यस्तु तत्पुरुषसंभवो दर्शितः स तु मुख्यया वृत्त्या न संभवतीत्यसंभव एव । तथोक्तं महाभाष्ये । 'अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्यम् । किमुच्यते द्वन्द्वार्थमिति । ननु[2] पुनस्तत्पुरुषार्थमपि स्यात् । तत्पुरुषाभावात् । न हि रात्र्यन्तोहरादिस्तत्पुरुषोस्ति' इति । ननु चाहोरात्रमिति चेद् द्वन्द्वस्तर्ह्यहोरात्रयोर्द्वित्वादहोरात्राविति द्विवचनेन 'रात्राह्नाहाः पुंसि' इति पुंस्त्वेन च भाव्यमित्याशङ्क्याह । एकवद्भावात् क्लीबतेति । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावपक्षे 'स नपुंसकम्' इति नपुंसकत्वमित्यर्थः । यदा त्वेकवद्भावो नास्ति न तदा नपुंसकत्वमहोरात्रौ पुण्याविति । ननु चाहर्ग्रहणं चेद् द्वन्द्वार्थं तर्हि तत्साहचर्यात् सर्वादयोपि द्वन्द्वार्थाः स्युरित्यत आह । इतरत्र तत्पुरुष इति । तत्रासंभवात् तत्पुरुषस्य द्वन्द्वार्थतोक्ता । सर्वैकदेशाद्यादेस्तु रात्र्यन्तस्य तत्पुरुषस्य संभवान्न द्वन्द्वार्थता किं तु तत्पुरुषार्थतैवेति तत्पुरुष इति भावः ।

१. After it—इति Dc3. २. ननु Dc2.

**रात्राह्नाहाः पुंसि ॥२।४।२९॥**

एते पुंस्येव॥ सर्वा रात्रिः सर्वरात्रः ॥[1] एकदेशः। पूर्वं रात्रेः पूर्वरात्रः । अपररात्रः । संख्यातरात्रः । पुण्यरात्रः ।[4]

संख्यादेः रात्रिशब्दस्य क्लीबता वाच्या* ॥ द्विरात्रम् । अतिरात्रः ।

---

रात्राह्नाहाः । परवल्लिङ्गतापवादः । कृतसमासान्तानां निर्देशो रात्र अह्न अह इति । **एते पुंस्येवेति** । एतदन्ताः पुंस्येवेत्यर्थः । ततश्च समाहारेपि पुंस्त्वमेव । अन्यथैषामेव पुंस्त्वे परवल्लिङ्गतया च तदन्तानामपि पुंस्त्वे सिद्धेपि समाहारे 'स नपुंसकम्' इत्येव स्यात् । परवल्लिङ्गतापवादत्वात् । वाकान्ताश्चेति वाच्यम् । अनुवाकः । शंयुवाकः । सूक्तवाकः । केचिदाहुः । अनुवाकादिर्बहुव्रीहिः । अनुक्रान्तो वाकोनयानेन वेति । तेन पक्षे क्लीबे स्त्रीलिङ्गे च प्राप्ते वचनमिति । अन्ये त्वाहुः । अनूच्यते अनुवाकः । 'अकर्तरि च कारके' इति घञ् । प्रादिसमासः । तत्र यो भावे घञ् स सामर्थ्यात् पुल्लिङ्गे एव नपुंसके तस्य क्तोपवादः स्त्रियां क्तिन्निति । यस्त्वकर्तरि कारके स पुंसि क्लीबे चापवादाभावादिति पक्षे क्लीबे प्राप्ते उक्तिः । **सर्वा रात्रिः सर्वरात्र** इति । 'पूर्वकालैकसर्व—' इति तत्पुरुषः । **पूर्वं रात्रेरित्यादि** । 'पूर्वापराधरोत्तरम्—' इति समासः । **संख्यातरात्र** इत्यादि । संख्याता रात्रिः । पुण्या रात्रिः । 'विशेषणं विशेष्येण बहुलम्' इति समासः । **द्विरात्रमिति** । द्वे रात्री समाहृते । 'तद्धितार्थ—' इति द्विगुः । अच्प्रत्ययः । **अतिरात्र** इति । रात्रिमतिक्रान्तः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः ।

---

१. सर्वा चासौ रात्रिश्च सर्वरात्रः P, $Dc_1$; हेमन्तशिशिरावहोरात्रे च छन्दसि । सर्वरात्रः । $D_4$. २. C drops from एकदेशः to संख्यातरात्रः. ३. Dropped $D_3$. ४. After it—अतिरात्रः । $D_3$. ५. संख्यापूर्वरात्रिशब्दस्य $D_1$; संख्यापूर्वस्य रात्रि° $D_3$. ६. C, $D_4$ have त्रिरात्रम् after it; $B_2$ has त्रिरात्रम् for द्विरात्रम्. ७. यस्तु भावे घञ् $Dc_4$.

**राजाहस्सखिभ्यष्टच् ॥५।४।९१॥**

एतदन्तात्तत्पुरुषाट्टच् स्यात् ॥ महाराजः । अतिराजः । अतिराजी । कृष्णसखः । महासखः । त्रिसखम् ।

**अह्नष्टखोरेव ॥६।४।१४५॥**

अह्नष्टखयो[1]रेव टिलोपः स्या[2]न्नान्यत्र । उत्तमाहः । [3]त्र्यहः ।

---

राजाहः । महाराजेति । 'सन्महत्—' इति समासः । टचश्चित्करणमव्ययपूर्वपदप्रकृतिस्वरत्वं बाधित्वा चित्स्वर एव यथा स्यादित्येवमर्थमिति दर्शयितुं तृतीयोदाहरणमतिराज इति । राजानमतिक्रान्तः । 'अत्यादय—' इति समासः । टचश्चित्करणं ङीबर्थमिति दर्शयितुं तृतीयोदाहरणमतिराजीति । कृष्णसख इति । षष्ठीसमासः । कर्मधारयेपि तत्पुरुषसंज्ञाश्रयं कार्यं स्यात् संज्ञानां समावेशात् तस्याः कर्मधारयसंज्ञयाबाधितत्वादिति दर्शयितुमुदाहृतं महासख इति । एकसंज्ञाधिकारेपि 'द्विगुश्च' इति चकारेण तत्पुरुषसंज्ञाया अपि समावेशस्योक्तत्वाद् द्विगावपि टच् स्यादिति दर्शयितुं त्रिसखमित्युदाहृतम् । त्रयाणां सखानां समाहारस्त्रिसखम् ।

अह्नः । 'नस्तद्धिते' इत्येव सिद्धे सत्यारम्भो नियमार्थः । एव[4]कारकरणं विस्पष्टार्थम् । अह्न एव टखयोरित्येवं विपरीतनियमो न भविष्यति । 'आत्माध्वानौ खे' इति प्रकृतिभावविधानसामर्थ्यात् । उत्तमाह इति । 'सन्महत्—' इति समासः । त्र्यह इति । त्रयाणामह्नां समाहारः । 'रात्राह्नाहाः पुंसि' इत्युभयत्र पुंस्त्वम् ।

---

१. °ष्टखोरेव P. २. स्यात् dropped D3. ३. Dropped D3. ४. Dc1 drops एव.

द्वे अहनी संभृते द्व्यहीनः क्रतुः । अह्नः खः क्रतुसमूहे । अहीनः क्रतुः । नियमः किम् । आह्निकम् । पुंनिर्देशान्नेह । मद्राणां राज्ञी मद्रराज्ञी ।

---

द्वे अहनीत्यादि । 'तद्धितार्थ—' इति द्विगुसमासे कृते 'तमधीष्टो भृतो भूतो भावी' इत्यधिकारे 'समायाः खः' इत्यतः ख इत्यनुवर्तमाने 'द्विगोर्वा' इत्यतो द्विगोरिति च 'रात्र्यहःसंवत्सराच्च' इति खः । अहीन इत्यत्र तु केन ख इत्याशङ्क्य वक्तव्यमाह । अह्न इत्यादि । क्रतुश्च समूहश्च क्रतुसमूहम् । द्वन्द्वैकवद्भावः । एकापि सप्तमी विषयभेदेन व्यवस्थाप्यते । समूहे वाच्ये क्रतुविषये अहन्शब्दात् खः स्यादित्यर्थः । अहीनः क्रतुरिति । अह्नां समूहोहीनः । अह्नां समूहेन साध्य इति क्रतुरहीनः । अह्नष्टखोरेवेति नियमः किमिति पृच्छति । उत्तरमाह । आह्निकमिति । अह्ना निवृत्तम् । 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्' इति ठक् । नियमादत्र टिलोपाभावः । ननु मद्राणां राज्ञी मद्रराज्ञीत्यत्र प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया टच् स्यादित्याशङ्क्याह । पुंनिर्देशान्नेहेति । इह लघ्वक्षरं पूर्वं निपततीति सख्युरह्नो वा पूर्वनिपाते प्राप्ते योयमहःशब्दे परे राजशब्दस्यादौ प्रयोगः स सवर्णदीर्घार्थस्तं कुर्वन्नेतज् ज्ञापयति यस्याकारादौ परे सवर्णदीर्घः स्यात् तस्येदं ग्रहणमिति । अकारादौ च राजशब्दस्य सवर्णदीर्घः पुल्लिङ्गस्यैव प्रथमान्तस्य स्यात् इति राजाहरित्ययं पुंनिर्देशः । तस्मादिह मद्राणां राज्ञी मद्रराज्ञीति टच् न भवतीत्यर्थः ।

---

१. भृते P; संभृतो $D_1$, $B_2$. २. नियमात् $D_2$, $D_5$, C, $B_1$. ३. क्रतौ विषये $Dc_2$. ४. खं $Dc_2$. ५. किमर्थमिति $Dc_1$, $Bc_1$, $Dc_4$, $Dc_3$. ६. After it—नियमः किमिति $Dc_3$. ७. For आर्हा° to ठक् $Dc_2$ has 'तेन निवृत्तम्' इति ठञ् । ८. ननु च $Dc_2$, $Dc_3$.

**अह्नोऽह्न एतेभ्यः ॥५।४।८८॥**

एतेभ्यः सर्वादिभ्यः परस्याहन्शब्दस्य[1] अह्नादेशः स्याट्टचि परे[2] ॥

**अह्नोऽदन्तात् ॥८।४।७॥**

अदन्तात्[3] पूर्वपदस्थान्निमित्तात् परस्याह्नो नस्य णः स्यात् ॥ सर्वाह्णः[4] । पूर्वाह्णः । मध्याह्नः[5] । संख्याताह्नः । द्वयोरह्नोर्भवः[6] ।

---

अह्नोऽह्नः । एतेभ्य इत्यनेन सर्वनाम्ना प्रकृताः 'अहःसर्वैकदेश—' इति सूत्रे प्रकृतित्वेन निर्दिष्टाः सर्व एकदेश संख्यात पुण्य एते साक्षादुक्ताः । चेन आकृष्टाः संख्या अव्यय एते शब्दाः परामृश्यन्त इत्यभिप्रेत्याह । '**एतेभ्यः सर्वादिभ्यः**' इति । अहः—शब्दात् परोऽहःशब्दष्टचि परे न संभवतीति अहःशब्दो न गृह्यते[7] । अहःशब्दान्तात् तत्पुरुषाट् टजेव विहितो नाच्प्रत्यय इति सामर्थ्याट् टच्येवादेशः स्यात् । अथ 'अच्' इति योगविभागेनाज् विधीयते तथापि वचनवैयर्थ्यम् । अच्यल्लोपेनैव तद्रूपसिद्धेः । न च वाच्यं टिलोपः स्यादिति । अह्नष्टखोरेवेति नियमात् । अतोऽपि टच्येवाह्नादेश इत्येतच्चेतसि कृत्वाह । **टचि परत** इति ।

**अह्नः** । अह्न इति षष्ठ्याः स्थाने व्यत्ययेन प्रथमा । **सर्वाह्ण** इति । सर्वमहः । 'पूर्वकाल—' इति समासः । टच् । अह्नादेशः । **पूर्वाह्ण** इति । अह्नः पूर्वम् । एकदेशिसमासः । **संख्याताह्नः** । संख्यातमहः । विशेषणसमासः । संख्यापूर्वस्योदाहरणं वदन्नाह । **द्वयोरित्यादि** । 'तद्धितार्थ—' इति द्विगुः ।

---

१. °स्याहःशब्दस्य C. २. परतः D4, Com. ३. अदन्तपूर्व° P, D1. ४. पूर्वाह्णः । सर्वाह्णः । D2, D5, B1; पूर्वाह्णः dropped P; D4. ५. Dropped C, B2. ६. Dropped P, D1, D4. ७. संगृह्यते Dc1.

अणो लुक् । द्व्यह्नः । द्व्यह्नप्रियः । अत्यह्नः । अदन्तादित्युक्तेर्नेह णत्वम् । निरह्नः । अह्न इत्यदन्तग्रहणान्नेह । दीर्घाह्नी प्रावृट् ॥

**न संख्यादेः समाहारे** ॥८।४।८९॥

इह नाह्नादेशः । द्वे अहनी समाहृते द्व्यहः । त्र्यहः ।

---

**अणो लुगिति** । 'तत्र भवः' इति जातस्याणो 'अध्यर्धपूर्वाद् द्विगोः' इति लुगित्यर्थः । **द्व्यह्नप्रिय इति** । द्वे अहनी प्रिये यस्य । उत्तरपदे द्विगुः । शेषं पूर्ववत् । **अत्यह्न इति** । अहरतिक्रान्तः । **निरह्न इति** । निर्गतमह्नः । **अह्न इत्यदन्तग्रहणान्नेहेति** । अदन्तग्रहणं व्याख्यानाद्गम्यते । **दीर्घाह्नीति** । दीर्घाणि अहानि यस्यामिति बहुव्रीहिः । 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप् । 'अल्लोपोऽनः' इत्यल्लोपः । अत्रादन्तत्वाभावाण्णत्वं न । अदन्तादिति तपरकरणात् पराजितमहः पराह्नमित्यत्र न । अन्तग्रहणं विस्पष्टार्थम् ।

**न संख्या** । इहेत्यादि । समाहारे वर्तमानस्य संख्यादेरह्नोऽह्नादेशो नेत्यर्थः । द्व्यहत्र्यह इति । 'अह्नष्टखोरेव' इति टिलोपः । समाहारे किम् । द्वयोरह्नोर्भवः द्व्यह्नः ।

---

१. अह्नादेशो न $B_2$. २. C has इति before it. ३. इत्यागतस्याणो 'द्विगोर्लुगनपत्ये' इति लुगित्यर्थः । $Dc_2$; इत्यागतस्याणो $Dc_3$. ४. °न्नेति $Dc_4$.

**उत्तमैकाभ्यां च ॥५।४।९०॥**

आभ्यां परस्याह्लादेशो[1] न ॥ उत्तमशब्दोन्त्यार्थः पुण्यशब्दमाह । पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा[2] ॥ पुण्याहम् । सुदिनाहम् । एकाहः । संख्याताह इत्यपीष्यते ।

**अग्राख्यायामुरसः ॥५।४।९३॥**

उरोन्तात्तत्पुरुषाट्टच् स्यात् अग्राख्यायाम् ॥ अश्वोरसम् । मुख्योश्व[3] इत्यर्थः ।[4]

---

**उत्तम** । **उत्तमशब्द** इत्यादि । अन्त्यपर्याय उत्तमशब्दः 'अहःसर्वैकदेशसंख्यातपुण्याच्च' इत्यत्रान्ते वर्तमानं पुण्यशब्दं ब्रूते इत्यर्थः । पुण्यग्रहणमेव कस्मान्न कृतम् । वैचित्र्यार्थम् । केचित्तूमोत्तमस्यापि प्रतिपत्त्यर्थं वर्णयन्ति । तेन संख्यातशब्दात् परस्यापि न । अत एवानन्तरमेवाह । **संख्याताह इत्यपीष्यत** इति । पुण्याहं सुदिनाहमिति कर्मधारयः । **एकाह** इति । 'पूर्वकालैक—' इति समासः । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् ।

**अग्रा** । अग्रं प्रधानं तस्याख्या अग्राख्या । **अश्वोरसमिति** । अश्वानामुरः । यथा शरीरावयवानामुरः प्रधानमेवमश्वोपि प्रधानभूत उरःशब्देनोच्यते । अग्राख्यायां किम् । देवदत्तस्योरो देवदत्तोरः ।

---

१. परस्याह्नोह्लादेशो न टच् $B_2$. २. क्लीबतेष्यते C. ३. मुख्याश्व $D_5$. ४. After it—अग्राख्यायामिति किम् । अश्वोरसि आवर्तः $B_2$, $D_2$, $D_4$.

**अनोऽश्मायःसरसां जातिसंज्ञयोः ॥५।४।९४॥**

एतदन्तात्तत्पुरुषाट्टच् स्यात् जातौ संज्ञायां च[1] ॥ उपानसम् ।[2] अमृताश्मः । कालायसम् । मण्डूकसरसमिति जातिः । महानसम् । पिण्डाश्मः । लोहितायसम् । जलसरसमिति संज्ञा ।

**ग्रामकौटाभ्यां च तक्ष्णः ॥५।४।९५॥**

आभ्यां तक्ष्णष्टच् स्यात्तत्पुरुषे ॥ ग्रामतक्षः । कौटतक्षः ।

**अतेः शुनः ॥५।४।९६॥**

अतेः परात् शुनष्टच् स्यात् ॥ अतिश्वो वराहः । अतिश्वी सेवा[4] ।

---

**अनः** । तत्र जातौ तावदुदाहरति । **उपानसमि**त्यादि । उपगतमन इति प्रादिसमासः । अमृताश्मः कालायसमिति कर्मधारयौ । मण्डूकसरसमिति षष्ठीतत्पुरुषः । संज्ञायामुदाहरति । **महानसमि**त्यादि । पूर्वे त्रयोपि कर्मधारयाः । जलसरसमिति षष्ठीतत्पुरुषः । जातिसंज्ञयोः किम् । सदनः । सदश्मा ।

**ग्राम** । **ग्रामतक्ष** इति । ग्रामस्य तक्षा । बहूनां साधारण इत्यर्थः । **कौटतक्ष** इति । कुट्यां भवः कौटः । स चासौ तक्षा च । स्वतन्त्रः कर्मजीवी । न कस्यचित् प्रतिबद्ध इत्यर्थः । ग्रामकौटाभ्यां किम् । राज्ञस्तक्षा ।[6]

**अतेः** । **अतिश्व** इति । श्वानमतिक्रान्तः । प्रादिसमासः । **अतिश्वी सेवे**ति । शुनोपि सेवामतिक्रान्ता । निकृष्टा सेवेति यावत् । 'टिड्ढाणञ्  ' इति ङीप् ।

---

१. Dropped $D_6$. २. After it—अनो मातरिशकटे च । $D_6$. ३. संज्ञायाम् $D_3$. ४. सेना $D_2$. ५. Before it—एवं $Dc_4$. ६. After it—राजतक्षा $Dc_2$. $Dc_3$, $Dc_4$.

**उपमानादप्राणिषु ॥५।४।९७॥**

उपमानवाचिनः शुनष्टच् स्यादप्राणिषु । आकर्षः श्वेव आकर्षश्वः । 'उपमितं व्याघ्रादिभिः—'[1] इति समासः । अप्राणिषु[2] किम् । वानरः श्वेव वानरश्वा ॥[3]

**उत्तरमृगपूर्वाच्च सक्थ्नः ॥५।४।९८॥**

एभ्यः[4] सक्थ्नष्टच् स्यात् ।[5] चादुपमानाच्च[6] । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् ।[7] उपमानात् । फलकसक्थम् ।

**नावो द्विगोः ॥५।४।९९॥**

नौशब्दान्ताद् द्विगोष्टच् स्यात् ॥ द्वौ नावौ समाहृतौ द्विनावम् ।[8] त्रिनावम् । पञ्चनावप्रियः । तद्धितार्थे । द्वाभ्यां नौभ्यामागतो[9] द्विनावरूप्यः । 'हेतुमनुष्येभ्यः—' इति रूप्यः ।

---

**उपमानात्** । **आकर्षश्व** इति । अत्र श्वशब्द उपमानमप्राणिन्याकर्षे वर्तते । **वानरश्वेति** । अत्र प्राणिनि वानरे वर्तते । उपमानात् किम् । न श्वा अश्वा लोष्टः ।

**उत्तर** । **उत्तरसक्थमिति** । उत्तरं सक्थ्नः । 'पूर्वापर—' इति समासः । अथवा उत्तरं सक्थीति विशेषणसमासः । **मृगसक्थमिति** । षष्ठीतत्पुरुषः । **पूर्वसक्थमिति** । उत्तरसक्थतुल्यम् । **फलकसक्थमिति** । फलकमिव सक्थि[10] ।

**नावः** । **द्विनावमित्यादौ** सर्वत्र 'तद्धितार्थोत्तरपद—' इति समासः ।

---

१. व्याघ्रेति P, $B_2$, $D_3$. २. अप्राणिष्विति $D_2$. ३. After it—उपमानादिति किम् । न श्वा अश्वा लोष्टः $B_2$, $D_4$. ४. एभ्यः परात् P, $D_1$, $Dc_1$. ५. C has तत्पुरुषे after it. ६. चकारा° $D_4$. ७. C, $D_1$ drop it. ८. P, $Dc_1$ drop it. ९. After °मागतः C, $Dc_1$ have द्विगोर्लुगनपत्ये .. न लुक्; $D_1$, $Dc_1$, $D_3$ follow C and have द्विनावरूप्यः after न लुक्. १०. 'उपमितं व्याघ्र—' इति समासः । $Dc_4$, $Dc_3$.

'द्विगोर्लुगनपत्ये' इत्यत्र वेत्यनुवृत्तेरत्र ताद्धितस्य न लुक्। अताद्धितलुकीत्येव । पञ्चभिर्नौभिः क्रीतः पञ्चनौः ॥

अर्धाच्च ॥५।४।१००॥

अर्धात् परतो नावष्टच् स्यात् ॥ नावोर्धमर्धनावम् । क्लीबत्वं लोकात् ।

खार्याः प्राचाम् ॥५।४।१०१॥

द्विगोरर्धाच्च खार्याष्टच् वा स्यात् ॥ द्विखारम् । द्विखारि । द्विखारधनः । द्विखारीधनः । अर्धखारम् । अर्धखारी ।

---

**द्विगोर्लुगि**त्यादि । अत्र 'समर्थानां प्रथमाद्वा' इत्यतो वेत्यनुवर्तते । सा च व्यवस्थितविभाषेति अजादेरेव प्रत्ययस्य लुक् न हलादेरिति । अत्र न लुगिति भावः । **पञ्चनौ**रिति । आर्हीयस्य ठकः 'अध्यर्धपूर्व---' इति लुक् ।

**अर्धाच्च** । **अर्धनावमि**ति । 'अर्धं नपुंसकम्' इति समासः। ननु परवल्लिङ्गतात्र किमिति नेत्याशङ्क्याह । **क्लीबत्वं लोका**दिति । लोकाश्रयत्वाल्लिङ्गस्येति भावः ।

**खार्याः** । **द्विखारमि**ति । द्वे खार्यौ समाहृते । **अर्धखारमि**ति । खार्या अर्धम् ।

---

१. Before it—हेतुमनुष्येभ्य इति रूप्यः $D_1$, $Dc_1$. २. C, $D_1$ drop वा. ३. P, $D_1$, $D_2$, $D_3$ have द्विखारीधनः । द्विखारधनः ४. द्विखारधनः $B_2$, $D_6$. ५. अर्धखारि $B_2$.

**द्वित्रिभ्यामञ्जलेः ॥५।४।१०२॥**

आभ्यामञ्जलेष्टच् वा[1] स्याद् द्विगौ ॥ द्व्यञ्जलम् । द्व्यञ्जलि । अताद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिः ।

**ब्रह्मणो जानपदाख्यायाम् ॥५।४।१०४॥**

ब्रह्मान्तात् तत्पुरुषाट्टच् स्यात् जनपदसंबन्धद्योतकं[3] चेदुपपदम् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । सप्तमीति योगविभागात् समासः ।

---

**द्वित्रिभ्याम्** । **द्व्यञ्जलमिति** । द्वावञ्जली समाहृतौ । द्विगौ किम् । द्वयोरञ्जलिर्द्व्यञ्जलिः । **द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिरिति** । 'अध्यर्ध–' इत्यार्हीयस्य ठको लुक् ।

**ब्रह्मणः** । जनपदे भवो जानपदः । तस्याख्या तस्याम् । भावप्रधानोऽत्र जानपदशब्दः । जानपदत्वाख्यायामित्यर्थः । तदिदमुक्तम् । **जनपदसंबन्धद्योतकं चेदुपपदमिति** । ब्रह्मणो जनपदसंबन्धस्य द्योतकमित्यर्थः । ननु चैकमेव ब्रह्मग्रहणं तेन तत्पुरुषो विशेषितो ब्रह्मान्तादिति । तत्कथं जानपदत्वं ब्रह्मणा विशेष्यते । नैष दोषः । तन्त्रेण ह्यत्र द्वौ ब्रह्मशब्दावुच्चारितौ तत्रैकेन समासो विशेष्यते अपरेण जानपदत्वम् । **सप्तमीति योगविभागादिति** । 'सप्तमी शौण्डैः' इत्यत्र योगे सप्तमीति विभागात् समास इत्यर्थः । जानपदाख्यायां किम् । देवब्रह्मा नारदः ।

---

१. स्याद्वा C. २. Dropped $D_2$. ३. °बोधकं $D_2$, $B_1$, P; C.

**कुमहद्भ्यामन्यतरस्याम्** ॥५।४।१०५॥

आभ्यां ब्रह्मणो वा[1] टच् स्यात् तत्पुरुषे ॥ कुब्रह्मः[2] । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा ।

**तत्रोपपदं सप्तमीस्थम्** ॥३।१।९२॥

अस्मिन्[3] धात्वधिकारे[4] कर्मण्यणित्यादौ सप्तमीनिर्दिष्टमुपपदसंज्ञं स्यात् ।

**उपपदमतिङ्** ॥२।२।१९॥

उपपदमतिङन्तं समर्थेन नित्यं[5] समस्यते स तत्पुरुषः ॥ कुम्भकारः । अतिङ्[6] किम् ।

---

**कुमहत्** । अप्राप्तविभाषेयम् । न ह्यत्र जानपदत्वं प्रतीयते । **कुब्रह्मेति** । 'कुगति—' इति समासः । ब्राह्मणपर्यायो ब्रह्मशब्दः ।

**तत्र** । तत्रेति तृतीयो धात्वधिकार उच्यते इत्यभिप्रेत्याह । **अस्मिन् धात्वधिकारे** इति । **सप्तमीस्थमिति** । स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम् । अन्यथा यत्र सप्तमीश्रुतिस्तत्रैव स्यात् स्तम्बेरम इत्यादौ । यत्र सप्तमीश्रुतिर्नास्ति 'सप्तम्यां जनेर्डः' सरोजमित्यादौ तत्र न स्यात् । महत्याः संज्ञायाः करणमन्वर्थताविज्ञानार्थमुपोच्चारितं पदमुपपदमिति । एवं च विज्ञायमाने समर्थपरिभाषा व्याप्रियते । ततश्चात्र न भवति । पश्य कुम्भं करोति कटमिति । न ह्यत्र कुम्भस्य करोतिना सामर्थ्यं किं तु पश्येत्यनेन । ततो नाण् ।

**उपपदम्** । 'नित्यं क्रीडाजीविकयोः' इत्यतः नित्यमित्यनुवर्तत इत्यभिप्रेत्याह । **नित्यमिति** । **कुम्भकार** इति । कर्मण्यण् ।

---

१. टच्च वा $D_1$. २. कुब्रह्मम् । महाब्रह्मम् C. ३. तत्रास्मिन् P. ४. तृतीये before it in P; $D_4$. ५. सुबन्तेन before it in C. ६. अतिङिति C.

एधानाहारको व्रजति। 'तुमुन्ण्वुलौ क्रियायाम्—' इति सप्तम्या[1] निर्देशात् तिङन्तस्योपपदत्वम्। अतिङ्‌वचनं[2] ज्ञापयति नात्र सुबनुवृत्तिरिति। तेन गतिकारकोपपदानां कृद्भिः समासः[3] प्राक् सुबाद्युत्पत्तेरिति[4] सिध्येत्

एधानाहारको व्रजतीति। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल्। ननु सुप् सुपेत्यनुवृत्तेरेव तिङन्तस्योपपदस्यापि समासो न स्यात् तत् किमर्थं तिङ्वर्जनमित्याशङ्क्य ज्ञापनार्थं तदित्याह। तिङ्वचनमिति। ज्ञापनस्य फलमाह। तेनेत्यादि। तेन कारणेन गतिकारकोपपदानामित्यादि पूर्वाचार्यकृता परिभाषा सिध्यतीत्यर्थः। ततश्चाश्वक्रीतीत्यत्र प्राक् सुबुत्पत्तेः समास इति लिङ्गयोगानपेक्षणात् समासात् प्राग् टाबपि न क्रियते इति प्रथमं 'कर्तृकरणे कृता बहुलम्' इति समास एव स्यादित्य-दन्तत्वादत[5] इत्यधिकारेण 'क्रीतात् करणपूर्वात्' इति विधीयमानो ङीष्[6] स्यात्। यदि हि सुबुत्पत्तौ सत्यां समासः स्यात् तदान्त-रङ्गत्वात् प्राक् सुपष्टाप् स्यात् ततः समासः ततोदन्तत्वा-भावान्ङीष्[7] न स्यात्। ननु चाश्वस्य धात्वधिकारे सप्तमीनिर्देशा-भावात् नोपपदत्वं कथमत्र[8] सुबुत्पत्तेः प्राक् समास इति चेन्नैष दोषः। न हि धात्वधिकारे यदुपपदं तदेवोपपदमपि तु उपोच्चारितं पदमुपपदमित्यप्यत्र क्वचिदाश्रीयते यथा इतरेतरान्यो-न्योपपदाच्चेति। तस्मादश्वोऽप्युपोच्चारितपदत्वादुपपदम्। पद्यतेनेनार्थ इति पदं न सुबन्तत्वात्। ननु उपोच्चारितं पदमप्युपपदं चेत् तर्ह्यतिप्रसङ्गः। राजाश्रित इत्यत्रापि प्राक् सुबुत्पत्तेः समासः स्यात्।

१. सप्तमीनिर्देशात् C, D2, D3. २. तिङ्वचनं D1, Com. ३. C has सह before it. ४. सुबुत्पत्तिरिति P, C; सुबुत्पत्तेरिति D1, D3; सुबुत्प-त्तेस्तेन अश्वक्रीतीति सिध्येत् B2; Dc1 follows B2, dropping सिध्येत्. ५. °दित्यन्तरङ्गत्वादत Bc1. ६. ङीप् Dc4, Dc3. ७. ङीप् Dc4, Dc3. ८. तत्कथ° Bc1.

**अमैवाव्ययेन ॥२।२।२०॥**

उपपदसमासोऽव्ययेष्वमैव स्यात् ॥ स्वादुंकारम् । अमा किम् । कालो भोक्तुम् ।

---

ततश्च पदत्वाभावान्नलोपो न स्यात् । असर्वविषयत्वादस्य ज्ञापकस्येत्यदोषः । अथवा 'गतिकारकोपपदानाम्—' इत्यस्यायमर्थः । गतीनां कारकाणामुपपदानां चेति । गतीनां व्याघ्री । व्याजिघ्रतीति । 'आतश्चोपसर्गे' इति कः । व्याङा गतिशब्देन समासो यदि सुबन्तस्योत्तरपदस्य स्यात् ततः सुबुत्पत्तये संख्याकर्मादियोगोपेक्ष्यस्ततः प्राक् लिङ्गयोगः । ततश्च घ्रशब्दस्याजातित्वात् स्त्रीनिमित्तष्टाप् स्यात् । ततो घ्राशब्देन समासेनकारान्तत्वात् ङीप् न स्यात् । प्राक् सुबुत्पत्तेः समासो भवन् लिङ्गयोगं नापेक्षत इति स एव स्यात् । पश्चाज्जातित्वात् स्त्रीप्रत्ययो भवन् ङीषेव स्यात् । कारकाणामश्वक्रीती । उपपदानां माषवापिणी । ङीपः प्राक् समासे समासप्रातिपदिकस्यान्तो नकार इति णत्वं स्यात् ।

**अमा** । पूर्वेण सिद्धे नियमार्थं वचनम् । ननु च सिद्धे सत्यारम्भो नियमायेत्येवकारमन्तरेणापि नियमार्थतायां सिद्धाया-मेवकारकरणं किमर्थम् । उच्यते । उपपदविशेषणार्थम् । अमैव यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात् । येन च वाक्येनामेव विधीयते न प्रत्ययान्तरमपि तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम् । यथा स्वादुंकारमिति 'स्वादुमि णमुल्' इति स्वादुशब्दः । यत्तु अमा वान्येन च तुल्यविधानं यथा अग्रे भोजमग्रे भुक्त्वा । अत्राग्रेशब्द उपपदम् । 'विभाषाग्रे-प्रथमपूर्वेषु' इत्यमा क्त्वाप्रत्ययेन च तुल्यविधानमिति न समस्यते । अयं नियमः किमर्थमित्याक्षिपति । **अमा किमिति** । उत्तरमाह । **कालो भोक्तुमिति** । 'कालसमयवेलासु तुमुन्' ।

---

१. उपपदस्य समासो° $B_2$. २. व्याघ्र $Bc_1$, $Dc_4$, $Dc_3$.

**तृतीयाप्रभृत्यन्यतरस्याम् ॥२।२।२१॥**

उपदंशस्तृतीयायामित्यतः प्रभृतीन्युपपदान्यमा वा समस्यन्ते ॥ मूलकोपदंशं मूलकेनोपदंशं भुङ्क्ते ।[1]

**क्त्वा च ॥२।२।२२॥**

उपपदानि तृतीयाप्रभृतीनि[2] क्त्वाप्रत्ययेन वा समस्यन्ते ॥ उच्चैः कृत्वा । उच्चैः कृत्य ।[3][4]

**उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥२।४।२१॥**

उपज्ञोपक्रमयोरादेराख्यानेच्छायां तदन्तस्तत्पुरुषो नपुंसकं स्यात् ॥

---

तृतीया । उभयत्र विभाषेयम् । यदमैव तुल्यविधानं तस्य प्राप्ते यथोपदंशस्तृतीयायां **मूलकोपदंशं मूलकेनोपदंशमिति** । यत्पुनरमा चान्येन च तस्याप्राप्ते यथा 'अव्ययेयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' उच्चैः कारमाचष्टे उच्चैः कारं पठतीति[5] । अमेत्येव । पर्याप्तिवचनेष्वलमर्थेषु । पर्याप्तो भोक्तुं प्रभुर्भोक्तुम् ।

**क्त्वा च** । तृतीयाप्रभृतीनीति किम् । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' । अलं कृत्वा । खलु कृत्वा । अयं च तृतीयाप्रभृतिभ्यः पूर्वः ।

**उपज्ञा** । उपज्ञायत इत्युपज्ञा[6] । उपज्ञेयः परिच्छेद्य इति यावत् । 'आतश्चोपसर्गे' इति कर्मण्यण् । उपक्रम्यत इत्युपक्रमः । कर्तव्यः । 'अकर्तरि च कारके—' इति कर्मणि घञ् । तयोर्ज्ञेयकर्तव्ययोरादेः प्राथम्यस्य कथनेच्छायां तदन्त उपज्ञोपक्रमान्तस्तत्पुरुषो नपुंसकः स्यादित्यर्थः ।

---

१, वा भुङ्क्ते । $D_3$. २. तृतीयाप्रभृतीन्युपपदानि $D_3$. ३. उच्चैः कृत्य । उच्चैः कृत्वा $D_1$, $D_4$, $D_5$. ४. After it P has—तृतीयाप्रभृतीत्येव । तेन अलं कृत्वा खलु कृत्वा इत्यादौ न. ५. इति dropped $Dc_3$. ६. After this $Dc_2$ has:—उपपूर्वको जानातिर्विनोपदेशने वर्तते ।

पाणिन्येरुपज्ञा पाणिन्युपज्ञं ग्रन्थः। तेनादौ कृत इत्यर्थः। नन्दस्योपक्रमं[1] नन्दोपक्रमं द्रोणः। तेनादौ उपक्रान्त इत्यर्थः॥

**छाया बाहुल्ये ॥२।४।२२॥**

छायान्तस्तत्पुरुषः पूर्वपदार्थबाहुल्ये क्लीबं स्यात्॥ शलभानां छाया शलभछायाम्।[2] बाहुल्ये किम्। कुडयस्य छाया कुडयछाया।

**सभा राजामनुष्यपूर्वा ॥२।४।२३॥**

राजामनुष्यपूर्वः सभान्तस्तत्पुरुषः क्लीबं स्यात्[3]॥ इनसभम्। ईश्वरसभम्। पर्यायस्यैवेष्यते[4] तेनेह न।

---

उपज्ञोपक्रमं किम्। वाल्मीकिश्लोकाः। अस्त्यत्र तदादेराख्या-नेच्छा। वाल्मीकिः प्रथमतः श्लोकसंबन्धं ददर्शेति प्रसिद्धेः। तदाख्या-चिख्यासायां किम्। देवदत्तोपज्ञो[5] ग्रन्थः। यज्ञदत्तोपक्रमो रथः। देवदत्तेनोपज्ञायते यज्ञदत्तेनोपक्रम्यत इति क्रियासंबन्धमात्रमत्र विवक्षितम्।

**छाया**। 'विभाषा सेनासुराछाया—' इति वक्ष्यति। नित्यार्थमिदं वचनम्। शलभच्छायमित्यादौ शलभादीनां बहुत्वं गम्यते। न हि तेन विना छाया संभवति। अतः पूर्वपदार्थस्य शलभादेर्बाहुल्यं धर्म इत्यभिप्रेत्याह। **पूर्वपदार्थबाहुल्ये** इति। बाहुल्ये किम्। कुडयस्य छाया कुडयछाया।

**सभा**। **इनसभमित्यादि**। षष्ठीतत्पुरुषः। ननु च 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति राजशब्द एवोदाहार्यो न पर्यायास्तत्कथं पर्यायाविनेश्वरशब्दावुदाहृतावित्याशङ्क्याह। **पर्यायस्यैवेष्यत** इति।

---

१. °क्रमः D2, D3. २. D1, D3, D4 drop from **बाहुल्ये किम्... कुड्यच्छाया।**. ३. क्लीबे D1. ४. राज्ञः पर्यायस्यै B1, D5. ५. °पज्ञो रथः Dc3, Dc4.

राजसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् ।[1] राजामनुष्यपूर्वा किम् । चंद्रगुप्तसभा ।

**अशाला च ॥२।४।२४॥**

[2]संघातार्था सभा तत्पुरुषे क्लीबं स्यात् ॥ स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । धर्मसभा । धर्मशालेत्यर्थः ॥[3]

---

राजादिपर्यायस्यैवेष्यते[4] । तथा च महाभाष्ये उक्तम् । जित्पर्यायवचनस्यैव । राजाद्यर्थः जिन्निर्देशः कर्तव्यस्ततो वक्तव्यं पर्यायवचनस्यैव ग्रहणं भविष्यतीति । किं प्रयोजनं राजाद्यर्थमिति । अमनुष्यशब्दोयमस्त्यव्युत्पन्नो रूढो रक्षःपिशाचादौ । अस्ति[6] व्युत्पन्नो[7] नञ्समासान्तः । अत्र च रूढ एव गृह्यत इत्याह । **अमनुष्येति** । **चन्द्रगुप्तसभेति** । चंद्रगुप्तशब्दो न राजपर्यायो नाप्यमनुष्यवचनः ।

**अशाला** । सभाशब्दोयमस्ति कुटीवचनः दीर्घसभेति । अस्ति च संघातवाची स्त्रीसभमिति । इह च शालेति कुटीवाचिनिषेधात् संघातवाची गृह्यत इत्याह । **संघातार्थेति** ।

---

१, After it—पिशाचसभम् । गन्धर्वसभम् $B_2$; यक्षसभम् । पिशाचसभम् । गन्धर्वसभम् । $D_4$. २. संघातार्थसभा P ; संघातार्थसभान्तस्तत्पुरुषः C. ३. After it—स्थूणोर्णे गृहशशयोरिति वाच्यम्* । गृहस्थूणम् । शशोर्णम् । ऊर्णा मेषादिलोम्नि स्यान्मध्यमावर्तके भ्रुवः $B_1$, $D_4$; $D_2$ gives the Vârtika without the Vritti and the instances; $D_5$ follows $B_2$ up to शशोर्णम्. ४. After it $Dc_2$ has—इत्यर्थः । ५. °द्यर्थे $Dc_3$, $Dc_4$. ६. अस्ति च $Dc_2$. ७. व्युत्पत्तौ $Dc_3$.

**विभाषा सेनासुराच्छायाशालानिशानाम् ॥२।४।२५॥**

एतदन्तस्तत्पुरुषो वा क्लीबं स्यात्[1] ॥ द्विजसेनम् । यवसुरम् । कुड्यस्य छाया कुड्यच्छायम् । गोशालम् । श्वनिशम्[2] । पक्षे द्विजसेनेत्यादि । तत्पुरुषोनञ् कर्मधारय इत्यनुवृत्तेर्नेह[3] । दृढसेनो[4] राजा । असेना[5] । परमसेना[6] ।

**परवल्लिङ्गं[7] द्वन्द्वतत्पुरुषयोः ॥२।४।२६॥**

इतरेतरयोगद्वन्द्वस्य तत्पुरुषस्य च परवल्लिङ्गं[8] स्यात् ॥

---

विभाषा । द्विजसेनेत्यादि । द्विजानां सेना । यवानां सुरा । गवां शाला । शुनां निशेति विग्रहाः । यस्यां निशायां श्वानो मत्ताश्चरन्ति सा निशा श्वनिशमित्युच्यते । तत्पुरुष इत्यादि । 'तत्पुरुषोनञ् कर्मधारयः' इत्यधिकारसूत्रात् । अस्यार्थः । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र नञ्समासं कर्मधारयं च वर्जयित्वान्यस्तत्पुरुषो नपुंसकलिङ्गः स्यादित्यधिकृतं वेदितव्यमिति । दृढसेन इति बहुव्रीहिः । असेनेति नञ्समासः । परमसेनेति कर्मधारयः ।

परवत् । समाहारद्वन्द्वस्य क्लीबत्वस्योक्तत्वादितरेतरयोगद्वन्द्वोऽत्र गृह्यते । अन्यच्च द्वन्द्वतत्पुरुषयोरिति षष्ठीयं समासार्थस्य लिङ्गातिदेशार्था न सप्तमीत्येतत्सर्वं चेतसि कृत्वाह । इतरेतरयोगद्वन्द्वस्य तत्पुरुषस्य चेति । यदि हि सप्तमी स्यात् तर्हि द्वन्द्वे तत्पुरुषे च परपदं तद्वल्लिङ्गं पूर्वपदस्यापद्येत । द्वन्द्वस्य सर्वपदप्राधान्यात् क्रमेण सर्वपदलिङ्गे प्राप्ते नियमार्थं[9] वचनम्[10] । तत्पुरुषे तूत्तरपदार्थप्रधानेनर्थकत्वात् पूर्वपदार्थप्रधानार्थं[11] वचनम् ।

---

१, B1, D1, D3 drop it. २. श्विनिशम् B2. ३. Before it—नञ्समासं कर्मधारयं च हित्वान्यस्तत्पुरुषः क्लीबं स्यात् B2, D. ४. Before it—तत्पुरुषः किम् D3. ५. Before it—अनञ् किम् D3. ६. Before it—अकर्मधारये इति किम् D3. ७. परवदेव लिङ्गं D2. ८. इति Dc3. ९. Before it—परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । Dc3. १०. नियमार्थमिदं Dc3. ११. °प्रधानार्थव° Dc3.

कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तत्पुरुषे । अर्धपिप्पली ।[१]

द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु न* ॥ पञ्चकपालः । प्राप्तजीविकः ।[२] अलंजीविकः । निष्कौशाम्बिः ।

**पूर्ववदश्ववडवौ** ॥२।४।२७॥

एतयोर्द्वन्द्वः पूर्ववल्लिङ्गः[३] ॥ अश्ववडवौ । पक्षे एकवद्भावो वक्ष्यते ।

---

**कुक्कुटमयूर्याविति** । अत्र द्वन्द्वस्य सर्वपदार्थप्रधानत्वादुपसर्जनसंज्ञायां अभावात् ह्रस्वत्वं न । अर्धपिप्पलीत्यत्र तु विभाषानुवृत्तेः[४] ।

**द्विगु इत्यादि** । द्विगुसमासे प्राप्तशब्दपूर्वे समासे आपन्नशब्दपूर्वे समासे अलंशब्दपूर्वे समासे गतिसमासे च परपदवल्लिङ्गता न भवतीति वक्तव्यमित्यर्थः । **पञ्चकपाल** इति । पञ्चसु कपालेषु संस्कृतः । ताद्धितार्थे[६] द्विगुः । **प्राप्तजीविक आपन्नजीविक** इति । 'प्राप्तापन्ने च द्वितीयया' इति समासः । **अलंजीविक** इति । 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति । **निष्कौशाम्बिरिति** 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति ।

**पूर्ववत्** । 'विभाषा वृक्षमृग—' इति अश्ववडवयोर्विभाषैकवद्भावविधेरन्यत्र पक्षे परवल्लिङ्गतायां प्राप्तायामारम्भः । अर्थातिदेशश्चायं न[७] निपातनम् । निपातने हि[८] पूर्ववदिति वचनमनर्थकमित्यश्ववडवावित्येव ब्रूयादित्यभिप्रेत्याह । **एतयो**रित्यादि[५] ।

---

१. After this $D_4$ has—' अर्धर्चाः पुंसि च'. अर्धर्चादयः शब्दाः पुंसि भाष्यन्ते चात् क्लीब...दिनवासरादयः. २. After it—आपन्नजीविकः $D_1$. ३. C, $B_2$ have स्यात् after it; पूर्वलिङ्गः $D_3$. ४. वृत्तेः $Bc_1$, $Dc_3$. ५. इत्यादि $Bc_3$. ६. °तार्थेति $Bc_3$. ७. न निपातनम् dropped $Dc_3$. ८. न $Bc_3$.

द्वित्वमतन्त्रम् । अश्ववडवान् । क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं च[1] वाच्यम्* ॥ सानन्दं नमति हरिम्[2] । प्रातः कमनीयम् ।

पथः संख्याव्ययादेः क्लीबता ॥ त्रिपथम् । विपथम् ।

**अपथं नपुंसकम् ॥२।४।३०॥**

अपथानि ।[3] तत्पुरुषे एव । अपथा नगरी ।

---

द्वित्वमतन्त्रमित्यादिनार्थातिदेशस्य फलं दर्शयति । निपातने तु वचनान्तरे पूर्ववल्लिङ्गं न स्यात् । क्रियाव्ययेति । क्रियाविशेषणानामव्ययविशेषणानां च क्लीबत्वमेकवचनान्तत्वं च वक्तव्यमित्यर्थः । अत्र क्लीबत्वमव्ययीभावश्चेति चकारेणानुक्तसमुच्चयार्थेन लभ्यते । एकवचनं तूत्सर्गसिद्धम् । क्रियाया अव्ययस्य चासंख्यत्वात् । तथा क्रियाविशेषणस्य कर्मत्वमपि भवति । क्रिया हि सर्वधातूनामान्तरं कर्मेति ।

पथ इत्यादि । संख्यादेरव्ययादेश्च पथिशब्दस्य क्लीबता वाच्येत्यर्थः । त्रिपथमिति । त्रयाणां पन्थाः । षष्ठीसमासः । समाहारद्विगोस्तु 'द्विगुरेकवचनम्' 'स नपुंसकम्' इत्येव सिद्धम् । 'ऋक्पूरब्धूः—' इत्यकारः । विपथमिति । प्रादिसमासः । पूर्ववदकारः ।

अपथम् । अपथशब्दः क्लीबः स्यात् । अपथानीति । न पन्थानः । 'नञ्' इति समासः । अपथमिदमिति च । अपथमिति समासान्तनिर्देशात् । 'पथो विभाषा' इति यदा समासान्तो नास्ति तदा पुल्लिङ्गतैव स्यात् अपन्था इति । तत्पुरुषे एवेत्यादि 'तत्पुरुषोनञ् कर्मधारयः' इति अतस्तत्पुरुष इत्यनुवर्तत एवेति । न विद्यते पन्था यस्याः सा अपथा नगरीत्यत्र[4] बहुव्रीहौ क्लीबता न ।

---

१. Dropped $D_3$, $D_5$. २. हरिं नमति C. ३. After it—गाहते मूढः $B_1$; ईहते मूढः $B_2$. ४. तत्र $Bc_1$, $Dc_3$. $Dc_4$.

'आन्महतः—' इत्यत्र आदिति योगविभागादात्वं प्रागेकादशेति निर्देशाद्वा । एकाधिका दश एकादश ।

अर्धर्चाः पुंसि च ॥२।४।३१॥

चात् क्लीबे ॥ ऋचः अर्धमर्धर्चः अर्धर्चम् । एवमष्टापद-

---

स्पष्टत्वात् त्यक्तं सूत्रद्वयम् । 'संज्ञायां कन्थोशीनरेषु' ॥२।४।२०॥ संज्ञायां विषये कन्थान्तस्तत्पुरुषः क्लीबं स्यात् सा चेत् कन्था उशीनरेषु स्यात् । सौशमिकन्थम् । आह्वरकन्थम् । संज्ञायां किम् । वीरणकन्था । उशीनरेषु किम् । दाक्षिकन्था । परवल्लिङ्गतापवादो योगः ।

'अर्धर्चाः पुंसि च ।' २।४।३१॥ अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते । शब्दाश्रया चेयं द्विलिङ्गता । क्वचिदर्थभेदेनापि । यथा पद्मशङ्खौ निधौ पुल्लिङ्गौ जलजे उभयलिङ्गौ । भूतः पिशाच उभयलिङ्गः । क्रियावाची त्वभिधेयलिङ्गः । सैन्धवो लवणे उभयलिङ्गः । यौगिको वाच्यलिङ्गः । सार उत्कर्षे पुल्लिङ्गः । न्यायादनपेते क्लीबे । धर्म इत्यपूर्वे पुंसि । तत्साधने क्लीबे । अर्धर्च । गोमय । कषाय । कार्षापण । कुतप । कपाट । शङ्ख । गूथ । यूथ । ध्वज । कबन्ध । पद्म । गृह । सरक । कंस । दिवस । यूष । अन्धकार । दण्ड । कमण्डलु । मण्ड । भूत । द्विप । द्यूत । चक्र । धर्म । कर्म । वासस् । मोदक । शतमान । यान । नख ।

---

१. D$_2$ and Com. give from आन्महत to एकादश after the Sûtra अर्धर्चाः° and its Vritti. २. प्रागेकादशभ्योच्छंदसीति B$_1$. ३. एकेनाधिका Bc$_3$. ४. P and C and D$_1$, D$_3$, D$_5$ drop from अर्धर्चाः to वासरादयः; B$_2$, D$_4$ have it after अर्धपिप्पली and before द्विगुप्राप्तापन्न° (५५८ p.) ५. कवाट Dc$_3$, Dc$_4$. ६. Dropped Bc$_3$. ७. After it—गुह्य । कवच । Dc$_3$. ८. सूरक Dc$_4$; स्वरक Bc$_3$. ९. पात Dc$_4$, Bc$_3$.

सुवर्णशतमानकार्षापणवारबाणगन्धमादनअन्धकारअपराह्णपूर्वोप-वासनिर्यासविमानप्रग्रीवप्रवालवाजपेयराजसूयप्रतिसरतोरणवल्मीकदिवसदिनवासरादयः ॥

---

चरण । पुच्छ । दाडिम । हिम । रजत । सक्तु । पिधान ।
सार । पात्र । घृत । सैन्धव । औषध । आढक । चषक । द्रोण ।
पात्रीव । वारबाण । प्रोथ । कपित्थ । शुक्र । शील । सीधु ।
कवच । कपट । शीकर । सुपर्ण । पूर्व । वयस । चमस । पर्ण ।
क्षीर । कक्ष । आकाश । अष्टापद । मङ्गल । निधान । निर्यास ।
जृम्भ । वृत्त । पुस्त । बुस्त । क्ष्वेडित । शृङ्ग । शृङ्खल ।
मधु । मूल । स्थूलक । शराव । नाल । वप्र । विमान ।
मुख । ग्रीव । शूल । प्रग्रीव । शूल । वज्र । कर्कट ।
शिखर । कल्क । नाव । मस्त । वलय । कुसुम । तृण ।
पङ्क । कुण्डल । किरीट । अर्बुद । अङ्कुश । तिमिर ।
आश्रम । भूषण । इल्कस । कुसूल । मुसल । वसन्त ।
तडाग । पिटक । पिण्डक । पिटाक । माष । कोश ।
पालक । दैव । दैवत । पिनाक । समर । स्थाणु । अनीक ।
उपवास । शाक । कार्पास । चषाल । खण्ड । दर । विटप ।

---

१. विमान and प्रग्रीव dropped $D_4$. २. राजपेय before it $B_2$. ३. Before it—गुच्छ $Dc_3$. ४. After it—प्रणाल । खलीन । $Dc_3$. ५. खलीन । पात्रव । $Dc_4$, $Bc_3$. ६. कातिप $Dc_3$; कपित्थ $Dc_4$. ७. शुक्ति । शुक्त । मुक्ता । मुक्त । मुक्ति $Dc_3$. ८. Before it कृपण $Dc_2$, $Dc_4$. ९. सुवर्ण $Dc_2$. १०. After it—पर्वत $Dc_3$. ११. सूल । नाग । मूलक । स्थूलक । $Dc_3$, स्थूल $Dc_2$. १२. Before it—ग्राम । नगर । दुर्ग । कोट्ट । विहङ्गम । $Dc_3$. १३. Before it—ग्रावन् $Dc_3$; मूल for शूल $Bc_3$. १४. Before it—नाच $Dc_3$. १५. Before it—पुष्कर $Dc_3$. १६. Before it—ऐन्द्र । ऐरावत । तप । $Dc_3$. १७. कुशूल $Dc_1$, $Bc_3$. १८. मूशल $Dc_1$, $Dc_4$. $Bc_3$. १९. After it—ईश्वर । गिरि । $Dc_3$.

रण[1] । बल । मृणाल[2] । हस्त । सूत्र[3] । पूर्त[4] । ताण्डव । गाण्डीव । मण्डप । पटह । योध । पार्श्व । करवीर[5] । फल । पुर । राष्ट्र । अम्बर । विश्व । कुङ्कुम । मण्डल । कुण्डल । ककुद । तोमर । तोरण । पञ्चक । मध्यम । बाल । वल्मीक[6] । वर्ष । वर्ण[7] । वसु । देह । उद्यान[8] । उद्योग । स्तन । संगम । निष्क । क्षेम । शूक । छत्र । पवित्र । पौतक । फलक । मूषिक[9] । वल्कल । कुञ्ज । विहार । लोहित[10] । विषाण । भवन । अरण्य । पुलिन । हल । दृढ । आसन । ऐरावत । शूर्प । तीर्थ । लोमश । तमाल । लोह । तण्डक[11] । शयन । प्रतिसर[12] । दारु । धनुस्[13] । मान[14] । तन्त्र । विटङ्क[15] । मठ[16] । मह । मर्ष । सहस्र । ओदन । प्रवाल । शकट । श्वपच । नीड[17] । शकल[18] ॥ एकाधिका दश एकादशेति । शाकपार्थिवादीनामुत्तरपदलोपश्चेत्युत्तरपदलोपी तत्पुरुषः । द्वन्द्वो वा एकश्च दश चेति । एवं द्वादश द्वाविंशतिरित्यादावपि ज्ञेयम् ।

१. After it—पणव । वीथी $Dc_3$. २, Before it—मृग $Dc_3$. ३. Before it—कल्क $Dc_2$. ४. Before it—गर्तापूर्त $Dc_3$. ५. कणवीर $Bc_1$. $Dc_3$. ६. Before it—व्याल $Dc_3$; After it—शालूर । फल । पुर $Dc_3$. ७. वर्णक $Dc_1$, $Bc_3$. ८. उद्याति $Dc_3$, $Dc_4$. $Bc_3$. ९. Before it—शाद्वल $Dc_2$; वसट् $Dc_1$: सढक $Bc_1$, $Dc_4$. १०. After it—रक्त । अश्रु । भानु । किरण । परिवेष $Dc_3$. ११. दण्डक $Dc_1$, $Bc_3$. १२. प्रतीकार $Dc_1$, $Dc_3$, $Dc_4$, $Bc_1$, $Bc_3$. १३. Before it—कूर्व $Dc_2$; और्धन् $Dc_1$; कुतर्वन् $Bc_1$; कुर्वन् $Dc_4$, $Bc_3$. १४. पीन $Dc_3$, $Bc_3$. १५. After this—मट । मठ । मह । अहः । मर्य । मय । $Dc_3$. १६. मई $Dc_4$, $Bc_3$. १७. Before it—हु $Dc_2$, $Bc_1$, $Bc_3$. १८. सकल $Bc_1$; After शकल—एतेषां नाम्नां पर्यायाश्च विशेषाश्च गृह्यन्ते $Dc_3$.

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः॥६।३।४७॥**

संख्यायामुत्तरपदे द्व्यष्टनोरात् स्यात्[1] ॥ द्व्यधिका[2]: दश द्वादश । द्वाविंशतिः । द्वात्रिंशत्[3] । अष्टाविंशतिः । अष्टात्रिंशत्[4] । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः । प्राक् शतात् प्रयोगः । नेह । द्विशतम् । अष्टशतम् ।[5]

अष्टनः कपाले हविषि* ॥ अष्टाकपालः पुरोडाशः । गवि[6] च[7] युक्ते* ॥ अष्टागवेन शकटेन ।

---

द्व्यष्टनः । द्व्यष्टन इति किम् । पञ्चदश । संख्यायामिति किम् । द्वैमातुरः । द्वित्रा इति । द्वौ वा त्रयो वा मानं येषाम् । द्वौ वा त्रयो वेति विग्रहः । 'संख्ययाव्ययासन्न—' इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । द्व्यशीतिरिति । द्व्यधिकाशीतिर्द्व्यशीतिः ।

अष्टनः । कपाले इति । अष्टनः कपाले परे हविषि वाच्ये आत्वं वक्तव्यमित्यर्थः । अष्टाकपाल इति । अष्टसु कपालेषु संस्कृतः । गवि च युक्ते इति । गोशब्दे चोत्तरपदे युक्तार्थे गम्यमाने अष्टन आत्वं स्यादिति वाच्यम्[8] । अष्टागवेनेति । अष्टानां गवां समाहारः अष्टागवम् । अष्टागवेन युक्तमष्टागवम् । न चैवं युक्तशब्दस्य श्रवणं स्यादिति वाच्यम् । पदैकदेशस्य प्रयोगात् । यथा सत्या[9] सत्यभामा भीमसेनो भीम इति । अथवाष्टौ गावो युक्ता अस्मिन्निति त्रिपदो बहुव्रीहिः । युक्त[10]शब्दस्तु गम्यमानार्थत्वान्न प्रयुज्यते । 'अच् प्रत्यन्ववपूर्वात्—' इत्यत्राजिति योगविभागादच् ।

---

१. °रात्वं P; $D_5$ °रा C. २. द्वाभ्यामधिका दश $Dc_1$. ३. Before it—अष्टादश $Bc_3$, $D_3$. ४. $B_1$ drops it. ५. $B_1$ has अष्टशतम् after it. ६. Before it—अष्टनः पदे च । अष्टापदम् । $D_4$. ७. प्रयुक्ते for च युक्ते $D_4$. ८. आत्वं स्यादिति वाच्यम् $Bc_1$. ९. सत्यभामा भामा $Dc_2$, $Dc_3$. १०. प्रयुक्त° $Dc_3$.

**त्रेस्त्रयः ॥६।३।४८॥**

त्रेस्त्रय इत्यादेशः स्यात्[१] पूर्वविषये ॥ त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । बहुव्रीहौ तु । त्रिदशाः । अशीतौ तु । त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ।

**विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥६।३।४९॥**

द्वि अष्टन् त्रि इत्येतेषां[४] प्रागुक्तं वा स्यात् चत्वारिंशदादौ परे ॥ द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ।

---

**त्रेस्त्रयः** । सकारान्तोयमादेशः । संधिवेलादिषु त्रयोदशीति पाठात् । **त्रयोदशेति** । 'ससजुषो रुः' इति रुत्वम् । 'हशि च' इत्युत्वम् । 'आद्गुणः' । **त्रिदशा** इति । त्रिर्दशेति विगृह्य सुजर्थे बहुव्रीहिः ।

**विभाषा** । **प्रागुक्तमिति** । द्व्यष्टनोरात्वम् । 'त्रेस्त्रयः' इति त्रयादेशः ।

---

१. त्रिशब्दस्य $B_1$. २. $B_1$ drops it. ३. पूर्ववत् before it $D_2$. ४. इत्येषां C ; $D_1$, $Dc_1$, $D_3$ drop इति ; $Bc_3$, $D_4$, $D_5$ drop इति and have एषाम् ।. ५. सुजर्थो $Bc_1$; सुजर्थे च $Dc_3$. ६. इत्यादेशः $Bc_1$, $Dc_2$.

## एकादिश्चैकस्य चादुक् ॥६।३।७६॥

एकादिर्नञ् प्रकृत्या स्यादेकस्य[1] आदुगागमश्च[2] । एकेन न विंशतिः एकान्नविंशतिः । अनुनासिकविकल्पपक्षे[3] । एकाद्न-विंशतिः । एकोनविंशतिरित्यर्थः । एवमेकान्नत्रिंशदादि ।

षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च धासु वा भवतीति वक्तव्यम्* ॥ षोडन्[4] । षोडश । षडधिका दश षोडश ॥

इति तत्पुरुषः ॥

---

**एकादिश्च** । **एकेन न विंशतिरिति** । पूर्वं नञो विंशति-शब्देन समासस्ततस्तृतीयेति योगविभागात् तृतीयासमासः । पदान्तलक्षणोनुनासिकविकल्पो यथा स्यादिति पूर्वान्तोयमादुक् क्रियत इति चेतसि कृत्वाह । **अनुनासिकेत्यादि** ।

**षष उत्वमित्यादि** । षट्शब्दस्योत्वं स्याद् दतृदशइत्येतयो-रुत्तरपदयोः उत्तरपदादेः ष्टुत्वं च स्यात् । **धासु वा भवतीति** । उत्वस्यायं विकल्पः । धास्विति बहुवचननिर्देशो नानाधिकरणवाचिनः 'संख्याया विधार्थे धा' 'अधिकरणविचाले च' इति विहितस्य धाप्रत्ययस्य प्रतिपत्त्यर्थः । इह मा भूत् । षट् दधाति धयति वा षड्धा ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन्नयं तत्पुरुष इति गतोद्य प्रसादे **समासः** ॥

---

१. $B_1$ drops it. २. °दागमः स्यात् $D_4$. ३. °विकल्पेन । पक्षे $D_1$, $D_5$; °विकल्पेन $Dc_1$. ४. षोडन् षोडश for षडधिका दश षोडश । $D_2$, $B_1$, $B_2$. ५. दशदत् $Dc_1$, $Bc_3$.

# अथ बहुव्रीहिसमासः ।

**अनेकमन्यपदार्थे ॥२।२।२४॥**

अनेकं सुबन्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ।

**सप्तमीविशेषणे बहुव्रीहौ॥२।२।३५॥**

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम् ॥

---

अथ बहुव्रीहिः । स च सप्तधा । द्विपदो बहुपदः संख्योत्तरपदः संख्योभयपदो दिगन्तलक्षणो व्यतिहारलक्षणः सहपूर्वपदश्चेति । तत्र तावत् द्विपदं दर्शयितुमाह ।

**अनेकम्** । 'सुप् सुपा' इति वर्तते । तत्रानेकग्रहणेन सुबित्येतदेव संबध्यते प्रथमान्तत्वात् न सुपेत्यतदित्यभिप्रेत्याह । **अनेकं सुबन्तमिति** । बहुव्रीहिरिति । एतच्च 'शेषो बहुव्रीहिः' इत्यधिकारसूत्राल्लभ्यते । तस्य चायमर्थः । यत्रान्यः समासो नोक्तः स शेषस्तत्र बहुव्रीहिसंज्ञकः समासः स्यादिति । शेष इति किम् । उन्मत्तगङ्गम् ।

**सप्तमी** । सप्तम्युदाहरणं कण्ठेकालः । यदा कण्ठे किंचिदस्तीति ज्ञाते कालो विशेषणं प्रयुज्यते तदा सप्तम्यन्तस्य पूर्वनिपातार्थः सप्तमीग्रहः । अन्यथा तु विशेषणत्वादेव सिध्यति ।

---

१. °मन्यपदस्या° C, D2, B1, B2. २. दिगन्तराललक्षणो Bc3, Dc4, Dc3.
३. अत्र before it Dc4, Dc3. ४. स बहु° Dc2. ५.°निपात: Bc3.
६. अन्यदा Dc4, Dc3.

अप्रथमाविभक्त्यर्थेष्वयम् । प्राप्तमुदकं यं[1] ग्रामं स[2] प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । [3]उपहृतपशू रुद्रः[4] । [5]उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । प्रथमार्थे तु न[7] । वृष्टे देवे गतः । अनेकोक्तेर्बहूनामपि । नीलमुज्ज्वलं वपुर्यस्य स[8] नीलोज्ज्वलवपुः[9] ।

---

**अप्रथमाविभक्त्यर्थेष्वयमिति** । अयं बहुव्रीहिसमासः प्रथमाव्यतिरिक्ताविभक्त्यर्थेषु भवतीति वाच्यम् । **प्राप्तमुदकं ग्राममिति** । **प्राप्तोदक** इति द्वितीयाविभक्त्यर्थे वर्तमानस्य बहुव्रीहेर्विग्रहः । ऊढरथ इत्यादीनि तृतीयादिविभक्त्यर्थेषु यथाक्रमं बहुव्रीहेरुदाहरणानि । तेषां विग्रहस्त्वेवम् । ऊढो रथो येनानडुहा सः । उपहृतः पशुर्यस्मै रुद्राय । उद्धृत ओदनो यस्याः स्थाल्याः । पीतमम्बरं यस्य हरेः । वीराः पुरुषा यस्मिन् ग्रामे । **प्रथमार्थे तु नेति** । अनभिधानात् । न हि वृष्टे देवे गत इति वाक्याद्योऽर्थः प्रतीयते स वृष्टदेवशब्दात् प्रतीयते । अनेकपदं [10]बहुव्रीहिं दर्शयितुमाह । **अनेकोक्तेरिति** । अयं भावः । यथा 'सुप् सुपा' इत्यधिकारात् समर्थपरिभाषोपस्थानाच्च तत्पुरुष एकस्य न भवति तथा बहुव्रीहिरप्येकस्य न स्यादित्येकस्य मा भूदित्येवमर्थमनेकग्रहणं नेति । अनेकोक्तेर्बहूनामपि पदानां समासः स्यादिति ।

---

१. ग्रामं dropped D1, D3, B1, B2. २. Dropped D1, D3. ३. Before it—ऊढो रथो येन स B1, B2. ४. Before it—उपहृतः पशुर्यस्मै स B1, B2. ५. After it—बहुव्रीहौ वाच्यलिङ्गता Bc3. ६. Before it—उद्धृत ओदनो यस्याः सा B1, B2. ७. B1 drops न. ८. D1, B3, D5 drop it. ९. After it—पुरुषः D5. १०. बहुव्रीहिसमास Dc4.

समानाधिकरणानां बहुव्रीहिरिष्यते *॥ नेह। पञ्चभिर्भुक्तमस्य। अव्ययानां वाच्यः* ॥ उच्चैर्मुखः।

सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च* ॥ करे स्थितं धनं यस्यासौ करधनः।

---

**समानाधिकरणानामिति** । किं प्रयोजनम् । व्यधिकरणानां मा भूदिति । ततश्च पञ्चभिर्भुक्तमस्येत्यत्र वैयधिकरण्यात् नेत्याह । नेहेति । इष्यमाणोपि कथं लभ्यते । उच्यते । अभिधानलक्षणाः कृत्तद्धितसमासा भवन्ति । न हि व्यधिकरणानां बहुव्रीहौ कृते विवक्षितार्थाभिधानमस्ति । तथा हि पञ्चभिर्भुक्तमस्येति वाक्यार्थोर्थः प्रतीयते स भुक्तपञ्चशब्दान्न प्रतीयते । तस्मादनभिधानाद् व्यधिकरणानां बहुव्रीहिर्न । यत्र त्वभिधानमस्ति तत्र वैयधिकरण्येपि बहुव्रीहिः स्यात् यथा कण्ठेकाल इति । कथं पुनस्तुल्ये वैयधिकरणत्वे क्वचिद् गमकत्वं क्वचिन्नेति । शब्दशक्तिस्वाभाव्यादिति ब्रूमः । **अव्ययानामिति** । असमानाधिकरणार्थमिदम् । **उच्चैर्मुख** इति । उच्चैःशब्दस्यासत्त्ववाचित्वात् सत्त्ववाचिमुखेन नास्ति सामानाधिकरण्यम् । तथापि गमकत्वात् समासः ।

**सप्तम्युपमानेति** । सप्तम्यन्तमुपमानं च पूर्वपदं यस्य तस्य सप्तम्यन्तपूर्वपदस्योपमानपूर्वपदस्य च पदान्तरेण समास उत्तर-पदलोपश्च भवति । **करे** स्थितमित्यादि । सप्तमीपूर्वपदस्योदाहरणं करे स्थितमिति विगृह्य 'सप्तमी' इति योगविभागात् समासः । सप्तम्या लुक् । ततः करस्थितं धनं यस्येति विग्रहः । तत्र स्थितशब्दस्योत्तरपदस्य लोपः । अत्र सामानाधिकरण्यात् सिद्ध एव समास उत्तरपदलोपस्तु विधीयते । एवं सर्वत्र ।

---

१. Before it—आस्तिधनः । D4. २. यस्य स Dc1. ३. °वाचिना Dc3. ४. पदस्य लोपश्च Dc4. ५. अभिधीयते Dc3.

खरस्य मुखमिव मुखं यस्य से खरमुखः ।

संघातविकारषष्ठ्याश्चोत्तरपदलोपश्च । केशानां संघातश्चडा यस्य [4]केशचूडः । सुवर्णस्य विकारोलंकारो [5]यस्य सुवर्णालंकारः ।

प्रादिभ्यो धातुजस्य वाच्यो वोत्तरपदलोपश्च ।

---

खरस्येत्यादि । उपमानपूर्वस्योदाहरणम् । खरस्य मुखमिति विगृह्य षष्ठीसमासः । ततः खरमुखमिव मुखमस्येति विग्रहः । अत्र खर उपमानं पूर्वपदम् । ननु च खरमुखमुपमानं देवदत्तमुखस्य न तु खरः । उपमानावयवत्वात् खरोप्युपमान-मित्युच्यत इत्यदोषः । तत्र मुखशब्दस्योत्तरपदस्य लोपः अत्र वृत्त्यैव मुखसाम्यप्रतीतेर्वृत्ताविवशब्दाप्रयोगः ।

संघातेति । संघाते विकारे च या षष्ठी तदन्तात् पूर्वपदात् परं यदुत्तरपदं तदन्तं पदान्तरेण समस्यते तस्य च संघात-विकारषष्ठ्यन्तपूर्वपदस्योत्तरपदलोपः स्यात् । केशानामित्यादि । [10]समुदायसमुदायिसंबन्धे षष्ठी । षष्ठीसमासः । ततो बहुव्रीहिः । संघातशब्दस्योत्तरपदस्य लोपः । सुवर्णस्य विकार इत्यत्र [11]विकारविकारिसंबन्धे षष्ठी । शेषं पूर्ववत् ।

प्रादिभ्य इति । धातोर्जातं निष्पन्नं धातुजं प्रादिभ्यः पूर्वपदेभ्यः परं यद् धातुजमुत्तरपदं पतितशब्दादि तदन्तस्य बहुव्रीहिः स्यात् तस्य चोत्तरपदस्य वा लोपो वाच्यः ।

---

१. मुखमस्य खरमुखः $D_1$. २. असौ $D_2$, $D_5$; स dropped $D_3$. ३. अस्य $D_1$, $D_5$, $Dc_1$, $Bc_3$. ४. स केश° $D_2$, C, $B_1$, $B_2$. ५. अस्य $D_1$, $D_5$, $Dc_1$, $Bc_3$. ६. स सुवर्णा° $D_2$, C, $B_1$, $B_2$. ७. पूर्वपदम् dropped $Dc_3$. ८. षष्ठ्या संघातेति $Dc_4$. ९. षष्ठ्यन्तात् $Dc_3$. १०. समुदायिसमुदाय° $Dc_1$, $Bc_3$. ११. विकारिविकार° $Dc_1$, $Bc_3$.

प्रपतितपर्णः ।[३] विगताभ्रं व्यभ्रं नभः ।

नञोस्त्यर्थानां वाच्यो वोत्तरपदलोपश्च* ॥ [४]अविद्यमानभार्यः । अभार्यः ।

अस्तिक्षीरादयश्च । अस्तिक्षीरा गौः ।

**स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥६।३।३४॥**

उक्तपुंस्कात्परस्यानूङः स्त्रीप्रत्ययस्य पुंवत् स्यात् एकार्थे स्त्रीलिङ्गे [५]पदे परे न तु पूरण्यां प्रियादौ [६]च परतः ॥

---

प्रपतितपर्ण इत्यादि । प्रपतितानि पर्णानि यस्य विगतमभ्रं यस्मादिति विग्रहौ ।

नञ इति । नञः परेषामस्त्यर्थानां पदान्तरेण समासो वाच्य उत्तरपदलोपश्च वा वाच्यः । अस्तिक्षीरादयश्चेति सुबधिकारात् तिङन्तेन समासो नास्तीत्यारम्भः ।

स्त्रियाः । अत्र स्त्रिया इति स्त्रीशब्देन स्त्रीप्रत्ययो वा गृह्यते स्त्र्यर्थो वा स्त्रीवाचकः शब्दो वा । तत्र तावदाद्ये पक्षे एवं सूत्रार्थः स्यात् । उक्तपुंस्कात् परः स्त्रीप्रत्ययोनूङ् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे पुंवत् स्यादिति । यथा पुंसः स्त्रीप्रत्ययो न तथास्यापि नेत्यर्थः । [८]अत्र पक्षे पट्वी भार्या यस्य स पटुभार्य इत्यत्रोत्तरपदनिमित्तायाः स्त्रीप्रत्ययनिवृत्तेः पूर्वस्मिन् यणादेशे विधेये 'अचः परस्मिन्—' इति स्थानिवद्भावे सति यणादेशः स्यात् ।

---

१. प्रपतितं पर्णं यस्मात स प्रपर्णः । विगतमभ्रं यस्मात् तत् व्यभ्रम् $Dc_1$, $Bc_3$. २. After it—वृक्षः $B_1$. ३. Dropped C, $D_1$, $D_3$, $D_4$. ४. अविद्यमाना भार्या यस्य सोभार्यः $Dc_1$, $Bc_3$. ५. उत्तरपदे $D_4$. ६. P, $D_3$ drop it. ७. Dropped $Bc_3$. ८. Before it—इति $Bc_1$, $Dc_2$.

इह गार्ग्यो वृन्दारिका गर्गवृन्दारिका इत्यत्र 'यञिञोश्च' इति बहुष्वस्त्रियामुच्यमानो यञो लुक् न स्यात् । पुंवद्भावेन हि स्त्रीप्रत्ययस्य निवृत्तिः कृता न त्वर्थस्य स्त्रीत्वस्य । ततश्चार्थस्यानिवृत्तत्वात् केन यञो निवृत्तिः स्यादित्येवमादयः प्रत्ययपक्षे बहवो दोषा विस्तरेण भाष्ये प्रतिपादिताः । अतः प्रथमपक्षोनुपपन्नः । द्वितीये तु पक्षे उत्तरपदे उक्तपुंस्कस्यानूङः स्त्रीशब्दस्य योर्थस्तस्य वत् स्यात् पुमर्थः स्यादिति सूत्रार्थः । अत्र पक्षे कालिंमन्या स्त्रीत्यत्र 'खित्यनव्ययस्य' इति ह्रस्वत्वस्यास्य च पुंवत्त्वस्य विप्रतिषेधो न स्यात् । भिन्नविषयत्वात् । अचो हि ह्रस्वो विधीयते अर्थस्य पुंवत्त्वम् । ततश्च विप्रतिषेधाभावात् विप्रतिषेधे परं कार्यमिति ह्रस्वो न स्यात् । इष्यते च स इत्येवमादयो दोषा द्वितीयपक्षे उद्भाविता भाष्ये । तृतीय एव पक्षः साधीयस्तया स्थापितः । दोषाभावात् । अतः स्त्रियाः पुंवदिति सूत्रावयवस्यायमर्थः । स्त्रीवाचकस्य शब्दस्य पुंवाचकः शब्दः स्यादिति । भाषितपुंस्कादनूङ इत्यस्य त्वयमर्थः । भाषितः पुमान् यस्मिन्नर्थे शब्दप्रवृत्तिनिमित्ते तद् भाषितपुंस्कं तस्य प्रतिपादको यः शब्दः स भाषितपुंस्कः । एवं [3]व्याख्यायमाने समानायामाकृतौ यो भाषितपुंस्क इत्युक्तं स्यात् । ततश्च द्रोणीभार्य इत्यत्र पुंवद्भावो न । अत्र द्रोणीशब्दो गवादिन्यां स्त्रीलिङ्गः परिमाणविशेषे पुल्लिङ्ग इत्येकास्मिन्नेव प्रवृत्तिनिमित्ते भाषितपुंस्कत्वाभावात् । यदा तु भाषितः पुमान् येनेति व्याख्यायेत तदा द्रोणीभार्य इत्यत्र पुंवत्त्वं स्यात् । यत्र कस्मिंश्चिदर्थे भाषितपुंस्कत्वात् । अतः पूर्वैव व्याख्या ज्यायसी । कथं तर्हि गर्भिभार्यः प्रसूतभार्यः प्रजातभार्य इति पुंवद्भावः । यतो गर्भ्यादीनां भिन्ने प्रवृत्तिनिमित्ते भाषितपुंस्कत्वम् । तथा ह्यनवयवभूतान्तर्वर्तिवस्तु-

१. अत्र dropped Bc₁, Dc₂, Dc₄. २. °प्रत्ययस्य Bc₃. ३. व्याख्याने Dc₃, Dc₄.

विशेषसंबन्धे हि स्त्री गर्भिण्युच्यते[1] । व्रीहिस्त्ववयवविशेषसंबन्धे[2] गर्भीत्युच्यते इति प्रवृत्तिनिमित्तभेदः स्त्रीपुंसयोः । तथा प्रसूतप्रजात-शब्दौ गर्भनिर्मोक्षं प्रवृत्तिनिमित्तमुपादाय स्त्रियां वर्तेते पुंसि तु गर्भाधानम् । कर्तव्योऽत्र यत्नः । तत्र केचिदुपसंख्यानं कार्यमित्याहुः । केचित्तु पुंवदिति योगविभागः कार्य इति । अनूङिति यद्ययमूङोऽन्योऽनूङिति पर्युदासः स्यात् ततो नञिव-युक्तन्यायेन तत्सदृशानां टाबादीनां ग्रहणे सति तदन्तस्यैव पुंवत्त्वं स्यात् । ततश्चैडविडवृन्दारिकादारदवृन्दारिकेत्यत्र न स्यात् । कथम् । इडविडोऽपत्यं स्त्री 'जनपदशब्दात्—' इत्यञ् । दरदोऽपत्यं स्त्री 'द्व्यञ्मगध—' इत्यण् । ततः 'अतश्च' इति लुक् । ततः इडविट् चासौ वृन्दारिका चेति समासः । तत्र 'पुंवत् कर्मधारय—' इति पुंवत्त्वं न स्यात् । ऊङ्सदृश-प्रत्ययान्तत्वाभावात् । ततश्चैडविट्शब्दस्य ऐडविडशब्दो दरच्छब्दस्य दारदशब्दो न स्यात् । ऊङोऽभावोऽनूङिति प्रसज्यप्रतिषेधे तु सति भवति अत्राप्युङ्भावस्याभावात् । भाषितपुंस्कादनूङ इति यद्येतदसमस्तं[3] स्यात् तदायमर्थः स्यात् । उक्तपुंस्कात्परस्यानूङः स्त्र्यर्थवृत्तेः शब्दस्योत्तरपदे पुंवत् स्यादिति । ततश्चातिप्रसङ्गः । हंसा नाम पक्षिणस्तेषां वरटाः स्त्रियः । तत एता वरटाश्च ता वृन्दारिकाश्चेति समासे कृते एतच्छब्द उक्तपुंस्क इति तस्मात् परस्य वरटाशब्दस्यार्थतोऽन्तरतमो हंसशब्दः पुंशब्द आदेशः स्यात् । अन्यस्यान्तरतमस्याभावात् । ततश्च एता हंसवृन्दारिका इति स्यात् । वरटावृन्दारिका इति चेष्यते । भाषितपुंस्कादनूङ इत्यस्मिन् समस्ते तु बहुव्रीहिः स्यात् । ततश्चानिष्टप्रसङ्गो न । तथा हि भाषितपुंस्कादनूङ् यस्मिन् स्त्रीवाचके

१. गर्भिणीत्युच्यते Dc2, Dc3. २. °स्त्ववयवभूतान्तर्वर्तिवस्तुविशेष° Dc4; °स्त्ववयवभूतान्तर्वस्तुविशेष° Dc3. ३. यद्येव° Dc3. ४. °दारवृन्दा° Bc3, Dc4.

पुंवद्भावात् स्त्रीप्रत्ययलोपः। गोस्त्रियोरिति[1] परपदस्य ह्रस्वः[2]।

शब्दे स भाषितपुंस्कादनूङ्। निपातनात्[3] पञ्चम्या अलुक्। एवं बहुव्रीहौ कृते उक्तपुंस्कस्य पुंवत्त्वेन भाव्यम्। न च वरटाशब्द उक्तपुंस्क इत्यत्र पुंवत्त्वं न भवति। एवं सूत्रार्थे निश्चिते एतमेव सूत्रार्थं व्याख्यातुं प्रवृत्तापीयं वृत्तिः प्रत्ययपक्षम-समस्ततां पर्युदासं वाङ्गीकृत्य[4] प्रवृत्तेति मन्दमतीनां भ्रमो भवति तन्निरासार्थमुच्यते। उक्तपुंस्कादित्यादि। उक्तः पुमान् यस्मिन् शब्दप्रवृत्तिनिमित्ते तत्प्रतिपादकः शब्द उक्तपुंस्कः। तस्मात्परस्यानूङः ऊङोभावोनूङ् तस्य। ननु चाभावस्य पौर्वापर्याभावादुक्तपुंस्कात् परत्वं नोपपद्यत इति चेन्नैष दोषः। प्रतियोगिनोप्यूङः परत्वेनाभावस्य परत्वमुपचर्यते। तस्योङभावस्य य आश्रयत्वेन संबन्धी स्त्रीप्रत्ययः स्त्री प्रतीयते अस्मादिति[5] स्त्रीप्रत्ययः स्त्रीवाचकशब्दः तस्य पंवत् स्यात् पुंवाचकः शब्दः[6] स्यादित्यर्थः। पुंवद्भावात् स्त्रीप्रत्ययलोप इति। पुंवाचकशब्दातिदेशात् स्त्रीप्रत्ययस्य स्त्रीवाचकशब्दस्य लोपो निवृत्तिरित्यर्थः। स्त्रीशब्दस्य शब्दोति-दिश्यत इत्येष एवार्थ आचार्याणामभिप्रेत इति 'न कोपधायाः' इत्यादिसूत्रवृत्तिषु प्रकटं दृश्यते। अयमेव च सूत्रार्थः काशिकायां वृत्तावुक्तः। भाषितः पुमान् येन समानायामाकृतौ एकस्मिन् प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः। तदेतदेव कथं भवति। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते तस्य प्रतिपादको यः शब्दः स भाषितपुंस्कः। ऊङोभावोनूङ्। भाषितपुंस्कादनूङ् यस्मिन् शब्दे स भाषितपंस्कादनूङ्। बहुव्रीहिरयम्। अलुक्निपातनात् पञ्चम्याः। तस्य भाषितपुंस्कादनूङः स्त्राशब्दस्य पुंशब्दस्येव रूपं भवतीति।

१. गोस्त्रियोरुपसर्जनस्येति P. २. For ह्रस्व $D_2$ and $B_1$ have ह्रस्वत्वम्. ३. निपातात् $Dc_3$. ४. चाङ्गी° $Dc_4$, $Dc_3$. ५. यस्मा° $Dc_2$. ६. °वाचकः शब्दः $Dc_4$, $Dc_3$.

चित्रगुः । रूपवद्भार्यः । उक्तपुंस्कात् किम् । गङ्गाभार्यः । अनूङः किम् । वामोरूभार्यः । पूरण्यां तु ।

**अप् पूरणीप्रमाण्योः ॥५।४।११६॥**

पूरणीप्रत्ययान्तात् प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् ॥ कल्याणी पञ्चमी[2] यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्रीप्रमाणः । पुंवद्भावनिषेधोप्प्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी वाच्या चेत्यत्र मुख्यत्वमन्यत्र

---

**चित्रगुः रूपवद्भार्य** इति । चित्रा गावो यस्य[1] रूपवती भार्या यस्य । अत्र चित्रत्वं नाम गुणश्चित्रशब्दस्य प्रवृत्तिनिमित्तं तमेकमुपादायासौ पुंसि स्त्रियां च वर्तते । तथा रूपवतीशब्दस्य रूपवत्त्वं नाम सामान्यविशेषः प्रवृत्तिनिमित्तं तमेकमुपादायासौ पुंसि स्त्रियां च वर्तते । अत एतौ भाषितपुंस्कौ । **वामोरूभार्य** इति । 'संहितशफलक्षणवामादेश्च' इत्यूङ् ।

**अप्पूरणी** । समासान्तोयम् । **पूरणीप्रत्ययान्ता**दित्यादि । 'तस्य पूरणे डट्' इत्यादिना प्रकरणेन पूरणेर्थे ये प्रत्यया विहितास्ते स्त्रीविषया पूरणीप्रत्यया इत्युच्यन्ते । प्रमाणीति स्वरूपग्रहणम् । **पञ्चमी**ति । अत्र 'नान्तादसंख्यादेर्मट्' इति पञ्चशब्दात्परस्य डटो मट् । ङीप् । **स्त्रीप्रमाण** इति । स्त्री प्रमाणी यस्य[3] कुटुम्बिनः स स्त्रीप्रमाणः । **पुंवद्भाव** इत्यादि । यत्रान्यपदार्थे पूरण्यनुप्रविशति न केवले वर्तिपदार्थे एव तत्र पूरण्याः प्राधान्यम् । एतदेव कथितोदाहरणे योजयति । **रात्रिरि**ति । अत्रोदाहरणे रात्रिरेवावयवभूता पूरणी तत्सहिता रात्रय एव समुदिता अन्यपदार्थः न तु ताभिरारब्धमर्थान्तरमिति पूरण्याः प्रधानत्वम् । **अन्यत्रे**ति । पूरण्या अप्राधान्ये ।

---

१. Before it—चित्रा गावो यस्येति $D_2$, $D_1$. २. पञ्चमी रात्री $B_2$. ३. स्त्री प्रमाणी यस्य स्त्रीप्रमाणः $B_2$. ४. यस्य सः $Dc_3$. ५. यस्य सः $Dc_3$.

**नद्यृतश्च ॥६।४।१५३॥**

नद्यन्तादृदन्ताच्च बहुव्रीहेः कप् स्यात् पुंवद्भावः । कल्याणपञ्चमीकः पक्षः । बहुकर्तृकः[1] । अप्रियादिषु किम् । कल्याणीप्रियः[2] ॥

प्रिया । मनोज्ञा[3] । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता । समा[4] । चपला । दुहिता । वामना । वामा[5] । बाला[6] । तनया ॥ दृढभक्तिरित्यादौ भजनादे-र्दार्ढ्यमात्रं विवक्षितं न तु[7] स्त्रीत्वम् ।

---

नद्यृतः । ऋत इति तपरकरणं मुखसुखार्थं न ऋकारान्त-निवृत्त्यर्थम् । ऋकारान्तस्य प्रातिपदिकस्याभावात् । अयमपि समासान्तः । कल्याणपञ्चमीकः पक्ष इति । अत्र हि नावयवः पञ्चमी रात्रिः समासार्थः किं तर्हि तदारब्धः पक्षाख्यः । पूरणी तु समासावयवभूतैवेत्यप्राधान्यमस्याः । बहुकर्तृक इति । ऋदन्तत्वात् कप् । अप्रियादिषु किमिति । स्त्रियाः पुंवदिति सूत्रावयवस्याक्षेपः । प्रियादिगणं पठति प्रियेत्यादिना । अथ दृढभक्तिरित्यादौ कथं पुंवत्त्वम् । यतो भक्तिशब्दः प्रियादिरिति निषेधो भाव्य इत्याशङ्क्याह । दृढभक्तिरित्यादि । दृढशब्दो ह्यत्रादार्ढ्य-निवृत्तिमात्रपरः प्रयुक्तस्तत्रादार्ढ्यनिवृत्तिपरायां चोदनायां लिङ्ग-विशेषोपादानमनुपयोग्येवेति स्त्रीत्वमिह न विवक्षितम् । तस्माद-स्त्रीलिङ्गदृढशब्दस्यायं प्रयोग इत्यभिप्रायः ।

---

१. After it—प्रासादः C, $D_2$, $B_1$, $B_2$. २. Before it—कल्याणी प्रिया यस्यासौ $B_1$. ३. Dropped C. ४. Before it—क्षमा P. ५. Dropped P. ६. Dropped $D_2$. ७. $D_1$, $B_2$, $D_3$, $D_4$ drop it.

## तसिलादिष्वाकृत्वसुचः ॥६।३।३५॥

तसिलादिषु कृत्वसुजन्तेषु परेषु[1] स्त्रियाः पुंवत् स्यात् ॥ ततः[2] । तत्र । पटुतरा[3] । पटुतमा[4] । एवं चरड्[5]जातीयकल्पदेश्यदेशीयरूप्यपाशादौ ।[6]

---

तसिल् । अनुत्तरपदार्थो योगः । तसिलादिषु कृत्वसुजन्तेष्विति । 'पञ्चम्यास्तसिल्' इत्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति सूत्रात् प्राक् ये विहितास्तेषु । तत इति । तस्या इति विग्रहः । 'पञ्चम्यास्तसिल्' । विभक्तिलोपः । 'प्राग् दिशो विभक्तिः' इति विभक्तित्वात् त्यदाद्यत्वम् । तत्रेति । तस्याम् । 'सप्तम्यास्त्रल्' । शेषं पुंवत् । तसिलादिषु कृत्वसुजन्तेष्वन्तर्भूतेष्वपि केषुचिन्नेष्यते । अनन्तर्भूतेष्वपि केषुचिदिष्यते इति परिगणनं कर्तव्यमिति भाष्यकारमतं चेतसि कृत्वा परिगणयन् त्रल्तसिलावुदाहृत्य तरप्तमपावुदाहरति । पटुतरा । पटुतमेति । इयमनयोरतिशयेन पट्वी 'द्विवचनविभज्योपपदे' इति तरप् । इयमासामतिशयेन पट्वी 'अतिशायने तमबिष्ठनौ' इति तमप् । एवमिति । अनेन कारेण चरडादावुदाहार्यं नान्येष्वित्यर्थः । 'भूतपूर्वे चरट् ।' 'प्रकारवचने जातीयर्' । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' । 'प्रशंसायां रूपप्' । 'याप्ये पाशप्' । पाशादावित्यादिशब्देन थमुथाल्दार्हिल् तिल् तातिलो गृह्यन्ते ।

---

१. परतः B₁; dropped D₅. २. B₁ has before it—तस्या इति. ३. B₁ has इयमनयोरतिशयेन पट्वी पटुतरा; P, C, drop from इय° to पट्वी. ४. B₁ has इयमासामतिशयेन पट्वी पटुतमा. ५. C has पटुचरा after चरट्. ६. After it—रूप्ये तु न पुंवदिति केचित् B₂, Dc₁; Bc₃ drops तु.

त्वतलोर्गुणवचनस्येति वाच्यम्*॥ पट्व्या भावः पटुत्वम्[1]। पटुता। नेह। कटीत्वम्। उत्तरसूत्रे चकारात् तसिलकृत्व-सुजनन्तर्भूतेष्वपि पुंवत्। अल्पां [2]देहि अल्पशः। [3]बहुशः। भस्याढे तद्धिते*॥ पुंवद्भावः। हस्तिनीनां समूहो हास्तिकम्। अढे किम्। रौहिणेयः।

---

त्वतलोरिति। त्वतलोः प्रत्यययोः परयोर्गुणवचनस्य पुंवद्भावः स्यादिति वाच्यमित्यर्थः। नेहेति। कटीत्वमित्यत्र जातिवाचित्वे-नागुणवाचित्वात् पुंवत्त्वं नेत्यर्थः। यद्यपि भाष्यकाराभिमतं परिगणनं न क्रियते तथापि 'क्यङ्मानिनोश्च' इत्युत्तरसूत्रे वर्तमानादनुक्त-समुच्चयार्थाच्चकारात् तसिलकृत्वसुजनन्तर्भूतेष्वपि प्रत्ययेषु परेषु पुंवत्त्वं स्यादित्याह। उत्तरसूत्रेति। ननु चान्तर्भूतेष्वपि केषुचिन्नेष्यत इति परिगणनं कार्यमेवेति चेन्न कार्यम्। 'न कोपधायाः' इत्यत्र नेति योगविभागेन निषेधस्य सिद्धत्वात्। अल्पश इति। 'बह्वल्पार्थात्' इति शस्। 'भस्याढे' इति भसंज्ञस्य ढव्यतिरिक्ते तद्धिते परे पुंवद्भावो वक्तव्यः। हास्तिकमिति। 'अचित्तहस्तिधेनोष्ठक्' इति ठक्। ननु चात्र 'ठक्छसोश्च' इत्येव पुंवत्त्वं सिद्धम्। न सिध्यति। तत्र हि छसा साहचर्यात् 'भवतष्ठक्छसौ' इति सूत्रेण विहितस्यैव ठको ग्रहणं न सर्वस्य। रौहिणेय इति। रोहितवर्णाया अपत्यम्। रोहितशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप्। नकारश्चान्तादेशः। ततः 'स्त्रीभ्यो ढक्' इति ढक्। तस्यैयादेशः। 'यस्येति च' इतीकारलोपः। ननु चाग्नेः स्त्री वृषाकपीति ङीपि[4] ऐकारे चान्तादेशे कृते अग्नायीति स्यात्। 'सा देवतास्य' इति

---

१. पट्वीभावः D3, D1; पटुभावः D2. २. देहीति B1, B2. ३. बह्वीं देहि बहुशः B1, B2. ४. ङीषि Dc4.

ठक्छसोश्च* ॥ भवत्याश्छात्रा भावत्काः । भवदीयाः । कुक्कुट्यादीनामण्डादिषु[1] । कुक्कुटाण्डम् । मृगपदम् । मृगक्षीरम् । काकशावः ।[2]

---

विवक्षायामाग्नेयः स्थालीपाक इतीष्यते । अढ इति तु[3] निषेधे आग्नयैय इति स्यादिति चेन्नैष दोषः । अढ इत्यपत्यार्थविहितं ढप्रत्ययं वर्जयित्वेति विशेषणस्य विवक्षितत्वात् । ढक्छसोश्चेति । अभसंज्ञार्थ[4] आरम्भः । ननु[5] ठग्रहणं व्यर्थम् । यतष्ठस्यैकादेशे कृते भत्वादेव सिद्धः[6] पुंवद्भाव इति । न व्यर्थम् । ठावस्थायामेव पुंवत्त्वं स्यादित्येवमर्थम् । ततश्च 'इसुसुक्तान्तात् कः' इति कः सिध्येत् । अन्यथा यथा मथितं पण्यमस्य माथितिक इत्यत्र ठस्यैकादेशे[7] 'यस्येति च' इत्यकारलोपे कृतेपि तान्तादिति कादेशो न भवति । तथा भावत्क इत्यत्रापि इकादेशे कृते जाते पुंवत्त्वे कादेशो न स्यात् । भावत्का भवदीया इति । 'भवतष्ठक्छसौ' इति ठक्छसौ 'सिति च' इति पदत्वाज्जश्त्वम् । प्रसङ्गेन वद्भावविधिनिषेधप्रकरणं पठति । तत्र कुक्कुटाण्डमित्यादौ उत्तरपदस्याण्डादेरस्त्रीत्वादसामानाधिकरण्याच्च पुंवत्त्वं न प्राप्नोतीत्यारभ्यते वक्तव्यम् । कक्कुट्यादिष्विति । अण्डादौ परपदे कुक्कुट्यादिषु पूर्वपदेषु पुंवत्त्वं वाच्यमित्यर्थः । कुक्कुटाण्डमित्यादि[8] । कुक्कुट्या अण्डं मृग्याः पदं मृग्याः क्षीरं काक्याः शाव इति विग्रहाः ।

---

१. कुक्कुट्यादिषु C; D1, D4, Com. कुकुट्यादेर्वाण्डादिषु B1. २. B1 has पक्षे कुक्कुट्यण्डमित्यादि. ३. Dropped Dc2. ४. संज्ञार्थमारम्भः Dc1, Bc3. ५. ननु च Dc2. ६. अस्य सिद्धः Bc1. ७. After it—कृते Dc2, Bc3. ८. कक्कुटाण्डमिति Bc3.

**क्यङ्मानिनोश्च ॥६।३।३६॥**

एतयोः[१] परतः पुंवत्[२] ॥ [३]एनी वा[४]चरति [५]एतायते । श्येनी[६] वाचरतीति[७] श्येनायते । [८]दर्शनीयां मन्यते दर्शनीयमानिनी ॥

**न कोपधायाः ॥६।३।३७॥**

कोपधाया [९]उक्तपुंस्कः स्त्रियां न पुंवत् ॥ पाचिकाभार्यः ।

---

**क्यङ्** । एनीवाचरति एतायत इत्यादि । एतश्येनशब्दाभ्यां 'वर्णादनुदात्तात्—' इति ङीप् । तकारस्य [१०]नकारः । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । पुंवत्त्वम् । ततः 'अकृत्-सार्वधातुकयोः' इति दीर्घः । मानिन्ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च । इह तु दर्शनीयामात्मानं मन्यते स्त्री दर्शनीयमानिनीति 'स्त्रियाः पुंवत्' इत्येव सिद्धम् । अत एवासमानाधिकरणोदाहरणमेतदिति ज्ञापयितु दर्शनीयां मन्यत इति विग्रहे आत्मशब्दो न प्रयुक्त आचार्यवर्यैः । ततश्च दर्शनीयमानिनीत्यस्यायमर्थः । काचन स्त्री काञ्चन स्वव्यतिरिक्तां दर्शनीयां मन्यते इति । दर्शनीयां देवदत्तां यज्ञदत्तो मन्यते दर्शनीयमान्ययमस्या इति अस्त्रीसमानाधिकरणोदाहरणम् ।

**न कोप** । पूर्वेण प्रकरणेन प्राप्तस्य पुंवद्भावस्यायं निषेधः । पाचिकेति । पचेः 'ण्वुण्तृचौ' इति ण्वुल् । टाप् । 'प्रत्ययस्थात्—' इतीत्वम् । 'स्त्रियाः पुंवत्' इति पुंवत्त्वस्य प्राप्तिः ।

---

१. Dropped $D_3$. २. After it—स्यात् C. ३. Before it—एनी मृगी $D_5$; एनायते $D_2$, $D_5$. ४. °चरतीति C. ५. एतायते । एनायते $Bc_3$. ६. श्येनीति $B_1$; श्येनीवाचरतीति dropped $D_3$. ७. इति dropped $D_4$. ८. Before it—आत्मानम् $D_5$. ९. उक्तपुंस्कं $D_1$, $D_5$. १०. च नकारः । $Dc_3$.

पाचिकाता[1] । पाचिकात्वम् । रसिकाभार्यः । मद्रिकायते । मद्रिकामानिनी ॥

अकतद्धिताभ्यां कोपधायाः पुंवत्त्वनिषेधोत्र[2] । इह मा भूत् । पाका भार्या यस्यासौ[3][4] पाकभार्यः ।

**संज्ञापूरण्योश्च** ॥६।३।३८॥

अनयोर्न पुंवत् ॥

---

पाचिकातेत्यादि । 'तस्य भावस्त्वतलौ' त्वतलोरिति प्राप्तिः । रसिकेति । रसोस्त्यस्याः । 'अत इनिठनौ' इति ठन् । अत्रापि 'स्त्रियाः–' इति प्राप्तिः । मद्रिकायत इत्यादि । मद्रेषु भवा । 'मद्रवृज्योः कन्' । 'क्यङ्मानिनोश्च' इति प्राप्तिः ।

अकतद्धिताभ्यामिति । अकश्च तद्धितश्चाकतद्धितौ ताभ्यां हेतुभ्याम् । या कोपधा स्त्री कोपधः स्त्रीवाची शब्दः । तस्य पुंवद्भावोत्र सूत्रे निषिध्यत इत्यर्थः । एतच्च 'अप्तृन्—' इत्यत्र तिपादितम् । फलमाह । इह मा भूदिति । पाकेति । पाकशब्दोयमुणादिषु 'अर्भकपृथुकपाका वयसि' इति कप्रत्ययान्तो निपातितोतो नैकेनातद्धितेन वा कोपध इति पुंवत्त्वनिषेधो न ।

संज्ञा । अनयोरिति । संज्ञायाः पूरण्याश्च स्त्रियाः प्राप्तः पुंवद्भावो नेत्यर्थः । ननु च संज्ञाशब्दस्यैकद्रव्यविनिवेशितत्वादुक्तपुंस्कत्वाभावात् कथं पुंवत्त्वप्राप्तिः । नैतत् । न ह्ययं नियमोस्ति एकद्रव्यविनिवेशिनः संज्ञाशब्दा इति । तथा हि देवदत्तादिशब्दः संज्ञाभूतोनेकत्र प्रयुज्यमानो लोके दृश्यते । शास्त्रे च ह्रस्वादिशब्दाः ये त्वेकद्रव्यविनिवेशिनस्तान् प्रति नैष निषेधः । नन्वनेकार्थवृत्तित्वेपि

---

१. पाचिकता D5. २. पुंवद्भावनिषेधोत्र C; पुंवद्भावनिषेधः । तेन B2. ३. For यस्यासौ D1, D4 have अस्य. ४. P, D2, D5 drop असौ. ५. °नोकना° Bc3..

दत्ताभार्यः । दत्तायते । दत्तामानिनी । पञ्चमीभार्यः । पञ्चमायते[1] । पञ्चमीपाशेत्यादि ।

**वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥६।३।३९॥**

वृद्धिहेतोस्ताद्धितस्यारक्तविकारार्थस्य न[2] पुंवत् ॥ स्रौघ्नीभार्यः । माथुरीभार्यः[3] । माथुरायते[4] । माथुरीमानिनी ।

---

संज्ञाशब्दानां कथमुक्तपुंस्कत्वमेकत्र प्रवृत्तिनिमित्ते । न हि तेषां किंचित् प्रवृत्तिनिमित्तमस्ति यदृच्छाशब्दत्वात् । एषोप्यदोषः । यतस्तेषामपि किंचिन्निमित्तमस्त्येव सप्तपर्णादिवत् । यत्राप्यन्यनिमित्तं नास्ति तत्रापि स्वरूपमेव निमित्तमादाय वाच्ये प्रवर्तन्ते तत्रैकस्मिन् निमित्ते य उक्तः पुमान् ते उक्तपुंस्का इति किमत्रानुपपन्नम् ।

**दत्ताभार्य** इति । अत्र यासौ दानक्रियाकृतिस्तस्यां दत्तशब्दो भाषितपुंस्कः अथवा स्वरूपे प्रवृत्तिनिमित्ते । **दत्तायत** इति । ननु चात्र कृतेपि पुंवत्त्वे 'अकृत्सार्वधातुकयोः—' इति दीर्घेणाप्येतत् सिद्धम् । तत् कथमेतन्निषेधस्योदाहरणम् । एवं मन्यते । यद्यत्र पंवत्त्वनिषेधो न स्यात् तदा 'संज्ञापूर्वको विधिरनित्यः' इति यदा दीर्घो न स्यात् तदा दत्तयत इत्यनिष्टं[5] स्यादिति ।

**वृद्धि** । वृद्धेर्हेतुर्वृद्धिहेतुस्तस्य वृद्धिहेतोः । **स्रौघ्नीभार्य** इति । स्रुघ्ने भवा । 'तत्र भवः' इत्यण् । 'टिड्ढाणञ्—' इति ङीप् । **माथुरीयत** इति । मथुरायां भवा माथुरी ।

---

१. Dropped C, $D_1$, $Bc_3$. २. स्त्रियां विहितस्य न $D_3$. ३. C, $D_1$, $Dc_1$, $Bc_3$, $D_6$ drop it. ४. माधुरीयाति $Bc_3$. ५. °त्यनिष्टं रूपं $Dc_2$, $Dc_3$.

अरक्ते किम् । काषायी कन्था[1] यस्य स काषायकन्थः । अविकारे किम् । हैममुद्रिकः । वृद्धिनिमित्तत्वाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः ।

**स्वाङ्गात् चेतोमानिनि[3] ॥ ६।३।४०॥**

स्वाङ्गादीकारस्य स्त्रियां विहितस्य न पुंवत्[4] ॥ सुकेशीभार्यः । स्वाङ्गात् किम् ।

---

पूर्ववत् । माथुरीवाचरति । क्यङ् । माथुरीं मन्यते । **काषायीति** । काषायेण रक्ता । 'तेन रक्तम्' इत्यण् । **हैममुद्रिक इति** । हेम्नो विकारः । 'अनुदात्तादेश्च' इत्यञ् । **वैयाकरणभार्य** इति । व्याकरणमधीते । 'तदधीते तद्वेद' इत्यण् । 'न य्वाभ्याम्—' इति वृद्धिनिषेधः । ऐजागमश्च । अयमणनिषिद्धत्वात् वृद्धेर्निमित्तं न भवतीति पुंवद्भावनिषेधो न । **सौवश्वभार्य** इति । स्वश्वस्यापत्यं सौवश्वी । अण् । पूर्ववत् वृद्धिनिषेधः ऐजागमश्च । ननु च तावती भार्या यस्य स तावद्भार्यः[5] । इहापि निषेधः स्यात् । 'आ सर्वनाम्नः' इति आत्वलक्षणां वृद्धिं प्रति वतोस्तद्धितस्य निमित्तत्वात् । नैष दोषः । वृद्धनिमित्तत्वं नाम वृद्धिसंशब्दनेन विहिताया वृद्धेर्यन्निमित्तत्वं तद्विवक्षितमिति[6] हेतोः । तद्विवक्षा च वृद्धिशब्दस्यावृत्तेरित्याचार्याणामभिप्रायः । **काशिकाकारस्य** तु मते वृद्धिनिमित्तस्येति वृद्धेर्निमित्तं अणका यस्मिंस्तस्येति बहुव्रीहिः । तथा च अणकानामभावादप्राप्तिः । स च बहुव्रीहिपक्षोऽत्रापि योजयितुं शक्यः । किं तु तन्मते वैयाकरणभार्य इत्यादौ वृद्धिनिषेधात् वृद्धिनिमित्तता नास्तीति पुंवत्त्वनिषेधो न भवतीति ज्ञेयम् ।

**स्वाङ्गात्** । **सुकेशीभार्य** इति । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष्[7] ।

---

१. कन्थास्य काषाय॰ B1, D1. २. असौ D3; स dropped D4, D5. ३. °मानिनी C. ४. After it—अमानिनिपरतः । D5. ५. After it—इति Dc2. ६. °मिह Dc1. ७. ङीप् Dc4, Dc3.

पटुभार्यः । अमानिनि[1] किम् । सुकेशमानिनी ।

**जातेश्च ॥६।३।४१॥**

जातेर्विहितो ङीप्[2] न[3] पुंवत् ॥ ब्राह्मणीभार्यः । अमानिनीत्येव । ब्राह्मणमानिनी ।

**संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥२।२।२५॥**

संख्येयार्थया[4] संख्याया अव्ययादि[5] समस्यते स बहुव्रीहिः ।

---

**पटुभार्य** इति । पट्वी भार्या यस्येति विग्रहः । ईत इति किम् । अकेशा भार्या यस्य सोकेशभार्यः ।

**जाते** । अयं च निषेध औपसंख्यानिकस्य नेष्यते । हस्तिनीनां समूहो हास्तिकम् । तथोक्तं **महाभाष्ये** । एवं तर्हि 'न कोपधायाः' इत्येष योगः पुंवद्भावमात्रस्य विषये उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषय इति । संख्योत्तरपदं संख्योभयपदं च बहुव्रीहिमाह ।

**संख्यया** । 'अनेकमन्यपदार्थे' इति सूत्रं मत्वर्थे बहुव्रीहिविधायकमिति **भाष्यकारेण** स्थापितम् । अतो मत्वर्थं[6] विनापि बहुव्रीहिर्यथा स्यादित्ययं योग आरभ्यते । तथा प्रथमार्थं वर्जयित्वान्यत्र विभक्तौ बहुव्रीहिरुक्तः प्रथमार्थमिदं वचनम् ।

---

१. अमानिनीति किम् C ; Before it—ईत इति किम्—अकेशभार्यः $D_4$. २. ङीप् पुंवन्न $B_1$, $D_1$, $D_3$. ३. पुंवन्न $D_2$. ४. °यार्थसंख्यया $D_3$. ५. अव्ययादिः P, $D_5$. अव्ययादयः समस्यन्ते $D_4$. ६. मत्वर्थत्वं $Dc_3$.

**बहुव्रीहौ संख्येये डजबहुगणात् ॥५।४।७३॥**

**संख्येये यो बहुव्रीहिस्तस्मात् डच् स्यात् न तु बहुगणात्। टिलोपः। [1]उपगता दश येषां ते उपदशाः ॥**

---

तथा हि उपदशा इति दशानां समीपे ये त उच्यन्ते ते च नवैकादश चेत्यन्यपदार्थोऽत्रास्त्येव न तु मत्वर्थः। प्रथमाविभक्त्यर्थोऽप्यत्रास्ति। [2]द्वित्रा इत्यत्र द्वौ वा त्रयो वेति विगृह्य वार्थेयं समासः। वार्थश्चान्यपदार्थः। न तु मत्वर्थोऽस्ति। तथा प्रथमार्थोऽप्यत्रास्ति। [3]तथा द्विदशा त्रिदशा इति। द्विर्दश त्रि[4]र्दशेति। विगृह्य सुजर्थेयं समासः। दशसंबन्धिनी चावृत्तिर्दशशब्देन लक्ष्यमाणा द्विशब्देन त्रिशब्देन वा संख्यायते। सुजर्थश्चायमन्यपदार्थो न तु मत्वर्थः। प्रथमार्थोऽप्यत्रास्ति सुच्प्रत्ययश्च वृत्तौ गतार्थत्वान्न प्रयुज्यते। प्रतिपदविधानार्थे[6]पि 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यत्रास्यैव ग्रहणं यथा स्यात्। बहु। **संख्येये** इति। 'संख्ययाव्ययासन्न—' इति यो बहुव्रीहिस्तस्येदं ग्रहणम्। बहुव्रीहाविति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमीत्यभिप्रेत्याह। **तस्मा**दिति। उपगता दश येषां ते उपदशा इति। ननु चात्र दशानां समीपे ये ते उपदशा इति विग्रहः कार्यः। तथोक्तं **महाभाष्ये**। 'कोस्य विग्रहो दशानां समीपे ये त उपदशाः' इति। सत्यं विग्रहस्तु तथैव किं त्वस्य समासस्य समीपिप्राधान्यमव्ययीभावस्य तु सामीप्यप्राधान्यमिति विषयविभागप्रदर्शनार्थं समीपिप्राधान्यं स्फुटीकर्तुमुपगता दश येषामित्युक्तम्। समीपगता दश येषां तेऽत्र समीपिनः स[7]मासार्था इति भावः। ये हि दशानां समीपे तेषामुपगता दश भवन्त्येवेति विग्रहेण तुल्यार्थत्वमस्य वाक्यस्येति

---

१. उपगता दश येषां ते dropped D3. २. तथा हि द्वित्रा Bc1, Dc4. ३. तथा हि Bc1, Dc4. ४. After it—चतुर्दशा Dc3. ५. त्रिर्दश चतुर्दशेति Dc3. ६. विधानार्थोपि Dc2, Bc1, Dc. ७. समासार्थ Dc2.

ति विंशतेर्डिति ॥ ६।४।१४२॥

[1]विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति ॥ [4]आसन्नविंशाः । अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ त्रयो वा मानं येषां ते द्वित्राः । अबहुगणात् किम् ।

न विरुद्धं किंचित् । तथोक्तं त्रिलोचनदासेन पञ्जिकायाम् । 'ये हि दशानां समीपे तेषामुपगताः समीपगता दश इत्यर्थोपि न भिद्यते' इति । तथा च समीपिप्राधान्यमस्येति जिनेन्द्रबुद्धिना न्यासे उक्तम् । 'यदा समीपिप्राधान्यं तदा बहुव्रीहिः । यदा तु सामीप्यप्राधान्यं तदाव्ययीभाव इत्येष विषयविभागः' इति ।

ति विं । तिग्रहणमन्त्यस्य लोपो मा भूदिति । आसन्नविंशा इत्यादि । आसन्ना विंशतेः । अदूरे त्रिंशतः । अधिकाश्चत्वारिंशत इति विग्रहाः । सर्वत्र 'संख्यया—' आसन्नादेः समासे जाते डच् । द्वौ वा त्रयो वा मानं येषामिति । यद्यप्यादशभ्यः संख्या संख्येये वर्तते ततः परं संख्याने संख्येये च तथाप्यत्र मानशब्दसंनिधानात् द्वित्रिशब्दौ संख्याने द्वित्वे त्रित्वे च वर्तते । यथा पञ्च परिमाणमेषां पञ्चकाः शकुनय इत्यत्र पञ्चशब्दः पञ्चत्वे । ततश्च द्वित्वं त्रित्वं वा मानं संख्यानमेषां द्वित्वेन त्रित्वेन वा संख्याता इति यावत् । ततश्चानेन वाक्येन द्वौ वा त्रयो वेति महाभाष्योक्तविग्रहस्यार्थ उक्तः ।

१. डिति dropped $B_1$. २. विंशतेः dropped $B_1$. ३. तिलोपः स्यात् $D_1$, $D_3$. ४. Before it—आसन्ना विंशतिर्येषां ते C. ५. After it—त्रिदशाः $D_1$. ६. त्रिलोचनपञ्जिकायां $Dc_3$. ७. समीपिनः प्राधान्यं Nyâsa. ८. समीपस्य प्राधान्यं Nyâsa. ९. Dropped $Bc_1$.

उपबहवः । उपगणाः । अत्र स्वरविशेषः[1] । संख्येये किम् । अधिका विंशतिर्गवाम् ।

संख्यायास्तत्पुरुषस्य डच्[2][3][4] * ॥ निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि मैत्रस्य । निश्चत्वारिंशानि । निर्गतस्त्रिंशतोङ्गुलिभ्यः निस्त्रिंशः खड्गः ।

---

तथा[5] प्रपञ्चप्रदीपे पञ्च षड् वा मानमेषामित्यस्यार्थ उक्तः । पञ्च वा षड् वेत्यर्थ इति । अयं च समासो वार्थे वार्थश्चात्र संशयः । संशये हि बहुवचनं स्यात् । संशयस्योभयपक्षपरामर्शित्वेन बह्वर्थविषयत्वात् । तद्यथा कति वा भवतः पुत्रा इति । तथोक्तं भाष्ये[6] । 'अविज्ञातार्थे बहुवचनं प्रयोक्तव्यम्' इति ।

उपबहव इति । बहूनां समीपे ये ते उपबहवः । उपगणा इति । गणानां समीपे ये । अत्रेत्यादि । उपगणा इत्यत्र डचि सत्यसति वा यद्यपि रूपभेदो नास्ति तथापि स्वरे विशेषोस्ति । तथा हि डचि सत्यन्तोदात्तत्वं स्याच्चित्स्वरेण । तस्मिन्नसति पूर्वपदप्रकृतिभावेनाद्युदात्तत्वं स्यात् । संख्येये किमिति । 'संख्ययाव्यय—' इति सूत्रे संख्येये वर्तमानया संख्येयेति किमर्थमुक्तमित्यर्थः । अधिका विंशतिर्गवामिति । अत्र विंशतिशब्दः संख्यायामेव वर्तते न संख्येये इति ।

संख्याया इति । तत्पुरुषस्य संख्यावाचि यदुत्तरपदं ततो डच् वाच्य इत्यर्थः । निस्त्रिंशानीति । 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति समासः । दिगन्तराललक्षणं बहुव्रीहिमाह ।

---

१. स्वरे $D_1$, $D_2$, $D_5$. २. Before it—शदन्तायाः $B_1$, $D_2$ ; डच्प्रकरणे अव्ययादेः C, $B_2$. ३. °स्तत्पुरुषे $B_1$. ४. After it—वाच्यः $D_4$. ५. तथा च प्रदीपे $Bc_1$, $Dc_3$, $Dc_4$. ६. महाभाष्ये $Dc_2$.

**दिङ्नामान्यन्तराले ॥२।२।२६॥**

दिशां नामानि[1] समस्यन्ते अन्तराले वाच्ये स बहुव्रीहिः । सर्वनाम्नः समासे पूर्वं पुंवत् । दक्षिणपूर्वा । तयोरन्तरालमित्यर्थः । नामोक्तेरैन्द्र्यादौ[2][3] न ॥

**तत्र तेनेदमिति सरूपे ॥२।२।२७॥**

सप्तम्यन्ते ग्रहणविषये सरूपे पदे तथा[4] तृतीयान्ते सरूपे

---

**दिङ्नामानि** । प्रथमार्थेमत्वर्थेपि समासार्थमस्यारम्भः । प्रतिपदविधानार्थं च 'विभाषा दिक्समासे बहुव्रीहौ' इत्यत्रास्यैव ग्रहणं यथा स्यादिति । तेन या पूर्वा सोत्तरा अस्योन्मुग्धस्य तस्मै पूर्वोत्तराय देहि इत्यत्र सर्वनामत्वं न । कबभावार्थं च । 'शेषाद्विभाषा' इत्यत्र शेषाधिकारोक्तस्यैव बहुव्रीहेर्ग्रहः । शेषाधिकारश्च 'अनेकमन्यपदार्थे' इत्यत्रैव । तेनात्र न कप् । वैयधिकरण्येपि स्यादित्यप्यारम्भः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भाव इत्युपसंख्यानमर्थतः पठति । **सर्वनाम्नः समासे** इति । सर्वनामसंबन्धिनि समासे पूर्वं यत् सर्वनामपदं तत् पुंवत् स्यादिति वाच्यमित्यर्थः । **दक्षिणपूर्वेति** । दक्षिणस्याः पूर्वस्याश्चान्तरालम् । **नामोक्तेरिति** । नामग्रहणं लोकरूढिपरिग्रहार्थम् । तेन ऐन्द्र्याश्च कौबेर्याश्च यदन्तरालमित्यादौ न समासः । नेमौ रूढिशब्दौ किं तु इन्द्रस्येयं कुबेरस्येयमिति यौगिकौ । व्यतिहारलक्षणं बहुव्रीहिमाह ।

**तत्र** । अमत्वर्थार्थोयमारम्भः । प्रतिपदविधानार्थोपि । 'इच् कर्मव्यतिहारे' इत्यत्रास्यैव ग्रहः[5] । **सप्तम्यन्तेत्यादि** । गृह्यतेस्मिन्निति ग्रहणं केशादि तद्विषयो वाच्यं ययोस्ते ग्रहणविषये सरूपे

---

१. सुबन्तानि समस्यन्ते Dc1. २. नाम्नोक्ते° D1. ३. °रैन्द्राग्नेय्यादौ B2. ४. तथा च Bc3. ५. संग्रहः Dc3.

[1]प्रहरणे [2]इदं युद्धमित्यर्थे मिथः समस्यते[3] कर्मव्यतिहारे द्योत्ये । इतिशब्दा[4]देतावल्लभ्यते ॥

**अन्येषामपि दृश्यते ॥६।३।१३७॥**

अन्येषामपि भाषायां दीर्घत्वं[5] दृश्यते । [6]दृशिग्रहणात् कर्म[7]व्यतिहारे बहुव्रीहौ पूर्वपदस्य दीर्घत्वमात्वं [8]वानचीति [9]ज्ञेयम् ॥

**इच् कर्मव्यतिहारे ॥५।४।१२७॥**

कर्मव्यतिहारे बहुव्रीहेरिच् स्यात् समासान्तः ॥ 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावादव्ययत्वम् । तत्र[10] इच् प्रत्ययस्य पाठात् ।

---

समानरूपे पदे इदं युद्धमित्यस्मिन्नर्थे मिथः परस्परं समस्येते तथा तृतीयान्ते सरूपे पदे प्रहरत्यनेनेति प्रहरणं मुसलादि तद्विषये इदं युद्धमित्यर्थे मिथः समस्येते कर्मव्यतिहारे द्योत्ये इति । कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च । इतिशब्दादेतावदिति । ग्रहणं प्रहरणं कर्मव्यतिहारो युद्धं चेति ।

अन्ये । दृशिग्रहणादिति । प्रयोगानुसरणार्थादिति भावः । आत्वं वेति । अर्वाचीनमतेनात्वम् । तथा च **पञ्जिकायां त्रिलोचनदासेनोक्तम्** । तथा मुष्टामुष्टीति इचिनाम्यन्तपूर्वपदस्यात्वं दृश्यत इति ।

इच् । इच्करणं तिष्ठद्गुप्रभृतिषु इच् कर्मव्यतिहारे इत्यस्य विशेषणार्थम् । 'तिष्ठद्गुप्रभृतीनि च' इतीदमव्ययीभावे व्याख्यातम् ।

---

१. प्रहरणार्थे $D_4$, $D_5$, C, $B_1$. २. इदं युद्धं प्रवृत्तमित्यस्मिन्नर्थे C, $B_1$, $B_2$. ३. After it—स बहुव्रीहिः $D_4$. ४. °देतल्लभ्यते $D_5$. ५. दृश्यते दीर्घत्वम् $D_4$. ६. दृशेर्म° $D_2$, $D_3$, P, C, $B_1$, $B_2$. ७. व्यतिहारबहुव्रीहौ $D_1$. ८. नाचि इति P; $D_2$. ९. संज्ञेयम् $D_1$. १०. इच्प्रत्ययस्य तत्र C, $D_1$, $Bc_3$, $D_4$.

केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं[1] केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्येदं[2] युद्धं प्रवृत्तं दण्डादण्डि[3]। मुष्टामुष्टि[4]।

**ओर्गुणः ॥६।४।१४६॥**

उवर्णान्तस्य भस्य गुणः स्यात्[5]। अवादेशः[6]। बाहू-बाहवि। बाहाबाहवि। उरोदिति[7] वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्यो[8] यथा स्यात्।

---

स्पष्टत्वात् त्यक्तं सूत्रं व्याख्यायते। 'द्विदण्ड्यादिभ्यश्च'। ५।४।१२८॥ एषां तादर्थ्ये चतुर्थी। न पञ्चमी। द्विदण्ड्यादि-सिद्ध्यर्थं चेच् कार्यः। समुदायनिपातनादर्थविशेषेवरुध्यन्ते। द्वौ दण्डौ प्रहरणमस्यां क्रियायां द्विदण्डि प्रहरति। तथा द्विमुसलि प्रहरति। इह न द्विदण्डा[10] शालेति। बहुव्रीह्यधिकारेपि तत्पुरुषात् क्वचिद्विधिः। निकुच्य कर्णौ धावति निकुच्यकर्णि धावति। प्रोह्य पादौ हस्तिनं वाहयति। प्रोह्यपादि हस्तिनं वाहयति। मयूरव्यंसकादित्वात् समासः। उभाभ्यामञ्जलिभ्यां पिबति। उभाञ्जलि। उभयाञ्जलि[11]। उभयादन्ति। उभादन्ति[12]। उभाकर्णि। उभयाकर्णि। उभौ कर्णौ यस्मिन् श्रवणे। उभाहस्ति। उभयाहस्ति। उभापाणि। उभयापाणि। उभाबाहु। उभयाबाहु। निपातनादिचो लोपः। प्रत्ययलक्षणेनाव्ययीभावत्वम्। एकपदि। आढ्यपदि। संहितानि पुच्छानि यस्मिन् धावति संहितपुच्छि धावति।

ओर्। अत्र 'नस्तद्धिते' इत्यतः तद्धित इत्यनुवर्तते। तेन शंभ्वोरित्यादौ न। ओदिति वक्तव्ये इति। लाघवार्थमोरोदित् सूत्रे कार्ये गुणोक्तिः संज्ञापूर्वस्य विधेरनित्यत्वज्ञापनार्थम्।

---

१. प्रवृत्तं युद्धं D₂. २. प्रवृत्तं युद्धं दण्डादण्डि C. ३. Dropped D₂, D₆. ४. मुष्टीमुष्टि। मुष्टामुष्टि D₁, B₂; मुष्टामुष्टि। मुष्टीमुष्टि। D₃, D₄, D₆. ५. After it—तद्धिते C, B₁. ६. Dropped D₃. ७. Dropped D₃. ८. ओदिति D₃; ओरोदिति D₆. ९. °रानिमित्तो D₃. १०. द्विदण्डशालेति Dc₂. ११. Dropped Bc₃. १२. Dropped Bc₃.

तेन स्वायंभुवमिति सिध्येत् । अचि तु अस्यसि । सरूपेति[1] किम् । हलेन मुसलेन[2] ॥

**तेन सहेति तुल्ययोगे ॥२।२।२८॥**

सहेत्येतत् तृतीयान्तेन समस्यते तुल्ययोगे स बहुव्रीहिः ।

**वोपसर्जनस्य ॥६।३।८२॥**

उपसर्जनस्य सहस्य सः स्याद्वा ॥ पुत्रेण सह[3] सहपुत्रः[4] सपुत्रो वा आगतः ।

---

तेन स्वायंभुवमित्यत्र गुणाभावः सिद्ध इत्यर्थः । **अस्यसीति** । असिभिश्चासिभिश्च प्रहृत्येदं युद्धं प्रवृत्तम् । सहपूर्वपदं बहुव्रीहिमाह ।

**तेन** । व्यधिकरणयोः प्रथमार्थेपि यथा स्यादित्ययमारम्भः कबभावार्थश्च । उक्तः कबभावः तुल्ययोगः समानसंबन्धस्तं यदा सहशब्दो द्योतयति तदेत्यर्थः ।

**वोप** । **उपसर्जनस्य सहस्येति** । व्यधिकरणे षष्ठ्यौ । उपसर्जनसर्वावयवो बहुव्रीहिसमास उपसर्जनमिह विवक्षितम् । तदवयवस्य सहशब्दस्य स इत्ययमादेशो वा स्यादित्यर्थः । **सपुत्र** इति । सह पुत्रेण वर्तमान इति विग्रहः । अत्र देवदत्तस्य पुत्रस्य चागमने तुल्यः संबन्धः सहशब्देन द्योत्यते । उपसर्जनस्येत्यनेन बहुव्रीह्याश्रयणं किम् । सहयुध्वेति । 'सहे च' इति क्वनिप् । 'उपपदमतिङ्' इति तत्पुरुषः । अथेह कस्मान्न सह कृत्वा प्रियो यस्य सहकृत्वप्रियः प्रियसहकृत्व इति वा प्रियस्य पूर्वत्वम् । भवति ह्यत्रापि सहशब्दो बहुव्रीहेरवयवः ।

---

१. सरूपे किम् P, $D_1$, $B_2$, $D_3$. २. हलमुसलेन $D_1$, $D_2$, हलमुशलेन । हस्तमुशलेन । हलेन मुशलेन $B_2$; हलमुशलेन $Dc_1$, $Bc_3$; हलकमुसलेन $D_5$. ३. सह आगतः सहपुत्रो वा सपुत्रो वा $Dc_1$, $Bc_3$. ४. सपुत्रः सहपुत्रो वा $D_1$, $B_2$, $D_2$, $D_3$, $D_4$.

तुल्ययोगवचनं प्रायिकम् । सकर्मकः । सलोमकः ।[२]

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥ ५।४।११३॥**

स्वाङ्गार्थयोरनयोः षच् स्यात् बहुव्रीहौ ॥ दीर्घसक्थः । पुण्डरीकवदक्षिणी यस्यासौ पुण्डरीकाक्षः । जलजाक्षी । स्वाङ्गात् किम् । दीर्घसक्थि शकटम् । स्थूलाक्षिरिक्षुः ।

---

उच्यते । उत्तरपदाधिकारादिह बहुव्रीह्याश्रयणाच्च बहुव्रीहौ यदुत्तरपदं तत्परं यस्मात् सहशब्दात् तस्य सत्त्वेन भाव्यम् । न चेह बहुव्रीहौ यदुत्तरपदं तत् सहशब्दात् परं शब्दान्तरेण व्यवधानादिति न भवति सत्वम् । **तुल्ययोगवचनं प्रायिकमिति** । असर्वविषयमित्यर्थः । **सकर्मकः । सलोमक** इति । सह कर्मणा सह लोम्ना । न ह्यत्र तुल्ययोगो गम्यते किं तु विद्यमानता ।

**बहुव्रीहौ** । इह स्वाङ्गम् 'अद्रवम्—' इत्यादि परिभाषोक्तम् । सूत्रस्थितं सक्थ्यक्ष्णोरिति पञ्चम्यर्थे षष्ठीं वैचित्र्यप्रदर्शनार्थमनुवदन्नाह । **स्वाङ्गार्थयोरनयोरिति** । टचि प्रकृते षच्ग्रहणं स्वरार्थम् । दीर्घसक्थी स्त्रीत्यत्र 'सक्थं चाक्रान्तात्' इति विभाषोत्तरपदस्यान्तोदात्तत्वं विधीयते । तत्र यस्मिन् पक्षे नास्त्युदात्तत्वं तत्र ङीपि सत्युदात्तनिवृत्तिस्वरस्याभावात् अनुदात्तः श्रूयेत । ङीषि तु सति सर्वत्रोदात्तः सिद्धः स्यात् । बहुव्रीहौ किम् । परमसक्थि । कल्याणाक्षि । सक्थ्यक्ष्णोः किम् । सुबाहुः ।

---

१. Before this—तुल्ययोगे किम् । एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । अत्र सत्तामात्रं विवक्षितं न भारवहनम् $B_2$. २. सपक्षः after it in C, $B_2$ ; सलोमकः dropped and has तुल्ययोगे किम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । विद्यमानैरेवेत्यर्थः । $D_4$.

**अङ्गुलेर्दारुणि ॥५।४।११४॥**

अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्यात् दारुण्यर्थे ॥ पञ्च अङ्गुलयो यस्य[1] तत्[2] पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादि-विक्षेपणकाष्ठमुच्यते[3] । दारुणि किम् । पञ्चाङ्गुलिर्हस्तः ।

**द्वित्रिभ्यां ष मूर्ध्नः ॥५।४।११५॥**

आभ्यां परस्य[4] मूर्ध्नः षः[5] स्याद्बहुव्रीहौ ॥

---

अङ्गुलेः । दारुणि समासार्थे मुख्याभिरङ्गुलिभिः संबन्धो न घटते । तस्मात् सामर्थ्यादङ्गुलिसदृशेषु अङ्गुलिशब्दो वर्तमान इहाश्रीयत इत्यभिप्रेत्याह । **अङ्गुलिसदृशावयवमिति** । ननु च द्वे अङ्गुली प्रमाणमस्य दारुण इत्यत्र मुख्याभिरेवाङ्गुलिभिः संबन्धः । तत्र मुख्ये अङ्गुलिशब्दे संभवति गौणग्रहणमयुक्तमिति चेन्न । बहुव्रीहावित्यनुवृत्तेः । अयं च तद्धितार्थे तत्पुरुष इति 'तत्पुरुषस्याङ्गुलेः—' इत्यच् स्यात् ।

द्वित्रिभ्याम् । षचि प्रकृते षविधिर्विकल्पेनोदात्तत्वं यथा स्यादिति । तथा हि 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इत्यत्र विभाषानुवृत्तेरसमासान्तमूर्धशब्दनिर्देशाच्च यस्य असमासान्तो मूर्धशब्दो द्वित्रिभ्यां परस्तस्य बहुव्रीहेरन्तोदात्तत्वं पाक्षिकं विधीयते ।

---

१. यस्येति पञ्चा॰ D1. २. Dropped D5. ३. ॰पर्ण D3, D4. ४. Dropped C, Bc3. ५. षच् D3.

द्विमूर्ध[1]ः । त्रिमूर्धः[2] । [3]नेतुर्नक्षत्रेब्वक्तव्यः* ॥ मृगो नेता [4]यासां [5]रात्रीणां मृगनेत्रा रात्रयः । पुष्पनेत्राः ।

---

अन्यथा कृतसमासान्तमेव मूर्धशब्दं निर्दिशेत् । तत्र यदि षच् स्यात् तर्हि पाक्षिकमन्तोदात्तत्वं बाधित्वा चित्त्वसामर्थ्यान्नित्यमन्तोदात्तत्वं स्यात् । विभाषान्तोदात्तवचनस्य यत्र समासान्तो नास्ति सोवकाशः । षे तु सति वान्तोदात्तत्वं स्यात् । नन्वसमासान्तनिर्देशादसमासान्त एव मूर्धशब्द उत्तरपदे वान्तोदात्तत्वेन भाव्यं तत् कथं समासान्ते कृते तत् स्यात् । नैष दोषः । यतो हि काशिकायामुक्तम् । 'यदापि च समासान्तः क्रियते तदापि बहुव्रीहिः [6]कार्यित्वात्तदेकदेशित्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव' इति । [7]एतन्न्यासे व्याख्यातम् । 'इह बहुव्रीहिः कार्यी तदेकदेशित्वं च समासान्तस्य । एकदेशो- स्यास्तीत्येकदेशी । स बहुव्रीहिरेकदेशी यस्य समासान्तस्य स तदेकदेशी । तस्य भावस्तदेकदेशित्वम् । एतेन समासान्तस्य बहुव्रीह्यवयवत्वं दर्शयन्नकृतसमासान्तस्य शब्दान्तरत्वं निरस्यति । तदेवं यस्मादिह बहुव्रीहिः कार्यी तदेकदेशित्वं च समासान्तस्य तस्माद्यदापि समासान्तः क्रियते तदापि पक्षेन्तोदात्तत्वं भवत्येव' इति । समासान्तस्य च वैकल्पिकत्वमसमासान्तनिर्देश एव ज्ञापयति ।

नेतुरिति । नक्षत्रे यो नेतृशब्दो वर्तते तदन्ताद्बहुव्रीहेरप् वक्तव्य इत्यर्थः । मासात् प्रभृति प्रत्ययपूर्वपदात् ठच् विधेयः । पञ्चको मासोस्य पञ्चकमासिकः । कर्मकरः । दशकमासिकः । 'सोस्यांशवस्नभृतयः' इति भृत्यर्थे संख्यायाः कन् ।

---

१. द्वौ मूर्धानौ यस्यासौ द्विमूर्धः $D_5$. २. Dropped C. ३. नेतुर्नक्षत्रे । नक्षत्रे यो नेतृशब्दो वर्तते तदन्ताद्बहुव्रीहेरच् वक्तव्यः । $B_2$. ४. आसां $D_4$, $B_2$, $D_2$. ५. Dropped $D_1$, $B_2$, $D_2$. ६. कार्यत्वा° $Bc_3$, $Dc_3$, $Dc_4$. ७. एतदेव न्यासे $Dc_4$.

**अन्तर्बहिर्भ्यां च लोम्नः ॥५।४।११७॥**

आभ्यां लोम्नोप् स्यात् । अन्तर्लोमः । बहिर्लोमः ।

**अच् नासिकायाः संज्ञायां नसं चास्थूलात् ॥५।४।११८॥**

नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति संज्ञायां विषये न तु स्थूलपूर्वात् ॥

**पूर्वपदात् संज्ञायामगः ॥८।४।३॥**

पूर्वपदस्थान्निमित्तात् परस्य नस्य णः स्यात् संज्ञायां न

---

अन्तः। अन्तर्लोम इति । अन्तर्गतानि लोमान्यस्य ।

अच् । संज्ञायामिति समुदायोपाधिस्तेन यदि प्रकृतिप्रत्यय-समुदायः कस्यचित् संज्ञा स्यात् एवं प्रत्ययः स्यात् । अचश्चित्करणं बहुव्रीहिस्वरबाधनार्थम् ।

पूर्वपदात् । 'रषाभ्याम्' इति वर्तते । न च तयोः पूर्वपदत्वं समस्ति । रषान्तात् पूर्वपदादिति त्वर्थो व्याख्यानान्नेति । सामर्थ्यात् पूर्वपदस्थान्निमित्तादित्येषोऽर्थः स्यादित्याह । **पूर्वपदस्थान्निमित्तात्परस्येति** । केचिदेतन्नियमार्थमाहुः । पूर्वपदात् संज्ञायामेव णत्वं नान्यत्रेति । समासे हि समुदायादुत्पन्नया विभक्त्या समुदायस्य पदत्वात् समानपदे निमित्तनिमित्तिनोर्भावादस्ति 'रषाभ्याम्—' इति प्राप्तिः । समानपदत्वं हि तत्राश्रितं न भिन्नपदत्वं प्रतिषिद्धम् । स च नियमः पूर्वपदसंबन्धादुत्तरपदस्यैव णत्वं निवर्तयति । चर्मनासिक इति । न

---

१. This Sûtra with the Vritti omitted $D_5$, P, C, $B_1$,
२. After this $B_2$ has नाभेः संज्ञायाम् । नाभेरप् स्यात् । पद्मं नाभावस्य पद्मं नाभिरस्येति वा पद्मनाभः । ऊर्णनाभः।. ३. Dropped $D_5$. ४. Dropped $B_2$, $D_4$, $D_5$, $Dc_1$. ५. संख्यायामिति $Dc_4$.

तु गकारव्यवधाने ॥ द्रुरिव नासिका यस्य[1] द्रुणसः । खरणसः ।[2] अगः[3] किम् । ऋगयनम् । अस्थूलात् किम् । स्थूलनासिकः ।

खुरखराभ्यां नस्[4] * ॥ खुरणाः[5] । खरणाः । पक्षे अच् । खुरणसः । खरणसः[6] ॥

**उपसर्गाच्च ॥८।४।११९॥**

उपसर्गान्नासिकाया अच् स्यान्नसादेशश्च ॥ असंज्ञायामपि ॥

---

तद्धितस्थस्य पूर्वपदस्थस्य च मातृभोगीण करणप्रिय इति । अग्र इति योगविभागेन णत्वनिषेधो न नियमनिषेध इति । अन्ये तु पूर्वसूत्रे समानमेव यन्नित्यं पदं तत् समानपदमिति समानग्रहणादाश्रयन्ति । तेषामप्राप्तमेव णत्वमनेन विधीयते । समासे पूर्वपदमुत्तरपदमिति विभागादसमानपदत्वमप्यस्ति । **द्रुरिवेति** । 'सप्तम्युपमानपूर्वस्योत्तर-पदलोपश्च' इति समासः । **खरणस इति** । खर इव नासिकास्य । **अगः किमिति** । 'पूर्वपदात् संज्ञायामगः' इत्यस्यावयव आक्षिप्यते । **ऋगयनमिति** । ऋचोऽयनम् । **अस्थूलात् किमिति** । 'अञ्नासिकायाः संज्ञायाम्–' इत्यादिसूत्रावयवाक्षेपः ।

**खुरेत्यादि** । खुरखराभ्यां परस्य नासिकाशब्दस्य नसादेशो वक्तव्य इत्यर्थः । **पक्षेऽजिति** । खुरखराभ्यां परात् नासिकाशब्दात् पक्षे अजपीष्यत इत्यर्थः । **खुरणस इति** । खुर इव नासिकास्य ।

**उपसर्गात्** । उपसर्गग्रहणमिह प्राद्युपलक्षणम् । नासिकाशब्दे परतः क्रियायोगाभावादुपसर्गत्वाभावात् । असंज्ञार्थं वचनम् ।

---

१. यस्य स $D_1$, $B_1$, P, C. २. Dropped C. ३. Before it—संज्ञायां किम् । चर्मनासिकः $B_2$. ४. After it—वा वक्तव्यः । $D_4$. ५. खुराकारा नासिका यस्य स खुरणाः $B_2$ ; From this to अच् dropped $D_3$ ; खुरस्येव नासिका यस्यासौ $D_5$. ६. Dropped P, C.

## उपसर्गाद्बहुलम् ॥८।४।२८॥

उपसर्गस्थान्निमित्तात्[१] परस्य नसो नकारस्य[२] णः[३] स्याद्बहुलम् ॥ प्रणसः[४] । उन्नसः ॥

वेर्ग्रो वक्तव्यः[५]।* विगता नासिका यस्य[६] स[७] विग्रः।[८]

---

**उपसर्गात्** । **प्रणस** इति । प्रगता नासिकास्य । उन्नता नासिकास्य[९] । **वेर्ग्र** इति । विशब्दात्परस्य नासिकाशब्दस्य ग्रादेशः स्यादिति वक्तव्यम् । प्रत्ययस्त्वजेव । स्पष्टत्वात्त्यक्तं[१०] 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः' ॥५।४।१२०॥ एते बहुव्रीहयोऽजन्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवास्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽस्रयोऽस्य[१२] चतुरस्रः[१३] । एण्या इव पादावस्य एणीपदः । अजस्येव पादावस्य अजपदः । प्रोष्ठो गौस्तस्येव पादावस्य प्रोष्ठपदः ।

---

१. उपसर्गान्नि° C. २. नस्य C, Dc1, Bc3. ३. णकारः D5. ४. After it—प्रनसः B2. ५. After it—वेः परस्य नासिकाशब्दस्य ग्र इत्यादेशो वक्तव्यः B2. ६. अस्यासौ D1; अस्य D3, Bc3. ७. असौ D5, dropped D3, D4. ८. After it—वियः खुखौ च* । वियः परस्य नासिकाशब्दस्य खुखौ स्तः । विखुः । विखः B2; खुखौ च । विखुः । विखः D4. ९. After it—इति विग्रह इति Dc1, Bc3. १०. त्यक्तं सूत्रं व्याख्यायते Dc3, ११ चतुरश्रै° Dc2. १२. °श्रयो° Dc2. १३. चतुरश्रः Dc2.

**नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥५।४।१२१॥**

एभ्यो हलिसक्थ्योरच् स्यात्[1]वा । अहलः[2] । अहलिः । असक्थः । असक्थिः । एवं दुःसुभ्याम् । शक्तेरिति[3] पाठे[4] । अशक्तः । अशक्तिरित्यादि[5] ॥

**नित्यमसिच् प्रजामेधयोः ॥५।४।१२२॥**

[6]नञ्दुःसुभ्यः प्रजामेधयोर्नित्यमसिच् स्याद्बहुव्रीहौ ॥ अप्रजाः[7] । दुःप्रजाः[8] । सुप्रजाः[9] । अमेधाः । दुर्मेधाः[10] । सुमेधाः । नित्यग्रहणात् । मन्दमेधाः । अल्पमेधाः ।

---

**नञ्दुःसु** । ननु चादन्तोपि हलशब्दोस्ति । इदन्तोपि । तत्र यदादन्तेन समासस्तदा अहल इति स्यात् । यदा त्विदन्तेन तदा अहलिरित्यतो व्यर्थं हलिग्रहणम् । न व्यर्थम् । भिन्नार्थत्वादनयोः । महद्धलं हलिः । अत्र विषयेहल इति न स्यात् । अन्यच्च यद्यहल इत्यदन्तेन समासस्तर्हि पूर्वपदप्रकृतिभावेनाद्युदात्तत्वं स्यात् । अन्तोदात्तत्वं चेष्यते । 'शेषात्—' इति विभाषा कप् च प्रसज्येत । तस्माद्युक्तं हलिग्रहणम् । **शक्तेरिति पाठ इति** । उभयथा ह्याचार्येण शिष्याः प्रतिपादिता इत्युभयमपि प्रमाणम् ।

**नित्य** । ननु च पूर्वसूत्रादिहान्यतरस्यांग्रहणं न स्वर्यते इति व्यर्थं नित्यग्रहणमित्याशङ्क्य ग्रन्थाधिक्यादर्थाधिक्यं भवतीति कृत्वा नित्यग्रहणादन्यदपि सिध्यतीत्याह । **नित्यग्रहणादित्यादि** ।

---

१. वा स्यात् $B_2$, $D_3$. २. अविद्यमानो हलो यस्यासौ अविद्यमानं सक्थि यस्यासौ । अहलः &c. $D_5$. ३, शक्त्योरिति $D_1$, $D_2$, $B_1$, $B_2$. ४. पाठात् $D_4$ |. ५. इत्यादि dropped $D_3$. ६. नञ्दुःसुभ्यः परयोः $Dc_1$, $Bc_3$. ७ Before it—अल्पमेधाः $D_1$. ८. $D_1$ drops it, ९. $B_1$, $B_2$ drop it. १०. $B_1$, P, drop it.

**धर्मादनिच् केवलात्** ॥५।४।१२४॥

केवलात् पदाद्यो धर्मशब्दः केवलस्तदन्ताद्बहुव्रीहेरनिच् स्यात् ॥ कल्याणधर्मा । केवलात् किम् । परमस्वो धर्मो यस्य परमः स्वधर्मो यस्य वेति परमस्वधर्मः ।

**दक्षिणेर्मा लुब्धयोगे** ॥५।४।१२६॥

अयं निपात्यते । दक्षिणे ईर्ममस्य दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः । दक्षिणेर्ममन्यत् ।[४]

---

**धर्मात्** । **केवलादिति** । धर्मशब्दस्य पूर्वपदस्य च विशेषणमित्यभिप्रेत्याह । **केवलादित्यादि** । तथोक्तं **पाणिनीयमतदर्पणे** । 'केवलादिति कैवल्यं धर्मप्राक्पदयोर्मतम्' इति । चित्त्वं पूर्वपदप्रकृतिस्वरं बाधित्वान्तोदात्तो यथा स्यादिति । स्पष्टत्वात्त्यक्तं 'जम्भा सुहरिततृणसोमेभ्यः' ॥५।४।१२५॥ बहुव्रीहौ स्वादिभ्यः परं जम्भेति कृतसमासान्तमुत्तरपदं निपात्यते । जम्भशब्दोभ्यवहार्यवाची दन्तवाची वा । शोभनो जम्भोस्य सुजम्भा देवदत्तः । शोभनाहारः शोभनदन्तो वेत्यर्थः । एवं हरितजम्भा । तृणजम्भा सोमजम्भा । दन्तवचने तृणामिव जम्भोस्य सोम इव जम्भोस्येति विग्रहीतव्यम् । एभ्यः किम् । पतितजम्भः ।

**दक्षिणेर्मा** । लुब्धो व्याधः । ईर्मशब्दो व्रणवाची ।

---

१. पदात् परो यो $B_2$. २. $D_1$ drops it. ३. परमः स्वधर्मो यस्य परमस्वो धर्मो यस्य वेति C. $D_1$, $D_3$, $D_4$, $D_5$ (अस्य for यस्य in two places $D_3$; अस्य for the second यस्य $D_4$). ४. After it—ईर्मं व्रणः $D_5$. ५. After it—सूत्रं व्याख्यायते $Dc_3$.

**प्रसंभ्यां जानुनोर्ज्ञुः ॥५।४।१२९॥**

आभ्यां परस्य जानुशब्दस्य ज्ञुरादेशः स्याद्बहुव्रीहौ ॥ प्रगते जानुनी अस्य[1] प्रज्ञुः । संज्ञुः[2] ।

**ऊर्ध्वाद्विभाषा ॥५।४।१३०॥**

ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ।

ऊधसोनङ् ॥ कुण्डोध्नी । पुंसि तु । महोधाः गोगणः ।

**धनुषश्च ॥५।४।१३२॥**

धनुरन्ताद्बहुव्रीहेरनङादेशः स्यात् ॥ शार्ङ्गं धनुरस्य[3] शार्ङ्गधन्वा ।

**वा संज्ञायाम् ॥५।४।१३३॥**

[4]शतधन्वा । शतधनुः ।

---

**प्रसंभ्याम्** । जानुनोरिति । षष्ठीद्विवचननिर्देशः स्थानषष्ठात्वं निश्चेतुमन्यथा जानुन इत्येकवचनेन निर्देशे प्रत्ययाधिकारात् पञ्चमीयमिति भ्रमः स्यात् । अतो ज्ञुरादेश इत्यभिप्रेत्याह । ज्ञुरादेशः स्यादिति ।

**ऊर्ध्वात्** ।

**ऊधसः** । एतच्च स्त्रीप्रत्ययेषु व्याख्यातम् ।

**धनुषः** । शार्ङ्गधन्वेति । अनङि कृते यणादेशः ।

**वा संज्ञा** । पूर्वेण नित्यप्राप्ते[5] विकल्प्यते ।

---

१. यस्य $D_3$, $D_4$, $D_5$. २. P, $D_5$ drop it; संगते जानुनी अस्य संज्ञुः $D_2$. ३. धनुयस्य स C; धनुर्यस्य $B_2$, $D_4$. ४. $D_1$ drops शतधन्वा; धनुःशब्दान्ताद्बहुव्रीहेरनङादेशो वा स्यात् । शतधन्वा । शतधनुः । $B_2$; शतधनुः । शतधन्वा $D_2$. ५. °प्राप्तौ $Bc_3$, $Dc_4$, $Dc_3$.

**जायाया निङ् ॥५।४।१३४॥**

जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् ॥

**लोपो व्योर्वलि ॥६।१।६६॥**

धातोरधातोश्च वकारयकारयोर्लोपः स्याद्वलि परे । पुंवद्भावः ।

युवतिर्जाया यस्य[1] युवजानिः[2] । लक्ष्मीजानिः ॥

**गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥५।४।१३५॥**

एभ्यो गन्धस्येकारोन्तादेशः स्याद्बहुव्रीहौ ॥

---

**जाया** । ङित्त्वादादेशोयम् ।

**लोपः** । 'लिटि धातोः—' इत्यतो यद्धातोरिति प्रकृतं तद् 'धात्वादेः षः सः' इति पुनर्धातुग्रहणान्निवृत्तमित्यभिप्रेत्याह । **अधातो-श्चेति** । पूर्वं लोपनिर्देशो वेरपृक्तात् पूर्वो वलि लोप एव यथा स्यादिति । कण्डूयतेः क्विप् । कण्डूः । व्रश्चादीनामुपदेशसामर्थ्याद्वलि लोपो न । **पुंवद्भाव** इति । 'स्त्रियाः पुंवत्—' इति ।

**गन्धस्य** । षष्ठ्या निर्देशादिकार आदेशः । उद्गन्धिरित्यादि । उत्कृष्टो गन्धोस्य । पूतिर्गन्धोस्य । शोभनो गन्धोस्य । सुरभिर्गन्धोस्येति विग्रहाः । गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यम् । गन्धस्येत्वे विधेये तदेकान्तग्रहणं तस्य बहुव्रीह्यर्थस्यैकान्त एकदेशोवयवः स गृह्यते तेन तदेकान्तग्रहणं वाक्यं कार्यमित्यर्थः । अयं भावः ।

---

१. यस्य स $B_2$; यस्यासौ $D_3$, $B_1$. २. युवतिजानिः $B_2$, $D_5$.

उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । आगन्तुकस्यैक-[1] वचनान्तस्य तु[2] वा । शोभनो गन्धो यस्य[3] सुगन्ध आपणः सुगन्धिर्वा ॥

**अल्पाख्यायाम् ॥५।४।१३६॥**

अल्पत्वकथने गन्धस्य प्राग्वत् ॥ सूपोल्पोस्मिन्[4] सूप-गन्धिभोजनम्[5] । घृतगन्धि[6] । वेति ग्रन्थान्तरे । सूपगन्धम् । घृतगन्धम् । अल्पपर्यायो[7] गन्धशब्दः ।

---

गन्धो द्विविधः । गुणो द्रव्यं च । तत्र यो गुणः सोन्यपदार्थ-स्यैकान्तः स्यात् । यथा सुगन्धिश्चन्दन इत्यत्र चन्दनद्रव्यस्य गुणात्मकत्वाद् गन्धो गुणोवयवः । यस्तु द्रव्यं गन्धः पुष्पादिः[8] सोन्यपदार्थस्यैकान्तो न । यथा शोभना गन्धाः पुष्पादयो[9] यस्य स सुगन्ध आपणिकः । तत्र गुणे गन्धे इत्वं यथा स्यात् द्रव्ये मा भूदिति । गन्धस्येत्व इत्यादि वार्तिकमारब्धं तच्च गन्धस्येत्येकवचनान्तनिर्देशादेव सिद्धम् । द्रव्यवचनस्य बहुवचनान्तनियमादित्याचार्यैरुपेक्षितम् । अथवा स्नातानुलिप्ते कथं भवितव्यमित्यादिना भाष्यग्रन्थेन योर्थ उक्तस्तं[10] तात्पर्यतो निष्पन्नमाह । **आगन्तुकस्येति** । आगन्तुकस्या-स्वाभाविकस्यैकवचनान्तस्य गुणवाचिन इत्वं वेत्यर्थः । तथोक्त-**मिन्दुमत्याम्** । 'आगन्तोरेकवचनाद्वा' इति ।

**अल्प** । वेति **ग्रन्थान्तरे** इति । तथेन्दुमत्यां विकल्प उदाहृतः । सूपोल्पो यस्मिन् सूपगन्धि भोजनम् । सूपगन्धं वेति ।

---

१. आगन्तुकगन्धस्यैक° B1. २. Dropped D1, D3, B2. ३. अस्य for यस्य B1, D2, D5; यस्य स D4; गन्धो यस्य स सुगन्धः सुगन्धिर्वा आपणः C. ४. °ल्पो यस्मिन् D3. ५. After it—भोजने D4. ६. भोजनम् after it in C. ७. अत्र before it in C ८. कुष्टादिः Dc4, Bc3. ९. कुष्टादयो Dc4, Bc3. १०. उक्तस्तात्प° Bc1, Dc1.

**उपमानाच्च ॥५।४।१३७॥**

उपमानात् परस्य [1]गन्धशब्दस्य प्राग्वत् ॥ [2]पद्मस्येव गन्धो यस्य [3]स[4] पद्मगन्धिः । [5]मतान्तरे विकल्पः ।[6]

**पादस्य लोपोऽहस्त्यादिभ्यः ॥५।४।१३८॥**

[7]हस्त्यादिवर्जादुपमानात् परस्य पादस्यान्तलोपः स्याद्बहुव्रीहौ । [8]व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादेः किम् । [9]हस्तिपादः । [10]कुशूलपादः ।

---

उप । मतान्तरे विकल्प इति । तथोक्तं मुग्धबोधे वोपमानादिति ।

पादस्य । अयं च लोपः समासान्तः स्थानिद्वारेण च लोपस्य समासान्तता । ननु लोपस्य समासान्तत्वे किं प्रयोजनम् । उच्यते । यदि समासान्तो न स्यात्तदा 'आदेः परस्य' इति परस्यादेः स्यात् । समासान्तत्वे तु अन्तशब्दो नियतदेशावयववाचीत्य[11]न्तस्यैव स्यात् । हस्तिन । [12]कटोल । कडोलक । गण्डोल । गण्डोलक । महिला । दासी । गणिका । जाले । [13]कुशूल ॥

---

१. गन्धस्य $B_2$, $D_3$ C, $D_1$; P drops it. २. $D_1$ drops पद्मस्येव गन्धो यस्य स. ३. गन्धोस्य पद्म° $B_1$, $B_2$, $Bc_3$, $D_3$. ४. Dropped $D_4$, $D_2$. ५. पक्षान्तरे $D_5$. ६. $B_1$ has पद्मगन्धम् after it; $B_2$ पद्मगन्धः after it. ७. अहस्त्यादिभिः परस्य C. ८. C drops the Vigraha; व्याघ्रस्येव पादाविव पादावस्य $B_2$. ९. हस्तिनः पादाविव पादौ यस्य हस्तिपादः । $D_5$. १०. कुसुलपादः P, $D_5$; कूशूल° $D_3$. ११. °त्यन्त्यस्यैव $Bc_1$, $Dc_4$. १२. कडोल $Bc_3$, $Dc_3$, $Dc_4$. १३. कुसूला $Bc_1$, $Dc_3$: कुसूल $Dc_4$ कुशूली । जालम् $Bc_3$.

**कुम्भपदीषु च ॥५।४।१३९॥**

कु[1]म्भपद्यादिषु पादस्यो[2]न्तलोपो ङीप् च निपात्यते स्त्रियाम् । पादःपत् । कुं[3]म्भपदी । शतपदी । स्त्रियां किम् । कुम्भपादः ।

**संख्यासुपूर्वस्य ॥५।४।१४०॥**

सं[4]ख्यापूर्वस्य सुपूर्वस्य च पादस्यान्तलोपः स्यात् ॥ द्विपात् । सुपात् ॥

---

**कुम्भ** । कुम्भपदीप्रभृतयः कृतपादलोपाः समुदायाः पठ्यन्ते । तत्रैवं सूत्रं योज्यम् । पादस्य लोपः स्यात् कुम्भपद्यादिविषये । यथा कुम्भपद्यादयः सिध्यन्तीति[5] । समुदायपाठस्य च प्रयोजनं विषयनियमः । स्त्रियामेव ङीष्येवेत्ये[6]तच्चेतसि कृत्वाह । कुम्भपद्यादिष्विति । कुम्भपदी । एकपदी । शतपदी । सूँ[7]त्रपदी । शुचिपदी । शितिपदी । गोधापदी । द्विपदी । दासीपदी । सुपदी । निष्पदी । आर्द्रपदी । कुणिपदी । द्रो[8]णपदी । द्रुपदी । तृणपदी । सूकरपदी । अष्टापदी । स्तेनपदी । यद्वि[10]होपमानपूर्वं संख्यापूर्वं च पठ्यते तस्य लोपे सिद्धे ङीबर्थं वचनम् । 'पादोन्यतरस्याम्' इति विकल्पो न ।

**संख्या** । अनुपमानार्थं वचनम् ।

---

१. कुम्भपदीषु $B_1$. २. $D_1$, $Bc_3$ drop अन्त. ३. कुम्भपदीत्यादि $B_1$. ४. एतत्पूर्वस्य $B_2$. ५. इति dropped $Dc_2$. ६. एतत् dropped $Bc_1$. ७. सूतपदी $Dc_2$; सुतीपदी $Bc_1$, $Dc_1$, $Dc_4$, $Bc_3$. ८. Before it—सप्तपदी $Dc_1$; कूमपदी $Bc_1$, $Dc_4$. ९. Dropped $Dc_2$. १०. यद्येहो° $Dc_4$, $Bc_1$; यत्त्विह $Bc_3$.

**वयसि दन्तस्य दतृ ॥५।४।१०१॥**

संख्यासुपूर्वस्य दन्तस्य दतृआदेशः स्याद्वयसि द्योत्ये बहुव्रीहौ। ऋँ इत्[1]। द्विदन्[2]। द्विदन्तौ[3]। चतुर्दन्[4]। षष उत्वम्। इति उत्वम्[5]। ष्टुत्वम्। षोडन्[6]। सुदन्। सुदती। वयसि किम्। द्विदन्तः करी। सुदन्तो लाटः।

**अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥५।४।१४५॥**

एभ्यो दन्तस्य दतृ वा[7]॥ कुड्मलाग्रदन्। कुड्मलाग्रदन्तः। शुद्धदन्[8]। शुद्धदन्तः। चकारात्। मूषकदन्। मूषकदन्तः। अहिदन्। अहिदन्तः। इत्यादि।

---

**वयसि सुदन्निति**। 'उगिदचाम्—' इति नुम्। ऋकारस्योगित्कार्यार्थत्वात्। **षोडन्निति**। षट् दन्ता अस्य। **सुदतीति**। उगित्त्वात् ङीप्। स्पष्टत्वात्त्यक्तं सूत्रद्वयम्।[9] 'स्त्रियां संज्ञायाम्' ॥५।४।१४३॥ दन्तस्य दतृ स्यात् स्त्रियां संज्ञायां विषये। अयोदती। फालदती। संज्ञायां किम्। समदन्ती। 'विभाषा श्यावारोकाभ्याम्' ॥५।४।१४४॥ आभ्यां दन्तस्य दतृ वा बहुव्रीहौ। श्यावदन्। श्यावदन्तः। अरोकदन्। अरोकदन्तः। रोचनं रोको दीप्तिः। नास्ति रोकोऽस्यारोकः। संज्ञायामित्येव। श्यावदन्तः। अरोकदन्तः।

**अग्रान्त**। **कुड्मलाग्रदन्निति**। कुड्मलाग्रमिव दन्तौ यस्य। **चकारादिति**। अनुक्तसमुच्चयार्थादिति भावः। आदिना खरदन्। गर्दभदन्।

---

१. ऋत इत् $D_1$, $D_5$, $B_1$, $B_2$. २. Before it—एकदन् $B_1$, $D_4$. ३. Dropped $Bc_3$. ४. After it—चतुर्दन्तौ $Bc_3$. ५. Before it—दस्य डः $B_2$. ६. षड् दन्ता यस्य षोडन् P, C, $B_1$. ७. B, $D_4$ have स्यात् after it. ८. शुद्धदन्। शुद्धदन्तः dropped $D_3$. ९. After it—व्याख्यायते $Dc_3$. १०. Dropped $Bc_3$.

**ककुदस्यावस्थायां लोपः ॥५।४।१४६॥**

ककुदस्यान्तलोपः स्यादवस्थायां द्योत्यायाम् ॥ अजातककुत् ।[1] [2]पूर्णककुत् ॥[3]

**उद्विभ्यां काकुदस्य ॥५।४।१४८॥**

आभ्यां परस्य काकुदस्यान्त[4]लोपः स्यात् ॥ उत्काकुत् । विकाकुत् । काकुदं तालु ॥

---

ककुदस्य । कालाहारादिकृता वयःप्रभृतयो वस्तुधर्माः अवस्थेत्युच्यन्ते । अजातककुदिति । बालो वत्स उच्यते । पूर्णककुदिति । मध्यमवयाः । अवस्थायां किम् । श्वेतककुदः । स्पष्टत्वात् त्यक्तं व्याख्यायते । 'त्रिककुत् पर्वते' ॥५।४।१४७॥ निपातोयं गिरौ । त्रीणि ककुदाकाराणि शिखराणि यस्य स पर्वतविशेष उच्यते त्रिककुदिति ।

उद्विभ्याम् । समासान्तत्वात् 'आदेः परस्य' इति न[5] संचरति । स्पष्टत्वात् त्यक्तं[6] 'पूर्णाद्विभाषा' ॥५।४।१४९॥ पूर्णकाकुद् । पूर्णकाकुदः ।

---

१. After it—बाल इत्यर्थः । उत्पन्नककुत् । मध्य इत्यर्थः । पूर्णककुत् । वृद्ध इत्यथः । $D_4$; अजातं ककुद यस्य सोजात° $D_6$. २. पूर्णककुत् dropped $D_3$. ३. After it—अवस्थायां किम् । श्वेतककुदः । $D_6$. ४. अन्त dropped $B_1$, $D_1$, $D_3$. ५. नेह संभवति । $Dc_2$. ६. After it—सूत्रं व्याख्यायते $Dc_3$.

**सुहृद्दुर्हृदौ मित्रामित्रयोः ।५।४।१५०॥**

सुदुर्भ्यां[६] हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र । सुहृदयः । दुर्हृदयः ।

**उरःप्रभृतिभ्यः कप् ॥५।४।१५१॥**

एभ्यः कप् स्याद्बहुव्रीहौ ॥ प इत् । तद्धितत्वान्न ककारं[२] इत् । व्यूढोरस्कः । प्रियसर्पिष्कः ॥[३]

**इनः स्त्रियाम् ॥५।४।१५२॥**

इन्नन्तात्[४] कप् स्यात् [५]स्त्रियाम् ॥ बहुदण्डिका । बहुवाग्मिका[६] । 'नद्यृतश्च' इति कप् । 'केणः' इति ह्रस्वे प्राप्ते ।

---

सुहृत् । सुहृदित्यादि । शोभनं हृदयमस्य सुहृत् । दुष्टं हृदयमस्य दुर्हृत् । हृच्छब्देनैवैतत् सिद्धं तथापि सुहृदयो दुर्हृदय इति मित्रामित्रयोर्मा भूदिति वचनम् ।

उरः । व्यूढोरस्क इति । व्यूढमुरो यस्य । प्रियसर्पिष्क इति । 'इणः षः—' इति षः । उरस् । सर्पिस् । उपानह् । पुमान् । अनड्वान् । पयः । नौः । लक्ष्मीः । पुमान्प्रभृतीनामेकवचनान्तानां पाठो द्विवचनबहुवचनान्तेभ्यो मा भूदिति । तत्र 'शेषाद्विभाषा' इति वा कप् । दधि । मधु । शालि । अर्थान्नञः । नास्त्यर्थोऽस्यानर्थकः ।

इनः । स्त्रियां किम् । बहुदण्डी राजा । अत्र 'शेषाद्विभाषा' इति भवति ।

---

१. Before it—पूर्णाद्विभाषा ॥५।४।१४९॥ अस्मात् काकुदस्यान्तलोपो वा स्याद्बहुव्रीहौ । पूर्णं काकुदमस्य पूर्णकाकुदः । पूर्णकाकुत् । $B_2$, $D_4$; P, & C and $B_1$ follow $B_2$, $D_4$, but drop the Vṛitti. २. ककारलोपः $D_3$. ३. After this—उरःसर्पिर्दधिमधूपानद्भ्यः । $Dc_1$, $Bc_3$. ४. After it—बहुव्रीहेः $D_3$. ५. Before it—बहुव्रीहौ C. ६ After it—सभा $D_4$.

**न कपि ॥७।४।१४॥**

केपि[1] अणो ह्रस्वो न स्यात्[2] ॥ बहुलक्ष्मीकः ॥

**शेषाद्विभाषा ॥५।४।१५४॥**

प्रागनुक्तसमासान्ताद्बहुव्रीहेः[3] कब्वा[4] स्यात्[5] । बहुदण्डी[6] । बहुदण्डिकः ।

**आपोन्यतरस्याम् ॥७।४।१५॥**

कप्याबन्तस्य ह्रस्वो वा स्यात् ॥ बहुमालाकः । बहुमालकः। बहुमालः । अनाबन्तस्यापि ह्रस्वो वेति केचित् । सुसोमपाकः[7] । सुसोमपकः ॥

---

**शेषात्** । अत्र यदि कबापेक्षः शेषः स्यात् अनृचो व्याघ्रपात् सुगन्धिरित्यत्रापि स्यात् । न ह्यतः कप् विहित इति कबपेक्षया शेषे दोषं दृष्ट्वा समासान्तापेक्षया शेषे इति चेतसि कुर्वन्नाह । **प्रागनुक्तसमासान्तादिति** । समासान्तापेक्षया शेषे अनृक्कं साम बह्वृक्कं सूक्तमिति कथमिति चेदुच्यते । अध्येतर्येवा-प्रत्ययस्य विधानात् तत् सिध्यति । तथोक्तम् । अनृचबह्वृचा-वध्येतर्येवेति । शेषादिति किम् । यतो[8] ये प्रतिपदं समासान्ता बहुव्रीहेर्विधीयन्ते ते बाधकाः स्युः । एवं तर्हि शेषाधिकार-विहिते बहुव्रीहौ कप् स्यादिति शेषग्रहः। तेनोत्तरपूर्वेत्यादौ न। स्पष्टत्वात्[9] त्यक्तं 'न संज्ञायाम्' ॥५।४।१५५॥ पूर्वेण प्राप्तः कप् संज्ञायां निषिध्यते । विश्वे देवा अस्य विश्वदेवः[10] ।

**आपः** । **अनाबन्तस्यापीति** । तथा[11] च **मुग्धबोधे** उक्तम् । के वस्वो हेतु वेति ।

---

१. कापि परे C, B₂. २. Dropped C. ३. प्रागलुप्त° D₅. ४. कप् स्याद्वा P. ५. स्यात् dropped D₅, B₁. ६. बहुदण्डिकः । बहुदण्डी P, D₃. ७. सुसोमपकः । सुसोमपाकः । Bc₃. ८. प्रियपश्वातो ये Bc₁, Dc₄, Dc₃. ९. After it—सूत्रं व्याख्यायते । Dc₃. १०. विश्वेदेवः Bc₃. ११. तथोक्तं मुग्धबोधे Dc₂.

**ईयसश्च**[1] ॥५।४।१५६॥

ईयसन्ताद्बहुव्रीहेः कप्[2] न स्यात् ॥ बहवः श्रेयांसोस्य[3] बहुश्रेयान् । बह्व्यः श्रेयस्योस्य[4] बहुश्रेयसी पुरुषः ॥

**वन्दिते भ्रातुः** ॥५।४।१५७॥

भ्रात्रन्तान्न कप्[5] पूजायाम् ॥ शोभनो भ्रातास्य[6] सुभ्राता । अन्यत्र । मूर्खभ्रातृकः ।

---

**ईयसः** । कबत्रानुवर्तते । न 'शेषात्' इति । तेन सर्वा कपः प्राप्तिरनेन निषिध्यते । **बहुश्रेयानिति** । 'शेषाद्विभाषा' इति कप् प्राप्तः । **बहुश्रेयसी पुरुष** इति । 'नद्यृतश्च' इति कप् प्राप्तः । 'ईयसो बहुव्रीहेर्न' इति ह्रस्वनिषेधः[7] ।

**वन्दि** । इह वन्दितः स्तुतः पूजित उच्यते इत्यभिप्रेत्याह । **पूजायामिति** । 'नद्यृतश्च' इति प्राप्तः कप् निषिध्यते । स्पष्टत्वात् त्यक्तं सूत्रद्वयम्[8] । 'नाडीतन्त्र्योः स्वाङ्गे' ॥५।४।१५९॥ स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्ताद्बहुव्रीहेः कप् न । बह्व्यो नाड्यो यस्मिन् बहुनाडिर्देहः[9] । बहुतन्त्री ग्रीवा । धमनीवचनस्तन्त्रीशब्दः । स्वाङ्गे किम् । बहुनाडीकः स्तम्भः । बहुतन्त्रीका वीणा । 'निष्प्रवाणिश्च' ॥५।४।१६०॥ नदीलक्षणस्य कपो निषेधः । प्रकर्षेण ऊयते अस्यां प्रवाणी तन्तुवायशलाका । निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः । तुर्यादिभ्योचिरोपहृत इत्यर्थः । एवं बहुव्रीह्यधिकारेण विहितान् समासान्तान् परिसमाप्य 'बहुव्रीहौ' इति विधीयमानं प्राङ् निपातमाह ।

---

१. Before this Sûtra—न संज्ञायाम् ॥५।४।१५५॥ संज्ञायां बहुव्रीहेर्न कप् । विश्वेदेवा अस्य स विश्वदेवः $D_3$, $D_4$, $D_5$, $B_1$, $B_2$ (यस्य $D_5$; After विश्वदेवः $B_2$ has विश्वेदेवास्त्रयादेश). २. न कप् $D_5$. ३. श्रेयांसोस्येति C, $Bc_3$; श्रेयांसो यस्य $B_1$, $D_1$, $D_3$, $D_4$, $D_5$. ४. °स्येति C; यस्य for अस्य $D_1$. ५. P, $B_2$ have स्यात् after it. ६. भ्राता यस्य C. ७. °स्वनिषेधः । $Dc_3$. ८. °द्वयमाह । $Dc_3$. ९. °नाडी देहः । $Dc_4$, $Dc_3$.

सर्वनामसंख्ययोः प्राङ्निपातो बहुव्रीहौ वाच्यः[1]* ॥ सर्वश्वेतः । [2]द्विशु[3]क्लः ॥ मिथोनयोः समासे संख्या पूर्वं निपतेत् । द्व्य[4]न्यः ।

अल्पीयसी पूर्वम् ॥ द्वित्राः ।[5]

वा प्रियस्य पूर्वत्वम् ।* गुड[6]प्रियः । प्रियगुडः ॥

ग[7]ड्वादेः परा सप्तमी इष्टा[8]* ॥ गडुः[9] कण्ठेस्य गडुकण्ठः । प्रायिकं चैतत् । [10]वहेगडुः । अत्र सप्तम्या अलुक् ।[11]

---

सर्वनामसंख्ययोरित्यादि । यत्र गुणवचनेन समासः सोस्य विषयः । यत्र तु[12] द्रव्यवाचिनौ[13] तत्र सर्वनामसंख्ययोर्विशेषणत्वादेव प्राङ् निपातः सिद्धः । मिथोनयोरिति । सर्वनामसंख्ययोः परस्परं समासे इत्यर्थः ।

अल्पीयसी पूर्वमिति । संख्यायाः संख्यया समासे अल्पीयसी पूर्वं निपतेदिति वाच्यमित्यर्थः । द्वित्रा इति । द्वौ वा त्रयो वा ।

वा प्रियस्येति । प्रियशब्दस्येत्यर्थः । प्रायिकमिति ।

गड्वादेः परा सप्तमीष्टेति प्रायिकम् ।

---

१. वक्तव्यः P. २. त्रिशुक्लः $B_1$. ३. °शुष्कः $Bc_3$. ४. द्व्यन्यकः C. ५. After it—पञ्चषाः $Bc_3$, $D_4$. ६. प्रियगुडः । गुडप्रियः $D_3$. ७. गडुकादेः $D_5$. ८. वाच्या $D_2$, $D_3$, P, C. ९. गडुः कण्ठेस्य dropped $D_1$, $B_1$, P, C. १०. वक्रेगडुः P; स्कन्धेगडुः C; कण्ठेगडुः before it $D_4$; कण्ठेगडुः for it $D_5$. ११. After it—नेन्द्वादिभ्यः । इन्दुमौलिः । इन्दुशेखरः । एवं शङ्खदर्भपवित्रेभ्यः पाणिः । शङ्खपाणिः । इत्यादि P; $B_1$, $B_2$. ($B_2$ has after नेन्द्वादिभ्यः—इन्द्वादिभ्यः परस्याः सप्तम्याः पूर्वनिपातो न स्यात् ।). १२. Dropped $Dc_2$, $Dc_3$. १३. °वाचिना $Dc_4$.

**निष्ठा ॥२।२।३६॥**

निष्ठान्तं प्राक् प्रयोज्यं बहुव्रीहौ ॥ विशेषणस्य[1] विवक्षापूर्वत्वादेतद्वचनम्[2] ।[3] कृतकटः[4] ।

जातिकालसुखादिभ्यः परा निष्ठा वाच्या* ॥ सारङ्गजग्धी[5] । मांसजाता[6] । सुखजाता[7] ।

प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ[8] * ॥ अस्युद्यतः । दण्डपाणिः[9] । उद्यतासिरित्यादि प्रयोगवशात् ज्ञेयम्[10] ॥

---

निष्ठा । ननु च निष्ठान्तस्य विशेषणत्वादेव 'सप्तमी विशेषणे—' इति पूर्वनिपाते सिद्धे व्यर्थमेतद्वचनमित्याशङ्क्याह । विशेषणत्वस्येति । कृतकट इति । कृतः कटो येन ।

अत्र 'जातिकाल—' इति क्तान्तस्य परत्वं न । यत उक्तं कथं कृतकट इति प्राप्तस्य बाधा व्याख्येयेति । सारङ्गजग्धीति । जग्धः सारङ्गो यया । सारङ्गशब्दो जातिवाची । 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष् । सुखादिस्तद्धिते वक्ष्यते ।

प्रहरणार्थेभ्य इति । प्रहरणमर्थो येषां ते तथोक्ताः । अस्युद्यत इति । उद्यतोऽसिर्येन । उद्यतासिरित्यादीति । प्राप्तस्य बाधाव्याख्यानात्[11] ।

---

१. विशेषणत्वस्य $D_1$, $Dc_1$. २. पूर्वकत्वा° $D_4$, $Dc_1$. ३. $B_1$ has कृतम् after it. ४. कृतपटः । $D_5$. ५. जग्धः सारङ्गो यया सा $D_5$. ६. C has सहजाता before it. $B_2$ has सुक्तुजग्धी before it; $Dc_1$ has सक्तुजग्धा before it, सक्तुजग्धा । सारङ्गजग्धा । $Bc_3$. ७. Dropped $D_3$. ८. After it—भवत इति केचित् $B_2$. ९. खड्गपाणिः $B_2$. १०. विज्ञेयम् $D_3$. ११. बाधार्थः $Bc_1$.

**वाहिताग्न्यादिषु ॥२।२।३७॥**

एषु निष्ठा वा पूर्वं स्यात् ॥ [१]आहिताग्निः । अग्न्याहितः । [२]जातपुत्रः । पुत्रजातः । [३]इत्यादि । आकृतिगणोयम् ॥

**समस्यमानपदार्थो यत्रान्यपदार्थस्यैकदेशः [४]स्यात् स तद्गुणसंविज्ञानो बहुव्रीहिः ।**

---

**वाहिता** । 'निष्ठा' इति पूर्वनिपाते विकल्प उच्यते । जातदन्तः । जातश्मश्रुः । तैलपीतः । घृतपीतः । मद्यपीतः । ऊढभार्यः । गतार्थः । **आकृतिगणोयमिति** । आकृत्या गणः आकृतिगणः । तेन । गडुकण्ठप्रभृतय इहैव द्रष्टव्याः । मत्वर्थे बहुव्रीहिः । स च द्वेधा । मत्वर्थस्य संबन्धस्योभयविधत्वात् । तथा हि कश्चित् संयोगसमवायनिमित्तः । कश्चित् [५]स्वस्वामिसंबन्धादिनिमित्तः । तत्र पूर्वो बहुव्रीहिस्तद्गुणसंविज्ञान उच्यते । उत्तरस्त्वतद्गुणसंविज्ञानः । तस्यान्यपदार्थस्य गुणो [६]वर्तिपदार्थः सोपि [७]कार्ये संविज्ञायते यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञान इत्यभिप्रेत्याह ।

**समस्यमानेति** । समस्यमानानि यानि पदानि तेषामर्थो यत्र बहुव्रीहावन्यपदार्थस्यैकदेशोवयवः सन् कार्यी स्यात् स तद्गुणसंविज्ञानसंज्ञको बहुव्रीहिः स्यादित्यर्थः ।

---

१. Before it—आहिताग्निर्येन $B_2$. २. जातपुत्रः । इत्यादि P. ३. Dropped $D_6$. ४. Dropped $D_1$, $D_2$, $D_4$, $B_2$, ५. स्वस्वामिनिमित्तः $Bc_3$. ६. वृत्तिपदार्थः $Dc_2$, $Dc_1$, $Bc_3$. ७. कार्यी विज्ञा° $Bc_3$.

लम्बकर्णः[1] ।

इति बहुव्रीहिः[2] ॥

---

लम्बकर्ण इति । लम्बौ कर्णौ यस्येति । यत्र तु समस्यमानपदार्थोन्यपदार्थानवयवभूतः कार्यी न सोतद्गुणसंविज्ञानो बहुव्रीहिः । यथा चित्रा गावो यस्य स चित्रगुरित्यादि ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन्[3][4] प्रसादे विशदे[5] इह बहुव्रीहिसंज्ञः समासः ।

---

१. लम्बौ कर्णौ यस्य लम्बकर्णः $D_4$. २. इति बहुव्रीहिसमासः $D_4$. ३. Dropped $Bc_1$, $Dc_3$. ४. व्याख्यानेगात् प्रसादे $Bc_1$, $Dc_4$, $Dc_3$. ५. विशदमिह $Dc_4$.

# अथ द्वन्द्वसमासः

**चार्थे द्वन्द्वः ॥२।२।२९॥**

अनेकं सुबन्तं[1] चार्थे[2] समस्यते स द्वन्द्वसंज्ञः[3] ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरं गुरुं च भजस्वेति [4]प्रत्येकमेकक्रियासंबन्धः[5] समुच्चयः । बटो भिक्षामट गां चानयेति क्रमेण क्रियाद्वयसंबन्धोन्वाचयः । अन्योन्यापेक्षयैकक्रियासंबन्ध

---

अथ द्वन्द्वसमास उच्यते । स च द्वेधा । इतरेतरयोगार्थः समाहारार्थश्च । तमुभयं वक्तुमाह ।

चार्थे । तत्रेति । तत्र तेषु चार्थेषु मध्ये ईश्वरं गुरुं च भजस्वेति प्रकाराणां द्विप्रभृतीनामनेकेषां साधनानामनियतक्रमयौगपद्यानां तुल्यबलानां प्रत्येकमेकया भजस्वेत्यादिकया क्रियया संबन्धो यः स समुच्चयः । आत्मरूपभेदेन चीयमानता हि समुच्चयः । स च संबन्धेनैव भवतीति संबन्धः समुच्चय इत्युक्तम् । अनेकेषामनियतक्रमयौगपद्यानां तुल्यबलानामेकाक्रियां द्रव्यं गुणं वा प्रति आत्मरूपभेदेनानेकत्वं समुच्चय इति यावत् । यदा त्वेकस्य प्राधान्यात् तदनुरोधिनेतरदन्वाचीयते तदान्वाचय इत्यभिप्रेत्याह । बटो इत्यादि । अत्र भिक्षाटनं मुख्यं गवानयनं तु तदनुरोधिन[7] पश्चादन्वाचीयते अत एवोक्तं क्रमेणेति । इतरेतरयोगमाह । अन्योन्येत्यादि । परस्परापेक्षाणां साधनानामवयवभेदानुगत एकाक्रियासंबन्ध इतरेतरयोग इति यावत् । यथा हरिहरौ कुरुत इत्यत्रैककार्ये[8] उभावपि परस्पर-

---

१. सुबन्तं समर्थं $B_2$. २. वर्तमानम् after it in $B_1$, $Dc_1$, $Bc_3$. ३. स्यात् after it in P. ४. प्रत्येकक्रियाभिसंबन्धः P. ५. क्रियाभिसंबन्धः $D_5$, $D_1$, $B_2$. ६. °श्चेति $Dc_4$, $Dc_3$. ७. °रोधनं $Bc_3$. ८. एक dropped $Dc_1$, $Bc_1$.

इतरेतरयोगः । संहतिः समाहारः । तत्र समुच्चयान्वाचययोर्न समासोस्त्यसामर्थ्यात् ।

द्वन्द्वे घि ॥२।२।३२॥

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् ॥ हरिश्च हरश्च हरिहरौ[२] ।

---

सापेक्षौ तथा हि तदेकस्याप्यभावे[३] न क्रियते । अवयवप्रधानश्चायमिति द्वित्वात् द्विवचनम् । इतरेतरयोग एव तिरोहितावयवभेदः संहतिप्रधानः समाहार इत्याभिप्रेत्याह । संहतिरिति । यथा छत्रोपानहमिति । अत्रापि कस्यांचित् क्रियायां छत्रादेः परस्परसापेक्षत्वं संभवति । संहतिप्रधानत्वाच्चैकवचनम् । यदि समुच्चयान्वाचयावपि चार्थौ तयोरपि समासः स्यादत आह । तत्रेत्यादि । तत्र हेतुरसामर्थ्यादिति । समुच्चये तावत् परस्परानभिसंबन्धा एवेश्वरादयो भजनादिभिः संबध्यमानाः समुच्चीयन्ते इत्यसामर्थ्यमतो न समासः । अन्वाचयेप्येकं सापेक्षं नेतरत् । यथा पूर्वोक्तोदाहरणे । तत्र हि गवानयनस्य भिक्षाटनेपेक्षा न भिक्षाटनस्य गवानयने । विनापि तेन तदनुष्ठानात् । स हि यदि गां पश्यति तामानयति[४] । न चेद् भिक्षामेवाटतीति एकं व्यपेक्षारहितमित्यसामर्थ्यात् न स्यात् समासः ।

द्वन्द्वे । उपसर्जनमित्यन्वर्थत्वादप्रधानस्य[५] संज्ञेत्युक्तम् । द्वन्द्वे च सर्वपदानां प्राधान्यादुपसर्जनाभावादनियते प्राङ्निपाते प्राप्तेस्यारम्भः । हरिश्चेत्यादिविग्रहः । हरिहराविति समासः । यावतां पदानां द्वन्द्वस्तावतां यदि युगपदन्योन्यार्थाभिधानं स्यात् तर्हि द्वन्द्वः स्यात् । अत्र द्विवचनबहुवचनान्यथानुपपत्तिः प्रमाणमित्यादि महाभाष्याद्देज्ञेयम् । इतरेतरयोगस्य चार्थस्य समासेनैवोक्तत्वात् चो वृत्तौ न प्रयुज्यते ।

---

१. ध्यन्तं D4. २. इतरेतरयोगप्रधानत्वाद् द्विवचनम् । D4 ; After it—उक्तार्थानामप्रयोगः D5. ३. °भावो Dc3. ४. तदा तामा° Dc1. ५. °दप्राधान्यस्य Bc1, Dc3.

अनेकप्राप्तावेकस्य नियमोनियमः शेषे । हरिगुरुहराः । हरिहरगुरवः ।

## अजाद्यदन्तम् २।२।३३॥

अजादि यददन्तं तद् द्वन्द्वे पूर्वं स्यात् ॥ ईशकृष्णौ । बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः ।

घ्यन्ताजाद्यदन्तयोर्मिथः समासे घ्यन्तं परम् । इन्द्राग्नी । इन्द्रवायू । तपरः किम् । अश्वावृषौ[1] । वृषाश्वे वा ।

## अल्पाच्तरम्[2] ॥२।२।३४॥

अल्पाच्कं द्वन्द्वे पूर्वं स्यात् ॥ शिवकेशवौ । बहुष्वनियमः । शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः ।

---

यत्र द्वयोर्बहूनां वा घ्यन्तता स्यात् तदा कथं स्यादित्याशङ्कयाह । **अनेकप्राप्ताविति** । एष चार्थो जातिपदार्थाश्रयणाल्लब्धः । जातौ हि पदार्थे एकं लक्षणं सकृत् प्रवर्तते तेनैकस्यैव प्राङ् निपाते न जातिः संस्कृतेति शेषाणामानियमः । यथोदाहृतम् । एवमुत्तरत्राप्येकस्य नियमः शेषाणामनियमो ज्ञेयः । द्वन्द्वे किम् । देवदत्तगुरुः ।

**अजाद्य** । घ्यन्ताजाद्यन्तयोरिति । घ्यन्तस्याजाद्यन्तस्य च परस्परं समासविप्रतिषेधात् अजाद्यदन्तं पूर्वं स्यात् घ्यन्तं तु परं स्यादित्यर्थः । 'द्वन्द्वे घि' इत्यस्यावकाशः हरिहरौ । 'अजाद्यदन्तम्' इत्यस्यावकाशः ईशकृष्णौ । इन्द्राग्नीत्यत्रोभयं प्राप्नोति । 'अजाद्यदन्तम्' इत्येतत् स्याद्विप्रतिषेधेन ।

**अल्पाच्** । अत एव निपातनात् स्वार्थे तरप् । कुत्वाभावश्चुत्वाभावश्च । यदि प्रकर्षे तरप् स्यात्तदा द्वयोरेवाल्पाच्कस्य स्यात् । प्लक्षन्यग्रोधाविति । बहुषु न स्यात् । धवखदिरपलाशा इति । एतच्चेतसि कृत्वाह । **अल्पाच्कमिति** ।

---

१. अश्वावृक्षौ । वृक्षाश्वे वा : $D_5$. २. अत्यल्पाच्कं $B_1$, $D_1$; अल्पाच्तरं $B_2$, अत्यल्पाच् $D_5$.

ऋतुभानां [1]समाक्षराणामानुपूर्व्येण [2]पूर्वं निपातः*। हेमन्तशिशिरवसन्ताः । [3]अश्विनीभरणीकृत्तिकारोहिण्यः । [4]समाक्षराणा किम् । ग्रीष्मवसन्तौ ।

लघ्वक्षरं पूर्वम्* ॥ कुशकाशम् ।

अभ्यर्हितं च* ॥ [5]तापसपर्वतौ ।

वर्णानामानुपूर्व्येण* ॥ ब्राह्मणक्षत्रियविट्शूद्राः ।

भ्रातुर्ज्यायसः* ॥ युधिष्ठिरार्जुनौ ।

संख्याया अल्पीयस्याः* ॥ [6]द्वौ च दश च द्वादश ।

---

ऋतुभानामिति । ऋतवो वसन्तादयः भान्यश्विन्यादीनि । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं नक्षत्राणामुदयकृतम् ।

लघ्वक्षरमिति । लघून्यक्षराणि यस्मिन् पदे तत् पूर्वं स्यादित्यर्थः ।

वर्णानामिति । एषामानुपूर्व्यं जन्मकृतं श्रुतौ पठ्यते । मुखतो ब्राह्मणमसृजत् बाहुभ्यां राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्रमिति ।

---

१. समानाक्षराणा° $B_1$, $D_4$. २. पूर्वनिपातः $D_1$, $Bc_3$, $D_4$. ३. कृत्तिकारोहिण्यौ P, $D_5$, C; कृत्तिकारोहिण्यः $D_1$, $Dc_1$, $Bc_3$; भरणीकृत्तिकारोहिण्यः $B_2$, $D_2$, $D_4$. ४. समानाक्षराणां $D_1$, $D_4$. ५. नारदपर्वतौ $D_2$, $Dc_1$, $Bc_3$. ६. पूर्वनिपातः । द्वौ च $B_2$.

## राजदन्तादिषु परम् ॥२।२।३१॥

एषु पूर्वप्रयोगार्हं परं स्यात् ॥ दन्तानां राजा राजदन्तः । वनस्याग्रे अग्रेवणम् । निपातादलुक्[1] । शब्दार्थौ । धर्मार्थौ । कामार्थौ ॥

धर्मादिष्वनियम इष्यते* । अर्थशब्दौ[2] । अर्थधर्मौ[3] । अर्थकामौ । इत्यादि[4] । जायाया जंभावदंभावौ वा निपात्यौ[5] पत्यौ[6] । जम्पती । दम्पती । जायापती ।[7]

---

राज । राजदन्तः । अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । सिक्तसंमृष्टम् । मृष्टलुञ्चितम्[8] । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् । उलूखलमुसलम्[9] तण्डुलकिण्वम् । दृषदुपलम् । आरड्वायनिबान्धकम् । चित्ररथवाह्लीकम् । अवन्त्यश्मकम् । शूद्रार्यम् । स्नातकराजानौ । विष्वक्सेनार्जुनौ । अक्षिभ्रुवम् । दारगवम् । शब्दार्थौ । धर्मार्थौ । कामार्थौ । वैकारिमतम् । गाजव्याजम् । गोपालिधानपूलासम्[10] । पूलासकुरण्टकम् । स्थूलपूलासम् । उशीरबीजम् । शिञ्जास्थम् । चित्रास्वाती । जम्पती । दम्पती ।

---

१. निपातना° C, $D_4$. २. P drops अर्थशब्दौ. ३. अर्थकामौ । अर्थधर्मौ C. ४. C, $B_2$ have after it—गुणवृद्धी । वृद्धिगुणौ ।. ५. निपात्यौ वा C; च for वा $D_2$. ६. $D_1$, $D_2$ drop it; पतिशब्दे परे $B_2$. ७. After this $D_4$ has—

'अनुवादे चरणानाम्' ॥ २।४।३॥ चरणः शाखा । चरणानां द्वन्द्व एकवदनुवादे गम्यमाने । कठकालापम् ॥

'अध्वर्युक्रतुरनपुंसकम् ॥' २।४।४ ॥ अध्वर्युवेदे यस्य विधानं सोऽध्वर्युक्रतुः । तद् द्वन्द्व एकवत् स्यात् । अर्काश्वमेधम् । अध्वर्युक्रतुरिति किम् । इषुवज्रौ । अनपुंसकमिति किम् । राजसूयवाजपेये ॥

'अध्ययनतो विप्रकृष्टाख्यानाम् ॥' २।४।५॥ अध्ययनेनासन्नसंज्ञानां द्वन्द्व एकवत् । पदक्रमकम् । अध्ययनत इति किम् । पितापुत्रौ । आसन्नाख्यानामिति किम् । याज्ञिकवैयाकरणौ ॥

८. सृष्टलवितम् $Bc_1$, $Dc_4$; सृष्टवलितम् $Dc_1$, $Bc_3$. ९. °मुशलम् $Dc_4$, $Dc_3$. १०. °मूलासम् $Bc_1$, $Bc_3$, $Dc_1$.

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ।।२।४।२।।

एषां द्वन्द्व एकवत् स्यात् ।। प्राण्यङ्गे । दन्तोष्ठम्[1] । तूर्याङ्गे । मार्दङ्गिकपाणविकम् । सेनाङ्गे । रथिकाश्वारोहम् ।

---

भार्यापती । पुत्रपती । केशश्मश्रु[2] । शिरोबिन्दु[3] । सर्पिर्मधुनी । मधुसर्पिषी । आद्यन्तौ । अन्तादी । गुणवृद्धी । वृद्धिगुणौ । स्पष्टत्वात् त्यक्तं प्रसङ्गाद् व्याख्यायते । 'कडाराः कर्मधारये' ।।२।२।३८।। गुणशब्दानां विशेषणत्वात् प्राङ्निपाते प्राप्ते विकल्पार्थ आरम्भः । कडारजैमिनिः । जैमिनिकडारः । कडार । गडुल[4] । काण । खञ्ज । कुण्ठ । खोड । खलति । गौर । वृद्ध । भिक्षुक । पिङ्गल । तनु[5] । बधिर । मठर । कञ्ज । बर्बर । कर्मधारये किम् । कडारपुरुषको ग्रामः ।

द्वन्द्वः । अत्राङ्गशब्दस्य प्रत्येकं परिसमाप्त्या त्रीणि वाक्यानि संपद्यन्त इत्यभिप्रेत्याह । **प्राण्यङ्ग** इत्यादि । ततश्च व्यतिकरे न । मार्दङ्गिकाश्वारोहौ । दन्तोष्ठामिति । अत्र यदि प्राण्यङ्गानि प्राणिग्रहणेन गृह्यन्ते ततो 'जातिरप्राणिनाम्' इति निषेधे प्राप्ते वचनम् । अथ न गृह्यन्ते व्यतिकरनिरासार्थम् । **मार्दङ्गिकपाणविक**मित्यादि । अत्राप्राणित्वान्निषेधे प्राप्ते । हस्त्यश्वादिषु परत्वात् पशुद्वन्द्वविभाषैव । द्वन्द्वप्रकरणस्य प्रयोजनमाह ।

---

१. दन्तौष्ठम् B1. २. केशश्मश्रू Bc1, Dc3, Dc4. ३. °विन्नम् Bc1, Bc3. Dc1, Dc3. ४. गडल Bc1, Dc1. ५. After it Dc3 has—तनू । चञ्चु । चञ्चू । विग्रह । देह । वृक्ष । नाक । देव । भूत । पृथिवी । मनुष्य । स्त्री ।.

समाहारस्यैकत्वात्[1] समाहारे सिद्धेपि इदं[2] तु[4] प्रकरणं विषयविभागार्थम् । प्राण्यङ्गादीनां[5] समाहार एव द्वन्द्वः[6] ॥ दधिपयआदीनामितरेतरयोग[8] एव[7] । वृक्षमृगादीनामुभयथेत्ये-[9][10] तदर्थमिदं प्रकरणम् ॥

समाहारस्येत्यादिना । विषयविभागार्थमिदं प्रकरणमिति भावः । को विषयविभाग इत्यत आह । प्राण्यङ्गादीनामित्यादि । प्राण्यङ्गा-दीनां द्वन्द्व एकवचनः स्यादित्यस्यार्थः । प्राण्यङ्गादीनां समाहार एव द्वन्द्व इति । वचनव्यक्तिभेदात् । एवं ह्यत्र वचनं व्यज्यते । स एकवचनो द्वन्द्वः स प्राण्यङ्गादीनां स्यात् । एकवचनश्च द्वन्द्वः समाहारद्वन्द्वः । दधिपयआदीनामितरेतरयोग एवेति । दधिपयआदीनामेकवचनो द्वन्द्वः समाहारद्वन्द्वो[11] नेति वचनव्यक्तेः । वृक्षमृगादीनामिति । वृक्षा-दीनामेकवचनो द्वन्द्वो वेति वचनव्यक्तेः । स्पष्टत्वात्त्यक्तं सूत्रत्रयम्[12] । 'अनुवादे चरणानाम्' ॥२।४।३॥ चरणशब्दः शाखानिमित्तः पुरुषे वर्तते । चरणानां द्वन्द्व एकवत् स्यादनुवादे । प्रमाणान्तरावगतस्यार्थस्य शब्देनोक्तिरनुवादः । तिष्ठतेरिणश्च लुङन्तस्य प्रयोगे एतदेकत्वं ज्ञेयम् । प्रत्यष्ठात् कठकौथुमम् । उदगात् कठकलापम् । उदयप्रतिष्ठे प्रमाणान्तरावगते अनूद्येते । अनुवादे किम् । प्रथमत उपदेशो मा भूत् । उदगुः कठकलापाः । स्थेणोः किम् । अनन्दिषुः कठकलापाः । लुङि किम् । उद्यन्ति कठकलापाः । 'अध्वर्युक्रतुरनपुंसकम्' ॥२।४।४॥

१. °स्यैकवत्त्वादेकत्वे सिद्धेपि प्राण्यङ्गादीनां &c. $D_1$. २. एकत्वे सिद्धे इदं प्रकरणम् $D_4$ ; $Bc_3$ ; एकत्वे सिद्धेपि प्राण्य° $D_5$. ३. प्राण्यङ्गादीनां समा-हार एव for इदं तु...द्वन्द्वः । P. ४. Dropped $D_4$, $Bc_3$. ५. प्राण्यङ्गानां C. ६. समाहारद्वन्द्व एव $Dc_1$. ७. P drops from दधि to एव. ८. °द्वन्द्वयोग एव $Dc_1$. ९. After it—द्वन्द्वः C. १०. °मुभयं नियम्यत एतदर्थं° $B_1$; °मुभयथैव तदर्थमिदं $B_2$. ११. समाहारो द्वन्द्वो $Bc_2$. १२. After it—प्रसङ्गाद्व्याख्यायते । $Dc_3$.

**जातिरप्राणिनाम् ॥२।४।६॥**

प्राणिवर्जजातिवाचिनां द्वन्द्व एकवत्[1]। धानाशष्कुलि[2]। प्राणिनां तु। विट्शूद्राः[3]।

---

अत्राध्वर्युशब्देन यजुर्वेद उच्यते नाध्वर्युः। तथोक्तं पाणिनीयमतदर्पणे।

'क्रतौ कर्तृत्वमध्वर्योर्ऋत्विग्भिरपरैः समम्।
तेनासाधारणं केन स स्यात् क्रतुविशेषणम् ॥१॥
अनध्वर्योरथर्वोक्तक्रतोरथ निवृत्तये।
अथर्वप्रतिषेधः स्यादध्वर्युग्रहणाल्लघुः ॥२॥
तस्मादध्वर्युशब्देनाध्वर्युवेदोत्र लक्ष्यते।
यजुःसंज्ञस्तद्विहितस्ततोध्वर्युक्रतुः स्मृतः' ॥३॥ इति।

यजुर्वेदोक्तक्रतुवाचिनामनपुंसकानां द्वन्द्व एकवत् स्यात्। अर्काश्वमेधम्। साह्नातिरात्रम्। अध्वर्युक्रतुः किम्। इषुवज्रौ। अनपुंसकं किम्। राजसूयवाजपेये। कथं दर्शपूर्णमासौ। क्रतुशब्दस्य सोमयागेषु रूढेः। 'अध्ययनतोविप्रकृष्टाख्यानाम्' ॥२।४।५॥ अध्ययनेन निमित्तेन येषां प्रत्यासन्ना संज्ञा तेषां द्वन्द्व एकवत् स्यात्। पदक्रमकम्। यस्मात् पदानां क्रमस्य च यः पाठः स नातिभिन्नः। ग्रन्थोपि सदृश एवेति प्रत्यासन्नः। अथवा पदान्यधीत्य क्रमोध्येतव्य इति प्रत्यासत्तिः। अध्ययनत इति किम्। पितापुत्रौ। अविप्रकृष्टाख्यानामिति किम्। याज्ञिकवैयाकरणौ। न हि यज्ञाध्ययनेन व्याकरणाध्ययनेन वा द्वयोः क्रियाप्रत्यासत्तिः। नापि ग्रन्थप्रत्यासत्तिः।

जातिः। अत्र गौणवृत्त्या जातिर्द्वन्द्व इति समानाधिकरणनिर्देशः। जातिवाच्यवयवो हि द्वन्द्वो जातिरिति चेतसि कृत्वाह। प्राणिवर्जजातिवाचिनामिति[4]।

---

१. एकवत् स्यात् B₂, D₅. २. धान्य° D₁. ३. विट्शूद्रौ। नान्वि[?] व्यक्त न्यान्येन B₂. ४. °वचो Dc₁, Dc₃.

द्रव्यजातीना[1]मेवैकवद्भावः । नेह । रूपरसौ । गमे[2]ना-कुञ्चने । द्रव्या[3]विवक्षायां न । बदरामलके स्तः[4] ।

**विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥२।४।७॥**

ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत्[5] ॥ गङ्गाशोणम् । कुरुकुरुक्षेत्रम्[6] । भिन्नलिङ्गः किम् । गङ्गायमुने । ग्रामे तु । जाँम्बवशालूकिन्यौ[7] ॥

---

द्रव्यजातीनामिति । अप्राणिनामिति पर्युदासान्नञिवयुक्तन्यायेन द्रव्यप्राणिसदृशानां द्रव्यजातीनामे[8]वैकवद्भाव इति भावः । जातिरिति किम् । नन्दकपाञ्चजन्यौ । द्रव्यविवक्षायां नेति । यदा क्वचिद् देशादौ नियतानां द्रव्यविशेषाणां विवक्षा तदा जातिशब्दत्वेप्येकवद्भावो न भवति । जातिशब्दानां प्राधान्यात् । जातिपरत्वे एवैकवत्त्व-विधेरिति भावः ।

**विशिष्ट** । अत्र विशिष्टशब्दो भिन्नवचनः । नद्यर्थावयवो द्वन्द्वो नदीदेशार्थावयवो द्वन्द्वो देश इत्युक्त इत्येतत् सर्वं चेतसि कृत्वाह । **ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानामिति** । नदीदेशः किम् । कुक्कुटमयूर्यौ । नदीग्रहणात् देशोऽत्र जनपदो गृह्यते । तेन पर्वता न गृह्यन्ते । विन्ध्यगन्धमादने । यदि ग्रामनिषेधः कथं मथुरापाटलि-पुत्रमिति । नगरत्वात् । यदयमाचार्यः 'प्राचां ग्रामनगराणामिति' ग्रामनगरे भेदेनोपादत्ते तज् ज्ञापयति ग्रामग्रहणे नगरं न गृह्यत इति । तर्हीह कस्मान्न । सौर्यं नाम नगरं केतवता नाम ग्रामः सौर्यकेतवते । अग्रामा इति प्रसज्यप्रतिषेधात् यत्र ग्रामगन्धोऽप्यस्ति तत्र नैकत्वमिति ।

---

१. $B_1$, $Dc_1$, $Bc_3$ drop एव. २. गमनकुञ्चने P. After it—स्तः । $D_3$. ३. द्रव्यमात्रविवक्षायां C. नियतद्रव्याविवक्षायां न $B_2$; द्रव्यत्वाविव° $D_4$. ४. $B_1$ drops स्तः. ५. C, $D_5$ have स्यात् after it. ६. $B_1$ has after नदीदेश इति किम् । कुक्कुटमयूर्यौ. ७. जाम्बविकशालूकिन्यौ P; जाम्बवशालकिन्यौ $D_1$; जाम्बुवशालूकिन्यौ $D_4$. ८. एव dropped $Bc_3$. ९. जाति dropped $Bc_3$.

क्षुद्रजन्तवः ॥२।४।८॥

क्षुद्रजन्तूनां द्वन्द्व एकवत् स्यात्[1]* ॥ यूकालिक्षम्[2] । आनकुलात्[3] क्षुद्रजन्तवः[4] ।

येषां च विरोधः शाश्वतिकः ॥२।४।९॥

नित्यविरोधिनां[5] द्वन्द्व एकवत्[6] ॥ अहिनकुलम् । अश्वमहिषम् । काकोलूकम् ॥ चकारात् पशुशकुनिद्वन्द्व एकवत्[7] ॥

---

क्षुद्र ।

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः ।
शतं वा प्रसृतौ येषां केचिदानकुलादपि ॥

इत्येतेषु स्मृत्युक्तेषु पक्षेषु सर्वानुग्रहकारकत्वादन्त्य एव पक्षः श्रेयानिति मन्यमानेन भाष्यकारेण सर्वेषां पक्षाणामन्ते उक्त्वा-द्वृत्तिकृता च साक्षादानकुलादितीयमेव स्मृतिः प्रमाणमितरासां तद्विरोधादित्युक्तत्वादानकुलाद्ये प्राणिनस्त एव क्षुद्रजन्तव इत्युच्यन्त इति चेतसि कृत्वाह । आनकुलादिति ।

येषाम्[8] । जन्तूनां प्रकृतत्वात्तद्विरोध एवात्र गृह्यते । तेन अग्निजले इत्यत्र न । चकारादीति । एकवद्भाव इति शेषः । ततश्चायमर्थः । चकारादवधारणार्थत्वात् पशुशकुनिद्वन्द्वे एकवद्भावो न विभाषेति । तथोक्तं महाभाष्ये । किमर्थश्चकारः । एवकारार्थः । येषां विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्यात् । यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत् प्राप्नोति । पशुशकुनिद्वन्द्वे विरोधिनां पूर्व-विप्रतिषिद्धमिति वक्ष्यति । स पूर्वविप्रतिषेधो न पठितव्यो भवतीति[9] ।

---

१. $B_1$ $D_1$, $B_2$ drop स्यात्. २. After it—दंशमशकम् $D_2$, $B_1$, $B_2$. ३. °लिख्यम् । $Bc_3$. ४. आनकुलान्तं $D_1$, $D_2$, P, C, $B_1$, $B_2$. ५. °विरोधवाचिनां $D_1$, $D_3$, $B_2$, $Bc_3$. ६. After it—स्यात् $D_5$, ७. After it—स्यात् $D_5$; नेह । रामरावणौ $B_1$, $D_4$; एव $D_1$; एकवद्भाव एव । नेह । रामरावणौ । $B_2$. ८. येषां च $Dc_1$. ९. पूर्वं $Bc_3$.

**शूद्राणामनिरवसितानाम् ॥२।४।१०॥**

[1]अबहिष्कृतानां शूद्राणां द्वन्द्व एकवत्[2] ॥ रजकतन्तुवायम् ॥ [3]बहिष्कृतानां तु । [4]चाण्डालमृतपाः ॥

**गवाश्वप्रभृतीनि च ॥२।४।११॥**

यथोच्चारितान्येतानि कृतैकत्वानि साधूनि ॥ [5]गवाश्वम् ॥ [6]दासीदासम् । पुत्रपौत्रम् । मूत्रपूरिषम् । स्त्रीकुमारम् । [7]इत्यादि ।

---

**शूद्राणाम्** । शूद्रशब्दोत्र त्रैवर्णिकव्यतिरिक्तजातिमात्रवचनो न वृषलपर्यायः । यैर्भुक्ते पात्रं भस्मना शुध्यते पात्रमि' त्यादिस्मृत्युक्तेन संस्कारेण न शुध्यति ते निरवसिता बहिःकृताः । यैर्भुक्ते पात्रं संस्कारेण शुध्यति ते अनिरवसिता अबहिःकृता इत्यर्थः ।

**गवाश्व** । गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । कुब्जवामनम् । कुब्जकिरातम् । पुत्रपौत्रम् । श्वचण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । शाटीप्रच्छिकम्[8] । उष्ट्रखरम् । उष्ट्रशशम्[9] । मूत्रशकृत् । मूत्रपुरीषम् । शकृन्मेदम् । मांसशोणितम् । दर्भशरम् । दर्भपूतीकम्[10] । अर्जुनपुरुषम् । [11]तृणोलपम् । दासीदासम् । कुटीकुटम् । भागवतीभागवतम् । गवाश्वादिषु यथोच्चरितत्वे साधुत्वात् रूपान्तरे नायं विधिः । गोश्वौ । गोश्वम् । पशुद्वन्द्वविभाषैव ।

---

१. अबहिःकृतानां P, C, $B_1$, $Bc_3$; अबहिःप्रतिष्ठितानां $D_4$. २. After it—स्यात् $D_5$. ३. बहिःकृतानां P, $B_2$, $D_4$, $Bc_3$. ४. चण्डाल° $B_1$, $D_3$. ५. दासीदासम् । गवाश्वम् । इत्यादि C ; गवाश्वम् । दासीदासमित्यादि । $Dc_1$ ; गवाश्वमित्यादि $D_5$. ६. दासीदासम् । इत्यादि $D_4$, $D_3$, $D_1$, $Bc_3$. ७. इत्यादयः $B_1$. ८, प्रच्छदम् $Dc_2$. ९. After it—मूत्रशशम् $Bc_3$. १०. °पूतिकम् $Dc_2$. ११. तृणोलुपम् $Dc_1$.

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥२।४।१२॥**

एषां द्वन्द्व एकवत् स्याद्वा[1] ॥ वृक्षादौ विशेषाणामेव ग्रहणम् । चूताशोकम्[2] । चूताशोकाः[3] । रुरुपृषतम्[4] । कुशकाशम् । व्रीहियवम् । दधिघृतम् । गोमहिषम् । शुकबकम्[5] । अश्ववडवम् । पूर्वापरम् । अधरोत्तरम् । पक्षे । दधिघृते । गोमहिषौ । इत्यादि[6] ।

---

**विभाषा** । ये त्वत्रा[7]प्राणिनस्तेषां जातिरप्राणिनामित्ये प्राप्ते अन्येषामप्राप्ते वचनम् । वृक्षादाविति । अत्र वृक्षादिभिः प्रत्येकं द्वन्द्वो विशेष्यते । तेनैषा विभाषा तुल्यजातीयेष्वेवावतिष्ठते । तत्रापि न सरूपेषु । तेषामेकशेषात् द्वन्द्वाभावात् । विरूपेष्वपि न पर्यायेषु तेषां द्वन्द्वाभावात् । तदभावस्तु प्रयोगाभावात् । प्रयोगाभावस्तु चार्थाभावात् । चार्थाभावस्त्वर्थभेदाभावात् । भिन्नाधिष्ठानो हि चार्थस्तस्माद्विरूपेष्वेव वृक्षादिविशेषवाचिषु अस्या विभाषाया अवस्थानमिति विशेषा एव गृह्यन्ते न स्वरूपं पर्याया[8] वेति भावः । पशुग्रहणेनैव मृगशकुनिग्रहणे सिद्धेपि पुनर्मृगशकुनिग्रहणं परस्परमेषां पश्वन्तरेण च द्वन्द्वैकत्वं मा भूदिति । पशुग्रहणेनैव सिद्धे अश्ववडवग्रहणं योन्यस्तयोः पर्यायस्तत्र मा भूदिति । हयवडव इति[9] ।

---

१. एकवद्वा B, Dc$_1$, Bc$_3$; एकवद्वा स्यात् B$_2$. २. B$_1$ drops it. ३. चूताशोकौ B$_2$. ४. After it—रुरुपृषताः D$_4$, D$_5$. ५. B$_1$ has शुकबकाः after it. ६. Dropped Bc$_3$, D$_5$. ७. अत्र dropped Bc$_3$. ८. पर्याया एवे° Bc$_3$. ९. वेडवे इति Bc$_1$; वडवेति Dc$_2$.

फलसेनाङ्ग[1]वनस्पतिमृगशकु[2]निक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवत्[3] ॥ बदराणि च आमलकानि च बदरामलकम् । द्विप्रकृतौ तु । बदरामलके । रथिकाश्वारोहौ ।[4] इत्यादि ।

**विप्रतिषिद्धं चानधिकरणवाचि ॥२।४।१३॥**

अद्रव्यवाचिनां [5]विप्रतिषिद्धार्थानां द्वन्द्व एकवत् स्याद्वा[6] । शीतोष्णम् । शीतोष्णे[7] । विरुद्धं किम् । कामक्रोधौ । द्रव्ये तु । शीतोष्णे उदके ।

---

फलेत्यादि । वक्तव्यमिति शेषः । बहुप्रकृतिरिति । बह्वर्था बहुवचनान्ता वा प्रकृतिर्यस्य स बहुप्रकृतिः । बहुवचनान्तानामेव फलादीनां द्वन्द्व एकवत् स्यादित्यर्थः ।

विप्रति । इहाधिकरणं द्रव्यं विवक्षितं तथा चकारो[10] विभाषानुकर्षणार्थ इत्यभिप्रेत्याह । अद्रव्यवाचिनामित्यादि[11] । कामक्रोधाविति । क्रुद्धोपि काममाचरतीति नानयोर्विरोधः ।

---

१. $D_1$, $Dc_1$, $Bc_3$, $D_3$ drop अङ्ग. २. शकुन्त $D_1$. ३ एकवत् स्यात् $B_2$, $D_3$, $D_5$. ४. After it—प्लक्षन्यग्रोधौ । रुरुपृषतौ । हंसचक्रवाकौ । यूकालिक्षे । व्रीहियवौ । कुशकाशावित्यादि $B_2$. ५. विप्रतिषेधार्थानां $D_1$. ६. $B_1$ drops it—वा $B_2$ ; स्यात् dropped $Bc_3$, $D_3$, $D_4$. ७. After it—सुखदुःखम् । सुखदुःखे । जीवितमरणे । विभाषानूकर्षणार्थश्चकारः । $B_2$. ८. विप्रतिषिद्धं $D_1$. ९. यथा $Dc_1$; $Dc_2$ drops it. १०. चकारोपि $Dc_4$. ११. °मिति । $Bc_3$.

**न दधिपयआदीनि ॥२।४।१४॥**

एतानि नैकवत् स्युः । दधिपयसी । इध्माबर्हिषी । निपातादीर्घः[1] । ऋक्सामे । वाङ्मनसे[3] । इत्यादि[4] ।

**अधिकरणैतावत्त्वे च ॥२।४।१५॥**

द्रव्यपरिमाणावगमे नैकवद्भावः ॥ दश दन्तोष्ठाः ।

---

न दधि । यथायथमेकवद्भावे प्राप्ते निषेध आरभ्यते । दधिपयसी । सर्पिर्मधुनी । मधुसर्पिषी । ब्रह्मप्रजापती । शिववैश्रवणौ । स्कन्दविशाखौ । परिव्राजककौशिकौ । शुक्लकृष्णौ[5] प्रवर्ग्योपसदौ । याज्यानुवाक्ये । इध्माबर्हिषी । दीक्षातपसी । श्रद्धातपसी । अध्ययनतपसी । उलूखलमुसले[6] । आद्यवसाने । श्रद्धामेधे । ऋक्सामे । वाङ्मनसे । अन्येपि प्रयोगवशात्[7] ज्ञेयाः ।

अधि । अधिकरणवर्त्तिपदार्थः स हि समासार्थस्याधार इति तस्यैतावत्त्वे गम्ये इत्युक्ते द्रव्यमेवाधिकरणमित्युक्तं स्यात् तस्यैव परिमाणवत्त्वात् इत्यभिप्रेत्याह । द्रव्येत्यादि । दशेत्यादि । 'द्वन्द्वश्च—' इत्येकवत्त्वं प्राप्तम् । स्पष्टत्वात् त्यक्तम् । 'विभाषा समीपे' ॥२।४।१६॥ अधिकरणैतावत्त्वस्य समीपे एकत्वं वा स्यात् । उपदशं दन्तोष्ठम् । इहैकार्थस्य द्वन्द्वस्यैकार्थ एवाव्ययीभावोनुप्रयुज्यते । उपदशा दन्तोष्ठाः । इह बह्वर्थस्य द्वन्द्वस्य बह्वर्थो बहुव्रीहिरनुप्रयुज्यते । अत्राधिकरणैतावत्त्वं दशसंख्या तत्समीपं

---

१. निपातनाद्दीर्घः । D3. २. °द्दीर्घत्वम् C. ३. After it—मधुसर्पिषी । सर्पिमधुनी । श्रद्धामेधे । शुक्लकृष्णे । दीक्षावेदसी । अध्ययनतपसी । आद्यवसाने । श्रद्धातपसी । याज्यानुवाक्ये । अपवर्गोपसादौ । उलूखलमूशले । हरिवासवौ । ब्रह्मप्रजापती । शिववैश्रवणौ । स्कन्दविशाखौ । प्रव्रज्याकौशिकौ । पीतकृष्णे । पीतनीले । सोमरुद्रौ । वानरपर्वतौ । सूर्याचन्द्रमसौ । मित्रावरुणौ । रामलक्ष्मणौ । नरनारायणौ । भीमार्जुनौ । पितापुत्रौ । मातापितरौ । कम्बलाश्वतरौ । अग्नीषोमौ । इत्यादि B2, D2, (D2 has दीक्षातपसी). ४. Dropped D4. ५. °कृष्णे Bc1, Dc4; पीतकृष्णे । पीतनीले । Dc3. ६. °मुशले Dc4. ७. प्रयोगात् Dc3, Dc2, Bc1.

आनङ् ऋतो द्वन्द्वे ॥ ६।३।२५॥

विद्यायोनिसंबन्धवाचिनामृदन्तानां द्वन्द्वे पूर्वपदस्यानङ् स्यात् ॥ होतापोतारौ । मातापितरौ । पुत्र इत्यनुवृत्तेः पितापुत्रौ ॥ मातापुत्रौ ।

---

नवैकादश वा । प्रसङ्गादन्यत् त्यक्तं व्याख्यायते । 'तिष्य-पुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।' १।२।६३॥ एषां नक्षत्रद्वन्द्वे बह्वर्थे नित्यं द्वित्वं स्यात् । तिष्यपुनर्वसू । एषां किम् । राधानुराधाः । नक्षत्रे किम् । तिष्यपुनर्वसवो माणवकाः । नक्षत्रमहात् पर्यायाणामपि । पुष्यपुनर्वसू । द्वन्द्वे किम् । यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसवः । बहुवचनस्य किम् । तिष्यपुनर्वस्विदम् । अत एव ज्ञापकात् सर्वद्वन्द्वैकवद्भावो वा ।

आनङ् । होतापोताराविति । विद्यासंबन्धवाचिनामृदन्तानां द्वन्द्वस्योदाहृतिः । मातापितराविति योनिसंबन्धवाचिनाम् । पुत्र इत्यनुवृत्तेरिति । 'पुत्रोऽन्यतरस्याम्' इत्यतो मण्डूकप्लुतिन्यायेन पुत्र इत्यनुवृत्तेरित्यर्थः । तथा 'ऋतो विद्या—' इत्यत 'ऋतः' इत्यस्याप्यनुवृत्तेरित्यपि ज्ञेयम् । ततश्चायमर्थः । पुत्रशब्दे परे ऋत आनङ् स्यात् ततः पितापुत्राविति सिध्यतीति । आनङो नकारो-च्चारणम् 'उरण् रपरः' इति रंपरत्वनिवृत्त्यर्थम् । ऋतो द्वन्द्वे इति किम् । पितृपितामही ।

---

१. P, C drop it. २. Dropped Dc3. ३. Dropped Dc4, Dc3.
४. प्रासरपरत्व° Bc1, Dc3.

देवताद्वन्द्वे च ॥६।३।२६॥

इह पूर्वपदस्यानङ्[1] ॥ मित्रावरुणौ । उभयत्र वायोः प्रतिषेधः । अग्निवायू । वाय्वग्नी । एकहविर्भागित्वे द्वन्द्वस्य ब्रह्मप्रजापती इत्यादावप्रसिद्धेर्नानङ्[2] ।

देवता । अविद्यायोनिसंबन्धार्थोनुकारार्थश्चारम्भः । उभयत्रेति । वायोः पूर्वपदत्वे उत्तरपदत्वे च सति आनङादेशस्य प्रतिषेधो वाच्य इत्यर्थः । एकहविर्भागित्वे[3] इति । ब्रह्मप्रजापतीत्यादावानङ् न । तत्र हेतुरेकहविर्भागित्वे[4] द्वन्द्वस्याप्रसिद्धेरिति । एकं हूयमानं हविः प्रतिसंप्रदानत्वेन संबन्धित्वे वेदे अप्रसिद्धेः । प्रसिद्ध्यभावात् । लोके च द्वन्द्वस्याप्रसिद्धेः । सहचरिततयाप्रसिद्ध्यभावादित्यर्थः । अयं भावः । 'आनङ् ऋतो द्वन्द्वे' इत्यतः समासविशेषप्रतिपत्त्यर्थं 'द्वन्द्वे' इत्यनुवर्तमानेपि पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यपरिग्रहार्थम् । द्वन्द्वशब्दस्य चात्यन्तसहचरिते[6] लोकविख्यातेर्थे[7] निपातनं 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' इति सूत्रे कृतम् । ततश्च ये लोके प्रसिद्धसाहचर्या वेदे च एकहविःप्रतिसंप्रदानत्वेन संबन्धितया निर्दिष्टा एकत्र मन्त्रे इन्द्रावरुणाभ्यां छागं निर्वपेदित्यादौ तेषामिह सूत्रे ग्रहणं भवति न तु ब्रह्मप्रजापती शिववैश्रवणावित्यादीनाम् । तेषा लोके साहचर्यप्रसिद्ध्यभावात् । वेदे चैकहविर्भागित्वेनानिर्देशादिति ।

१. स्यात् after it in C. २. एकहविर्भागित्वेन प्रसिद्धानामेव द्वन्द्वस्य परिग्रहार्थं पुनर्द्वन्द्वग्रहणम् । तेन शिवविष्णू ब्रह्मप्रजापती इत्यादावप्रसिद्धेर्नानङ् $B_1$; $B_2$ follows $B_1$ but has एकहविर्भागित्वेन द्वन्द्वस्याप्रसिद्धेस्तेन &c. $B_2$; एकहविर्भागित्वेन द्वन्द्वस्य शिवविष्णू । ब्रह्म° $D_4$. ३. °भागत्वे $Bc_3$. ४. °र्भागत्वे $Bc_3$. ५. °र्भागत्वे $Bc_3$. ६. °चारितलोक° $Dc_4$. ७. °ख्यातार्थे $Dc_2$.

**ईदग्नेः सोमवरुणयोः ॥६।३।२७॥**

अनयोर्द्वन्द्वेऽग्नेरीकारादेशः स्यात्[१]

**अग्नेः स्तुत्स्तोमसोमाः ॥८।३।८२॥**

अग्नेः परेषामेषां सस्य षः स्यात् समासे ॥ आग्निष्टुत्[२] । अग्निष्टोमः । अग्नीषोमौ । अग्नेर्दीर्घात्[३] सोमस्येष्यते[४] । नेह[५] । अग्निसोमौ माणवकौ । अग्नीवरुणौ ।[६]

**इद्वृद्धौ ॥६।३।२८॥**

[७]वृद्धौ परपदेऽग्नेरिदादेशः[८] स्यात्[९] ॥ आग्निमारुतं कर्म । आग्निवारुणीमनड्वाहीम् ।[१०]

---

ईदग्नेः । आनङोपवाद ईकारः । तकार उच्चारणार्थः । देवताद्वन्द्व इत्येव । अग्निसोमौ माणवकौ ।

अग्नेः स्तुत् । 'सात् पदाद्योः' इति षत्वनिषेधे प्राप्ते वचनम् । अग्निष्टुदित्यादि । अग्निः स्तूयते यत्र सोऽग्निष्टुत् क्रतुविशेषः । अग्नीनां स्तोमः अग्निष्टोम इति सोमयागे आद्या संस्था । अग्नीषोमाविति देवताद्वन्द्वः । अग्निसोमौ माणवकाविति । अदेवताद्वन्द्वत्वान्नेत्वम् ।

इत् । 'देवताद्वन्द्वे' इत्यनुवर्तते । 'सोमवरुणयोः' इति निवृत्तम् । वृद्धिशब्देनात्र साहचर्यात् कृतवृद्ध्युत्तरपदमुच्यते । अत्रापि तकार उच्चारणार्थः । आग्निमारुतमित्यादि । 'सास्य देवता' इत्यण् । 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः । आग्निवारुणीमिति । पूर्ववदण् । ङीप् ।

---

१. °रीकारोन्तादेशः $B_2$. २. अग्न्याग्ने° $B_2$. ३. दीर्घात् परस्य $D_4$. ४. °स्यैवेष्यते $Bc_3$. ५. °ष्यते षत्वम् $B_2$. ६. After it—इत्युभयपदवृद्धौ कृतायामानङ्मीत्वं च बाधितुमिकारः क्रियते $D_4$. ७. कृता वृद्धिर्यस्य तत् कृतवृद्धि । कृतवृद्ध्युत्तरपदे अग्नेरिकारादेशः स्यात् । $B_2$. ८. इकारादेशः P, $D_5$. ९. Dropped $Bc_3$. १०. After it—आलभेत P.

विष्णौ न* ॥ 'देवताद्वन्द्वे च' इत्यानङ् । आग्नावैष्णवं चरुम् ॥[१]

**दिवो द्यावा ॥६।३।२९॥**

[२]द्यावाभूमी जनयन् ।

[३]**मातरपितरावुदीचाम् ॥६।३।३२॥**

[४]मातरपितरौ । उदीचां किम् । मातापितरौ ।

---

**विष्णौ नेति** । कृतवृद्धौ विष्णुशब्दे परपदे इकारादेशो नेति वक्तव्यमित्यर्थः ।

**दिवः** । दिवे[५] इत्यस्य द्यावेत्ययमादेशो देवताद्वन्द्व उत्तरपदे ।[६] स्पष्टत्वात्त्यक्ते द्वे । 'दिवसश्च पृथिव्याम्' ॥ ६।३।३०। पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो दिवसादेशः स्याद् द्यावा च । दिवस्पृथिव्यौ । द्यावापृथिव्यौ । अकारोच्चारणं सकारस्याविकारप्रतिपत्त्यर्थं तेन रुत्वादि न । कथं द्यावाचिदस्मै पृथिवी नमेते इति । कार्योऽत्र यत्नः । 'उषासोषसः' ॥६।३।३१॥ उषस उषासादेशः स्याद् देवताद्वन्द्व उत्तरपदे परे । उषश्च नक्तं च उषासानक्तम् ।

**मातर** । उदीचां मतेन मातृशब्दस्यारङादेशो निपात्यते ।

---

१. After it—आनय $B_1$,. २. After this—'दिवसश्च पृथिव्याम्' ॥ ६।३।३० ॥ पृथिव्यामुत्तरपदे दिवो दिवसादेशः स्याद् देवताद्वन्द्वे चात् द्यावा । After this-द्यावाभूमी जनयन् । $D_3$, $B_2$, $D_5$, C ; ($B_2$ has—दिव्शब्दस्य द्यावादेशः स्यात् ॥). ३. Before it—'उषासोषसः' । ६।३।३१॥ उषसः उषासादेश, स्यात् । उषासानक्तम् $B_2$, $D_4$. ४. Before it—उदीचामाचार्याणां मते अरङादेशो निपात्यते । $B_2$. ५. दिवशब्दस्य $Bc_3$. ६. After it—परे $Dc_2$.

**द्वन्द्वाच्चुदषहान्तात् समाहारे ॥५।४।१०६॥**

चवर्गान्ताद् दषहान्ताच्च द्वन्द्वाट्टच् स्यात् समासान्तः समाहारे ॥ वाक् च त्वक् च तयोः समाहारो वाक्त्वचम् । श्रीस्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ।

**वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥१।२।६५॥**

यूना सह वचने गोत्रं शिष्यते गोत्रयुवप्रत्ययकृतमेव वैरूप्यं चेत्तयोः ॥ गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम् । गार्ग्यगर्गौ । तल्लक्षणः किम् । गार्ग्यवात्स्यायनौ ।

---

द्वन्द्वात् । श्रीस्रजमित्यादौ श्रीश्च स्रक् तयोः समाहार इत्यादयो विग्रहा ज्ञेयाः ।

वृद्धः । अत्र वृद्धशब्देन 'अपत्यमन्तर्हितं वृद्धम्' इति पूर्वाचार्यपरिभाषितं पौत्राद्यपत्यमुच्यते । तथा युवशब्देन 'जीवति तु वंश्ये युवा' इति परिभाषितं चतुर्थाद्यपत्यमुच्यते । सहयोगे तृतीया । यूनेति । तदिति वृद्धो यूनेति निर्देशः । लक्षणशब्दो निमित्तवाची । चेदिति यद्यर्थे । एवकारोवधारणे । विशेषो वैरूप्यम् । एतत् सर्वं चेतसि कृत्वाह । **यूना सहवचन** इत्यादि । **गार्ग्यश्चे**त्यादि । गर्गशब्दात् 'गर्गादिभ्यो यञ्' इति गोत्रे यञ् । युवापत्ये[3] 'यञिञोश्च' इति फक् । प्रकरणादिनात्र युवार्थो गम्यते । एवकारः किम् । भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ । अत्र कुत्सा सौवीरत्वं च भागवित्तिकस्यान्यो विशेषः । गोत्रापत्ये भगवित्तशब्दात् 'अत इञ्' । यूनि तु वृद्धात् ठक् । 'सौवीरेषु बहुलम्' इति कुत्सायां ठक् ।

---

१. °गार्ग्यौ Bc3. २. पौत्रा° Dc1. ३. After it—तु Dc1. ४. चतुर्थो Dc1, Bc3.

स्त्री पुंवच्च ॥१।२।६६॥

यूना सह वचने स्त्री वृद्धा शिष्यते । सा च पुंवत्[१] स्यात् । तल्लक्षणमेव वैरूप्यं चेत्[२] ॥ गार्गी च गार्ग्यायणश्च गार्ग्यौ ।

पुमान् स्त्रिया ॥१।२।६७॥

स्त्रिया सहोक्तौ पुमान् शिष्यते । स्त्रीपुंसलक्षणश्चेदेव विशेषः । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । तल्लक्षणः[३] किम् । कुक्कुटमयूर्यौ ।

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥१।२।६८॥

स्वस्रा सहोक्तौ भ्राता दुहित्रा सहोक्तौ पुत्रः शिष्यते । [४]अन्ये लुप्यन्ते । भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ।

---

स्त्री पुंवत् । 'वृद्धो यूना—' इति सर्वमनुवर्तते इत्यभिप्रेत्याह । यूनेत्यादि[५] । सा चेति स्त्री परामृश्यत इत्यर्थः । स्त्र्यर्थः पुमर्थवत्[६] स्यादित्यर्थः ।

पुमान् । अत्र 'वृद्धो यूना' इति निवृत्तम् । 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तते इत्यभिप्रेत्याह । स्त्रियेत्यादि । पुमानिति किम् । प्राक् च प्राची च प्राक्प्राच्यौ । प्रागित्ययमलिङ्गोऽव्ययत्वात् ।[७]

---

१. Dropped $D_4$, $Bc_3$. २. चेत्तयोः P, $D_2$, $D_4$, $D_5$. ३. तल्लक्षणे $D_5$. ४. C, $D_1$, $D_4$ drop अन्ये लुप्यन्ते. ५. यूनेति $Dc_1$. ६. पुंवत् $Dc_2$. ७. After this $Dc_1$ has—भ्रातृपुत्रौ—प्रकटार्थत्वान्न व्याख्यातम् ।

**नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** ॥१।२।६९॥

अक्लीबेन सहोक्तौ क्लीबं शिष्यते । एकत्वमस्य[1] वा स्यात् । लिङ्गविशेष[2] एव[3] । शुक्लः कम्बलः । शुक्ला पटी[4] । शुक्लं वस्त्रम् । तदिदं[5] शुक्लम् । तानीमानि शुक्लानि ।

**पिता मात्रा** ॥१।२।७०॥

मात्रा सहोक्तौ पिता वा[6] शिष्यते । पिता च माता च पितरौ । मातापितरौ वा ।

---

**नपुंसकम्** । अनपुंसकेनेति किम् । शुक्लं च शुक्लं च शुक्लं च शुक्लानि । ननु चात्र 'सरूपाणाम्—' इत्येकशेषः स्यादेव । तत् कोऽत्र[7] विशेषोऽनेनैकशेषे तेन वा । उच्यते । यद्यनेनैकशेषः स्यात् एकवत्त्वं स्यात् तेन त्वेकशेषे एकवत्त्वं न स्यादिति विशेषः । अस्येति वचनमस्यैवैकशेषस्यैकत्वं यथा स्यादुत्तरत्र मा भूदिति । अन्यथोत्तरत्र एकवदित्यस्यानुवृत्तिः स्यात् । ननु च स्वरितत्वादेव सा न स्यात् । सत्यम् । तदेवानेन विस्पष्टीक्रियते । एवकारोऽत्रानुवर्तते । तेन हिमं च हिमानी च हिमहिमान्यौ इत्यत्र न । महत्त्वस्य विशेषस्यासत्त्वात् ।

**पिता** । **मातापितराविति** । 'तेभ्यो माता गरीयसी' इति 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' । इति मातुरभ्यर्हितत्वात् पूर्वनिपातः । आनङ् ।

---

१. °मस्य तु $D_4$. २. लिङ्गकृत एव विशेषश्चेत् P ; लिङ्गकृतविशेष एव चेत् $B_2$. ३. $B_1$, $D_1$, $Bc_3$, $D_4$ have चेत् after it. ४. द्विपटी $D_1$, $D_5$, $D_2$. ५. तदिदं सर्वं शुक्लम् P. ६. शिष्यते वा P, $D_1$, $D_5$. ७. अत्र omitted $Dc_1$.

**श्वशुरः श्वश्र्वा ॥१।२।७१॥**

श्वशुरश्च श्वश्रूश्च श्वशुरौ । श्वश्रूश्वशुरौ ।[1]

**त्यदादीनि सर्वैर्नित्यम् ॥१।२।७२॥**

सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते नित्यम् । स च देवदत्तश्च तौ ।

त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते इति वाच्यम्* ॥ स च यश्च यौ ।

**ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥१।२।७३॥**

[2]ग्राम्यपशूनां सङ्घेषु सहोक्तौ स्त्री शिष्यते न तु तरुणेषु ।

---

**श्वशुरः** । श्वश्रूश्वशुराविति । 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' इति श्वश्र्वा अभ्यर्हितत्वात् प्राक् निपातः ।

**त्यदा** । सर्वग्रहणं साकल्यार्थम् । अन्यथानपुंसकेनेत्यस्यानुवृत्तिराशङ्क्येत । अथवा तल्लक्षणश्चेदेव विशेष इत्यस्य नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । त्यदादीनामिति । परत्वं गणपाठापेक्षं ज्ञेयम् ।

**ग्राम्य** । ग्रामे भवा ग्राम्याः । अतरुणग्रहणं सामर्थ्यात् पशुविशेषणम् ।

---

१. After it—वा $D_1$, $D_2$. २. ग्राम्यपशुसङ्घेषु C.

[1]गाव इमाः । [2]अजा इमाः । ग्राम्येति किम् । रुरव इमे । [3]पशुषु किम् । ब्राह्मणा इमे । सङ्घेषु किम् । एतौ गावौ । [4]अतरुणेषु किम् । वत्सा इमे[5] । अनेकशफेष्विति वाच्यम्* ॥ नेह । अश्वा इमे ॥

इति द्वन्द्वः ॥

---

इमा इत्यनुप्रयोगः स्त्रीत्वाभिव्यक्तये । अनेकशफेष्विति । अनेकखुरेष्वित्यर्थः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेऽस्मिन् प्रसादे सुविशदमगमत् द्वन्द्वसंज्ञः समासः ॥[6]

---

१. Before it—गावश्च गावश्च एवं सति $B_2$. २. P, $Dc_1$, $Bc_3$ drop it. ३. पशु किम् P ; पशूनामिति किम् $B_2$. ४. अतरुणे $Bc_3$. ५. After it—वर्करा इमे $B_2$. ६. °ममलो द्वन्द्व° $Dc_3$.

# अथ सर्वसाधारणसमासान्ताः ।

**ऋक्पूरब्धूः पथामानक्षे ॥५।४।७४॥**

एषामप्रत्ययः स्यात् समासान्तः । धुरस्त्वनक्षे । अर्धर्चः । अनृचबह्वृचावध्येतर्येव । नेह । अनृक् साम । बह्वृक् सूक्तम् । विष्णुपुरम् । विमलापं सरः ॥

---

अथ सर्वसाधारणान् समासान्तान् सर्वसमाससाधारणीमसाधारणीं प्रक्रियां चाह ।

**ऋक्पू** । धुर एवाक्षेण संबन्धोस्ति नेतरेषामतः सामर्थ्यात् 'अनक्षे' इत्येतस्या एव विशेषणं न ऋगादीनामित्यभिप्रेत्याह । **धुरस्त्वनक्ष** इति । अनक्ष इति षष्ठ्यर्थे सप्तमी सुब्व्यत्ययेन । ततश्चायमर्थः । अक्षसंबन्धिनी या धूस्तदन्तस्य नेति । एवं च यदग्रे उदाहरिष्यति । अक्षे तु अक्षधूः दृढधूरक्ष इत्येतदुभयमप्युपपन्नं स्यात् । अक्षस्य वाच्यत्वेपि धुरस्तत्संबन्धित्वात् । **अर्धर्च** इति । ऋचोर्धम् । 'अर्धं नपुंसकम्' इति समासः । 'अर्धर्चाः पुंसि च' इति पुंस्त्वम् । **अनृचेत्यादि** । अविद्यमाना ऋचोस्येति विग्रहः । तथोक्तम् ।

'अनृचो माणवो ज्ञेयो बह्वृचश्चरणाख्यया' ॥ इति ।

**विष्णुपुरमिति** । षष्ठीतत्पुरुषः । **विमलापमिति** । बहुव्रीहिः ।

---

१. अर्धर्चाः पुंसि च । $Dc_1$ ; After it—अर्धर्चाः पुंसि च $D_4$, $Bc_3$ ; 'अर्ध-र्चाः पुंसि च' इति पुंस्त्वम् $D_5$. २. प्रक्रियामाह $Dc_3$. ३. इत्येतत्तस्या $Dc_4$. ४. तु $Dc_1$, $Bc_3$. ५. अग्रे dropped $Bc_1$, $Dc_3$. ६. वाच्यत्वे पूर्वपदत्वेपि $D_2$, $Dc_3$ ; वाच्यत्वे पूर्वपदत्वेपि च $Dc_4$.

रम्यपथो[1] देशः । महापथः । दक्षिणापथः । चतुष्पथम् । उपपथम्[2] ।

**अच् प्रत्यन्ववपूर्वात् सामलोम्नः ॥५।४।७५॥**

एभ्यः पराभ्यां सामलोमभ्यामच्[3] स्यात् समासे[4] ॥ प्रतिसामम् । अनुसामम् । अवसामम्[5] । एवं प्रतिलोमादि ॥ कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते ॥ कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः[6] । त्रिभूमः[7] । प्रासादः । संख्याया नदीगोदावरीभ्यां च* ॥ पञ्चनदम् । सप्तगोदावरम् । अन्यत्रापीष्यते ।

---

**रम्यपथ** इति बहुव्रीहिः । **महापथ** इति कर्मधारयः । **दक्षिणापथ** इति । दक्षिणस्यां पन्थाः । आकारान्तोपि दक्षिणाशब्दोस्ति । आबन्तस्य तु सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंवत्त्वेन भाव्यम् । तथोक्तं **प्रदीपे** । 'आकारान्तेन दक्षिणाशब्देन समासोयम्' इति । **चतुष्पथमिति** । चतुर्णां[8] पथां समाहारः । पात्रादित्वात् स्त्रीत्वनिषेधः । **उपपथमित्यव्ययीभावः** ।

**अच्** । **प्रतिसाममित्यादि** । प्रतिगतं साम प्रतिगतं सामात्रेति वा विग्रहः । एवमनुसामादिषु प्रादिसमासस्तत्पुरुषो बहुव्रीहिर्वा ज्ञेयः । **कृष्ण** इत्यादि । तथोक्तम् ।

'कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि' ॥

इति । संख्योत्तरत्वं भूमेरपीष्यते । तथोदाहृतं **वृत्तिकृता** । **द्विभूम** इत्यादि । **कृष्णभूम** इत्यादयो बहुव्रीहयः । **पञ्चनदमित्यादि** । समाहारे 'नदीभिश्च' इत्यव्ययीभावः । **अन्यत्रापीष्यत** इति ।

---

१. Before it—महापथः C. २. After it—कृतसमासान्तस्य ग्रहणान्नेष्यते । अपन्थाः । सुपन्थाः । $B_2$. ३. °मच्प्रत्ययः $D_2$, $B_2$. ४. समासान्तः $D_1$. ५. P drops it. ६. C drops द्विभूमः । त्रिभूमः. ७. Dropped $D_4$. ८. Before it—चत्वारः पन्थानः समाहृता इति $Dc_3$.

[1]पद्मनाभः । ऊर्णनाभः । दीर्घरात्रः । वर्षारात्रः ।

**अक्ष्णोदर्शनात् ॥५।४।७६॥**

अचक्षुःपर्यायादक्ष्णोच् स्यात् [2]समासे ॥ गवामक्षीव [3]गवाक्षः । चक्षुषि तु । विप्राक्षि ।

[4]**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥५।४।७७॥**

अचतुरेति [5]सूत्रेणाजन्ताः पञ्चविंशतिर्निपात्यन्ते ।

---

अजिति योगविभागादिति भावः । **पद्मनाभ** इत्यादि । पद्मं नाभौ यस्य । ऊर्णा नाभौ यस्य । दीर्घा रात्रिः । वर्षासु रात्रिरिति विग्रहाः । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् ।

अक्ष्णः । चक्षुःपर्यायो दर्शनशब्दः प्राण्यङ्गवाचीहाश्रीयते इत्यभिप्रेत्याह । **अचक्षुःपर्यायादिति** । **गवामक्षीवेति** । अक्षिशब्दोत्र रन्ध्रवाची ।

**अचतुरेत्यादि** । ग्रन्थविस्तरभयात् सूत्रमपठित्वैव [6]तदर्थमुक्त्वोदाहरति । तत्तु सूत्रम् 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः' । अत्र सूत्रे निपतितानां क्वचिद् बहुव्रीहिरेव क्वचिद् द्वन्द्व एवेत्यादि समासनियमष्टिलोपादिकं च निपातनादेव ज्ञेयमित्यभिप्रेत्याह ।

---

१. Before it—नाभेः संज्ञायाम् $B_2$. २. C drops it. ३. समासान्तः $D_1$. ४. गवाक्षम् $D_1$, D, $D_5$. ५. P, $D_1$, $D_2$, Com. omit the Sûtra and gives the अनुवृत्ति only; $D_2$ gives the Sûtra on the margin. ६. सूत्रेजन्ताः C. ७. एतदर्थ° $Bc_3$.

आद्यास्त्रयो बहुव्रीहयः । अपगतानि चत्वार्यस्य अचतुरः । विचतुरः । सुचतुरः । त्र्युपाभ्यां चतुरोऽजिष्यते ॥ त्रिचतुराः । उपचतुराः । तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिभ्रुवम् । दारगवम् । ऊर्वष्ठीवम् । निपातात्टिलोपः । पदष्ठीवम् । निपातात् पद्भावः । नक्तन्दिवम् । रात्रिन्दिवम् । अहर्दिवम् । अहन्यहनीत्यर्थः । रजसा सकलमत्ति सरजसम् । साकल्येऽव्ययीभावः । निश्चितं श्रेयो निःश्रेयसमिति कर्मधारयः । पुरुषस्यायुः पुरुषायुषमिति तत्पुरुषः । ततो द्विगुः ।

---

**आद्यास्त्रय** इत्यादि । तानेवोदाहरति । **अपगतानीत्यादि** । विगतानि चत्वारि यस्य विचतुरः । शोभनानि चत्वारि यस्य सुचतुरः । सर्वस्य वाक्यस्य सावधारणत्वात् बहुव्रीहय एवेति बहुव्रीहिनियमात् तत्पुरुषादौ न स्यात् । न चत्वारोऽचत्वार इत्यादौ । **त्रिचतुरा** इत्यादि । त्रयो वा चत्वारो वा त्रिचतुराः । चतुर्णां समीपे उपचतुराः । 'संख्याव्यय—' इति बहुव्रीहिः । 'बहुव्रीहौ संख्येय—' इति डचि प्राप्तेऽचो विधिः । **तत** इति । तेभ्यस्त्रिभ्यः परे एकादश द्वन्द्वा एव । नियमादिह तत्पुरुषो न । स्त्रियाः पुमान् स्त्रीपुमान् । **निपातनात्टिलोप** इति । अष्ठीवत्-शब्दस्येति शेषः । ननु चाहर्दिवमित्यत्र पर्याययोर्द्वन्द्व इत्याशङ्क्य वीप्सायां द्वन्द्वो निपात्यत इत्यभिप्रेत्याह । **अहन्यहनीत्यर्थ** इति । **रजसेत्यादि** । तेन बहुव्रीहौ न । सह रजसा सरजः पङ्कजमिति । **निश्चितमित्यादि** । कर्म-धारयनियमान्निश्चितं श्रेयोऽस्येति निःश्रेयस्कः पुमानित्यत्र बहुव्रीहौ न **पुरुषस्यायुरित्यादि** । तत्पुरुषनियमात् पुरुषश्चायुश्च पुरुषायुषी इति द्वन्द्वे न । **तत** इति । ततः परौ द्वौ द्विगू एवेत्यर्थः ।

---

१. वाङ्मनसी $D_5$. २. उर्वष्ठीवम् $D_1$, $D_2$ ; ऊरू चाष्ठीवच्च ऊर्वष्ठीवम् $D_5$. ३. सकलं सरजसमत्तीति साकल्ये° C. ४. द्विगू $D_1$. ५. चत्वार्यस्य $Dc_4$. ६. सरजसं $Dc_4$.

द्वयायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषः । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपमुपशुनम् । गोष्ठे श्वा गोष्ठश्वः ।

**ब्रह्महस्तिभ्यां वर्चसः ॥५।४।७८॥**

ब्रह्मवर्चसम् । हस्तिवर्चसम् ।

पल्यराजभ्यां च* ॥ पल्यवर्चसम् । राजवर्चसम् ।

**अवसमन्धेभ्यस्तमसः ॥५।४।७९॥**

एभ्यस्तमसोच् स्यात् ॥ अवतमसम् । संतमसम् । अन्धतमसम् ।

---

द्व्यायुषमित्यादि । द्वे आयुषी समाहृते । इह न द्वयोरायुद्वर्यायुः । त्र्यायुरिति । ऋग्यजुषमिति । ऋक् च यजुश्च । द्वन्द्वनियमादिह न । ऋगेव यजुरस्य ऋग्यजुरुन्मुग्धः । तत इत्यादि । कर्मधारयनियमात् बहुव्रीहौ न । जातोक्षो ब्राह्मणः । शुनः समीपमिति विग्रहेणाव्ययीभाव एवेति दर्शयति । इह न । उपगतः श्वास्य उपश्वा । गोष्ठे श्वेति विग्रहः । विशेषेण सप्तमीतत्पुरुष एवेति दर्शयति । इह न । गोष्ठस्य श्वा गोष्ठश्वा ।

ब्रह्म । आभ्यां परात् वर्चस्शब्दादच् । ब्रह्मवर्चसम् । हस्तिवर्चसमिति । षष्ठीतत्पुरुषौ ।

पल्येति । आभ्यां परादपि वर्चस्शब्दादच् स्यादिति वाच्यमित्यर्थः ।

अवसम् । अवतमसमित्यादि अवहीनं तमसा अवहीनं वा तमः इति प्रादिसमासः । एवं संगतं तमसा संगतं वा तमः । अन्धं करोतीत्यन्धम् । तच्च तमः अन्धतमसम् ।

---

१. ऋग्यजुषम् Bc₃, D₄, D₅. २. C drops the अनुवृत्ति. ३. Dropped D₁, B₂, Bc₃. ४. After it—द्वयोरायुषोः समाहार इति वा । Dc₃. ५. After it—महोक्षा वृद्धोक्षा Dc₃. ६. Before it—पल्यवर्चसम् । राजवर्चसम् । इति षष्ठीतत्पुरुषौ । Dc₃. ७. तत्तमः Dc₂.

**श्वसोवसीयश्श्रेयसः ॥५।४।८०॥**

श्वोवसीयसम् । मयूरव्यंसकादित्वात् समासः । श्वःश्रेयसम् । शुभार्थावेतौ ।

**अन्ववतप्ताद्रहसः ॥५।४।८१॥**

अनुरहसम् । अवरहसम् । तप्तरहसम् ।

**प्रतेरुरसः सप्तमीस्थात् ॥५।४।८२॥**

प्रतेः परात् सप्तमीस्थादुरसोच् स्यात् ॥ उरसि प्रतिवर्तते प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । सप्तमीस्थात् किम् । प्रत्युरः ।

---

**श्वसः** । श्वसः पराभ्यामाभ्यामच् । **श्वोवसीयसमित्यादि** । श्वोवसीयः श्वश्श्रेयः इति विगृह्य मयूरव्यंसकादित्वात् समासः । **शुभार्थाविति** । एतौ समासान्तौ शब्दौ शुभार्थौ शुभवाचकौ शब्दशक्तिस्वाभाव्यादिति भावः । तथोक्तं **पाणिनीयमतदर्पणे** ।

'अर्थे परपदस्यात्र श्वःशब्दः कालवाच्यपि ।
अभिधत्ते स्वभावेन तेनेमौ मङ्गलार्थकौ' ॥ इति ।

**अन्व** । एभ्यः पराद्रहसोच् । **अनुरहसमित्यादि** । अनुगतं रहः । अवगतं रहः इति तत्पुरुषः । अनुगतं रहोत्र अवगतं रहोत्रेति बहुव्रीहिर्वा । **तप्तरहसमिति** । तप्तं च तद्रहश्च । तथोक्तं **पाणिनीयमतदर्पणे** ।

'परेणानधिगम्यं हि यद्रहो वह्नितप्तवत् ।
तप्तं च तद्रहश्चेति तत् तप्तरहसं विदुः' ॥ इति ।

**प्रतेः** । सप्तमीस्थात् किम् । प्रतिगतमुरः प्रत्युरः ।

---

१. P, $D_1$, $Dc_1$, $Bc_3$ drop मयूर°...समासः. २. C, $D_1$, $D_2$, $D_4$, $D_5$ drop from सप्तमी to प्रत्युरः ।

**अनुगवमायामे ॥५।४।८३॥**

एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । दीर्घमित्यर्थः । 'यस्य चायामः' इति समासः ।

**उपसर्गादध्वनः ॥५।४।८५॥**

प्रगतोध्वानं प्राध्वो रथः ।

**न पूजनात् ॥५।४।६९॥**

पूजार्थात् परेभ्यः समासान्तप्रत्यया न स्युः ॥ सुराजा । अतिराजा । स्वतिभ्यामेव । नेह । परमराजः । पूजनात् किम् । गामतिक्रान्तोतिगवः । बहुव्रीहौ सक्थ्यक्ष्णोरनिषेधः । सुसक्थः । स्वक्षः ।

---

**अनुगव** । **अनुगवमि**ति । गामन्वायतं गोदैर्घ्येणान्वितं शाकटमेवमुच्यते । अन्यत्र गवां पश्चात् समीपं वा अनुगु इत्येव । स्पष्टत्वात् त्यक्तं[1] 'द्विस्तावा त्रिस्तावा वेदिः' ॥५।४।८४॥ वेद्यां वाच्यामेतौ निपात्येते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वा कस्यांचिद्विकृतौ या वेदिस्तस्यामेतन्निपातनम् । अच्टिलोपसमासा निपात्यन्ते । द्विस्तावती द्विस्तावा । त्रिस्तावती त्रिस्तावा । वेदिः किम् । द्विस्तावती त्रिस्तावती रज्जुः ।

**उपसर्गात्** । अस्मादध्वनोच् । **प्रगत** इत्यादि । प्रादिसमासः । उपसर्गग्रहणं प्राद्युपलक्षणार्थम् । क्रियायोगाभावात् । उपसर्गात् किम् । परमाध्वा ।

**न पू°** । **स्वतिभ्यामेवे**ति । पूजार्थामेवेति । पूजार्थाभ्यां स्वतिभ्यामेव परस्य समासान्तो निषिध्यत इति वाच्यमित्यर्थः । **बहुव्रीहावि**ति । एतच्च प्राग्बहुव्रीहिग्रहणं कर्तव्यमिति वार्तिकाल्लभ्यते ।

---

१. After it—सूत्रं व्याख्यायते Dc3.

**किमः क्षेपे ॥५।४।७०॥**

क्षेपार्थात् किमः परस्य समासान्तो न स्यात् ॥ किंराजा ।[1][2]

**नञस्तत्पुरुषात् ॥५।४।७१॥**

नञ्पूर्वात् तत्पुरुषात् समासान्तो न[3] ॥ अराजा । असखा । तत्पुरुषात् किम् । अनृचो माणवकः । अधुरम् ।

**पथो विभाषा ॥५।४।७२॥**

नञ्पूर्वात् पथो वा समासान्तः ॥ अपथम् । अपन्थाः । तत्पुरुषादित्येव । अपथो देशः । अपथं वर्तते ।

---

किमः । किंराजेति । निन्दितो राजेति विगृह्य 'किं क्षेपे' इति समासः । क्षेपे किम् । कस्य गौः किंगवः । ननु लक्षणप्रतिपदोक्तपरिभाषया किं क्षेपे इति प्रतिपदोक्तः किं समासो ग्रहीष्यत इति क्षेपग्रहणं व्यर्थमिति चेत् नैष दोषः । अत्रैषा परिभाषा नोपतिष्ठत इति ज्ञापनार्थत्वात् क्षेपग्रहणस्य तेन बहुव्रीहावपि निषेधः स्यात् । कुत्सिता धूरस्य किंधूः शाकटमिति ।

नञः । अराजेत्यादि तत्पुरुषः[4] । अनृच इत्यादि बहुव्रीहिः[5] ।

पथः । अपथमिति । अपथं नपुंसकम् । अपथं वर्तते इत्यर्थाभावेऽव्ययीभावः ।

---

१. Before it—'किं क्षेपे' इति समासः । $D_5$. २. $B_1$ has after it—क्षेप इति किम् । कस्य राजा किंराजः ।; क्षेपे किम् । कस्य गौः । किंगवः $B_2$, ३. After it—स्यात् C, $B_1$, $B_2$, $D_3$. ४. तत्पुरुषे $Bc_1$. ५. बहुव्रीहौ $Bc_1$.

लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।

समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥[१]

अवश्यसेव्यः[२] । गन्तुकामः । गन्तुमनाः । सहितः । संहितः[३] । सततम्[४] । संततम् । मांस्पचनम्[५] । मांसपचनम् । मांसपाकः । मांस्पाकः । काममनसोः समोन्तलोप इति केचित् । सकामः । समनाः ।

**उदकस्योदः संज्ञायाम् ॥६।३।५७॥**

उदकस्योदादेशः स्यादुत्तरपदे संज्ञायाम् ॥ उदमेघः ॥

---

लुम्पेदित्यादि । अन्त्यमिति शेषः । तेनावश्यंशब्दस्य कृत्ये कृत्यप्रत्ययान्ते परे मलोपः काममनसोः परयोः तुम्प्रत्ययस्याप्यन्त्यं लुम्पेत् । हिततशब्दयोः परतः संशब्दस्यान्त्यं वा लुम्पेत् मांसशब्दस्य चान्त्यं लुम्पेत् डुपचष् पाके इत्यस्मिन् धातौ परे । किंविशिष्टे । युड्घञोः परतो यः पच् तस्मिन्नित्यर्थः । **अवश्यसेव्य** इति । अवश्यं सेव्यः । गन्तुं कामोस्य । गन्तुं मनोस्य । सम्यक् हितः । सम्यक् ततः । मांसस्य पचनम् । मांसस्य पाक इति विग्रहा ज्ञेयाः ।

**उदकस्य** । उदमेघो नाम यस्य औदमेघिः पुत्रः । उदवाहो नाम यस्य औदवाहिः पुत्रः । **उदमेघ** इति । उदकस्य मेघः । अथवा उदकपूर्णो मेघः[६] । शाकपार्थिवादित्वादुत्तरपदलोपी तत्पुरुषः[७] ।

---

१. स्फुट Dc$_1$. २. C has मयूरव्यंसकादित्वात् समासः after it. ३. संहितम् । सहितम् D$_4$. ४. सततः D$_1$ D$_5$ ; संततः D$_2$, D$_5$, संततम् । सततम् । D$_4$. ५. B$_1$ drops मांस्पचनम् ; C, D$_1$; D$_4$ have मांसपचनम् । मांस्पचनम् । ६. After it—उदमेघः । अथवा उदकेनोपलक्षितो मेघः Dc$_3$. ७. समासः Dc$_3$.

उदवाहः । उत्तरपदस्यापि* ॥ लोहितोदः । क्षीरोदः ।

**पेषंवासवाहनधिषु च ॥६।३।५८॥**

एषु [1]उदकस्योदादेशः [2]स्यात् ॥ उदपेषं पिनष्टि [3]। णमुलन्तः । उदवासः । उदवाहनः । उदधिः । [4]किप्रत्ययान्तः ।

**एकहलादौ पूरयितव्येन्यतरस्याम् ॥६।३।५९॥**

[5]असंयुक्त हलादौ परपदे [6]उदादेशो वा ॥ [7]उदकुम्भः । उदपात्रम् । [8]पक्षे । उदककु[9]म्भः । [10]एकेति किम् । उदकस्थाली । [11]पूरणीयेति किम् । उदकपर्वतः ।

---

उदवाह इति । उदकं वहतीति कर्मण्यण् । **उत्तरपदस्यापीति** । उत्तरपदभूतस्यापि उदकशब्दस्योदादेशः स्यादिति वक्तव्यमित्यर्थः । लोहितोदः । क्षीरोद इति बहुव्रीहिः ।

**पेषं** । असंज्ञार्थं वचनम् । उदपेषं पिनष्टीति । उदकेन पिष्ट्वा । **णमुलन्त** इति । उदपेषमित्ययं 'स्नेहेन पिषः' इति विहितणमुलन्तः इत्यर्थः । **उदवास** इत्यादि । उदके वासः । उदकस्य वाहनः । उदधिरिति । उदकं धीयतेस्मिन्नित्युदधिः । **किप्रत्ययान्त** इति । 'कर्मण्यधिकरणे च' इति विहितकिप्रत्ययान्त इत्यर्थः ।

**एक** । अत्रैकशब्दोसहायवाची । एकोसहायस्तुल्यजातीये नानन्तरेण हलाविनाभूतोसंयुक्त इति यावदित्यभिप्रेत्याह । **असंयुक्तहलादाविति** । उदकादिना द्रव्येणान्तर्व्याप्तव्यः पूरयितव्य उच्यते ।

---

१. उदकस्योदः । उदपेषं &c. $D_1$, $D_4$, $D_5$. २. °स्योदः स्यात् $B_2$. ३. P, $Bc_3$ drop it. ४. क्विप्रत्ययान्तः C ; विप्रत्ययान्तः $D_1$ क्वप्प्रत्ययान्तः $D_2$. ५. असंयुक्तैकहलादौ C. ६. Before it—उदकस्य $D_5$. ७. उदकुम्भः । उदककुम्भः । उदपात्रम् । उदकपात्रम् । $B_2$. ८. C. $B_2$, $D_4$ drop पक्षे. ९. After it—उदकपात्रम् $D_4$. १०. एकहलादाविति किम् । $D_4$. ११. पूरणीये किम् $D_1$.

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥६।३।६०॥**

एषु परपदेषूदकस्योदादेशो वा स्यात्[1] ॥ उदमन्थः । [2]उदकमन्थः । इत्यादि[3] ॥

**इको ह्रस्वोऽङ्यो गालवस्य ॥६।३।६१॥**

अङ्यन्तस्येको ह्रस्वो वा[4] । ग्रामणिपुत्रः । ग्रामणीपुत्रः ।[5]

---

**मन्थौदन** । [6]द्रव्यसंस्कृताः सक्तवो मन्थाः । तत्र मन्थशब्दो यदाऽव्युत्पन्नस्तदा उदकेन मन्थ इति 'तृतीया' इति योगविभागात् समासः । अथ [7]व्युत्पन्नो मथ्यते मन्थ इति तदा 'कर्तृकरणे—' इति । आदिना उदौदनः[8] । उदकौदनः । उदसक्तुः । उदकसक्तुः । 'अन्नेन व्यञ्जनम्' इति तृतीयासमासः । उदबिन्दुः । उदकबिन्दुः । उदवज्रः । उदकवज्रः । षष्ठीतत्पुरुषौ । उदभारः । उदकभारः । उदहारः । उदकहारः । 'कर्मण्यण् ।' उपपदसमासः । उदवीवधः । उदकवीवधः । [9]षष्ठीसमासः ।

**इकः** । ग्रामं नयतीति ग्रामणीस्तस्य पुत्रो ग्रामणिपुत्रः ।

---

१. P, $Bc_3$ drop it. २. Dropped $D_5$. ३. Dropped $D_5$. ४. After it—स्यात् $B_1$, $D_4$, $Dc_1$. ५. After this $D_1$ has—इयङुवङ्भाविनामव्ययानां च न ह्रस्वः ॥* श्रीकुलम् । भ्रूकुलम् । काण्डीभूतम् । अभ्रूकुंसादीनाम् । भ्रूकुंसादीनां तु स्यादेव । भ्रूकुंसः । भ्रुकुंसः । भ्रूकुटिः । भ्रुकुटिः । अपर आह । भ्रुकुंसादीनामकारः स्यादिति । भ्रकुंसः । भ्रकुटिः । ङ्यन्तस्य तु गार्गीपुत्रः । ष्यङः संप्रसारण &c, ; $B_2$ has—इयङुवङ्भाविनामव्ययानां च प्रतिषेधः । श्रीमदः । भ्रूमदः । भ्रूभङ्गः । शुक्लीभावः । ङ्यन्तस्य तु गार्गीपुत्रः । त्यक्तमूत्रम् । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥' ङ्यन्तस्यावन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वः स्यात् ॥ रेवतिपुत्रः । रोहिणिपुत्रः । भरणिपुत्रः । प्रस्य च हौ छन्दसि ।* आवन्तस्य संज्ञायाम् । शिलवहम् । शिलप्रस्थम् । अजक्षीरेण न च भवति । ऊर्णासूत्रेण कवयो वयन्ति । बहुलग्रहणादिति काशिकायाम् ॥. ६. द्रवद्रव्य° $Bc_3$, $Dc_3$. ७. व्युत्पन्नं मथ्यते मन्थमिति $Bc_1$, $Dc_1$, $Bc_3$. ८. Before it:—उदगाहः । उदकगाहः । $Dc_2$. ९. °समासौ $Dc_2$. °तत्पुरुषः $Bc_3$.

ङ्यन्तस्य तु । गार्गीपुत्रः । इयङुवङ्भाविनामव्ययानां च प्रतिषेधः* । श्रीमदः । श्रीपुत्रः । स्वयंभूपुत्रः । भ्रूभङ्गः । शुक्लीभावः ॥[2]

ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥६।१।१३॥

ष्यङन्तस्य संप्रसारणं स्यात् पुत्रपत्योः परतस्तत्पुरुषे ॥ पूर्वरूपत्वम् ।

---

गालवग्रहणं पूजार्थम् । अन्यतरस्यामिति हि वर्तते । गार्गीपुत्र इति । 'यञश्च' इति गार्ग्यशब्दात् ङीप् । 'हलस्तद्धितस्य' इति यलोपः । इयङुवङ्भाविनामव्ययानां च न ह्रस्वः । श्रीकुलम् । भ्रूकुलम् । काण्डीभूतम् । वृषलीभूतम् । अभ्रूकुंसादीनाम् । भ्रूकुंसादीनां तु स्यादेव । भ्रुकुंसः । भ्रूकुंसः । भ्रुकुटिः । भ्रूकुटिः । अपर आह । अभ्रूकुंसादीनामित्यस्यायमर्थः । भ्रूकुंसादीनामकारः स्यादिति । भ्रकुंसः । भ्रकुटिः ।

ष्यङः । ष्यङन्ते यद्यपि बहवो यणः संभवन्ति तथापि निर्दिश्यमानस्यादेशा भवन्तीति ष्यङ एव संप्रसारणम् । ष्यङः किम् । इभ्यापुत्रः । पुत्रपत्योः किम् । कौमुदगन्ध्याकुलम् । तत्पुरुषे किम् । कौमुदगन्ध्या पतिरस्य कौमुदगन्ध्यापतिर्ग्रामः । उपसर्जने ष्यङि न संप्रसारणम् । अतिक्रान्तः कौमुदगन्ध्यामतिकौमुदगन्ध्यः । तस्य पुत्रोतिकौमुदगन्ध्यपुत्रः । अनुपसर्जनष्यङन्तस्य तु स्यादेव । परमकौमुदगन्ध्यायाः पुत्रः परमकौमुदगन्धीपुत्रः । पुत्रपत्योः केवलयोरिदं संप्रसारणम् । तदादौ तदन्ते च न । कौमुदगन्ध्यापुत्रकुलम् । कौमुदगन्ध्यापरमपुत्रः । पूर्वरूपत्वमिति । 'संप्रसारणाच्च' इति ।

---

१. भाविनां and च dropped $B_1$, $D_2$, $D_4$, $D_5$; $D_4$ has वाच्यः after प्रतिषेधः. २. P has श्रीकुलम् । भ्रूकुलम् । भ्रूभङ्गः । वृषलीभूतम् ।; $D_2$ has—ङ्यन्तस्य तु गार्गीपुत्र. । श्रीकुलम् । भ्रूकुलम् । वृषलीभूतम्. ३. After this—ङ्यन्तस्य तु गार्गीपुत्रः । $D_5$. ४. ङीष् $Dc_3$. ५. श्रीस्रजम् $Bc_3$.

**संप्रसारणस्य ॥६।३।१३९॥**

संप्रसारणान्तस्य दीर्घः स्यात् ॥[1] कौमुदगन्ध्याः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । व्यवस्थितविभाषया[2] ह्रस्वो न ।

---

संप्र । कौमुदगन्धीपुत्र इति । कुमुदस्येव गन्धोऽस्येति[3] बहुव्रीहिः । तत्र 'उपमानाच्च' इति गन्धशब्दस्येदन्तादेशः । कुमुदगन्धेरपत्यमित्यण् । तदन्तस्य स्त्रियाम् 'अणिञोः—' इति ष्यङ् । ततः 'यङश्चाप्' । ततः षष्ठीसमासः । ततः संप्रसारणम् । पूर्वरूपत्वम् । दीर्घः । ननु चात्र 'इको ह्रस्व—' इति विकल्पेन ह्रस्वो भाव्य इत्याशङ्क्याह । व्यवस्थितविभाषयेति । तत्रान्यतरस्यामित्यनुवर्तते । सा च व्यवस्थितविभाषेत्यत्र ह्रस्वो नेत्यर्थः । 'ष्यङः संप्रसारणम्—' इत्यस्य व्याख्यानेनैव व्याख्यातप्रायत्वात् त्यक्तं[5] व्याख्यायते[6] । 'बन्धुनि बहुव्रीहौ' ॥६।१।१४॥ ष्यङन्तस्य संप्रसारणं स्यात् बन्धुशब्दे उत्तरपदे बहुव्रीहौ । कौमुदगन्ध्या बन्धुरस्य कौमुदगन्धीबन्धुः । बहुव्रीहौ[7] किम् । कौमुदगन्ध्याया बन्धुः कौमुदगन्ध्याबन्धुः । अत्रापि पूर्ववदेव । अतिकौमुदगन्ध्याबन्धुरिति अत्र न स्यात् । परमकौमुदगन्धीबन्धुरत्र स्यात् । तथा कौमुदगन्ध्यापरमबन्धुः कौमुदगन्ध्याबन्धुकुलमित्यत्र न स्यात् । बन्धुनीति नपुंसकनिर्देशः शब्दरूपापेक्षया । पुल्लिङ्गाभिधेयस्त्वयं बन्धुशब्दः । 'मातच्मातृकमातृषु' । ष्यङ् प्रसार्यो विभाषया बहुव्रीहावेव । कौमुदगन्ध्या मातास्येति बहुव्रीहौ कृते स्यादेवोपसंख्यानात् पक्षे मातृशब्दस्य मातजादेशः । तत्र चित्त्वसामर्थ्यात्

---

१. उत्तरपदे after it $B_1$, $B_2$, $D_4$. २. °विभाषयात्र $D_1$, $B_2$, $D_2$, $D_4$. ३. गन्धो यस्य° $Dc_2$. ४. करीषगन्धे° $Dc_1$, $Bc_1$, $Dc_4$. ५. After it—च $Bc_1$. ६. Before it—सूत्रं $Dc_3$. ७. Before it—कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः । $Dc_3$.

**ऐकतद्धिते च ॥६।३।६२॥**

एकस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च ॥ एकस्या भावः एकता । एकक्षीरम् ।

**इष्टकेषीकामालानां चिततूलभारिषु ॥६।३।६५॥**

इष्टकादीनां चितादौ पेरे[1] यथाक्रमं ह्रस्वः स्यात् ॥ इष्टकचितम् ।

---

बहुव्रीहिस्वरमन्तोदात्तो बाधते । मातृमातृकशब्दयोश्च भेदेन ग्रहणात् 'नद्यृतश्च' इति कबपि विकल्प्यते । कौमुदगन्धीमातः । कौमुदगन्ध्यामातः । कौमुदगन्धीमातृकः । कौमुदगन्ध्यामातृकः । कौमुदगन्धीमाता । कौमुदगन्ध्यामाता ।

**एक** । अत्रानिर्दिष्टस्थानिकह्रस्वविधेरचश्चेति परिभाषोपतिष्ठते । तत्र विशेषणविशेष्यभावे कामचारादत्राचा गृह्यमाण एकशब्दो विशेष्यते अजन्तस्यैकशब्दस्य ह्रस्वः स्यादिति । न पुनर्गृह्यमाणेनैक-शब्देनाच् । एकशब्दस्याच इति अनिष्टप्रसङ्गात् । तत्राजन्तस्यैक-शब्दस्य ह्रस्वो विधीयमानो व्यर्थस्तस्य ह्रस्वान्तत्वादेवेति कृत्वा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषोपतिष्ठते । तत[4] आबन्तस्यैकशब्दस्य ह्रस्वोऽत्र[5] विधीयत इत्येतच्चेतसि कृत्वा विगृह्णाति । **एकस्या भाव** इति । यदैकशब्दो न संख्यावाची तदेदमुदाहरणम् । संख्यावाचित्वे तु 'त्वतलोर्गुणवचनस्य' इति पुंवत्त्वेनैव सिद्धम् ।

**इष्ट** । **इष्टकचितमिति** इष्टकाभिश्चितम् । 'कर्तृकरणे कृता—' इति समासः ।

---

१. एकस्य तद्धिते च $B_2$. २. परे पदे $D_4$. ३. विकल्पते $Dc_3$. ४. अत $Dc_2$; तत्र $Dc_3$. ५. अत्र dropped $Dc_2$.

[1]ईषीकतूलम्। मालभारी। तदन्तस्यापीष्टिः। [2]पक्वेष्टकाचितम्।

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥६।३।८५॥**

एषु [3]परेषु समानस्य सः स्यात् ॥ समानं ज्योतिर्य[4]स्यासौ सज्योतिः। इत्यादि।

पिण्डगन्धलोहितकुक्षिवे[5]णिपत्नीपक्षेष्वपीति केचित्। सपिण्डः। [6]इत्यादि।

---

इषीकतूलमि[7]ति। षष्ठीसमासः। [8]मालां भर्तुं शीलम[9]स्य मालभारी। ताच्छील्ये णिनिः[10]।

ज्योतिः। आदिना सजनपदः। सरात्रिः। सनाभिः। सनामा। सगोत्रः। सरूपः। सस्थानः। सवर्णः। सवयाः। सवचनः। सबन्धुः।

[11]पिण्डेत्यादि। तथोक्तं मुग्धबोधे। ज्योतिर्जनपदरात्रिनाभिबन्धुगन्धपिण्डलोहितकुक्षिवेणीब्रह्मचारितीर्थ्यपत्नीपक्षे समानः सः इति।

---

१. ईषीकरूपम् $D_2$. २. पक्वेष्टिक° $D_4$. ३. $B_1$ drops परेषु. ४. °र्यस्य स $D_2$, $D_4$. ५. वेणी C, $D_1$, $B_2$, $Dc_1$, $D_4$. ६. Dropped $D_5$. ७. °मित्यादि। $Dc_3$. ८. Before it—इषीकायास्तूलमिति $Dc_3$. ९. यस्य for अस्य $Dc_2$. १०. After it—उपपदसमासः $Dc_3$. ११. सपिण्डे° $Dc_3$.

**चरणे ब्रह्मचारिणि ॥६।३।८६॥**

ब्रह्मचारिणि परपदे समानस्य सः स्यात् व्रताचरणे गम्ये॥ सब्रह्मचारी ।

**तीर्थे ये ॥६।३।८७॥**

यप्रत्ययान्ते तीर्थे परे प्राग्वत्॥ सतीर्थ्यः॥

**विभाषोदरे ॥६।३।८८॥**

यान्ते उदरे परे प्राग्वद्वा ॥ सोदर्यः । समानोदर्यः ॥ रूपनामगोत्रस्थानवर्णवयोवचनधर्मजातीयेषु वेति केचित् ॥ सरूपः । समानरूपः । इत्यादि ।

---

चरणे । **सब्रह्मचारीति** । समानो ब्रह्मचारी सब्रह्मचारी । ब्रह्म वेदः । तदध्ययनाय यद् व्रतं तदपि ब्रह्म । तच्चरतीति ब्रह्मचारी । तीर्थपत्नीपक्षे[3] 'व्रते' इति णिनिः । समानस्तस्यैव ब्रह्मणः समानत्वादित्ययमप्यरयार्थो भवति । समाने ब्रह्मणि व्रतचारी सब्रह्मचारी ।

तीर्थे । **प्राग्वदिति** । समानस्य सः । य इति वर्णः सप्तम्या निर्दिष्टस्तेन ययतोर्द्वयोरपि ग्रहणम् । **सतीर्थ्य** इति । समाने तीर्थे गुरौ वासी । 'समानतीर्थे वासी' इति यत्प्रत्ययः ।

विभा । **सोदर्य** इत्यादि । 'सोदराद्यः' इति यः । समानोदरे शयितः । 'समानोदरे शयित ओ चोदात्तः' इति यत् । **रूपेति** । तथोक्तं मुग्धबोधे । 'रूपनामगोत्रस्थानवर्णवयोवचनधर्मजातीयोदर्ये वा' इति ।

---

१. ब्रह्माचरणे $D_1$. २. समानोदर्यः । सोदर्यः । $D_5$. ३. $Dc_2$ $Dc_4$ drop तीर्थपत्नीपक्षे.

**दृग्दृशवतुषु ॥६।३।८९॥**

एषु समानस्य सः स्यात् ॥ सदृक् । सदृशः ॥ दृक्षे चेष्यते । सदृक्षः । वतुरुत्तरार्थः ।

**इदंकिमोरीश्की ॥६।३।९०॥**

इदम ईश् किमः की स्यात् दृक्दृशवतुषु ॥ ईदृक् । ईदृशः । कीदृक् कीदृशः ॥ दृक्षे च ॥ ईदृक्षः । कीदृक्षः । वतूदाहरणं[२] वक्ष्यते ।

**आ सर्वनाम्नः ॥६।३।९१॥**

एषु सर्वनाम्न आकारोन्तादेशः स्यात् ॥ तादृक् । तादृशः । तादृक्षः ।[४] दीर्घः । मत्वोत्वे । अमूदृक् । अमूदृशः ।[६]

---

दृग्दृश । सदृगित्यादि । समानमात्मना पश्यति समान इव दृश्यत इति वा विग्रहः । रूढिशब्दोऽयं नात्रावयवार्थो ग्राह्यः । 'समानान्ययोश्च वक्तव्यम्' इति कञ्क्विनौ । ननु वतुग्रहणं व्यर्थं यतः समानशब्दात् परो वतुप् न संभवत्येवेत्याशङ्क्याह । वतुरुत्तरार्थ इति ।

इदं । शः सर्वादेशार्थः । ईदृगित्यादि । अयमिव दृश्यते । इदमिव पश्यतीति वा । वतूदाहरणं वक्ष्यत इति । तद्धित इति ज्ञेयम् ।

आ सर्व । दीर्घविधिः 'अतो गुणे' इति पररूपबाधनार्थः । दीर्घ इत्यादि । अदस् दृश् इति स्थिते दीर्घ आकारान्तादेशः । 'अदसोसेः—' इति दस्य मत्वम् । दीर्घस्याकारस्य दीर्घ ऊकारः । असाविव दृश्यते अमुमिव पश्यतीति वा अमूदृक् ।

---

१. $D_1$ drops it. २. °हरणे वक्ष्येते । $D_4$. ३. $D_1$ drops it. ४. दीर्घ-मत्वोत्वे कृते $D_1$. ५. After it—अमूदृक्षः $D_1$, $D_4$, $D_5$. ६. दृक्क $Dc_4$, $Dc_3$.

**विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥६।३।९२॥**

अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यात् वप्रत्ययान्तेऽञ्चतौ[1] परे ॥ विश्वद्र्यङ् । देवद्र्यङ् । तद्र्यङ् । यद्र्यङ् । अमुमञ्चति अदद्र्यङ् ॥ अदसोऽद्र्यादेशस्य 'अदसोसेः—' इति मुभाव इत्येके । अदमुयङ् । अविशेषादुभयत्रापीत्यपरे[2] । अमुमुयङ् । आदावेवेत्यन्ये[3] । अमुद्र्यङ्[4] । वप्रत्यये[5] किम् । विष्वगञ्चः ॥[6]

---

**विष्वक् । विष्वद्र्याङिति** । विष्वगञ्चतीति 'ऋत्विक्—' आदिसूत्रेण क्विन् । 'उगिदचाम्—' इति नुम् । 'संयोगान्तलोपः' । 'क्विन्प्रत्ययस्य कुः' । एवं देवानञ्चतीति देवद्र्यङ् । तमञ्चतीति तद्र्यङ् । यमञ्चतीति यद्र्यङ् । अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम् । तत्र यणादेशे कृते 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितो भवति । **अदस** इत्यादि । तथोक्तं **वार्तिककारेण** ।

'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते' ॥ इति ।

येरसेः इति निषेधः क्रियते अन्त्यविकारे अन्त्यसदेशस्येति च परिभाषा नाश्रीयते तेषामुभयोरपि मुत्वं स्यात् । **अमुमुयङिति** । यथा चलीक्लृप्यत इति लत्वम् । ये तु परिभाषामाश्रयन्ति तेषामन्त्यसदेशस्यैव मुत्वम् । **अदमुयङिति** । येषां तु त्यदाद्यत्वविषय एव मुत्वं तन्मते उभयत्रापि न मुत्वम् । **अदद्र्याङिति** । एतदाचार्यैः[7] स्वमतेनादावुक्तम्[8] । **विष्वगञ्च** इति । पचाद्यच् । कर्तरि भावे घञ् वा । विष्वग्देवयोः किम् । अश्वाङ् । अञ्चतौ किम् । विष्वग्युक् । ननु

---

१. अप्रत्ययान्ते $D_2$, $B_2$. २. $B_1$ drops इत्यपरे; इत्येके $D_1$. ३ °त्येके $D_1$. ४. After it—परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः । उभयोः केचिदिच्छन्ति केचिन्नेच्छन्ति चोभयोः ॥ $D_4$. ५. अप्रत्यये $D_2$. ६. C has पचाद्यच् after it. ७. एत° $Dc_3$. ८. एत° $Dc_3$.

**समः समि ॥६।३।९३॥**

[1]वप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात् ॥ सम्यङ् ।[2]

**सहस्य सध्रिः ॥६।३।९५॥**[3]

**अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥६।३।९९॥**

[4]अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु ॥ अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः ।[4] अषष्ठ्यतृतीयास्थस्येति किम् । अन्यस्यान्येन वा आशीः अन्याशीः[5] ॥

---

वप्रत्ययग्रहणं [6]व्यर्थं यतो वताविल्युक्ते केवले एवाञ्चतौ उत्तरपदे कार्येण भाव्यम् । [7]वप्रत्यय [8]एव केवलोऽञ्चतिरुत्तरपदं स्यात् । उच्यते । वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम् । तेन 'अतः कृकमि—' इत्यत्र कृ इति प्रकृतिप्रत्ययसमुदायो गृह्यते । ततश्चायस्कृत् अयस्कृतमयस्कार इत्यादि सिध्यति ।

**समः** । **सम्यङिति** । सम्यगञ्चतीति सम्यङ् ।

**सह** । **सध्र्यङिति** सह अञ्चतीति ।

**अषष्ठ्य** । [9]अन्यदाशीरादयः सर्वे कर्मधारयाः ।

---

१. अप्रत्ययान्ते $B_2$, $D_2$. २. After it—सध्र्यङ् $D_4$. $D_5$. ३. अन्यस्य $B_2$, $Dc_1$. ४. $B_1$ has after it—अन्यास्मिन् भवः अन्यदीयः ।; $B_2$, $Dc_1$, $D_5$ have अन्यदीयम् after it. ५. अन्याशीः dropped $D_4$. ६. न कार्यं $Dc_3$. ७. वप्रत्ययान्त एव $Dc_2$. ८. एव हि $Dc_4$. ९. अन्यदाशीत्यादय $Bc_1$, $Dc_1$, $Dc_4$.

कारकस्थयोरिष्यते एव ।[1] अन्यस्य कारकः अन्यत्कारकः । अन्यस्येदमन्यदीयम् । गर्हादित्वात् छः ।

**अर्थे विभाषा ॥६।३।१००॥**

अन्यदर्थम् । अन्यार्थम् ।

**कोः कत्तत्पुरुषेचि ॥६।३।१०१॥**

कु इत्यस्य कदादेशः स्यादचि ॥ कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा ।[2] त्रौ च[3] ॥* कुत्सितास्त्रयः कत्त्रयः ।

**रथवदयोश्च ॥६।३।१०२॥**

कद्रथः । कद्वदः ।

---

कारकस्थयोरिति । अनयोः षष्ठीतृतीयास्थयोरपि इष्यत एव । तथोक्तं भाष्ये ।

'दुगागमोविशेषेण वक्तव्यः कारकस्थयोः ।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु '॥ इति ।

अर्थे । अन्यदर्थमिति । अन्यस्मै इदम् । 'चतुर्थी तदर्थार्थ—' इति समासः ।

कोः । कदन्नमिति । कुत्सितमन्नम् । 'कुगति—' इति समासः । कूष्ट्र इति । कुत्सिता उष्ट्रा अस्येति बहुव्रीहिः । त्रौ चेति । त्रिशब्दे परेऽपि[4] कोः कदादेशो वक्तव्य इत्यर्थः । अनजादित्वादप्राप्ते वचनम् ।

रथ । कोः कदादेशः स्याद्रथवदयोरुत्तरपदयोः । अनजाद्यर्थो योगः । एवमुत्तरत्रापि ।

---

१. After it—दुगागमो विशेषवक्तव्यः । कारकस्थयोः षष्ठीतृतीययोर्नेष्टः । आशीरादिषु सप्तसु B₂. २. After it—अचीति किम् । कुपुरुषः । B₂. ३. त्रौ च । त्रौ परे कु इत्येतस्य कदादेशः स्यात् । कुत्सितास्त्रयः &c. B₂. ४. अपि dropped Dc₂.

**तृणे च जातौ ॥६।३।१०३॥**

कत्तृणम् ।

**का पथ्यक्षयोः ॥६।३।१०४॥**

कोः कादेशः स्यात् पथ्यक्षयोः ॥ कापथः । काक्षः । कुपथोपीति केचित् ।

**ईषदर्थे च ॥६।३।१०५॥**

ईषज्जलं काजलम् ।[1]

**विभाषा पुरुषे ॥६।३।१०६॥**

कापुरुषः । कुपुरुषः ।

---

तृणे । कत्तृणं नाम तृणजातिविशेषः । जातौ किम् । कुत्सितानि तृणानि कुतृणानि ।

का । अनीषदर्थ आरम्भः । **कापथ** इति । 'ऋक्पुर्—' इत्यः । **काक्ष** इति । कुत्सितोक्षः काक्षः । कुत्सितोक्षोस्येति वा । **कुपथ** इत्यादि । तथोक्तं **मुग्धबोधे** । 'पथि पुरुषे वा' इति ।

**ईष** । ईषदर्थे वर्तमानस्य कोः का इत्ययमादेशः स्यात् ।

**विभाषा** । 'ईषदर्थे' इत्यस्य निवृत्तत्वात् अप्राप्तविभाषेयम् । ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यः का भवति । ईषत्पुरुषः कापुरुषः ।

---

१. After it—कालवणम् । काम्लम् $B_2$.

**कवं चोष्णे ॥६।३।१०७॥**

कवोष्णम्[1] । चकारात् कदुष्णम् । कोष्णम् । अग्नावपीति केचित् । कदाग्निः[2] । काग्निः ।

**पृषोदरादीनि यथोपदिष्टम् ॥६।३।१०९॥**

एतानि यथोपदिष्टान्येव[3] साधूनि । पृषदुदरं[4] पृषोदरम् ।

---

**कवं च** । उष्णशब्दे परे कोः कव इत्ययमादेशः स्यात् । **अग्नावपीति** । तथोक्तं मुग्धबोधे । 'कौ[5] कवौ चाग्न्युष्णे' इति ।

**पृषोदरादीनि** । एतानीति । पृषोदरादीनि पृषोदरप्रकाराणि । येषां लोपागमवर्णविकाराः शास्त्रेण न विहिता लोके च[6] दृश्यन्ते तानि यथास्थितानि यथोपदिष्टानि साधूनि स्युरित्यर्थः । यथास्थितानीति । कुत्र यथास्थितानि । शिष्टप्रयोगेषु[7] । के ते शिष्टाः । ये अविसंवादिनः तैरुपदिष्टानि तथैवोपगन्तव्यानि । यदि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या । शिष्टवचनादेव शब्दानां साधुत्वं विज्ञास्यते । शिष्टज्ञानार्था अष्टाध्यायी । तथा हि अष्टाध्यायीमधीतवान् पुरुषोयमनधीताष्टाध्यायीकमप्यष्टाध्याय्यां विहितान् शब्दान् प्रयुञ्जानं पश्यन्नेवमध्यवस्यति । नूनमस्य देवानुग्रहः[8] । स्वभावो वा योयं न चाष्टाध्यायीमधीतवान् अस्यां च विहितान् शब्दान् प्रयुङ्क्ते । नूनमयमन्यानपि जानातीत्येवमेषा शिष्टज्ञानायाष्टाध्यायी । पृषोदरमित्यत्र तस्य लोपः । निरुक्तशास्त्रे ये शब्दा व्युत्पाद्यन्ते तेषां पृषोदरादित्वादेव साधुत्वमिष्यते । तथोक्तम्[9] ।

---

१. चकारात् कवोष्णम् । कदुष्णम् C; ईषदुष्णं जलं कवोष्णम् P; कवोष्णम् । कोष्णम् । चकारात् कदुष्णम् $D_4$. २. P, $D_1$ and $B_2$ have कवाग्निः । before it; C has कवाग्निः । काग्निः । $D_2$ has कवाग्निः । कदग्निः । and drops काग्निः ।; कवाग्निः । कदग्निः । काग्निः । $D_4$, $D_5$. ३. यथास्थितान्येव $D_1$, $D_5$. ४. पृषत उदरं पृषोदरम् $B_2$, $D_4$, $D_5$. ५. कत्कवौ in मुग्ध°. ६. Dropped $Bc_1$. ७. प्रयोगे $Dc_2$, $Dc_4$. ८. देवता° $Dc_2$. ९. यथोक्तम् $Dc_1$, $Dc_4$.

भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥
मह्यामतिशयेन रौतीति मयूरः । आकृतिगणोयम् ॥

---

'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥' इति निश्चयेनोक्तोर्थोनेनेति निरुक्तम् । तदेतत् पञ्चविधं निरुक्तमुदाहर्तुं पद्यं कृतं भवेदित्यादि । अपूर्वस्य वर्णस्यागमनं वर्णागमस्तस्मात् हंस इति शब्दो भवेत् । तथा हि हन्तेर्गत्यर्थात् पचाद्यचि कृते तस्य सकार आगमः । ततश्च हन्ति गच्छतीति हंस इति भवति । वर्णविपर्ययो वर्णस्थानव्यत्यासस्तस्मात् सिंहशब्दो भवेत् । तथा हि । हिंसि हिंसायामस्मात् पचाद्यचि कृते हकारसकारयोः स्थानव्यत्यासः । ततश्च हिनस्तीति सिंह इति भवति । वर्णस्य विकृतिर्वर्णस्य रूपान्तरापत्तिस्तस्यां गूढोत्मेति शब्दो भवेत् । तथा हि । गूढ आत्मा गूढोत्मेत्याकारस्योकाररूपापत्तिः । वर्णनाशो वर्णलोपः । तस्मात् पृषोदरशब्दो भवेत् । तथा हि । पृषोदरमित्यत्र तकारस्य लोपः । धातोस्तदर्थातिशयेन योगः । अर्थातिशयोर्थविशेषः । प्रसिद्धादर्थादर्थान्तरेण धातोः संबन्धः । तल्लक्षणं निरुक्तमुदाहरति । **मह्यामतिशयेन रौतीति मयूर** इति । अत्र रौतेः शब्दक्रियस्यातिशयलक्षणेनार्थान्तरेण योगो जातः । रौतेः पचाद्यचि टिलोपो महीशब्दस्य मयू आदेशः । आकृतिगणोयमिति ।

---

१. The verse is dropped P. २. गूढात्मा $D_1$. ३. मह्यामतिशयेन रौतीति मयूरः given before the verse—$D_3$, $B_1$. ४. वर्णविकृति° $Dc_2$. ५. Before it—भ्रमन् सन् रौतीति भ्रमरः । अत्र तकारलोपः । वाणारसीति । वाणाः असीत्यत्र विसर्गस्य रत्वापत्तिः । शुनश्चिच्छेफमित्यत्र शुनः शेफं चित् अत्र चित्शेफयोर्विकारः । चित्स्थाने शेफः । शेफस्थाने चित् । $Dc_3$.

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ॥६।३।११६॥

क्विबन्तेष्वेषु परेषु पूर्वस्य दीर्घः स्यात् ॥ उपानत् । इत्यादि ॥

---

तेन वारिवाहको वलाहकः जीवनस्य मूतो जीमूतः । शवानां शयनं श्मशानम् । ऊर्ध्वं खमस्य उलूखलम् । पिशिताशः पिशाचः । ब्रुवन्तोस्यां सीदन्तीति वृषी । अश्व इव तिष्ठति अश्वत्थः । महीव तिष्ठति महित्थः । कपिरिव तिष्ठति कपित्थः । इत्यादयोन्ये प्रयोगवशात् ज्ञेयाः । दिक्शब्देभ्यः परस्य तीरस्य तारादेशो वा । दक्षिणतीरम् । दक्षिणतारम् । वाचो वादे डत्वं वल्भावश्चोत्तरपदस्य ञिप्रत्यये । वाचं वदतीति वाग्वादः । तस्यापत्यं वाड्वलिः । दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च । कृच्छ्रेण दाश्यते नाश्यते दभ्यते दूडाशः दूणाशः दूडभः । दभेरनुनासिकलोपो निपातनात् । दुष्टं ध्यायतीति दूढ्यः ।

नहि । नह बन्धने । वृतु वर्तने । वृषु सेचने । व्यध ताडने । रुच दीप्तौ । षह मर्षणे । तनु विस्तारे । **उपानदिति** । उपनह्यत इति उपानत् । संपदादित्वात् क्विप् । आदिना निवर्तते नीवृत् । 'अन्येभ्योपि-' इति क्विप् । एवं सर्वत्र । प्रावृट् । मर्मावित् । नीरुक् । ऋतीषट् । 'सहेः पृतनर्ताभ्यां च' इत्यत्र योगविभागात् षः । परीतत् । 'गमः क्वौ' इत्यत्र गमादीनामिष्यत इति तनोतेर्नलोपः । क्वौ किम् । परिणहनम् । गतिकारकयोरेव दीर्घो नेह । पटरुक् ।

---

१. Dropped $B_1$. २. उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । ऋतीषट् । परीतत् । इत्यादि । क्विबन्तेष्विति किम् । परिनह्यते $B_2$, $D_5$ (परिनहनम् $D_5$). ३. After it—बन्धः $Dc_3$. ४. पिशितं मांसमश्नातीति पिशाचः पिशिताशः । अथवा पिशितमत्तीति पिशिताशः पिशाचः । $Dc_3$.

**वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्** ॥६।३।११७॥

कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे दीर्घः स्यात्[1] ॥ किंशुलुकागिरिः ॥[2]

**वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** ॥८।४।४॥

एभ्यो वनस्य णत्वं स्यान्नाम्नि[3] ॥ पुरगावणम्[4] । कोटरावणम्[5] । अग्रेवणम् । इत्यादि । एभ्यः किम् । कुबेरवनम् ॥[6]

---

वनगि । कोटरामिश्रक । सिध्रक । सारिक । पुरग । कोटरादिः । किंशुलुक[7] । साल्व । नभ्र । अञ्जन । भञ्जन । लोहित । कर्कट । किंशुलुकादिः[8] ।

वनं पु । वनमिति । सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमेत्याभिप्रेत्याह । एभ्यो वनस्येति । 'पूर्वपदात्–' इत्येव सिद्धे वनस्य एभ्य एव परस्य णत्वमिति नियमार्थं वचनम् । कृतदीर्घाणां निर्देशो यत्रैव दीर्घत्वं तत्रैव नियमो यथा स्यात् । ततो नास्ति विपरीतनियमाशङ्का । न हि वनादन्यत्रैषां पूर्वपदभूतानां दीर्घोस्ति । पुरगावणमिति षष्ठीसमासः । अग्रेवणमिति । वनस्याग्रे । राजदन्तादित्वात् परनिपातः । आदिना मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् ।

---

१. किंशुल्कादी° C. २. Dropped $D_1$. ३. After it—नाम्नि $B_1$, $B_2$, $D_5$. ४. किंशुल्का° C. Before it—कोटरावणम् । $B_2$. ५. Dropped $D_1$; Before it—पुरगावणम् $B_2$. ६. After this the Sûtras :—

**'मतौ बह्वचोनजिरादीनाम्'** ॥६।३।११९॥

बह्वचो दीर्घः स्यात् मतौ परे संज्ञायाम् । अमरावती । पुष्करावती । अनजिरादीनामिति किम् । अजिरवती । खदिरवती ( From अनजि° to खदिरवती dropped $B_2$ ; खदिरवती dropped $D_4$).

**शरादीनां च** ॥६।३।१२०॥

एषां दीर्घः स्यात् पूर्वविषये । शरावती । वंशावती । are dropped $D_3$, $D_4$, C, $B_2$. ७. किंशुलक $Bc_1$, $Dc_1$. ८. किंशुलकादिः $Bc_1$, $Dc_1$, $Dc_3$.

**उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥६।३।१२२॥**

प्रादेर्बहुलं दीर्घः स्याद् घञन्ते परे ॥ परीहासः । परिहासः । अमनुष्ये किम् । निषादः ॥[1]

शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः ॥*
श्वादन्तः । श्वापदम् । इत्यादि ।

---

**उपसर्गस्य** । उपसर्गात् केवलात् घञ् न संभवति इति घञन्त उत्तरपदे कार्यं विज्ञायत इत्याह । **घञन्ते परे** इति । **परीहास** इति । हसे हसने । घञ् । निषाद इति । निषीदत्यस्मिन् पापमिति 'हलश्च' इति घञ् ।

**शुन** इत्यादि । श्वादन्त इति । शुनो दन्तः । आदिना श्वादंष्ट्रः[2] । श्वाकर्णः । श्वाकुन्दः । श्वावराहः । श्वापुच्छः । एतद्व्याख्यानेनैव व्याख्यातप्रायत्वात् कानिचित् प्रपञ्चत्वात् कानिचित् स्पष्टत्वाच्च त्यक्तानि 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारसूत्राणि अष्टादश व्याख्यायन्ते । 'कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य' । ६।३।११५॥ कर्णशब्दे उत्तरपदे लक्षणवाचिनां दीर्घः स्यात् विष्टादीन् विना । पशूनां स्वामिविशेषज्ञापनार्थं यद्दात्राकारादि क्रियते चिह्नं तदिह लक्षणं गृह्यते । दात्राकर्णः । द्व्यङ्गुलाकर्णः । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्ण इत्यादि । अत्र 'संहितायाम्' इति वर्तते । तेन पदकाले न । 'इको वहे पीलोः' । ६।३।१२१॥ इगन्तस्य पीलुवर्जितस्य वहे उत्तरपदे दीर्घः स्यात् । ऋषीवहम् । कपीवहम् । इकः **किम्** । पिण्डवहम् । अपील्वादीनां वाच्यम् ।

---

१. After it—**अष्टनः संज्ञायाम्** ॥६।३।१२५॥
अस्य दीर्घः स्यात् संज्ञायामुत्तरपदे ॥ अष्टावक्रः । संज्ञायां किम् । अष्टपुत्रः ॥ D3, C; B2 has instead—सादकारयोः । कृत्रिके दीर्घो वक्तव्यः । प्राकारः । प्रासादः । २. श्वादंष्ट्रा P.

पीलुवहम् । दारुवहम् । 'अष्टनः संज्ञायाम्' । ६।३।१२५॥ अष्टन उत्तरपदे दीर्घः स्यात् । अष्टावक्रः । अष्टापदम् । संज्ञायां किम् । अष्टपुत्रः । 'चितेः कपि' । ६।३।१२७॥ चितिशब्दस्य कप्प्रत्यये परे दीर्घः स्यात् । एकचितीकः । द्विचितीकः । 'शेषाद्विभाषा' इति कप् । 'नरे संज्ञायाम्' । ६।३।१२९॥ नरशब्दे उत्तरपदे विश्वशब्दस्य दीर्घः स्यात् संज्ञायाम् । विश्वानरो नाम यस्य वैश्वानरिः पुत्रः । संज्ञायां किम् । विश्वे नरा अस्य विश्वनरः । 'मित्रे चर्षौ' । ६।३।१३०॥ मित्रे उत्तरपदे विश्वस्य दीर्घः स्यात् ऋषौ वाच्ये । विश्वामित्रो नाम ऋषिः । ऋषौ किम् । विश्वमित्रो माणवकः । हृदयशब्देन समानार्थो हृत्शब्दः प्रकृत्यन्तरमस्ति इति तत एव सिद्धे प्रपञ्चार्थत्वात् त्यक्तं सूत्रद्वयं व्याख्यायते । 'हृदयस्य हृल्लेखयदण्लासेषु' ।६।३।५०॥ हृदयस्य हृदादेशः स्यात् लेखयत्अण्लासेषु परतः । हृदयं लिखति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः । लेख इत्यणन्तग्रहणम् । घञि तु हृदयस्य लेखो हृदयलेख इत्येव । एतदेव लेखग्रहणं ज्ञापकमुत्तर-पदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्तीति । 'वा शोकष्यञ्रोगेषु' ।६।३।५१॥ एतेषु परेषु हृदयस्य वा हृत् । हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः । स्पष्टत्वात् त्यक्तानि । 'पादस्य पदाज्यातिगोपहतेषु' ।६।३।५२॥ पदादेशोदन्तो विभक्तिलुकं कृत्वा निर्दिष्टः । पादस्य पदादेशः स्यादाज्यादिषु परतः । पादाभ्या-मजतीति पदाजिः । पादाभ्यामततीति पदातिः । औणादिक इण् । अत एव निपातनादजेर्विभावो न । पादाभ्यां गच्छति पदगः । एते कृत्स्वरेण समासान्तोदात्ताः । पादेनोपहतः पदोपहतः । अन्तोदात्तोयम् । 'हिमकाषिहतिषु च' ।६।३।५४॥ 'पद्यत्यतदर्थे' इत्यतः 'पद्' इति वर्तते । एषु पादस्य पद् । पद्धिमम् । पत्काषिणः । पद्धतिः । 'वा घोषमिश्रशब्देषु' ।६।३।५६॥ एषु परेषु पादस्य पद्वा । पद्घोषः । पादघोषः । पद्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ।

निष्के चेति वाच्यम्। पन्निष्कः। पादनिष्कः। 'कारे सत्यागदस्य'। ६।३।७०॥ कारे उत्तरपदे सत्यागदयोर्मुम् स्यात्। सत्यं करोति सत्यस्य वा कारः सत्यंकारः। अगदंकारः। 'अस्तुंकार इत्यपि वाच्यम्'। 'धेनोर्भव्यायां मुम्'। धेनुंभव्या। 'लोकस्य पृणे'। लोकंपृणः। 'इत्येनभ्याशस्य'। अनभ्याशमित्यः। 'भ्राष्ट्राग्न्योरिन्धे'। भ्राष्ट्रमिन्धः। अग्निमिन्धः। 'उष्ट्रभद्रयोः करणे'। उष्ट्रंकरणम्। भद्रंकरणम्। 'सूतोग्रराजभोजमेरुभ्यो दुहितुः पुत्रड्वादेशः'। सूतपुत्री। सूतदुहितेत्यादि। केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति तेषां पुत्रीति स्यात्। तेन शैलपुत्रीत्यादि सिद्धम्। 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या'। ६।३।७५॥ एषु नञ् प्रकृत्या स्यात्। न भ्राजते नभ्राट्। न पातीति नपात्। शत्रन्तः। न वेत्तीति नवेदाः। असुन्नन्तः। सत्सु साधवः सत्याः। न सत्याः असत्याः। न असत्या नासत्याः। न मुञ्चतीति नमुचिः। औणादिकः किः। नास्य कुलमस्तीति नकुलः। नास्य खमस्तीति नखः। न स्त्री न पुमान् नपुंसकम्। स्त्रीपुंसयोः पुंसकभावो निपातनात्। न क्षरति न क्षीयते वा नक्षत्रम्। क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते। न क्रामतीति नक्रम्। क्रमेर्डप्रत्ययो निपातनात्। नात्राकमस्तीति नाकः। 'नगोप्राणिष्वन्यतरस्याम्'। ६।३।७७॥ नग इत्यत्र नञ् वा प्रकृत्याप्राणिषु। नगाः। अगाः। पर्वताः। गमेर्डः। अप्राणिषु किम्। अगो वृषलः शीतेन। 'सहस्य सः संज्ञायाम्' ।६।३।७८॥ सह इत्यस्य सादेशः स्यात् उत्तरपदे संज्ञायाम्। साश्वत्थः। संज्ञायां किम्। सहयुध्वा। सादेश उदात्तो निपात्यते। स निपातस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र तत्र भवति। अन्यत्र समासान्तोदात्तत्वेन बाध्यते। सेष्टि। सपशुबन्धमिति अन्तवचनेऽव्ययीभावः। 'ग्रन्थान्ताधिके च'। ६।३।७९॥

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥८।४।५॥**

एभ्यो वनस्य णत्वं स्यात् ॥ प्रवणम् । एवं निर्वणादि ॥

---

अनयोर्वर्तमानस्य सहस्य सः स्यात् ग्रन्थान्ते । सकलं समुहूर्तं ज्योतिषमधीते कलान्तं मुहूर्तान्तमित्यन्तवचनेव्ययीभावः । तत्र कालवाचिन्युत्तरपदे 'अव्ययीभावे चाकाले' इति न प्राप्नोतीत्यारम्भः । अधिके । सद्रोणा खारी । द्रोणाधिकेत्यर्थः । 'द्वितीये चानुपाख्ये' । ६।३।८०॥ द्वयोः सहप्रयुक्तयोरप्रधानं द्वितीयः । उपाख्यायते प्रत्यक्षत उपलभ्यत इत्युपाख्यः । तस्मादन्योनुपाख्योनुमेयस्तस्मिन् द्वितीयेनुपाख्ये सहस्य सः स्यात् । साग्निः कपोतः । सपिशाचा वात्या । सराक्षसिका निशा । अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमाना अनुपाख्या भवन्ति । 'प्रकृत्याशिष्यगोवत्सहलेषु' । ६।३।८३॥ सहशब्दः प्रकृत्या स्यादाशिषि गोवत्सहल इत्येतान्युत्तरपदानि विना । स्वस्ति देवदत्ताय सहपुत्राय सहछात्राय । अगोवत्सहले किम् । स्वस्ति सगवे सवत्साय सहलाय । 'वोपसर्जनस्य' इति वा सः ।

प्रनिरन्तः । प्रवणमित्यादि । प्रगतं वनम् । निर्गतं वनम् । प्रादिसमासः । आदिना अन्तर्वणम् । विभक्त्यर्थेव्ययीभावः । शरवणम् । इक्षुवणम् । प्लक्षवणम् । आम्रवणम् । कार्ष्यवणम् । खदिरवणम् । पीयूक्षवणम् । षष्ठीतत्पुरुषः ।

---

१. असंज्ञायामपि after it in $B_1$, $D_5$; संज्ञायामसंज्ञायामपि $B_2$.
२. निर्वणादिषु $B_2$; निर्वणमित्यादि $D_5$. ३. प्रणि° $Dc_3$.

**विभाषौषधिवनस्पतिभ्यः** ॥८।४।६॥

एतद्वाचिभ्यो[१] वनस्य णत्वं वा[२] स्यात् ॥ दूर्वावणम्[३] । बदरीवणम् । पक्षे दूर्वावनम् । इत्यादि । द्वित्र्यक्षरेभ्य एव । नेह । देवदारुवनम् ।

इरिकादिभ्यो न ॥* इरिकावनम्[४] । मिरिकावनम् ।

**वाहनमाहितात्** ॥८।४।८॥

यदारोपितमुह्यते तद्वाचिस्थान्निमित्तात्[५] परस्य वाहननकारस्य णत्वं स्यात् ॥ इक्षुवाहणम् । शरवाहणम् ।[६]

---

**विभाषा** । बहुवचनादर्थपरो निर्देश इत्याह ।

**एतद्वाचिभ्य** इति । औषधिवनस्पतिवाचकेभ्यः परस्य वनस्येत्यर्थः ।

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।

औषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥ इति सत्यपि वृक्षवनस्पत्योर्भेदे इहाभेदो ज्ञेयः ।

**वाहन** । उह्यतेऽनेनेति वाहनम् । करणे ल्युट् । अत एव निपातनात् उपधादीर्घः । तत्रानेकार्थत्वाद् धातूनां दधातिरारोपणे वर्तत इत्यत 'आहिताद्' इत्यस्य 'आरोपिताद्' इत्यर्थः स्यादित्येतत् सर्वं चेतसि कृत्वाह । **यदारोपितमुह्यत** इति । आहितमिति भूतकालो न विवक्षितस्तेन यदापि वाहनार्थमिक्ष्वाद्युपकल्पितं नारोपितं तदापि इक्षुवाँहणमिति स्यात् । **इक्षुवाहणमित्यादि** । इक्षूणां वाहनं शराणां वाहनम् । कृद्योगलक्षणायाः कर्मषष्ठ्याः समासः । आहितात् किम् । दाक्षिवाहनम् । दाक्षिस्वामिकं वाहनमित्यर्थः ।

---

१. $B_1$ has परस्य after it. २. $B_1$, $D_5$ drop it. ३. C and $D_1$, $D_5$ have दूर्वावणम् । शिरीषवणम् । बदरीवणम् । for दूर्वा° to बदरीवणम् ; P, $D_4$ have दूर्वावणम् । पूर्वावणम् । शिरीषवणम् । बदरीवणम् । पक्षे दूर्वावनमित्यादि. ४. $D_1$, $D_2$ drop it ; गिरिकावनम् $B_2$, $D_5$. ५. तद्वाचिनि स्था° $D_1$ ; तद्वाचिनि स्थिता° $D_4$, $D_5$. ६. दर्भवाहणम् after it $D_4$. ७. °वाहन° $Dc_3$.

**पानं देशे ॥८।४।९॥**

पूर्वपदस्थान्निमित्तात् परस्य पानस्य णत्वं स्याद्देशे गम्ये[1] ॥ क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः ।

**वा भावकरणयोः ॥८।४।१०॥**

प्रागुक्तनिमित्तात्परस्य भावे करणे च निष्पन्नस्य पानस्य वा णत्वं स्यात् ॥ क्षीरपाणम्[2] । क्षीरपानम् ।[3] करणे । क्षीरपाणं क्षीरपानं वा पात्रम् ।

गिरिनद्यादीनां वा ॥[4]* गिरिणदी । चक्रणदी । चक्रणितम्बा । पक्षे । गिरिनदी । इत्यादि ।

---

**पानम्** । **क्षीरपाणा उशीनरा** इत्यादि । अतिशयोत्र प्रतीयते न तु क्षीरपानादिमात्रम् । तस्यान्यत्रापि सद्भावात् । ननु क्षीरपाणादिशब्दा उशीनरादिशब्दाश्च मनुष्ये वर्तन्ते न देशे तत् कथमेतद्देशाभिधानम् । नैष दोषः । उशीनरादिदेशसंबन्धद्वारा मनुष्येषु[5] वर्तन्ते तेन मनुष्याभिधानेपि देशाभिधानं गम्यत एव ।

**वा भाव** । आदेशार्थ आरम्भः । **क्षीरपाणमिति** । पीतिः पानम् । नपुंसके भावे ल्युट् । **क्षीरपाणं** वा पात्रमिति क्षीरं पीयतेनेनेति 'करणाधिकरणयोश्च' इति करणे ल्युट् । **गिरिनद्यादीनां** वेति । णत्वं वक्तव्यमिति शेषः ।

---

१. गम्यमाने $B_2$. २. क्षीरपानम् । क्षीरपाणम् । $D_4$. ३. C has वर्तते after it. ४. गिरिणदी ॥ गिरिनदी । चक्रनितम्बा C; गिरिनदी । चक्रणदी । चक्रणितम्बा । पक्षे । गिरिनदी । इत्यादि $B_1$. ५. मनुष्येषु $Dc_3$.

**प्रातिपदिकान्तनुम्विभक्तिषु च ॥८।४।११॥**

पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णत्वं वा स्यात् ॥ प्रातिपदिकान्ते । माषवापिणौ । नुमि । व्रीहिवापाणि । विभक्तौ । माषवापेण । पक्षे[1] । माषवापेनेत्यादि[2] । समासे[3] सति प्रातिपदिकान्तस्यैवेष्यते । नेह । माषाणां वापिनी ।[4]

---

**प्राति** । **माषवापिणाविति** । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । **व्रीहिवापाणीति** । व्रीहीन् वपन्तीति कर्मण्यण् । 'जस्शसोः शिः' । 'नपुंसकस्य झलचः' । इति नुम् । 'सर्वनामस्थाने च' इत्युपधादीर्घः । **माषवापेणेति** । अणन्तात् तृतीयैकवचनम् । 'टाङसिङसाम्' इतीनादेशः । **समासे सतीति** । समासे जाते पश्चाद्यः प्रातिपदिकान्ते[5] नकारस्तस्यैव णत्वमिष्यते । अयं भावः । 'पूर्वपदात्' इत्यनुवर्तते । पूर्वपदशब्दश्च संबन्धिशब्दत्वादुत्तरपदं संनिधापयति । तेन पूर्वपदात् परमुत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव नस्य णः । समासे जाते एव हि कश्चिच्छब्दः पूर्वपदं कश्चिच्चोत्तरपदमिति रूढिः । तेन समासे सति यः प्रातिपदिकान्तस्तस्यैव णत्वमिति सिध्यति । **माषाणां वापिनीति** । वापोस्त्यस्या वापिनी । मत्वर्थीय[6] इनिः । ततो नान्तत्वाद् ङीप् । ततः षष्ठीसमासः । न ह्यत्र नान्त उत्तरपदं किं तु ईबन्तः । स च प्रातिपदिकं न । अप्रत्यय इति निषेधात् । न च तस्यान्तो नकारः ।

---

१. After it—इत्यादि and drops पक्षे...इत्यादि $D_5$. २. माषवापिनाविन्त्यादि $B_1$. ३. उपपदसमासे $B_2$. ४. After it—माषवापिनी $D_1$, $D_2$, $D_4$, $D_5$. ५. कान्तो $Dc_3$. ६. मत्वर्थ इनिः । $Dc_3$.

समासे स्यादेव। माषान् वपतीति माषवापिणी माषवापिनी।

युवादेर्न ॥* रम्ययूना। रम्यपक्वेन। रम्याह्ना।

### एकाजुत्तरपदे णः ॥८।४।१२॥

णग्रहणं नित्यार्थम्। वृत्रहणौ। हरिं मानयतीति हरिमाणी। नुमि। क्षीरपाणि। विभक्तौ। क्षीरपेण। रम्यविणा।

### कुमति च ॥८।४।१३॥

कवर्गवत्युत्तरपदे प्राग्वत् ॥ हरिकामिणौ। हरिकामिण। श्रीकामाणि। श्रीकामेण।

---

**समासे स्यादेवेति**। समासे जाते यः प्रातिपदिकान्तो नस्तस्य णः स्यादेवेत्यर्थः। **माषान् वपतीत्यादि**। अत्र 'गतिकारकोपपदानां कृद्भिः समासः प्राक् सुबुत्पत्तेः' इति ङीबागमनात् प्रागेव समासो जातः इति समासे जाते प्रातिपदिकान्तो नकारो भवत्येवेति णत्वं जातम्।

**युवादेर्नेति**। वक्तव्यमिति शेषः।

**एकाच्**। एतच्छब्दप्रकरणे व्याख्यातम्। **वृत्रहणाविति**। 'ब्रह्मभ्रूण—' इति क्विप्। **हरिं मानयतीत्यादि**। 'क्विप्' इति क्विप्। प्राक् सुबुत्पत्तेः समासः। नान्तत्वात् ङीप्। **क्षीरपाणीति**। पातेः पिबतेर्वा 'आतोनुपसर्गे कः'। **रम्यविणेति**। रम्यश्चासौ विश्च रम्यविस्तेन। 'आङो नास्त्रियाम्' इति तृतीयैकवचनस्य नादेशः।

**कुमति**। अनेकाजुत्तरपदार्थ आरम्भः। **हरिकामिणाविति**। हरिं कामयेते। पूर्ववत् णिनिः। **श्रीकामाणीति**। कर्मण्यण्।

---

१. उपपदसमासे $B_2$. २. After it—पक्वाह्ना। $D_4$. ३. पुनर्णत्वग्रहणं नित्यत्वार्थम् $B_2$. ४. नित्यत्वार्थम् $B_2$. ५. हरिं मानयतीति dropped $D_5$. ६. च प्राग्वत् $D_1$, $D_4$. ७. ङीबागमात् $Dc_3$.

असमासे तु गर्गाणां भगिनी[1] । समासे[2] तु गर्गभगिनी ।

**पदव्यवायेपि ॥८।४।३८॥**

पदेन [3]व्यवधानेपि णत्वं न स्यात् ॥ माषकुम्भवापेन । चतुरङ्गयोगेन ।

अतद्धित इति वाच्यम् ॥* आर्द्रगोमयेण । [4]शुष्कगोमयेण ।

---

**असमासे** त्विति । यतः समासे जाते प्रातिपदिकान्तस्यैवेष्यते अतोसमासे प्रातिपदिकान्तस्य न भवतीत्यर्थः । भगो विद्यतेस्याः सा भगिनी । मत्वर्थीय इनिः । काविति वाच्ये कुमतीति वचनमकवर्गादावपि यथा स्यात् । तेन वस्त्रयुगिणावित्यादि सिध्यति । अन्यथा यस्मिन् विधिस्तदादावल्ग्रहणे इति कवर्गादावेव स्यात् न कुमति सर्वत्र ।

पद । **माषकुम्भवापेने**त्यादि । माषाणा कुम्भः । तं वपतीति कर्मण्यण् । माषकुम्भवापः । तेन । चत्वार्यङ्गान्यस्य चतुरङ्गस्तेन योगस्तेन । **आर्द्रगोमयेणे**ति । 'गोश्च पुरीषे' इति मयुट् । गोमयं ततः कर्मधारयः । 'स्वादिष्वसर्वनामस्थाने' इति गोशब्दस्य पदसंज्ञा । एतद्व्याख्यानेनैव व्याख्यातप्रायत्वात् स्पष्टत्वाच्च त्यक्तानि त्रीणि सूत्राणि व्याख्यायन्ते । 'षात् पदान्तात्' ॥८।४।३५॥ पदे परतो योन्तः षस्तस्मात् परस्य नस्य णत्वं न । निष्पादनम् । दुष्पादनम् । पदे परतोन्तः किम् । यजुष्केण । 'अन्तरदेशे' ॥८।४।२४॥ अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानमित्युपसर्गसंज्ञाया णत्वविधौ विद्यमानत्वात् 'हन्तेरत्पूर्वस्य' इति सिद्धे णत्वे आदेशविषये यथा स्यादित्यस्यारम्भः । अन्तःशब्दात् परस्य हन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । 'अन्तरपरिग्रहे' इति गतिसंज्ञकत्वात् समासः । अदेशे किम् । अन्तर्हननो देशः । अधिकरणे ल्युट् । 'अयनं च' ॥८।४।२५॥ अयतेरिणो वा ल्युटि रूपमयनमिति । तस्यान्तःशब्दात् परस्यादेशे णत्वं स्यात् । अन्तरयणम् । देशे तु अन्तरयनो देशः ।

---

१. After it—गर्गभगिनी $D_4$, $D_5$. २. P and C, $Dc_1$, $D_4$ drop समासे तु. ३. व्यवायेपि C, $D_3$, $D_1$, $B_1$. ४. C drops it.

**पारस्करप्रभृतीनि च संज्ञायाम् ॥६।१।१५७॥**

**एतानि ससुट्कानि निपात्यन्ते नाम्नि ॥ पारस्करः । किष्किन्धा । प्रायश्चित्तम् । वनस्पतिः । इत्यादि । आकृतिगणोयम् ।**

---

पारस्कर । पारस्करादयो रूढिशब्दा यथाकथंचिन्निष्पाद्याः । पारं करोतीति पारस्करो वृक्षः ।[१][२] किं किं दधातीति किष्किन्धा गुहा । प्रायः चित्तं प्रायश्चित्तम् । वनस्य पतिर्वनस्पतिः । आकृतिगणत्वादविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्यः । ततश्च किष्कुर्हस्तः । रथस्या नदी प्रस्तुम्पतिर्गौरित्यादयो ज्ञेयाः । एतस्यैव सूत्रस्य प्रपञ्चः 'कुस्तुम्बुरूणि जातिः' इत्यादीनि त्रयोदश सूत्राणि अत एवात्र न व्याख्यातानि तानि व्याख्यामः । 'कुस्तुम्बुरूणि जातिः' ॥६।१।१४३॥ कुस्तुम्बुरूणीति सुट् निपात्यते जातिश्चेत् स्यात् । कुस्तुम्बुरुरोषधिजातिः । तत्फलान्यपि कुस्तुम्बुरूणि । सूत्रे क्लीबनिर्देशोविवक्षितः । जातिः किम् । कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि । तुम्बुरुशब्देनात्र तिन्दुकफलान्युच्यन्ते । समासेन तेषां कुत्सा । 'अपरस्पराः क्रियासातत्ये' ॥६।१।१४४॥ अपरस्परा इति क्रियासातत्ये सुट् निपात्यते । अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियासातत्ये किम् । अपरे च परे च सकृदेव गच्छन्ति अपरपरा गच्छन्ति । नात्र गमनस्य प्रबन्धो विवक्षितः । 'गोष्पदं सेवितासेवितप्रमाणेषु' ॥६।१।१४५॥ गोष्पदमिति सुट् षत्वं च सेवितासेवितप्रमाणेषु निपात्यते । गावः पद्यन्तेत्र देशे स गोभिः सेवितो गोष्पदः । असेविते अगोष्पदान्यरण्यानि । ननु नार्थ एतेन गोष्पदनिषेधादगोष्पदं स्यात् । सत्यमेतत् । किं तु यत्र तु सेवितप्रसङ्गोस्ति तत्रैव स्यादगोष्पदमिति । यत्र त्वत्यन्तमसंभव एव तत्र न स्यात् । असेवितग्रहणात् तत्रापि स्यात् । यानि महान्त्यरण्यानि येषु गवामसंभवस्तान्यगोष्पदान्युच्यन्ते । प्रमाणे । गोष्पदपूरं वृष्टो देवः ।

---

१. Dropped $D_5$. २. After it—कारं करोतीति कारस्करो वृक्षः । $Dc_3$.

नात्र गोष्पदपदं स्वार्थं ग्रहीतुमुपादीयते किं तु क्षेत्रस्य वृष्टेश्चेयत्तां परिच्छेत्तुम् । सेवितादौ किम् गोः पदं गोपदम् । 'आस्पदं प्रतिष्ठायाम्' ॥६।१।१४६॥ प्राणधारणार्थं स्थानं प्रतिष्ठा तस्यामास्पदं निपात्यते । आस्पदमनेन लब्धम् । प्रतिष्ठायां किम् । आपदात् आपदम् । 'आश्चर्यमनित्ये' ॥६।१।१४७॥ अनित्यतया विषयभूतया अद्भुतमिह लक्ष्यते तत्राश्चर्यं निपात्यते । आश्चर्यं सोधीयीत । अनित्ये किम् । आचर्यं कर्म शोभनम् । 'वर्चस्केवस्करः' ॥६।१।१४८॥ कुत्सितं वर्चो वर्चस्कमन्नमलं तत्रावस्करो निपात्यते । अवकीर्यत इत्यवस्करो-न्नमलम् । तत्संबन्धाद्देशोपि तथोच्यते । वर्चस्के किम् । अवकरः ब्रह्मचारिणः स्त्रियां रेतःसेकोवकरः । 'अपस्करो रथाङ्गम्' ॥६।१।१४९॥ रथाङ्गेपस्करो निपात्यते । अपस्करो रथावयवः । रथाङ्गे किम् । अपकरः । 'विष्किरः शकुनिर्विकिरो वा' ॥६।१।१५०॥ शकुनौ वाच्ये एतौ निपात्यौ ।

'सर्वे शकुनयो भक्ष्या[१] विष्किराः कुक्कुटादृते' । विकिरो वा । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो मा भूदिति । 'प्रतिष्कशश्च कशेः' ।६।१।१५२॥ कश गतिसाधनयोरित्यस्य धातोः प्रतिपूर्वस्य पचाद्यजन्तस्य सुट् । तस्य षत्वं च निपात्यते ।

'ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः' ।

वार्तासहायः पुरोयायी वा प्रतिष्कश इत्यभिधीयते । कशेः किम् । प्रतिगतः कशां प्रतिकशोश्वः । अत्र यद्यपि कशेरेव कशा तथापि कशेरिति धातूपादानं कशिं प्रत्युपसर्गस्यैव प्रतेःप्रतिपत्त्यर्थम् । तेन धात्वन्तरं प्रत्युपसर्गत्वादत्र नेति भावः । 'प्रस्कण्वहरिश्चन्द्रावृषी' ॥६।१।१५३॥ एतौ निपात्यौ ऋषी चेत् । प्रस्कण्व ऋषिः । हरिश्चन्द्र ऋषिः । ऋषी किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः । 'मस्करमस्करिणौ

१. अभक्ष्या (ऽभक्ष्या) in $Dc_2$.

अधःशिरसी पदे ॥८।३।४७॥

अनुत्तरपदयोरनयोर्विसर्जनीयस्य सः स्यात् पदशब्दे परे समासे ॥ अधस्पदम् । शिरस्पदम् । अन्यत्र । शिरसः पदम् । परमाशिरःपदम् ।

---

वेणुपरिव्राजकयोः' ॥६।१।१५४॥ मकरशब्दोयमव्युत्पन्नं प्रातिपदिकं तस्य वेणौ वाच्ये सुट् निपात्यते परिव्राजके त्विनिरपि । मस्करो वेणुः । मस्करी परिव्राजकः । एतयोः किम् । मकरो ग्राहः । मकरी समुद्रः । केचित्तु मा क्रियते निषिध्यतेनेनेति मस्करो वेणुः । माङ्युपपदे कृञोच्प्रत्ययं माङो ह्रस्वत्वं सुटं च निपातयन्ति । माकरणशीलो मस्करी । ताच्छील्ये इनिः । माङो ह्रस्वत्वं सुटं च निपातयन्ति । स ह्येवमाह । मा कृषत कर्माणि शान्तिर्वः श्रेयसीति । 'कास्तीराजस्तुन्दे नगरे' ॥६।१।१५५॥ एतौ नगरे निपात्येते । ईषत्तीरमस्य कास्तीरं नगरम् । अजस्येव तुन्दमस्य अजस्तुन्दं नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् । 'कारस्करो वृक्षः' ॥ ६।१।१५६॥ कारं करोतीति कारस्करो वृक्षः। वृक्षे किम् । कारकरः ।

अधः । 'नित्यं समासेनुत्तरपदस्थस्य' इत्यतः 'समासे' इत्यनुवृत्तेः पदशब्देन स्वरूपमेव गृह्यते न सुप्तिङन्तमित्यभिप्रेत्याह । **पदशब्दे परे समासे** इति । एतत्सूत्रव्याख्यानेनैव व्याख्यातप्रायत्वात् स्पष्टत्वाच्च त्यक्तानि समासे सत्वषत्वविसर्जनीयमूर्धन्यविधायकानि पञ्चदशसूत्राणि व्याख्यामः ।

---

१. Before it—अनुत्तरपदे किम् $B_2$; dropped $D_5$. २. सुटं माङो ह्रस्वत्वं च $Dc_2$.

'इदुदुपधस्य चाप्रत्ययस्य' ॥८।३।४१॥ इकारोपधस्योकारोपधस्य चाप्रत्ययविसर्गस्य षः स्यात् कुप्वोः। निष्कृतम्। दुष्कृतम्। बहिष्कृतम्। आविष्कृतम्। चतुष्कृतम्। प्रादुष्कृतम्।[1] अप्रत्ययविसर्गस्य किम्। अग्निः करोति। 'पुंमुहुसोर्निषेधः'। पुंस्कामा। मुहुःकामा। नैष्कुल्यं निष्कुलमित्यत्र बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वम्। 'द्विस्त्रिश्चतुरिति कृत्वोर्थे' ॥८।३।४३॥ एषां विसर्गस्य कुप्वोः परयोः षो वा। द्विःकरोति। द्विष्करोति। त्रिःकरोति। त्रिस्करोति। चतुःकरोति। चतुष्करोति। कृत्वसुजर्थे किम्। चतुःकपालम्। 'इसुसोः सामर्थ्ये' ॥८।३।४४॥ इस उसश्च विसर्गस्य कुप्वोः षो वा। सर्पिः करोति। सर्पिष्करोति। सर्पिः पचति। सर्पिष्पचति। यजुः करोति। यजुष्करोति। यजुःपठति। यजुष्पठति। सामर्थ्ये किम्। तिष्ठतु सर्पिः पिबत्वमुदकम्। 'नित्यं समासेनुत्तरपदस्थस्य' ॥८।३।४५॥ इसुसोर्विसर्गस्य अनुत्तरपदस्थस्य कुप्वोः नित्यं षः समासे। सर्पिष्फलम्। धनुष्फलम्। अनुत्तरपदस्थस्य किम्। परमसर्पिः फलम्। परमसर्पिः करोति। 'समासेङ्गुलेः सङ्गः' ॥८।३।८०॥ अङ्गुलिशब्दात् परस्य सस्य मूर्धन्यः समासे। अङ्गुलिषङ्गः। समासे किम्। अङ्गुलेः सङ्गः। 'परिस्कन्दः प्राच्यभरतेषु' ॥८।३।७५॥ 'परेश्च' ॥८।३।७४॥ इति स्कन्देः प्राप्तस्य मूर्धन्यस्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु। परिस्कन्दः। प्राच्यभरतेषु किम्। परिस्कन्दः। परिष्कन्दः। 'परेश्च' इति वा मूर्धन्यः। 'भीरोः स्थानम्' ॥८।३।८१॥ भीरोरुत्तरस्य स्थानस्य सस्य मूर्धन्यः समासे। भीरुष्ठानम्। असमासे तु भीरोः स्थानम्। 'ज्योतिरायुषः स्तोमः' ॥८।३।८३॥ आभ्यां स्तोमसकारस्य मूर्धन्यः। ज्योतिष्टोमः। आयुष्टोमः। 'अभिनिसः स्तनः शब्दसंज्ञायाम्' ॥८।३।८६॥ अभिनिस्पूर्वात् स्तनतेर्मूर्धन्यो वा शब्दसंज्ञायाम्। अभिनिष्टानो वर्णः। शब्दसंज्ञायां

१. After it—यजुष्कृतम् $Dc_3$. २. After it—'तस्य परमाम्रेडितम्' तस्य पूर्वशब्दसदृशतममेव परशब्दमाम्रेडितसंज्ञं स्यात्। आम्रेडिते परे विसर्गस्य सो वा स्यात्। यथा कांस्कान्। काᳲकान्। पक्षे कान् कान्। $Dc_3$.

किम् । अभिनिः स्तनति मृदङ्गः । 'सूत्रं प्रतिष्णातम्' ॥८।३।९०॥ सूत्रे निपात्यते । प्रतिष्णातं सूत्रम् । प्रतिस्नातमन्यत् । 'कपिष्ठलो गोत्रे' ॥८।३।९१॥ गोत्रमत्र स्वसंतानव्यपदेशहेतुराद्यः पुरुषो गृह्यते । स कपिष्ठलो नाम यस्य पुत्रः कापिष्ठलिः । गोत्रे किम् । कपीनां स्थलं कपिस्थलम् । 'प्रष्ठोऽग्रगामिनि' ॥८।३।९२॥ प्रतिष्ठत इति प्रष्ठः । अग्रगामी चेत् । अन्यस्तु प्रस्थः । 'वृक्षासनयोर्विष्टरः' ॥८।३।९३॥ विष्टरो वृक्षः । विष्टरमासनम् । 'छन्दोनाम्नि च' ॥८।३।९४॥ इह मूर्धन्यः । विष्टारपङ्क्तिश्छन्दः । अन्यो विस्तारः । 'विकुशमिपरिभ्यः स्थलम्' ॥८।३।९६॥ एभ्यः स्थलस्य मूर्धन्यः । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् । 'सुषामादिषु च' ॥८।३।९८॥ एषु मूर्धन्यः । शोभनं साम अस्य सुषामा । दुःषामा । सुषेधः । दुःषेधः । सुषन्धिः । दुष्षन्धिः । सुष्ठु । दुःष्ठु । तिष्ठतेरौणादिके कुप्रत्यये सत्येतौ व्युत्पादितौ । गौरिषक्थः । प्रतिष्णिका । जलाषाहम् । [2]निषेवणम् । सुषेविता । दुन्दुभिषेवणम् । 'एतिसंज्ञायामगात्' ॥८।३।९९॥ इण्कोरगात् परस्यैकारपरस्य सस्य मूर्धन्यः । हरिषेणः । एति किम् । हरिसन्धिः । संज्ञायां किम् । पृथुसेनः । अगकारात् किम् । विष्वक्सेनः । 'नक्षत्राद्वा' ॥८।३।१००॥ रोहिणीषेणः । रोहिणीसेनः । अगादित्येव । शतभिषक्सेनः । अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः । 'निसस्तपतावनासेवने' ॥८।३।१०२॥ अनासेवनमपौनःपुन्यं तस्मिन्नर्थे तपतौ परे निसः सस्य मूर्धन्यः । निष्टपति सकृदग्निं स्पर्शयतीत्यर्थः । निष्टप्ता अरातयः इत्यत्रासेवनेपि छान्दसो वर्णव्यत्ययः ।

इति समासान्तादिप्रक्रिया ॥

१. उच्यते $Bc_1$, $Dc_5$. २. नैषिवणम् $Dc_2$.

## अलुक्समासः

**पञ्चम्याः स्तोकादिभ्यः ॥६।३।२॥**

स्तोकादिभ्यः परस्याः पञ्चम्या अलुक् स्यादुत्तरपदे परे॥[1] समासे प्राप्तो[3] लुक् निषिध्यते। स्तोकान्मुक्तः। एवं अन्तिकार्थदूरार्थकृच्छ्रेभ्यः। उत्तरपदे किम्। निष्क्रान्तः स्तोकान्निःस्तोकः।

**ओजःसहोम्भस्तमसस्तृतीयायाः ॥६।३।३॥**

अलुक्। ओजसाकृतम्। सहसाकृतम्। अम्भसाकृतम्।[4] तमसाकृतम्।[5]

---

इदानीमलुक्समासमाह। **पञ्चम्याः**। अत्र 'अलुगुत्तरपदे' इत्यधिक्रियते इत्यभिप्रेत्याह। **अलुक् स्यादुत्तरपदे** इति। **स्तोकान्मुक्त** इति। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। स्तोकादयः प्रातिपदिकपाठे न पठ्यन्ते। तस्मात् 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति सूत्रपठिता एव गृह्यन्ते इत्यभिप्रेत्याह। **एवमन्तिकार्थ**— इत्यादि। द्विवचनबहुवचनान्तानां स्तोकादीनामनभिधानात् समास एव नास्तीति स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति न कदाचिदस्यैकपद्यमैकस्वर्यं च स्यात्। 'ब्राह्मणाच्छंसिन उपसंख्यानम्'। ब्राह्मणाच्छंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषस्य रूढिः।

**ओजः**। **ओजसा कृतमित्यादौ** 'कर्तृकरणे कृता बहुलम्' इति समासः। 'अञ्जस उपसंख्यानम्'। अञ्जसाकृतम्। 'पुंसानुजः जनुषान्ध इत्युपसंख्यातव्यम्'। स्पष्टत्वात् त्यक्तमेकं व्याख्यायते। 'मनसः संज्ञायाम्' ॥६।३।४॥ मनसः परस्यास्तृतीयाया अलुक् स्यात् संज्ञायाम्। मनसागुप्ता। मनसासंगता। संज्ञायां किम्। मनोदत्ता कन्या।

---

१. न लुक् $B_1$. २. $D_1$, $D_4$, $D_5$ drop it. ३. प्राप्त $D_1$; प्राप्ते स्तोकाद्भ्यो लुक् $B_2$. ४. P has तमसाकृतम्। अम्भसाकृतम्. ५. After this— मनसः संज्ञायाम्। मनसाकृतम्। संज्ञायां किम्। मनोदत्ता कन्या $B_2$.

**आज्ञायिनि च ॥६।३।५॥**

मनसस्तृतीयाया अलुक् स्यात् आज्ञायिन्युत्तरपदे ॥ मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ।

**आत्मनश्च पूरणे ॥६।३।६॥**

पूरणार्थे परपदे आत्मनस्तृतीयाया अलुक् ॥ आत्मनापञ्चमः । आत्मनाषष्ठः ।

प्रकृत्यादिभ्यश्च ॥ प्रकृत्याभिरूपः ।[2]

**वैयाकरणाख्यायां चतुर्थ्याः ॥६।३।७॥**

आत्मनश्चतुर्थ्या अलुक् स्यात् वैयाकरणाख्यायाम् ॥

---

**आज्ञायिनि** । **मनसाज्ञायीति** । ताच्छीलिको णिनिः ।

**आत्मनः** । **प्रकृत्यादिभ्यश्चेति** । प्रकृत्यादिभ्यः परस्यास्तृतीयाया अभिरूपादावुत्तरपदे अलुक् स्यादिति वक्तव्यमिति केचिदित्यर्थः । तथोक्तमिन्दुमत्यां वृत्तौ । प्रकृत्यादिभ्यश्चेति । प्रकृत्याभिरूप इति । अथवा नन्वात्मना पञ्चम इत्यादौ कथं तृतीया कथं च समास इत्याशङ्क्याह । प्रकृत्यादिभ्यश्चेत्यादि । प्रकृत्यादिभ्यश्चेत्युपसंख्यानेन प्रकृत्याभिरूप इतिवत् तृतीया । ततश्च तृतीयेति योगविभागात् समास इति भावः । कथं 'जनार्दनस्त्वात्मचतुर्थ एवे'ति । उच्यते । बहुव्रीहिरयम् । आत्मा चतुर्थोऽस्येति ।

**वैयाकरण** । **वैयाकरणाख्यायामिति** । व्याकरणमधीयते विदन्ति वा वैयाकरणाः । तेषामाख्या संज्ञा । यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्यां गम्यमानायामित्यर्थः ।

---

१. आज्ञापयितुम् $B_2$. २. C has after it—प्रकृत्याचारुः । सदृशः । तृतीयेति योगविभागात् समासः कथं तर्हि जनार्दनस्त्वात्मचतुर्थ एवेति । बहुव्रीहिरयम् । आत्मा चतुर्थोऽस्येत्यात्मचतुर्थः । ; $B_2$ has प्रकृत्याचारुः after it.

आत्मनेपदम् । आत्मनेभाषा । अलुग्विधिसामर्थ्याच्चतुर्थीसमासः ।

**परस्य च ॥६।३।८॥**

परस्मैपदम् । परस्मैभाषा ।

**हलदन्तात् सप्तम्याः संज्ञायाम् ॥६।३।९॥**

हलन्तादन्ताच्च[1] सप्तम्या अलुक् स्यात् संज्ञायाम् ॥

**गवियुधिभ्यां स्थिरः ॥८।३।९५॥**

आभ्यां स्थिरसकारस्य षः स्यात् ॥ गविष्ठिरः । युधिष्ठिरः । त्वचिसारः । अदन्तात् । अरण्येतिलकः । अत्र संज्ञाया[2]मिति[3] सप्तमीसमासः ।

---

**आत्मनेपदमिति** । आत्मार्थं पदम् । **आत्मनेभाषा** । आत्मार्था भाषा । तादर्थ्ये चतुर्थी । ननु केनात्र समास इत्याशङ्क्याह । **अलुग्विधिसामर्थ्यादिति** ।

**परस्य** । परस्य च चतुर्थी तस्या वैयाकरणाख्यायामलुक् स्यात् । परस्मैपदम् । पूर्ववच्चतुर्थीसमासौ । **हलदन्तात्** । **गवि** । स्थिरशब्दोयं यदा 'अजिरशिशिरशिथिल[4]स्थिर—' इत्यादिकेन सूत्रेण[5] तिष्ठतेः किरच्प्रत्ययान्तो निपात्यते तदा 'सात् पदाद्योः' इति निषेधे[6] प्राप्ते वचनम् । यदा त्वव्युत्पन्नं प्रातिपदिकं तदा त्वप्राप्ते एव[7] वचनम् ।

**गविष्ठिर इति** । अत्र 'गवियुधिभ्याम् —' इति निपातनादलुक् । अत्रेत्यादि । अत्रेति गविष्ठिर इत्यादावित्यर्थः । हलदन्तात् किम् । नद्यां कुक्कुटिका नदीकुक्कुटिका । संज्ञाया किम् । अक्षशौण्डः ।

---

१. $B_1$, P, $D_1$, and $D_5$ drop च. २. संख्याया $D_1$. ३. संज्ञायां विषये सप्तमी सुपा नित्यं समस्यते इति सप्तमीसमासः । $D_4$, इति dropped $D_5$. ४. शिखर $Dc_1$, $Bc_1$ for शिथिल. ५. इत्यादिना औणादिकेन सूत्रेण $Dc_1$, $Dc_4$, $Dc_3$. ६. Dropped $Dc_2$, $Dc_4$. ७. Dropped $Dc_1$.

हृद्द्युभ्यां च ॥* हृदिस्पृक् । दिविस्पृक् ।

**मध्याद्गुरौ** ॥६।३।११॥

अत्रापि प्राग्वत् । मध्येगुरुः ।

अन्ताच्च ॥* अन्तेगुरुः ।

---

हृद्द्युभ्यां चेति । असंज्ञार्थं वक्तव्यम् । हृदिस्पृगित्यादि । हृदयं स्पृशति[१] दिवं स्पृशति । 'स्पृशोऽनुदके क्विन्' । द्वितीयार्थे सप्तमी । तथोक्तं **भाष्ये** । अन्यार्थे[२] चैषां सप्तमी द्रष्टव्या हृदयं स्पृशतीति हृदिस्पृगिति । स्पष्टत्वात् त्यक्तम् । 'कारनाम्नि च प्राचां हलादौ' ॥ ६।३।१०॥ वणिगादिभी राज्ञे देयोंऽशः कारः । प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् स्यात् । सूपेशाणः । हलेद्विपदिका । पूर्वेण सिद्धे नियमार्थम् । त्रिविधोऽत्र नियमः । कारनाम्न्येव प्राचामेव हलादावेवेति । कारनाम्नि किम् । अभ्यागतपशुः । कारादन्यस्य देयस्यैतन्नाम । प्राचां किम् । यूथपशुः । हलादौ किम् । अविकटे उरणः अविकटोरणः । हलदन्तात् किम् । नदीदोहनी ।

**मध्यात्** । **प्राग्वदिति** । सप्तम्या अलुगित्यर्थः । मध्येगुरुः । **अन्तेगुरुरिति** । सप्तमीति योगविभागात् समासः ।

---

१. Dropped $D_5$. २. वचनम् $Dc_1$. ३. After it in both places इति $Dc_1$. ४. चैव $Dc_1$.

अमूर्धमस्तकात् स्वाङ्गादकामे ॥६।३।१२॥

स्वाङ्गात् सप्तम्या अलुक् ॥[1] कण्ठेकालः । उरसिलोमा । उदरेमणिः । अमूर्धमस्तकात् किम् । मूर्धशिखः[3] । मस्तकशिखः । अकामे किम् । मुखे[4] कामोस्य मुखकामः ।

बन्धे च विभाषा ॥६।३।१३॥

बन्धे परपदे[5] सप्तम्या अलुग्वा[6] ॥ हस्तेबन्धः । हस्तबन्धः । चक्रेबन्धः ।[7] चक्रबन्धः । '[8]सिद्धशुष्क—' इति समासः ।

तत्पुरुषे कृति बहुलम् ॥६।३।१४॥

कृति परपदे सप्तम्या बहुलमलुक् तत्पुरुषे[9] ॥ स्तम्बेरमः[10] । कर्णेजपः ।[11] अत्र[12] च[13] न स्यात् । कुरुचरः । 'उपपदम्—' इति समासः ।

---

अमूर्ध । स्वाङ्गमद्रवादिलक्षणं पारिभाषिकं गृह्यते । कण्ठेकाल इत्यादि । कण्ठेकालोस्येति व्यधिकरणानामपि बहुव्रीहिः । समानाधिकरणानां बहुव्रीहिरिष्यत इत्यस्य प्रायिकत्वात् । स्वाङ्गात् किम् । अक्षशौण्डः ।

बन्ध । बन्ध इति घञन्तो गृह्यते । उभयत्र विभाषेयम् । स्वाङ्गात् बहुव्रीहौ पूर्वेण नित्यं प्राप्ते स्वाङ्गादस्वाङ्गाच्च तत्पुरुषे 'नेन्सिद्धबध्नातिषु च' इति निषेधादप्राप्ते हलन्तादित्येव । गुप्तिबन्धः । ननु हस्तबन्धादिषु केन समास इत्याशङ्क्याह । सिद्धशुष्केतीति ।

तत्पुरुषे । स्तम्बेरमः । कर्णेजपः । 'स्तम्बकर्णयो रमिजपोः' इत्यच् । कुरुचर इति । 'चरेष्टः' ।

---

१. $B_1$ has उत्तरपदे after it. २. C has कण्ठे कालोस्येति before it. ३. मूर्धमणिः । मस्तकमणिः । $D_4$. ४. मुखे कामोस्य मुखकामः । $D_4$. ५. पदे परे $B_1$. ६. स्यात् after it in $B_1$, $D_2$. ७. पक्षे चक्रबन्धः $B_2$; चक्रबन्धः dropped $D_5$. ८. सिद्धशुष्कपक्वबन्धश्चेति सप्तमीसमासः $B_1$, $D_4$ (श्चेति समासः $D_4$). ९. स्यात्तत्पुरुषे $B_1$, $B_2$. १०. $B_1$ has कुञ्जरः after it. ११. $B_1$ has पिशुनः after it. १२. न च स्यात् P, $D_1$, $D_2$; बहुलमित्युक्तेः क्वचिन्न स्यात् । कुरुचरः $B_2$; क्वचिन्न स्यात् $Dc_1$; इह for अत्र $D_5$. १३. च dropped $D_4$, $D_5$.

**प्रावृट्शरत्कालदिवां जे ॥६।३।१५॥**

जे परपदे एभ्यः सप्तम्या अलुक्[१] ॥ प्रावृषिजः । शरदिजः । कालेजः[२] । दिविजः ।

**विभाषा वर्षक्षरशरवरात् ॥६।३।१६॥**

एभ्यो जेपरे अलुग्वा ॥ वर्षेजः । वर्षजः । इत्यादि ।[३]

**शयवासवासिष्वकालात् ॥६।३।१८॥**

एषु परेष्वकालवाचिनः सप्तम्या अलुग्वा[४] ॥

---

**प्रावृट्** । पूर्वस्य प्रपञ्चः । **प्रावृषिज** इति । 'सप्तम्यां जनेर्डः' । टिलोपः । उपपदसमासः ।

**विभाषा** । आदिना क्षरेजः । क्षरजः । शरेजः । शरजः । वरेजः । वरजः । स्पष्टत्वात् त्यक्तमेकम् । 'घकालतनेषु कालनाम्नः' ॥६।३।१७॥ घसंज्ञकप्रत्यये परे कालशब्दे तनप्रत्यये च कालनाम्नः परस्याः सप्तम्या अलुग्वा स्यात् । पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे । पूर्वाह्णेकाले । पूर्वाह्णकाले । पूर्वाह्णेतने । पूर्वाह्णतने । कालनाम्नः किम् । शुक्लतरे । हलदन्तादित्येव । रात्रितमायाम् । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते । लेखग्रहणाल्लिङ्गात् । तेनेह घतनग्रहणे तदन्तविधिर्न भवति ।

**शय** ।[५]

---

१. After it—तत्पुरुषः $B_2$. २. Dropped $D_2$. ३. After it—P, $D_4$ have—घकालतनेषु कालनाम्नः ॥६।३।१७॥ घे काले च तने च परे कालनाम्नः सप्तम्या वा अलुक् । पूर्वाह्णेतरा । पूर्वाह्णेकाले । पूर्वाह्णेतने ; (कालशब्दे for काले ; पूर्वाह्णेतराम् । पूर्वाह्णेतमाम् । पूर्वाह्णेकाले । पूर्वाह्णेतने । पक्षे पूर्वाह्णतरामित्यादि । हलदन्तादित्येव । रात्रितरायाम् । $D_4$); $B_2$ follows P and has after पूर्वाह्णेतने । हलदन्तादित्येव । रात्रितराम्. ४. वा अलुक् $B_2$. ५. After it—सूत्रं व्याख्यायते $Dc_3$.

खेशयः । ग्रामेवासः । ग्रामेवासी । पक्षे । खशयः । इत्यादि । हलदन्तादित्येव । नेह । भूमिशयः । अकालात् किम् । पूर्वाह्णशयः ।

अपो योनिजमतिषु ॥* अप्सुयोनिः । अप्सुजः । अप्सुमतिः ।

**षष्ठ्या आक्रोशे ॥६।३।२१॥**

आक्रोशे गम्ये षष्ठ्या अलुक् ॥ चोरस्यकुलम् । निन्दायां किम् । ब्राह्मणकुलम् ।

वाक्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥* वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ।

---

अपोयोनीति । अप् शब्दात् परस्याः सप्तम्याः योन्यादिषूत्तरपदेषु अलुग्वाच्य इत्यर्थः । काशिकावृत्तिकारस्तु जस्थाने यत् इति पठति स्म । अप्सव्य इति चोज्जहार । सर्वत्र सप्तमीति योगविभागात् समासः । स्पष्टत्वात् त्यक्ते द्वे । 'नेन्सिद्धबध्नातिषु च' ॥६।३।१९॥ इन्नन्ते परे सिद्धशब्दे बध्नातौ च सप्तम्या अलुक् न । स्थण्डिलशायी । साङ्काश्यसिद्धः । चक्रबन्धः । 'स्थे च भाषायाम्' ॥६।३।२०॥ स्थे चोत्तरपदे भाषायां सप्तम्या अलुक् न स्यात् । समस्थः । भाषायां किम् । कृष्णोस्याखरेष्ठः । 'पूर्वपदात्' इति षत्वम् ।

षष्ठ्याः । पूर्वत्र चानुकृष्टत्वात् नेतीह नानुवर्तते 'चानुकृष्टमुत्तरत्र नानुवर्तते' इति परिभाषायाः । वागित्यादि वक्तव्यम् । पश्यतोहर इति । 'षष्ठी चानादरे' इति षष्ठी । हर इति पचाद्यच् ।

---

१. पूर्वाह्णशयः $B_1$. २. ब्रह्मकुलम् $D_4$. ३. अप्सु योनिरिति $Dc_2$. ४. वृत्ति dropped $Dc_2$. ५. चोराजहार $Dc_4$, $Dc_3$. ६. After it—सूत्रे व्याख्यायेते । $Dc_3$. ७. न स्यात् $Dc_3$.

आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेत्यत्र[1] षष्ठ्या अलुग्वाच्यः ॥* देवानांप्रिय इति च मूर्खे ।

शेफ[2]पुच्छलाङ्गूलेषु शुनः ॥* शुनः[3]शेफः[4] । शुनःपुच्छः । शुनोलाङ्गूलः[5] ।

## पुत्रेन्यतरस्याम् ॥६।३।२२॥

षष्ठ्याः पुत्रे परेलुग्वा स्यात् निन्दायाम् ॥ दास्याःपुत्रः । दासीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ।

---

**आमुष्यायण** इति । अत्राप्यलुग्वाच्यः । अमुष्य अपत्यम् । अदःशब्दात् षष्ठ्यन्तात् 'नडादिभ्यः फक्' इति फक् । आमुष्यायण इति अमुष्यपुत्रिका अमुष्यकुलिका इत्यनयोरुपलक्षणम् । **देवानांप्रिय** इति स्या[6]दलुक् मूर्खेभिधेये इति वाच्यम् । शेफे[7]त्यादि । शुनः परस्याः षष्ठ्या अलुग्वाच्यः शेफादि[8]षु परेषु । दिवश्च दासे । षष्ठ्या अलुग् वाच्यः । दिवोदासाय गायति ।

**पुत्रे** ।

---

१. आमुष्यायणः । देवानांप्रिय इति मूर्खे C, $D_1$ ; $D_4$ (इति च मूर्खे $D_4$) आमुष्यायणः । देवानांप्रिय इति वाच्यम् P. २. शेप $D_4$. ३. Before it—एषु शुनः षष्ठ्या अलुग्वाच्यः $B_2$. ४. °शेपः $D_4$. ५. °लाङ्गूलम् $D_4$. ६. च स्यात् $Dc_4$, $Dc_2$ ; यस्मादलुक् $Bc_2$. ७. शेपेत्यादि $Dc_1$. ८. शेपादिषु $Dc_1$ ; शेफादिपरेषु $Dc_4$.

**ऋतो विद्यायोनिसम्बन्धेभ्यः ॥६।३।२३॥**

[1]विद्यायोनिसम्बन्धवाचिन[2] ऋदन्तात् षष्ठ्या अलुक् स्यात्॥ होतुरन्तेवासी। होतुःपुत्रः।[4]

**विभाषा स्वसृपत्योः ॥६।३।२४॥**

स्वसृपत्योः परयोः ऋदन्तात् षष्ठ्या अलुग्वा[3] स्यात्॥ ननान्दृपतिः। ननान्दुःपतिः। लुक्पक्षे।

**मातृपितृभ्यां स्वसा ॥८।३।८४॥**

आभ्यां परस्य स्वसुः सस्य षः स्यात्॥ मातृष्वसा। पितृष्वसा[6]। अलुक्पक्षे।

**मातुः पितुर्भ्यामन्यतरस्याम् ॥८।३।८५॥**

षष्ठ्यन्ताभ्यां [7]परस्य स्वसुः [8]सस्य षः स्याद्वा[5] समासे॥

---

ऋतो विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं कर्तव्यम्॥ विद्यासंबन्धवाचिन्येवोत्तरपदे यथा स्यादन्यत्र मा भूत्। होतृधनम्। पितृगृहम्।

विभाषा। लुक्पक्षे इति। स्वसृशब्दे परे यदा ऋकारान्तात् षष्ठ्या लुक् स्यात् तस्मिन् पक्षे इत्यर्थः।

मातृ। अभ्यर्हितत्वात् मातृशब्दस्य पूर्वत्वम्। पूर्वेण नित्ये प्राप्ते विभाषेयमारभ्यते। प्रकृतिप्रत्ययसमुदायस्य

---

१. विद्यासंबन्धयोनिसंबन्ध° C. २. °वाचिऋदन्तानां षष्ठ्या अलुक् स्यात् $B_1$. ३. अलुग्वा P, $B_1$, $D_3$. ४. After it—विद्यायोनिसंबन्धवाचिन्येवोत्तरपदे स्यात्। होतृधनम्। पितृधनम् $B_2$. ५. स्याद्वा $D_4$. ६. पितृष्वसा dropped $D_5$. ७. परस्य dropped P. ८. सकारस्य $B_2$.

[1]मातुष्वसा । मातुः स्वसा । पितुः ष्वसा । पितुः स्वसा । असमासे तु मातुः स्वसेत्येव[2] ॥

इति समासप्राक्रिया ॥[3]

---

मातुः पितुरित्यस्य मातृपितृशब्दाभ्यामन्यत्वात् ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे सुविशदमगमत् तत् **समासस्य कार्यम्** ॥[4]

---

१. पितुःष्वसा । मातुःष्वसा । पितुःस्वसा । मातुः स्वसा । $D_4$. २. After it—पितुः स्वसेत्येव नित्यम् $D_5$; नित्यम् $D_1$, $B_2$, $D_4$, $B_1$; 'नित्यं वीप्सयोः' इति द्वित्वे कृते 'एकं बहुव्रीहिवत्' द्विरुक्त एकशब्दो बहुव्रीहिवत् स्यात् तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । एकैकयाहुत्या । अनिर्दिष्ट-बहुव्रीहौ सर्वनामतानिषेधादयो न । एकैकस्यै देहि । कर्मव्यतिहारे सर्वनाम्नो द्वे समासवच्च वा । ते एते जयति । पारस्करादित्वात् सुट् । अन्योन्यम् । परस्परम् । स्त्रीक्लीबयोरुत्तरपरस्य विभक्तेर्वाम्भावः । अन्योन्यम् अन्योन्ये । अन्योन्यत् । $D_2$. ३. After it—समाप्ता C ; इति समासान्त-प्रक्रिया $D_4$. ४. सकलमभिहितो वेदसंख्यः समासः । $Dc_3$.

# अथ तद्धिताः

अथ तद्धिता निरूप्यन्ते[1] ।

उपगोरपत्यमिति विग्रहे ।

**प्राग्दीव्यतोण् ॥४।१।८३॥**

तेन दीव्यतीत्यतः प्राग्यदितः[2] परं वक्ष्यते तत्राण् प्रत्ययः स्यादिति ज्ञेयम् ।

**तस्यापत्यम् ॥४।१।९२॥**

तस्येति षष्ठी । समर्थादपत्येऽर्थे यथायथमणादयः[3] स्युः ।

---

**अथ तद्धिता** निरूप्यन्ते[4] । ते च द्विविधाः प्रकृत्यर्थभिन्नार्थाः स्वार्थिकाश्च । तत्र प्रथमं प्रकृत्यर्थभिन्नार्था उच्यन्ते । तेष्वपि प्रथमं प्राग्दीव्यतीयाः । तेष्वप्यपत्यार्थे प्रत्ययाः[5] प्रथममुच्यन्ते ।

**उपगो**रिति । औपगव इत्यस्यार्थबोधके ईदृशे वाक्ये[6] सतीत्यर्थः ।

**प्राग्दी** । इयं परिभाषा विधिर्वा नाधिकारस्तेनापवादविषयं परिहृत्य प्रवर्तते ।

**तस्य** । तस्येति षष्ठी । **समर्थादिति** । तस्येति सामान्यं षष्ठ्यन्तं विशेषोपलक्षणार्थम् । समर्थानामिति च निर्धारणषष्ठी । तत्र तुल्यजातीय-निर्धारणादयमर्थः स्यात् षष्ठ्यन्तात् समर्थादिति । **अपत्येऽर्थे** इति । प्रथमान्तस्यापत्यशब्दस्यान्यथासंबन्धायोगादित्यर्थ इत्यध्याहारलब्धम्[7] । अणादयः पूर्वे उत्तरे च । ननु च 'तस्येदम्' इत्येव सिद्धम् । यतः 'तस्येदम्' विशेषा एवापत्यसमूहविकारादयः । तस्मात् सूत्रं

---

१. अथ...निरूप्यन्ते is dropped in P, $D_4$, $D_5$, C, $B_2$, $D_2$. २. प्रागितः परं C. ३. याथायथ°; $D_1$ यथायथविहितम° $D_4$; यथास्व° $D_5$. ४. तद्धितो निरूप्यते $Dc_1$. ५. °पत्यार्थप्रत्ययाः $Dc_3$. ६. वाक्ये ईदृशे $Dc_2$. ७. °लब्धः $Dc_1$.

**समर्थानां प्रथमाद्वा ॥४।१।८२॥**

यदितः परं वक्ष्यते [1]प्राग् दिश इति यावत् तत् समर्थानां मध्ये प्रथमनिर्दिष्टाद्वा स्यादिति ज्ञेयम् ॥ इति षष्ठ्यन्तादण् ।

**तद्धितेष्वचामादेः ॥७।२।११७॥**

ञिति णिति च तद्धिते परे अचामादेरचो वृद्धिः स्यात् ॥ [2]विभक्तिलोपः । ओर्गुणः । अवादेशः । तद्धितत्वात् [3]प्रातिपदिकसंज्ञा ।

---

व्यर्थम् । मैवम् । बाधकबाधनार्थम् । 'तस्येदम्' इति कृतस्याणो बाधको यः सोपत्ये मा भूदितीदं सूत्रम् । एवं च सति भानोपत्यं भानव इत्यादौ छो न । अपत्यमात्रं चेह गृह्यते । लिङ्गवचनादिकमन्यत् सर्वमविवक्षितम् ।

**सम** । अत्र त्रयम[4]प्यधिक्रियते । समर्थानां प्रथमाद्वेति च । **प्राग्दिश इति यावदिति** । ततः परेषां सर्वप्रत्ययानां स्वार्थिकत्वात् तत्रास्योपयोगो नास्ति । विकल्पोपि तत्रानवस्थितः । तत्र हि केचिन्नित्यमेव स्युः । लक्षणवाक्येषु यत् प्रथमानिर्दिष्टं तस्मात् स्यादित्यर्थः । इति षठ्यन्तादणिति ।

ननु च तस्येति तच्छब्दः प्रथमनिर्दिष्टस्तस्मात् प्रत्ययेन भाव्यम् । सत्यम् । तस्येति सामान्यं विशेषोपलक्षणार्थम् । तेन तदीयं प्राथम्यं विशेषाणां विज्ञायते । **विभक्तिलोप** इति । 'कृत्तद्धितसमासाश्च' इति तद्धितान्तस्य प्रातिपदिकत्वात् 'सुपो धातुप्रातिपदिकयोः' इति उपगोरित्यस्याः षष्ठ्या लोप इति भावः । **ओर्गुण** इति । उकारस्य ओर्गुणः । **अवादेश** इति । 'एचोयवायावः' इति ।

---

१. प्राग्दिशो विभक्तिरिति $B_1$, $D_1$, $D_3$. २. Before it—सुपो धातुप्रातिपदिकयोरिति $B_1$, $B_2$. ३. $B_1$ drops प्रातिपदिकसंज्ञा; प्रातिपदिकत्वात् $D_4$. ४. अपि dropped $Bc_1$, $Dc_3$.

स्वाद्युत्पत्तिः आदिवृद्धिरन्त्योपधावृद्धिं बाधते । औपगवः । वाग्रहणाद्वाक्यमपि स्योदुपगोरपत्यमिति । अन्यतरस्यामित्यनुवृत्तेः समासोपि उपग्वपत्यमिति । समर्थग्रहणान्नेह । वस्त्रमुपगोरपत्यं चैत्रस्य । अणन्तत्वात् ङीप् । औपगवी स्त्री ।

**अपत्यं पौत्रप्रभृति गोत्रम् ॥४।१।१६२॥**

पौत्राद्यपत्यं गोत्रसंज्ञं स्यात् ॥

---

**स्वाद्युत्पत्तिरिति** । 'स्वौजसमौट्—' इत्यादिना । **आदिवृद्धिरिति** । उपगु अ इति स्थिते 'अचोञ्णिति' । इति यान्तस्य वृद्धिः प्राप्नोति तामादिवृद्धिर्बाधते । तथोपगव् अ इति स्थिते 'अत उपधायाः' इत्युपधाकारस्य वृद्धिः प्राप्नोति तां च बाधते परत्वादिति भावः । **वाग्रहणादिति** । 'समर्थानां प्रथमाद्वा' इति । **अन्यतरस्यामित्यनुवृत्तेरिति** । 'दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योन्यतरस्याम्' इत्यतः । **वस्त्रमुपगोरिति** । उपगोरित्यस्य वस्त्रमित्यनेन संबन्धः । अपत्यमित्यस्य चैत्रस्येत्यनेन संबन्धः । अतः उपगोरपत्यमनयोः सामर्थ्याभावादुपगुशब्दादण् न ।

**अपत्यम्** । संबन्धिशब्दत्वादपत्यशब्दस्य यस्य तदपत्यं तदपेक्षया पौत्रप्रभृतेः गोत्रसंज्ञा । तदयमत्र सूत्रार्थः । वस्तुतः पौत्रप्रभृतिरपत्यरूपेण प्रतिभासमानोर्थो यं प्रत्यपत्यरूपेण प्रतिभासते यं च प्रति वस्तुतः पौत्रप्रभृतिस्तं प्रति गोत्रसंज्ञः स्यादिति पौत्रप्रभृतिग्रहणमनन्तरस्य मा भूदित्येवमर्थम् ।

---

१. $B_1$, $D_4$ drop स्यात्. २. सामर्थ्यग्रहणा° P, $D_1$, $D_2$. ३. °संज्ञा $D_5$. ४. °मानार्थो $Dc_2$.

**एको गोत्रे ॥४।१।९३॥**

गोत्रे एक एव प्रत्ययः स्यात् न[1] प्रत्ययबाहुल्यम् । यद्वा मूलप्रकृतेरेव[2] प्रत्ययोत्पत्तिः । उपगोः पौत्रादिरौपगवः ।

**जीवति तु वंश्ये युवा ॥४।१।१६३॥**

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञं स्यान्न[3] गोत्रसंज्ञम् ।

**गोत्राद्यून्यस्त्रियाम् ॥४।१।९४॥**

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यान्न तु[4] मूलप्रकृत्यनन्तरयुवभ्यः न तु स्त्रियां युवसंज्ञादि[5] ॥

---

एको । गोत्रापत्येषु विवक्षितेषु भेदेन प्रत्ययोत्पत्तिप्रसङ्गेन नियमः क्रियते । संख्याप्रथमसमानासहायमुख्यान्यवाच्येकशब्दः । अत्र तु संख्यावाची विज्ञेयः प्रथमवाची वा । तत्र संख्यावाचिपक्षे प्रत्ययानियम इत्याह । **एक एव प्रत्ययः स्यान्न प्रत्ययबाहुल्यमिति** । प्रथमवाचित्वे प्रकृतिनियमस्तदा गोत्रे विवक्षिते एक एव शब्दः प्रथमाप्रकृतिः प्रत्ययमुत्पादयतीति सूत्रार्थमभिप्रेत्याह । **यद्वेति** ।

**जीव** । पित्रादिसंतानो वंशः । तत्र भवो वंश्यः पित्रादिः । पौत्रप्रभृतीत्येतत् प्रथमान्तमप्यनुवर्तमानमर्थादिह षष्ठ्यन्तं जायत इत्यभिप्रेत्याह । **पौत्रादेरिति** । **गोत्रसंज्ञमिति** । तुशब्दादेतत् । स खलु अवधारणार्थः सन् गोत्रसंज्ञां वारयति ।

**गोत्रात्** । नियमोयम्[6] । **न तु स्त्रियामित्यादि** । अयं भावः । यदि अस्त्रियामिति नियमः प्रतिषिध्यते तर्हि स्त्रियां नियमो न स्यात् । अथ युवप्रत्ययस्तर्हि स्त्रियां गोत्रप्रत्ययेनाभिधानं न स्यात् । गोत्रसंज्ञाया युवसंज्ञया बाधितत्वात् । तस्माद्योगविभागः कार्यः । गोत्राद्यूनीत्येको नियमः । अस्त्रियामिति द्वितीयः । तत्र यूनीति वर्तते । तत्र यूनि यदुक्तं तत् स्त्रियां न इति युवसंज्ञैव प्रतिषिध्यते ।

---

१. न तु $B_2$. २. °प्रकृतिरेव $D_1$. ३. $B_1$ drops स्यात्. ४. P, C, $Dc_1$ drop तु. ५. युवसंज्ञा $D_1$. ६. योगः for नियमः $Dc_3$.

औपगवस्यापत्यं युवेति विग्रहे ।

**अत इञ् ॥४।१।९५॥**

अकारान्तात्[1] षष्ठीसमर्थादिञ्[2] स्यादपत्येर्थे। अणोपवादः । औपगविर्युवा । अस्त्रियामित्युक्तेर्गोत्रप्रत्यये एव चतुर्थादौ औपगवी स्त्री । दक्षस्यानन्तरापत्यं गोत्रापत्यं वा दाक्षिः । युवापत्ये तु[3]

**यञिञोश्च ॥४।१।१०१॥**

गोत्रे यौ यञिञौ तदन्ताद्यूनि फक् स्यात् ॥

---

गोत्रसंज्ञा तु प्रवर्तत इति । **औपगवस्येति** । उपगोर्गोत्रापत्यस्य अपत्यं तच्च युवा इति विग्रहे कृते सतीत्यर्थः ।

**अत इञ्** । अत इत्यनेन प्रकृतं प्रातिपदिकं विशेष्यते । विशेषणेन च[4] तदन्तविधिः स्यादित्यभिप्रेत्याह । **अकारान्तादिति** । तपरकरणं किम् । शुभंयाः । अस्मान्मा भूत् । ननु 'प्रदीयतां दाशरथाय मैथिली' इत्यत्र कथमण् । शेषविवक्षायां स्यात् । दशरथस्यायं दाशरथ इति । **दक्षस्येति** । अनन्तरापत्यं साक्षादपत्यम् । **युवापत्ये त्विति** । दाक्षेरपत्यं युवेति विग्रहे विवक्षिते इति भावः ।

**यञिञोः** । गोत्रग्रहणेन यञिञौ विशेष्येते । तदन्ताद् गोत्राद्यून्यः स्त्रियामिति वचनाद्यून्येव स्यादित्यभिप्रेत्याह । **गोत्र** इत्यादि ।

---

१. अदन्तात् C, $D_1$, $D_2$, $D_3$, $D_5$, $B_1$, $B_2$. २. इञपत्येर्थे $D_3$, $B_1$; अपत्येर्थे इञ् स्यात् C; इञ् स्यादपत्ये $Dc_1$. ३. युवापत्यमिति $Dc_1$. ४. Dropped $Dc_2$.

## किति च ॥७।२।११८॥

किति च ताद्धिते परेऽङ्गस्यादेरचो वृद्धिः स्यात् ॥ फस्यायनादेशः । दाक्षायणः । दाक्षायणौ[1] । दाक्षायणाः । गर्गस्यानन्तरापत्यं गार्गिः । गार्गी[2] । गार्ग्यः । गोत्रापत्ये तु इञि प्राप्ते ।

## गर्गादिभ्यो यञ् ॥४।१।१०५॥

गर्गादिभ्यो गोत्रापत्ये यञ् स्यात् ॥ गार्गेरपत्यं गार्ग्यः । वात्स्यः ।

---

**किति** । आदेरच इति । अचामादेरच इत्यर्थः । **फस्येति** । 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति । दाक्षायण इति । 'यस्येति च' इतीकारलोपः । **दाक्षायणौ दाक्षायणा** इति । बहुत्वे तत्र[3] लुक्प्राप्तिर्नास्तीति दर्शनार्थम् ।[4] **गार्गिरिति** । 'अत इञ्' । ननु चात्र ऋष्यणा भाव्यम् । मैवम् । बाह्वादेराकृतिगणत्वादिञ् । एतच्चाग्रे स्वयमेव वक्ष्यति । **गोत्रापत्य** इति । 'एको गोत्रे' इति नियमात् ।

**गर्गादि** । गर्ग । वत्स । वाजासे । असमासे इत्यर्थः । वाज्यः । समासे तु सौवाजिः । संकृति । अज । व्याघ्रपात् । विदभृत् । प्राचीनयोग । पुलस्ति[5] । एत । अग्निवेश । शङ्ख । खट[6] । धूम । अवट । मनस् । धनंजय । वृक्ष । विश्वावसु । जरमाण । लोहित । शंसित । बभ्रु । वल्गु । मण्डु । मङ्क्षु । शङ्कु । अलिगु । गुहलु[7] । जिगीषु । मनु । ननु कथं मानवी प्रजेति । अपत्यसामान्येण् । मन्तु । तन्तु । मनायी । सूनु । कथक । ऋक्ष[8] । तेरुक्ष[9] । तलुक्ष[10] । तण्ड । वतण्ड[11] । कपि ।

---

१. दाक्षायणौ । दाक्षायणाः dropped $D_2$, $D_3$, $B_1$, P, C. २. गार्गी । गार्ग्यः dropped $D_3$, $B_1$, P, C. ३. अत्र $Dc_3$. ४. After it—'यस्येति च' इतीकारलोपः । $Dc_3$. ५. Before it—वलस्ति $Bc_1$, $Dc_3$, $Dc_4$. ६. खटेवट $Dc_3$. ७. हलगु $Dc_1$. ८. रुक्षक $Dc_1$, $Dc_3$. ९. तरक्ष $Dc_1$. १०. Before it—कच्छप $Dc_3$. ११. After it—कण्ड । मण्ड । अण्ड । $Dc_3$.

**यञञोश्च ॥२।४।६४॥**

एतयोर्लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः । तत्कृते किम् । प्रियगार्ग्याः । स्त्रियां तु । गार्ग्यः स्त्रियः । युवापत्ये तु फक्[1] ।

---

कत । कुरुकत । अनडुह । कण्व । शकल । गोकक्ष । अगस्त्य । कुण्डिनी । यज्ञवल्क । पर्णवल्क । अभयजात । विरोहित । वृषगण । रहूगण । शाण्डिल । मुद्गल । मुशल । पराशर । रामो जामदग्न्यः व्यासः पाराशर्य इति । अनन्तरेपि गोत्ररूपाध्यारोपः । अनन्तरविवक्षायामृष्यणेव । जामदग्नः पाराशरः । जतूकर्ण । मन्त्रित । अश्मरथ । शर्कराक्ष[2] । पूतिमाष । स्थूर । अरराक । पिङ्गल । कृष्ण । गोलन्द । उलूक । तितिक्ष । भिषज । भण्डित[3] । दण्ड । चिकित । देवहू । इन्द्रहू । एकलू । पिप्पलू । बृहदग्नि । जमदग्नि । सुलाभिन् । उक्थ । कुटीगु ।

**यञ्** । **तत्कृत** इति । यञ्प्रत्ययान्तेन अञ्प्रत्ययान्तेनैव कृते बहुत्वे । **प्रियगार्ग्या** इति । प्रियो गार्ग्यो येषां ते तथा । न चात्र यञ्प्रत्ययान्तकृतं बहुत्वं किं तु समासकृतम् । यञादीनामेकस्य द्वयोर्वा षष्ठीतत्पुरुषे लुग् वाच्यो वा । गार्ग्यस्य गार्ग्ययोर्वा कुलं गार्ग्यकुलं गर्गकुलं वा । वैदस्य वैदयोर्वा कुलं विदकुलं वैदकुलं वा । यञादीनां किम् । आङ्गकुलम् । तद्राजोयम् । न यञादिः । एकद्वयोः किम् । गर्गाणां धनं गर्गधनम् । तत्पुरुषे किम् । गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठी किम् । परमगार्ग्यः[4] ।

---

१. यञिञोश्चेति युवापत्ये फक् C. २. शर्कराक्ष Dc$_1$. ३. भडित Bc$_1$, Dc$_1$; भिडित Dc$_4$. ४. Before it—परमश्चासौ गार्ग्यश्च Dc$_3$.

**आपत्यस्य च तद्धितेनाति ॥६।४।१५१॥**

आपत्ययकारस्य तद्धिते परे लोपः स्यान्न त्वाकारे ॥[1] गार्ग्यस्यापत्यं युवा गार्ग्यायणः । गार्गेर्गार्ग्यस्य गार्ग्यायणस्य[2] गोत्रापत्ये[3] विवक्षिते 'एको गोत्रे' इति नियमात् गर्गशब्दादेव यञ् । गार्ग्यः । गर्गस्य गार्गेर्गार्ग्यायणस्य वा युवापत्यमिति[4] विवक्षायां 'गोत्राद्यूनि' इति नियमात् गार्ग्यशब्दादेव युवापत्यप्रत्ययः ।[5] गार्ग्यायणः ॥

**भ्रातरि च ज्यायसि ॥४।१।१६४॥**

ज्येष्ठे भ्रातरि जीवति कनीयान् युवसंज्ञः[6] । पित्रादौ मृते

---

**आपत्यस्य** । गर्गगोत्रापत्यानां समूहो गार्गकम् ।[7] वात्सकम् । 'गोत्रोक्षोष्ट्र—' इति वुञ् । आपत्यस्य किम् । साङ्काश्यकः । सङ्काशाच्चातुरर्थिको ण्यः । 'धन्वयोपध—' इति वुञ् । तत्र भवे तद्धिते किम् । गार्ग्ययोः । वात्स्ययोः । हल इत्यनुवर्तते । तेन कारिकेयस्यापत्यं कारिकेयिः । अत्र न । **गार्ग्यायण** इति । 'यञिञोश्च' इति फक् । अत्र यकारलोपो न । आकारत्वात् । **गार्गेरिति** । गर्गस्यानन्तरापत्यस्य । **गार्ग्यस्येति** । गर्गगोत्रापत्यस्य । **गार्ग्यायणस्येति** । गर्गयुवापत्यस्य । अपत्ये विवक्षिते इत्यर्थः । **गर्गस्येत्यादि** । गर्गस्य मूलप्रकृतेरपत्ये **गार्गेरित्यनन्तरापत्यस्य गार्ग्यायणस्येति** युवापत्यस्य ।

**भ्रातरि** । अवंश्यार्थमेतत् । **पित्रादौ मृते** इत्यादि । गर्गपौत्रप्रभृतेर्गार्ग्यस्य द्वौ पुत्रौ तयोः पित्रादौ वंश्ये मृतेपि

---

१. लोपः स्यात्तद्धिते परे $D_5$. २. After it—च $D_4$. ३. अपत्ये for गोत्रापत्ये $D_1$, $D_6$ ; वा गोत्रापत्ये $B_2$ ; वा अपत्ये $Dc_1$. ४. युवापत्याविवक्षायां P, $D_3$, $B_1$, $B_2$. ५. After it—स्यात् C. ६. C has स्यात् after it. ७. Before it—वत्सगोत्रापत्यानां समूहो $Dc_2$.

जीवत्यग्रजेनुजो गार्ग्यायणः।

**बाह्वादिभ्यश्च ॥४।१।९६॥**

एभ्य इञ् स्यादपत्येर्थे ॥ बाहविः। औपबाहविः। नस्तद्धिते। औडुलोमिः।[4]

---

अग्रजे जीवति सत्यनुजो गार्ग्यायणो भवति। युवसंज्ञया युवप्रत्ययान्तः स्यादिति भावः। एतत्सूत्रव्याख्यानममिमसूत्रत्रयव्याख्यानमुपलक्षयति। तानि व्याख्यायन्ते। 'वान्यस्मिन् सपिण्डे स्थविरतरे जीवति'। ४।१।१६५॥ सप्तपुरुषान्तर्भूतः सपिण्डः। तथोक्तम्।

'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते'। इति।

सप्तमेतीते इत्यर्थः। तथा 'सापिण्ड्यं साप्तपौरुषम्' इति च। भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे स्थानेन वयसा चोत्कृष्टे जीवति पौत्रप्रभृति जीवदपत्यं वा युवसंज्ञं स्यात्। पितृव्यादौ जीवति गार्ग्यस्यापत्यं गार्ग्यायणो गार्ग्यो वा। स्थविरतरे किम्। स्थानवयोन्यूने गार्ग्य एव। जीवतीति किम्। मृते मृतो वा गार्ग्य एव। 'वृद्धस्य च पूजायाम्'। ४।१।१६६॥ अपत्यमन्तर्हितं वृद्धम्। गोत्रस्य पूजायां युवसंज्ञा वा। गर्गस्य पौत्रादिरार्चितो गार्ग्यायणो गार्ग्यो वा। पूजायां किम्। गार्ग्यः। 'यूनश्च कुत्सायाम्'। ४।१।१६७॥ यूनः कुत्सायां वा युवसंज्ञा। पक्षे गोत्रसंज्ञैव। गार्ग्यो जाल्मः। गार्ग्यायणो वा। गुर्वायत्तो भूत्वा यः स्वच्छन्दः स एवमुच्यते। कुत्सायां किम्। गार्ग्यायणः।

बाह्वा। क्वचिदनकारार्थं क्वचिद्बाधकबाधनार्थम्। बाहु। उपबाहु। उपवाकु। निवाकु। शिवाकु। विपकु। अवाकु। उपबिन्दु।

---

१. जीवति चाग्रजे $B_2$; जीवति वाग्रजे $Dc_1$ २. °त्यपत्ये $B_1$, $D_1$, $B_2$. ३. औपबिन्दविः $B_1$; P, $D_1$, $Dc_1$. ४. After it—भाद्रशर्मिः। आग्निशर्मिः $D_2$; आग्निशर्मिः $Dc_1$; आग्निशर्मिः। भाद्रशर्मिः। $D_5$. ५. After it—स्यात् $Dc_3$.

सुधातुरकङ् च ॥४।१।९७॥

सुधातुरिञ् स्यादकङादेशश्च । सौधातकिः ।

व्यासवरूडनिषादचण्डालबिम्बानां चेष्टः ॥

कृकला । वृकला । चूडा । वलाका । मूषिका । भगला । छगला । ध्रुवका । गहला । सुमित्रा । दुर्मित्रा । पुष्करसत् । अनुहरत् । देवशर्मन् । अग्निशर्मन् । कुनामन् । सुनामन् । पञ्चन् । सप्तन् । अष्टन् । संभूयोम्भोमितौजसां सलोपश्च । उदञ्चु । माषशराविन् । क्षेमवृद्धिशृङ्खलातोदित् । खरनादिन् । नरमर्दिन् । प्राकारमर्दिन् । लोमन् । आजीगर्त । कृष्ण । युधिष्ठिर । अर्जुन । साम्ब । गद । प्रद्युम्न । राम । उदक । संजय । येषां लोकविदितो गोत्रभाव आदिपुरुषत्वं तेभ्य एव बाह्वादिभ्य इञ् । अन्येभ्यो नेष्टः । बहुनाम्नोऽपत्यं बाहवः । संबन्धिशब्दानां राजश्वशुरादीनां 'राजश्वशुराद्यत्' इत्यादि कार्यमुच्यते तत् संबन्धिशब्दसदृशान्न । श्वशुरनाम्नोपत्यं श्वाशुरिः । आकृतिगणोयम् । जाम्बिः । ऐन्द्रशर्मिः । आजधेनविः ।

**सुधा** । ङित्त्वादन्त्य उकारस्याकङ् । **व्यासेति** । एभ्य इञ् अकङ् चादेश इष्ट इत्यर्थः ।

---

१. °दकङ् च C ; अकङ् चादेशः $B_2$, $D_4$, $D_5$. २. P, $D_1$, $D_2$ drop च. ३. After it—छगला $Dc_4$ ; before it—अर्गला $Dc_3$. ४. Dropped $Dc_4$. ५. Before it—अरुतुन्द । $Dc_3$. ६. उदञ्च $Dc_4$. ७. यत्कार्य° $Dc_3$. ८. °दन्त्यस्य $Dc_3$, $Bc_1$.

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥७।३।३॥**

पदान्ताभ्यां यकारवकाराभ्यां परस्य[1] न वृद्धिः किं तु ताभ्यां पूर्वावैचावागमौ क्रमात्[2] स्तः । वैयासकिः । वारुडकिः । इत्यादि ।

**गोत्रे कुञ्जादिभ्यश्च्फञ्[3] ॥४।१।९८॥**

एभ्यो गोत्रापत्ये[4] च्फञ्[5] स्यात् ॥

---

**न य्वा** । क्रमादिति । यकारात् पूर्वं ऐकारः वकारात् पूर्वं औकारः । वैयासकिरिति । वेदं व्यस्यतीति वेदव्यासः । तस्यैकदेश-प्रयोगो व्यास इति । तत्र वीत्ययमुपसर्गः । स च पदान्तस्यान्तो यकारः । पदान्ताभ्यां किम् । यष्टिः प्रहरणमस्य याष्टीकः । प्रतिषेधवचनं वृद्धिविषये ऐच् यथा स्यादिह मा भूत् । दाध्यश्विः । न ह्यत्र य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति । उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्टः । पूर्वत्रैयलिन्दः । यत्रोत्तरपदसंबन्धी यण् नास्ति तत्र नेष्यते । द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः । वारुडकिरित्यादिशब्देन नैषादकिः चाण्डालकिः । बैम्बकिः[6] ।

**गोत्रे** । चो त्रातच्फञोरिति विशेषणार्थः । ञो वृद्ध्यर्थः । कुञ्ज । ब्रध्न । शङ्ख । भस्मन् । लोमन् । शठ । शाक । शुण्ड । शुँभ[7] । विपाश । स्कन्द । स्कम्भ । 'शिवादिभ्योण्' इति यावद्गोत्रमनुवर्तते ।

---

१. परस्याचो $Dc_1$. २. $B_1$ drops क्रमात्. ३. च्फञ् $D_1$. ४. गोत्रे C; गोत्रेपत्ये $D_2$. ५. फञ् $D_1$. ६. Dropped $Dc_4$. ७. शुभ्र । उम । $Dc_3$.

व्रातच्फञोरस्त्रियाम् ॥५।३।११३॥

व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम् । कौञ्जायन्यः । व्राध्नायन्यः । स्त्रियां तु । कौञ्जायनी ।

अत्र गोत्रत्वेन जातित्वात् ङीष् ।

ञ्यादयस्तद्राजाः ॥५।३।११९॥

ञ्यादयः प्रत्ययास्तद्राजसंज्ञाः स्युः ॥

तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥२।४।६२॥

तद्राजस्य लुक्[1] तत्कृते बहुत्वे[2] सति न तु स्त्रियाम् ॥ कौञ्जायनाः ।

---

व्रात । नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः । उत्सेधः शरीरं तदायस्य ये जीवन्ति उत्सेधजीविनः । व्रातेभ्यः कापोतपाक्यः कापोतपाक्यौ कपोतपाकाः । कौञ्जायन्य इति । कुञ्जस्य गोत्रापत्यम् । पूर्वेण च्फञि ञ्यः । एकवचन-द्विवचनयोः सति शिष्टत्वात् ञित्स्वरेणैवाद्युदात्तत्वेन भाव्यम् । बहुवचने तु कौञ्जायना इत्यत्र परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवान्तोदात्तत्वमिष्यते । गोत्रत्वेनेति । 'गोत्रं च चरणैः सह' इति वचनाज्जातित्वं 'तस्माज्जातेरस्त्रीविषयादयोपधात्' इति ङीष् ।

ञ्यादयः । 'पूगाञ् ञ्यो ग्रामणीपूर्वात्' इत्यतः प्रभृत्ये-तत्सूत्रपर्यन्तं ये प्रत्ययाः सन्ति तेषामियं संज्ञा । तत्कृत इति । तद्राजा[3] तेनैव कृते बहुत्वे इत्यर्थः । तद्राजस्य किम् । औपगवाः । बहुषु किम् । कौञ्जायन्यः । तेनैव किम् । प्रियः कौञ्जायन्यो येषां ते प्रियकौञ्जायन्याः । अस्त्रियां किम् । आङ्ग्यः स्त्रियः । 'गोत्रे कुञ्जादिभ्यश्च्फञ्' इत्यत्रस्थंगोत्रपदस्य प्रत्युदाहरणमाह[4] ।

---

१. लुक् स्यात् P, C, $D_5$, $Dc_1$. २. बहुत्वे $B_1$, $D_1$, $D_3$, $D_5$. ३. तद्राजस्य तत्कृत इति । $Dc_3$. ४. °स्थस्य गोत्रपदस्य व्यावर्त्यमाह । $Dc_2$.

अनन्तरापत्ये तु कौञ्जिः ।

---

अनन्तरेति । अत इञ् स्यान्न च्फञ् । स्पष्टत्वात् त्यक्तं सूत्र-चतुष्टयं प्रसङ्गाद् व्याख्यायते । 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' । २।४।५८।। ण्यन्तात् क्षत्रियगोत्रादार्षात् ञितश्च परयोरणिञोर्यूनि लुक् स्यात् । कौरव्यः पिता । कौरव्यः पुत्रः । 'कुर्वादिभ्यो ण्यः' । गोत्रे तस्माद्यूनि इञ् तस्य लुक् । ननु चात्र तिकादिपाठात् फिञा भाव्यम् । कौरव्यायणिरिति । उच्यते । क्षत्रियगोत्रस्य तत्र ग्रहणं 'कुरुनादिभ्यो ण्यः' इति विहितस्य । इदं तु ब्राह्मणगोत्रं 'कुर्वादिभ्यो ण्यः' इति । क्षत्रियात् । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । अन्धकत्वाद् गोत्रेण् । तस्माद् यूनीञ् । तस्य लुक् । आर्षात् । वासिष्ठः पिता । वासिष्ठः पुत्रः । ऋषित्वाद् गोत्रेण् । ततो यूनीञ् । तस्य लुक् । ञितः । वैदः पिता । वैदः पुत्रः । विदाद्यञ् गोत्रे । ततो यूनीञ् । तस्य लुक् । अणः खल्वपि । तैकायनिः पिता । तैकायनिः पुत्रः । तिकादिभ्यः फिञ् । ततो यून्यण् । तस्य लुक् । एभ्यः किम् । कौहलः पिता । कौहलिः पुत्रः । शिवाद्यण् । तस्माद्यूनीञ् । तस्य लुक् न । यूनि किम् । वामरथ्यस्य छात्रा वामरथाः । 'कुर्वादिभ्यो ण्यः' तस्मात् 'कण्वादिभ्यो गोत्रे' इति शैषिकोण् । तस्य लुक् न । अणिञोः किम् । दाक्षेरपत्यं युवा दाक्षायणः । अब्राह्मणमात्राद्युवप्रत्यय-स्योपसंख्यानम् । बौधिः पिता । बौधिः पुत्रः । साल्वावयवलक्षण इञ् गोत्रे । तस्मात् फक् यूनि । तस्य लुक् ।। 'पैलादिभ्यश्च' ।। २।४।५९।। पैल इत्येवमादिभ्यश्च युवप्रत्ययस्य लुक् स्यात् । पैलः पिता । पैलः पुत्रः । 'पीलाया वा' इत्यण् गोत्रे । तस्मात् 'अणो द्व्यचः' इति यूनि फिञ् । तस्य लुक् । अन्ये इञन्तास्तेभ्यः 'इञः प्राचाम्' इति सिद्धे प्रागर्थः पाठः । पैल । शालङ्कि ।

---

१. P, D1, Dc1 drop तु. २. गोत्रादण् Dc2. ३. तस्य च Dc3. ४. पैल इत्येवमादिभ्यश्च dropped Bc1, Dc1, Dc4. ५. Dropped Bc1, Dc1, Dc4. ६. Dropped Bc1, Dc1, Dc4. ७. तस्य च Dc3.

## नडादिभ्यः फक् ॥४।१।९९॥

एभ्यो गोत्रापत्ये फक् स्यात्[1]। नाडायनः। चारायणः।[2] आमुष्यायणः। अनन्तरे[3] तु[4]। नाडिः।

---

सात्यकि। सात्यकामि। औदञ्चि। औदमज्जि। औदव्रजि। औदमेघि। औदशुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहाक्षि[5]। भौलिङ्गि। औद्राहमानि। औज्जिहायनि। तद्राजाच्चाणः। तद्राजसंज्ञादणः परस्य युवप्रत्ययस्य लुक्। आङ्गः पिता। आङ्गः पुत्रः। 'द्व्यञ्मगध—' इति तद्राजोऽण्। ततः 'अणो द्व्यचः' इति यूनि फिञ्। तस्य[6] लुक्। आकृतिगणोयम्। 'इञः प्राचाम्' ॥ २।४।६०॥ गोत्रे य इञ् तदन्तात् युवप्रत्ययस्य लुक्। प्राचामिति गोत्रविशेषणं न विकल्पार्थम्। पान्नागारिः पिता। पान्नागारिः पुत्रः। पान्नागारस्य गोत्रापत्यमिञ्। तस्माद्यूनि 'यञिञोश्च' इति फक्। तस्य लुक्। प्राचां किम्। दाक्षिः पिता। दाक्षायणः पुत्रः। 'न तौल्वलिभ्यः' ॥ २।४।६१॥ तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुक्। तौल्वलिः पिता। तौल्वलायन पुत्रः। तौल्वलि। धारणि। पारणि। रावणि[7]। दैलीपि। दैवापि। दैवमति। दैवयाज्ञि। प्राणहावि। चाफट्टकि। आनुराहति। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। वैहति[8]। पौष्कि। पौष्करसादि। धैरकि। धैलोकि[9]। वैहाकि। वैकर्णि। कारेणुपालि। कामलि।

नड। फस्यायनादेशः। आमुष्यायण इति। अमुष्यापत्यम्। अमुष्येति निपातनात् षष्ठ्या अलुक्। नड। चर। बक। मुञ्ज। इतिक। इतिश। उपक। लमक। शलङ्कु। शलङ्कं चेति।

---

१. गोत्रे फक्। B₁, D₁, D₂. २. After it—आमुष्यायणः। D₂. ३. आनन्तरो नाडिः C, अनन्तरो नाडिः। D₁, अनन्तरापत्ये नाडिः D₂. ४. P drops तु. ५. रौहाक्षि Bc₁, Bc₃. ६. तस्य च Dc₃. ७. वाराणि Bc₁, Dc₁. ८. वैहत्रि Bc₁, Dc₁. ९. धैलुकि Bc₁.

शालङ्कायनः। पैलादिषु शालङ्किरस्ति। तत्र तदेव ज्ञापकमिञ्[1]-भावस्य। सप्तल। वाजप्य। तिक। अग्निशर्मन् वृषगणे। अग्निशर्मा-यणो वार्षगण्यः। अग्निशर्मोन्यः। प्राण। नर। सायक। दास। मित्र। द्वीप।[2] पिङ्गर। पिङ्गल। किङ्कर। किन्नर। काप्यल। कारय। काव्य। अज। अमुष्य। कृष्णरणौ ब्राह्मणवासिष्ठे। कार्ष्णायनो ब्राह्मणः। अन्यः कार्ष्णिः। राणायनो वासिष्ठः। अन्यो राणिः।[3] अमित्र। लिगु। चित्र। कुमार। क्रोष्टु क्रोष्टं च। क्रोष्टायनः। लोह। दुर्ग। स्तम्भ। शिंशपा। अग्र। तृण। शकट। सुमत। वि[4]मत। कैकुजत्। इत्वर। जवन। युगंधर। हंसक। दण्डिन्। हस्तिन्। पञ्चाल। चमसिन्। सुकृत्य। स्थिरक। ब्राह्मण। चटक। बदर। अश्वल।[5] खरप। कामुक। ब्रह्मदत्त। उदुम्बर। शोण। अलोह। दण्ड। स्पष्टत्वात् त्यक्तं सूत्रनवकम्[6]। 'हरितादिभ्यो ऽञः' ।४।१।१००।। हरितादिर्विदाद्यन्तर्गणः। तस्माद्योञ् तदन्तात् प्रातिपदिकात् फक् स्यात्। गोत्रप्रत्ययादपरो गोत्र-प्रत्ययो न संभवतीति सामर्थ्यात् यूनि फक्। हरितस्यापत्यं युवा हारितायनः। 'शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु' ।४।१।१०२।। शरद्वदादिभ्यो यथासंख्यं भृग्वादिष्वपत्येषु फक् स्यात् गोत्रे। शारद्वतायनो भार्गवश्चेत्। अन्यः शारद्वतः। शौनकायनो वात्स्य-श्चेत्। शौनकोन्यः। विदाद्यञ्। दार्भायणः। आग्रायणश्चेत्। दार्भिरन्यः। 'द्रोणपर्वतजीवन्तादन्यतरस्याम्' ।४।१।१०३।। एभ्यो गोत्रे वा फक्। द्रौणायनः। द्रौणिः। पार्वतायनः पार्वतिः। जैवन्तायनः। जैवन्तिः। 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' ।४।१।१०६।। अनयोर्ब्राह्मणकौशिकयोर्यञ्[7]। बभ्रोर्गर्गादिपाठादेव सिद्धे कौशिके नियमार्थम्। माधव्यो ब्राह्मणश्चेत्। माधवोन्यः। बाभ्रव्यः

१. °मिञोभावस्य Dc₂. २. Dropped Dc₁, Dc₂. ३. अजामित्र D₄, Dc₃. ४. मिमत Dc₂. ५. ककु। जतु। Dc₄, Dc₃. ६. खचर Dc₁; Bc₃, Bc₁ अश्वखचर Dc₄. ७. After it—व्याख्यायते। Dc₃.

कौशिकश्चेत् । बाभ्रवोन्यः । गर्गादिषु पाठः सर्वत्र लोहितादिकतन्तेभ्य इत्यन्तर्गणकार्यार्थः । बाभ्रव्यायणी । 'कपिबोधादाङ्गिरसे' । ४।१।१०७।। गोत्रे यञ् । काप्यः । लोहितादित्वात् काप्यायनी । बौध्यः । आङ्गिरसे किम् । कापेयः । बौधिः । 'वतण्डाच्च' । ४।१।१०८।। आङ्गिरसे गोत्रे यञ् । वातण्ड्यः । वतण्डशब्दो गर्गादिः शिवादिश्च । तत्रानाङ्गिरसे द्वयमपि स्यात् । वातण्ड्यः । वातण्डः । 'लुक् स्त्रियाम्' ।४।१।१०९।। वतण्डादाङ्गिरस्यां स्त्रियां यञो लुक् । ततः शार्ङ्गरवादित्वात् ङीन् । वतण्डी । अनाङ्गिरसे वातण्ड्यायनी । वातण्डी । 'अश्वादिभ्यः फञ्' ।४।१।११०।। आङ्गिरसे इति निवृत्तम् । एभ्यो गोत्रे फञ् । ये त्वत्र गोत्रप्रत्ययान्तास्तेभ्यः सामर्थ्याद्युनि । आश्वायनः ।। अश्व । अश्मन् । शङ्ख । विद । पुट । रोहिण । खर्जूर । नलिन । चटुल । भण्डिल । भाडिल । भाण्डित । भाडित । प्रकृत । रामोद । क्षत्री । ग्रीवा । शाक । काण । गोलाङ्क । अर्क । स्वन । वन । पद । चक्र । कुल । श्रविष्ठ । पदविन्द । पवित्र । गोमिन् । श्याम । धूम । वाग्मिन् । विश्वानर । शव । शपात्रेये । शापायनः आत्रेयः । शापिरन्यः । शापो वा । जनवत । ग्रीष्म । अरह । बीज । विशम्य । विशाल । गिरि । चपल । यूप । दारुक । वैल्य । लाप्य । आनडुह्य । पुंसिजात । पुंसि वर्तमानाज्जातात् फञ् । जातस्यापत्यं जातायनः । स्त्रियां तु जातेयः । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । आत्रेयो भरद्वाजे । आत्रेयायणो भरद्वाजः । अन्य आत्रेयः । यूनि 'इञोण्यक्षत्रिय—' इति लुक् । भारद्वाज आत्रेये । भारद्वाजायन आत्रेयः । अन्यो भारद्वाजः । उत्स । आतप । कितव । शिव । खदिर । भर्गात् त्रैगर्ते । गोत्रे फञ् । भार्गायणः । त्रैगर्तश्चेत् । भार्गिरन्यः ।

१. आत्रेयोन्यः । Dc3.

## शिवादिभ्योण् ॥४।१।११२॥

इञोपवादः । शैवः ।

---

'शिवादि' । 'गोत्रे' इति निवृत्तम् । शिव । प्रोष्ठ । चण्ड । जम्भ । भूरि । कुठार । अनभिम्लान । संधि । मुनि । ककुत्स्थ । कहोड । कहूय । रोध । पल । वतण्ड । तृणकर्ण । क्षीरपूर्ण । जलह्रद । परिषेक[1] । गोहिलक । जटिरक । बधिरक । मञ्जिरक । वृष्णिक । खंजनक[3] । खञ्जल । रेफ । आलेखन । विश्रवण । रवण । एतौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे वा । वृत्तिविषये तत्समानार्थे । विश्रवसोपत्यं वैश्रवणो रावणश्च । वर्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । जननाम । जरत्कारु । उत्कम्प । पौरोहितक[5] । आर्यश्वेता । सुपिष्ट । पिष्ट । मयूरकर्ण । वेन्दूरकर्ण[6] । तक्षन् । अस्मात् कारिलक्षणो ण्योपीष्यते । न तु 'उदिचामिञ्' । ताक्षणः । ताक्षण्यः । ऋष्टिषेण । गङ्गा । गाङ्गः । तिकादिभ्यः फञ् । गाङ्गायनि । शुभ्रादित्वात् ढक् । गाङ्गेयः । एवं त्रैरूप्यमस्य स्यात् । विपाश् । वैपाशः । कुञ्जादिभ्यश्च्फञ् । वैपाशायन्यः । यस्क । लह्य । द्रुह्य । अयःस्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी । द्व्यचो नद्याः । कुल्याया अपत्यं कौलः । त्रिवेणी त्रिवणं च । त्रिवेण्याः अपत्यं त्रैवणः । त्यक्तं सूत्रम् । 'अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः' ।४।१।११३॥ अवृद्धसंज्ञानि नदीनां मानुषीणां च यानि नामानि तेभ्योण् स्यात् न ढक् । नार्मदः । यामुनः । मानुषीभ्यः । चिन्तिताया अपत्यं चैन्तितः । वृद्धाभ्यो न । चान्द्रभागाया अपत्यं चान्द्रभागेयः । वासवदत्तेयः । अत्र 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसंज्ञा ।

---

१. Before it—एभ्योण् स्यात् । D4, D1. २. After it—परिषिका Dc1, Dc4, Dc3. ३. खजिनक Dc1. ४. तत्प्र° Dc1. ५. पौराहितिका Dc4. ६. वदूर° Dc1, Dc4; चदूर° Dc3.

**ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥४।१।११४॥**

एभ्योण् स्यान्नेञ् ॥ ऋषिभ्यः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः । श्वाफल्कः । राधसः । वृष्णिभ्यः । वासुदेवः । आनिरुद्धः । कुरुभ्यः । नाकुलः । साहदेवः । बाह्वादित्वात् कार्ष्णिः । आर्जुनिः । प्राद्युम्निः । इत्यादय इञन्ताः । बाह्वादेराकृतिगणत्वात् । गार्गिः । वैदिः ।

**मातुरुत् संख्यासंभद्रपूर्वायाः ॥४।१।११५॥**

संख्यादिपूर्वाया मातुरपत्येण् स्यादुकारोन्तादेशश्च ॥ द्वयोर्मात्रोरपत्यं द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः ।

---

**ऋषि** । ऋषयो मन्त्रदर्शिनः । ननु नित्यानां शब्दानामन्धकादिवंशसमाश्रयणेनान्वाख्यानं न घटते । उच्यते । कथमपि काकतालीयन्यायेन कुर्वादिवंशेष्वसंकरेणैव नकुलादिशब्दाः संकलितास्तानादाय पाणिनिना स्मृतिरुपनिबद्धा । अथवा अन्धकादिवंशा अपि नित्यास्तत्र प्रयुक्तेभ्य इदं प्रत्ययविधानम् ।

**मातुः** । **द्वैमातुर** इति । प्राक् तद्धितार्थविषये द्विगुः । पश्चात् तद्धितः । **सांमातुर** इति । पूर्वं प्रादिसमासस्ततस्तद्धितः । स्त्रीलिङ्गनिर्देशात् संमिमीते संमाता तस्यापत्यं सांमात्र इत्यत्र न । संख्यादिपूर्वायाः किम् । सौमात्रः ।

---

१. $B_1$ drops स्यात्. २. वाशिष्ठः $B_1$, $D_5$. ३. C, $D_4$ have रांधसः; $B_1$ drops it. ४. $B_1$ drops it; आन्धकः । वासुदेवः । $D_5$. ५. बाह्वादित्वात् गार्गिः । वैदिः C; Before this $B_2$ has—वङ्गवाकुञ्चाकौकिलाभ्योण् वाच्यः । वङ्गवाया अपत्यं वाङ्गवः. ६. $B_1$ drops स्यात्. ७. उकारान्तादेशश्च $B_1$, $B_2$. ८. $B_1$ has स्यात् after it. ९. $D_1$, $D_4$ drop it; $D_5$ drops this and भाद्रमातुरः ।. १०. भाद्रमातुरः । सांमातुरः C; $D_2$.

**कन्यायाः कनीन च ॥४।१।११६॥**

**कन्याया अण् स्यात्[१] कनीनादेशश्च ॥ कानीनः ।**

**स्त्रीभ्यो ढक् ॥४।१।१२०॥**

**स्त्रीप्रत्ययान्तेभ्यो[२] ढक् स्यात् ॥ ढस्यैयादेशः । वैनतेयः । माहेयः । यौवतेयः ॥**

---

**कन्यायाः** । ननु यदि कन्या नापत्यं तस्याः । अथापत्यं न कन्या । नैष दोषः । यतो विवाहपूर्वं यः पुंयोगस्तदभाववती[४] कन्या नाक्षतयोनिः । या पुनर्विवाहं विना पुंसा संयुज्यते सा कन्यात्वं न जहाति । अपर आह । मुनिदेवतामाहात्म्यात् या पुंयोगे क्षतयोनिर्न भवति सेहोदाहरणम् । कुन्ती । सत्यवती । कानीनः कर्णः । कानीनो व्यासः । स्पष्टत्वात्[५] त्यक्तं सूत्रत्रयम् । 'विकर्णशुङ्गछगलाद्वत्सभरद्वाजात्रिषु' ।४।१।११७॥ विकर्णादिभ्यो वत्सादिष्वपत्येष्वण् स्यात् । वैकर्णो वात्स्यः । शौङ्गो भारद्वाजः । छागल आत्रेयः । अन्यत्रेञ् । शुङ्गां केचित् स्त्रीलिङ्गां पठन्ति ते ढकं प्रत्युदाहरन्ति । शौङ्गेय इति । 'पीलाया वा' ।४।१।११८॥ अण् । पैलः । पैलेयः । 'ढक् च मण्डूकात्' ।४।१।११९॥ मण्डूकादपत्ये ढक् । अण् वा स्यात् । माण्डूकेयः । माण्डूकः । माण्डूकिः ।

**स्त्रीभ्यः** । स्त्रीग्रहणेन टाबादिप्रत्ययान्ताः शब्दा गृह्यन्ते इत्यभिप्रेत्याह । **स्त्रीप्रत्ययान्तेभ्य** इति । स्त्रीप्रत्ययान्तेभ्यः किम् । इडविडोपत्यमैडविडः । वडवाया वृषे वाच्ये ढग्वाच्यः । वाडवेयो वृषः । वृषो बीजाश्वः । अपत्ये तु वाडव इत्यणेव स्यात् । अण् क्रुञ्चाकोकिलाभ्यां वाच्यः । क्रौञ्चः । कौकिलः । स्पष्टत्वात्त्यक्तं सूत्रम् । 'द्व्यचः' । ४।१।१२१॥ द्व्यचः स्त्रीप्रत्ययान्ताद् ढक् स्यात् अवृद्धाभ्य इति । प्राप्तस्याणोपवादः । दत्ताया अपत्यं दात्तेयः ।

---

१. $B_1$ drops it. २. °भ्योपत्ये ढक् $B_1$, $D_1$, $D_4$. ३. Before it—माहेयः $D_2$; after it—कौन्तयः $D_5$. ४. संयोगः $Dc_1$. ५. स्पष्टत्वात् dropped $D_4$.

९० [ प्र. कौ. ]

## शुभ्रादिभ्यश्च ॥४।१।१२३॥

अपत्ये ढक् स्यात्[1] । अवृद्धाभ्य[2] इति प्राप्तस्याणोपवादः । शौभ्रेयः । गाङ्गेयः ॥

## ढे लोपोकद्र्वाः ॥६।४।१४७॥

ढे परे उलोपः[3] स्यात् कद्रूं[4][5] विना ॥ कामण्डलेयाः । कद्र्वास्तु काद्रवेयः । पाण्डोश्च न । पाण्डवेयः ।

---

**शुभ्र** । **अवृद्धाभ्य** इत्यादि । एतच्च यथायोगं प्राप्तानामिञौत्सर्गिकाण्ढक्चतुष्पाल्लक्षणढञामुपलक्षणम् । शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शलाका । शालास्थल । शलाकाभ्रू । विधवा । विकसा । रोहिणी । रुक्मिणी । दिशा[6] । शालूक । अजबस्ति । शकुनि । लक्षणश्यामयोर्वासिष्ठे । लाक्षणेयः । श्यामेयः । वासिष्ठः । अन्यो लाक्षणिः श्यामायनः । अश्वादित्वात् फञ् । गोधा । कृकलासा । आलिवी । प्रवाहण । भर्वत । भारत[7] । मकष्टु । यकष्टु । सृकण्डु । मृकण्डु । कर्पूर । इतर । अन्यतर । आलीढ । सुदन्त[8] । सुदक्ष । सुदामन् । कद्रु । तुद । अकशाप । कुमारिका । कुवेरिका । किशोरिका । जिह्वाशिन[9] । परिधि । वायुदत्त । शकल । शवल । खर्दुर[10] । अम्बिका । अशोका । गन्धपिङ्गला । खडोन्मत्ता । अनुदृष्टिन् । जरतिन् । बलीवर्दिन् । विश्र । विम्र[11] । भ्रन् । अश्मन् । अश्व । अजिर । आकृतिगणः । गाङ्गेयः । पाण्डवेयः ।

**ढे लोपः** । **कामण्डलेय** इति । 'चतुष्पादभ्यो ढञ्' इति ढञ् । **काद्रवेय** इति । 'संज्ञायाम्' इत्यूङ् । स्त्रीभ्यो ढक् ।

---

१. Dropped $B_1$, $B_2$, $D_1$. २. C drops from अवृद्धाभ्यः to °पवादः ।. ३. अन्तलोपः $D_2$. ४. कद्रूवर्जम् $B_2$, $D_2$. ५. ढञादीना $Dc_4$. ६. विश् $Dc_3$, $Dc_4$. ७. भारत । भारम $Dc_2$. ८. सुतन्द $Bc_1$, $Dc_1$, $Dc_4$. ९. जिह्वालिन् $Dc_4$. १०. खदूर $Bc_1$, $Dc_4$. ११. विज्य $Dc_1$, $Dc_4$; वीज्य $Dc_3$.

**इतश्चानिञः ॥४।१।१२२॥**

इकारान्ताद् द्व्यचोपत्ये ढक् स्यात्[1] न त्विञन्तात् ॥ आत्रेयः । नैधेयः[2] । इतः[3] किम् । दाक्षिः । अनिञः किम् । दाक्षायणः[4] ।

**कल्याणादीनामिनङ् ॥४।१।१२६॥**

एषामपत्ये ढक्[5] स्यादिनङादेशः ॥ काल्याणिनेयः । ज्यैष्ठिनेयः ।

**हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥७।३।१९॥**

हृदाद्यन्ते शब्दे[6] पूर्वोत्तरपदयोर्[7]वृद्धिः स्यात्[8] ॥

---

इत । **दाक्षायण** इति । दाक्षेरपत्यं युवा । 'यञिञोश्च' इति फक् । द्व्यचः किम् । मरीचेरपत्यं मारीचः । स्पष्टत्वात् त्यक्ते सूत्रे 'विकर्णकुषीतकात् काश्यपे' ।४।१।१२४।। आभ्यां काश्यपेपत्ये ढक् स्यात् । वैकर्णेयः । कौषीतकेयः । काश्यपे किम् । वैकर्णिः । कौषीतकिः । 'भ्रुवो वुक् च' । ४।१।१२५।। भ्रूशब्दस्यापत्ये ढक् वुक् च । भ्रौवेयः ।

**कल्या** । कल्याणी । सुभगा । दुर्भगा । अनुसृष्टि । जरती । बलीवर्द । ज्येष्ठा । कनिष्ठा । मध्यमा । परस्त्री ।

**हृद्भग** । ञिति णिति किति तद्धिते परत इति शेषः ।

---

१. Dropped $B_1$. २. Dropped P. ३. इतश्चेति किम् C. ४. After it—द्व्यचः किम् । मारीचः । मरीचेरपत्यम् $B_2$ ; द्व्यचः किम् । मारीचः । $D_4$, $D_5$. ५. ढक् इनङादेशश्च । $D_3$ ; $B_1$ ; इनङ् चादेशः $B_2$. ६. शब्दे परे $B_1$. ७. पदयोराद्यचः $D_5$. ८. Dropped $B_1$. ९. च तद्धिते परे $Dc_2$.

सौहार्दम् । सौभागिनेयः । साक्तुसैन्धवः ॥[1]

**अनुशतिकादीनां च ॥७।३।२०॥**

उभयपदवृद्धिः । आनुशतिकम् ।[2] पारस्त्रैणेयः ॥

---

**सौहार्दमिति** । सुहृदयस्येदं सुहृदयस्य भावो वा । पूर्वत्र 'तस्येदम्' इत्यण् । उत्तरत्र 'हायनान्तयुवादिभ्योऽण्' । 'हृदयस्य हृल्लेख—' इति हृद्भावः । अथवा हृद्शब्दादेवाण् । 'सौभागिनेय' इति । सुभगाया अपत्यम् । कल्याण्यादीनामिनङ् । सुभगशब्द उद्गात्रादिषु पठ्यते । तत्र महते सौभगायेत्युत्तरपदवृद्धिर्न । छन्दसि सर्वविधीनां विकल्पितत्वात् । '**साक्तुसैन्धव**' इति । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तत्र भवः साक्तुसैन्धवः । 'कच्छादिभ्यश्च' इत्यण् ।

**अनु** । **आनुशतिकमिति** । शतेन क्रीतः शतिकः । 'शताच्च ठन्यतावशते' । अनुगतः शतिकेन अनुशतिकः । 'तस्येदम्' इत्यर्थेण् । आनुशतिकम् । **पारस्त्रैणेय** इति । 'कल्याणादीनामिनङ्' इति ठक्[3] इनङ् वा । अनुहोडेन चरति आनुहौडिकम् । अनुसंवत्सरं दीयते आनुसंवत्सरिकः । 'बह्वचोऽन्तोदात्ताट्ठञ्'[4] । अगारवेणोरपत्यमागारवैणवः । असिहत्ये भवः आसिहत्यः । अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति । आस्यहात्यः । 'विमुक्तादिभ्यश्च'[5] । इत्यण् । अस्य हेति प्रयोजनमस्य आस्यहैतिकः । अत एव वचनादस्य प्रातिपदिकत्वम् । विभक्तेश्चालुक् । वध्योगस्यापत्यं वाध्यौगः । विदाद्यञ् । पुष्करसदोऽपत्यं पौष्करसादिः । अनुरहतोऽपत्यमानुराहतिः । बाह्वादित्वादिञ् । कुरुकतस्यापत्यं कौरकात्यः । गर्गादियञ् । कुरुपञ्चाले भवः कौरुपाञ्चालः । उदकशुद्धस्यापत्यमौदकशौद्धिः । इह लोके भवमैहलौकिकम् । पारलौकिकम् । 'लोकोत्तरपदस्य'

---

१. शाक्तसैन्धवः $D_3$, $D_1$, P, C. २. After it—इनाङि कृते वृद्धिः $B_1$. ३. ठकञ् $Do_1$. ४. 'तत्र च दीयते कार्यं भववत्' इत्यतिदेशेन कालाट्ठञ् । $Do_2$. ५. वियुक्ता° $Do_4$.

कुलटाया वा ॥४।१।१२७॥

अस्या इनङादेशो वा स्यात्[1] ढकि ॥ कौलटेयः । कौलटिनेयः । सती भिक्षुक्यत्र कुलटा ॥

चटकाया ऐरक् ॥४।१।१२८॥

चटकाया ऐरक् प्रत्ययः स्यादपत्येऽर्थे[2][3][4] ॥ चटकादपीष्यते । चटकायाश्चटकस्य वापत्यं चाटकैरः । स्त्र्यपत्ये[5] तु[6] लुग्वाच्यः । स्त्र्यपत्यं चटका ।

---

इति ठञ् । सर्वलोके विदितं सार्वलौकिकम् । 'लोकसर्वलोकाट्ठञ्' । सर्वपुरुषस्येदं सार्वपौरुषम् । सर्वभूमिनिमित्तं सार्वभौमः । प्रयोगे भवं प्रायौगिकम् । पारस्त्रैणेयः । 'राजपुरुषात् ष्यञ्' । राजपौरुष्यम् । सूत्रनडस्यापत्यं सौत्रनाडिः । आकृतिगणश्चायमिष्यते । तेनाभिगममर्हति आभिगामिकः । आधिदैविकम् । आधिभौतिकम् । चातुर्वैद्यमिति सिद्धं स्यात् ।

**कुलटा** । आदेशार्थं वचनम् । ढक् तु 'स्त्रीभ्यो ढक्' इत्येव सिद्ध इत्याह । **अस्या** इति । **सतीति** । सती साध्वी अशीलभेदिनी भिक्षुकीति । अकिंचनत्वाद् भिक्षार्थं कुलान्यटन्तीत्येवंविधाः कुलटा अत्राभिप्रेता इत्यर्थः । या तु कुलान्यटन्ती शीलभेदिनी तस्याः 'क्षुद्राभ्यो वा' इति ढ्रक् । कौलटेरः ।

**चटका** । **स्त्र्यपत्यं चटकेति** । चटकाया अपत्यं स्त्रीति विवक्षायां चटकेति स्यात् । लुक् 'तद्धितलुकि' इति कृते पुनष्टाप् कर्तव्यः ।

---

१. Dropped B₁. २. Dropped D₂. ३. B₁ drops स्यात्. ४. °त्यपत्ये B₁, B₂, D₄, D₅. ५. स्त्र्यपत्ये चटका C. ६. B₁, D₁, D₂ drop तु.

गोधाया ढ्रक् ॥४।१।१२९॥

अस्यापत्ये ढ्रक्[1] । ढस्य एयः । लोपो व्योर्वलि[2] । गौधेरः । शुभ्रादित्वाद् ढक् । गौधेयः ।

आरगुदीचाम् ॥४।१।१३०॥

गौधारः । आकारोच्चारणान्यत्रापि । नाटरः[3] । नाटेयः । नाटारः[4] ।

क्षुद्राभ्यो वा ॥४।१।१३१॥

शीलहीना अङ्गहीनाश्च क्षुद्रास्ततो वा ढ्रक्[5] ॥ कौलटेरः । दासेरः । काणेरः । पक्षे ढक्[7] ।

---

गोधा । ढस्येति । 'आयनेयीनी—' इति सूत्रेण ढमात्रस्यैयः । लोपो व्योरिति यलोपः ।

आरक् । गोधाया अपत्ये आरक् । उदीचां मतेन । ननु गोधाशब्दस्याबन्तत्वाद् रगेव वाच्यस्तेन गोधार इति सिध्येदित्याशङ्क्याह । आकारोच्चारणादिति । यद्यन्यत्र न स्यादाकारोच्चारणं व्यर्थं स्यादिति भावः । नाटेर इति । नटस्यापत्यम् ।

क्षुद्रा । ढ्रगनुवर्तते नारक् । पक्षे ढगिति । कौलटेयः । दासेयः । काणेयः ।

---

१. अस्या अपत्ये $B_1$. २. स्यात् after it P, $D_1$, $B_2$, $D_4$. ३. एय् $D_4$. ४. After it—धातोरधातोश्च वकारयकारयोर्लोपः स्याद्वलि परे । $D_6$. ५. अत्र before it in $B_1$. ६. नाटारः । नाटेरः । नाटेयः P, $D_1$; नाटारः । नाटेयः । $D_4$. ७. After it—कौलटेयः । दासेयः । काणेयः । $D_2$.

**पितृष्वसुश्छण् ॥ ४।१।१३२॥**

[1]अस्यापत्ये छण् स्यात् ॥ [2]छस्येयादेशः । पैतृष्वस्रीयः ।

**ढकि लोपः ॥४।१।१३३॥**

[3]पितृष्वसुरन्तलोपः [4]स्यात् ढकि । अत एव ढक् पैतृष्वसेयः ।

**मातृष्वसुश्च ॥४।१।१३४॥**

[5]मातृष्वस्रीयः । मातृष्वसेयः ।

**राजश्वशुराद्यत् ॥४।१।१३७॥**

[6]अस्माद्यत् स्यादप[7]त्ये ॥ श्वसुर्यः ।

---

पितृ । अणोपवादः ।

ढकि । ननु पितृष्वसृशब्दात् कथं ढक् इत्याशङ्क्याह । अत एवेति । 'ढकि' इत्येतस्मादेव ज्ञापकादित्यर्थः ।

मातृ । छण्प्रत्ययो ढकि लोपश्च । स्पष्टत्वात् त्यक्तं सूत्रद्वयम् । 'चतुष्पाद्भ्यो ढञ्' । ४।१।१३५॥ चतुष्पाद्वाचिभ्योपत्ये ढञ् स्यात् । अणादीनामपवादः । कामण्डलेयः । कमण्डलश्चतुष्पाद्विशेषः । जाम्बेयः । जम्बुः शृगालः । 'गृष्ट्यादिभ्यश्च' । ४।१।१३६॥ एभ्योपत्ये ढञ् । गार्ष्टेयः । गृष्टि । हृष्टि । बलि । हलि । विर्श्रि[8] । क्षुद्रि[9] अजवस्ति । मित्रयु ।

राजश्व । राज्ञो जाताविति प्रत्ययान्तेन क्षत्रियजातिर्यदि गम्यते इत्यर्थः । राजन इति । 'तस्यापत्यम्' इत्यणि कृत्ये 'नस्तद्धिते' इति टिलोपे प्राप्ते 'अन्' इति सूत्रम् । 'राजन्नसमासे' इति पुरोहितादौ पठ्यते । ततोयमसमासे यक्प्रत्ययः ।

---

१. अस्याश्छण् स्यादपत्ये $B_2$, $D_2$, $D_4$; अस्य छण् स्यादपत्ये $Dc_1$; अस्मात् छण् अपत्ये $B_1$; अस्याश्छण् स्यादपत्ये P. २. छस्य ईयः P: $D_1$, $D_2$, $D_4$. ३. पितृश्वसृशब्दस्य $D_4$. ४. $B_1$ drops it. ५. मातृष्वसेयः । मातृस्वस्रीयः । $D_4$. ६. अतो यदपत्ये $B_1$. ७. अर्थे after it—P, $D_2$, $D_3$, $B_1$. ८. विष्टि $Dc_4$, $Dc_3$. ९. कुद्रि $Dc_1$; $Bc_3$.

**ये चाभावकर्मणोः ॥६।४।१६८॥**

यादौ तद्धिते[1] अन् प्रकृत्या स्यात् न तु भावकर्मणोः। राज्ञो जातौ यत्[2]। राजन्यः। क्षत्रियः। राजनोऽन्यः।

**अन् ॥६।४।१६७॥**

अणि अन् प्रकृत्या स्यात्। इति टिलोपो न। अभावकर्मणोः किम्। राज्ञो वा[4] भावः कर्म वा राज्यम्।

**क्षत्रात् घः ॥४।१।१३८॥**

घस्येयः। क्षत्रियः। जाताविष्टिः। क्षात्रिरन्यः।

**कुलात् खः ॥४।१।१३९॥**

केवलात् कुलात् तदन्ताच्च खः स्यात्[5]। खस्येनः। कुलीनः। आढ्यकुलीनः।

---

**क्षत्रात्।** घशब्द एवायं गृह्यते न तरप्तमपौ। कुतः। ज्ञापकात्। यदयं प्रत्ययादेर्घकारस्येयादेशं शास्ति तज् ज्ञापयति यत्र प्रत्ययविधौ घः श्रूयते तत्र स्वरूपमेव गृह्यत इति। **क्षात्रिरन्य** इति। 'अत इञ्'। केवलं क्षत्रस्यापत्यं न क्षत्रियजातिः।

**कुलात्।** उत्तरसूत्रे पूर्वपदनिषेधादिह केवलस्तदन्तश्च गृह्यत इत्याह। **केवलादित्यादि।** **खस्य ईनेति।** 'आयनेयीनीयि—' इति।

---

१. After it—परे P, $D_1$, $D_3$, C, २. यत्प्रत्ययः C. ३. अन्नाणि C, $D_2$. ४. $D_1$, $B_2$, $D_2$, $D_3$ drop it. ५. $B_1$ drops it.

## अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥४।१।१४०॥

[1]केवलात् कुलादेतौ [2]वा स्तः ॥ [3]पक्षे खः । कुल्यः । कौलेयकः । कुलीनः । [4]पदग्रहणात् [5]बहुपूर्वाद्भवत्ये[6]व । बहुकुल्यः । बहुकौलेयकः । बहुकुलीनः ।

## महाकुलादञ्खञौ ॥४।१।१४१॥

अस्मादेतौ वा स्तः ॥[7] माहाकुलः । माहाकुलीनः । पक्षे खः । महाकुलीनः ।

## दुष्कुलाड्ढक् ॥४।१।१४२॥

दौष्कुलेयः ।[8] पक्षे खः । [9]दुष्कुलीनः ॥

## स्वसुश्छः ॥४।१।१४३॥

स्वस्रीयः ।

## भ्रातुर्व्यच्च ॥४।१।१४४॥

भ्रातुरपत्ये व्यत् स्यात् ॥ भ्रातृव्यः । छः । चकारात् छः । भ्रात्रीयः ।

---

अपूर्व । अपूर्वादित्युक्ते बहुच्पूर्वादपि निषेधः स्यात् । अतः 'अपूर्वपदात्' इत्युक्तम् । ईषदसमाप्तं कुलं बहुकुलम् । बहुकुल्यः । बहु[10]कुलेयः । बहुकुलीनः ।

---

१. केवलात् कुलात् यकढकञ् एतौ स्तो वा $B_1$. २. Dropped $D_5$. ३. कुल्यः । कौलेयकः । पक्षे खः । कुलीनः $B_1$, $D_5$. ४. P drops from पद° to दुष्कुलीनः; C, $D_1$, $D_2$, $D_4$ drop from पद° to बहुकुलीनः. ५. बहुच्पूर्वादपि भवति $B_2$. ६. एव dropped $D_5$. ७. After this—पक्षे खः, dropping it after महाकुलीनः—$D_1$, $D_4$, $D_5$, $B_2$. ८. After this—अन्यतरस्यांग्रहणात् खञ् च । दौष्कुलीनः । P, $B_1$, $D_3$. ९. दुःकुलीन $D_1$. १०. °कौलेयकः $Dc_4$; बाहुकुलेयकः $Dc_3$.

व्यन् सपत्ने ॥४।१।१४५॥

भ्रातृव्यः शत्रुः । स्वरे भेदः ।

रेवत्यादिभ्यष्ठक् ॥४।१।१४६॥

एभ्योऽपत्ये ठक् स्यात् ।

ठस्येकः ॥७।३।५०॥

प्रत्ययादेष्ठस्येकादेशः स्यात् ॥ रैवतिकः । आश्वपालिकः ।

---

व्यन् । स्वरे भेद इति । तिति तु 'तित् स्वरितम्' इति स्वरितत्वम् । निति 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वमित्यर्थः ।

रेवत्या । यथायोगमणादीनामपवादः । रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवती । वृकग्राह । दण्डग्राह । कुक्कुटाक्ष ।

ठस्येकः । कुष्ठः कण्ठ इत्यादीनाम् 'उणादयो बहुलम्' इति ठस्य न स्यादिकः । मथितं पण्यमस्य माथितिकः । अत्र यस्येति लोपे कृते 'तान्तात्कः' इति स्थानिवद्भावेनेकः कः स्यादिति चेन्नैवम् । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न भवति । अथवा ठमात्रस्यादेशः । अकार उभयत्रोच्चारणार्थः । तेनालविधित्वात् स्थानिवद्भावो नेति कादेशो न । स्पष्टत्वात् त्यक्तानि पञ्चदश । 'गोत्रस्त्रियाः कुत्सने ण च' ॥४।१।१४७॥ पितुरज्ञाने मात्रा व्यपदेशः कुत्सनम् । तस्मिन् गम्यमाने गोत्रस्त्रीवाचिनो यून्यपत्ये णः स्यात् ठक् च । गार्ग्या अपत्यं गार्गो जाल्मः । गार्गिकः । गोत्र इति किम् । कारिकेयो जाल्मः । स्त्रियाः किम् । औपगविर्जाल्मः । कुत्सने किम् । गार्गेयः ।

---

१. रेवत्यादिभ्यः C, $D_1$, $B_2$, $Dc_1$. २, $B_1$ drops it. ३, आदेशः dropped $D_8$. ४. $B_1$ drops it. ५. वृकवञ्चिन् $Dc_4$. ६. Before it—कर्णग्राह $Dc_4$. ७. गार्ग्यो $Dc_1$, $Dc_3$.

'वृद्धात् ठक् सौवीरेषु बहुलम्' ॥४।१।१४८॥ वृद्धात् सौवीरगोत्राद्बहुलं ठक् स्यात् कुत्सने। भागवित्तेर्गोत्रापत्यं भागवित्तिकः। पक्षे 'यञिञोश्च' इति फक्। भागवित्तायनः। तार्णविन्दवस्य तार्णविन्दविकः। तार्णविन्दविः। आकशापेयिकः। आकशापेयिः। एभ्य एवेष्यते। वृद्धादिति स्त्रीनिवृत्तये। सौवीरेष्विति किम्। औपगविर्जाल्मः। कुत्सन एव। भागवित्तायनः। बहुलोक्तिर्वैचित्र्यार्था। तेन 'गोत्रस्त्रियाः—' इत्यादिषु चतुर्षु सूत्रेषु आद्यसूत्रे कुत्सने एव। अन्त्यसूत्रे सौवीरेष्वेव। मध्यमसूत्रयोः कुत्सने सौवीरेषु च। 'फेश्छ च' ॥४।१।१४९॥ कुत्सने वृद्धात् फिञन्तात् सौवीरगोत्रादपत्ये छः ठक् च। वृषयमुन्दसुयामास्तिकादिषु पठ्यन्ते। एभ्य एवेष्यते। वार्ष्यायणीयः। वार्ष्यायणिकः। यामुन्दायनीयः। यामुन्दायनिकः। सौयामायनीयः। सौयामायनिकः। कुत्सन एव। वार्ष्यायणिः। फिञन्तादणो 'ण्यक्षत्रिय—' इति लुक्। 'फाण्टाहृतिमिमताभ्यां णफिञौ' ॥४।१।१५०॥ आभ्यां सौवीरगोत्राभ्यामपत्ये णफिञौ स्तः। अल्पाचः परनिपाताद्यथासंख्यं न। फाण्टाहृतः। फाण्टाहृतायनिः। मैमतः। मैमतायनिः। सौवीरेषु किम्। फाण्टाहृतायनः। 'यञिञोश्च' ॥ इति फक्। मैमतायनः। 'नडादिभ्यः फक्' ॥ 'कुर्वादिभ्यो ण्यः' ॥४।१।१५१॥ 'सौवीरेषु बहुलम्' इति निवृत्तम्। एभ्योपत्ये ण्यः स्यात्। कौरव्यः। यस्तु 'कुरुनादिभ्यः' इति कुरुशब्दात् ण्यः स तु क्षत्रियात् तद्राजसंज्ञको बहुषु लोपी। अयं तु श्रूयते कौरव्याः। विकादिपाठात् फिञपि। कौरव्यायणिः। कुरु। गर्ग। मंङ्कुष। अंजमारक। वाँवदूक। सम्राजः क्षत्रिये। साम्राज्यः

१. From तार्ण° to भागवित्तायनः dropped Dc₁, Bc₁, Bc₃. २. अन्त्ये सूत्रे Dc₃, Dc₄. ३. Dropped Dc₄. ४. गर्ग। गर्गर। Dc₃. ५. मञ्जुर Dc₄. ६. अञ्जमार Dc₂, Dc₃. ७. वाफडक Bc₁, Dc₁, Dc₄.

क्षत्रियः । साम्राजोन्यः । कवि । मति । वाक् । पितृमत् । इन्द्रजाली । एजि । दामोष्णीषि । गणकारि । कैशोरि । कपिञ्जलादि । कुट । शलाका । पुर । एरक । शुंक्रा । दर्भ । केशिनी । स्त्रीनिर्देशात् पुंवत्त्वं नेति 'नस्तद्धिते' इति टिलोपो न । कैशिन्यः । वेना-च्छन्दसि । वैन्यो राजेति च्छान्दस एव कविभिः प्रमादात् प्रयुक्तः । शूर्पणाय । श्यावनाय । श्यावरथ । श्यावपुत्र । सत्यंकार । वल-भिंकार । पथिकारिन् । मूढ । शकन्धु । हर्तृ । शालीन । रथकार । जातिशब्दोयम् । करिणस्तूत्तरेण सिद्धः । इन । पिण्डी । वामरथस्य कण्वादिवत् स्वरवर्जम् । ण्यप्रत्ययान्तस्य वामरथ्यस्य यञन्तेषु कण्वादिषु दृष्टमात्रस्य कार्यस्य लुगादिकस्यातिदेशः न तु कण्वादि-त्वप्रयुक्तस्यैव 'कण्वादिभ्यो गोत्रे' इत्यस्य । अत एव स्वरवर्ज-मित्याह । 'यञञोश्च' इति बहुषु लुक् । वामरथाः । स्त्री वामरथी । वामरथ्यायनी । 'प्राचां ष्फतद्धितः' । युवा वामरथ्यायनः । 'यञिञोश्च' इति फक् । वामरथाश्छात्राः । 'कण्वादिभ्यो गोत्रे' इत्यण् । वामरथानि संघाङ्कलक्षणानि । 'संघाङ्कलक्षण—' इत्यादि-नाण् । स्वरस्त्वन्तोदात्त एव ण्यस्वरेन न त्वतिदेशेनाद्युदात्तः । 'सेनान्तलक्षणकारिभ्यश्च' ॥४।१।१५२॥ सेनान्ताल्लक्षणात् कारिवा-चिभ्यश्चापत्ये ण्यः । हारिषेण्यः । लाक्षण्यः । कारिभ्यः । तान्तुवाय्यः । नापित्यः । 'उदीचामिञ्' ॥४।१।१५३॥ सेनान्तादिभ्य इञ्स्यादुदीचां मतेन । हारिषेणिः । लाक्षणिः । तान्तुवायिः । 'तिकादिभ्यः फिञ्' ॥ ४।१।१५४॥ एभ्योपत्ये फिञ् स्यात् । तैकायनिः । तिक । कितव । संज्ञा । बाल । शिखा । उरस् । शाठ्य । सैन्धव । यमुन्द । रूप्य । वृष । अस्य प्रत्ययसंनियोगेन यकारान्तत्वमिष्यते । वार्ष्यायणिः । ग्राम्य । नीड । अमित्र । कुरु । देवरथ । तैतिल । औरस । लाङ्कट । गोकक्ष । कौरव्य । क्षत्रियशब्दोयम् । अन्यतस्त्विञेव । तस्य

१. शामालिपि Bc1; शामालिषि Dc3, Dc4. २. शुभ्र Dc2. ३. इनपिण्डी Bc1. ४. After it—शब्दस्य Dc2. ५. °वाय्य: Dc3. ६. संयोगेन Bc1.

'ण्यक्षत्रिय—' इति लुक् । भौरिकि । भौलिकि[1] । चौपयत । चैटयत[2] । शैकयत । क्षैतयत । ध्वजयत[4] । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । वस्व । आराट । वाह्यका । खल्यका । लोमका । सुयाम । उदन्य । यज्ञ । 'कौशल्यकार्मार्याभ्यां च' ॥४।१।१५५॥ आभ्यामपत्ये फिञ् स्यात् । कौशल्यायनिः । कार्मार्यायनिः । कौशलकर्मराभ्यामेवात्रे-ओपवादः फिञ् । तत्संनियोगेन प्रकृतिरूपं निपात्यते । तथोक्तम् ।

'दगुकौशलकर्मारच्छागवृषाणां युड्ढादिष्टस्य' इति ।

दागव्यायनिः । छाग्यायनिः । वार्ष्यायणिः । 'अणो द्व्यचः' ॥४।१।१५६॥ अणन्ताद् द्व्यचः फिञ् स्यात् । कर्तुरपत्यं । कार्त्रः । कार्त्रस्यापत्यं कार्त्रायणिः । अण इति किम् । दाक्षायणः । द्व्यचः किम् । औपगविः । 'उदीचां वृद्धादगोत्रात्' ॥४।१।१५७॥ वृद्धादगोत्रादपत्ये फिञ् उदीचाम् । आम्रगुप्तायनिः । कारिशब्दादपि परत्वादयमेव । नापितायनिः । उदीचां किम् । आम्रगुप्तिः । वृद्धात् किम् । याज्ञदत्तिः । अगोत्रात् किम् । औपगविः । 'वाकिनादीनां कुक् च' ॥४।१।१५८॥ एभ्योपत्ये फिञ् । कुगागम उदीचाम् । वाकिनायनिः । वाकिनिः । वाकिन । गारेध । काक । कार्कट्य । लङ्का । चर्मवर्मणोर्नलोपश्च । 'पुत्रान्तादन्यतरस्याम्' ॥४।१।१५९॥ पुत्रान्ताद्वृद्धात् पूर्वेण पक्षे फिञ् सिद्धस्तस्मिन्ननेन वा कुगागमो विधीयते । ततस्त्रैरूप्यम् ॥ गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः । 'प्राचामवृद्धात् फिन् बहुलम्' ॥४।१।१६०॥ अवृद्धात् फिन् स्यात् प्राचाम् ।

१. भौलिक Dc4. २. वैपयत। वैडयत Dc4. ३. After it—वैकयत Dc3. ४. ध्वजवत Dc3 ५. स्वर Dc1. ६. कौसल्य° Dc2, Bc3. ७. कौसल्या° Dc2, Bc3. ८. कौसल° Dc2, Bc3. ९. कौसल° Dc2, Bc3. १०. दाग्यायनिः Bc1, Dc1, Dc4.

**अनृष्यानन्तर्ये विदादिभ्योञ्** ॥४।१।१०४॥

विदादिभ्यो गोत्रापत्येञ् स्यात् येत्वत्रानृषयस्तेभ्य आनन्तर्ये[1]। वैदः। और्वः। अञन्तत्वाद्बहुत्वे लुक्। विदाः। उर्वाः। गोत्र इत्येव। वैदिः।[2] और्विः। अनृषिभ्यः। पौत्रः। दौहित्रः।

---

ग्लुचुकायनिः। ग्लौचुकिः। वृद्धात् किम्। राजदन्तिः। बहुलोक्तेः क्वचिन्न। दाक्षिः। 'मनोर्जातावञ्यतौ षुक् च' ॥४।१।१६१॥ मनुशब्दाज्जातौ अञ्यतौ स्तः षुक् चागमः। मानुषः। मनुष्यः। जातिशब्दावेतौ। ततोपत्यार्थाभावाद् बहुष्वलुक्। मानुषाः। अपत्ये विवक्षिते त्वणेव। मानवी प्रजा।

'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' ॥

**अनृष्या। अञन्तत्वादिति**। 'यञञोश्च' इति। **वैदिरिति**। बाह्वादित्वादिञ्। विद। उर्व[4]। कश्यप। कथमिद्रमूः सप्तमः काश्यपानामिति। अपत्यसामान्यरूपविवक्षया ऋष्यणा भविष्यति[5]। कुशिक। भरद्वाज। उपमन्यु। किलात। किन्दर्भ। विश्वानर। ऋष्टिषेण[6]। ऋतभाग। प्रियक। सप्तस्तम्ब। कुशवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यापर्ण। हरित। किंदास। वस्यस्क। अर्कलुग। वध्योग। विष्णुवृद्ध। प्रतिबोध। रथन्तर। गाविष्ठिर। निषाद। मठर। मृडाक। पुनर्भू। पुत्र। दुहितृ। ननान्दृ। परस्त्री परशुं च। परस्त्रिया अपत्यं पारशवः। ब्राह्मणाच्छूद्रायामूढायामुत्पन्नः। सा च जातितः परस्त्री। यस्तु परभार्यायामुत्पन्नः पारस्त्रैणेयः सः।

---

१. D₁ drops it. २. Before it—आनन्तरः C. ३. Dropped P, C, D₁, D₅. ४. ऊर्व Bc₄, Dc₁, Dc₃. ५. भवति Dc₃. ६. ऋषिषेण Dc₁, Dc₂.

## यस्कादिभ्यो गोत्रे ॥२।४।६३॥

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् ॥ यस्काः । लेह्याः । अस्त्रियां किम् । यास्क्यः स्त्रियः ॥[4]

**यस्कादि** । प्रत्ययाविधेश्चान्यत्र लौकिकं गोत्रं गृह्यते इत्यनन्तरापत्येपि लुक् । बहुत्वे किम् । यास्कः । तत्कृते किम् । प्रिययास्काः । अस्त्रियामित्येव । यास्क्यः स्त्रियः । गोत्रे किम् । यास्काश्छात्राः । यस्क । लह्य । द्रुह्य । अयस्थूण । तृणकर्ण । एते शिवादिषु पठ्यन्ते । तेभ्योण् । ततः परेभ्यः षड्भ्य इञ् । सदामत्त । कम्बलहार । अहिर्योग[5] । कर्णाढक[6] । पिण्डीजङ्घ । बकसक्थ[7] । ततः परेभ्यश्चतुर्भ्यः 'गृष्ट्यादिभ्यश्च' इति ढञ् । वसि[8] । कुडि । अजबस्ति । मित्रयु । ततः परभ्यो द्वादशभ्य इञ् । रज्जुमुख । जङ्घारथ । उत्कास । कटुक । मन्थर । पुष्करसद् । विषयुट् । उपरिमेखल । क्रोष्टुमाय । क्रोष्टुमान । क्रोष्टुपाद । शीर्षमाय । पुष्करसद् शब्दाद् बाह्वादिपाठादिञ् । केचिद् गोपवनादिषु तौल्वलादयश्चेति पठन्ति तौल्वलादिषु च पौष्करादिशब्दपाठाच्च गोपवनादिभ्य इति निषेधे प्राप्तेत्रास्य पाठः । खेलयव[9]शब्दो नडादिस्ततः फक् । पदक । वर्षुक । आभ्याम 'अत इञ्' । भलन्दन[10]शब्दात् शिवाद्यण् । भण्डिल[11] । भण्डित । भण्डिक । एभ्योश्वादिफञ् ।

१. बहुषु लुक् $D_1$, $D_2$, $D_4$, $B_2$. २. Before it—शिवादिभ्यः $D_5$. ३. स्त्रियां तु $B_1$, $D_5$ ; from अस्त्रियां to स्त्रियः dropped $D_1$. ४. After it—लाह्यः P. ५. बहिर्योग $Bc_1$, $Dc_1$, $Dc_3$. ६. कार्णाटक $Bc_1$, $Dc_1$, $Dc_3$. ७. बकभक्त $Bc_1$, $Dc_1$, $Dc_4$, $Dc_3$. ८. विश्वि $Dc_2$ ; विासि $Dc_3$, $Dc_4$. ९. खलयवय $Bc_1$ ; खलयवन $Dc_1$. १०. हलवेक $Dc_1$, $Bc_1$; हलदेश $Dc_4$ ; हलबलदक $Dc_3$. ११. भडिल $Dc_4$.

**अत्रिभृगुकुत्सवसिष्ठगौतमाङ्गिरोभ्यश्च ॥२।४।६५॥**

एभ्यस्तद्वत्।[1] अत्रयः। भृगवः। कुत्साः। वसिष्ठाः[2]। गौतमाः। अङ्गिरसाः। तेनैवेत्येव। प्रियात्रेयाः। स्त्रियां तु। आत्रेय्यः स्त्रियः।

---

**अत्रि**। अत्रेः 'इतश्चानिञः' इति ढक्। अन्येभ्य ऋष्यण्। **प्रियात्रेया** इति। प्रिय आत्रेयो येषां ते प्रियात्रेयाः। न ह्यत्र प्रत्ययान्तकृतं बहुत्वम्। किं तर्हि। समासार्थकृतम्। **आत्रेय्य** इति। 'टिड्ढाणञ्—' इति ङीप्। स्पष्टत्वात् त्यक्तं सूत्रपञ्चकम्। 'बह्वच इञः प्राच्यभरतेषु' ॥२।४।६६॥ बह्वचः पदात् प्राच्यगोत्रे भरतगोत्रे च य इञ् तस्य बहुषु लुक्। प्राच्ये पन्नागाराः। भरते[3] अर्जुनाः। बह्वचः किम्। वैकयः। प्राच्यभरतेषु किम्। वालाकयः[4]। भरताः प्राच्या एव तद्ग्रहणमन्यत्र प्राग्ग्रहणे भरतग्रहणं नेति ज्ञापनार्थम्। तेन 'इञः प्राचाम्' इत्यत्र भरतानां युवप्रत्ययस्य लुग्न। आर्जुनेः पुत्रः अर्जुनायनः। 'न गोपवनादिभ्यः' ॥२।४।६७॥ एभ्यो गोत्रप्रत्ययस्य न लुक्। गौपवनाः। विदाद्यन्तर्गणोऽयं। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यापर्ण। 'तिककितवादिभ्यो द्वन्द्वे' ॥२।४।६८॥ तिकादिभ्यः कितवादिभ्यश्च गोत्रप्रत्ययस्य द्वन्द्वे बहुषु लुक्। तैकायनयश्च कैतवायनयश्च तिककितवाः। 'तिकादिभ्यः फिञ्'। तस्य लुक्। वाङ्खरयश्च भाण्डीरथयश्च वङ्खरभण्डीरथाः। इञो लुक्। औपकायनाश्च लामकायनाश्च उपकलमकाः। नडादिफक्। वाहकयश्च नारकयश्च वहकनरकाः। इञः। वाकनखयश्च गौदपरिणद्धयश्च वकनखगुदपरिणद्धाः। इञः। औब्जयश्च काकुभाश्च उब्जककुभाः। उब्जादिञः। ककुभाच्छिवाद्यणः। लौङ्कटयश्च शान्त-

---

१. After it—स्यात् B₁. २. वशिष्ठाः B₁, D₈. ३. भरते Dc₃. ४. लाकट° Dc₄.

मुखयश्च लंकटशान्तमुखाः । इञः । औरसायनयश्च लाङ्कटयश्च उरसलङ्कटाः । उरसात् तिकादिफिञः । लङ्कटादिञः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च कृष्णाजिनकृष्णसुन्दराः । इञः । भ्राष्ट्रकयश्च कापिष्ठलयश्च भ्रष्ट्रककपिष्ठलाः । इञः । आग्निवेश्याश्च दाशेरकयश्च अग्निवेशदशेरकाः । अग्निवेशाद् गर्गादियञः । दशेरकादिञः । 'उपकादिभ्योन्यतरस्यामद्वन्द्वे' ॥२।४।६९॥ उपकादिभ्यो गोत्रप्रत्ययस्य वा लुक् द्वन्द्वे चाद्वन्द्वे च । उपकाः । उपकायनाः । लमकाः । लामकायनाः । भ्रष्ट्रकाः । भ्राष्ट्रकायनाः । कपिष्ठलाः । कापिष्ठलयः । कृष्णाजिनाः । कार्ष्णाजिनयः । कृष्णसुन्दराः । कार्ष्णसुन्दरयः । एषामद्वन्द्वे विकल्पः । द्वन्द्वे तु पूर्वेण नित्यम् । परिशिष्टानां द्वन्द्वे चाद्वन्द्वे च वा । चूडारक । आडारक । उदङ्क । सुधायक । सुपिष्ट । पिष्ट । मयूरकर्ण । खरीजङ्घ । शलाथल । पतञ्जल । पदञ्जल । कठेरणि । कुषीतक । कशकृत्स्न । निदाघ । कलशीकण्ठ । दामकण्ठ । कृष्णाजिन । कृष्णपिङ्गल । कृष्णक । कर्णक । पर्णक । जटिलक । बधिरक । जातुक । अनुलोम । अनुपद । पिङ्गलक । प्रतिलोम । प्रतान । अनभिहित । 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' ॥२।४।७०॥ आगस्त्यकौण्डिन्ययोरवयवयोर्गोत्रप्रत्यययोर्लुक् । एतयोश्चागस्तिकुण्डिनचावादेशौ । अगस्तयः । ऋष्यणः । कुण्डिनाः गर्गादियञः । चोन्तोदात्तार्थः । सर्वादेशं परित्यज्य गोत्रप्रत्ययस्य लुग्विधिरागस्तीया इत्यत्र 'गोत्रेलुगचि' इति लुकि निषिद्धे संनियोगशिष्टे आदेशेसति वृद्धलक्षणश्छो यथा स्यादित्येवमर्थम् । अन्यथागस्त्यादेशे अवृद्धत्वात् छो न स्यात् । कौण्डिन्ये त्वणेव भाव्यम् । 'कण्ड्वादिभ्यो गोत्रे' इति । तत्र विशेषो नास्ति लुगलुकोः । कौण्डिना-

१. लकट॰ Dc4. २. मयूरकर्णक Dc2, Dc4. ३. कुषीतर Bc1, Dc1, Dc4, Dc3. ४. कलसीकण्ठ Bc1, Dc3.

श्छात्रा इति। स्यत्रत्र सूत्रत्रयं प्रसङ्गाद्व्याख्यायते। 'गोत्रे लुगचि' ॥४।१।८९॥ यस्कादिभ्य इत्यादौ येषां लुगुक्तस्तेषामजादौ प्राग्दीव्यतीये विवक्षिते न। यास्कीयाः। गार्गीयाः। आत्रेयीयाः। गोत्रे किम्। बदर्याः फलं बदरम्। तस्येदं बादरम्। अचि किम्। गर्गरूप्यम्। प्राग्दीव्यतः किम्। गर्गेभ्यो हितं गर्गीयम्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ[1] द्व्येकयोरलुग् वाच्यः। गोत्रप्रत्ययस्य बहुत्वे विधीयमानलोपस्य गोत्रप्रत्ययान्तं यद्बहुवचनान्तं तस्यार्थान्तरसंक्रमे[2] द्वित्वैकत्वयोर्वृत्तौ लुगभावो वक्तव्यः। वैदः। वैदौ। अत्र विदस्य गोत्रापत्यानि विदाः। अत्र बहुषु लोपी। एतदन्ताद्यूनीञ्। तस्य 'ण्यक्षत्रिय—' इति लुकि गोत्रप्रत्ययान्तस्य बहुवचनान्तस्य विदानामपत्यं युवा युवानौ वेति युवरूपार्थान्तरवृतौ द्वित्वैकत्वयोर्वृत्तिरिति गोत्रप्रत्ययस्यालुक्[3]। एकवचनद्विवचनान्तस्य गोत्रप्रत्ययस्य वृत्तौ बहुषु लुक् यूनि। वैदस्य वैदयोर्वापत्यानि विदाः॥ 'यूनि लुक्' ॥४।१।९०॥ प्राग्दीव्यतीयेजादौ विवक्षिते युवप्रत्ययस्य लुक्। तस्मिन् लुप्ते यो यतः प्राप्नोति स स्यात्। फाण्टाहृतस्य गोत्रापत्यं[4] फाण्टाहृतिः। ततो 'यूनि फाण्टाहृति—' इति णः। तस्य छात्रा इति विवक्षिते णस्य लुकि इञन्तात् 'इञश्च' इत्यणि फाण्टाहृताः। अचि किम्। फाण्टाहृतरूप्यम्। प्राग्दीव्यतः किम्। हिते तैकायनीयम्। 'फक्फिञोरन्यतरस्याम्' ॥४।१।९१॥ फक्फिञोर्युवार्थयोः प्राग्दीव्यतीयेजादौ विवक्षिते वा लुक् स्यात्। गार्ग्यात् 'यञिञोश्च' इति यूनि फक्। तस्य च्छात्रा गार्गीयाः। गार्ग्यायणीयाः। यस्कस्यापत्यं शिवाद्यण्। यास्कस्य गोत्रस्यापत्यं युवा 'अणो द्व्यचः' इति फिञ्। यास्कायनिः। तस्य च्छात्रा यास्कीयाः यास्कायनीयाः।

---

१. वृत्तौ Dc3. २. संक्रमेण Bc1, Dc3, Dc4. ३. °स्य न लुक् Dc2, Bc3. ४. गोत्रं Bc1, Dc1, Dc4.

## जनपदशब्दात् क्षत्रियादञ् ॥४।१।१६८॥

जनपदशब्दादपत्यवाचिनोपत्येञ् स्यात्[1] ॥ पाञ्चालः । वैदेहः । देशशब्दात् किम्[2] । पौरवः । क्षत्रियसमानशब्दात् जनपदस्य राजन्य-पत्यवत् । पञ्चालानां राजा पाञ्चालः । वैदेहः । आङ्गः । वाङ्गः ।

---

जन । पाञ्चालः । वैदेह इति । पञ्चालविदेहशब्दौ जनपदक्षत्रियवचनौ । पौरव इति । पुरुर्नाम क्षत्रियो न जनपदः । क्षत्रियात् किम् । पञ्चालस्य विप्रस्यापत्यं पाञ्चालिः । क्षत्रियसमानेति । समानः शब्दो यस्य स तथोक्तः । क्षत्रियेण समानशब्दः क्षत्रियसमानशब्दः तस्माज्जनपदशब्दात् षष्ठीसमर्थात् जनपदस्य राजेत्यस्मिन्नर्थे अपत्यवत् प्रत्ययाः स्युः । अपत्ये यथा प्रत्यया भवन्ति तथास्मिन्नप्यर्थे । पाञ्चाल इत्यादि । 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तो वुञ् निषिध्यते[4] । आङ्ग इत्यत्र 'द्व्यञ्मगध—' इत्यण् । स्पष्टत्वात् त्यक्तं सूत्रपञ्चकम् । 'साल्वेयगान्धारिभ्यां च' ॥४।१।१६९॥ 'जनपदशब्दात् क्षत्रियात्' इति वर्तते । आभ्यामपत्येञ् स्यात् । 'वृद्धेत् कोसलाजादाञ् ञ्यङ्' इत्यस्यापवादः । साल्वेयः । गान्धारः । तस्य राजन्यपि । साल्वेयो राजा । गान्धारो राजा । 'द्व्यञ्मगधकालिङ्गसूरमसादण्' ॥४।१।१७०॥ द्व्यजादिभ्योपत्येण् । अञोपवादः । आङ्गः । मागधः । कालिङ्गः । सौरमसः । एवं तस्य राजन्यपि । 'वृद्धेत् कोसलाजादाञ्ञ्यङ्' ॥४।१।१७१॥ वृद्धादिदन्ताच्च कोसलाजादाभ्यां च ञ्यङ् स्यादञोपवादः । वृद्धात् । आम्बष्ठ्यः । सौवीर्यः । इतः । आवन्त्यः । कौन्त्यः । कोसलात् । कौसल्यः । अजादात् । आजाद्यः । इतीति तपरः किम् । कुमारी नाम क्षत्रियस्तस्यापत्यं कौमारः । अञेव । पाण्डोर्जनपदशब्दात् क्षत्रियात् ड्यण् वाच्यः । पाण्ड्यः । पाण्डवोन्यः । तस्य राजन्यपि[3] । 'कुरुनादिभ्यो ण्यः' ॥४।१।१७२॥ जनपदशब्दात् क्षत्रियादित्येव ।

---

१. °शब्दात् क्षत्रियवाचिनो D1, D2, D4. २. जनपदशब्दात् किम् P.
३. C drops it. ४. बाध्यते Dc4.

ते तद्राजाः ॥४।१।१७४॥

ते अञादयस्तद्राजसंज्ञाः स्युः। बहुत्वे तु तद्राजस्येति लुक्। पञ्चालाः। विदेहाः। अङ्गाः। वङ्गाः।

---

कुरुशब्दान्नकारादिभ्यश्च ण्यः। अणञोरपवादः। कौरव्यः। नैचिक्यः। नैषध्यः। तस्य राजन्यपि। कथं 'स नैषधस्यार्थपतेः सुतायाम्' इति। शेषविवक्षायामण्। 'साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्' ॥४।१।१७३॥ 'जनपदशब्दात् क्षत्रियात्' इति वर्तते। एभ्योपत्ये तस्य राजनि च इञ्।

'उदुम्बरास्तिलखला मद्रकारा युगंधराः।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः' ॥

औदुम्बरिः। तैलखलिरित्यादि। प्रात्यग्रथिः। कालकूटिः। आश्मकिः।

ते। जनपदशब्दात् क्षत्रियादञ् इत्येवमादयः। त्यक्तं सूत्रचतुष्टयं प्रसङ्गाद् व्याख्यायते। 'कम्बोजाल्लुक्' ॥४।१।१७५॥ कम्बोजात् क्षत्रियात् परस्य तद्राजस्याञो लुक्। कम्बोजः। चोलादिभ्योपीष्यते। चोलः। केरलः। शकः। एवं तस्य राजनि। 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' ॥४।१।१७६॥ अवन्त्यादिभ्यः परस्य तद्राजस्य स्त्रियां लुक्। अवन्ती। कुन्ती। वृद्धेत्कोसलाजादात् ञ्यङो लुक्। कुरूः। कुरुनादिण्यस्य। स्त्रियां किम्। आवन्त्यः। 'अतश्च' ॥४।१।१७७॥ अकारस्य प्रत्ययस्य तद्राजस्य स्त्रियां लुक् स्यात्। शूरसेनी। मागधी। 'न प्राच्यभर्गादियौधेयादिभ्यः' ॥४।१।१७८॥ एभ्योकारस्य प्रत्ययस्य तद्राजस्य स्त्रियां न लुक्। प्राच्येभ्यः क्षत्रियेभ्यस्तावत्। पाञ्चाली। वैदेही। आङ्गी। वाङ्गी।

---

१. $B_1$ drops it. २. C drops तु and इति; बहुत्वेति $D_1$, $D_5$. ३. Before it—स्पष्टत्वात् $Dc_2$, $Bc_3$. ४. प्रसङ्गादत्र $Bc_1$. ५. सलकः। $Bc_1$, $Dc_1$. ६. °कारप्रत्य° $Bc_1$, $Dc_3$, $Dc_1$. ७. Omitted $Bc_1$, $Dc_1$. ८. After it—स्यात् $Dc_3$.

कुमुदगन्धेरपत्यं कौमुदगन्धः । वाराहिः । स्त्र्यपत्ये तु ।

**ह्रस्वं लघु ॥१।४।१०॥**

ह्रस्वमक्षरं लघुसंज्ञं स्यात् ॥

**[२]संयोगे गुरु ॥१।४।११॥**

[३]संयोगे [४]ह्रस्वं गुरुसंज्ञं [५]स्यात् ॥

---

भर्गादेः । भार्गी । योधेयादेः । यौधेयी । यौधेयादिभ्योऽत्र तद्राजप्रत्ययाकारस्यासंभवात् पाञ्चमिकस्य प्रकरणान्तरस्थस्यापि पर्श्वादिसूत्रोक्तस्याञो लुक् निषिध्यते ज्ञापनार्थं तेन पर्श्वाद्यणः स्त्रियां लुक् सिद्धः । पर्शुः । रक्षाः । असुरी । भर्ग । करूष । कश्मीर । केकय । साल्व । सुस्थाल । उरश । कौरव्य । भर्गादि । यौधेय । शौक्रेय[७] । शौभ्रेय । धार्तेय ।[८] त्रिगर्त । भरत । उशीनर । यौधेयादि । कुमुदगन्धेरिति । कुमुदस्य गन्ध इव गन्धोऽस्य[९] स कुमुदगन्धिः । 'उपमानाच्च' इति गन्धस्येकारः । कौमुदगन्ध इति । 'तस्यापत्यम्' इत्यण् । वाराहिरिति । 'अत इञ्'। स्त्रीप्रत्यये त्विति । यदा तयोरपत्यं स्त्री विवक्ष्यते तदेति भावः ।

ह्रस्वम् । भेत्ता । छेत्ता । लघुसंज्ञायां 'पुगन्तलघूपधस्य च' इति गुणः । अचीकरत् । 'दीर्घो लघोः' इत्यभ्यासस्य[१०] दीर्घः ।

संयोगे । गुरुप्रदेशाः 'गुरोश्च हलः' इत्येवमादयः । कुण्डा । शिक्षा । भिक्षा ।

---

१. Before it—वराहस्यापत्यम् । अत इञ् । $D_5$. २. C has the Sûtra and the Vṛitti after दीर्घं च. ३. संयोगे परे $D_1$, $D_4$. ४. ह्रस्वमक्षरं $D_4$. ५. $B_1$, $D_1$ drop it. ६. °न्त्रस्य $Bc_1$, $Dc_4$, $Dc_3$. ७. शौक्रिय $Dc_2$; $Dc_3$, $Bc_1$. ८. After it—ध्यार्तेय । ज्यावानेय । $Dc_2$ ; $Bc_1$ has—वर्तेय । मौर्वेय । यौवनेय ।; $Dc_3$ and $Dc_4$ have–वार्तेय । धार्तेय । मार्वेय । यावनेय । त्रिगर्त &c. (ज्यावनेय $Dc_3$). ९. गन्धो यस्य कुमुद° $Dc_4$. १०. इत्यभ्यासदीर्घः $Dc_1$, $Bc_1$.

दीर्घं च ॥१।४।१२॥

[1]दीर्घं च गुरुसंज्ञं स्यात् ॥

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥४।१।७८॥

त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमं गुरूपोत्तमयोरनार्षयोर्गोत्रे स्त्रियां यावणिञौ विहितौ तयोः ष्यङादेशः [3]स्यात् ।

---

दीर्घम् । ईहांचक्रे । 'इजादेश्च गुरुमतोनृच्छः' इत्याम् ।

अणिञोः । उत्तमशब्दोयं व्युत्पन्नस्तमबन्तोस्ति । अव्युत्पन्नोपि । तत्र यदि व्युत्पन्नो गृह्यते तदा वाराह्येति न सिध्येत् । यतः स[3] चतुष्प्रभृतीनेवाह । तथा हि उच्छब्द उन्नतार्थवाची[4] । उन्नतश्चानुन्नतमपेक्ष्य त्रिषु द्वावुन्नतौ एकोनुन्नतः । तत्रातिशये तरबेव स्यात् । त्रिषून्नतेषु एकस्मिंश्चानुन्नते बहूनां मध्ये एकस्यातिशये तमप् स्यात् तस्माच्चतुर्ष्वेव स्यात् । इत्येतदालोच्य अव्युत्पन्नोत्र उत्तमशब्दो गृह्यते इत्याह । त्र्यादीनामिति । अव्युत्पन्न उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाह । इह अणिञोरिति यदि प्रत्ययमात्रं स्यात् गुरूपोत्तमयोरिति विशेषणं न घटेत । न ह्यणिञोर्गुरूपोत्तमत्वमस्ति तस्मात् तदन्तः समुदायो गृह्यते इत्यभिप्रेत्याह । गुरूपोत्तमयोरिति । गुरूपोत्तमयोरणन्तेञन्तयोः समुदाययोरवयवभूतौ यावणिञावित्यर्थः । ननु च समुदाययोरनार्षयोरिति विशेषणं न घटते समुदायस्य ऋषावविधानात् । नैष दोषः । समुदायस्य विशेषणं न संभवतीति सामर्थ्यात् तदेकदेशयोरणिञोर्विज्ञास्यते । गोत्रे इत्यपि अणिञोरेव विशेषणं समुदायस्यासंभवादित्याह । गोत्रे स्त्रियां यावणिञौ विहिताविति । वृत्तावन्वयस्त्वेवम् । गुरूपोत्तमयोरणिञन्तयोः प्रातिपदिकयोरवयवभूतौ गोत्रे स्त्रियां यावणिञौ विहितौ तयोरनार्षयोः ष्यङादेशः स्यादिति ।

---

१. दीर्घमक्षरं गुरु° C; $D_1$ drops दीर्घं च; $D_2$ drops the Vritti. २. $B_1$ drops it. ३. Omitted $Bc_1$, $Dc_1$. ४. $Dc_2$ has after it—प्रक्रिया.

षङावितौ ।

**यङश्चाप् ॥४।१।७४॥**

कौमुद्गन्ध्या । वाराह्या । अनार्षयोः किम् । वासिष्ठी । वैश्वामित्री ।[४]

---

षङावितावि‍ति । ङो 'यङश्चाप्' इति सामान्यग्रहणार्थः । षस्तद्विघातार्थः । तेन षस्य 'षः प्रत्ययस्य' इतीत्संज्ञा ङस्य 'हलन्त्यम्' इति । वासिष्ठी इति । 'ऋष्यन्धकवृष्णि—' इत्यण् । अणिञोः किम् । ऋतभागस्यापत्यं स्त्री आर्तभागी । विदाद्यञ् । 'शार्ङ्गरवाद्यञो ङीन्' गुरूपोत्तमयोः किम् । औपगवी । गोत्रे किम् । अहिच्छत्रे जाता आहिच्छत्री । कान्यकुब्जी । स्पष्टत्वात् त्यक्तं सूत्रत्रयम् । 'गोत्रावयवात्' । ४।१।७९॥ गूयन्ते शब्द्यन्तेनेन स्वसंतानप्रभवा इति प्रधानभूत आदिपुरुषः स्वसंतानसंज्ञाकारी गोत्रमित्युच्यते । गोत्रमिति श्रूयते गोत्राध्याये तु नेक्ष्यते यः स गोत्रावयवः कुलाख्यः पुणिक भुणिक मुखरादिः । तस्मादगुरूपोत्तमादपि कृतयोरणिञोः स्त्रियां ष्यङादेशः । पौणिक्या । भौणिक्या । मौखर्या । 'क्रौड्यादिभ्यश्च' ॥४।१।८०॥ अगुरूपोत्तमार्थमनणिञर्थं च । एभ्यः ष्यङ् प्रत्ययः स्यात् । क्रौड्या । लाड्या । क्रौडि । लाडि । व्याडि । आपिशलि । आपिङ्गलि । आपक्षिति । चौपयत । चैटयत । सैकयत । पैल्वयत । सौधातकि । सूत युवत्याम् । सूत्या युवतिः । अन्या सूता । भोज क्षत्रिये । भोज्या ।

---

१. यौ विहितावणिञौ $B_1$. २. $B_1$ drops it. ३. वाशिष्ठी $B_1$, $D_4$, $D_6$. ४. After it—गुरूपोत्तमयोः किम् । औपगवी । ञ्यादीनामिति किम् । वाक्षी $B_2$. ५. ग्रहार्थः $Dc_2$, $Bc_3$. ६. इतीत्संज्ञा । $Dc_4$. ७. वाशिष्ठी° $Dc_1$, $Dc_4$, $Dc_3$. ८. श्रूयते वा $Bc_1$. ९. वैटयत $Dc_4$.

अश्वपत्यादिभ्यश्च ॥४।१।८४॥

एभ्यः प्राग्दीव्यतीयेष्वपत्याद्यर्थेष्वण् स्यात् । ण्यस्यापवादः । आश्वपतम् । गाणपतम् ।

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥४।१।८५॥

दित्यादिभ्यः पत्यन्ताच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् ॥

---

अन्या भोज्या । भौरिकि । भौलिकि । शालास्थलि । कपिष्ठलि । आकृतिगणोयम् । दैवेल्यादौ गौकक्ष्या । 'दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योन्यतरस्याम्' ॥४।१।८१॥ दैवयज्ञादेरिञो गोत्रेपि ष्यङ् वा स्यात् । तेन मुक्ते 'ईतो मनुष्यजातेः' इति ङीप् । दैवयज्ञ्या । दैवयज्ञी । शौचिवृक्ष्या । शौचिवृक्षी । सात्यमुग्र्या । सात्यमुग्री । काण्ठेविद्ध्या । काण्ठेविद्धी ।

इत्यपत्यार्थे प्रत्यया उक्ताः ।

इदानीं प्राग्दीव्यतीयेषु सर्वेष्वपत्यार्थेषु साधारणान् प्रत्ययानाह ।

अश्व । ननु 'प्राग्दीव्यतोण्' इत्येव सिद्धोणिति व्यर्थमिदं सूत्रमित्याशङ्क्याह । ण्यस्यापवाद इति । 'दित्यदित्य—' इति प्राप्तस्येत्यर्थः । अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । पशुपति । धान्यपति । धर्मपति । सभापति । प्राणपति । क्षेत्रपति ।

दित्यदित्या । प्राग्दीव्यतीयाणोपवादः । तदपवादानां चार्थविशेष-

---

१. $B_1$ drops it. २. प्राग्दीव्यतीयार्थेषु $B_1$; प्राग्दीव्यतीयाद्यर्थेषु $D_4$. ३. Before this $Dc_2$ has गौकक्ष्य and after it—दैवदत्यापत्या । याज्ञवल्क्या ।. ४. दैवल्या । गौकक्ष्या । $Dc_1$, $Dc_3$, $Dc_4$. ५. धन्वपति $Bc_1$.

दैत्यः । आदित्यः । 'हलो यमां यमि लोपः' इति पूर्वयलोपः । आदित्यं हविः । प्राजापत्यम् । सैनापत्यम् । यमाच्चेष्यते ॥ याम्यम् । देवस्य यञञौ ॥* दैव्यम् । दैवम् ॥ बहिषष्टिलोपो यञ्च ॥* बाह्यः । ईकक् च ॥* बाह्लीकः ।[४] दितेर्ङीषि कृते 'स्त्रीभ्यो ढक्' । तेन दैतेय इति सिध्येत्

---

विहितानाम् । दैत्य इति । दितेरपत्यम् । आदित्य इति । अदितेरपत्यम् । हलो यमामित्यादि । आदित्यं हविरित्यत्र । आदित्यो देवतास्येति विग्रहे आदित्यशब्दात् ण्यः । तत्र 'यस्येति च' इत्यकारलोपे पश्चाद्यलोपः । पृथिव्या ञाञौ वाच्यौ । पार्थिवा । पार्थिवी । स्थाम्नोकारः । अश्वत्थामः । लोम्नोपत्येषु बहुषु । उडुलोमाः । बहुषु किम् । औडुलोमिः । सर्वत्र गोरजादिप्रत्यये यत् । गव्यम् । अजादिप्रसङ्गे किम् । गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् । दितेरित्यादि । कृदिकारादक्तिनः सर्वतो क्तिन्नर्थादित्येके इति ङीषि कृते इत्यर्थः । ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया ङीषि कृते ण्यः प्राप्नुयादेव । नैष दोषः । कृत्प्रकरणे 'शक्तिलाङ्गलाङ्कुशतोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्' इत्यत्र घटशब्दमुच्चार्य घटीशब्दोच्चारणादनित्यत्वमस्याः परिभाषाया ज्ञापितत्वात् ।

---

१. °यकारस्य लोपः $D_1$; यकारलोपः $D_4$; हलः परस्य यमो लोपः स्याद्यमि इति पूर्वयकारस्य लोपः $B_2$, $D_2$; $D_5$ drops—इति पूर्वयलोपः ।. २. साभापत्यम् C; P drops it. After it—पौरोहित्यम् $D_5$. ३. यण्च $D_1$, $B_3$, $D_2$. ४. Before it—कृदिकारेति $B_2$; कृदिकारादक्तिनः सर्वतोक्तिन्नर्थादिति $D_4$. ५. इति is dropped in C; इति सिध्येत् dropped $B_2$. ६. देवता यस्ये° $Dc_2$. ७. पृथिवी $Dc_4$.

उत्सादिभ्योऽञ् ॥४।१।८६॥

औत्सः ।

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥४।१।८७॥

धान्यानां भवनमित्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमात् नञ्स्नञौ स्तः ॥ स्त्रीषु भवः स्त्रैणः । पौंस्नः । एवं समूहहितागतादिषु । 'स्त्री पुंवच्च' इति ज्ञापकात् वत्यर्थे न । स्त्रीवत् । पुंवत् ।

---

**उत्सा** । अगस्तदपवादानां च बाधकः । उत्स । उदपान । विकर । विनद । महानद । महानस । महाप्राण । तरुण । तलुन । वष्कयासे । वाष्कयः । असे किम् । गौर्वष्कयिः । धेनु । पृथिवी । पङ्क्ति । जगती । त्रिष्टुप् । अनुष्टुप् । जनपद । भरत । उशीनर । ग्रीष्म । पीलु । कुण । उदस्थान देशे । औदस्थानो देशः । औदस्थानिरन्यः । पृषदंशे । पार्षतोंशः । अन्यत्राण् । भल्लकीय । रथन्तर । मध्यन्दिन । बृहत् । महिमन् । सत्त्वन् । सत्त्वच्छब्दो मत्वन्त आगतनुड्कः परिगृह्यते सत्त्वानिति । कुरु । पञ्चाल । इन्द्रावसान । उष्णिक् । ककुप् । सुवर्ण । देव । ग्रीष्मादच्छन्दसीति वक्तव्यम् । इह मा भूत् । ग्रैष्मी पङ्क्तिः । छन्दश्चेह वृत्तं गृह्यते न वेदः ।

**स्त्रीपुं** । **पौंस्न** इति । 'संयोगान्तस्य लोपः' इति सलोपः । योगापेक्षत्वात् ज्ञापकस्य स्त्रीवदित्यत्रापि नेत्यभिप्रेत्याह । **स्त्रीवदिति** ।

इति प्राग्दीव्यतीयेष्वपत्यार्थेषु साधारणाः प्रत्ययाः ॥

---

१. औत्सम् $D_1$. २. क्रमेण $Dc_1$. ३. पुंसु भवः पौंस्नः $B_2$. ५. विरद $Dc_1$, $Dc_3$, $Dc_4$, $Bc_1$. ६. पाञ्चाल $Dc_2$.

**तेन रक्तं रागात् ॥४।२।१॥**

तृतीयासमर्थाद्रागवाचिनो[1] रक्तमित्यर्थे यथाविहितं प्रत्ययः[2] स्यादित्यण् । कषायेण रक्तः काषायः पटः ।[3]

**लाक्षारोचनाशकलकर्दमाट्ठक् ॥४।२।२॥**

अस्माद्रक्तार्थे ठक् स्यात्[4] । अणोपवादः । लाक्षिकः[5] । इत्यादि[6] ।

---

इदानीमपत्यव्यतिरिक्ताः प्राग्दीव्यतीया अर्थाः प्रातिस्विकाश्च प्रत्ययाः प्रकृतयश्चोच्यन्ते ।

तेन रक्तम् । शुक्लस्य वर्णान्तरापादनमिह रज्यर्थः । रज्यतेनेनेति रागः । ननु कथं काषायौ खरस्य कर्णौ । हारिद्रौ पक्षिणोङ्घ्री । सादृश्यादुपचारोयम् । रागात् किम् । देवदत्तेन रक्तम् । 'तेन' इत्येतत् 'द्वैपवैयाघ्रादञ्' इति यावदनुवर्तते ।

**लाक्षा** । शकलकर्दमाभ्यामणपीष्टः[7] । शाकलम् । कार्दमम् । नील्या अन् वाच्यः । नीलं वस्त्रम् । पीतात् कन् । पीतकम् । हरिद्रामहारजनाभ्यामञ् वाच्यः । हारिद्रम् । माहारजनम् ।

---

१. तेनेति तृतीया° B₂. २. स्वप्रत्ययः D₅. ३. After it—रागात् किम् । देवदत्तेन रक्तं वस्त्रमित्यत्र न B₂. ४. Dropped B₁. ५. लाक्षिकम् D₅. ६. In place of इत्यादि Dc₁ has रोचनिकः । कार्दमिकः. ७. °मणोपीष्टिः । Do₂.

## नक्षत्रेण युक्तः कालः ॥४।२।३॥

तृतीयान्तान्नक्षत्रवाचिनो युक्त इत्यर्थे यथास्वं प्रत्ययः स्यात् यो युक्तः स कालश्चेत् । पुष्येण युक्ता पौषी रात्रीः ।

---

नक्षत्रेण । ननु कालं क्रियात्मकमाहुः केचित् द्रव्यात्मानं चापरे । तथोक्तं भर्तृहरिणा ।

> 'आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
> भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ।
> व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
> नित्यमेकं विभुं द्रव्यं परिमाणं क्रियावताम्' ॥ इति ।

एवं स्थिते पक्षद्वयेपि कालस्य नक्षत्रेग युक्तत्वं न घटते । तथा हि प्रथमे पक्षे नक्षत्रस्यैव चेत् क्रिया कालः अयुक्तं युक्तविशेषणम् । नित्ययुक्तत्वाद् व्यवच्छेद्याभावात् । अथ सूर्यादिद्रव्यान्तरस्था तथाप्ययुक्तम् । अन्यसमवेता क्रिया कथमन्येन युज्यते । अथ द्रव्यात्मकः कालस्तथापि नक्षत्रकालयोर्योगायोगौ न स्तः । कालस्य विभुत्वात् । इति युक्तविशेषणं न घटते । अत्रोच्यते । नक्षत्रसमीपस्थश्चन्द्रमा नक्षत्रशब्देन लक्षणयोच्यते । तथा च सति नक्षत्रसमीपस्थेन चन्द्रमसा कालस्य योगायोगौ संभवत इति युक्तविशेषणं घटते । पुष्येण युक्तेति । पुष्यसमीपस्थेन चन्द्रमसा युक्तेत्यर्थः । पौषीति । 'सूर्यतिष्य—' इति सूत्रे तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वक्तव्याद्यलोपः । 'टिड्ढाणञ्—' इति ङीप् ।

---

१. Before it—शकलकर्दमाभ्यामणपीष्यते । शाकलम् । कार्दमम् । $B_1$; शकलकर्दमाभ्यामणपीष्टः । शाकलम् । कार्दमम् । नील्याञ् वाच्यः । नीलं वस्त्रम् । पीतात् कन् । पीतकम् । हरिद्रामहारजनाभ्यामञ् वाच्यः । हारिद्रम । माहारजनम् । इत्यादि । $B_2$. २. युक्तमि° $D_1$. ३. Dropped $B_1$. ४. रात्रिः पौषी $D_4$. ५. परिस्यन्द ° $Bo_1$. ६. तस्य कालस्य $Dc_3$.

**लुबविशेषे ॥४।२।४॥**

कालस्याविशेषे प्रत्ययस्य लुप्[1] ॥ अद्य[2] पुष्यः ।

**दृष्टं साम ॥४।२।७॥**

तृतीयान्ताद् दृष्टमित्यर्थे यथास्वं प्रत्ययः[3] स्यात् साम[4] चेत् स्यात्[5] । वसिष्ठेन[6] दृष्टं वासिष्ठं[7] साम ॥

---

लुब । कालस्याविशेष इति । यदि नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषो नोच्यत[8] इत्यर्थः । यतो यावान् कालो नक्षत्रेण युज्यते तस्य सर्वस्य अहोरात्रस्य प्रत्ययान्तेनाभिधानमविशेषः । तदेकदेशस्य रात्र्यादेरभिधानं विशेषः । स्पष्टत्वात् त्यक्तं सूत्रद्वयम् । 'संज्ञायां श्रवणाश्वत्थाभ्याम्' ॥४।२।५॥ आभ्यां विहितस्य प्रत्ययस्य लुप् स्याद्विशेषेपि संज्ञायाम् । श्रवणा रात्रिः । अश्वत्थो मुहूर्तः । अत्र 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति निपाताल्लुकि युक्तवद्भावो न । संज्ञायां किम् । श्रावणी रात्रिः । 'द्वन्द्वाच्छः' ।४।२।६।। नक्षत्रद्वन्द्वात् युक्ते काले विशेषे चाविशेषे च छः स्यात् । राधानुराधीया रात्रिः । अद्य राधानुराधीयम् । परत्वाल्लुपं बाधते ।

दृष्टम् । स्पष्टत्वात् त्यक्तं सूत्रद्वयम् । 'कलेर्ढक्' ॥४।२।८॥ तृतीयान्तात् कलेर्दृष्टं सामेत्यर्थे ढक् नाण् । कलिना दृष्टं साम कालेयम् । सर्वत्राग्निकलिभ्यां प्राग्दीव्यतीयेषु । अग्निना दृष्टमाग्नेयं साम । एवं तत्रभवजातादौ । तथा कालेयमपि । दृष्टे सामनि जाते वा अण् वा डिच्च विधीयते । तीयादीकक् । न विद्यायाः । गोत्रादङ्कवदिष्यते । दृष्टं साम अस्मिन्नर्थे जातेर्थे च वाण् डिद्वाच्यः । तीयात्

---

१. After it—स्यात् $D_5$, $D_1$, $B_2$; लुक् स्यात् $D_2$. २. अद्य युक्तः पुष्यः $D_5$. ३. प्रत्ययः स्यात् dropped $D_1$. ४. यद् दृष्टं तत् साम चेत् स्यात् $B_2$, C, $D_5$ ( स्यात् dropped C, $D_5$ ). ५. Dropped $B_1$, C, $D_4$. ६. वशिष्ठेन $D_5$, $B_2$. ७. वाशिष्ठं $B_2$, $D_5$. ८. नोच्येते° $Dc_1$.

परिवृतो रथः ॥४।२।१०॥

वस्त्रेण परिवृतो वास्त्रो रथः ॥

---

स्वार्थे ईकक् वा वाच्यः । विद्यायां न । गोत्रान्तस्याङ्क इत्यत्रार्थे यथा तथा दृष्टमित्यर्थे प्रत्ययः स्यादित्यर्थः । उशनसा दृष्टमुशनमुशनसम् । शतभिषजि जातः शातभिषः शातभिषजः । द्वैतीयीकम् । द्वितीयम् । द्वितीया विद्या । औपगवेन दृष्टमौपगवकं साम । 'गोत्रचरणाद्वुञ्' । 'वामदेवाड् ड्यड्ड्यौ' ॥४।२।९॥ वामदेवेन दृष्टं वामदेव्यं साम । तकारः स्वरितार्थः । आद्योन्तःस्वरितः । द्वितीयोन्तोदात्तः ।

'सिद्धे यस्येति लोपेन किमर्थं ययतौ ड्तिौ ।
ग्रहणं मातदर्थे भूद्वामदेव्यस्य नञ् स्वरे' ॥

अवामदेव्यम् । ययतोश्चातदर्थे इति विधीयमानोन्तोदात्तो न ।

परि । तृतीयान्तात् परिवृतार्थे यथास्वं प्रत्ययः स्यात् ।

परिणा सर्वतो भावो वृणोत्यर्थस्य गृह्यते ।
तेन भृत्यैः परिवृतो रथ इत्यत्र नेष्यते ॥

स्पष्टत्वात्त्यक्तं सूत्रत्रयम् ॥ 'पाण्डुकम्बलादिनिः' ॥४।२।११॥ पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली । मत्वर्थीयेन सिद्धेणोपवादः । 'द्वैपवैयाघ्रादञ्' ॥४।२।१२॥ अणोपवादः । द्वैपेन चर्मणा परिवृतो रथो द्वैपः । वैयाघ्रः । 'कौमारापूर्ववचने' ॥ ४।२।१३॥ कौमारेत्येतत् पाणिग्रहस्यापूर्ववचने निपात्यते । स्त्रिया अपूर्वत्वे स्त्रीपुंसयोरुभयोर्निपात इष्यते । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या ॥

'कौमारापूर्ववचने कुमार्या अण् विधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्या भवतीति वा' ॥

---

१. Before it—तृतीयान्तात् परिवृतेर्थे यथास्वं प्रत्ययः स्यात् ॥ $B_2$, $D_3$, $D_4$.

**तत्रोद्धृतममत्रेभ्यः ॥४।२।१४॥**

सप्तम्यन्तेभ्योमत्रेभ्य उद्धृतेर्थे यथास्वं प्रत्ययः ।[1] शरावे उद्धृत ओदनः शारावः[2] । भुक्तोच्छिष्ट इत्यर्थः ॥

**संस्कृतं भक्षाः ॥४।२।१६॥**

भ्राष्ट्रेषु[3] संस्कृता भ्राष्टा भक्षाः[4] ॥

---

**तत्रोद्धृतम्** । अत्रोद्धरतिरुद्धरणपूर्वनिधाने[5] वर्तते । तेन सप्तमी-समर्थविभक्तिर्घटते । 'तत्र' इत्येतत् 'क्षीराड्ढञ्' इति यावदनुवर्तते । **भुक्तोच्छिष्ट** इति । शिष्ट एवोच्छिष्टो न सर्वः । भुक्तशिष्ट इति यावत् । अमत्रेभ्यः किम् । पाणावुद्धृतः । स्पष्टत्वात् त्यक्तम् । 'स्थण्डिलाच्छ-यितरि व्रते' ॥४।२।१५॥ शयितर्यभिधेये व्रते शास्त्रविहिते नियमे गम्यमाने स्थण्डिलाद्यथास्वं प्रत्ययः ।[6] स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलः ।

**संस्कृतम्** । एतत् सूत्रं तत्पुरुषप्रकरणे व्याख्यातम् । स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयम् । 'शूलोखाद्यत्' ॥४।२।१७॥ शूले संस्कृतं शूल्यं मांसम् । उखायां संस्कृतमुख्यम् । 'दध्नष्ठक्' ॥४।२।१८॥ दधि संस्कृतं दधिकम् । ननु 'संस्कृतम्' इत्यनेनैव[7] सिद्धम् । यद्धि[8] दधि संस्कृतं तदपि दध्ना संस्कृतमेव । न सिद्धम् । तद्धि दध्ना संस्कृतं यस्य दध्नैव संस्कारः । इह तु दधि क्षिप्तस्य[9] लवणादिना संस्कार उच्यते इति विशेषात् । 'उदश्वितोन्यतरस्याम्'[10] ॥४।२।१९॥ ठक् । पक्षेण् । औदश्वित्कम्[11] । तान्तत्वात् कः । औदश्वितम्[12] । 'क्षीराड्ढञ्' ॥४।२।२०॥ क्षीरे संस्कृतं क्षैरेयम् ।

---

१. After it—स्यात् $D_1$, $D_4$, $D_5$, $B_2$. २. शाराव ओदनः P, $D_2$. ३. लाजाः संस्कृता लाजाः P ; संस्कृता लाजाः । भ्राष्ट्राः $D_4$ (भक्षाः dropped $D_4$.) ४. भक्ष्याः $D_3$, $D_4$, $B_1$, P, C. ५. °विधाने for °निधाने $Dc_2$; °निपाते $Dc_3$. ६. After it—स्यात् $Dc_3$. ७. इत्यैवैतत् सिद्धम् । $Bc_1$, $Dc_3$. ८. Dropped $Bc_1$. ९. दधिक्षिप्तलवणा° $Dc_3$. १०. उदस्वितो $Bc_1$, $Dc_1$. ११. औदस्वित्कम् $Bc_1$, $Dc_1$. १२. औदस्वितम् $Bc_1$, $Dc_1$.

## सास्मिन् पौर्णमासीति संज्ञायाम् ॥४।२।२१॥

प्रथमा[1] समर्थादस्मिन्नित्यर्थे यथास्वं प्रत्ययः स्यात् प्रथमा[2] समर्थं सा पौर्णमासी चेत् प्रत्ययान्तं चेत् संज्ञा स्यात् ॥ पौषी पौर्णमास्यैस्मिन् पौषो मासः ॥

---

**सास्मिन्** । अस्मादेव ज्ञापकात् पूर्णो मासोस्यामिति पूर्णमासादण् । पौर्णमासी । पूर्णो माश्चन्द्रस्तस्येयं वा । प्रथमासमर्थादस्मिन्नर्थे यथास्वं प्रत्ययः यत् प्रथमासमर्थं सा पौर्णमासी चेत् स्यात् । प्रत्ययान्तं चेत् मासार्धमाससंवत्सराणामेव संज्ञा । तेन पौषी पौर्णमासी अस्मिन्[3] । दशरात्रे मृतकमासे चेत्यादौ[5] न । संज्ञानवगमात् । इतिशब्दस्य संज्ञाशब्दस्य च तुल्यमेव फलं प्रयोगानुसरणम् । तत्र द्वयोरिह ग्रहणं संज्ञाशब्देन इतिशब्दस्य तुल्यतां ज्ञापयितुम् । संज्ञार्थत्वेनेति[6] प्रतिज्ञायते । ततश्च यदुच्यते प्रयोगानुसरणार्थमिति तदुपपन्नं स्यात् । स्पष्टत्वात् त्यक्तं सूत्रद्वयम् । 'आग्रहायण्यश्वत्थाट्ठक्' ॥४।२।२२॥ 'सास्मिन् पौर्णमासीति संज्ञायाम्' इत्यनुवर्तते । अग्रं हायनमस्या आग्रहायणी । प्रज्ञादेराकृतिगणत्वादण् । 'पूर्वपदात्—' इति णः । अश्वत्थेन युक्ता पौर्णमासी अश्वत्था । निपातनात् पौर्णमास्यां लुप् । टाप् । आग्रहायणिको मासोर्धमासः संवत्सरो मासो वा । आश्वत्थिकः । 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' ॥४।२।२३॥ ठक् वा । फाल्गुनी पौर्णमासी अस्मिन् फाल्गुनिकः । फाल्गुनः । श्रावणिकः । श्रावणः । कार्तिकिकः । कार्तिकः । चैत्रिकः । चैत्रः ।

---

१. From प्रथमा to संज्ञा स्यात् dropped C, $D_2$, $D_4$, $D_5$; $B_1$ has प्रथमान्तात् पौर्णमास्यर्थादस्मिन्नित्यर्थेणादयः स्युः प्रत्ययान्ते चेत् संज्ञा । पूर्णो मासोस्यामिति पूर्णमासादण् पौर्णमासी । अस्मात् सूत्रनिर्देशादेवाण् । यद्वा पूर्णो माश्चन्द्रस्तस्येयं वेति संज्ञायाम् for प्रथमा to संज्ञा स्यात् ; प्रथमासमर्थात् पौर्णमास्युपाधिकात् सप्तम्यर्थे यथास्वं प्रत्ययः स्यात् संज्ञायां वाच्यायाम् । पौषी &c, $B_2$. २. प्रथमान्तं पौर्णमासी चेत स्यात् प्रत्ययान्तं संज्ञा चेत् स्यात् $D_1$. ३. °स्मिन्नस्तीति $B_1$, $D_5$. ४. Before it—स्यात् । $Dc_3$. ५. मेत्या° $Dc_1$, $Bc_1$, $Dc_4$. ६. संज्ञात्वेनेति $Dc_4$. ७. एवमाश्व° $Dc_4$.

**सास्य देवता ॥४।२।२४॥**

देवतावाचिनः प्रथमान्तात् षष्ठ्यर्थे यथास्वं प्रत्ययः स्यात्[1] ॥ इन्द्रो देवतास्य[2] ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् ।[3]

**कस्येत् ॥४।२।२५॥**

कशब्दाद्यथास्वं प्रत्ययः[4] । इकारोन्तादेशश्च[5] ॥ वृद्ध्याया-देशौ । को देवतास्य[6] कायं हविः ॥

**शुक्राद् घन् ॥४।२।२६॥**

शुक्रियम्[7] ।

---

**सास्या** । सेति प्रकृतेः पुनर्ग्रहणात् संज्ञा निवृत्ता । **पाशुपत-मिति** । 'अश्वपत्यादिभ्यश्च'[8] इत्यण् । **बार्हस्पत्यमिति** । 'दित्य—'[9] इति ण्यः । 'महाराजप्रोष्ठपदाट्ठञ्' इति यावदधिकारः 'सास्य देवता' इति । ननु यागसंप्रदानं देवता देयस्य स्वामिनी तत् कथमैन्द्रो मन्त्रः । स्तुत्यमपि देवतेत्युपचरन्ति । आग्नेयो ब्राह्मणः । अत्राप्युपमानात् ।

**कस्येत्** । वृद्ध्यायादेशाविति विधानसामर्थ्याद्यस्येति लोपा-भावाद् वृद्ध्यायादेशाविति भावः । कः प्रजापतिः ।

**शुक्रात्** । अणोपवादः । स्पष्टत्वात् त्यक्तं सूत्रत्रयम् । 'अपो-नप्त्रपान्नप्तृभ्यां घः' ॥४।२।२७॥ अपोनपात् देवतास्य । तृप्रत्ययान्तता निपातनात् । अपोनप्त्रियम् । 'छ च' ॥४।२।२८॥ अपोनप्त्रीयम्[10] । पैङ्गाक्षीपुत्रादिभ्योपि । पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् । शतरुद्राच्छ च । शतरुद्रियम् । शतरुद्रीयम् । 'महेन्द्राद् घाणौ च' ॥४।२।२९॥ छ च । महेन्द्रियम् । माहेन्द्रम् । महेन्द्रीयम् ।

---

१. इत्यण् $B_1$; स्यात् dropped $D_1$, $D_2$. २. देवता यस्य $D_4$. ३. After it—दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः C. ४. After it—स्यात् C, $D_5$. ५. इकारान्ता° $D_4$. ६. यस्य for अस्य C. ७. $B_1$ has घस्येयः before it. ८. उत्सादिभ्योञ् । $Bc_1$, $Dc_2$, $Dc_4$. ९. 'दित्यदित्य—' $Bc_1$, $Dc_1$, $Dc_4$. १०. After this—अपांनप्त्रीयम् । $Bc_1$, $Dc_3$ and एवमपांनप्त्रीयम् । $Dc_4$, $Dc_1$.

**सोमाट् ट्यण् ॥४।२।३०॥**

सौम्यम् । टित्वात् सौमी ऋक् ।[१]

**वाय्वृतुपित्रुषसो यत् ॥४।२।३१॥**

एभ्यो यत् स्यादुक्तेऽर्थे ॥ 'ओर्गुणः' । 'वान्तो यि प्रत्यये' । वायव्यम् । ऋतव्यम् ।

**रीङृतः ॥७।४।२७॥**

अकृद्यकारेसार्वधातुके च यकारे च्वौ च परे ऋदन्तस्य रीङादेशः स्यात् ॥ 'यस्येति च' । पित्र्यम् । उषस्यम् ।

---

**सोमात्** । टित्त्वादिति । टित्त्वात् 'टिड्ढाणञ्—' इति ङीपि 'हलस्तद्धितस्य' इति यलोपे च कृते सौमीति रूपं स्यादित्यर्थः ।

**वाय्वृतु** । उक्तेऽर्थे इति । सास्य देवतेत्यस्मिन् । अणोपवादः ।

**रीङ् ऋत** इति । तपरः किम् । चेकीर्यते । निजेगिल्यते । स्पष्टत्वात् त्यक्तम् । 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च' ॥४।२।३२॥ यच्च । वास्तोष्पतिशब्दात् ण्यस्यान्येभ्योऽणोपवादः । द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम् । द्यावापृथिव्यम् । इत्यादि ।

---

१. After it—अग्नेर्ढक् ।४।२।३३॥ आग्नेयम् $B_2$. २. $D_1$ drops it. ३. Dropped $D_2$.

[1]अग्नेर्ढक् ॥४।२।३३॥

आग्नेयम् ।

देवताद्वन्द्वे च ॥७।३।२१॥

अ[2]त्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञि[3]द्रादौ परे ॥ अग्निमरुतौ [4]देवते अ[5]स्य आग्निमारुतं ह[6]विः । सू[7]क्तहविः-[8]स्वामिन्येतत् । नेह । स्कान्दविशाखः ॥

---

अग्नेः । अणोपवादः । स्पष्टत्वात् त्यक्तानि त्रीणि । 'कालेभ्यो भववत्' ॥४।२।३४॥ कालवाचिभ्यः सास्य देवतेत्यस्मिन्नर्थे भववत् प्रत्ययाः स्युः । यथा मासे भवं मासिकम् । 'कालाट्ठञ्' । तथा मासो देवतास्य मासिकम् । 'महाराजप्रोष्ठपदाट्ठञ्' ।।४।२।३५॥ महाराजो देवतास्य माहाराजिकम् । प्रौष्ठपदिकम् । तदस्मिन् वर्तत इति नवयज्ञादिभ्यष्ठञ् वाच्यः । नवयज्ञोस्मिन् काले वर्तते नावयज्ञिकः । पूर्णमासादण् । पौर्णमासी तिथिः । 'पितृव्यमातुलमातामहपितामहाः' ॥४।२।३६॥ एते निपात्यन्ते । पितृमातृभ्यां भ्रातरि वाच्ये व्यड्डुलचौ प्रत्ययौ पितरि वाच्ये डामहच् । स्त्रियां षिच्च । पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः । पितुः पिता पितामहः । मातुः पिता मातामहः । पितामही । मातामही । अवेर्दुग्धे सोढदूसमरीसचः प्रत्यया वाच्याः । अवेर्दुग्धमविसोढम् । अविदूसम् । अविमरीसम् । तिलान्निष्फलात् पिञ्जपेजौ वाच्यौ । निष्फलस्तिलस्तिलपिञ्जः तिलपेजः ।

देवता । सूक्तेति । सूक्तस्वामिनि हविस्वामिनि चैतत् । यदि सूक्तस्वामिनी हविःस्वामिनी च देवता स्यादित्यर्थः ।

---

१. $B_2$ drops the Sûtra and आग्नेयम्. २. Dropped $B_1$. ३. ण्याद्रौ परे $B_2$. ४. दैवते $D_1$. ५, यस्येति C. ६. Dropped $D_4$. ७. सूक्तं हविः C; सूक्तम् $D_1$; सूक्तं हविर्वा सूक्तहविः $B_2$, $D_4$. ८. स्वामिन्येवायं विधिः $B_2$; स्वामिन्येव $D_4$.

**नेन्द्रस्य परस्य ॥७।३।२२॥**

परस्येन्द्रस्य वृद्धिर्न[3] ॥ सौमेन्द्रः[1] । परस्य किम् । ऐन्द्राग्नः[2] ॥

**दीर्घाच्च वरुणस्य ॥७।३।२३॥**

दीर्घात् परस्य वरुणस्य न वृद्धिः ॥ ऐन्द्रावरुणम् । मैत्रावरुणम् ।[4] दीर्घात् किम् । आग्निवारुणीमनड्वाहीम्[5] ॥

**तस्य समूहः ॥४।२।३७॥**

षष्ठ्यन्तात् समूहेर्थे यथास्वमणादि[6] स्यात्[7] ॥ काकानां समूहः काकम्[8] ॥

**भिक्षादिभ्योण् ॥४।२।३८॥**

एभ्योण् स्यात्[9] उक्तेर्थे । ठगाद्यपवादः ॥

---

**दीर्घात्** । ऐन्द्रावरुणमिति । 'देवताद्वन्द्वे च' इत्यानङि कृते दीर्घात् परो वरुणशब्दः । **आग्निवारुणीमिति** । अत्र 'इद्वृद्धौ' इद्विधीयते तेन दीर्घात्परो न ।

**तस्य समूहः** । अचित्ताट्ठकं वक्ष्यति । अनुदात्तादेरञं गोत्राद्वुञं । प्रतिपदं च केदाराद्यञ् चेत्यादि । तत्परिहारेणोदाहर्तव्यमित्यभिप्रायेणोदाहरति । **काकानां समूहः काकमिति** । 'प्राणिनां कुपूर्वाणाम्' इति फिट्सूत्रेण काकशब्द आद्युदात्तः ।

**भिक्षा** । अणग्रहणं बाधकबाधनार्थमित्याह । **ठगाद्यपवाद इति** ।

---

१. सौमेन्द्रम् P. २. ऐन्द्रामश्चरुः P ; ऐन्द्राग्नेयम् $B_2$. ३. वृद्धिर्न $D_1$. ४. After it—इह देवताद्वन्द्वेति पूर्वस्यानङ् $B_1$. ५. After it—आलभेत $D_5$ ; आग्निवारुणी अनड्वाही $D_2$, $D_3$, $B_1$, P ; C. ६. °मणादयः स्युः $D_2$, $D_5$, $B_2$. ७. Dropped P. ८. After it-क्लीबत्वं लोकात् $B_1$, $B_2$. ९. Dropped $B_1$.

भैक्षम् । यौवनम् । 'भस्याढे' तद्धित इति । नेह पुंवद्भावो युवतिशब्दपाठसामर्थ्यात् ॥[1]

केदाराद्यञ् च ॥४।२।४०॥

उक्तेर्थे । चकाराद्वुञ् ॥ कैदार्यम् ।

युवोरनाकौ ॥७।१।१॥

युवु इत्येतयोः प्रत्यययोः क्रमात् अन अक एतौ स्तः ॥ कैदारकम् । अनुनासिकयोरिष्टिः ॥ नेह । ऊर्णायुः ।

गणिकाया यञ् वाच्यः ॥ गाणिक्यम् ॥

---

भिक्षा । गर्भिणी । क्षेत्र । करीष । चर्मन् । कर्मन् । सहस्र । युवति । पदाति । पद्धति । अर्थवत् । दक्षिणा । स्पष्टत्वात् त्यक्तम् । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्' । अपत्यमात्रं गोत्रम् । गोत्रादिभ्यो वुञ् स्यात् समूहे । औपगवकम् । औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । वृद्धाच्चेष्टः । वार्धकम् ।

केदाराद्वुक्तेर्थे । समूहेर्थे । इत्यर्थः । अचित्तठकोपवादः ।

युवोः । अनुनासिकयोरिति । प्रतिज्ञानुनासिक्याः पाणिनीया इति यत्र पाणिनीया अनुनासिकत्वं प्रतिजानते तत्रैवानाकौ स्तः । युवोरिति निर्देशे द्वन्द्वैकवद्भावपक्षे अनित्यमागमशासनमिति कृत्वा नुम् न । इतरेतरयोगे छान्दस उवर्णलोपो ज्ञेयः ।

---

१. After this—

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥४।२।३९॥

एभ्यो वुञुक्तेर्थे ॥ औपगवकम् । औक्षकम् । इत्यादि ॥

वृद्धाच्च ।* वार्धकम् ॥ $D_3$, $B_1$, $B_2$ ($B_2$ has वुञ् स्यादुक्तेर्थे । औक्षकमित्यादि । अत्रापत्यमात्रं गोत्रं न तु पौत्रप्रभृत्येव । औपगवकम्).

२. अतो यञ् उक्तेर्थे $B_1$. ३. कैदारम् $D_5$. ४. इत्येतौ $B_2$, $D_5$. ५. °रिष्टः $D_1$; °रिष्टं $B_2$. ६. Dropped $Dc_2$.

ठञ् कवचिनश्च ॥४।२।४१॥

कवचिनः केदाराच्च ठञ् स्यादुक्तेऽर्थे ॥ कावचिकम् । कैदारिकम् ॥[3]

ग्रामजनबन्धुसहायेभ्यस्तल् ॥४।२।४३॥

एभ्यस्तल् स्यात् समूहे । तलन्तं स्त्रीलिङ्गम् । ग्रामतेत्यादि । गजाच्चेष्टः ॥ गजता ।

---

ठञ् । कवचिशब्दात् प्रत्ययस्वरेणान्तोदात्तत्वात् अनुदात्तादिलक्षणेऽञि प्राप्ते । स्पष्टत्वात् त्यक्तम् । 'ब्राह्मणमाणववाडवाद्यन्' । ४।२।४२॥ नः स्वरितार्थः । ब्राह्मणानां समूहो ब्राह्मण्यम् । माण्डव्यम् । वाडव्यम् । पृष्ठाच्चेष्टः । पृष्ठ्यः । पर्शोर्णस् । पर्शूनां समूहः पार्श्वम् । पदत्वादोर्गुणो न ।

ग्राम । ग्रामादचित्तत्वाट्ठकि जनबन्धुभ्यामाद्युदात्तत्वादणि सहायात् 'लघावन्ते—' इति मध्योदात्तत्वादनुदात्तादेरञि प्राप्ते वचनम् । स्पष्टत्वात् त्यक्तानि । 'अनुदात्तादेरञ्' ॥४।२।४४॥ अनुदात्तादेरञ् स्यात् समूहे । कापोतम् । मायूरम् । एतौ 'लघावन्ते द्वयोश्च बह्वचो गुरुः' इति मध्योदात्तत्वाच्छेषानुदात्तत्वेनानुदात्तादी । 'खण्डिकादिभ्यश्च' ॥४।२।४५॥ अञ् । खण्डिकानां समूहः खाण्डिकम् । खण्डिका । वडवा । क्षुद्रकमालवात् सेनासंज्ञायाम् । क्षुद्रकमालवादनुदात्तादेर्गोत्रद्वन्द्वात् गोत्रसमुदायत्वेनागोत्रत्वात् तदन्त-

---

१. स्यात् dropped B1. २. Dropped D2. ३. After this the Sûtra—ब्राह्मणमाणववाडवाद्यत् ॥४।२।४२॥ एभ्यो यत् स्यात् समूहेऽर्थे ॥ ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ॥ D3, B1; D4 gives the Sûtra 'गोत्रोक्ष°' ॥४।२।३९॥ here and follows B2 in the Vritti, dropping न तु पौत्रप्रभृत्येव. It goes up to वार्धकम्. ४. समूहेऽर्थे C. ५. °चेष्टः B2. ६. After it—सूत्राणि Dc3.

अचित्तहस्तिधेनोष्ठक् ॥४।२।४७॥

अचित्तार्थेभ्यो हास्तिधेनुभ्यां च ठक् स्यात् समूहे ॥ आपूपिकम् । हास्तिकम् ।

इसुसुक्तान्तात् कः ॥७।३।५१॥

इस् उस् उक् तकारान्ताच्च परस्य ठस्य कः स्यात् ॥ धैनुकम् ।[६]

---

विध्यभावेन परत्वाच्च वुञं बाधित्वाञि सिद्धे तदन्तविधेः पूर्वविप्रतिषेधस्य च ज्ञापनार्थः पाठः । तेन शौनकायनकमित्यत्रानुदात्तादित्वेपि पूर्वविप्रतिषेधेन वुञेव स्यात् । वानहस्तिकं गौधेनुकमित्यत्र तदन्तविधेष्ठक् स्यात् । क्षुद्रकमालवादिति योगविभागस्तेनार्थद्वयं ज्ञाप्यते । सेना संज्ञायामिति द्वितीयेन नियमः । क्षौद्रकमालवी सेना । क्षौद्रकमालवकमन्यत् । अत्र गोत्रत्वाद्वुञ् । तिन्दुक । ग्लुक । भल्लूक । श्वन् । युग । वरत्र । हलबन्ध । 'चरणेभ्यो धर्मवत्' ॥४।२।४६॥ 'गोत्रचरणाद्वुञ्' इत्यारभ्य चरणेभ्यः कठकलापादिभ्यो विधास्यन्ते प्रत्ययास्तद्वदेव समूहे स्युः । यथा कठानां धर्मः काठकम् । तथा कठानां समूहः काठकम् । छान्दोग्यम् । आथर्वणमित्यादि ।

अचित्त । नञ्पूर्वाद्धेनुशब्दान्नेष्यते । आधेनवम् । उत्सादिभ्योञ् ।

इसु । सार्पिष्कः । धानुष्कः । पैतृकम् । औदश्वित्कः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणादत्र न । आशिषा चरति आशिषिकः । दोषे उपसंख्यानम् । दोर्भ्यां तरति दौष्कः । स्पष्टत्वात् त्यक्तम् । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' ॥४।२।४८॥ केशाद्यञ् अश्वाच्छो वा स्यात् तस्य समूहे । कैश्यम् । कैशिकम् । आश्वीयम् । आश्वम् ।

---

१. $B_1$ drops it. २. उक्तेर्थे $D_5$. ३. $D_1$, $D_2$ drop च. ४. $B_1$ drops it. ५. After it—पैतृकम् । तान्तकम् । अवश्वित्कः । $D_5$. ६. औवकायनक° $Bo_1$; औवकायनक° $Do_1$; औपगवकम् । कायकमित्यत्र $Dc_3$.

पाशादिभ्यो यः ॥४।२।४९॥

पाश्या । वात्या ।[२] ऊलोपि । वातूलः ।

खलगोरथात् ॥४।२।५०॥

यप्रत्ययः । खल्या । गव्या । रथ्या

इनित्रकठ्यचश्च ॥४।२।५१॥

खलगोरथेभ्य एते क्रमात् स्युः ॥ खलिनी । गोत्रा । रथकठ्या ।

---

पाशा । अचित्तलक्षणे ठकि प्राप्ते वचनम् । यान्तं स्वभावात् स्त्रियाम् । पाश । तृण । धूम । वात । अङ्गार । पाटलक । पिटक । शकट । फैल । हल । धन । नड ।

खल । योगभेदादुत्तर इनित्रकठ्यच एभ्य एव स्युः ।

इनि । योगविभागो यथासंख्यार्थ इत्यभिप्रेत्याह । क्रमादिति । खलादिभ्य इनिर्वाच्यः । डाकिनी । कुटुम्बिनी । खलादयः प्रयोगतो ज्ञेयाः । इन्याद्यन्तमपि स्वभावतः स्त्रियाम् । स्पष्टत्वात् त्यक्तानि पञ्च । 'विषयो देशे' ॥४।२।५२॥ 'समूहे' इति निवृत्तम् । 'तस्य' इति वर्तते । षष्ठीसमर्थाद्विषय इत्यर्थे यथास्वं प्रत्ययाः । योसौ विषयः स देशश्चेत् । शिबीनां विषयो देशः शैबः । देशे किम् । देवदत्तस्य विषयोनुवाकः । 'राजन्यादिभ्यो वुञ्' ॥४।२।५३॥ राजन्यानां विषयो देशो राजन्यकः । राजन्य । अनृत । बाभ्रव्य । शालङ्कायन । देवयातव । जालंधरायण ।

---

१. $B_1$ has उक्तेर्थे before it. २. $B_1$ has after it—स्त्रीत्वं लोकात्. ३. अतो य उक्तेर्थे $B_1$. ४. $B_1$ has स्त्रीत्वं लोकात् after it. ५. पटोलक $Dc_4$. ६. Before it—पिटका $Bc_1$; पिटक । पिरटक । $Dc_4$. ७. कल $Bc_1$. ८. ऊकिनी $Bc_1$, $Dc_1$, $Dc_4$, $Dc_3$. ९. शैबो देशः $Dc_4$.

आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्ववन । शैलूष । उदुम्बर[1] । वैलस । आर्जुनायन । संप्रिय । दाक्षि ।[2] आकृतिगणोयम् । मालव । त्रैगर्त । वैराट । 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ' । ४।२।५४।। भौरिक्यादिभ्यो विधल् ऐषुकार्यादिभ्यो भक्तल् स्याद् विषये देशे । भौरिकिविधम् । ऐषुकारिभक्तम् । भौरिकि । भौलिकि । चैकयत[3] । चैटयत । शैकयत । काणेय[4] । कालजिक । भौरिक्यादिः । ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्याक्षायण । औलायन । औडायन । सौवीर । दासमित्र । दासमित्रायण । शायण्ड । शायाण्ड । वैश्वमाणव । वैश्वधेनव । तुण्डदेव । शायण्डि । ऐषुकार्यादिः । 'सोस्यादिरिति च्छन्दसः प्रगाथेषु' । ४।२।५५।। प्रथमासमर्थात् वृत्तवाचिन आदिरित्योपाधिकात् षष्ठ्यर्थे प्रगाथेषु वाच्येषु यथास्वमणादिः स्यात् । इतिः प्रसिद्ध्यर्थः । प्रगाथशब्दः क्रियानिमित्तको मन्त्रविशेषे वर्तते । यत्र द्वे ऋचौ प्रग्रन्थात् तिस्रः क्रियन्ते स प्रग्रन्थनात् प्रकर्षगानाद्वा प्रगाथः । पङ्क्तिरादिरस्य प्रगाथस्य पाङ्क्तः । आदिः किम् । पङ्क्तिर्मध्यमस्य प्रगाथस्य । छन्दसः किम् । अभिशब्द आदिरस्य । प्रगाथेषु[5] किम् । पङ्क्तिरादिरस्यानुवाकस्य । क्लीबे छन्दसोण् स्वार्थे वाच्यः* । त्रिष्टुबेव त्रैष्टुभम् । जागतम् । 'संग्रामे प्रयोजनयोद्धृभ्यः' । ४।२।५६।। सोस्येति वर्तते । प्रथमासमर्थविशेषणं प्रयोजनं योद्धारः । प्रत्ययार्थविशेषणं संग्रामः । प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्यः षष्ठ्यर्थे संग्रामे वाच्ये यथास्वमणादिः[6] । सुभद्रा प्रयोजनमस्य संग्रामस्य सौभद्रः संग्रामः । भरता योद्धारोस्य भारतः संग्रामः । संग्रामे किम् । सुभद्रा प्रयोजनमस्य दानस्य । प्रयोजनयोद्धृभ्यः किम् । सुभद्रा प्रेक्षिकास्य संग्रामस्य ।

१. उडुम्बर Dc2. २. After it—ऊर्णनाभ Dc4, Dc3. ३. चैपयत Bc1, Dc1, Dc4. ४. कालेय Bc1, Dc1. ५. प्रगाथे किम् । Dc3. ६. °मणादयः स्युः Dc3.

**तदस्यां प्रहरणमिति क्रीडायां णः ॥४।२।५७॥**

प्रहरणार्थात् प्रथमान्तात् सप्तम्यर्थे[1] क्रीडायां णः स्यात् ॥ दण्डः प्रहरणमस्यां क्रीडायां[2] दाण्डा । मौष्टा ।

**घञः सास्यां क्रियेति ञः ॥४।२।५८॥**

घञन्तात् गतिकारकपूर्वात् क्रियार्थात् प्रथमान्तादस्यामित्यर्थे ञः स्यात् ॥

**श्येनतिलस्य पाते ञे ॥६।३।७१॥**

ञप्रत्ययान्ते पातशब्दे परे श्येनतिलयोर्मुमागमः स्यात् ॥ श्येनपातोस्यां वर्तते श्यैनम्पाता मृगया । तैलम्पाता स्वधा । [4]दाण्डपाता तिथिः ।

---

तदस्यां । प्रहरणं किम् । माला भूषणमस्यां क्रीडायाम् । क्रीडायां किम् । खड्गः प्रहरणमस्यां सेनायाम् ।

घञः । तदस्यामित्यनुवृत्तौ पुनः सास्यामिति ग्रहात्[5] क्रीडायामिति न वर्तते । घञ इति कृद्ग्रहणं तत्र गतिकारकपूर्वमपि गृह्यत इत्यभिप्रेत्याह । **गतिकारकपूर्वादिति** । [6]वेतिकरणाद्विवक्षार्थाल्लभ्यते । क्रियार्थादिति । एतेन भावे यो घञ् तदन्तात् प्रत्यय इत्युक्तं स्यात् । ननु भावे यो घञ् तदन्तं नैव क्रियावाचि । यस्माद्धात्वर्थस्य सिद्धता नाम यो धर्मस्तत्र घञादयः स्युरित्युक्तम् । नैष दोषः । धर्मधर्मिणोर्भेदाविवक्षया[7] क्रियाधर्मोपि क्रियाशब्देनोक्तः । घञः किम् । श्येनपतनमस्यां वर्तते । क्रिया किम् । प्राकारोस्यां वर्तते ।

---

१. णः क्रीडायाम् $B_1$. २. क्रीडायामिति $B_1$. ३. वर्तनं $B_1$. ४. Before it—श्यैनतिलयोः किम् $B_2$. ५. ग्रहणात् $Bc_1$. ६. अथवेति $Dc_2$, $Dc_4$. ७. °विवक्षायां $Dc_1$.

तदधीते तद्वेद ॥४।२।५९॥

द्वितीयासमर्थादधीते वेदेत्यर्थयोर्यथास्वमणादयः स्युः[1] । ऐजागमः[2] । व्याकरणमधीते [3]वेत्ति वा वैयाकरणः । सौवश्वः[4] ।

---

तदधीते । द्विवारं तद्ग्रहणादधीयानविदुषोः पृथग्विधानमिति चेतसि कृत्वा द्विवचनं प्रयुङ्क्ते अधीते वेदेत्यर्थयोरिति । एजागम इति । 'न य्वाभ्याम्—' इति । वैयाकरण इति । विशेषेण क्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति करणे ल्युट् । प्रादिसमासः । प्रसङ्गात् 'न य्वाभ्याम्—' इत्येतदीयं वकारात् परस्योदाहरणमाह । सौवश्व इति । शोभनोऽश्वः स्वश्वः । तस्यापत्यम् । 'शिवादिभ्योऽण्' । अथवा स्वश्वं वेद वकारात् पूर्वमौकारो जातः । स्पष्टत्वात् त्यक्तम् । 'क्रतूक्थादि-सूत्रान्ताट्ठक्' ।४।२।६०॥ क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्ताच्च ठक् स्यात् तदधीते वेदेत्यर्थयोः । अग्निष्टोमार्थो ग्रन्थोऽग्निष्टोमस्तमधीते आग्निष्टोमिकः । यज्ञायज्ञीयात् परेण यानि सामानि गीयन्ते तान्युक्थानि न तत्र प्रत्ययः । किं तर्हि । तेषां लक्षणग्रन्थवाचको यस्तत्र प्रत्यय इष्यते । औक्थिकः । सूत्रान्तादकल्पादेः । वार्तिकसूत्रिकः । कल्पादेस्तु काल्पसूत्रः । उक्थ । न्याय । लोकायत । न्यास । पुनरुक्त । यज्ञ । चर्चा । पृतना । श्लक्ष्ण । संहिता । पद । क्रम । संघट्ट[5] । वृत्ति । संग्रह । गण । गुण । आयुर्वेद ।

---

१. वेदेत्यर्थे $D_3$, $D_4$, $B_1$, P, C ; वेद सौवश्व इत्यर्थयो° $D_5$. २. ऐजागमश्च $B_1$. ३. वेद $B_1$, $D_2$, $D_5$. ४. शोभनोऽश्वः स्वश्वः । तं वेदेति सौवश्वः $B_1$; after it—क्रतूक्थादिसूत्रान्तात् ठक् । क्रतुवाचिभ्य उक्त्थादेर्गणात् सूत्रान्ताच्च ठक् स्यात् । आग्निष्टोमिकः । औक्त्थिकः । $B_2$, $D_4$ ($D_4$ adds वार्तिकसूत्रिकः after औक्त्थिकः) ; सौवश्वः dropped $D_5$. ५. संघट्टवृत्ति । $Bc_1$.

इतिहासपुराणाभ्यां ठक् वाच्यः* । ऐतिहासिकः । पौराणिकः ॥[१]

**क्रमादिभ्यो वुन् ॥४।२।६१॥**

क्रमकः । पदकः ।

---

विद्यालक्षणकल्पान्ताट्ठक् वाच्यः । सार्पविद्यिकः । गौलक्षणिकः । मातृकल्पिकः । विद्यायाश्चाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वाया न । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । सांसर्गविद्यः । त्रैविद्यः । आख्यानाख्यायिकाभ्याम् । यवक्रीतमधिकृत्य कृतमाख्यानं यवक्रीतम् । यदधीते तद्वेद वा यावक्रीतिकः । वासवदत्तिकः । वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता । 'लुबाख्यायिकाभ्यो बहुलम्' इति छस्य लुप् । द्विपदा ज्योतिषानुपदानुकल्पेभ्योपि । द्वैपदिकः । ज्योतिषिकः । आनुपदिकः । आनुकल्पिकः । सर्वसादेर्द्विगोश्च ठको लुक् । सर्वादिः । सर्ववेदः । सादेः । सवार्तिकः । द्विगोः । पञ्चव्याकरणः । अनुसूर्लक्ष्यलक्षणेभ्योपि ठक् । आनुसुकः । लाक्षिकः । लाक्षणिकः । इकन्पदोत्तरपदात् । उत्तरपदिकः । शतषष्टेः पथः षिकन् । शतपथिकः । शतपथिकी । शतपथोपि । षष्टिपथिकः ।

**क्रमादिभ्यः** । क्रम । पद । शिक्षा । मीमांसा । सामन् । स्पष्टत्वात् त्यक्तानि पञ्च । 'अनुब्राह्मणादिनिः' ॥४।२।६२॥ अणोपवादः । ब्राह्मणसदृशी ग्रन्थोनुब्राह्मणम् । तस्मादिनिः स्यात् । अनुब्राह्मणमधीते वेद वा अनुब्राह्मणी । 'वसन्तादिभ्यष्ठक्' । ४।२।६३॥ वसन्तसहचरितो ग्रन्थो वसन्तः । तमधीते वेद वा

---

१. After it--विद्यालक्षणकल्पसूत्रान्तादिति वाच्यम् । धानुर्विद्यिकः । गोलक्षणिकः । मातृकल्पिकः । धार्मसूत्रिकः । विद्यायाश्चाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वायां न ॥ अङ्गविद्यामधीते वेद वा आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । सांसर्गविद्यः । त्रैविद्यः । $D_3$, C, $B_1$, $B_2$ (For धानुर्विद्यिकः $B_1$ has सार्पविद्यिकः, $B_2$ सार्पवैद्यिकः, गोलाक्षणिकः $B_2$ ; °क्षत्रसंसर्गत्रिपूर्वाया अण् C ; आङ्गविद्यिकः, dropping from क्षात्राविद्यः to त्रैविद्यः C, $B_2$). २. $B_1$ has उक्तेर्थे before it. ३. °सूकः । $Dc_4$, $Dc_3$. ४. पदोत्तरपदिकः । $Dc_1$, $Bc_1$.

वासन्तिकः । वसन्त । वर्षा । शरद् । हेमन्त । शिशिर । प्रथम । गुण । चरम । अनुगुण । अथर्वन् ।[1] 'प्रोक्ताल्लुक्' । ४।२।६४॥ प्रोक्तप्रत्ययान्तादध्येतृवेदितृोरुत्पन्नस्य लुक् । पाणिनीयमधीते पाणिनीयः । आपिशलः । स्त्री पाणिनीया । 'सूत्राच्च कोपधात्' । ४।२।६५॥ सूत्रवाचिनः कोपधात् उत्पन्नस्य प्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थमारम्भः । पाणिनीयमष्टकं सूत्रं तदधीयते अष्टकाः पाणिनीयाः । दशका वैयाघ्रपदीयाः । त्रिकाः काशकृत्स्नाः । संख्याप्रकृतेर्वाच्यम् । इह न । महावार्तिकं सूत्रमधीयते माहावार्तिकाः । कोपधात् किम् । चतुष्टयमधीते चातुष्टयः । 'छन्दोब्राह्मणानि च तद्विषयाणि' ॥४।२।६६॥ छन्दांसि च ब्राह्मणानि च प्रोक्तान्तान्यध्येतृवेदितृविषयाण्येव स्युः न स्वतन्त्राणि । अनन्यभावो विषयार्थः । ततश्च पाणिनिना प्रोक्तं पाणिनीयमितिवत् स्वातन्त्र्यं पाणिनीयं महदिति वन्महत्त्वाद्युपाधियोगः पाणिनीयमधीयत इति वद्वाक्यं च न स्यात् । छन्दसि । कठेन प्रोक्तमधीयते कठाः । 'कलापिवैशंपायनान्तेवासिभ्यश्च' इति णिनिः । तस्य कठचरकाल्लुक् । ततस्तदधीते इत्यण् । तस्यापि प्रोक्ताल्लुक् । ब्राह्मणानि । ताण्ड्येन प्रोक्तमधीयते ताण्डिनः । ताण्ड्यात् प्रोक्ताणिन्यन्तादणो लुक् । ब्राह्मणस्यापि छन्दस्त्वे ब्राह्मणग्रहणं पुराणप्रोक्ततारूपविशेषार्थम् । इह तद्विषयता न । याज्ञवल्क्यानि ब्राह्मणानि । चोनुक्तार्थः । कल्पे । काश्यपिनः । सूत्रे पाराशरिणो भिक्षवः । शैलालिनो नटाः । णिन्यन्तादणो लुक् । कर्मन्दिनः कृशाश्विनः । इन्यन्तात् । छन्दोब्राह्मणानि किम् । पाणिनीयं व्याकरणम् । पैङ्गी कल्पः ॥

१. After it-आथर्वण Dc1, Dc4, Dc3.

**तदस्मिन्नस्तीति देशे तन्नाम्नि ॥४।२।६७॥**

तदिति[१] प्रथमा समर्थादस्त्युपाधिकात् सप्तम्यर्थे प्रत्ययान्तनाम्नि देशे वाच्ये यथास्वमणादयः स्युः[२] । उदुम्बराणि सन्त्यस्मिन् देशे औदुम्बरो[३] देशः ।

**तेन निर्वृत्तः[४] ॥४।२।६८॥**

कुशाम्बेन[५] निर्वृत्ता कौशाम्बी नगरी ।

**तस्य निवासः ॥४।२।६९॥**

षष्ठ्यन्तान्निवासे देशे तन्नाम्नि वाच्ये[६]णादयः स्युः[७] ॥ शिबीनां[८] निवासः शैबो देशः[९] ।

---

इतश्चातुरर्थिकाः प्रत्ययाः ।

तद । तदिति प्रथमासमर्थविभक्तिः । अस्तीति प्रकृत्यर्थविशेषणम् । अस्मिन्नित्यस्य प्रत्ययार्थस्य विशेषणम् । देशे तन्नाम्नीत्याह । **प्रथमासमर्था**दिति । **प्रत्ययान्तनाम्नी**ति । एतद्विहितं प्रत्ययान्तं नाम तस्य तस्मिन्नित्यर्थः । मत्वर्थीयापवादो योगः ।

**तेन** । तृतीयासमर्थात् निर्वृत्त इत्यस्मिन् विषये देशतन्नाम्नि गम्ये यथास्वमणादिः स्यात् । **कुशाम्बेने**ति । अत्र कर्तरि तृतीया । निर्वृत्तेत्यन्तर्भावितण्यर्थाद्वृत्तेः कर्मणि निष्ठा । सहस्रेण निर्वृत्ता साहस्री परिखा । अत्र हेतौ तृतीया । कर्तरि निष्ठा ।

**तस्य** । निवसत्यस्मिन्निति निवासः ।

---

१. $D_1$, $D_2$, $D_4$, $D_5$ drop तदिति. २. $B_1$ drops it. ३. $B_1$ has असौ before it; देशः dropped $D_1$, $B_2$, $D_2$, $D_4$. ४. निर्वृत्तम् $D_5$. ५. $B_1$ has before it—तेनेति तृतीयासमर्थान्निर्वृत्तामित्यर्थे यथास्वमणादयस्तन्नाम्नि वाच्ये ।. ६. यथास्वम° $D_5$. ७. $B_1$, $D_1$, $D_4$ drop it. ८. शिबस्य निवासो देशः शैबः ।. ९. Dropped $D_5$.

**अदूरभवश्च ॥४।२।७०॥**

षष्ठ्यन्ताददूरभवे[1] देशे तन्नाम्नि वाच्येणादयः स्युः ॥ विदिशाया अदूरभवं नगरं वैदिशम्[2] ॥

---

अदूर । चकारः पूर्वेषां त्रयाणामर्थानामिह संनिधानार्थस्तेनोत्तरेषु योगेषु चत्वारोप्यर्थाः संबध्यन्ते 'शेषे' इति सूत्रं[3] यावत् । स्पष्टत्वात् त्यक्तानि दश । 'ओरञ्' ॥४।२।७१॥ उवर्णान्तात् तदस्मिन्नित्यादिषु चतुर्ष्वर्थेषु अञ् स्यात् । आरण्डवः । कार्कन्धवः । नद्यां परत्वान्मतुप् । 'नद्यां मतुप्' इति । इक्षुमती । 'मतोश्च बह्वजङ्गात्' । ४।२।७२॥ बह्वजङ्गं यस्य मतुपस्तदन्तादञ् चातुरर्थिकः । वारणावतम् । बह्वच् किम् । आहिमतम् । अङ्गग्रहणं बह्वजिति[4] तद्विशेषणं यथा स्यात् मत्वन्तविशेषणं मा भूदिति । मालावतां निवासो मालावती । 'बह्वचः कूपेषु' । ४।२।७३॥ बह्वचोञ् स्यात् कूपेषु चातुरर्थिकः । दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः । 'उदक् च विपाशः' । ४।२।७४॥ विपाश उत्तरे कूले ये कूपास्तेषु वाच्येष्वबह्वचोप्यञ् स्यात् । दत्तेन निर्वृत्तो दात्तः कूपः । दक्षिणतः कूपेष्वणेव । दात्तः । स्वरे विशेषः । 'संकलादिभ्यश्च' । ४।२।७५॥ एभ्यश्चातुरर्थिकोञ् । संकलेन निर्वृत्तं साङ्कलम् । संकल । पुष्कल । उद्वप । उत्पुट । निधान । कुम्भ । सुदक्ष । सुदत्त । सूत । सुनेत्र । सुमङ्गल । सिकता । पूतिका । पूलाश । पलाश । निवेश । गम्भीर । आन् । अहन् । लोमन् । वेमन् । चरण । बहुल । सद्योज । अभिषिक्त । गोभृत् । राजभृत् । मल्ल । माल । 'स्त्रीषु सौवीरसाल्वप्राक्षु' ॥४।२।७६॥ ङ्याप्प्रातिपदिकादञ् चातुरर्थिकः । स्त्रीलिङ्गे सौवीरादिदेशे वाच्ये । सौवीरे । दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी । साल्वे । वैधूमाग्नी । प्राचि । काकन्दी । 'सुवास्त्वादिभ्योण्'

---

१. B1 drops it. २, B1 has नगरम् after it. ३. Dropped Dc3.
४. इति dropped Dc3, Dc4.

॥४।२।७७॥ चातुरर्थिकः । उवर्णान्तलक्षणस्य कूपलक्षणस्य च । अत्रोपवादः । सुवस्तोरदूरभवं पुरं सौवास्तवम् । अण्ग्रहणं नद्यां मतुबो बाधनार्थम् । सौवास्तवी नदी । सुवास्तु । वर्णु । भण्डु । खण्डु । सेवालिन् । कर्पूरिन् । शिखण्डिन् । गर्त । कर्कश । शकटीकर्ण । विकर्ण । कृष्णकर्ण । कर्कन्धुमती । गोह । अहिसक्थ । 'रोणी' ॥४।२।७८॥ रोणीति प्रथमानिर्देशात् केवलात् तदन्ताच्चाण् चातुरर्थिकः न । कूपलक्षणोञ् । रौणः कूपः । आजकरोणः । 'कोपधाच्च' ॥४।२।७९॥ कोपधाच्चाण् । चातुरर्थिकः । कार्णच्छिद्रकः कूपः । त्रैशङ्कवः । 'वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखि—संकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः' ॥४।२।८०॥ अरीहणादिभ्यः सप्तदशभ्यो वुञादयः सप्तदश प्रत्ययाः स्युश्चतुर्ष्वर्थेषु । अरीहणादिभ्यो वुञ् । आरीहणकम् । अरीहण । द्रुघण[1] । खदिर । भगल । उलन्द[2] । सांपरायण[3] । क्रौष्ट्रायण । भास्त्रायण[4] । त्रैगर्तायण । चैत्रायण । गौत्रायण । रायस्पोष । विपथ । विपाश । उद्दण्ड । उदञ्चन । खाण्डायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवत् । शिंशपा । किरण । रैवत । बिल्व । वैमतायन । सौसायन । शाण्डिल्यायन । सुयज्ञ । शिरीष[5] । बधिर । कृशाश्वादिभ्यश्छण् । कार्शाश्वीयः । कृशाश्व । अरिष्ट । वेश्म । विशाल । रोमक । शबल । कूट । रोमश । वठर । सुकर । प्रभर[6] । सदृश । पुगर । सुख । धूप[7] । अजित । विनत[8] । अवनत । विकुड्यास । अरुस् । अयस् । असायस । मौद्गल्य । पराशर । ऋश्यादिभ्यः कः । ऋश्यकः । ऋश्य । न्यग्रोध । परिवृत्त । सूव । निलीन । निधान । वितान । विधान । निवद्ध । विवद्ध । परिगूढ । उपगूढ । अश्मन् ।

१. Before it—द्रुहण $Bc_1$, $Dc_4$. २. उलुन्द $Bc_1$, $Dc_1$, $Dc_4$. ३. सांवत्सरायण $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ४. भस्त्रायण $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ५. सिरीष $Dc_3$. ६. प्रकर । प्रसर $Dc_3$. ७. धूम $Dc_2$. ८. वानिता $Dc_2$.

उत्तराश्मन् । स्थूल । बाहु । खदिर । शर्करा । अनडुह । परिवेष । वेणु । वीरण । कुमुदादिभ्यष्ठच् । कुमुदिकम् । कुमुद । शर्करा । न्यग्रोध । इक्कट । संकट । गर्त[1] । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष[2] । यवास[3] । कूप । विकङ्कत । काशादिभ्य इलः । काशिलः । काश । पाश । अश्वत्थ । पलाश । पीयूक्षा[4] । बिस । तृण । नड । वन । कर्दम । कर्पूर । कङ्कट । गुहा । तृणादिभ्यः सः । तृणसः । तृण । नड । फल । पर्ण । वराण[5] । अर्ण । अर्जुन[6] । बल । प्रेक्षादिभ्य इनिः । प्रेक्षी । प्रेक्षा । फलका । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इक्कटा । इकटा । संकट । पुक । अश्मादिभ्यो रः । अश्मरम् । अश्मन् । यूथ[7] । ऊष । मीन । दंश । वृन्द । गुड[8] । दण्ड । नग[9] । शिखा । सख्यादिभ्यो ढक् । साखेयम् । सखि । अग्निदत्त । वायुदत्त । सखिदत्त । गोभिल[10] । भल्ल[11] । पाल । चक्र । चक्रवाक[12] । छगल । अशोक । करवीर । सीकर । सरस । समल । सुरस । संकाशादिभ्यो ण्यः । सांकाश्यम् । संकाश । कम्पील । कश्मीर । शूरसेन । मन्थन । यूप । अङ्ग । नाग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । विरत । विकर । नासिका । बलादिभ्यो यः । बल्यम् । बल । पूल[13] । मूल । उल । दुल । वन[14] । कुल । पक्षादिभ्यः फक् । पाक्षायणः । पक्ष । तुक्ष[15] । अण्ड । कम्बालिका । कुत्स । सकल । चित्र । अभिश्वन् । पथिन्[16] । पन्थ च । कुम्भ[17] । सिंहक । मकर । शमल । रोमन् । लोमन् । मकर । हंसक । सुवर्णक[18] । हस्तिन् । खिल[19] । कर्णादिभ्यः फिञ् । कार्णायनिः ।

१. गर्धभ $Bc_1$; गर्भ $Dc_3$, $Dc_4$. २. सिरीष $Dc_3$. ३. यवाष $Bc_1$. ४. पीयुक्ष $Bc_1$, $Dc_1$, $Dc_4$. ५. वर्ण $Bc_1$, $Dc_4$. ६. जन $Bc_1$. ७. यूष $Bc_1$, $Dc_1$, $Dc_4$. ८. गुडा $Dc_1$. ९. नर $Bc_1$, $Dc_1$, $Dc_4$. १०. गोहिल $Bc_1$, $Dc_1$, $Dc_4$. ११. कल $Bc_1$, $Dc_1$. १२. चक्रवाल $Dc_4$. १३. धूल $Bc_1$, $Dc_1$, $Dc_3$, १४. धन $Bc_1$, $Dc_1$, $Dc_4$. १५. तुक्ष $Dc_2$. १६. पथ $Bc_1$, $Dc_1$ ; पथः पन्था च $Dc_4$. १७. कुम्भसीर । शीरमूक च $Bc_1$, $Dc_4$. १८. सकर्णक $Bc_1$, $Dc_3$, $Dc_4$. १९. विचिल $Dc_4$.

जनपदे लुप् ॥४।२।८१॥

जनपदे विशेषे चातुरर्थिकप्रत्ययस्य लुप् स्यात् ॥

---

कर्ण । वसिष्ट । अर्कलूष । द्रुपद । आणनद्ग । मकर । हिंसक ।
सुह्य । पाञ्चजन्य । अर्क । स्फिज् । कुलिश । कुम्भी ।
जीवन्त । जित्वन् । औण्डीवत् । सुतङ्गमादिभ्य इञ् ।
सौतङ्गमिः । सुतङ्गम । मुनिचित्त । विप्रचित्त । महाचित्त ।
महापुत्र । श्वेत । अडिक । शुक्र । विग्र । बीजवापिन् । श्वन् ।
अर्जुन । अजिर । प्रगद्यादिभ्यो ञ्यः । प्रागद्यः । प्रगदिन् ।
मगदिन् । कलिव । खण्डिव । गडिव । चूडार । पञ्जर । कोविदार ।
वराहादिभ्यः कक् । वाराहकः । वराह । पलाश । शिरीष । निबद्ध ।
स्थूल । विवृद्ध । विदग्ध । विजग्ध । विभग्न । विमग्न । बाहु । खदिर ।
शर्करा । कुमुदादिभ्यष्ठक् । कौमुदिकम् । कुमुद । मागध । रथकार ।
दशग्राम । अश्वत्थ । शाल्मलि । स्थूल । कूट । मुण्ड । कर्ण ।

जनपदे । ग्रामसमुदायो जनपदः । तन्नाम्नीति वर्तते । लुबन्तं चेन्नामधेयं स्यादित्यर्थः । तथा चोदुम्बरे जनपदे इत्यादौ न ।

---

१. जनपदविषये $Dc_1$. २. अर्क । सम । $Dc_1$, $Dc_4$. ३. अनडुह्य for this up to सुह्य ; आनडुह्य $Dc_4$, $Bc_1$. ४. स्फग । स्फिग । $Bc_1$, $Dc_1$. $Dc_3$, $Dc_4$. ५. अण्डीवर्त $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ६. गडिक $Dc_2$, $Bc_3$. ७. खडिव $Bc_1$, $Dc_1$, $Dc_4$. ८. पिञ्जर $Dc_4$. ९. सिरीष $Dc_3$. १०. विविद्ध $Bc_1$. ११. For स्थूल to कण—स्थल । कुण्डल । मधुकर्ण $Dc_3$, $Bc_3$.

## लुपि युक्तवद्व्यक्तिवचने ॥१।२।५१॥

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः ॥ पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः ।

---

लुपि । लुपीति लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थ उच्यते । युक्तवदिति क्तवतुना प्रकृत्यर्थ उच्यते स हि प्रत्ययार्थं युनक्ति । अथवा युक्तप्रत्ययार्थेन संबद्धः प्रकृत्यर्थः । व्यक्तवचने इति लिङ्गसंख्ययोः पूर्वाचार्यसंज्ञेति सर्वमभिप्रेत्याह । लुपीत्यादि । पूर्वाचार्याणामिदं सूत्रम् । तथा चास्य प्रत्याख्यानं सूत्रकारेण कृतम् । 'तदशिष्यं संज्ञाप्रमाणत्वात्' इति । अस्यार्थः । युक्तवद्भावलक्षणमवाच्यम् । कस्मात् । संज्ञाप्रमाणत्वात् । संज्ञाशब्दा हि नानालिङ्गसंख्याः प्रमाणम् । यथा आपो दाराः । प्रसङ्गादन्यान्यपि त्यक्तानि चत्वारि व्याख्यायन्ते । 'लुब्योगाप्रख्यानात्' ॥१।२।५४॥ लुबपि न वाच्यः । योगादर्शनात् । न हि वृक्षयोगान्नगरे वरणाशब्दाः । किं तर्हि । संज्ञा एताः । 'योगप्रमाणे च तदभावेदर्शनं स्यात्' ॥१।२।५५॥ योगप्रमाणे हि योगाभावे प्रयोगो न स्यात् । दृश्यते च विनैव क्षत्रिययोगं देशे पञ्चालशब्दः । 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' । १।२।५६॥ पूर्वाचार्यैः प्रधानाप्रधाने[3] प्रधानार्थं सह ब्रूतः प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्युक्तम् । तदप्यवाच्यम् । अर्थस्य लोकत एवावगतेः । 'कालोपसर्जने च तुल्यम्' । १।२।५७॥ आन्याय्यादुत्थानादान्याय्याच्च संवेशनादेषोद्यतनः । अन्ये तु अहरुभयतोर्धरात्रमेषोद्यतनः । तथा अप्रधानमुपसर्जनमिति कालोपसर्जने उक्ते । ते अपि न वाच्ये । लोकत

---

१. °संज्ञायां Bc1, Dc1. २. वरणादय: Dc4 ; वरणा इति Dc3. ३. After it—च Bc1.

**वरणादिभ्यश्च** ॥४।२।८२॥

एभ्यश्चातुरर्थिकप्रत्ययस्याजनपदेपि लुप् स्यात् ॥ वरणानामदूरभवं नगरं वरणाः । गोदयोरदूरभवो ग्रामो गोदौ । [1] [2] [3] [4]

**विशेषणानां चाजातेः** ॥१।२।५२॥

लुबन्तस्य विशेषणानामपि लिङ्गवचने तद्वत् जातिं विना । पञ्चाला रम्याः । गोदौ रम्यौ । अजातेः किम् । पञ्चाला जनपदो रम्यः । गोदौ ग्रामो रम्यः ॥

---

एवावगतेः । प्रासङ्गिकं परिसमाप्य प्रकृतमुच्यते । लुपि किम् । लुकि मा भूत् । लवणेन संसृष्टो लवणः सूपः । लवणा यवागूः । प्राग्वहतेष्ठको 'लवणाल्लुक्' इति लुक् । व्यक्तिवचने किम् । शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनमिति शिरीषेषु यद्वनस्पतित्वं तस्यापि ग्रामेतिदेशः स्यात् । तथा च 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं स्यात् खलतिकादिषु वचनमेव प्रकृतिवत् । खलतिकस्य पर्वतस्यादूरभवानि वनानि । [5] [6]

**वरणा** । वरण । शृङ्गिन् । शाल्मली । पूर्वौ गोदौ । अपरौ गोदौ । आलिङ्ग्यायन । पर्णी । शंफाण्डि । जनपद । मथुरा । उज्जयिनी । गया । तक्षशिला । उरसा । आकृतिगणोयम् । कटुकबदरी । शिरीष । काञ्ची । [7] [8]

**विशेषणानाम्** । पूर्वेणैव सिद्धे जातिप्रतिषेधार्थं वचनम् । पाञ्चाला जनपदो रम्य इत्यादि । जनपदग्रामशब्दौ जातिवचनौ ।

---

१. °श्चातुरर्थिकस्य C, $D_1$, $D_5$, $B_2$. २. °प्रत्ययस्य लुप् स्यात् । अजनपदार्थ आरम्भः $B_1$, $B_2$. ३. वरणाः नगरम् $B_1$, $B_2$, $D_2$. ४. $B_1$, $B_2$, $D_5$ have ग्रामः after it. ५. सिरि° $Bc_1$, $Dc_4$. ६. सिरि° $Bc_1$. $Dc_4$ (in all places). ७. सफाण्डि $Bc_1$; सिफाण्डि $Dc_3$. ८. सिरीष $Bc_1$, $Dc_4$, $Dc_3$.

ताभ्यां स एव लुबर्थो जातिरूपेणोच्यते इति प्रकृतिवल्लिङ्गसंख्ये स्याताम् । अतो निषेधः । अजातेरित्यर्थनिषेधः । तेन जातिद्वारेण यानि विशेषणानि तेषामपि युक्तवद्भावो न । पञ्चालो जनपदो रमणीयो बह्वन्न इति । मनुष्यलुपि निषेधो वाच्यः । चञ्चेव चञ्चा अभिरूपः । वध्रिका दर्शनीयः । 'इवे प्रतिकृतौ' इति कः । 'लुम्मनुष्ये' इति लुप् । स्पष्टत्वात् त्यक्तान्येकादश । 'शर्कराया वा' ॥४।२।८३॥ अस्माच्चातुरर्थिकस्य वा लुप् । यद्ययं नित्यो लुप् स्यात् कुमुदादौ वराहादौ च पाठो व्यर्थः स्यात् । तस्मात् पाठसामर्थ्यादेव पाक्षिके प्रत्ययश्रवणे लब्धे औत्सर्गिकोप्यण् स्यात् तस्यायं वा लुबिति ज्ञापयति वाग्रहः । तेनास्य षाड्रूप्यं स्यात् । शर्करा । शार्करम् । शर्करिकम् । शार्करकम् । उत्तरे च द्वे । 'ठक् छौ च' ॥४।२।८४॥ शर्करायाश्चातुर्थिकौ । शार्करिकम् । शर्करीयम् । 'नद्यां मतुप्' ॥४।२।८५॥ देशे तन्नाम्नि नद्यां वाच्यायां मतुप् स्याच्चतुर्ष्वर्थेषु[1] । 'मतौ बह्वचोनजिरादीनाम्' ॥६।३।११९॥ मतौ[2] बह्वचो दीर्घः स्यादजिरादीन् विना संज्ञायाम् । उदुम्बरावती । वीरणावती । अनजिरादीनां किम् । अजिरवती । खदिरवती । पुलिनवती । हंसकारण्डवती । चक्रवातवती[3] । संज्ञायामेव । वलयवती । 'शरादीनां च' ॥६।३।१२०॥ एषां मतौ परे दीर्घः संज्ञायाम् । शरावती । संज्ञायामिति मतोर्वा यवादित्वेपि । शर । वंश । धूम । अहि । कपि । मुणि । मनि । शुचि । भागीरथी । भैमरथीत्यादौ न मतुप् तदस्यास्तन्नामत्वात् । किं त्वणेव । 'मध्वादिभ्यश्च' ॥४।२।८६॥ मतुप् चातुरर्थिकः अनद्यामपि । मधुमान् । मधु । बिस । स्थाणु । मुष्टि । इक्षु । वेणु । ऋष्य । कर्कन्धु ।

१. चातुरर्थिकेषु Bc1, Dc4; चातुरर्थेषु Dc3. २. मतौ परे Bc1, Dc4.
३. °वाकवती Dc3, Dc4.

शमी । करीर । हिम । किशरा । शर्याण । रुमत । मरुत् । वार्दाली । शर । इष्टका । वक्ष । तक्षशिला । शक्ति । आसन्दी । आसुती । शलाका । आमिषी । शकला । खड । वेट । पार्द । 'कुमुद-नडवेतसेभ्यो ड्मतुप्' ॥४।२।८७॥ चातुरर्थिकः । कुमुद्वान् । नड्वान् । वेतस्वान् । 'महिषाच्च' । महिष्मान् देशः । 'नडशादाड्ड्वलच्' ॥४।२।८८॥ चातुरर्थिकः । नड्वलम् । शाड्वलम् । 'शिखाया वलच्' ॥४।२।८९॥ चतुर्षु । शिखावलं पुरम् । 'उत्करादिभ्यश्छः' ॥४।२।९०॥ चातुरर्थिकः । उत्करीयम् । उत्कर । संफल । शफर । पिप्पल । पिप्पलीमूल । अर्क । अश्मन् । पर्ण । सुपर्ण । खलाजिन । अग्नि । तिक । कितव । आतप । अनेक । पलाश । त्रैवण । पिचुक । क्षार । अश्वत्थ । काश । क्षुद्र । भस्त्रा । विशाल । जन्या । वेत्र । अजिन । चर्मन् । उत्क्रोश । क्षान्त । खदिर । शूर्पणाय । श्यावनाय । नितान्तवृक्ष । निशान्तवृक्ष । इन्द्रवृक्ष । आर्द्रवृक्ष । 'नडादीनां कुक् च' ॥४।२।९१॥ प्रत्ययः स्यात् कुक् चागमः । नडकीयम् । नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस । इक्षु । काष्ठ । कपोत । तृण । क्रुञ्चात् ह्रस्वत्वं च । तक्ष्णो नलोपश्च । प्रासङ्गिकं सूत्रं व्याख्यायते । 'बिल्वकादिभ्यश्छस्य लुक्' ॥६।४।१५३॥ एभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुक् स्यात् । बिल्वा अस्यां सन्ति बिल्वकीया । तस्यां भवः । अण् । बैल्वकः । बिल्वकादिर्नडाद्यन्तर्गणः । छग्रहणं छमात्रस्य निवृत्त्यर्थं न कुकः ॥

इति चातुरर्थिकाः ॥

१. स्यायण । तुमुन् । मतुप् । वार्वाकी for शर्याण to वार्वाली $Bc_1$, $Dc_3$, $Dc_4$. २. तक्ष $Dc_3$, $Dc_4$. ३. संकर for संफल । शफर $Bc_1$; संफर $Dc_4$. ४. बालाजिन $Bc_1$, $Dc_3$, $Dc_4$. ५. आवेक $Dc_3$. $Dc_4$. ६. पेटक । प्लक्ष । for पिचुक । क्षार । $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ७. अत्र छग्र° $Bc_1$.

**शेषे ॥४।२।९२॥**

अपत्यादि चतुरर्थान्तादन्यः[1] शेषस्तत्र यथास्वमणादयः स्युः ॥ चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः ।[2]

इतः शेषाधिकारः । 'शेषे' । इदं विधायकं चाधिकारश्च । तत्र विधायकतां प्रकटयन् व्याकरोति । अधिकारत्वं तूत्तरत्र 'ग्रामाद्यखञौ' इत्यादौ शेषेऽर्थे इत्यादि वदन् स्फुटयिष्यति[3] । शेषो नामोक्तादन्य इत्यभिप्रेत्याह । **अपत्यादीति** । **अणादयः** पञ्चेति । 'प्राग्दीव्यतोऽण्' 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' । 'उत्सादिभ्योऽञ्' । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति साधारण्येनोक्ता महोत्सर्गा अणादयः पञ्च गृह्यन्ते । **चाक्षुषं रूपमिति** । ग्रहणार्थेऽत्रानेनाण् विहितः । **श्रावण** इति । श्रवणेन गृह्यते । तथान्येष्वप्यनुक्तेष्वर्थेषूदाहार्यम् । तथा हि दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्णा उलूखला यवाः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । अयमधिकारोपीति कृत्वा वक्ष्यमाण 'राष्ट्रावारपाराद् घखौ' इत्यादयोऽपत्यादिचतुरर्थान्तेभ्योऽन्यस्मिन् जातादावर्थे वेदितव्याः । शेषाधिकारप्रयोजनं **पाणिनीयमतदर्पणे** स्पष्टीकृतम् । तथा हि

" 'तस्येदम्' इत्यसावर्थो जातादिष्वत्र पठ्यते ।
स चापत्यादिसामान्यमतस्तत्र कृतो विधिः ॥
तद्विशेषेष्वपत्यादिष्वप्यवश्यं भविष्यति ।
शेषाधिकारस्तेनायं क्रियते तन्निवृत्तये ॥ "

किं च असति शेषग्रहणे घादीनां प्रथमेनैवार्थेन सह संबन्धो विज्ञायेत ततश्च द्वितीयादिष्वर्थेषु प्राग्दीव्यतीया अणादयः पञ्च स्युर्न घादयः । शेषशब्दस्तु प्रयुक्तादन्यतया जातादीनर्थान् वर्गीकृत्य शक्नोत्यभिधातुमिति सर्वत्र घादयः सिध्यन्ति ततः सर्वेषु जातादिषु घादयो यथा स्युरिति शेषग्रहणं कृतमिति । अथ सौकर्यार्थं

---

१. चतुरर्थादन्यः $B_1$. २. After it—भिक्षया संपन्नं भैक्षम् । औपलिकम् $B_1$, $B_2$. ३. स्फुटं पठिष्यति । $Dc_4$.

**तत्र जातः ॥४।३।२५॥**

सप्तम्यन्ताज्जातेर्थे यथास्वमणादयः स्युः ॥ मथुरायां जातो माथुरः ।

**प्रावृषष्ठप् ॥४।३।२६॥**

जातार्थेस्माट्ठप् स्यात् ॥ अणोपवादः । प्रावृषिकः ।

---

प्रकृतानामणादीनां वक्ष्यमाणानां घादीनां च प्रत्ययानामर्थान् समर्थविभक्तींश्च प्रथमं निर्देष्टुं व्यवहितान्यपि तत्र जात इत्यादीनि व्याख्याति ।

तत्र । **माथुर** इति । प्राग्दीव्यतोण् ।

**प्रावृषः** । **अणोपवाद** इति । उपलक्षणमेतत् । 'प्रावृष एण्यः' इत्यस्याप्यपवादः । पकारोनुदात्तत्वार्थः । **प्रावृषिक** इति । प्रावृषि जातः । स्पष्टत्वात् त्यक्तानि षड्विंशतिः । 'संज्ञायां शरदो वुञ्' ॥४।३।२७॥ अस्माज्जातार्थे वुञ् स्यात् संज्ञायाम् । ऋत्वणोपवादः । शारदका दर्भाः । संज्ञायां किम् । शारदं सस्यम् । केचित् 'कृत-लब्धक्रीतकुशलाः' इत्येतदन्तं संज्ञाधिकारमाहुः । 'पूर्वाह्णापराह्णार्द्रा-मूलप्रदोषावस्कराद्वुन्' ॥४।३।२८॥ एभ्यो वुन् तत्र जात इत्यर्थे । पूर्वाह्णकः । अपराह्णकः । 'विभाषा पूर्वाह्णापराह्ण—' इति ठञोपवादः । आर्द्रकः । मूलकः । नक्षत्राणोपवादः । प्रदोषकः । 'निशाप्रदोषाभ्यां च' इति ठञोपवादः । अवस्करकः । औत्सर्गिकस्याणः । असंज्ञायां तु यथाप्राप्तठञादयः । 'पथः पन्थ च' ॥४।३।२९॥ पथो वुन् स्यात् पन्थादेशश्च । पथि जातः पन्थकः । 'अमावास्याया वा' ॥ ४।३।३०॥ वुन् । पक्षे संधिवेलाद्यण् । अमावास्यकः । अमावास्यः । एकदेशविकृतस्यानन्यत्वादमावस्यकः । आमावस्यः । 'अ च' ॥ ४।३।३१॥ अमावास्याया अः स्याज्जातार्थे चाद्वुन्नणौ । अमावास्यः ।

---

१. °ज्जातार्थे P; D₁. २. This Sûtra and the next (४।३।५३) dropped D₄. ३. अस्माट्ठप्स्याज्जातार्थे C; जातेर्थे only before अणोपवादः in B₁. ४. शस्यम् Bc₁, Dc₄, Dc₃.

अमावस्यः । 'सिन्ध्वपकराभ्यां कन्' ॥४।३।३२॥ सिंधौ जातः सिन्धुकः । कच्छाद्यणो मनुष्यवुञश्चापवादः । अपकरकः । औत्सर्गिकस्याणः । 'अणञौ च' ॥४।३।३३॥ सिन्ध्वपकराभ्यां यथासंख्यम् । सैन्धवः । आपकरः । चात् कन् । 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' ॥४।३।३४॥ एभ्यः परस्य नक्षत्राणो जातार्थे लुक् । तत्र कृते 'लुक्तद्धितलुकि' । इति स्त्रीप्रत्ययस्यापि लुक् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः । 'नक्षत्रेभ्यो बहुलम्' इत्यस्यायं प्रपञ्चः । उत्तरौ च योगौ । 'स्थानान्तगोशालखरशालाच्च' ॥४।३।३५॥ एभ्यः प्रत्ययस्य जातार्थे लुक् । गोस्थाने जातो गोस्थानः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् गोशाले गोशालायां वा जातो गोशालः । खरशालः । 'वत्सशालाभिजिदश्वयुक्छतभिषजो वा' ॥४।३।३६॥ लुक् । वत्सशाले वत्सशालायां वा जातो वत्सशालः । वात्सशालः । अभिजित् । आभिजितः । अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषजः । ङित्त्वाद्वा शतभिषक्शब्दादण् । शातभिषः । 'नक्षत्रेभ्यो बहुलम्' ॥४।३।३७॥ लुक् । रोहिणः । रौहिणः । मृगशिराः । मार्गशीर्षः । 'कृतलब्धक्रीतकुशलाः' ॥४।३।३८॥ सप्तमीसमर्थात् कृतादिष्वर्थेषु यथासंख्यं प्रत्ययाः । स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघ्नः । ननु यद्यत्र कृतं जातमपि तत्तत्र यच्च यत्र क्रीतं लब्धमपि तत्तत्र । किमर्थं भेदेनोपादानम् । शब्दार्थस्य भिन्नत्वाद् भेदेनोपादानम् । 'प्रायभवः' ॥४।३।३९॥ सप्तमीसमर्थात् प्रायभव इत्यर्थे यथास्वं प्रत्ययाः । प्रायशब्दः साकल्यस्य किंचिन्न्यूनतामाह । स्रुघ्ने प्रायेण भवः स्रौघ्नः । प्रायभवग्रहणं वैचित्र्यार्थम् । तत्र भवेन चरितार्थत्वात् । 'उपजानूपकर्णोपनीवेष्ठक्' ॥४।३।४०॥ एभ्यः प्रायभवे ठक् । अणोऽपवादः । औपजानुकः । औपकर्णिकः । औपनीविकः ।

'संभूते' ॥४।३।४१॥ संभावनाप्रमाणानतिरेकश्च संभूतशब्दार्थः। सप्तमीसमर्थात् संभूतार्थे यथास्वं प्रत्ययाः। स्रुघ्ने संभवति स्रौघ्नः। यस्तु स्रुघ्ने संभाव्यते स्रुघ्नप्रमाणाच्च नातिरिच्यते स एवमुच्यते। 'कोशाड्ढञ्' ॥४।३।४२॥ कोशे संभवति कौशेयं वस्त्रम्। वस्त्रे रूढोयं तेन क्रिमिखड्गकोशादौ न। 'कालात् साधुपुष्प्यत्पच्यमानेषु' ॥४।३।४३॥ सप्तमीसमर्थात् कालविशेषवाचिनः साध्वादिष्वर्थेषु यथास्वं प्रत्ययाः। हेमन्ते साधु हैमनं वस्त्रम्। वसन्ते पुष्प्यति वासन्ती लता। शरदि पच्यन्ते शारदाः शालयः। 'उप्ते च' ॥४।३।४४॥ सप्तमीसमर्थात् कालादुप्तेर्थे यथास्वं प्रत्ययः। हेमन्ते उप्यन्ते हैमना यवाः। योगविभाग उत्तरार्थः। 'आश्वयुज्या वुञ्' ॥४।३।४५॥ उक्तेर्थे। कालठञोपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः। अश्विनीपर्यायोश्वयुक्शब्दः। 'ग्रीष्मवसन्तादन्यतरस्याम्' ॥४।३।४६॥ उप्तेर्थे वुञ्। ऋत्वणोपवादः। ग्रैष्मम्। ग्रैष्मकम्। वासन्तम्। वासन्तकम्। 'देयमृणे' ॥४।३।४७॥ सप्तमीसमर्थात् कालाद्देयमित्यर्थे यथास्वमृणविषये। मासे देयमृणं मासिकम्। ऋणे किम्। मासे देया भिक्षा। 'कलाप्यश्वत्थयवबुसाद्वुन्' ॥४।३।४८॥ देयमृणमित्यर्थे। यदा मयूराः कलापिनः स्युः स कालः कलापी। तदा देयमृणं कलापकम्। यदाश्वत्थाः फलन्ति स कालोश्वत्थः। तत्र देयमृणमश्वत्थकम्। यदा यवबुसोत्पत्तिः स कालो यवबुसः। तत्र देयमृणं यवबुसकम्। 'ग्रीष्मावरसमाद्वुञ्' ॥४।३।४९॥ ग्रीष्मे देयमृणं ग्रैष्मकम्। ऋत्वणोपवादः। अवरसमायां देयमृणमावरसमकम्। कालठञोपवादः। 'संवत्सराग्रहायणीभ्यां ठञ् च' ॥४।३।५०॥ चाद्वुञ्। संवत्सरे देयमृणं सांवत्सरिकम्। सांवत्सरकम्। आग्रहायणिकम्। आग्रहायणकम्। वेति वक्तव्ये ठञ्ग्रहणं संधिवेलादिषु संवत्सरात् फलपर्वणोरिति पठ्यते तत्र फले ऋणत्वेन विवक्षिते अणं बाधित्वा ठञेव यथा

१. क्रुमि° Bc1, Do1, Do3, Do4. २. पुष्पति Do3, Do4. ३. प्रत्ययाः। Do4. ४. °पर्याय आश्वयुजीशब्दः Bo1, Do1, Do3, Do4.

तत्र भवः ॥४।३।५३॥

अत्रापि यथास्वमणादयः ॥ मथुरायां भवो माथुरः ।

दिगादिभ्यो यत् ॥४।३।५४॥

एभ्यो भवार्थे यत् ॥ दिश्यम् । वर्ग्यम् ॥

शरीरावयवाच्च ॥४।३।५५॥

अस्माद्भवार्थे यत् ॥ दन्त्यम् । कण्ठ्यम् ॥[4]

---

स्यादिति । 'व्याहरति मृगः' ॥४।३।५१॥ सप्तमीसमर्थात् कालात् व्याहरति मृग इत्यस्मिन्नर्थे यथास्वं प्रत्ययाः । निशायां व्याहरति नैशिकः। नैशः। मृगः किम् । निशायां व्याहरत्युलूकः । 'तदस्य सोढम्' ॥४।३।५२॥ प्रथमासमर्थात् कलात् षष्ठ्यर्थे यथास्वं प्रत्ययाः । यत् तत् प्रथमासमर्थं सोढं चेत्तद्भवति । निशा सहचरितमध्ययनं निशा । तत्सोढमस्य नैशिकश्छात्रः । नैशः ।

तत्र । अत्रेति । भवो नाम सत्ता न जन्म । सप्तमीसमर्थात् प्रातिपदिकादिति ज्ञेयम् । 'तत आगतः' इति यावत् 'तत्र भवः' इत्यधिकारः ।

दिगादि । अणश्छस्य चापवादः । दिश् । वर्ग । पूग । गण । पक्ष । धायु । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुख । जघन । मेष । यूथ । उदकात् संज्ञायाम् । उदक्या । न्याय । वंश । अनुवंश । वेश । काल । आकाश । मुखजघनयोः सेनामुखाद्यशरीरावयवार्थः पाठः ।

शरीरा । दन्त्यम् । कण्ठ्यमिति । दन्ते कण्ठे च भवम् । प्रसङ्गात् स्पष्टत्वात् त्यक्तं सूत्रद्वयं व्याख्यायते । 'ये च तद्धिते'

---

१. ससम्यन्तात् भवार्थे यथास्वम् C, B2. २. यत्स्याद्भवार्थे C. ३. यत् स्यात् B2. ४. After this P has जिह्वामूलाङ्गुलेश्छः ॥४।३।६२॥ आभ्यां छः स्याद्भवार्थे । जिह्वामूलीयम् । अङ्गुलीयम् ।. ५. Dc2 has धाय्या before it.

अध्यात्मादेष्ठञिष्यते ॥ अध्यात्मे भवमाध्यात्मिकम् । अनुशतिकादित्वादुभयपदवृद्धिः । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम्[1] । इत्यादि ।

॥६।१।६१॥ यादौ तद्धिते परे[2] शिरसः शीर्षन्नादेशः । शीर्षण्यः स्वरः । 'ये चाभाव—' इति प्रकृत्या वा । केशेषु । शीर्षण्याः केशाः शिरस्या वा । 'अचि शीर्षः' ॥६।१।६२॥ अजादौ तद्धिते शिरसः शीर्षादेशः । हस्तिशिरसोपत्यं हास्तिशीर्षिः । स्थूलशिरस इदं स्थौलशीर्षम् । अध्यात्मादेरिति । अध्यात्मे भवमिति । आत्मन्यधि अध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' इति टच् । आधिदैविकम् । आधिभौतिकमिति । अधिदेवे भवमधिभूते भवम् । पूर्ववदव्ययीभावः । ततष्ठञ् । ऐहलौकिकमिति । इह लोके भवम् । अध्यात्मादिराकृतिगणः । इत्यादीत्यादिना वार्तिकोक्ताः संगृह्यन्ते । तथोक्तम् ।

'समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वं दमाच्च देहाच्च लोकोत्तरपदस्य च ॥
मुखपार्श्वतसोरीयः कुग् जनस्य परस्य च ।
ईयः कार्योथ मध्यस्य मण्मीयौ प्रत्ययौ तथा ।
मध्यो मध्यं दिनण् चास्माल्लुक् स्थाम्नो अजिनात्तथा[3]' ।

इति । उदाहरणानि । समाने भवं सामानिकम् । सामानग्रामिकम् । और्ध्वदमिकम् । और्ध्वदेहिकम् । पारलौकिकम् । मुखतीयम् । पार्श्वतीयम् । जनकीयम् । परकीयम् । मध्यीयम् । माध्यमः । मध्यमीयम् । मध्ये भवं मध्यन्दिनम् । अश्वत्थामा । वृकाजिनम् । 'स्थाम्नोकारः'

---

१. C, D₁, D₂ drop पारलौकिकम्; D₃ has पारलौकिकम् । ऐहलौकिकमित्यादि ।. २. तद्धिते परे Bo₁. ३. For स्थाम्नो…लुक्—उभयत्राणो लुक् Bo₁, Do₃, Do₄.

इत्यप्रत्ययः । उत्तरत्र चाणो लुक् । स्पष्टत्वात् त्यक्तान्यष्टादश । 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' ॥४।३।५६॥ दृतौ भवं दार्तेयम् । कौक्षेयम् । कालशेयम् । वास्तेयम् । आस्तेयम् । आहेयम् । कुक्षेः शरीरावयवत्वाद्यति प्राप्ते धूमादित्वाद्वुञि च शेषेभ्योऽणि । अस्तीति निपातो न तिङन्तः । 'ग्रीवाभ्योऽण् च' ॥४।३।५७॥ चात् ढञ् । यतोऽपवादः । ग्रीवायां भवं ग्रैवं ग्रैवेयम् । 'गम्भीराञ् ञ्यः' ॥४।३।५८॥ अणोऽपवादः । गाम्भीर्यम् । बहिर्देवपञ्चजनाच्चेति वक्तव्यम् । बाह्यम् । दैव्यम् । पाञ्चजन्यम् । चातुर्मास्य ऋतौ । अन्यत्र चातुर्मासः[1] । 'द्विगोर्लुक् —' इति ठञो लुक् । 'अव्ययीभावाच्च' ॥४।३।५९॥ अणोऽपवादः । परिमुखादेरेवाव्ययीभावात् । पारिमुख्यम् । अन्यत्र न । औपकुलम् । परिमुख । परिहनू[2] । पर्योष्ठ । पर्युलूखल । परिसिरि[3] । उपसीर । उपस्थूल । उपकलाप । अनुपथ । अनुगङ्ग । अनुतिल । अनुसीर[4] । अनुमाष । अनुयव । अनुयूप[5] । अनुवंश ॥ 'अन्तःपूर्वपदाट्ठञ्' ॥४।३।६०॥ अव्ययीभावात् । आन्तर्गेहिकम् । अव्ययीभावात् किम् । अन्तःकरणे भव आन्तःकरणः ॥ 'ग्रामात् पर्यनुपूर्वात्' ॥४।३।६१॥ ठञ् । अव्ययीभावादित्येव । पारिग्रामिकः । आनुग्रामिकः ॥ 'जिह्वामूलाङ्गुलेश्छः' ॥४।३।६२॥ यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ॥ 'वर्गान्ताच्च' ॥४।३।६३॥ कवर्गीयम् ॥ 'अशब्दे यत्खावन्यतरस्याम्' ॥४।३।६४॥ वर्गान्तात् शब्दादन्यस्मिन् प्रत्ययार्थे पक्षे छः । वासुदेववर्ग्यः । वासुदेववर्गीणः । वासुदेववर्गीयः । शब्दे तु कवर्गीयो वर्णः । 'कर्णललाटात् कनलंकारे' ॥४।३।६५॥ तत्र भवेऽलंकारे वाच्ये । यतोऽपवादः । कर्णिका । ललाटिका । अलंकारे किम् । कर्ण्यम् । ललाट्यम् । 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः' ॥४।३।६६॥ व्याख्यातव्यस्य नाम व्याख्यातव्य-

१. चतुर्मासः । Bc₁, Dc₂, Dc₃. २. परिहनु Dc₃. ३. परिसार । उपसार । Bc₁, Dc₁, Dc₃, Dc₄. ४. अनुसित Bc₁, Dc₃, Dc₄. ५. अनुसूय Bc₁, Dc₃, Dc₄.

नाम तस्मात् तस्य व्याख्यानमित्यर्थे यथास्वं प्रत्ययाः । चात् तत्र भवेपि । सुपां व्याख्यानो ग्रन्थः सौपः । तैङः । सुप्सु भवं सौपम् । व्याख्यातव्यनाम्नः किम् । पाटलिपुत्रस्य व्याख्यानी सुकोशला । पाटलिपुत्रं सुकोशलया व्याख्यायते एवंसंनिवेशमिति । न तु पाटलिपुत्रशब्दो व्याख्यातव्यनाम । भवव्याख्यानयोरयं युगपदधिकारोपवादविधानार्थः । 'बह्वचोन्तोदात्ताट्ठञ्' ॥४।३।६७॥ बह्वचो व्याख्यातव्यनाम्नोन्तोदात्तात् ठञ् स्यात् भवव्याख्यानयोरर्थयोः । षात्वणात्विकम् । समासस्वरेणान्तोदात्तः । बह्वचः किम् । द्व्यचष्ठकं वक्ष्यति । एकाच् प्रत्युदाह्रियते । सौपम् । अन्तोदात्तात् किम् । संहितायां भवं तस्या व्याख्यानं वा सांहितम् । संहिता गतिस्वरेणाद्युदात्ता । 'क्रतुयज्ञेभ्यश्च' ॥४।३।६८॥ भवव्याख्यानयोष्ठञ् । अनन्तोदात्तार्थ आरम्भः । क्रतुभ्यः । आग्निष्टोमिकः । यज्ञेभ्यः । पाकयज्ञिकः । क्रतुभ्य इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योपि यथा स्यात् । पाञ्चौदनिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । 'अध्यायेष्वेवर्षेः' ॥४।३।६९॥ ऋषिसहचरितेषु ग्रन्थेषु साहचर्यादृषिशब्दा वर्तन्ते । तेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोष्ठञ् स्यात् । अध्यायेष्वेव प्रत्ययार्थविशेषणेषु । वासिष्ठस्य व्याख्यानम् । तत्र भवो वासिष्ठिकोध्यायः । अध्यायेषु किम् । वासिष्ठी ऋक् । 'पौरोडाशपुरोडाशात् ष्ठन्' ॥४।३।७०॥ भवव्याख्यानयोः । पुरोडाशाः पिष्टपिण्डास्तेषां संस्कारको मन्त्रः पौरोडाशः । तस्या व्याख्यानस्तत्र भवो वा पौरोडाशिकः । पौरोडाशिकी । षित्त्वात् ङीष् । अस्मात् बह्वचोन्तोदात्ताट्ठञि प्राप्ते । पुरोडाशसहचरितो मन्त्रः पुरोडाशः । अस्मान्मध्योदात्तादणि पुरोडाशिकः । पुरोडाशिकी[1] । 'छन्दसो यदणौ' ॥४।३।७१॥ भवव्याख्यानयोः । द्व्यचष्ठकि प्राप्ते । छन्दस्यः । छान्दसः । 'द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्' ॥४।३।७२॥ भवव्याख्यानयोः । ठञणोरपवादः । द्व्यचः । ऐष्टिकः । पाशुकः । ऋकारान्तात् । चातुर्होतृकः । ब्राह्मणः । ब्राह्मणिकः । एषु

१. पुरोडाशः Bc1, Do4. २. After it—ष्टित्वात् ङीष् । Do8. ३. पाचकः । Do4.

तत आगतः ॥४।३।७४॥

पञ्चम्यन्तादागतेऽर्थे यथास्वमणादयः स्युः ॥ मथुराया आगतो माथुरः ।

ठगायस्थानेभ्यः ॥४।३।७५॥

स्वामिभागोत्पत्तिस्थानार्थेभ्यष्ठक् स्यादागतेऽर्थे ॥ आपणिकः॥[2]

---

ठञः । ऋक्[1] । आर्चिकः । अत्राणः । प्रथम । प्राथमिकः । अध्वर । आध्वरिकः । पुरश्चरण । पौरश्चरणिकः । नामाख्यातग्रहणं संघात-विगृहीतार्थम् । नामाख्यातिकः । नामिकः । आख्यातिकः । 'अणृगयनादिभ्यः' ॥४।३।७३॥ भवव्याख्यानयोः । ठञादेरपवादः । आर्गयनः[3] । अण्ग्रहणं वृद्धादन्तोदात्तादण्बाधकस्य छस्य बाधके ठञि पुनर्वचनेन बाधिते छः स्यात् तद्बाधार्थम् । पादव्याख्यानः । ऋगयन । पादव्याख्यान । छन्दोमान[4] । छन्दोभाषा । छन्दोविचिति । छन्दोविजिति[5] न्याय । पुनरुक्त । निरुक्त । व्याकरण । निगम । वास्तुविद्या । अङ्गविद्या । क्षत्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त । निमित्त । उपनिषद् । शिक्षा ।

ततः । स्रुघ्नादागच्छन् वृक्षमूलादागत इत्यत्रामुख्यान्न स्यात् प्रत्ययः । 'ततः' इति 'तद्गच्छति—' इति यावदनुवर्तते । 'आगतः' इति 'प्रभवति' इति यावत् ।

ठगाय । अणोपवादः । छं तु परत्वाद्बाधते । बहुवचनं स्वरूप-विधिनिरासार्थम् । स्पष्टत्वात् त्यक्तानि त्रयोदश । 'शुण्डिकादिभ्योऽण्' ॥४।३।७६॥ तत आगत इत्यर्थे । अण्ग्रहणमुदपानादण्बाधक-स्योत्साद्यञो बाधनार्थम् । शुण्डिकात् शुण्डिकाया वा आगतः शौण्डिकः । शुण्डिक । कृकण । पर्ण । स्थण्डिल । उदपान । उपल । तीर्थभूमि[6] । तृण । 'कृकणपर्णाद् भारद्वाजे' इति

---

१. Dropped $D_4$. २. Before it—आपणादागतः P. ३. आर्गयणः । $Bc_3$, $Dc_4$, $Dc_3$. ४. छन्दोगान $Bc_1$, $Bc_3$, $Dc_4$, $Dc_3$. ५. छन्दोविजित $Bc_1$, $Dc_3$, $Dc_1$ have छन्दोविचित. ६. तीर्थ । भूमि $Bc_1$, $Bc_3$, $Dc_4$, $Dc_1$.

छस्य तीर्थाद्भूमादिवुञोन्येभ्यः आयस्थानठकोपवादः । 'विद्यायोनिसंबन्धेभ्यो वुञ्' । ४।३।७७।। तत आगत इत्यर्थे । अणोपवादः । छं तु परत्वाद्बाधते । औपाध्यायकः । पैतामहकः । 'ऋतष्ठञ्' ।।४।३।७८।। विद्यायोनिसंबन्धेभ्य ऋदन्तेभ्यस्तत आगतेर्थे ठञ् । वुञोपवादः । हौतृकम् । मातृकम् । 'पितुर्यच्च' ।।४।३।७९।। चात् ठञ् । तत आगते । पित्र्यम् । पैतृकम् । 'गोत्रादङ्कवत्' ।।४।३।८०।। अपत्यमात्रं गोत्रम् । अङ्कग्रहणेन तस्येदमर्थसामान्यं लक्ष्यते । ततश्च गोत्रात्तस्येदंवत्प्रत्ययः स्यादिति सूत्रार्थः । तथा च 'गोत्रचरणाद्वुञ्' 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' । इति तस्येदमधिकारे गोत्राद्विधीयमानयोर्वुञणोरयमतिदेशः । यथा औपगवानामङ्क औपगवकः । एवमौपगवेभ्य आगतोपि । एवं नाडायनकः । वैदः । दाक्षः । 'हेतुमनुष्येभ्योन्यतरस्यां रूप्यः' ।।४।३।८१।। हेतुभ्यः । समादागतं समरूप्यम् । समीपम् । गहादित्वाच्छः । मनुष्यग्रहणमहेत्वर्थम् । देवदत्तरूप्यम् । दैवदत्तम् । 'मयट् च' ।।४।३।८२।। हेतुमनुष्येभ्यस्तत आगतेर्थे । सममयम् । देवदत्तमयम् । टो ङीबर्थः । सममयी । योगविभागो यथासंख्यनिरासार्थः । 'प्रभवति' ।।४।३।८३।। पञ्चम्यन्तादत्रार्थे यथास्वम् । हिमवतः प्रभवति प्रकाशते प्रथमत उपलभ्यते हैमवती गङ्गा । 'विदूराञ्ञ्यः' ।।४।३।८४।। विदूरात् प्रभवति वैदूर्यो मणिः । ननु[१] असौ बालवायात् प्रभवति विदूरे तु संस्क्रियते इति चेत् सत्यम् । बालवायस्यापि विदूरमिति संज्ञा । अथवा बालवायस्य विदूर आदेशः । 'तद्गच्छति पथिदूतयोः' ।।४।३।८५।। द्वितीयासमर्थाद् गच्छतीत्यर्थे यथास्वं प्रत्ययाः यो गच्छति स पन्था दूतो वा स्यात् । स्रुघ्नं गच्छति स्रौघ्नः । पन्था दूतो वा । अनयोः किम् । स्रुघ्नं गच्छति सार्थः । 'अभिनिष्क्रामति द्वारम्' ।।४।३।८६।। स्रुघ्नमभिनिष्क्रामति स्रौघ्नम् । कान्यकुब्जद्वारम् । निष्क्रमणसाधनमपि द्वारं कर्तृत्वेन विवक्ष्यते । द्वारं किम् । स्रुघ्नमभिनिष्क्रामति जनः । 'अधिकृत्य कृते ग्रन्थे'

१. ननु dropped $Dc_2$, $Dc_3$, $Dc_4$.

**सोस्य निवासः ॥४।३।८९॥**

प्रथमान्तान्निवासोपाधिकात् षष्ठ्यर्थे यथास्वं प्रत्ययः ॥ मथुरा निवासोस्य माथुरः ।

---

॥४।३।८७॥ द्वितीयान्ताद्यथाविहितमधिकृत्य कृतो ग्रन्थ इत्यर्थे । सुभद्रामधिकृत्य कृतो ग्रन्थ सौभद्रः । आख्यायिकाभ्यः परस्य प्रत्ययस्य बहुलं लुप् । वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता । उर्वशी । न च स्यात् । भैमरथी । अनाख्यायिकाभ्योपि । जानकीहरणम् । रुक्मिणीहरणम् । 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' ॥४।३।८८॥ अधिकृत्य कृते ग्रन्थे । अणोपवादः । शिशुक्रन्दीयः । यमसभीयः । द्वन्द्वात् । वाक्यपदीयम् । दैवासुरम् । गौणमुख्यम् । राक्षोसुरम् । अत्राण् इष्यते । इन्द्रजननादिभ्यः । इन्द्रजननीयम् । सीतान्वेषणीयम् । आकृतिगणोयम् ।

**सोस्य** । यत्र संप्रत्युष्यते स निवसन्त्यस्मिन्निति निवासो देशः । स्पष्टत्वात् त्यक्तान्येकादश । 'अभिजनश्च' ॥४।३।९०॥ प्रथमासमर्थादभिजनोपाधिकात् षष्ठ्यर्थे यथास्वं प्रत्ययाः । अभिजनः पूर्वबान्धवाः । तत्संबन्धाद्देशोप्यभिजन इत्यर्थः । यत्र पूर्वैरुषितं स देशोभिजन इत्यर्थः । स्रुघ्नोभिजनोस्य स्रौघ्नः । योगविभाग उत्तरत्राभिजनस्यैव संबन्धार्थः । 'आयुधजीविभ्यश्छः पर्वते' ॥४।३।९१॥ पर्वतवाचिनः प्रथमासमर्थादभिजनात् षष्ठ्यर्थे छः स्यादायुधजीविनोभिधातुम् । हृद्रोलः पर्वतोभिजनो येषामायुधजीविनां ते हृद्रोलीयाः । लोहितगिरीयाः । आयुधजीविभ्यः किम् । ऋक्षोदः पर्वतोभिजन एषां ब्राह्मणानां त आर्क्षोदाः । पर्वतात् किम् । सांङ्काश्यका आयुधजीविनः ।

---

१. अणादयः स्युः C, D5 ; प्रत्ययाः D4, D1 ; प्रत्ययः स्यात् B2. २. लक् Dc4, Dc3. ३. स च Bc1. ४. अभिजनाः Bc1. ५. उच्यते Dc3, Dc4. ६. From यत्र…इत्यर्थः dropped Dc2. ७. सङ्काश्यका Bc2.

'शण्डिकादिभ्यो ञ्यः' ॥४।३।९२॥ सोस्याभिजन इत्यत्र विषये। अणोपवादः। शाण्डिक्यः। शाण्डिक। सर्वसेन। सर्वकेश। शक। शङ्कु। शट। रंक। बोध। 'सिन्धुतक्षशिलादिभ्योणञौ' ॥४।३।९३॥ सिन्ध्वादिभ्योण् तक्षशिलादिभ्योञ् स्यात् सोस्याभिजन इत्यर्थे। सैन्धवः। सिन्धु। वर्णु। गधार। मधुमत्। कम्बोज। साल्व। कश्मीर। किष्किन्धा। गब्दिका। उरस्। यत्र कच्छादिषु पठ्यन्ते तेभ्यस्तत एवाणि सिद्धे मनुष्यवुञो बाधनार्थं वचनम्। गन्धार-किष्किन्धादीनामवृद्धादपि इति जनपदवुञि प्राप्ते वचनम्। तक्षशिला-दिभ्यः। ताक्षशिलः। तक्षशिला। वत्सोद्धरणा। कौमेदुर। काण्डधारण। ग्रामणी। सुमङ्गल। कंस। किन्नर। संकुचित। सिंहकर्ण। सिंह। क्रोष्टुकर्ण। बर्बर। अवसान। वृद्धाच्छे प्राग्दीव्यतेणि। 'तुदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः' ॥४।३।९४॥ तूद्यादिभ्यो यथासंख्यं ढगादयः सोस्याभिजन इत्यर्थे। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः। 'भक्तिः' ॥४।३।९५॥ भज्यते सेव्यत इति भक्तिः। कर्मणि क्तिन्। प्रथमासमर्थात् भक्त्युपाधिकात् षष्ठ्यर्थे यथास्वम्। स्रुघ्नो भक्तिरस्य स्रौघ्नः। 'अचित्तादेशकालाट्ठक्' ॥४।३।९६॥ सोस्य भक्तिरित्यनुवर्तते। अणोपवादः। वृद्धाच्छं परत्वाद्बाधते। अपूपो भक्तिरस्य आपूपिकः। अचित्तात् किम्। देवदत्तः। अदेश-कालात् किम्। स्रौघ्नः। ग्रैष्मः। 'महाराजाट्ठञ्' ॥४।३।९७॥ महाराजो भक्तिरस्य माहाराजिकः। प्रत्ययान्तकरणं ञित्स्वरेणाद्युदात्तार्थम्। 'वासुदेवार्जुनाभ्यां वुन्' ॥४।३।९८॥ वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः। वासुदेवोत्र देवता। क्षत्रियात्तु 'गोत्रक्षत्रियाख्येभ्यः—'

१. Before it—सर्वशर्कर Bc1, Bc3, Dc3, Dc4. २. शत Dc4. ३. शभ Bc3. ४. कर Bc3, Dc3, Dc4. ५. शाङ्किक Dc3, Dc4. ६. सुसकल Bc1; सुशकल Bc3, Dc3, Dc4. ७. सिंहकोष्ठ। कर्णकोष्ठ Bc1, Dc3.

इति वुञ् । 'गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्' ॥४।३।९९॥ अणोपवादः । वृद्धाच्छं पदत्वाद्बाधते । ग्लौचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । क्षत्रियाख्येभ्यः । नाकुलकः । आख्याग्रहणं प्रसिद्धक्षत्रियपरिग्रहार्थम् । तेन विद्वान् क्षत्रियो भक्तिरस्येत्यादौ न । न हि विद्वच्छब्दः क्षत्रिये प्रसिद्धः । बहुलग्रहणात् क्वचिन्न । पाणिनो भक्तिरस्य पाणिनीयः । पौरवीयः । 'जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने' ॥४।३।१००॥ ये जनपदिनो जनपदस्वामिनः क्षत्रिया बहुवचने जनपदेन एकशब्दाः स्युस्तेषां सर्वं प्रत्ययः[1] प्रकृतिश्च जनपदवत् स्यात् सोस्य भक्तिरित्यस्मिन् विषये 'जनपदतदवध्योश्च' इत्यत्र प्रकरणे ये प्रत्यया उक्तास्ते जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते । यथा अङ्गा जनपदो भक्तिरस्य आङ्गकः ।[2] 'जनपदतदवध्योश्च' इति वुञ् । सर्वग्रहणं प्रकृत्यतिदेशार्थम् । स च द्व्येकयोरतिदेशं प्रयोजयति । वृद्धिनिमित्तेषु वुञादिषु विशेषो नास्तीति मद्रवृज्योः कनि विशेषः । मद्रस्यापत्यम् । 'द्व्यञ्मगधकलिङ्गसूरमसादण्' । माद्रः । वृजिशब्दादपि 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' । वार्ज्यः । माद्रो वार्ज्यो वा भक्तिरस्य मद्रकः वृजिकः । प्रकृतेरल्पतादिश्यते । जनपदिनां किम् । पाञ्चाला[3] ब्राह्मणा भक्तिरस्य पाञ्चालः[4] । बहुवचने किम् । एकत्वद्वित्वयोरसरूपादपि यथा स्यात् । आङ्गः आङ्गौ वा भक्तिरस्य आङ्गकः[5] । समानशब्दानां किम् । अनुखण्डो जनपदस्तस्य पौरवो राजा स भक्तिरस्य पौरवीयः ।

१. सर्वं प्रत्ययाः Dc3. २. After it—तद्वदङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः । Dc3, Dc4. ३. पञ्चाला Dc3. ४. पञ्चालः Dc3. ५. आङ्गिकः Dc4.

## तेन प्रोक्तम् ॥४।३।१०१॥

तृतीयान्तात्[1] प्रोक्तेऽर्थे[2] यथास्वमणादयः[3] स्युः[4] ॥ मनुना प्रोक्तो मानवो धर्मः ।

तेन । प्रकर्षेणोक्तं प्रोक्तं न तु कृतम् । स्पष्टत्वात् त्यक्तानि चतुर्दश । 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' ॥४।३।१०२॥ अणोपवादः । अयं च छण् छन्दस्याभिधेय इष्यत इति 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्तयितव्यमाहुः । तित्तिरिणा प्रोक्तमधीयत तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । छन्दो ब्राह्मणानीत्यध्येतृवेदितृविषयता । छन्दसि वाच्ये किम् । तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न । 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' ॥४।३।१०३॥ छस्यापवादः । प्रोक्तार्थे । काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः । कौशिकिनः । छन्दोधिकारविहितानां च तद्विषयतेष्यत[5] इति कल्पस्यापि तद्विषयता । 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्त्यम्[6] । छन्दस्यभिधेय एव । काश्यपीयं शास्त्रम्[7] । ऋषिभ्यां किम् । अनृषिणा काश्यपेन प्रोक्तः कल्पः काश्यपीयः । ण उत्तरवृद्ध्यर्थः । 'कलापिवैशम्पायनान्तेवासिभ्यश्च' ॥४।३।१०४॥ णिनिः । तेन प्रोक्ते । अणोपवादः । छं तु परत्वाद्बाधते । कलाप्यन्तेवासिनश्चत्वारः हरिद्रुः[8] छगली तुम्बुरुः[9] उलप इति । वैशम्पायनान्तेवासिनो नव ते च चरक इति वैशम्पायनस्य संज्ञा तत्संज्ञया चरका इत्युच्यन्ते । आलम्बिः । पलिङ्गः । कमलः । एते त्रयः प्राच्याः । ऋचाभः । आरुणिः[10] । ताण्ड्यः । एते त्रयो मध्यमाः । श्यामायनः[11] । कठः । कलापीति एते त्रय उदीच्याः । अत्र

१. तेनेति before it in $B_1$. २. प्रोक्तार्थे C, $D_1$. ३. $D_1$ drops यथास्वम्. ४. स्युः dropped $B_1$, $B_2$, $D_1$, $D_4$. ५. °यतेत्युच्यत $Dc_2$. ६. °त्रानुवृत्तः $Dc_2$. ७. च शास्त्रम् $Bc_1$. ८. हरिद्रु $Bc_1$. ९. तुम्बुरु $Bc_1$, १०. आरुणः $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ११. श्यामानयः $Dc_2$, $Dc_4$.

साक्षाच्छिष्या गृह्यन्ते न शिष्यशिष्याः। कलापिखाण्डायनग्रहणात्। तथा हि वैशम्पायनशिष्यः कलापीति तच्छिष्या वैशम्पायनशिष्या एवेति किं कलापिग्रहणेन। तथा वैशम्पायनशिष्यः कठः। तच्छिष्यः खाण्डायनः। तस्य किं शौनकादिपाठेन। तदेतत्साक्षाच्छिष्यग्रहणे लिङ्गम्। कलापिशिष्यास्तावत्। हरिद्रुणा प्रोक्तमधीयते हरिद्रविणः। तौम्बुरविणः। औलपिनः। छगलिनो ढिनुकं वक्ष्यति। वैशम्पायनशिष्याः। आलम्बिनः। पालिङ्गिनः। कामलिनः। आर्चाभिनः। आरुणिनः। ताण्डिनः। कठाल्लुकं वक्ष्यति। कलापिनश्चाणम्। 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ॥४।३।१०५॥ तृतीयान्ताद् णिनिः स्यात् पुराणेन चिरन्तनेन ऋषिणा प्रोक्तानि चेद्ब्राह्मणानि कल्पाश्च भवन्ति। ब्राह्मणेषु तावत्। भाल्लवेन प्रोक्तं ब्राह्मणमधीयते भाल्लविनः। ऐतरेयिणः। कल्पेषु। पैङ्गी कल्पः। न चायं योगश्छन्दोधिकारेनुवर्तते इति कल्पेषु तद्विषयता न। पुराणप्रोक्तेषु किम्। याज्ञवल्क्यानि ब्राह्मणानि। आश्मरथः कल्पः। याज्ञवल्क्यादयोर्वाचीना इत्याख्यानेषु वार्ता। प्रतिपदं ब्राह्मणेषु यः प्रत्ययस्तस्य तद्विषयता विधीयते इति कृत्वा याज्ञवल्क्यानीत्यत्र तद्विषयता न। न हि याज्ञवल्क्यशब्दात् कण्वादिपाठेन विधीयमानोण् प्रतिपदं ब्राह्मणे विधीयते। 'शौनकादिभ्यश्छन्दसि' ॥४।३।१०६॥ णिनिस्तेन प्रोक्तमित्यर्थे छन्दसि वाच्ये। छाणोरपवादः। शौनकिनः। काठशाठिनः। छन्दसि वाच्ये किम्। शौनकीया शिक्षा। शौनक। वाजसनेय। शार्ङ्गरव। शापेय। शाष्पेय। खाण्डायन। स्तम्भ। स्कन्ध। देवदर्शन। रज्जुभार। रज्जुकण्ठ। कठशाठ। कषाय। तल। साङ्गरव। पुरुषाशक। 'कठचरकाल्लुक्' ॥४।३।१०७॥ प्रोक्तप्रत्ययस्य लुक्। कठेन

१. °मयमधी° Dc3. २. यः प्रत्ययस्तस्य before it Bc1, Dc3. ३. अश्मरथ्यः Bc1, Dc1, Dc4. ४. याज्ञवल्क्यानि ब्राह्मणानीत्यत्र Dc4. ५. Before it—तलवकार and after it—अश्वयेव Dc3, Bc1; before it—तलवकार Dc4.

प्रोक्तमधीयते कठाः। वैशम्पायनान्तेवासित्वाण्णिनिः। तस्य लुक्। ततः 'तदधीते—' इत्यण्। तस्य प्रोक्ताल्लुक्। चरकेण प्रोक्तमधीयते। प्रोक्तप्रत्ययस्य लुक्। प्रोक्तेण्। पूर्ववल्लुगादि। छन्दस्यभिधेये एव। काठाः श्लोकाः। 'कलापिनोण्' ॥४।३।१०८॥ वैशम्पायनान्तेवासित्वात् प्राप्तस्य णिनेरपवादः। कलापिना प्रोक्तमधीयते कालापाः। 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापि-कुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुप—संख्यानमिति टिलोपः। यथाप्राप्तमिति सिद्धेण्ग्रहणमधिकविधानार्थम्। तेन माथुरादेर्वृद्धादप्यण् स्यात्। माथुरेण प्रोक्ता माथुरी वृत्तिरित्यादि सिध्यति। 'छगलिनो ढिनुक्' ॥४।३।१०९॥ कलापिशिष्यत्वात् प्राप्तस्य णिनेरपवादः। छगलिना प्रोक्तमधीते छागलेयिनः। 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' ॥४।३।११०॥ णिनिरनुवर्तते। न ढिनुक्। भिक्षुसूत्रे प्रत्ययार्थोपाधौ पाराशर्यात्। नटसूत्रे शिलालि-शब्दात्। अनयोश्छन्दस्त्वमुपचारात् ततस्तद्विषयता। पाराशर्येण प्रोक्तं सूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः। अन्यत्र पाराशरम्। शैलालम्। 'कर्मन्दकृशाश्वादिनिः' ॥४।३।१११॥ आभ्यामिनिः स्याद् भिक्षुनटसूत्रयोः। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः। अन्यत्र कार्मन्दम्। कार्शाश्वम्। 'तेनैकदिक्' ॥४।३।११२॥ तृतीयान्तात् एकदिगित्यर्थे यथास्वम्। सुदाम्ना समानदिक् सौदामिनी। तेनेति प्रकृतेर्ग्रहणं छन्दोधिकार-निवृत्त्यर्थम्। 'तसिश्च' ॥४।३।११३॥ तेनैकदिगिति विषये तसिश्च प्रत्ययः स्यात्। सुदामतः। स्वरादित्वादव्ययत्वम्। 'उरसो यच्च' ॥४।३।११४॥ चात् तसिः। उरसा एकदिक् उरस्यः। उरस्तः। 'उपज्ञाते' ॥४।३।११५॥ सदेव विनोपदेशं ज्ञातमुपज्ञातम्। अस्मिन्नर्थे तृतीयान्ताद्यथास्वम्। पाणिनिनोपज्ञातं पाणिनीयम्।

१. From प्रोक्त to लुक् omitted Dc2. २. खण्ड for शिखण्डि Bo1.

**कृते ग्रन्थे ॥४।३।८७॥**

तृतीयान्तात् कृतेऽर्थेऽणादयः स्युर्ग्रन्थे वाच्ये । वररुचिना कृतो वाररुचो ग्रन्थः ।

**तस्येदम् ॥४।३।१२०॥**

षष्ठ्यन्तादिदमर्थेऽणादयः स्युः ॥ उपगोरिदमौपगवम् । दैवम् ।

---

कृते । कृतमित्युत्पादितमुच्यते । स्पष्टत्वात् त्यक्तं सूत्रत्रयम् । 'संज्ञायाम्' । ४।३।११७॥ तृतीयान्तात् कृतेऽर्थे यथास्वम् । माक्षिकम् । सारघम् । मधुसंज्ञा । 'कुलालादिभ्यो वुञ्' ॥४।३।११८॥ तेन कृतमित्यर्थे संज्ञायाम् । कुलालेन कृतं कौलालकम् । कुलाल । वरुढ । चण्डाल । निषाद । कर्मार । सेना । देवराज । परिषद् । वधू । कुरु । अनडुह । ब्रह्मन् । कुम्भकार । श्वपाक । 'क्षुद्राभ्रमरवटरपादपादञ्' ॥४।३।११९॥ तेन कृतं संज्ञायाम् । अणोपवादः । स्वरे विशेषः । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ।

तस्येदम् । यथाविहितमणादयो घादयश्च स्युरित्यर्थः । तस्येत्यत्र षष्ठ्यर्थमात्रं तत्संबन्धिमात्रं च विवक्षितम् । लिङ्गसंख्याप्रत्यक्षपरोक्षाद्यविवक्षितम् । उपगोः समीपमित्यादौ त्वनभिधानान्न । संवहेस्तु रणिट् च । संवोढुः स्वं सांवहित्रम् । सिद्ध एवात्राण् इडर्थमुपसंख्यानम् । अग्नीधः शरणे रण् भसंज्ञा च । आग्नीध्रम् । समिधामाधाने षेण्यण् । सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ।

---

१. B₁ drops it. २. ग्रन्थो वाररुचः । D₅. ३. तस्येति before it in B₁, D₅, D₁; षष्ठीसमर्थात् D₅. ४. कृतार्थे Dc₄, Dc₃. ५. ब्रह्मन् Bc₁.

रथाद्यत् ॥४।३।१२१॥

रथस्येदं रथ्यम् ।

---

रथात् । अणोपवादः । रथ्यमिति चक्रं युगं वा । रथाङ्ग एवेष्यते । नान्यत्र । अनभिधानात् । रथसीताहलेभ्यो यद्विधौ तदन्तविधिरुपसंख्यायते । परमरथ्यम् । उत्तमरथ्यम् । स्पष्टत्वात् त्यक्तानि द्वादश । 'पत्रपूर्वादञ्' ॥४।३।१२२॥ पतन्त्यनेनेति पत्रं वाहनम् । तत्पूर्वादर्थादञ् स्यात् तस्येदमित्यर्थे । यतोपवादः । आश्वरथं चक्रम् । औष्ट्ररथम् । 'पत्राध्वर्युपरिषदश्च' ॥४।३।१२३॥ पत्रं वाहनं तद्वाचिनः प्रातिपदिकादध्वर्युपरिषद्भ्यां चाञ् स्यात् । अणोपवादः । पत्राद्वहनीये । अश्वस्येदं वहनीयमाश्वम् । आध्वर्यवम् । पारिषदम् । 'हलसीराट्ठक्' ॥४।४।८१॥ अणोपवादः । हलस्येदं हालिकम् । सैरिकम् । 'द्वन्द्वाद्वुन् वैरमैथुनिकयोः' ॥४।३।१२५॥ द्वन्द्वाद्वुन् स्याद्वैरे विवहने च प्रत्ययार्थविशेषणे । छं तु परत्वाद्बाधते । वैरे तावत् काकोलूकिका । मैथुनिकायाम् । अत्रिभारद्वाजिका । वैरे देवासुरादिभ्यो निषेधो वाच्यः । दैवासुरम् । राक्षोसुरम् । 'गोत्रचरणाद्वुञ्' ॥४।३।१२६॥ अणोपवादः । छं तु परत्वाद्बाधते । गोत्रात् ग्लौचुकायनकम् । औपगवकम् । चरणाद्धर्माम्नाययोरिष्यते । काठको धर्म आम्नायो वा । 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' ॥४।३।१२७॥ अञन्तायञन्तादिञन्तात् प्रातिपदिकादण् स्यात् सङ्घादिषु । प्रत्ययार्थविशेषणेषु । तस्येदंविषये । वुञोपवादः । घोषग्रहणमप्यत्र कार्यम् । तेन वैषम्याद्यथासंख्यं न । अञन्तात् । वैदः सङ्घोऽङ्को लक्षणं घोषो वा । यञन्तात् गार्गः सङ्घोऽङ्को लक्षणं घोषो वा । इञन्तात् । दाक्षः सङ्घोऽङ्को लक्षणं घोषो वा । लक्षणं लक्ष्यस्यैव चिह्नभूतं स्वम् । यथा विदानां विद्या । अङ्कस्तु गवादिस्थोपि गैवादीनां स्वं न स्यात् । णित्करणं ङीबर्थम् । वृद्धिनिमित्तस्येति पुंवन्निषेधार्थं च ।

---

१. राक्षसुरम् । Dc4 ; रक्षोसुरम् Dc3. २. विदानां Bo1, Do4, Dc2, Dc1.

वैदी विद्यास्य वैदीविद्यः । 'शाकलाद्वा' ॥४।३।१२८॥ सङ्घादिषु प्रत्ययार्थविशेषणेष्वस्मादण् । चरणलक्षणवुञोपवादः । शाकल्येन प्रोक्तं वेदं विदन्त्यधीयते वा शाकलाः । तेषां सङ्घादिः शाकलः । पक्षे चरणत्वाद्वुञ्[१] । शाकलकः । 'छन्दोगौक्थिकयाज्ञिकबह्वृच-नटाञ्ञ्यः' ॥४।३।१२९॥ सङ्घादयो निवृत्ताः । सामान्येन विधिः । एभ्यो ञ्यः । छन्दोगादेश्चरणत्वाद्धर्माम्नाययोः प्रत्ययार्थविशेषणयोः । तत्साहचर्यान्नटशब्दादपि तयोरेव । छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । 'न दण्डमाणवान्तेवासिषु' ॥४।३।१३०॥ दण्डप्रधाना माणवा दण्डमाणवाः अन्तेवासिनः शिष्यास्तेष्वभिधेयेषु गोत्राद्वुञ्[२] न स्यात् । दाक्षा दण्डमाणवा अन्तेवासिनो वा । 'रैवतिकादिभ्यश्छः' ॥४।३।१३१॥ एभ्यश्छः स्यात् तस्येदमित्यर्थे । गोत्रप्रत्ययान्ता एते । ततः पूर्वेण[३] वुञि प्राप्ते विधिः । रैवतिकीयः । रैवतिक । स्वापिशि[४] । क्षैमधन्वि । गौरग्रीवि । औदमेघि । औदवापि । बैजवापि । 'कौपिञ्जल-हास्तिपदादण्' ॥४।३।१३२॥ आभ्यामण् । गोत्रवुञोरपवादः । कौपिञ्जलः । हास्तिपदः । 'आथर्वणिकस्येकलोपश्च' ॥४।३।१३३॥ आथर्वणिकशब्दादण् । इक इत्येतस्य च लोपः । तस्येदमर्थे । चरणवुञोरपवादः[५] । आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा ।

इति शैषिकाणां घादीनामर्थाः समर्थविभक्तयश्चोक्ताः ।

१. Omitted $Bc_1$, $Dc_3$. २. °वुञ् $Dc_4$, $Dc_3$. ३. शब्दाविभ्योपि $Dc_4$. ४. स्वापिशिक $Bc_1$, $Dc_1$, $Dc_4$. ५. °नाभि $Dc_4$, $Dc_3$.

**ग्रामाद्यखञौ ॥४।२।९४॥**

ग्रामाद्यखञौ[1] स्तः शेषेर्थे[3]। अणोपवादः[2]। खस्येनादेशः[4]। ग्रामे जातो ग्रामे भवो ग्रामादागतादिर्वा[5] ग्राम्यः। ग्रामीणः।

---

अथ प्रकृतिविशेषोपादानेन शैषिकाः प्रत्यया उच्यन्ते।

तत्र तावत् स्पष्टत्वात् त्यक्तमेकं सूत्रं व्याख्यायते। 'राष्ट्रावारपाराद्घखौ'। ४।२।९३॥ राष्ट्राच्छे अवारपारादणि प्राप्ते यथासंख्यं घखयोर्विधिः। जातादौ शेषेर्थे। राष्ट्रे जातो भवः क्रीतादिर्वा राष्ट्रियः। अवारपारीणः। विगृहीताद्विपरीताच्च अवारपारात् ख इष्यते। अवारीणः। पारीणः। पारावारीणः।

**ग्रामात्**। **शेषेर्थे** इति। जातादौ शेषाधिकारविहितेर्थे इत्यर्थः। **अणोपवाद** इति। महोत्सर्गस्य प्राग्दीव्यतीयस्याणोपवाद इत्यर्थः। ननु चाणोपवादश्छो ग्रामशब्दात् प्राप्नोति तस्यापवाद इति वाच्यम्। सत्यम्। अणोपवाद इति लक्षणं[6] तदपवादस्यापवाद इत्यस्यार्थस्य। एवं चेच्छस्यापवाद इत्येव वाच्यं किं लक्षणेन। सत्यम्। तथाप्यत्र प्रकरणे विधीयमाना ढकञ्ठगादयः सर्वेणोपवादा इति दर्शयितुं तथोक्तम्। **खस्येनादेश** इति। 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'। इत्यनेन। खञो ञकारो 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तार्थः। ग्रामणीभार्य इत्यत्र 'वृद्धिनिमित्तस्य च—' इति पुंवद्भावनिषेधार्थश्च। स्पष्टत्वात् त्यक्तं सूत्रद्वयम्। 'कत्त्र्यादिभ्यो ढकञ्'॥४।२।९५॥ शेषेर्थे[7]। कात्त्रेयकः।

---

१. $B_1$ drops ग्रामाद्यखञौ स्तः. २ Dropped $D_2$. ३. शेषे C, $D_3$, $B_1$. ४. खस्येनः C. ५. °दागतो वा $B_2$, $D_5$. ६. उपलक्षणं $Dc_3$. ७. शेषार्थे $Dc_3$.

नद्यादिभ्यो ढक् ॥४।२।९७॥

एभ्यो[1] ढक् स्यात् शैषिकः ॥ नद्यां जातादिर्नादेयः । माहेयः ।

दक्षिणापश्चात्पुरसस्त्यक् ॥४।२।९८॥

एभ्यस्त्यक्[2] स्यात् शेषेर्थे ॥ दक्षिणस्यां जातादि-दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

---

कत्रि । उम्भि । पुष्कर । पुष्कल । पौदन[3] । मोदन । कुण्डिन । नगरी[4] । माहिष्मती । वर्मती । ग्राम[5] । कुड्याया यलोपश्च । कौडेयकः । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' ॥४।२।९६॥ कुलादिभ्यो यथासंख्यं श्वादिषु प्रत्ययार्थोपाधिषु ढकञ् स्याज्जातेर्थे[6] । कौलेयकः श्वा । कौलीन्यः । कौक्षेयकोसिः । कौक्षीन्यः । ग्रैवेयकोलंकारः । ग्रैवीन्यः ।

नद्यादि । अवृद्धेभ्योणि वृद्धेभ्यश्छे प्राप्ते वचनम् । नदीत्येतत् स्वरूपग्रहणं न संज्ञाग्रहणम् । संज्ञाग्रहणे हि मह्यादीनां पाठो व्यर्थः स्यात् । नदी । मही । वाराणसी । अमरावती । श्रावस्ती । कौशाम्बी । वनकौशाम्बी । खादिरी[7] । पूर्वनगरी । पौर्वनगरेयम् । केचित्तु पूर्वनगरीति पठन्ति विच्छिद्य च प्रत्ययं कुर्वन्ति । पुरि भवं पौरेयम् । वानेयं[8] गौरेयमिति । तदुभयं प्रमाणम् । पेठा[9] । माया । सौल्वा[10] । दार्वा । सेनकी । वडवाया वृषे ।

दक्षिणा । अणोपवादः । पश्चात्पुरोभ्यामव्ययाभ्यां साहचर्यात् दक्षिणाशब्दः 'दक्षिणादाच्' इत्याजन्ताव्ययं गृह्यते । स्पष्टत्वात्

---

१. एभ्यो ढक् शेषे $B_1$, नद्यादिभ्यः $D_5$. २. $B_1$ and C drop एभ्यस्तक् स्यात्. ३. यौवन $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ४. नगर $Dc_3$, $Dc_4$. ५. Dropped $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ६. °ञ्जाताद्यर्थे $Dc_3$. ७. Before it—काशिकरी $Bc_1$. ८. वालेयं $Dc_2$. ९. पावा $Bc_1$. १०. शाल्वा $Bc_1$, $Dc_3$.

## द्युप्रागपागुदक्प्रतीचो यत् ॥४।२।१०१॥

एभ्यो यत् स्यात् [2]शेषेऽर्थे ॥ दिवि जातादिर्दिव्यः । प्राच्यः । [3]अपाच्यः । [3]उदीच्यः । प्रतीच्यः ।

---

त्यक्तं सूत्रद्वयम् । 'कापिश्याः ष्फक्' । ४।२।९९॥ कापिशीशब्दात् छापवादष्फक् । शैषिकः । षो ङीषर्थः । कापिशायनं मधु । कापिशायनी द्राक्षा । बाह्ल्युर्दिपर्दिभ्यश्चेति वाच्यम् । बाह्लायनी । और्दायनी । पार्दायनी । 'रङ्कोरमनुष्येऽण् च' । ४।२।१००॥ शेषे । चात् फक् । राङ्कवो गौः । राङ्कवायणो गौः । 'औदेशे ठञ्' इति ठञि 'जनपदतदवध्योश्च' इति जनपदलक्षणे वुञि 'कोपधादण्' इत्यणि च प्राप्ते वचनम् । 'मनुष्यतत्स्थयोर्वुञ्' इति परत्वात् मनुष्येऽर्थे रङ्कोर्वुञेव स्यात् । राङ्कवको मनुष्य इति । अमनुष्ये इति न मनुष्यनिषेधः किं तु नञिव युक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिकारि । राङ्कवो गौः राङ्कवायणो गौः । प्राणिनि किम् । राङ्कवः कम्बलः । कच्छादित्वादणेव स्यात् ।

द्युप्रागपाक् । अणोपवादः । द्यु इति दिव उत्वेन निर्देशः न तु द्युशब्दः व्याख्यानादित्यभिप्रेत्याह । दिवीति । प्राक्तनमिति तु परत्वात् 'सायंचिरम्—' इति कालवाचिनोऽव्ययाद् ट्युः । स्पष्टत्वात् त्यक्तं सूत्रद्वयम् । 'कन्थायाष्ठक्' । ४।२।१०२॥ शेषे । अणोपवादः । कन्था नाम ग्रामस्तत्र जातादिः कान्थिकः । 'वर्णौ वुक्' । ४।२।१०३॥ वर्णुनाम नदः । तस्य समीपो देशो वर्णुस्तद्विषयार्थवाचिनी या कन्था तस्या वुक् स्यात् । ठकोपवादः । कान्थकम् ।

---

१. °गवाद्यु° B1. २. शेषे B1, D5, D1; D2 drops शेषेऽर्थे. ३. अवाच्यः B1, D2; उदीच्यः । अवाच्यः । D5. ४. Dropped D2.

**अव्ययात्त्यप् ॥४।२।१०४॥**

**शेषेर्थे[1] ॥ अमेहक्वतसित्रेभ्य एव ॥* अमात्यः[2] । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । त्यब्नेर्ध्रुवेनियतम् ॥* ध्रुवं नित्यम् ।**

**ऐषमो ह्यः श्वसोन्यतरस्याम् ॥४।२।१०५॥**

**एभ्यो वा त्यप् शैषिकः ॥ ऐषमस्त्यम् । ह्यस्त्यम् । श्वस्त्यम् । पक्षे वक्ष्यमाणष्ट्युः[3] । ऐषमस्तनम् । इत्यादि ।**

---

अव्ययात् । पोनुदात्तार्थः । अमेहेति । तथोक्तम् ।

'अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः' । इति । परिगणनं किम् । उपरिष्टाद्भव औपरिष्टः । त्यब्नेरिति । निशब्दाद् ध्रुवेर्थे त्यब् वाच्य इत्यर्थः । निसो गते त्यब् वाच्यः । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिः । अरण्याण्णो वाच्यः । आरण्याः सुमनसः । दूरादेत्यः । दूरेत्यः पथिकः । उत्तरादाहञ् । औत्तराहः ।

ऐषमः । आदिना ह्यस्तनं श्वस्तनम् । 'श्वस्तुट् च' इति ठञपि । शौवस्तिकः । स्पष्टत्वात् त्यक्तं सूत्रषट्कम् । 'तीररूप्योत्तरपदादञ्ञौ' ॥४।२।१०६॥ तीरोत्तरपदाद् रूप्योत्तरपदाच्च यथासंख्यमञ्ञौ स्तः शेषे । अणोपवादौ । पाल्वलतीरम् । शैवरूप्यम् । बहुच्प्रत्ययपूर्वान्मा भूदिति तीररूप्यान्तादिति नोक्तम् । तेन बहुतीरादेर्न । 'मद्रेभ्योञ्' ॥४।२।१०८॥ दिक्पूर्वपदान्मद्रशब्दादञ् शेषे । पौर्वमद्रः । दिशोमद्राणामिति पर्युदासादादिवृद्धिः । 'उदीच्यग्रामाच्च बह्वचोन्तोदात्तात्' ॥४।२।१०९॥ दिग्ग्रहणं निवृत्तम् । उदीच्यग्रामवाचिनो बह्वचोन्तोदात्तादञ् स्यात् शेषे । अणोपवादः । शैवपुरम् । शिवपुरशब्दः समासस्वरेणान्तोदात्तः । उदीच्यग्रामात् किम् । मथुरेति प्रातिपदिकस्वरेणान्तोदात्ता मध्यदेशग्रामस्ततोणेव । माथुरः । बह्वचः किम् ।

---

१. शेषे B₁. २. अमा समीपे भव अमात्यः B₁. ३. वक्ष्यमाणाः स्युः C.

ध्वजीति । गौरादित्वात् ङीषः स्वरेणान्तोदात्तः उदीच्यग्रामः ततोणेव । ध्वाजः । अन्तोदात्तात् किम् । शर्करीधानशब्दे धानशब्दो ल्युडन्तो लित्स्वरेणाद्युदात्तः । गतिकारकोपपदात् कृदिति प्रकृतिभावात् शार्करीधानः । 'प्रस्थोत्तरपदपलद्यादिकोपधादण्' ।४।२।११०॥ प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधाच्च प्रातिपदिकादण् स्यात् शेषे । उदीच्यग्रामलक्षणस्याञोपवादः । मागधीप्रस्थः । पलद्यादिभ्यः । पालदः । पारिषदः । ककारोपधात् । नैलीनकः । पलद्यादिषु यो वाहीकग्रामस्ततष्ठञ्ञिठयोरपवादः । यथा गौष्ठी नैकतीति । गोमतीति पठ्यते । ततः 'रोपधेतोः—' इति वुञोपवादः । कोपधोपि वाहीकशब्दः पठ्यते । परं छं बाधितुम् । औत्सर्गिकेणि स्थिते अणग्रहणं बाधकबाधनार्थम् । पलदी । परिषत् । यकृल्लोमन् । पटच्चर । वाहीक । कलकीट । बहुकीट । कमलभिदा । गोष्ठी । नैकती । परिखा । शूरसेन । गोमती । उदपान । 'कण्वादिभ्यो गोत्रे' ।४।२।१११॥ गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्योण् शेषे । छस्यापवादः । काण्वाः । गौकक्षाः । कण्वगोकक्षाभ्यां गोत्रे गर्गादित्वाद्यञ् तदन्तादण् । 'आपत्यस्य—' इति यलोपः । गोत्रे किम् । कण्वो देवतास्येति काण्वः । तस्येदं काण्वीयम् । कण्वादिर्गर्गाद्यन्तर्गणः । 'न द्व्यचः प्राच्यभरतेषु' ॥४।२।११३॥ 'इञश्च' इति प्राप्तोण् वार्यते । द्व्यचः प्रातिपदिकात् प्राच्यभरतगोत्रादिञन्तादण् न । पैङ्गीयाः । पौष्कीयाः । काशीयाः । द्व्यचः किम् । पान्नागारः । प्राच्यभरतेषु किम् । दाक्षाः । ननु काशीया इति कथमुदाहृतम् । यतः 'काश्यादिभ्यष्ठञ्ञिठौ' इति भाष्यम् । न । देशवाचिनः 'काशिशब्दस्य' तत्र ग्रहो वेदिशब्देन साहचर्यात् । गोत्रात्तु वृद्धाच्छ एव स्यात् । प्राच्यग्रहणेन भरतग्रहणं न भवतीति ज्ञापितत्वात् । स्वशब्देन भरतानामुपादानं कृतम् ।

---

१. शर्करी Dc4. २. शार्करी° Dc4. ३. °सेना Dc4, Dc3. ४. स्यात् शेषे Dc3.

**वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥१।१।७३॥**

**यस्याच्समुदायस्यादिर्वृद्धिस्तद् वृद्धसंज्ञं स्यात् ॥**

**वृद्धाच्छः ॥४।२।११४॥**

**वृद्धाच्छः स्यात् शेषेऽर्थे[2] ॥ 'आपत्यस्य च–'[3] इति यलोपः । गार्गीयः[4] । 'सूर्यतिष्य–' इति यलोपः । आगस्तीयः । शालीयः[5] । वा नामधेयस्य वृद्धसंज्ञा ॥ देवदत्तीयः । दैवदत्तः[6] ।**

वृद्धिः । यस्येति समुदाय उच्यते । अचामिति निर्धारणे षष्ठी । जातौ बहुवचनम् । अचामिति निर्देशादजपेक्षयैवादित्वमत्र विवक्षितमित्येतच्चेतसि[7] कृत्वाह । **यस्याच्समुदायस्ये**त्यादि । आदिरिति किम् । सभासंनयने भवः साभासंनयनः । गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वाच्यम् । घृतप्रधानो रौढिर्घृतरौढिस्तस्य छात्रा घृतरौढीयाः । ओदनपाणिनीयाः । वृद्धाम्भीयाः । वृद्धकाश्यपीयाः । जिह्वाकात्यहरितकात्यवर्जम् । जैह्वाकाताः । हारितकाताः ।

**वृद्धात्** । अणोपवादः । अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधींस्तु परत्वाद्बाधते । आराद् भवः आरातीयः । अव्ययत्वात् प्राप्तष्ट्युर्न । वायसतीरीयः । अञ् न । वाडवकर्षं नामोदीच्यग्रामस्तत्र जातो वाडवकर्षीयः । अञ् न । औलूकीयः । अण् न । एषां तु विधीनामवृद्धोवकाशः । **वा नामधेयस्ये**ति । नामधेयं पुरुषैर्व्यवहाराय संकेत्यमानः शब्दः । **देवदत्तीय** इति । ननु काश्यादिपाठादस्माट्ठञ्ञिठाभ्या भाव्यम् । अतश्छोदाहृतिरयुक्ता । नैष दोषः । यो हि देवैर्दत्तो देवदत्त इति क्रियानिमित्तकस्तस्यैव तत्र पाठो न संज्ञाशब्दस्य । अतश्छोदाहृतिर्युक्ता ।

१. °वृद्धि° $D_4$. २. अर्थे dropped $D_4$. ३. आपत्यस्येति P, $D_1$, $D_4$; आपत्यस्योभयलोपः C. ४. $B_1$ drops from गार्गीयः to यलोपः. ५. $B_1$, $D_4$ have मालीयः after it. ६. After this—'एङ् प्राचां देशे' । एङ् वृद्धसंज्ञः । एनिपचनीयः । गोनर्दीयः । भोजकटीयः । $B_2$, $D_4$ (एङ् वा वृद्ध° $D_4$ ). ७. °त्येतत् सर्वं चेतसि $Dc_4$, $Bc_1$.

**त्यदादीनि च ॥१।१।७४॥**

एतानि वृद्धसंज्ञानि स्युः ॥ तदीयम् । विभक्तावित्यधि-कारादत्र त्वमयोरप्राप्तौ ।

**प्रत्ययोत्तरपदयोश्च ॥७।२।९८॥**

मपर्यन्तयोर्युष्मदस्मदोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तर-पदे च ॥* त्वदीयम् । मदीयम् । त्वत्पुत्रः । मत्पुत्रः ।

---

त्यदा । यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते । इह तु असंभवात् तन्न संबध्यत इत्यभिप्रेत्याह । एतानीत्यादि । स्पष्टत्वात् त्यक्तमेकम् । 'एङ् प्राचां देशे' ॥ १।१।७५॥ एङ् यस्याचामादिस्तच्छब्दरूपं वृद्धसंज्ञं भवति प्राचा देशाभिधाने । एणीपचनीयः ।[4] एङ् किम् । आहिच्छत्रः । प्राचां किम् । देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्तः । देशे किम् । गोमत्यां भवा गौमता मत्स्याः । शरावती नाम नदी उत्तरपूर्वाभिमुखी । तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः । उत्तरापरस्यां दिशि व्यवस्थित उदग्देशः । तथोक्तम् ।

'प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती' ॥ इति ।

'प्रत्ययोत्तरपदयोश्च' इत्येतस्य सूत्रस्य प्रयोजनमाह । विभक्तावित्यादि । 'त्वमावेकवचने' इत्यत्र 'विभक्तौ' इत्यधिकारादत्र प्रत्ययोत्तरपदयोः परतस्त्वमयोरप्राप्ताविदमुच्यत इत्यर्थः ।

**प्रत्यय** । त्वदीयं **मदीयमिति** । तवेदं ममेदम् । त्वत्पुत्रो **मत्पुत्र** इति । तव पुत्रो मम पुत्रः । ननु चात्राप्यन्त-र्वर्तिनी विभक्तिरस्ति तस्यामेव त्वमौ भविष्यतः । किमनेन

---

१. विभक्त्यधिकारा° $B_1$. २. After it—भर्तो गुणे $D_6$. ३. स्यात् $Bc_1$, $Dc_1$, $Dc_4$. ४. After it—गोनर्दीयः भोजकटीयः । $Dc_4$. ५. सरावती $Dc_3$. ६. Dropped $Dc_3$; after it—यथाशब्द इवार्थे $Dc_2$.

**भवतष्ठक्छसौ ॥४।२।११५॥**

वृद्धाद्भवत एतौ स्तः । छस्यापवादः । तान्तत्वात्कादेशः । भावत्कः ।

**सिति च ॥१।४।१६॥**

सिति प्रत्यये यादावजादावपि[1] पूर्वं पदसंज्ञं स्यात् ॥ [2]जशादेशः । भवदीयः । वृद्धात् किम् । शत्रन्तादणेव । भावतः ।[4]

---

सूत्रेण । नैवम् । विभक्तेर्हि लुक् स्यात् । ननु बहिरङ्गो लुक् । अन्तरङ्गावादेशौ प्रथममेव स्यातामिति चेदुच्यते । एतदेवादेशवचनं ज्ञापयत्यन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति । तेन गोमान् प्रियो यस्य गोमत्प्रिय इत्यादौ तुमादि लुका बाध्यते । एवं च त्वाहादयोप्यादेशाः प्रत्ययोत्तरपदयोर्न स्युः ।

**भवतः** । **छस्यापवाद** इति । छस्य छविधायकस्य योगस्यायं योगोपवाद इत्यर्थः । **तान्तत्वादिति** । 'इसुसुक्तान्तात्कः' इति सूत्रेण ।

**सिति च** । 'यचि भम्' इत्यस्यापवादः । **जशादेश** इति । 'झलां जशोन्ते' इति ।

---

१. After it—परे $D_1$, $D_2$, $D_4$. २. पदत्वाज्जश्त्वम् $B_1$; पदत्वाज्जशादेशः $B_2$; ईयादेशः $D_2$. ३. भवतीति भवन् । भवतोयं भावतः । $B_2$. ४. After it—'उगितश्च' इति ङीप्प्रत्ययस्य वृद्धसंज्ञा वाच्या । विदुषीयाः । गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम् । घृतप्रधानो रौढिः घृतरौढिः । घृतरौढेरमी घृतरौढीयाः ॥ P; उगितश्चेति ङीप्प्रत्ययस्य वृद्धसंज्ञा वाच्या । विदुषीयाः । 'इञश्च' &c. $D_5$.

[1]इञश्च ॥४।२।११२॥

गोत्रे य इञ् तदन्तादण् [2]स्यात् [3]शेषे ॥ छस्यापवादः ।
दा[4]क्षः । छा[5]त्रः ।

इञः । दाक्षा इति । दक्षस्य गोत्रापत्यं दाक्षिः । तस्येमे । गोत्रे किम् । सुतङ्गमेन निवृत्ता सौतङ्गमी । तस्यां भवं सौतङ्गमीयम् । नात्र गोत्रलक्षण इञ् किं तु 'वुञ्छण्—' इत्यादिना सुतङ्गमलक्षण इञ् । स्पष्टत्वात् त्यक्तानि द्वाविंशतिः । 'काश्यादिभ्यष्ठञ्ञिठौ' ॥४।२।११६॥ इकार उच्चारणार्थः । अकार उभयत्र ङीबर्थो विपर्यस्तदेशोऽनुबन्धः । काशिकी । काशिका । 'वृद्धात्' इत्यनुवर्तते । येत्रावृद्धाः पठ्यन्ते वचनप्रामाण्यात्तेभ्यः प्रत्ययः । काशि । चेदि । संयाति । संवाह । अच्युत । मोदमान । शकुलाद । हस्तिकर्षू । कुनामन् । हिरण्य । गोवासन । भारङ्गी । अरिन्दम । दासमित्र । देवदत्त । अस्य 'एङ् प्राचां देशे' इति वृद्धत्वम् । वाहीकग्रामस्य नास्ति वृद्धत्वम् । यदा वृद्धत्वं तदा ठञ्ञिठौ । दाशग्राम । गोधावतार । युवराज । उपराज । सिन्धुमित्र । देवराज । आपदादिपूर्वपदात् कालान्तात् । आपत्कालिकी । आपत्कालिका । और्ध्वकालिकी । और्ध्वकालिका । 'वाहीकग्रामेभ्यश्च' ॥४।२।११७॥ वाहीकेषु ग्रामा ये वृद्धास्तेभ्यष्ठञ्ञिठौ छस्यापवादौ । शाकलिकी । शाकलिका । 'विभाषोशीनरेषु' ॥ ४।२।११८॥ वृद्धेभ्य उशीनरग्रामेभ्यष्ठञ्ञिठौ । आह्वजालिकी ।

१. Before it the Sūtra—काश्यादिभ्यष्ठञ्ञिकौ ॥४।२।११६॥ काशीत्येवमादिभ्यष्ठञ्ञिक एतौ स्तः । इकार उच्चारणार्थः । स्त्रीप्रत्यये विशेषत्वात् काशिकी । काशिका । वैदिकी । वैदिका ॥ $D_3$, $B_1$, P. २. $B_1$ drops स्यात्. ३. शेषेर्थे $B_2$. ४. $B_1$, P, $B_2$, $Dc_1$ have दाक्षाः । छात्राः. ५. छात्राः $D_5$, $D_4$, $D_1$. ६. Dropped $Dc_1$, $Dc_3$.

आह्वजालिका । पक्षे छः । आह्वजालीया । 'ओर्देशे ठञ्' ॥ ४।२।११९॥ वृद्धादिति निवृत्तम् । उत्तरत्र पुनर्ग्रहणात् । उवर्णान्ताद्देशवाचिनः ठञ् शेषे । नैषादकर्षुकः । ओर्देशे किम् । पटोश्छात्राः पाटवाः । 'वृद्धात् प्राचाम्' । ओर्देशे इत्येव । पूर्वेण सिद्धे वृद्धादेव प्राग्देशवाचिनष्ठञ् नियम्यते । नापितवास्तुकः । वृद्धात् किम् । माल्लवास्तवः । 'धन्वयोपधाद्वुञ्' ॥ ४।२।१२१॥ धन्ववाचिनो योपधाच्च देशवाचिनो वृद्धाद्वुञ् शेषे । धन्वशब्दो मरुदेशवाची । पारेधन्वकः । ऐरावतकः । योपधात् । साङ्काश्यकः । 'प्रस्थपुरवहान्ताच्च' ॥४।२।१२२॥ प्रस्थान्तात् पुरान्ताद्वहान्ताच्च वृद्धादेशाद्वुञ् । शालाप्रस्थकः । नान्दीपुरकः । पैलुवहकः । 'रोपधेतोः प्राचाम्' ॥४।२।१२३॥ रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् । पाटलिपुत्रकः । ऐकचक्रकः । काकन्द्यां भवः काकन्दकः । प्राचां किम् । दात्तमित्रीयः । 'जनपदतदवध्योश्च' ॥ ४।२।१२४॥ वृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च वुञ् शेषे । आदर्शकः । जनपदावधेः । श्यामायनकः । तदवधिरपि जनपद एव गृह्यते । न ग्रामः किमर्थं तर्हि तदवधिग्रहणम् । बाधकबाधनार्थम् । गर्तोत्तरपदात् छं बाधित्वा वुञेव जनपदावधेः स्यात् । त्रैगर्तकः । 'अवृद्धादपि बहुवचनविषयात्' ॥४।२।१२५॥ अवृद्धावृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च बहुवचनविषयाद्वुञ् शेषे । अणुछयोरपवादः । अङ्गेषु भव आङ्गकाः । तदवधेः । अजमीढेषु भव आजमीढकः । वृद्धाज्जनपदात् । दार्वेषु भवः दार्वकः । तदवधेः । वैकुलिशे भवः वैकुलशिकः । विषयग्रहणमनन्यत्र भावार्थम् । तेन वर्तनी च वर्तनी च वर्तन्य इति जनपदैकशेषेण बहुत्वे मा भूत् । अपिशब्देन वृद्धोत्राधिकृतोपि समुच्चितः । बाधास्य तत्कौण्डिन्यन्यायेन मास्म भूदिति । 'कच्छाग्निवक्रवर्तोत्तरपदात्' ॥ ४।२।१२६॥ कच्छाद्युत्तरपदाद्वृद्धाच्चावृद्धाद् देशाद्वुञ् । छाणोरपवादः ।

१. न्यायतो Dc1, Dc4. २. गर्तो॰ Bc1.

भरुकच्छे भवः भारुकच्छकः । पैप्पलीकच्छकः । काण्डाग्नकः । वैभुजाग्नकः । ऐन्द्रवक्त्रकः । सैन्धुवक्त्रकः । बाहुवर्तकः । चारुवर्तकः । बहुच्पूर्वान्मा भूदित्युत्तरपदग्रहः । 'धूमादिभ्यश्च' ॥४।२।१२७॥ देशवाचिभ्योणादेरपवादे वुञ् । धौमकः । खाण्डकः । धूम । खण्ड । शशादन । अर्जुनाद । दाण्डायनस्थली । विदेह । राजगृह । सात्रासह । भक्षाली । मद्रकूल । आञ्जिकूल । द्व्याहव । संस्थाय । बह्वय । भागवत्त । विदेह । आनर्त । माठर । पाथेय । घोष । शिष्य । फलि । आराज्ञी । आवय । तीर्थ । कूलात् सौवीरेषु समुद्राच्चास्मान्नावि मनुष्ये च वुञ् इष्यते । सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र न । सामुद्रं लवणम् । कुक्षि । अन्तरिक्ष । अनसौ । उज्जयनी । दक्षिणापथ । साकेत । 'नगरात् कुत्सनप्रावीण्ययोः' ॥४।२।१२८॥ प्रत्ययार्थविशेषणयोर्वुञ् । नागरकश्चौरः । नागरकश्चित्रकारः । अनयोः किम् । नागरो जनः । अण् । कत्र्यादौ नगरविशेषवाचिनो ग्रहणात् नगरविशेषे तु ढकञ् प्रत्युदाहार्यः । नागरेयकः । 'अरण्यान्मनुष्ये' ॥४।२।१२९॥ औपसंख्यानिकस्य णस्यापवादो वुञ् । आरण्यको मनुष्यः । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् । आरण्यकः पन्था अध्यायो विहारो मनुष्यो हस्ती वा । गोमयेषु वा । आरण्यका गोमया आरण्या वा । एषु किम् । आरण्याः पशवः । 'विभाषा कुरुयुगन्धराभ्याम्' ॥४।२।१३०॥ वुञ् । कौरवः । कौरवकः । यौगन्धरः । यौगन्धरकः । कुरोः कच्छादित्वाद्वाण्सिद्धौ युगन्धरार्था विभाषा । मनुष्यतत्स्थयोस्तु कुरोर्नित्यो वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितम् । 'मद्रवृज्योः कन्' ॥४।२।१३१॥ जनपदवुञोपवादः । मद्रकः । वृजिकः । 'कोपधादण्' ॥४।२।१३२॥

१. कर्त्र्यादौ Dc3.

## गहादिभ्यश्च ॥४।२।१३८॥

ऐभ्यश्छः स्यात् ॥ गहीयः। जनपरयोः कुक् च ॥* जनकीयम्। परकीयम्।[२]

---

जानपदवुञोपवादः। ऋषिकेषु जात आर्षिकः। अण्ग्रहणमुवर्णान्तादपि यथा स्यादिति। इक्ष्वाकुषु जात ऐक्ष्वाकवः। 'कच्छादिभ्यश्च' ॥४।२।१३३॥ देशे इत्येव। अण् शेषे। वुञादेरपवादः। काच्छः। कच्छ। सिन्धु। वेडु[३]। गन्धार। मधुमत्। कम्बोज। काश्मीर। साल्व[४]। कुरु। अरुखण्ड। द्वीप। अनूप। अजवाह। विजापक[५]। कुलूत। रङ्कु। 'मनुष्यतत्स्थयोर्वुञ्' ॥४।२।१३४॥ एतयोः प्रत्ययार्थविशेषणयोः कच्छादिभ्यो वुञ्। अणोपवादः। काच्छको मनुष्यः। काच्छकमस्य हसितम्। काच्छिका चूडा। एतयोः किम्। काच्छो गौः। 'अपदातौ साल्वात्' ॥४।२।१३५॥ अपदातावेव मनुष्ये मनुष्यस्थे वा सल्वशब्दाद्वुञ्। साल्वको मनुष्यः। साल्वकमस्य हसितम्। अपदातौ किम्। साल्वपदातिर्व्रजति। 'गोयवाग्वोश्च' ॥४।२।१३६॥ साल्वाद्वुञ्। काच्छाद्यणोपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत्। 'गर्तोत्तरपदाच्छः' ॥४।२।१३७॥ देश इत्येव। अणोपवादः। वाहीकग्रामलक्षणं प्रत्ययं परत्वाद्बाधते। वृकगर्तीयम्।

**गहादि**। गह। अन्तस्थ[६]। विषम। मध्य। मध्यं चाण् चरणे। पृथिवीमध्यवाचिनो मध्यशब्दाच्छः। मध्यशब्दस्य मध्यमादेशः। मध्यमीयः। चरणे तु प्रत्ययार्थे निवासे णमध्यमादेशश्च। माध्यमाः। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख।

---

१. एभ्यश्छः शेषे $B_1$. २. After this—देवस्य वा ॥* देवकीयम्। देवीयम्। स्वस्य वा। स्वकीयम्। स्वीयम्। $D_3$, $B_1$, $B_5$ $D_5$ ($D_5$ has देवस्य to देवीयम् after स्वीयम्). ३. वर्णु $Dc_4$. ४. शाल्व $Dc_3$. ५. विजावक $Dc_4$, $Dc_3$. ६. After it—सङ्ग $Dc_1$, $Dc_4$; अङ्ग $Dc_3$.

समानशाख । एकग्राम । एकवृक्ष । एकपलाश । इष्वग्र । इष्वनीक । अवस्यन्दन । कामप्रस्थ । खाण्डायनि । काठेरणि । लाठेरणि । सौपित्री । मौञ्जि[1] । सौङ्गि । आसुरि । आहिंसि । आमित्रि । व्याडि । वैजि । भौजि । आध्यश्वि । आनृशंसि । सौर्थतपावाथि[2] । अग्निशर्मन् । देवशर्मन् । सौत्रि । वाराटकि । वाल्मीकि । क्षेमधन्वन्[3] । उत्तर । अन्तर । मुखपार्श्व । तसोर्लोपः । मुखतीयम् । पार्श्वतीयम् । देवात् कुक् चेति वाच्यम् । देवकीयम् । वेणुकादिभ्यश्छण् । वैणुकीयम् । आकृतिगणोयं वेणुकादिः । स्पष्टत्वात् त्यक्तं सूत्रसप्तकम् । 'प्राचां कटादेः' ॥४।२।१३९॥ प्राग्देशवाचिनः कटादेश्छः स्यात् शेषे । कटनगरीयम् । कटघोषीयम् । प्राचां किम् । काटनागरः । 'राज्ञः क च' ॥४।२।१४०॥ छः स्यात् कोन्तादेशश्च । असंभवान्न देशविशेषणम् । राजकीयम् । 'वृद्धादकेकान्तखोपधात्' ॥४।२।१४१॥ वृद्धादेशादकान्तादिकान्तात् खोपधाच्च छः स्यात् शेषे । अकान्तात् । आरीहणकीयम् । द्रौघणकीयम् । इकान्तात् । शाल्मलिकीयम् । खोपधात् । कौटशिखीयम् । कोपधग्रहणं शोशुकाद्यर्थं कार्यम् । शोशुकीयम् । 'कन्थापलदनगरग्रामह्रदोत्तरपदात्' ॥४।२।१४२॥ वृद्धादेशात् कन्थाद्युत्तरपदाच्छः । वाहीकग्रामत्वात् ठञ्ञिठयोपवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । माहकिग्रामीयम् । दाक्षिह्रदीयम् । 'पर्वताच्च' ॥४।२।१४३॥ छः । पर्वतीयो राजा । 'विभाषामनुष्ये' ॥४।२।१४४॥ पर्वताच्छो वा शेषे । पर्वतीयानि फलानि । पार्वतानि वा । अमनुष्ये किम् । पर्वतीयो मनुष्यः । 'कृकणपर्णाद्भारद्वाजे'[4] । ४।२।१४५॥ भारद्वाजदेशवाचिभ्यां कृकर्णपर्णाभ्यां छः शेषे । अणोपवादः । कृकर्णीयम् । पर्णीयम् । भारद्वाजे किम् । कार्कणः । पार्णः ।

१. मौञ्जिसौङ्गि Dc4. २. सौतिपावाथि Dc1; सौतिपाथावधि Dc3. ३. क्षेम° Dc3. ४. Dropped Bc3, Dc4.

## युष्मदस्मदोरन्यतरस्यां खञ् च ॥४।३।१॥

एतयोः खञ् स्यात्[१] शेषे । चकारात्[२] छः । वाग्रहणादण्[३] ।

## तस्मिन्नणि च युष्माकास्माकौ ॥४।३।२॥

एतयोः क्रमादेतौ स्तः खञि[४] अणि च ॥ युवयोर्युष्माकं वायं यौष्माकीणः । आस्माकीनः[५] । यौष्माकः । आस्माकः । तस्मिन्नणि किम् । युष्मदीयः । अस्मदीयः[६] ।

## तवकममकावेकवचने ॥४।३।३॥

एकार्थयोर्युष्मदस्मदोः क्रमादेतौ स्तः खञि अणि च ॥[७] तावकीनः[८] । मामकीनः[९] । तावकः । मामकः । छे तु । त्वदीयः । मदीयः ।

---

**युष्मदस्मदोः** । त्यदादित्वाद्वृद्धसंज्ञयोर्युष्मदस्मदोश्छे प्राप्ते प्रत्ययत्रयविधिः ।

**तस्मिन्नणि च** । तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते । ननु चानुकृष्टः छ इत्यभिप्रेत्याह । **खञि अणि चेति** । स्पष्टत्वात्त्यक्तं सूत्रचतुष्टयम् । 'अर्धाद्यत्' ।४।३।४॥ अर्ध्यः । 'परावराधमोत्तमपूर्वाच्च'। ४।३।५॥ ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधात् पूर्वेणाप्राप्ते एतत्पूर्वादर्धाद्यद्विधीयते शेषे । परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् । परावरशब्दावदिक्शब्दावपि स्तः । परं सुखमवरं दुःखमिति । तत्र कृतार्थत्वाद् दिक्शब्दत्वेनानयोः परेण ठञ्यतौ

---

१. $B_1$ drops स्यात् ; वा स्यात् $D_4$. २. चात् $B_1$. ३. °दण् वा P; °दण् च $D_1$, $B_2$. ४. खञि परे $D_1$. ५. यौष्माकः । आस्माकीनः $D_2$; यौष्माकः । आस्माकः । आस्माकीनः । $D_4$; यौष्माकः । आस्माकीनः । आस्माकः । $D_5$. ६. P and C drop it. ७. After it—परे $D_6$. ८. तावकीनः । तावकः । मामकीनः । मामकः C; P ; $D_4$. ९. तावकः । मामकीनः । $D_2$.

**मध्यान्मः ॥४।३।८॥**

शेषे । मध्यमः । आदेश्च ॥* आदिमः अधमो लोपश्च ॥* अधमः ।

**अ साम्प्रतिके ॥४।३।९॥**

मध्यशब्दादकारप्रत्ययः शैषिकः समर्थे । उत्कर्षापकर्षहीनो मध्यो वैयाकरणः ।

---

स्यातां तौ मा भूतां यदेव स्यादिति पूर्वग्रहणं कृतम् । 'दिक्पूर्वपदात् ठञ्च' । ४।३।६॥ अर्धात् ञण्यतौ । पौवार्द्धिकम् । पूर्वार्ध्यम् । पदग्रहणं स्वरूपविधिनिरासार्थम् । 'ग्रामजनपदैकदेशादञ्ठञौ' ।४।३।७॥ दिक्पूर्वपदादर्धादित्येव । यतोपवादौ । इमे खल्वस्माकं ग्रामस्य जनपदस्य पौर्वार्द्धाः पौर्वार्धिकाः ।

**मध्यात्** । आदेश्चेति वक्तव्यम् । **अधस** इति । अधसोमप्रत्ययोन्तलोपश्च । वाच्य इत्यर्थः । अवसोपि मोन्तलोपश्च वाच्यः । अवमः ।

**अ साम्प्रतिके** । साम्प्रतिशब्दार्थमाह । **समर्थे** इति । स्पष्टत्वात् त्यक्तमेकं व्याख्यायते । 'द्वीपादनुसमुद्रं यञ्' ॥४।३।१०॥ समुद्रसमीपे यो द्वीपस्तद्विषयाद्द्वीपाद्यञ् शेषे । कच्छाद्यणो मनुष्यवुञश्चापवादः । द्वैप्यः । समुद्रसमीपात् किम् । द्वैपः ।

---

१. P drops it. २. छश्च Bc[1].

**कालाट्ठञ् ॥४।३।११॥**

कालविशेषवाचिनः शेषेऽर्थे ठञ् स्यात्[1] ॥ अणोपवादः । वृद्धाच्छं परत्वाद्बाधते । [2]मासिकः । आर्धमासिकः । सांवत्सरिकः ।

**निशाप्रदोषाभ्यां च ॥४।३।१४॥**

आभ्यां वा ठञ्[3] स्यात्[4] [5]शेषे ॥ नैशिकम्[6] । नैशम् । [7]प्रादोषिकम् । प्रादोषम् ।

**श्वसस्तुट् च ॥४।३।१५॥**

श्वसो वा ठञ् स्यात्[8] तस्य तुडागमश्च ।

---

**कालात्** । वाच्यः कदम्बपुष्पादेः कालार्थात् साहचर्यतः । कादम्बपुष्पिकम् । व्रीहिपलालिकम् । इतो यावत् शैषिकम् । कालाधिकारः । स्पष्टत्वात् त्यक्ते सूत्रे । 'श्राद्धे शरदः' ॥४।३।१२॥ अस्मात् ठञ् श्राद्धे कर्मणि वाच्ये शैषिकः । ऋत्वणोपवादः । शारदिकं श्राद्धम् । शारदमन्यत् । 'विभाषा रोगातपयोः' ।४।३।१३॥ शरदात् ठञ् । शारदिकः शारदो रोग आतपो वा । अन्यत्र शारदं दधि ।

**निशा** । कालादिति नित्ये ठञि प्राप्ते विकल्पार्थं वचनम् ।

**श्वसः** । **तस्य तुडागमश्चेति** । तस्येति ठञि इकादेशस्य उपदेशावस्थायां विधेस्तत्र कृते तुडागमः स्यादिति ज्ञेयम् ।

---

१. $B_1$ drops it. २. पौर्णमासिकः क्रतुः $B_2$. ३. ठक् $B_1$, C. ४. $B_1$, $B_2$, $D_1$, $D_4$ drop it. ५. शेषेऽर्थे $D_3$, P; C ६. नैशम् । नैशिकम् C, $D_1$, $D_4$, $D_5$. ७. प्रादोषम् । प्रादोषिकम् $D_1$, $D_2$, $D_4$, $D_5$. ८. शेषे for स्यात् $B_1$; स्यात् शेषे $D_1$, $D_4$, $D_5$.

**द्वारादीनां च ॥७।३।४॥**

द्वार[1] । स्वर[2] । व्यल्कश । स्वस्ति । स्वश्[3] । स्वादु । मृद्[3] । श्वस् । श्वन् । स्फ्यकृत्[4] । स्व—एतेषां न वृद्धिः[5] ऐजागमश्च । [6]शौवास्तिकः । पक्षे । श्वस्त्यम् । श्वस्तनम् ।[7]

**सर्वत्राण् च तलोपश्च ॥४।३।२२॥**

हेमन्तादण् स्यात् तलोपश्च ।

---

द्वारादीनाम् । अपदान्तार्थोयमारम्भः । अत्र तदादिविधेर-पीष्टत्वात् द्वारपालशब्दो न पठित इति ज्ञेयम् । **पक्षे श्वस्त्यमित्यादि** । 'एषमोह्यस्श्वसोरन्यतरस्याम्' इति त्यप् 'सायंचिरम्—' इति ट्युश्च । 'संधिवेला—' इति सूत्रेणाणि कृते तलोपो नेति अग्रे वक्ष्यमाणग्रन्थेन व्याख्यातप्रायत्वात् त्यक्तं सूत्रत्रयं व्याख्यायते । 'संधिवेलाद्यृतुनक्षत्रेभ्योण्' ॥४।३।१६॥ संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्चाण् स्यात् शेषेपि । संधिवेलम् । संधिवेला । संध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पञ्चदशी । पौर्णमासी । प्रतिपद् । संवत्सरात् फलपर्वणोः । सांवत्सरं फलम् । सांवत्सरं पर्व । 'प्रावृष एण्यः' ॥४।३।१७॥ ऋत्वणि प्राप्ते । प्रावृषेण्यो बलाहकः । 'वर्षाभ्यष्ठक्' ॥४।३।१८॥ शेषे । ऋत्वणोपवादः । वार्षिकम् । सर्वत्र सर्वग्रहणं 'छन्दसि ठञ्' इति छन्दोधिकारनिवृत्त्यर्थमित्यभिप्रेत्याह ।

---

१. P has द्वार after स्वस्ति. २. स्वस C ; स्वर् D1, D4. ३. मृदु D4, D5. ४. स्फ्यकृत D1, D4. ५. किं तु ऐजा° D4. ६. शौवस्तिकम् D4. ७. After it—इत्यादि D4.

वेदे भाषाया च ॥ हैमनो वायुः । ठञपीष्यते । हैमन्तिकः । संधिवेलेति सूत्रेणाणिकृते तलोपो न । हैमन्तः ।

**सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ ४।३।२३॥**

एभ्यः कालवाचिभ्यष्ट्युट्युलौ स्तः तयोस्तुडागमश्च ॥ सायन्तनम् । स्वरे[1] भेदः । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । अनव्ययानामेषां मान्तत्वमेदन्तत्वं च निपातनात् । अव्ययेभ्यः[2] । दोषातनम् । टित्वात् दोषातनी । चिरपरुत्परारिभ्यस्त्नो[3] वक्तव्यः ॥* चिरत्नम् । परुत्नम् । परारित्नम् ॥ प्रगस्य गलोपश्च । प्रत्नम् ॥

---

वेदे भाषायां चेति । ननु अण् चेति चकारः किमर्थः । ऋत्वणर्थः । कः पुनरनयोर्विशेषः । उच्यते । ऋत्वणि हि तलोपो नास्ति अत्र तु तलोप इत्येतत् सर्वं चेतसि कृत्वाह । **संधिवेलेत्यादि** ।

**सायम्** । कालादित्येव । **स्वरे भेद** इति । ट्यौ सति 'आद्युदात्तश्च' इति सायंतनमित्यत्र त उदात्तः स्यात् । ट्युलि तु 'लिति' इति यं शब्द उदात्त इति ट्युट्युलोर्भेद इत्यर्थः । ननु सायमादयोऽप्यव्ययानि कुतस्तेषां पृथग्‌-ग्रहणम् । अथानव्ययानि कथं मान्तत्वमेदन्तत्वं चेत्याशङ्क्याह । **अनव्ययानामिति** । **प्रगस्येति** । एतच्छन्दसीति ज्ञेयम् ।

---

१. स्वरभेदः P. २. अव्ययाना° $D_1$, $D_5$. ३. चिरत् P, $B_1$.

अग्रपश्चादिमन्[1] ॥* अन्ताच्च ॥* अग्रिमम् । अन्तिमम् । अव्ययानां भमात्रे टिलोपः । पश्चिमम् । सायंप्रातर्भवः सायंप्रातिकः । पौनःपुनिकः । अध्यात्मादित्वात् ठञ्[2] । बहिषष्टिलोपविधानादनित्योऽव्ययानां टिलोपः ।[3] आरातीयः । शाश्वतिकः ।[4]

---

**अग्रपश्चादिति** । केचित् डिमजिति डितं पठन्ति । **अध्यात्मादित्वात्** ठञिति । सायंप्रातिकः । पौनःपुनिकः इत्यत्र । **आरातीय** इति । 'वृद्धात् छः' इति छः । **शाश्वतिक** इति । शश्वदिति त्रैकाल्यमुच्यते । तत्र भवं शाश्वतिकम् । 'कालाट्ठञ्' इति ठञ् । 'येषां च विरोधः' 'शाश्वतिकः' इति निपातनात् तान्तादपि कादेशो न । स्पष्टत्वात्त्यक्तमेकम् । 'विभाषा पूर्वाह्णापराह्णाभ्याम्' ॥४।३।२४॥ ट्युट्युलौ तुट् च वा । पक्षे 'कालाट्ठञ्' इति ठञ् । पूर्वाह्णेतनम् । पौर्वाह्णिकम् । अपराह्णेतनम् । आपराह्णिकम् । 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुक् । यदा तु पूर्वाह्णः सोढोऽस्येति विग्रहस्तदा पूर्वाह्णतन इति भवति ।

इति शैषिकाः प्रत्ययाः ।

---

१. C has अग्रिमम् after this. २. ठञ् च C. ३. After this—नित्यानामिसादिभ्यः स्थानीयेभ्यश्च ठस्य को नेष्यते इक एव $B_2$. ४. तस्य विकारः । येषां च विरोधः शाश्वतिक इति ज्ञापकात् । इसुसुक्तान्तादिति कादेशो न । $D_6$. ५. प्राक्रियाः $Bc_1$, $Dc_4$.

**तस्य विकारः ॥४।३।१३४॥**

षष्ठ्यन्ताद्विकारेर्थेणादयः स्युः ॥ सुवर्णस्य विकारः सौवर्णः ।

**अवयवे च प्राण्योषधिवृक्षेभ्यः ॥४।३।१३५॥**

प्राण्यादिभ्योवयवे विकारे चाणादयः स्युः ॥ कापोतम् । मौर्वम् । काण्डं भस्म वा । कारीरम् ।[४]

---

**तस्य विकारः** । 'तस्येदम्' इत्यतस्तस्येत्यनुवृत्तौ पुनस्तस्य ग्रहणात् शैषिकनिवृत्तिः न त्वणः प्राग्दीव्यतीयस्य निवृत्तिः । व्याख्यानतो विशेषप्रतिपत्तेः । तेन विकारावयवयोर्घादयो न भवन्ति । विकारो नाम प्रकृतेरवस्थान्तरम् । यस्यान्यत् प्रतिपदं विधानं नास्ति अप्राण्याद्युदात्तमवृद्धं च तदिहोदाहरणमित्यभिप्रेत्याह । **सुवर्णस्य विकारः सौवर्ण** इति । सुवर्णशब्दः शोभनो वर्णोस्येति व्युत्पत्त्या बहुव्रीहिस्वरेण 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिभावेनाद्युदात्तः । सुशब्दस्य 'निपाता आद्युदात्ताः' इति आद्युदात्तत्वात् ।

**अवयवे च** । अणादयो यथायथं स्युरित्यर्थः । **कापोतमिति** प्राणिन उदाहरणम् । कपोतानामवयवो विकारो वा । 'प्राणिरजतादिभ्योञ्' इत्यञ् । **मौर्वमिति** । औषधेरण् । मूर्वाया अवयवो मौर्वं काण्डं विकारस्तु भस्म । **कारीरमिति** । वृक्षादण् । करीरस्यावयवो विकारो वा कारीरं काण्डं भस्म वा । उत्तरे प्रत्ययाः प्राण्यौषधिवृक्षेभ्यो विकारावयवयोः स्युरन्येभ्यस्तु विकारमात्रे । उभयानुवृत्तेः । स्पष्टत्वात् त्यक्तानि षट् । 'बिल्वादिभ्योण्' । ४।३।१३६॥ यथायोगं विकारावयवयोः । अनुदात्तादेरञो वृद्धान्मयटोपवादः । बिल्वस्य विकारोवयवो वा बैल्वः । बिल्व । व्रीहि । काण्ड । मुद्ग । मसूर ।

---

१. $B_1$ drops it. २. Dropped $D_4$. ३. कारीरम् । काण्डं नालं भस्म वा $B_1$, काण्डं भस्मनि च । कारीषम् । $D_4$. ४. After it—कारीषम् $B_2$.

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ ४।३।१४३॥**

विकारावयवयोर्वा मयट् स्याद्भाषायाम् ॥ दूर्वामयम् । दौर्वम् । भक्ष्याच्छादनयोस्तु । मौद्गः सूपः । कार्पासं वासः ॥

---

गोधूम । वेणु । इक्षु । गवेधुका । पाटली । कर्पासी । कर्कन्धू । कुटीर । 'कोपधाच्च' ॥४।३।१३७॥ अण् । यथायोगं विकारावयवयोः । 'ओरञ्' अनुदात्तादेश्चेत्येताभ्यां प्राप्तस्याञोपवादः । तर्कोरवयवो विकारो वा तार्कवम् । तैत्तिडीकः । मध्योदात्तत्वादनुदात्तादिः । 'त्रपुजतुनोः षुक्' ॥४।३।१३८॥ ओरञोपवादोण् तत्संनियोगेनानयोः षुक् । त्रपुणो विकारः त्रापुषम् । जातुषम् । अप्राण्यादित्वान्नावयवे । 'अनुदात्तादेश्च' ॥४।३।१४०॥ विकारावयवयोरञ् । दाधित्थम् । कापित्थम् । एतौ समासस्वरेणान्तोदात्तावित्यनुदात्तादी । 'पलाशादिभ्यो वा' ॥४।३।१४१॥ विकारावयवयोरञ् । पक्षेण् । पालाशम् । पलाश । खदिर । शिंशपा । स्यन्दन । पूलास । शिरीष । यवाष । विकङ्कत । 'शम्याः ष्लञ्' ॥४।३।१४२॥ अनुदात्ताद्यञोपवादः । प्राचुर्यविकारप्राधान्यादिषु इति । शामीलं भस्म । टो ङीबर्थः । शामीली स्रुक् ।

मयड्वैतयोः ॥ भाषायां किम् । छन्दसि बैल्वः खादिरो वा यूपः । विकारावयवयोरनुवृत्तावपि पुनरेतयोरिति ग्रहणात् 'प्राणिरजतादिभ्योञ्' इत्येवमादिविशेषप्रत्ययविषयेपि स्यात् । कपोतमयं कापोतं लोहमयं लौहमिति ।

---

१. °भक्ष्या° $D_1$, $D_4$. २. भाषायां भक्षादनयोर्वा मयट् स्यात् । $D_5$. ३. स्यात् dropped $B_1$. ४. भक्षा° $D_1$, $D_2$, $D_4$, $D_5$, $B_2$. ५. तु dropped $D_2$. ६. After it—इत्यत्र 'बिल्वादिभ्योण्' इत्यण् । $B_2$. ७. कार्पासी $Bc_1$, $Dc_3$, $Dc_4$. ८. °श्चेत्याभ्यां $Bc_1$, $Dc_4$. ९. पूलासास । पुलाश $Bc_1$, $Dc_3$, $Dc_4$. १०. सिरीष $Bc_1$, $Dc_3$, $Dc_4$. ११. प्राचुर्यविकारप्राधान्यादिषु इति–dropped $Bc_1$, $Dc_2$, $Dc_4$. १२. शामी त्वक् $Dc_3$.

**नित्यं वृद्धशरादिभ्यः ॥४।३।१४४॥**

वृद्धाच्छरादेश्च नित्यं मयट् ऐतयोः ॥ आम्रमयम् । शरमयम् । दर्भमयम् । एकाचोपि मयट् । वाङ्मयम् । चिन्मयम् । मयट् तद्रूप इति केचित् । विष्णुमयम् ।

**तत्प्रकृतवचने मयट् ॥५।४।२१॥**

तदिति प्रथमा समर्थात् प्राचुर्येण प्रस्तुतमत्रेत्यर्थे मयट् स्यात् ॥ अन्नमयो यज्ञः । प्राधान्येपीत्येके । धर्ममयो देशः ।

---

**नित्यम्** । भाषायामभक्ष्याच्छादनयोरित्येव । शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज । **मयट् तद्रूप इति केचिदिति** । तथोक्तं बोपदेवपाण्डितैः । मयट् तद्रूप इति ।

**तत्प्रकृत** । प्राग्दीव्यतीयाधिकारबहिर्भूतमपि सूत्रं मयट्प्रसङ्गादत्रोक्तम् । प्रकृतं प्राचुर्येण प्रस्तुतमुच्यते यत्र तत् प्रकृतवचनमिति सूत्रार्थं चित्ते कृत्वाह । तदित्यादि । केचित्तु प्राचुर्येण प्रस्तुतं यत् तद्वाचिनः प्रातिपदिकात् स्वार्थे मयडिति व्याख्यान्ति तदुभयं प्रमाणम् । **प्राधान्येपीत्येक इति** । तथोक्तं नरेन्द्राचार्यैः । प्राचुर्यविकारप्राधान्यादिषु मयडिति ।

---

१. स्यादेतयोः B$_2$, C. २. अन्न is dropped in C. ३. B$_1$ drops it.
४. B$_1$ has अन्नं प्राचुर्येण प्रस्तुतमत्र अन्नमयो यज्ञः.

**गोश्च पुरीषे ॥४।३।१४५॥**

गोर्मयट् स्यात्[1] पुरीषेऽर्थे[2] ॥ गोः पुरीषं गोमयम् ।

---

**गोश्च** । पुरीषं गोर्न विकारो नाप्यवयवोऽतस्तस्येदंविषयो मयटो विधिः । विकारावयवयोस्तु यतं वक्ष्यति । स्पष्टत्वात्त्यक्तानि द्वादश । 'पिष्टाच्च' ॥४।३।१४६॥ विकारे मयट् । पिष्टमयं पैष्टी सुरेति तु सामान्यविवक्षायां तस्येदमित्यण् । 'संज्ञायां कन्' ॥४।३।१४७॥ पिष्टात् विकारे संज्ञायां कन् स्यात् । पिष्टकः । 'व्रीहेः पुरोडाशे' ॥४।३।१४८॥ विकारावयवयोर्मयट् । बिल्वाद्यणोपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् । 'असंज्ञाभ्यां तिलयवाभ्याम्' ॥४।३।१४९॥ विकारावयवयोर्मट् । तिलमयम् । यवमयम् । असंज्ञायां किम् । तैलम् । यावकः । 'तालादिभ्योण्' ॥४।३।१५२॥ विकारावयवयोः । मयडाद्यपवादः । तालाद्धनुष्येव । तालं धनुः । अन्यत्र तालमयम् । ताल । बर्हिण[3] । इन्द्रालिश । इन्द्रादृश । इन्द्रायुध । चाप । श्यामाक । पीयूक्षा । 'जातरूपेभ्यः परिमाणे' ॥४।३।१५३॥ सुवर्णवाचिभ्योण् परिमाणे विकारे । हाटको निष्कः । जातरूपः । तापनीयः । परिमाणे किम् । हाटकमयी यष्टिः । 'प्राणिरजतादिभ्योञ्' ॥४।३।१५४॥ प्राणिवाचिभ्यो रजतादिभ्यश्चाञ् स्यात् विकारावयवयोः । अणादीनामपवादः । अनुदात्तादेरञ् विहितः । परिशिष्टमुदाहरणम् । कापोतम् । मायूरम् । रजतादिभ्यः । राजतम् । रजतादिषु येनुदात्ताः पठ्यन्ते तेभ्योञि सिद्धे मयड्बाधार्थं[4] वचनम् । रजत । सीस ।

---

१. B₁ drops स्यात्. २. B₁ drops अर्थे. ३. बर्हि । Bc₁, Dc₃.
४. °ड्बाधनार्थं Dc₄.

**गोपयसोर्यत्** ॥४।३।१६०॥

एतयोर्यत् स्यात्[1] विकारावयवयोः। मयडादेरपवादः। गव्यम्। पयस्यम्।

---

लोह। उदुम्बर। नीप। दारु। लोहितक[2]। विभीतक। पीतदारु। त्रिकण्टक। कण्टकार[3]। 'ञितश्च तत्प्रत्ययात्' ॥४।३।१५५॥ विकारावयवयोर्विहितात् ञितः प्रत्ययादञ् स्यात्। वृद्धमयटोपवादः। 'ओरञ्'। देवदारवस्य विकारोऽवयवो वा दैवदारवः। अनुदात्ताद्यञ्। दाधित्थस्य दाधित्थः। शम्याष्ट्लञ्। शामीलः इत्यादि। 'क्रीतवत् परिमाणात्' ॥४।३।१५६॥ 'प्राग्वहतेष्ठञ्' इत्यारभ्य क्रीतार्थे ये प्रत्यया विधास्यन्ते परिमाणात् ते विकारेऽतिदिश्यन्ते। निष्केण क्रीतः। 'असमासे निष्कादिभ्यः'। नैष्किको यथा तथा निष्कस्य विकारो नैष्किकः। संख्याप्यत्र परिमाणग्रहणेन गृह्यते ततश्च शत्यः शतिकः। साहस्र इत्यादयः। वतिः सर्वसादृश्यार्थः। ततः अध्यर्धपूर्वाद् द्विगोर्लुगित्याद्यप्यतिदिश्यते[4]। द्विसहस्रः। द्विनिष्कः। द्विनैष्किकः। 'उष्ट्राद्वुञ्' ॥४।३।१५७॥ एतयोः प्राण्यञोपवादः। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः[5]। 'उमोर्णयोर्वा' ॥४।३।१५८॥ विकारावयवयोर्वा वुञ्। औमम्। औमकम्। और्णकम्। और्णम्। 'एण्या ढञ्' ॥४।३।१५९॥ प्राण्यञोपवादः। ऐणेयं मांसम्। पुंसस्त्वञेव स्यात्। एणस्य मांसमैणम्।

**गोपयसोः**। सर्वत्र गोरजादिप्रसङ्गे यदस्त्येव मयड्विषये तु विधीयते इत्यभिप्रेत्याह। **मयडादेरिति**। स्पष्टत्वात् त्यक्तं सूत्रद्वयम्। 'द्रोश्च' ॥४।३।१६१॥ अञोपवादो यद्विकारावयवयोः। द्रव्यम्। 'माने वयः' ॥४।३।१६२॥ द्रुशब्दाद्यतोपवादो वयः स्यात्। द्रुवयं मानम्।

---

१. B₁ drops it. २. लोहित Dc₃. ३. कर्णिकार Bc₁, Dc₁, Dc₃, Dc₄ ४. दृश्यते Bc₁. ५. औष्ट्रकम् Bc₁, Dc₃, Dc₄.

फले लुक् ॥४।३।१६३॥

विकारावयव[1]प्रत्ययस्य फले वाच्ये लुक् स्यात् ॥

लुक् तद्धितलुकि ॥४।२।४९॥

[2]उपसर्जनस्त्रीप्रत्ययस्य लुक् [3]स्यात् [4]तद्धितलुकि ॥ बदर्याः फलं बदरम् । आमलकम् ।

---

फले । फलितस्य वृक्षस्य फलं विकारोवयवश्च भवति ।

लुक् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे प्राप्ते लुक् विधीयते । तद्धितलुकीति सत्सप्तमीयं स्त्रीग्रहणमुपसर्जनग्रहणं चानुवर्तत इत्यभिप्रेत्याह । **उपसर्जनस्त्रीप्रत्ययस्येति** । **बदर्याः फलं बदरमिति** । 'अनुदात्तादेश्च' इत्यञ्[6] । **आमलकमिति** । आमलक्याः फलम् । 'नित्यं वृद्धशरादिभ्यः' इति मयट् । तद्धितग्रहणं किम् । गार्गीकुलम्[7] । लुकि किम् । गार्गीत्वम् । उपसर्जनस्येति किम् । अवन्ती । कुन्ती । त्यक्तमेकं प्रसङ्गाद्व्याख्यायते । 'इद्गोण्याः' ॥१।२।५०॥ गोण्यास्तद्धितलुकि सति इकारादेशः स्यात् । लुकोपवादः । पञ्चभिर्गोणीभिः क्रीतः । पञ्चगोणिः । इदिति योगविभागः । पञ्चभिः सूचिभिः क्रीतः । '[8]वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ् । तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति लुक् । ततः 'इतो मनुष्यजातेः' इति ङीष् । पञ्चसूचिः ।

---

१. °रावयवार्थप्रत्ययस्य $B_1$. २. $B_1$ drops it. ३. उपसर्जनस्य विकारावयवप्रत्ययस्य स्त्रीप्रत्ययस्य C. ४. $B_1$ drops it. ५. P, $B_2$, $D_2$ drop it; $D_1$, $D_4$, $D_5$ have it in the beginning of the Vṛitti. ६. °त्यण् $Dc_4$. ७. गार्गिकुलम् $Dc_4$. ८. From 'वृद्धे°...to ङीष्' dropped $Bc_1$, $Dc_2$, $Dc_3$, $Dc_4$.

प्लक्षादिभ्योण् ॥४।३।१६४॥

एभ्यः[1] फलेण् स्यात्[2] ॥ विधानसामर्थ्यान्न लुक् । प्लाक्षम् । आश्वत्थम् ।

ओरञ् ॥४।२।७१॥

उवर्णान्तादञ् स्याद्[3]िकारादौ ॥ तस्य फले लुक् । जम्बाः फलं जम्बु ।

जम्ब्वा वा ॥४।३।१६५॥

जम्ब्वाः फले वाच्येण् स्याद्[4]वा । वि[5]धानान्न लुक् । जाम्बवम् ।

लुप् च ॥४।३।१६६॥

जम्ब्वाः फलप्रत्ययस्य वा[6] लुप् स्यात् ॥ जम्बूः । पक्षे प्राग्वत् । फलपाकशुषां लुबिष्टः ॥* व्रीहयः । माषाः । पुष्पफलमूलेषु ब[7]हुलम् ॥*

---

प्लक्षादिभ्यः । अणोपवादः । प्लक्ष । न्यग्रोध । अश्वत्थ । इङ्गुदी । शिग्रु । कर्कन्धू । बृहती ।

ओः । अनुदात्तादेरन्यदिहोदाहरणम् । दैवदारवं काष्ठम् ।

जम्ब्वा ।

लुप् च । लुपि युक्तवद्भावः स्त्रीप्रत्ययश्रवणं च लुको विशेषः । फलपाकशुषामिति । फलस्य पाकस्तेन शुष्यन्तीति फलपाकशुषस्तेषां संबन्धिनः फलप्रत्ययस्य लुबिष्ट इत्यर्थः । व्रीहयः । माषा इति । व्रीहीणां फलानि । बिल्वाद्यणो लुप् । माषाणां फलानि । औत्सर्गिकाणो लुप् । पुष्पेषु मूलेषु चाभिधेयेषु बहुलं लुप् स्यात् ।

---

१. अण् स्यात् फले वाच्ये C. २. $B_1$ drops it. ३. $B_1$ drops it. ४. $B_1$ drops it. ५. विधानसामर्थ्यान्न $D_1$. ६. लुब्वा $B_1$. ७. After it—लुप् $D_5$. ८. गृहपतिः $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$.

मल्लिकायाः पुष्पं मल्लिका । जातिः । विदार्या मूलं विदारी । बृहती । क्वचिन्न । पाटलं पुष्पम् ।[१]

## हरीतक्यादिभ्यश्च ॥४।३।१६७॥

एभ्यः फलप्रत्ययस्य लुप् स्यान्न[२] लुक् ॥ हरीतक्याः फलं हरीतकी । द्राक्षा । हरीतक्यादेः प्रकृतेर्लिङ्गमेवेष्यते ॥* हरीतक्याः फलानि हरीतक्यः ।[३]

---

मल्लिकेत्यादि । अत्रानुदात्तत्वलक्षणस्याञो लुप् । मल्लिकाशब्दो लघावन्त इति मध्योदात्तः । जातिशब्दः क्तिच् क्ताविति क्तिजन्तोऽन्तोदात्तः । विदारी बृहतीति । गौरादिङीषन्तावन्तोदात्तावित्यनुदात्ताद्यञो लुप् । पाटलमिति । बिल्वादित्वादण् ।

हरीत । हरीतकी । कौशातकी[४] । नेखरञ्जनी[५] । शष्कण्डी । दाँडी[६] । दोडी[७] । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । गर्भारिका[८] । कटकारिका । शेफालिका । स्पष्टत्वात् त्यक्तमेकम् । 'कंसीयपरशव्ययोर्यञञौ लुक् च' ॥४।३।१६८॥ प्राक् क्रीताच् छेन कंसीयः । उगवादियता परशव्यः । ताभ्यां यथासंख्यं विकारे यञञौ स्तः तत्संनियोगेन च तयोच्छयतोर्लुक् स्यात् । कंसीयस्य विकारः कांस्यम् । परशव्यस्य विकारः पारशवम्[९] । ननु कंसशब्दः उणादौ सप्रत्ययान्तो व्युत्पादितः परशुशब्दः कुप्रत्ययान्तस्तयोः किं लुक् न । उच्यते । प्रातिपदिकाधिकारात् धातुप्रत्ययस्य न लुक् । परशव्यादनुदात्तादित्वादञि सिद्धे लुगर्थं वचनम् ॥

इति प्राग्दीव्यतीयाः समाप्ताः । अणोवधिः पूर्णः ।

---

१. After it—बिल्वादिभ्योण् $D_5$. २. $B_1$ drops स्यात्. ३. After it—खलिताचिकादिषु वचनमेव प्रकृतेः खलितकस्य अदूरभवानि खलितकं वनानि । $D_5$. ४. कौशातकी $Dc_3$. ५. जनरञ्जनी $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ६. डाण्डी । डौडी $Bc_1$. ७. डौडी $Dc_4$. ८. गार्भारिका । कण्टकारिका $Bc_1$. ९. पारशवः $Bc_1$, $Dc_3$, $Dc_4$.

## तत्र नियुक्तः ॥४।४।६९॥

सप्तम्यन्तान्नियुक्तेऽर्थे[1] ठक् स्यात्[2] । द्वारादित्वादैच् । द्वारे नियुक्तो दौवारिकः । स्वरस्यायं सौवरः । वैयल्कशः ॥ [4]तदाहेति माशब्दादिभ्यष्ठग्वाच्यः ॥* स्वस्तीत्याह सौवस्तिकः । माशब्दिकः । स्वर्भवः सौवः[5] । [6]सौवादुमृदवम् । शुन इदं शौवनम् । अन् इति प्रकृत्या[7] । स्फैयकृतम्[8] । [9]स्वस्येदं सौवम् । तदादिविधिरप्यत्र । सौवग्रामिकः । सौवाध्यायिकः ।

---

अथ प्राग्वहतीयाः प्रत्यया उच्यन्ते । तत्र प्रक्रियाविशेष-निरूपणाय 'प्राग्वहतेष्ठक्' इति सूत्रं प्रथममपठित्वा क्रमोल्लङ्घनेनापि सूत्रं पठति ।

**तत्र नियुक्तः** । नियुक्तोऽधिकृतो व्यापारित इत्यर्थः । प्रसङ्गाद् द्वारादिगणोदाहरणानि कथयति । **सौवर** इति । 'तस्येदम्' इत्यण् । **वैयल्कश** इति । [10]व्य[11]ल्कशे भवः । **तदाहेति** । तत्कथयतीत्यत्रार्थे वाक्यादेतत्प्रत्ययविधानं नित्यः शब्द इत्यादयो माशब्दादयः प्रयोगात् ज्ञेयाः । **सौव** इति । अव्ययानां भमात्रे टिलोप इति टिलोपः । **सौवादुमृदवमिति** । स्वादुमृदुन इदम् । **स्फैयकृतमिति** । स्फ्यकृतस्येदम् । **सौवग्रामिक** इति । स्वग्रामे भवः । अध्यात्मादित्वात् ठञ् । **सौवाध्यायिक** इति । स्वाध्याये भवः । पूर्ववत् ठञ् ।

---

१. अर्थे dropped P. २. Dropped $B_1$. ३. Before it—शुक्रशालायां नियुक्तः शौक्रशालिकः $B_2$. ४. Before it—ऐच् प्रसङ्गाद् दर्शितावेतौ । $B_2$. ५. सौवरः $D_4$. ६. स्वादुमृदुन इदं सौवादुमृदवम् $B_1$, $B_2$, $D_5$; सौवादवम् मृदवम् C, $D_3$. ७. प्रकृतिभावः $B_1$ अन् प्रकृत्या $D_1$. ८. स्फ्यकृतस्येदं before it in $B_1$, $D_5$. ९. $B_1$ drops स्वस्येदं सावम् ।. १०. वैयल्कस $Bc_1$, $Dc_4$. ११. व्यल्कसे $Bc_1$, $Dc_4$.

**न्यग्रोधस्य च केवलस्य ॥७।३।५॥**

अस्य ऐजागमः स्यान्न वृद्धिः ॥ नैयग्रोधं फलम् । केवलस्य किम् । न्यग्रोधमूले भवा न्यग्रोधमूला[1]: शालयः ।

**स्वागतादीनां च ॥७।३।७॥**

एषामैजागमो[2] न स्यात् । आदिवृद्धिः । स्वागतमित्याह स्वागतिकः । स्वाध्वरिकः । स्वाङ्गिः । व्याङ्गिः ।[3] व्यावहारिकः ।

**पथ्यतिथिवसतिस्वपतेर्ढञ् ॥४।४।१०४॥**

स्वापतेयम् ।

---

**न्यग्रोधस्य** । न्यक् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थं वचनम् । केवलस्यैवेति अव्युत्पत्तिपक्षे विध्यर्थमेव ।

**स्वागत** । शोभनमागतं स्वागतम् । तदाहेति माशब्दादिभ्यष्ठक् । **स्वाध्वरिक** इति । शोभनोऽध्वरः स्वध्वरः । 'तेन चरति' इति सूत्रेण ठक् । **स्वाङ्गिरिति** । शोभनान्यङ्गान्यस्य स्वङ्गः । तस्यापत्यम् । 'अत इञ्' । **व्याडिरिति** । विशेषेणाडत्युद्यमं करोतीति व्यडः । तस्यापत्यम् । **व्यावहारिक** इति । व्यवहरणं व्यवहारः । भावे घञ् । व्यवहारेण चरति । व्यवहारशब्दो लोकप्रवृत्तौ वर्तते न कर्मव्यतिहारे । अतः 'न कर्मव्यतिहारे' इति निषेधो न प्राप्नोतीत्यत्र पाठः । **स्वापतेयमिति** । स्वपतौ साधु । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । द्वारादिषु स्वशब्दस्य पाठात् तदादिविधेश्च तत्राङ्गीकारात् प्राप्तिः ।

---

१. मूलीयाः $D_2$. २. °मैच् P, C, $D_1$, $D_2$, $D_4$, $D_5$. ३. $B_1$ and C $D_4$ have व्याडिः before it; P has व्याङ्गिः before it.

**श्वादेरिञि ॥७।३।८॥**

श्वादेरैच् इञि परे ॥ श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । इकारादाविति वाच्यम् ।

**श्वगणाट्ठञ् च ॥४।४।११॥**

अस्मात् तेन [1]चरतीत्यर्थे ठञ् स्यात्[2] ठन् च ॥ श्वगणेन चरतीति श्वागणिकः । [4]श्वगणिकः ।

**पदान्तस्यान्यतरस्याम् ॥७।३।९॥**

पदशब्दान्तस्य श्वादेरैच् [5]स्याद्वा । श्वापदस्येदं [6]श्वापदं शौवापदम् । न्यङ्कोर्वेति केचित् । [7]न्याङ्कवम् । नैयङ्कवम् ।

---

**श्वादेः** । श्वन्शब्द आदिर्यस्य स श्वादिस्तस्येत्यर्थः । **इकारादाविति** । इञीत्यस्य स्थाने इकारादाविति वाच्यमित्यर्थः । वक्तव्यप्रयोजनं दर्शयितुं सूत्रं पठति ।

**श्वगणात्** । ष्ठनो ङीषर्थः षकारः । **श्वगणिक इति** । इकारादित्वादैच्निषेधः ।

**पदान्तस्य** । श्वादेरिञीति नित्यनिषेधे प्राप्ते विकल्पः । स्पष्टत्वात् त्यक्तं सूत्रद्वयं व्याख्यायते । 'उत्तरपदस्य' ॥७।३।१०॥ अयमधिकारः । यदितः परमुच्यते 'हनस्तोचिण्णलोः' इति यावत् तदुत्तरपदस्येत्येवं वेदितव्यम् । 'अवयवादृतोः' ॥७।३।११॥

---

१. चरत्यर्थे $B_1$, $D_1$. २. $B_1$ drops it. ३. $B_1$, P drop इति. ४. ठन् श्वगणिकः $B_2$. ५. $B_1$ drops स्यात्. ६. शौवापदम् । श्वापदम् $B_1$. ७. न्याङ्कवम् dropped $D_3$, $D_5$, $B_1$, $B_2$. ८. नित्ये $Dc_2$.

## सुसर्वार्धाज्जनपदस्य ॥७।३।१२॥

एभ्यो जनपदवाचिन उत्तरपदस्यैव वृद्धिः स्यात् ॥ सुपाञ्चालः । सर्वपाञ्चालः । अर्धपाञ्चालः ।

---

अवयववाचिन उत्तरस्य ऋतुवाचिनः पदस्याचामादेरचः स्थाने वृद्धिः स्यात् तद्धिते ञिति णिति किति परे । पूर्वं वर्षाणामित्येकदेशिसमासः । तत्र भवः । 'वर्षाभ्यष्ठक्' । तत्रावयवपूर्वस्य तदन्तविधेरिष्टत्वात् पूर्ववार्षिकः । अवयवात् किम् । पूर्वासु वर्षासु भवः पौर्ववार्षिकः । 'कालाट्ठञ्' ।

**सुसर्वा** । **सुपाञ्चाल** इत्यादि । शोभनाः पञ्चालाः[1] सुपञ्चालाः । सर्वे पञ्चालाः सर्वपञ्चालाः । पञ्चालानामर्धमर्धपञ्चाला इति विगृह्यते । तेषां राजेत्यर्थे क्षत्रियसमानशब्दात् जनपदस्य राजन्यपत्यवदिति वक्तव्येन 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तस्य वुञोपवादोऽञ् जातः । तत उत्तरपदवृद्धिः । सुपञ्चालेषु भव इत्याद्यर्थेषु तु 'अवृद्धादपि बहुवचनविषयात्' इति वुञुदाहार्यः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । इति । ननु जनपदान्तात् कथमञ्वुञौ स्तः । उच्यते । 'सुसर्वार्धाद्दिक्शब्देभ्यो जनपदस्य' इति तदन्तविधेरिष्टेः । स्पष्टत्वात् त्यक्तानि वृद्धितदपवादविधायकानि षोडश सूत्राणि प्रसङ्गाद् व्याख्यायन्ते । 'दिशोमद्राणाम्' ॥७।३।१३॥ दिग्वाचिन उत्तरस्य मद्रवर्जितस्य जनपदवाचिनोचामादेरचो वृद्धिः स्यात् ञिति णिति किति तद्धिते परे । पूर्ववदेव तदन्तविधिः प्रत्ययश्च । दिशः किम् । पञ्चालानां पूर्वः पूर्वपञ्चालः । तत्र भवः पौर्वपञ्चालः । अत्र च दिशि वर्तमानो दिक्शब्दोभिप्रेतो न चायं दिशि किं तु अवयवेतो न । अमद्राणा किम् ।

---

१. Dropped $B_1$. २. उत्तरपदस्य $Dc_4$. ३. पाञ्चालाः throughout $Dc_3$. ४. Before it—पूर्वपाञ्चालकः । $Dc_3$. ५. पाञ्चालानां, पाञ्चालः $Dc_3$.

पौर्वमद्रः । 'मद्रेभ्योञ्' । 'प्राचां ग्रामनगराणाम्' ॥७।३।१४॥ ग्रामत्वादेव नगराणामपि ग्रहणे सिद्धे यद् द्वयोर्ग्रहणं तत् संबन्धभेदज्ञापनार्थम् । अङ्गस्येति प्रकृतमुत्तरपदस्येति च । तत्र ग्रामाणामित्येतदङ्गस्येत्यनेन संबध्यते । अनगराणामित्येतदुत्तरपदस्येत्यनेन । ततश्चायमर्थः । दिक्शब्दादुत्तरस्य प्राग्देशग्रामवाचिनामङ्गानामवयवस्य पदस्य वृद्धिः स्यात् तथा[1] दिश उत्तरस्य[2] प्राग्देशनगरवाचिनः[3] पदस्य वृद्धिः स्यात् इति । दिक्पूर्वपदो हि समुदायः । पूर्वेषुकामशम्यादिर्ग्रामनाम । पाटलिपुत्रिकादिः[4] पुनरुत्तरपदमेव नगरवाचिग्रामाणां तावत् । पूर्वेषुकामशम्यां भवः पूर्वेषुकामशमः । 'दिक्पूर्वपदादसंज्ञायां ञः' । नगराणाम् । पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः । 'रोपधेतोः प्राचाम्' इति वुञ् । 'संख्यायाः संवत्सरसंख्यस्य च' ॥७।३।१५॥ संख्याया* उत्तरयोः संवत्सरसंख्ययोर्वृद्धिः स्यात् । द्वौ संवत्सरावधीष्टादिर्द्विसांवत्सरिकः । प्राग्वहतीयष्ठञ्[5] । द्वे षष्टी अधीष्टादिर्द्विषाष्टिकः । द्विषष्टिशब्दो वर्षेषु संख्येयेषु वर्तमानं कालाधिकारोक्तं ठञमुत्पादयति । परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिक इत्यादावुत्तरपदवृद्धिर्न । 'वर्षस्याभविष्यति' ॥७।३।१६॥ संख्याया उत्तरस्य वर्षस्य वृद्धिस्तद्धिते स चेत् तद्धितो भविष्यति न । द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः । अभविष्यतीति किम् । त्रीणि वर्षाणि भावीति त्रिवार्षिकं धान्यम् । अधीष्टभृतयोरभविष्यतीति निषेधो न । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः । 'परिमाणान्तस्यासंज्ञाशाणयोः' । ॥७।३।१७॥ परिमाणान्तस्याङ्गस्य संख्याया यदुत्तरपदं तस्य वृद्धिः संज्ञायां शाणे चोत्तरपदे न । द्वौ कुडवौ प्रयोजनमस्य

१. न च for तथा $Bc_1$. २. उत्तरपदस्य $Dc_3$. ३. °ग्रामवाचिनः $Dc_3$. ४. पुत्रकादिः $Dc_1$, $Dc_4$; पुत्रादिः $Dc_2$. ५. आर्हीयष्ठका $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$.

द्विकौडविकः । 'प्राग्वहतेष्ठञ्' । अनार्हीयत्वात् 'अध्यर्ध—' इति लुङ् न । असंज्ञाशोणयोः किम् । पञ्च लोहित्यः परिमाणमस्य पाञ्चलोहितिकम् । तद्धितान्तः समुदायः संज्ञा । 'तदस्य परिमाणम्' इति ठञ् । द्वाभ्यां शाणाभ्या क्रीतं द्वैशाणम् । 'द्वित्रिपूर्वादण् च' इत्यण् । असंज्ञाशाणकुलिजानामिति केचित् पठन्ति । द्वे कुलिजे प्रमाणमस्य द्वैकुलिजः । 'जे प्रोष्ठपदानाम्' ।७।३।१८।। जातार्थविहिते ञिति णिति किति तद्धिते परे प्रोष्ठपदानामुत्तरपदस्य वृद्धिः । प्रोष्ठपदासु जातः प्रोष्ठपादः । 'संधिवेला—' इत्यण् । बहुवचनात् पर्यायग्रहणम् । भद्रपदासु जातो भद्रपादः । जे इति किम् । प्रोष्ठपदासु भवः प्रौष्ठपदो मेघः । 'प्राचां नगरान्ते' ।७।३।२४।। प्राग्देशे नगरान्तेऽङ्गे पूर्वोत्तरपदयोरचामादेरचो वृद्धिः स्यात् ञिति णिति किति तद्धिते परे । सुह्मनगरे भवः सौह्मनागरः । प्राचां किम् । उदक्षु मद्रनगरं तत्र भवो माद्रनगरः । 'जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्' ।७।३।२५।। जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्य वृद्धिः स्यादुत्तरपदस्य वा । कुरुजङ्गलेषु भवं कौरुजाङ्गलं कौरुजङ्गलम् । वैश्वधैनवं वैश्वधेनवम् । सौवर्णवालजः । सौवर्णवलजः । 'अर्धात् परिमाणस्य पूर्वस्य तु वा' ।७।३।२६।। अर्धात् परस्य परिमाणवाचिनो वृद्धिः पूर्वपदस्य वा । अर्धद्रोणेन क्रीतमार्धद्रौणिकमर्धद्रौणिकम् । 'नातः परस्य' । ७।३।२७।। अर्धात् परस्य परिमाणाकारस्य न वृद्धिः पूर्वपदस्य तु वा । अर्धप्रस्थिकः । आर्धप्रस्थिकः । तपरत्वादिह न । अर्धखार्यां भवा अर्धखारीति । किं च स्यात् । अर्धखारीभार्य इत्यत्र 'वृद्धिनिमित्तस्य' इति पुंवत्त्वनिषेधो न स्यात् । 'प्रवाहणस्य ढे' ।७।३।२८।। प्रवाहणशब्दस्य ढे परत उत्तरपदस्य वृद्धिः स्यात् पूर्वपदस्य तु वा । प्रवाहणस्यापत्यं प्रावाहणेयः । प्रवाहणेयः । शुभ्रादित्वात् ढक् । 'तत्प्रत्ययस्य च' ।७।३।२९।। ढप्रत्ययान्तस्य प्रवाहणस्य

१. °पदवृद्धिः Dc3.

ञिति णिति किति तद्धिते परे उत्तरपदस्य वृद्धिः स्यात् पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुमशक्येति सूत्रारम्भः 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्' ।७।३।३०।। नञ उत्तरेषामेषां वृद्धिः स्यात् पूर्वपदस्य तु वा । आशौचम् । अशौचम् । आनैश्वर्यम् । अनैश्वर्यम् । आक्षैत्रज्ञम् । अक्षैत्रज्ञम् । आकौशलम् । अकौशलम् । आनैपुणम् । अनैपुणम् । 'यथातथयथापुरयोः पर्यायेण' । ७।३।३१।। नञ उत्तरयोरेतयोः पूर्वपदयोः क्रमेणाचामादेरचो वृद्धिः स्यात् ञिति णिति किति तद्धिते परे । आयथातथ्यम् । अयाथातथ्यम् । आयथापुर्यम् । अयाथापुर्यम् । ब्राह्मणादिदर्शनात् ष्यञ् । यथातथयथापुरशब्दौ 'यथासादृश्ये' इत्यव्ययीभावौ । तथा हि नपुंसकाश्रयं ह्रस्वत्वं कृतम् । भाष्ये तु यथा विगृहीतमयथातथा भावं[1] इति तथा[2] विचार्यमाणे 'सुप् सुपा' इति समासो लक्ष्यते । 'देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्' ।।७।३।१।। एषामङ्गानामचामादेरचः स्थाने वृद्धिप्रसङ्गे आकारादेशः स्यात् । देविकायां भवं दाविकमुदकम् । पूर्वदेविका नाम प्राचां ग्रामस्तत्र भवः पूर्वदाविकः । शिंशपानां विकारः शांशपः । पलाशादित्वात्पक्षेण् । अनुदात्तादिलक्षणो वाञ् । पूर्वशिंशपा नाम प्राचां ग्रामस्तत्र भवः पूर्वशांशपः । दित्यौह इदं दात्यौहम् । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयसि भवः श्रायसः । वहीनरस्याचामादेरचः स्थाने वृद्धिप्रसङ्गे इकारादेशः स्यादिति वाच्यम् । वहीनरस्यापत्यं वैहीनरः । केचिद्विहीनरस्यैव वैहीनरिमिच्छन्ति । 'केकयमित्रयुप्रलयानां यादेरियः' ।।७।३।२।। एषां यादेः शब्दस्येयादेशः स्यात् ञिति[3] णिति किति तद्धिते परे । केकयस्यापत्यं कैकयः । 'जनपदशब्दात् क्षत्रियादञ्' ।। मित्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते । गोत्रचरणलक्षणो वुञ् । प्रलयादागतं प्रालेयमुदकम् ।

१. After it—अयथापुराभाव $Dc_2$. २. यथा $Bc_1$. ३. तद्धिते ञिति णिति किति च परे । $Dc_4$.

**संयोगादिश्च ॥६।४।१६६॥**

संयोगात् पर इन् [1]प्रकृत्या स्यादणि परे ॥ चाक्रिणः ।

**अन् ॥६।४।१६७॥**

[2]अणि [3]परे अन् प्रकृत्या [4]स्यात् ॥ याज्वनः । सामनः ।

**न मपूर्वोपत्येवर्मणः ॥६।४।१७०॥**

मात् परोन् प्रकृत्या [5]न स्यादपत्येणि न तु वर्मणः ॥ सुसाम्नोपत्यं सौसामः । भाद्रशर्मः । अपत्ये किम् । साम्नोयं सामनः । अवर्मणः किम् । भाद्रवर्मणः । अश्मनो विकारे टिलोपः[6] । [7]अश्मनो विकार आश्मः । आश्मनोन्यः । [8]अनुदात्तादेश्चेत्यञन्तत्वान्न प्रकृतिभावः । हेम्नो विकारो हैमः ॥

---

**संयोगादिश्च** । 'इनण्यनपत्ये' इति सिद्धे अपत्यार्थोयमारम्भः । **चाक्रिण** इति । चक्रमस्यास्तीति चक्री । इन् । तस्यापत्यम् । अण् ।

**अन्** । एतत्सूत्रं पूर्वमेव व्याख्यातम् । तेनाणि प्रकृतिभावाद् याज्वन इत्यादौ न टिलोपः । **याज्वन** इति । इष्टवान् यज्वा तस्यापत्यम् । **सामन** इति । साम्नोयम् । 'तस्येदम्' इत्यण् ।

**न म** । हितनाम्नो वेति वाच्यम् । हैतनामः । हैतनामनः । **अश्मनो विकार** इति । वक्तव्यम् । अनुदात्तादेरिति हेमन् शब्दोन्तोदात्तत्वादनुदात्तादिः ।

---

१. अणि परे प्रकृत्या स्यात् $B_1$. २. $D_1$, $D_4$ drop the Vṛitti. ३. $B_1$, $B_2$ drop it. ४. $B_1$, $B_2$ drop it. ५. नापत्येणि $D_1$, $D_3$, $B_1$, $B_2$. ६. After it—अणि निपात्यते $B_1$. ७. $B_1$ has आश्मः प्रासादः for अश्मनो विकार आश्मः; आश्मो विकारः । आश्मनोन्यः । $D_1$. ८. विकारार्थेणि अन् प्रकृत्या नेति केचित् C, $D_3$, $B_1$ (न प्रकृत्येति केचित् $B_1$).

**ब्राह्मोजातौ** ॥६।४।१७१॥

अयं निपात्यते ॥[१] ब्राह्ममहः । जातावपत्ये तु[२] ब्रह्मणोपत्यं ब्राह्मणः ।

**कार्मस्ताच्छील्ये**[३] ॥६।४।१७२॥

कर्मशीलः कार्मः । कार्मणमन्यत् ॥

**औक्षमनपत्ये** ॥६।४।१७३॥

अणि निपात्यते ॥ औक्षम् । अपत्ये तु

---

**ब्राह्मः** । योगविभागोत्र क्रियते । ब्राह्म इत्येकः । ततोजाताविति । तत्र ब्राह्म इत्येतदपत्याधिकारेपि सामर्थ्यादपत्यादन्यत्राणि टिलोपार्थं निपात्यत इत्यभिप्रेत्याह । **अयं निपात्यते** इति । **ब्राह्ममह** इति । ब्रह्मण इदम् । अजाताविति द्वितीयो योगोपत्य इत्यनुवर्तते । ततश्च जातावपत्येणि ब्रह्मन् इत्येतस्य टिलोपो न भवतीति नञो भवतिना संबन्ध इतीममर्थमभिप्रेत्याह । **जातावपत्ये त्वित्यादि** । अपत्ये किम् । ब्राह्मी औषधिः ।

**कार्मः** । **कर्मशीलः कार्म** इति । 'छत्रादिभ्यो णः' इति णः । यद्येवं व्यर्थमिदं 'नस्तद्धिते' इति नलोपः सिद्ध एवेति चेत् । उच्येत । न व्यर्थम् । ज्ञापनार्थं ताच्छीलिकेणे यण्कृतानि कार्याणि स्युरिति । तेन चौरी तापसीत्यादौ ङीप् सिद्धः । ततश्च णेपि क्वचिदित्यादि यत् स्त्रीप्रत्ययेषूक्तं तदुपपन्नम् । **कार्मणमिति** । यथा संदेशवाचा[४] प्रतिपादितमेवमेतत् कर्तव्यमिति तच्छ्रुत्वा तथैव यत् क्रियते तत् कार्मणमुच्यते । 'तद्युक्तात्कर्मणोण्' इत्यण् ।

**औक्षम्** । **औक्षमिति** । 'तस्येदम्' इत्यण्[५] ।

---

१. After it—अजातौ $D_2$, $D_3$, $D_5$, $B_1$. २. Dropped in $B_1$. ३. कर्मणस्ताच्छील्ये $B_2$. ४. वाचा $Dc_1$, $Dc_3$, $Dc_4$. ५. इति न्याये $Dc_2$.

## षपूर्वहन्धृतराज्ञामणि ॥६।४।१३५॥

एषामेवाणि तद्धिते नोल्लोपः[1] स्यात् ॥ उक्ष्णोपत्यमौक्ष्णः । वार्तघ्नः । धार्तराज्ञः । एषामेव[2] किम् । सामनम् ।

---

षपूर्व । एषामिति । षकारपूर्वो योन्शब्दस्तदन्तस्याङ्गस्या-हन्शब्दस्य धृतराजन्शब्दस्य चेत्यर्थः । वार्तघ्न इत्यादि । वृत्रघ्नोपत्यम् । धृतराज्ञोपत्यम् । सामनमिति । अत्रान्निति प्रकृतिभावाट्टिलोपो न । अणि किम् । तक्ष्णोपत्यं ताक्ष्ण्यः । 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यः । त्यक्तं सूत्रद्वयम् । 'गाथिविदथिकेशिगणिपणिनश्च' ॥६।४।१६५॥ अपत्यार्थोयमारम्भः । एते चाणि प्रकृत्या स्युः । गाथिनोपत्यं गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः । 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनि-भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' ॥६।४।१७४॥ एते निपात्यन्ते । दण्डिनोपत्यं दाण्डिनायनः । हस्तिनोपत्यं हास्तिनायनः । उभयत्र 'नडादिभ्यः फक्' । अथर्वाणां ग्रन्थमधीते आथर्वणिकः । 'वसन्तादिभ्यष्ठक्' । जिह्माशिनोपत्यं जैह्माशिनेयः । शुभ्रादित्वाड्ढक् । वाशिनोपत्यं[3] वाशिनायनिः[4] । 'उदीचां वृद्धादगोत्रात्' इति फिञ् । एतेषु पञ्चसु प्रकृतिभावनिपातनात् टिलोपो न । भ्रूणघ्नो भावो भ्रौणहत्यम् । धीव्नो भावो धैवत्यम् । उभयत्र ष्यञ् तोन्तादेशश्च निपात्यते । सरय्वां भवं सारवमुदकम् । अत्राणि अयुशब्दलोपो निपात्यते । इक्ष्वाकुदेशे भव ऐक्ष्वाकः । उकारलोपो निपात्यते । मित्रयोरपत्यं मैत्रेयः । गृष्ट्यादित्वाड्ढञ् । अत्र यादेरियादेशापवादो लोपो निपात्यते । हिरण्यविकारो हिरण्मयम् । मयटि यादिलोपो निपात्यते ।

---

१. °नोकार लोपः $B_1$; °नो लोपः $D_2$, $D_5$. २. °मेवेति किम् $D_5$. ३. वासिनो° $Dc_3$. ४. वसिनायनिः $Dc_3$.

**प्राग्वहतेष्ठक्** ॥४।४।१॥

तद्वहतीत्यतः प्रागित ऊर्ध्वं ठगधिक्रियते ॥

**तेन दीव्यति खनति जयति जितम्** ॥४।४।२॥

तृतीयान्तात् दीव्यत्याद्यर्थेषु[1] ठक् स्यात् ॥ अक्षैर्दीव्यती[2]-त्याक्षिकः। आक्षिकी।[3] सैनिकः। भावप्रत्ययान्तान्निवृत्तेर्थे[4] इमन् वाच्यः। पाकेन निर्वृत्तः पाकिमः। [5]त्यागिमः।

---

**प्राग्वहतेः**। आहेत्यर्थे प्रभूतादिभ्य उपसंख्यानं ठकः। प्रभूतमाह प्राभूतिकः। पार्याप्तिकः। क्रियाविशेषणात् प्रत्ययः। पृच्छतौ सुस्नातादिभ्यः।* सुस्नातं पृच्छति सौस्नातिकः। सौखरात्रिकः। सौखशायनिकः। गच्छतौ परदारादिभ्यः।* परदारान् गच्छति पारदारिकः। गौरुतल्पिकः।

**तेन**। **तृतीयान्तादिति**। करणतृतीयान्तादिति ज्ञेयम्। तथोक्तं **पाणिनीयमतदर्पणे**।

'साधनात् तद्धितो ज्ञेयः कर्तुर्नाभिधानतः।

देवदत्तेन जितमित्यादौ तेन न जायते' ॥ इति।

**आक्षिकीति**। 'टिड्ढाणञ्—' इति ङीप्। अभ्र्या खनति आभ्रिकः। अक्षैर्जयति आक्षिकः। अक्षै[6]र्जितमाक्षिकम्। **भाव-प्रत्ययान्तादिति**। तृतीयान्ताद्भावप्रत्ययान्तान्निवृत्त इत्यर्थे इमन् वाच्य इत्यर्थः। पाकत्यागौ भावघञन्तौ। स्पष्टत्वात्त्यक्तान्यष्टाविंशतिः। 'कुलत्थकोपधादण्' ॥४।४।४॥ कुलत्थात् कोपधात् तृतीयान्तात् संस्कृतेर्थेण्। ठकोपवादः। कुलत्थैः संस्कृतं कौलत्थम्। तैत्तिडीकम्। 'तरति' ॥४।४।५॥ तृतीयान्तात्तरतीत्यर्थेठक्। उडुपेन तरति

---

१. दीव्यत्यर्थेषु C. २. P, D1 drop इति. ३. After it—कौद्दालिकः। D1, D3, B1, B2, सैनिकः. ४. अर्थे is dropped in P and C. ५. P has त्यागिकः before it; त्यागेन निवृत्तस्त्यागिमः। D5. ६. °जित आक्षिकः Dc3.

औडुपिकः । धार्मिकः । 'गोपुच्छाट्ठञ्' ॥४।४।६॥ ठकोपवादः । गोपुच्छेन तरति गौपुच्छिकः । ञित्स्वरेणाद्युदात्तः । ठकि तु कित इत्यन्तोदात्तः स्यात् । 'नौद्व्यचष्ठन्' ॥४।४।७॥ तेन तरतीत्यर्थे । नावा तरति नाविकः । द्व्यचः । घटेन तरति घटिकः । घटिका । नित्त्वादाद्युदात्तत्वम् । षः सांहितिकोतो न षित् ।

आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।

आवसथात् किसरादेष्ठकाधिकारे षितः सप्त ॥

'चरति' ॥४।४।८॥ तृतीयान्ताट्ठक् चरतीत्यर्थे । चरतिर्भक्षणे गतौ च वर्तते । दध्ना चरति भक्षयति दाधिकः । हस्तिना चरति गच्छतीति हास्तिकः । 'आकर्षात् ष्ठल्' ॥४।४।९॥ आकर्षः सुवर्णपरीक्षोपलः । तेन चरति आकर्षिकः । षो ङीषर्थः । लो लीति इति प्रत्ययात् पूर्वस्योदात्तत्वार्थः । 'पर्पादिभ्यष्ठन्' ॥४।४।१०॥ पर्पेण चरति पर्पिकः । पर्पिकी । पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल । पादः पच्च । 'वेतनादिभ्यो जीवति' ॥४।४।१२॥ तेनेति ठक् । वेतनेन जीवति वैतनिकः । वेतन । वाह । अर्धवाह । धनुर्दण्ड । संघातविगृहीतार्थम् । धानुर्दण्डिकः । धानुष्कः । दाण्डिकः । जाल । वेश । उपवेश । प्रेषण । उपहस्ति । सुख । शय्या । शक्ति । उपनिषद् । उपवेष । स्फिज । पाद । उपस्थान । 'वस्नक्रयविक्रयाट्ठन्' ॥४।४।१३॥ वस्नेन जीवति वस्निकः । क्रयविक्रयग्रहणं संघातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः । 'आयुधाच्छ च' ॥४।४।१४॥ ठन् च । आयुधेन जीवति आयुधिकः । आयुधीयः । 'हरत्युत्सङ्गादिभ्यः' ॥४।४।१५॥ ठक् । उत्सङ्गेन हरति औत्सङ्गिकः । उत्सङ्ग ।

१. पर्पादिभ्यो $Dc_3$. २. ष्ठकोधिकारे $Dc_3$, $Dc_4$. ३. उपवस्ति $Dc_2$. ४. स्फिग $Bc_1$, $Dc_1$, $Dc_4$. ५. आयुधीयः । आयुधिकः । $Dc_3$.

उडुप । उत्पुत[1] । उत्पुट । पिटाक । पिटक । 'भस्त्रादिभ्यष्ठन्' ॥४।४।१६॥ भस्त्रेन हरतीति भस्त्रिकः । भस्त्रिकी । भस्त्र । भरट । भरण । शीर्षभार । शीर्षेभार[2] । अंसभार[3] । अंसेभार । अंसहार ॥ 'विभाषाविवधवीवधात्' ॥४।४।१७॥ तेन हरति[5] । वा ष्ठन् । विवधिकः । वीवधिकः । वैवधिकः । विवधिकी[6] । वीवधिकी । 'अण् कुटिलिकायाः' ॥४।४।१८॥ कुटिलिका वक्रगतिः । वक्रगा[7] लोहयष्टिश्च । तया हरति मृगं कौटिलिको व्याधः । कौटिलिकः कर्मकरः । स हि तयाङ्गारान् हरति । 'निवृत्तेक्षद्यूतादिभ्यः' ॥४।४।१९॥ ठक् । अक्षद्यूतेन निवृत्तमाक्षद्यूतिकम् । अक्षद्यूत । जंघूत । जङ्घाप्रहत । जङ्घाप्रहृत[9] । पादस्वेदन[10] । कण्टकमर्दन । गतागत । गतानुगत । 'अपमित्ययाचिताभ्यां कक्कनौ' ॥४।४।२१॥ अपमित्यनिर्वृत्तम्[11] । आपमित्यकम् । अपमयेन निर्वृत्तमित्यर्थः[12] । याचितेन निर्वृत्तं[13] याचतिकम् । 'संसृष्टे' ॥४।४।२२॥ तेनेति ठक् । दध्ना संसृष्टं दाधिकम् । 'चूर्णादिनिः' ॥४।४।२३॥ संसृष्टे । ठकोपवादः । चूर्णैः संसृष्टाश्चूर्णिनोपूपाः । 'लवणाल्लुक्' ॥४।४।२४॥ सैन्धवादिद्रव्यवाचिनो लवणशब्दात् परस्य ठको लुक् । न च रसवाचिनः । लवणेन संसृष्टं लवणं शाकम् । 'मुद्गादण्' ॥४।४।२५॥ मुद्गैः संसृष्टं मौद्गमन्नम् । 'व्यञ्जनैरुपसिक्ते' ॥४।४।२६॥ ठक् । दध्नोपसिक्तं दाधिकम् । व्यञ्जनैः किम् । अम्भसोपसिक्तम् । 'संसृष्टे' इति वर्तमाने उपसिक्तग्रहादोदनादावेव स्यादिह न । सूपेनोपसिक्ता स्थालीति । 'ओजः सहोम्भसा वर्तते' ॥४।४।२७॥ ओजसा वर्तते ओजसिकः ।

१. उद्गृहीत Bc1, Dc1, Dc3, Dc4. २. शीर्षेभार and अंसेभार dropped Bc1, Dc1. ३. असंभार । असंहर Dc3. ४. Dropped Dc2. ५. हरतीति Bc1. ६. Dropped Bc1. ७. वक्रीग्राहलोह° Bc1, Dc1. ८. Dropped Bc1, Dc1, Dc3, Dc4. ९. °प्रहार Bc1. १०. °घाटन Bc1. ११. °निवृत्तम् Bc1. १२. निवृत्त° Bc1. १३. निवृत्तः याचितकः Bc1, Dc1, Dc3, Dc4.

**पक्षिमत्स्यमृगान् हन्ति ॥४।४।३५॥**

एभ्यो द्वितीयान्तेभ्यो हन्त्यर्थे ठक् स्यात्[1] ॥ स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्[2] । पक्षिणो हन्तीति[3] पाक्षिकः ॥[4]

---

सहसा वर्तते साहसिकः । अम्भसा वर्तते आम्भासिकः । 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' ॥४।४।२८॥ तदिति द्वितीयासमर्थात् प्रत्यनुपूर्वादीपादेर्वर्तत इत्यर्थे ठक् । प्रतीपं वर्तते प्रातीपिकः । अन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । 'परिमुखं च' ॥४।४।२९॥ वर्तत इति ठक् । परिमुखं वर्तते पारिमुखिकः सेवकः । चकारोनुक्तसमुच्चयार्थः । पारिपार्श्विकः । 'प्रयच्छति गर्ह्यम्' ॥४।४।३०॥ ठक् । द्विगुणं प्रयच्छति द्वैगुणिकः । द्विगुणमिति तादर्थ्यात्ताच्छब्द्यम् । द्विगुणं ग्रहीतुमेकगुणं ददातीत्यर्थः । अन्यथा गर्ह्यत्वाभावात् । वृद्धेश्च वृधुष्यादेशः । वार्धुषिकः । प्रकृत्यन्तरं वा वृधुषिशब्दः । 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' ॥४।४।३१॥ यथासंख्यं प्रयच्छति गर्ह्यमित्यर्थे । कुसीदं प्रयच्छति कुसीदिकः । कुसीदिकी । अत्रापि तादर्थ्यात्ताच्छब्द्यम् । ये दश दत्ता एकादश भविष्यन्ति ते दशैकादश तान् प्रयच्छति दशैकादशिकः । दशैकादशिकी । 'उञ्छति' ॥४।४।३२॥ उच्चिनोतीत्यर्थे ठक् । बदराण्युञ्छति बादरिकः । 'रक्षति' ॥४।४।३३॥ अत्रार्थे द्वितीयान्तात् ठक् । समाजं रक्षति सामाजिकः ।

**पक्षिमत्स्य । स्वरूपस्येत्यादि । अर्थप्रधानत्वान्निर्देशस्येत्यर्थः ।**

---

१. Dropped $B_1$. २. ग्रहणात् $B_2$. ३. इति dropped $D_4$. ४. After पाक्षिकः $D_6$ has–श्वादेरैच् स्याद्वा ॥ श्वपदस्येदं श्वापदम् । शौवापदम् । न्यकोर्वेति केचित् । न्याकवम् । नैयकवम् । 'सुसर्वार्धाज्जनपदस्य ॥' एभ्यो जनपदवाचिन उत्तरपदस्यैव वृद्धिः स्यात् । सुपाञ्चालः । सर्वपाञ्चालः । अर्धपाञ्चालः । 'संयोगादिश्च ॥' संयोगात् परस्येन् प्रकृत्या स्यात् अणि अनपत्ये । चाक्रिणः । याज्वनः । सामनः । 'न मपूर्वोपत्ये वर्मणः ॥' मपूर्वोन् प्रकृत्या न स्यात् अपत्येणि न तु वर्मणः । सुसाम्नोपत्यं सौसामिनः । भाद्रशर्मः । अपत्ये किम् । साम्नोयं सामनः । अवर्मणः किम् । भाद्रवर्मणः । शाकुनिकः । तैत्तिरिकः । &c. ५. गृहीतमे° $Bc_1$.

शाकुनिकः । तैत्तिरिकः । मार्गिकः । हरिणिकः । सारङ्गिकः ।[2] मात्स्यिकः । अत्र पर्याया न गृह्यन्ते । अनिमिषान्[4] हन्तीति आनिमिषिकः । मीनस्येष्टिः । मैनिकः । विशेषाणाम् ।[5] शाकुलिकः । मार्गिकः[6] । हारिणिकः । शार्ङ्गिकः ॥

संस्कृतम् ॥४।४।३॥

तृतीयान्तात् संस्कृतेऽर्थे[7] ठक् स्यात्[8] ॥ दध्ना संस्कृतो दाधिकः ॥

शब्ददर्दुरं करोति ॥४।४।३४॥

आभ्यां[9] द्वितीयान्ताभ्यां करोत्यर्थे ठक्[10] ॥ शब्दं[11] करोतीति[12] शाब्दिकः । दार्दुरिकः ॥

---

**शाकुनिक** इति । पक्षिपर्यायः शाकुनिशब्दः । **तैत्तिरिक**[13] इति । पक्षिविशेषस्तित्तिरिः । मृगपर्यायो हरिणः । सारङ्गो मृगविशेषः । **अत्र पर्याया न गृह्यन्त** इति । अत्र मत्स्ये अनिमिषादयः पर्याया न गृह्यन्ते । अनभिधानात् । **मीनस्येष्टिरिति** । अत्र मत्स्यपर्यायो गृह्यते । अभिधानात् ।

**संस्कृतम्** । सत उत्कर्षाधानं संस्कारः ।

**शब्द**[14]**शाब्दिको** वैयाकरणः । दार्दुरिकः । कुम्भकारः । स्पष्टत्वात् त्यक्तं सूत्रपञ्चकम् । 'परिपन्थं च तिष्ठति' ॥४।४।३६॥

---

१. Dropped $D_2$, $D_3$, $B_1$, C. २. हारिणिकः । सारङ्गिकः dropped $B_1$. ३. शार्ङ्गिकः । मात्सिकः $D_5$. ४. हन्तीति विग्रह एवावतिष्ठते $B_1$; P, $D_1$ have अनिमिषान् हन्ति for अनिमिषान्...आमिमिषिकः ; $D_4$ drops इति. ५. After it–ग्रहणमिष्यते C. ६. मार्गिकः···शार्ङ्गिकः dropped P, C. ७. संस्कृतार्थे C. ८. Dropped $B_1$. ९. आभ्यां dropped $B_1$. १०. After it—स्यात् C, $B_2$. ११. शब्दं करोतीति dropped $B_1$, $B_2$. $D_2$, $D_5$. १२. इति dropped P, $D_1$. १३. तैत्तिरीयक $Bc_1$, $Dc_3$. १४. शब्दः $Dc_3$.

धर्मं चरति ॥४।४।४१॥

अस्माच्चरत्यर्थे[1] ठक्[2] ॥ धर्मं चरतीति[3] धार्मिकः ॥ अधर्माच्च ॥* आधार्मिकः ।

---

ठक् । परिपन्थं तिष्ठति पारिपन्थिकश्चौरः । चकारो भिन्नक्रमः । परिपन्थं तिष्ठति चेति द्रष्टव्यम् । स च समानजातीयस्य प्रत्ययार्थस्य समुच्चयार्थः । तेन परिपन्थं हन्ति पारिपन्थिकः । 'माथोत्तरपदपदव्यनुपदं धावति' ॥४।४।३७॥ माथोत्तरपदात् । दण्डमाथं धावति दाण्डमाथिकः । माथशब्दः पथिवाची । पदव्याः । पदवीं धावति पादविकः । अनुपदात् । अनुपदं धावति आनुपदिकः । 'आक्रन्दात् ठञ् च' ॥४।४।३८॥ आक्रन्दं धावति आक्रन्दिकः । आक्रन्दिकी । स्वरे विशेषः । 'पदोत्तरपदं गृह्णाति' ॥४।४।३९॥ पदोत्तरपदात् गृह्णातीत्यर्थे ठक् । पूर्वपदं गृह्णाति पौर्वपदिकः । 'प्रतिकण्ठार्थललामं च' ॥४।४।४०॥ एभ्यो गृह्णातीत्यर्थे ठक् । प्रातिकण्ठिकः । आर्थिकः । लालामिकः ।

धर्मं । चरतिरत्रासेवायां नानुष्ठानमात्रे । धार्मिको यः पौनःपुन्येन तात्पर्येण धर्ममनुतिष्ठति स उच्यते । अधर्माच्चेति वक्तव्यम् । ग्रहणवता प्रातिपदिकेन प्रतिषेधादस्यारम्भः । स्पष्टत्वात्त्यक्तान्यष्टादश । 'प्रतिपथमेति ठंश्च' ॥४।४।४२॥ ठक् च । प्रतिपथमेति प्रतिपथिकः । प्रातिपथिकः । 'समवायान् समवैति' ॥४।४।४३॥ समवायवाचिभ्यो द्वितीयान्तेभ्यः समवैतीत्यागत्य तदेकदेशी भवतीत्यर्थे ठक् स्यात् । सामवायिकः । सामाजिकः । सामूहिकः । सान्निवेशिकः । 'परिषदो ण्यः' ॥४।४।४४॥ ठकोपवादः । परिषदं समवैति पारिषद्यः । 'सेनाया वा' ॥४।४।४५॥ ण्यष्ठक् च । सेनां समवैति सैन्यः सैनिकः ।

---

१. अस्माद् द्वितीयान्तात् $D_4$. २. After it—स्यात् $B_2$. ३. इति dropped $B_1$, $D_1$, $D_4$. ४. Before it—ठक् $Dc_3$. ५. Before it—ठक् च $Dc_3$.

'संज्ञायां ललाटकुक्कुट्यौ पश्यति' ॥४।४।४६॥ ठक् । ललाटं कोपप्रसादचिह्नं पश्यति लालाटिकः कार्याक्षमः सेवकः । कुक्कुटीं पश्यति कौक्कुटिकः कुक्कुटीपातमात्रं पश्यन् संकुचितदृष्टिभिक्षुरुच्यते । 'तस्य धर्म्यम्' ॥४।४।४७॥ धर्म्यं धर्मादनपेतमित्यर्थे षष्ठ्यन्ताट्ठक् । आपणस्य धर्म्यमापणिकम् । 'अण् महिष्यादिभ्यः' ॥४।४।४८॥ महिष्या धर्म्यं माहिषम् । महिषी । प्रजापति । विलेपिका । प्रलेपिका । अनुलेपिका । पुरोहित । मणिपाली । अनुचारक । होतृ । यजमान । 'ऋतोञ्' तस्य धर्म्यमित्यर्थे । पोतुर्धर्म्यं पौत्रम् । नारम् । विशसितुरिड्लोपश्च । विशसितुर्धर्म्यं वैशस्त्रम् । विभाजयितुर्णिलोपश्च । विभाजयितुर्धर्म्यं वैभाजित्रम् । 'अवक्रयः' ॥४।४।५०॥ वणिग्भिः शुल्कस्थाने प्रतिभाण्डमधिपतये देयमवक्रयः । षष्ठ्यन्तादवक्रयार्थे ठक् । शुल्कशालाया अवक्रयः शौल्कशालिकः । आकरिकः । लोकपीडयाधर्मातिक्रमेणाप्यवक्रयः स्यादिति धर्म्यात्पृथग्ग्रहणम् । 'तदस्य पण्यम्' ॥४।४।५१॥ प्रथमान्तादस्य पण्यमित्यर्थे ठक् । अपूपाः पण्यमस्य आपूपिकः । 'लवणाट्ठञ्' ॥४।४।५२॥ लवणं पण्यमस्य लावणिकः । ठकोपवादः । ञः स्वरार्थः । 'किशरादिभ्यष्ठन्' ॥४।४।५३॥ किशरः पण्यमस्येति किशरिकः । षित्त्वात् किशरिकी । किशरादयो[1] गन्धविशेषवाचिनः । किशर । नदर[2] । स्थगल[3] । तगर । गुग्गुल । उशीर । हरिद्रा । हरिद्रु । पर्णी । 'शलालुनोन्यतरस्याम्' ॥४।४।५४॥ ठन् । पक्षे ठक्[4] । शलालु पण्यमस्य शलालुकः । शालालुकः । शलालुकी । 'शिल्पम्' ॥४।४।५५॥ कौशलं क्रियाभ्यासपूर्वको ज्ञानविशेषः । 'तदस्य–' इति ठक् । मृदङ्गवादनं मृदङ्ग उपचारात् । मृदङ्गः शिल्पमस्य मार्दङ्गिकः । 'मड्डुकझर्झरादणन्यतरस्याम्' ॥४।४।५६॥ मड्डुकं शिल्पमस्य माड्डुकः । माड्डुकिकः । झर्झरः शिल्पमस्य झार्झरः झार्झरिकः । 'प्रहरणम्'

१. किसर all through Bc1, Dc3, Dc4. २. नरद Dc2. ३. स्थगल Dc2. ४. Before it—पक्षे ठक् Dc3, Dc4.

**अस्तिनास्तिदिष्टं मतिः ॥४।४।६०॥**

एभ्यो मत्युपाधिकेभ्यः प्रथमान्तेभ्यः षष्ठ्यर्थे ठक्[1] । परलोकमतिरत्रेष्यते । अस्ति परलोके मतिरस्य[2] आस्तिकः ।[3] प्रमाणानुगा[4] मतिर्दिष्टा । सास्यास्तीति दैष्टिकः[5] ॥[6]

---

॥४।४।५७॥ तदस्येति ठक् । असिः प्रहरणमस्य आसिकः । धानुष्कः । 'परश्वधाट्ठञ् च' ॥४।४।५८॥ चात् ठक् । परश्वधः प्रहरणमस्य पारश्वधिकः । 'शक्तियष्ट्योरीकक्' ॥४।४।५९॥ शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः ।

अस्ति । परलोकमतिरत्रेष्यते इति । तदेतदास्तिकादिशब्दानामभिधानशक्तिस्वाभाव्याल्लभ्यते । अस्तिनास्तिशब्दौ निपातौ । अथवा वचनसामर्थ्यादाख्याताद्वाक्याच्च[7] प्रत्ययः । स्पष्टत्वात् त्यक्तानि त्रयोदश । 'शीलम्' ॥४।४।६१॥ तदस्येति ठक् । अपूपभक्षणं शीलमस्य आपूपिकः । भक्षणक्रिया तद्विषयं च शीलं तद्धितवृत्तावन्तर्भवति । 'छत्रादिभ्योणः' ॥४।४।६२॥ तदस्य शीलमित्यर्थे । छादनादावरणाच्छत्रम् । गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तश्छत्रशीलः शिष्यश्छात्रः । छत्र । शिक्षा । भिक्षा । प्ररोह[8] । स्था । अयमुपसर्गपूर्वो गृह्यते । चुरा । उपस्थान । ऋषि । कर्मन् । विश्वधा । तपस् । सत्य । अनृत । विशिखा । 'कर्माध्ययने वृत्तम्' ॥४।४।६३॥ प्रथमान्तादध्ययने कर्म वृत्तमित्येतस्मिन् षष्ठ्यर्थे ठक् स्यात् । एकमन्यदपपाठरूपमध्ययने कर्मवृत्तमस्य ऐकान्यिकः । एकमन्यदिति विगृह्य तद्धितार्थ इति समासस्ततष्ठक् । अध्ययने कर्मवृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवति । यस्याध्ययने प्रवृत्तस्य[9] परीक्षाकाले पठतः स्खलितमपपाठ-

---

१. ठक् स्यात् $B_2$, $D_5$. २. मतिर्यस्य C. ३. After it—नास्ति परलोके मतिरस्य नास्तिकः । $D_3$, $D_5$, $B_1$, $B_2$. ४. प्रमाणानुगमति° $D_1$. ५. After it—इति प्राग्वहतीयाः $D_4$. ६. Then comes the Sūtra प्राग्घिताद्यत् ॥४।४।७५॥ 'तस्मै हितम्' इत्यतः प्राक् यदधिक्रियते-$D_3$, $D_4$, $B_1$. P (P drops the Vṛitti). ७. °दाख्याताच्च $Dc_3$. ८. पुरोहित $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ९. प्रयुक्तस्य $Bc_1$, $Dc_3$, $Dc_4$.

रूपमेकं जायते स ऐकान्यिक उच्यते। एवं द्वैयन्यिकः। त्रैयन्यिकः। 'बह्वच् पूर्वपदाट्ठच्' ॥४।४।६४॥ कर्माध्ययने वृत्तमित्यर्थे। द्वादशान्यानि कर्माण्यपपाठरूपाण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। त्रयोदशान्यिकः। त्रयोदशापपाठा अस्य जाता इत्यर्थः। चित्वादन्तोदात्तत्वम्। 'हितं भक्षाः' ॥४।४।६५॥ हितयोगसामर्थ्याच्चतुर्थ्यर्थः प्रत्ययार्थः। प्रथमान्ताच्चतुर्थ्यर्थे ठक्। तच्चेत् प्रथमान्तं हितं भक्ष्यं स्यात्। अपूपभक्षणं हितमस्मै आपूपिकः। हितार्थः क्रिया च तद्धितवृत्तावन्तर्भवति। 'तदस्मै दीयते नियुक्तम्' ॥४।४।६६॥ ठक्। अग्रे भोजनमस्मै नियतं दीयते आग्रभोजनिकः। 'श्राणामांसौदनाट्टिठन्' ॥४।४।६७॥ टो ङीबर्थः[1]। इरुच्चारणार्थः। न आद्युदात्तार्थः। श्राणा नित्यमस्मै दीयते श्राणिकः। मांसौदनं समस्तव्यस्तम् मांसौदनिकः। मांसिकः। औदनिकः। औदनिकी। 'भक्तादणन्यतरस्याम्' ॥४।४।६८॥ पक्षे ठक्। भक्तमस्मै नित्यं दीयते भाक्तिकः[2]। 'अगारान्ताट्ठन्' ॥४।४।७०॥ तत्र नियुक्त इत्यर्थे। देवागारे नियुक्तः देवागारिकः। 'अध्यायिन्यदेशकालात्' ॥४।४।७१॥ सप्तम्यन्तादेशकालादध्यायिन्यर्थे ठक्। अध्ययने यौ देशकालौ शास्त्रेण निषिद्धौ तावदेशकालशब्देनोच्येते। श्मशानेऽधीते श्माशानिकः। चतुर्दश्यामधीते चातुर्दशिकः। अदेशकालात् किम्। स्रुघ्नेऽधीते। पूर्वाह्णेऽधीते। 'कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति' ॥४।४।७२॥ ठक्। व्यवहारक्रिया तत्त्वम्। कठिनान्तात्। वंशकठिने व्यवहरति वांशकठिनिकः। प्रस्तारे व्यवहरति प्रास्तारिकः। संस्थाने व्यवहरति सांस्थानिकः। 'निकटे वसति' ॥४।४।७३॥ ठक्। निकटे वसति नैकटिकः। भिक्षुः। 'आवसथाट्ठल्' ॥४।४।७४॥ लः स्वरार्थः। आवसथे वसति आवसथिकः। आवसथिकी।

इति प्राग्वहतीयाः प्रत्ययाः। ठकः पूर्णोऽवधिः।

---

१. ङीषर्थः Dc4. २. भाक्तः। भाक्तिकः Dc3.

**तद्वहति रथयुगप्रासङ्गम्** ॥४।४।७६॥

एभ्यो द्वितीयान्तेभ्यो वहत्यर्थे[1] यत् ॥ रथ्यः । युग्यः । प्रासंग्यः ।

**धुरो यड्ढकौ** ॥४।४।७७॥

धुरं वहति धौरेयः ।

**हलि च** ॥८।२।७७॥

रेफवान्तस्योपधाया[2] दीर्घः[3] स्याद्धलि परे ॥ इति दीर्घे[4] प्राप्ते

**न भकुर्छुराम्** ॥८।२।७९॥

भस्य[5] कुर्छुरोरुपधाया न दीर्घः ॥ धुर्यः ।

---

अथ प्राग्घितीया उच्यन्ते ।

तद्वहति । यदिति । 'प्राग्घिताद्यत्' ॥४।४।७५॥ इत्यधिकारसूत्राल्लभ्यते तस्य चायमर्थः । 'तस्मै हितम्' इत्यतः प्राक् यदितः परं वक्ष्यते तत्र यत् प्रत्ययः स्यादिति ज्ञेयम् । रथसीताहलेभ्यो यद्विधौ तदन्तविध्युपसंख्यानात् परमरथ्य उत्तमरथ्य इत्यपि स्यात् ।

धुरः । द्वितीयान्तात् धुरो यत्ढकौ प्रत्ययौ स्तः ।

हलि च । 'वोरुपधायाः—' इति सिद्धे अपदान्तार्थोऽयमारम्भः । तीर्णम् । गूर्णम् । दीव्यति । धातोरित्यनुवर्तते । तेनेह न । चतुर इच्छति चतुर्यति । इकः किं स्मर्यते । इति दीर्घत्वे प्राप्त इति । धुर्य इत्यत्र ।

न भकुर् । वोरित्यनुवर्तते । ततश्चायमर्थः । रेफवान्तस्य भस्य कुरुछुरोश्चोपधाया दीर्घो न स्यादिति । रेफवकाराभ्यां भस्य विशेषणं किम् । प्रतिदीव्ना । प्रतिदीव्ने ।

---

१. वहतीति $D_2$, $D_5$. २. वकारान्तस्यो° $B_1$, $D_2$, $D_4$, $D_5$. ३. इको दीर्घः $D_1$, $D_4$, $D_5$, $B_2$. ४. दीर्घत्वे $D_3$, P, C, Com. दीर्घे dropped $D_5$. ५. Before it—रेफवान्तस्य $D_4$.

**खः सर्वधुरात् ॥४।४।७८॥**

वहत्यर्थे ॥ सर्वधुरीणः ।

**एकधुराल्लुक् च ॥४।४।७९॥**

अस्मात् खः [2]स्यात् [3]तस्य लुग्वा ॥ [4]एकधुरीणः । एकधुरः ।

**शाकटादण् ॥४।४।८०॥**

शाकटः ।

**हलसीराट्ठक् ॥४।४।८१॥**

हालिकः । सैरिकः ।

---

खः । स्त्रीलिङ्गे न्याय्ये सर्वधुरादिति प्रातिपदिकमात्रापेक्षो निर्देशः । ख इति योगविभागः इष्टसंग्रहाय । दक्षिणधुरीणः । उत्तरधुरीणः ।

एकधुरात् । वचनसामर्थ्यात् पक्षे लुग्विधीयत इत्यभिप्रेत्याह । **तस्य च लुग्वेति** । **एकधुरीण** इत्यादि । एकधुरां वहति ।

**शकटात्** । द्वितीयासमर्थादस्माद्वहतीत्यर्थेऽण् स्यात् । **शाकट** इति । शकटं वहति ।

**हल** । **हालिक** इत्यादि । हलं वहति । सीरं वहति । स्पष्टत्वात् त्यक्तानि षोडश । 'संज्ञायां जन्या' ॥४।४।८२॥ तद्वहत्यर्थे यत् । जनीं वहतीति जन्या वरस्य स्निग्धा । जनी वधूः । 'विध्यत्यधनुषा' ॥४।४।८३॥ विध्यत्यर्थे द्वितीयान्ताद्यत् धनुष्करणिकायां [5]व्यधनक्रियायां न । पादौ विध्यन्तीति पद्याः । शर्कराः । 'पद्यत्यतदर्थे' इति

---

१. Before it C has–अस्मात् खः स्यात्. २. वहत्यर्थे for स्यात् $B_1$, ३. तस्य च B, $D_1$, Com. ४. एकधुरः । एकधुरीणः । $D_5$. ५. तु व्यधन° $Dc_3$.

पादशब्दस्य पदादेशः । अस्य सूत्रस्य चायमर्थः । अतदर्थे यत्प्रत्यये परे पादशब्दस्य पदादेशः स्यात् । शरीरावयवस्य पादस्येह ग्रहस्तेन 'पणपादमाषशतात्—' इत्यत्र न । द्विपाद्यमिति । अतदर्थे किम् । पादार्थमुदकं पाद्यम् । चरताविकेपि यद्भावो वाच्यः । पादाभ्यां चरति पदिकः । अधनुषेति किम् । चोरं विध्यति देवदत्तः । 'धनगणं लब्धा' ॥४।४।८४॥ यत् । धनं लब्धा धन्यः । गणं लब्धा गण्यः । 'अन्नाण्णः' ॥४।४।८५॥ अन्नं लब्धा आन्नः । 'वशं गतः' ॥४।४।८६॥ यत् । वशं गतो वश्यः । 'पदमस्मिन् दृश्यम्' ॥४।४।८७॥ यत् । पदं द्रष्टुं शक्यं यत्र प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः । कर्दमस्य समावस्थोच्यते । नातिद्रवो नातिशुष्क इति । 'मूलमस्याबर्हि' ॥४।४।८८॥ बृहू उद्यमे । आङ् पूर्वाद् भावे घञ् । आबर्हणमाबर्हः उत्पाटनं सोस्यास्तीति आबर्हि । मूलादाबर्ह्युपाधिकादस्येत्यर्थे यत् । मूलमेषामाबर्हि मूल्या मुद्गाः । सुष्ठु[1] निष्पन्नाः । मूलोत्पाटनेन विना ग्रहीतुं न शक्यन्त इत्यर्थः । 'संज्ञायां धेनुष्या' ॥४।४।८९॥ यत् । धेनुरुत्तमर्णाय आऋणप्रदानाद्दोहार्थं दीयते तस्यामभिधेयायां धेनुष्येत्यन्तोदात्तो निपात्यते । 'गृहपतिना संयुक्ते ञ्यः' ॥४।४।९०॥ संज्ञायाम् । गृहपतिना संयुक्तो गार्हपत्योग्निः । 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु' ॥४।४।९१॥ नावादिभ्यस्तृतीयान्तेभ्यो यथाक्रमं तार्यादिष्वर्थेषु यत् । नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । संज्ञाधिकाराच्छत्रौ न । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन पटादिना नाम्यं मूल्यम् । येन पटादिकं गृह्यते तद्धिरण्यादि मूल्यमित्युच्यते । यदपहाय यद्गृह्यते तत्तेनानामितं स्यात् । मूलेन समो मूल्यः पटः । उपादानेन[2] समानफल इत्यर्थः ।

१. न सुष्ठु Bc1, Dc1, Dc4. २. उपादानसमान॰ Bc1, Dc1, Dc3, Dc4.

**तत्र साधुः ॥४।४।९८॥**

सप्तम्यन्तात् साध्वर्थे यत् स्यात् ॥ 'ये चाभाव—' इति प्रकृत्या । सामसु साधुः सामन्यः । कर्मण्यः ।

---

सीतया संमितं संगतं सीत्यं क्षेत्रम् । रथसीताहलेभ्यो यद्विधौ तदन्तविधेरपीष्टत्वात् । परमसीत्यम् । तुलया संमितं समानं तुल्यं सदृशमुच्यते । 'धर्मपथ्यर्थन्यायादनपेते' ॥४।४।९२॥ यत् । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । 'छन्दसो निर्मिते' ॥४।४।९३॥ तृतीयान्ताच्छन्दसो निर्मितेर्थे यत् । छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः । 'उरसोण् च' ॥४।४।९४॥ यच्च । उरसा निर्मित औरस उरस्यः पुत्र एव संज्ञाधिकारात् । 'हृदयस्य प्रियः' ॥४।४।९५॥ यत् । हृदयस्य प्रियो हृद्यः । 'बन्धने चर्षौ' ॥४।४।९६॥ हृदयाद्यत् । ऋषिर्मन्त्रः । हृदयस्य बन्धनो हृद्यो वशीकरणमन्त्र उच्यते । 'मतजनहलात् करण-जल्पकर्षेषु' ॥४।४।९७॥ मतादिभ्यस्त्रिभ्यः षष्ठ्यन्तेभ्यस्त्रिष्वेव करणादिषु यथासंख्यमर्थेषु यत् स्यात् । मतं ज्ञानं तस्य करणं मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । तदन्तविधेरपीष्टत्वात् द्विहल्यः त्रिहल्यः ।

तत्र । साधुरिति प्रवीणो योग्यो वा गृह्यते नोपकारकः । तत्र हि परत्वात् 'तस्मै हितम्' इति विधिना भाव्यम् । स्पष्टत्वात् त्यक्तं सूत्रषट्कम् । 'प्रतिजनादिभ्यः खञ्' ॥४।४।९९॥ प्रतिजने साधुः प्रातिजनीनः । जने जने साधुरित्यर्थः । प्रतिजन । इदंयुग । संयुग । समयुग । परयुग । परकुल । परस्यकुल ।

---

१. Before it—धर्मपथ्यर्थन्यायादनपेते ॥४।४।९२॥ अनपेते पञ्चम्यन्तात् ज्यः स्यात् । धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ॥ २. Dropped $B_1$. ३. इति dropped P, $B_3$; °भाव—' इत्यन् प्रकृत्या $D_4$. ४. °रभीष्टत्वात् $Dc_3$. ५. °रभीष्ट° $Dc_3$.

## [1]सभाया यः ॥४।४।१०५॥

[2]अस्माद्यः स्यात् साध्वर्थे ॥ सभ्यः ।

---

अमुष्यकुल । सर्वजन । विश्वजन । महाजन । पञ्चजन । यत्र हितार्थ एव साध्वर्थस्तत्र वचनात् प्राक्क्रीतीयो बाध्यते । 'भक्ताण्णः' ॥४।४।१००॥ भक्ते साधुर्भाक्तः शालिः । 'परिषदो ण्यः' । परिषदि साधुः परिषद्यः । णोपीष्यते । तदर्थं योगविभागः क्रियते [3]परिषद इति । परिषदि साधुः पारिषदः । 'कथादिभ्यष्ठक्' ॥४।४।१०२॥ कथायां साधुः काथिकः । कथा । विकथा । विश्वकथा । वितण्डा । कुष्ठविद् । जनवाद । जनेवाद । वृत्ति । संग्रह । गुण । गण । आयुर्वेद । 'गुडादिभ्यष्ठञ्' । गुडे साधुर्गौडिकः । इक्षुः । गुड । कुल्माष । सक्तु । अपूप । मांसौदन । इक्षुवेणु । सङ्ग्राम । संघात । प्रवास । [4]निवास । उपवास । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' ॥४।४।१०४॥ पथि साधु पाथेयम् । [5]अतिथिषु साधुरातिथेयः । वसतौ [6]साधु वासतेयम् । स्वपतौ साधु स्वापतेयम् ।

सभाया यः । स्वरे विशेषः । यति ह्यन्तस्वरितं स्यात् । अन्तोदात्तत्वं चेष्यते ।

---

१. Before it—प्रतिजनादिभ्यः खञ् ॥४।४।९९॥ एभ्यः प्रतिजनादिभ्यः खञ् स्यात् साध्वर्थे । प्रातिजने साधुः प्रातिजनीनः । प्रतिजन । इदंयुग । सयुग । परयुग । परकुल । परस्यकुल । मनुष्यकुल । सर्वजन । विश्वजन । महाजन । इति । $D_4$. २. $B_1$ has स्वार्थे यः as the वृत्ति. ३. पारि° $Dc_3$. ४. विवास $Dc_1$, $Dc_3$. ५. अतिथौ $Bc_1$, $Dc_3$, $Dc_4$. ६. साधुर्वासतेयः $Dc_3$.

**समानतीर्थे वासी ॥४।४।१०७॥**

अस्मात् सप्तम्यन्ताद्वासीत्यर्थे यत् स्यात्[1] ॥ समानतीर्थे गुरौ वासी सतीर्थ्यः ।

**समानोदरे शयित ओ चोदात्तः ॥४।४।१०८॥**

सप्तम्यन्तादस्मात्[2] शयितार्थे यत् स्यात्[3] ओकारश्चोदात्तः ॥ समानोदर्यो भ्राता ।

**सोदराद्यः ॥४।४।१०९॥**

यत्प्रत्यये विवक्षिते प्रागेव सादेशः[4] ॥ सोदर्यः ।

**अग्राद्यत् ॥४।४।११६॥**

अस्माद्भवार्थे[5] यत् स्यात् ॥ अग्रेभवः अग्र्यः ।

**घच्छौ च ॥४।४।११७॥**

अग्रियः[6] । अग्रीयः ।

---

**समान** । वासीति निपातनाण्णिनिः[7] । ग्रहादेराकृतिगणत्वाच्च ।

**समानोदरे** । **ओकारश्चोदात्त** इति । यतः स्वरे प्राप्ते ओकारस्योदात्तत्वं विधीयते ।

**सोदरात्** । **सोदर्य** इति । अन्तोदात्तोयम् । 'विभाषोदरे' इति ये विवक्षिते सादेशः ।

**अग्रात्** । **घच्छौ च** । एतत्सूत्रद्वयं छन्दोधिकारे पठितमपि लोकेपि अग्र्यादीनां प्रयोगाणां दर्शनादत्र पठितमिति वेदितव्यम् ।

इति प्राग्घितीयाः । यतः पूर्णोवधिः ।

---

१. Dropped $B_1$, $B_2$, $D_1$, $D_2$. २. अस्मात् dropped $B_1$. ३. Dropped $B_1$. ४. Before it—'विभाषोदर'–इति समानस्य $B_1$, $D_5$. ५. अस्मात् dropped $B_1$. ६. अस्मात् घच्छौ प्रत्ययौ स्तः । $D_5$. ७. निपातनादिनिः $Dc_3$, $Bc_1$.

**तस्मै हितम् ॥५।१।५॥**

**चतुर्थ्यन्ताद्धितार्थे छः स्यात् ॥ सूर्याय हितः सूरीयः ।**

---

अथ प्राक्क्रीतीया उच्यन्ते । स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयम् । 'प्राक् क्रीताच्छः' ॥५।१।१॥ 'तेन क्रीतम्' अस्मात् प्रागित ऊर्ध्वं छस्याधिकारः । 'उगवादिभ्यो यत्' ॥५।१।२॥ उवर्णान्ताद्गवादेश्च प्राक्क्रीतीयेष्वर्थेषु यत् । छस्यापवादः । शङ्कवे हितं शङ्कव्यम् । दारु । सनङ्गोः । 'चर्मणोञ्' ॥ इति प्राप्नोति । चरोः सक्तोश्च 'विभाषा हविरपूपादिभ्यः' इति प्राप्नोति । तत्र पूर्वविप्रतिषेधेन यदेवेष्यते । सनङ्गव्यं चर्म । चरव्यास्तण्डुलाः । सक्तव्या धाना इति । गवादिभ्यः । गवे हितं गव्यम् । गो । हविस् । अष्टका । बर्हिस् । युग । मेधा । स्रक् । नाभि नभं च । नभ्यम् । कथं नाभ्यम् । 'शरीरावयवाद्यत्' । शुनः संप्रसारणं दीर्घो वा तत्संनियोगेनान्तोदात्तत्वं च । शुन्यम् । आद्युदात्तं शून्यम् । अन्तोदात्तम् । 'ऊधसोनङ् च' ॥ ऊधन्यम् ॥ अक्षर । दर । स्वर । खेद । विष ॥ 'कम्बलाच्च संज्ञायाम्' ॥५।१।३॥ यत् । कम्बल्यमूर्णाशतम् । संज्ञायां किम् । कम्बलीया ऊर्णा । 'विभाषा हविरपूपादिभ्यः' ॥५।१।४॥ यत् । हविःशब्दाद् गवादित्वान्नित्यं यत् । ततो हविर्विशेषा इह गृह्यन्ते । आमिक्ष्यं दधि । आमिक्षीयम् । अपूपादिभ्यः । अपूप्यम् । अपूपीयम् । अपूप । तण्डुल । पृथुक । अभ्यूष । अभ्योष । अवोष । किण्व । मुसल । शकट । कर्णवेष्टक । अर्गल । स्थूणा । यूप । दीप । सूप । अश्व । पत्र । अन्नविकारेभ्यश्च । **तस्मै** । **सूरीय** इति । 'सूर्यतिष्य–' इति यलोपः ।

---

१. Before it—इति प्राग्घितीयाः । प्राक् क्रीतात् छः ॥५।१।११॥ 'तेन क्रीतम्' अस्मात्प्रागित ऊर्ध्वं छस्याधिकारः । D4. २. °द्धितेर्थे D4. ३. स्नुच्च Bc1, Dc3. ४. स्वेद Dc3. ५. Before it—पुष्कल । आयुष् Dc3. ६. यूष Dc3.

**शरीरावयवाद्यत्** ॥५।१।६॥

अस्माद्धितार्थे[1] यत् स्यात्[2] ॥ दन्त्यम् । ओष्ठ्यम् ।[3]

**आत्मन्विश्वजनभोगोत्तरपदात् खः** ॥५।१।९॥

एभ्यः खः स्याद्धितार्थे ॥

**आत्माध्वानौ खे** ॥६।४।१६९॥

एतौ ख एव[4] प्रकृत्या स्तः ॥ आत्मनीनम् । विश्वजनीनम् । मातृभोगीणः ।[5]

---

**शरीर** । शीर्यत इति शरीरम् । प्राणिकायः । स्पष्टत्वात्त्यक्तं सूत्रद्वयम् । 'खलयवमाषतिलवृषब्रह्मणश्च' ॥५।१।७॥ एभ्यो हिते यत् । खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । वृषोऽत्रादन्तो गृह्यते । ब्रह्मन्नान्तः । तेन वृष्णे हितं ब्राह्मणेभ्यो हितमिति वाक्यमेव । छप्रत्ययोऽपि[6] न स्याद[7]नभिधानात् । चात् रथाय हिता रथ्या । 'अजाविभ्यां थ्यन्' ॥५।१।८॥ हितार्थे । अजथ्या भूः । अविथ्या ।

**आत्मन्** । नलोपाकरणं प्रकृतिपरिमाणज्ञापनार्थं तेनोत्तरपदग्रहणं भोगशब्देनैव संबध्यते न तु प्रत्येकम् ।

**आत्माध्वानौ** । एतावित्यादि । एवकारो भिन्नक्रमः । प्रकृत्या इत्येतस्यानन्तरं द्रष्टव्यः । एतौ खे प्रकृत्यैव स्तः न कदाचित् खे अनयोष्टिलोपः स्यादित्यर्थः । **विश्वजनीनमिति** । विश्वजनेभ्यो हितम् । कर्मधारयादिष्यते । षष्ठीसमासाद्बहुव्रीहेश्च छ एव । विश्वजनीयम् । पञ्चजनाच्च खः । पञ्चजनीनम् । अत्रापि कर्मधारयादेव । पञ्चजनीयमन्यत् । सर्वजनात् ठञ्खौ । सार्वजनिकः । सर्वजनीनः । कर्मधारयादन्यत्र सर्वजनीयम् । महाजनान्नित्यं ठञ् । माहाजनिकम् । तत्पुरुषादेव । महाजनीयमन्यत्र । **मातृभोगीण** इति । मातृभोगाय हितः ।

---

१. तस्मात् C. २. P, $D_1$, $B_2$ and C drop it. ३. After it—कण्ठ्यम् । $D_4$. ४. Dropped $D_4$. ५. $B_1$ has after it—पूर्वपदस्थान्निमित्तात् परस्य तद्धितस्थस्य नस्य णत्वमिष्यते ।. ६. अपि Dropped $Bc_1$. ७. °दनभिधानत्वात् $Dc_3$.

भोगशब्दः शरीरवाची। केवलात्तु छ एव। मात्रीयः। राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेव प्राक्क्रीतीयः प्रत्यय इष्यते। राजभोगीणः। आचार्यादणत्वं च। आचार्यभोगीनः। केवलाभ्यां तु वाक्यमेव स्यात्। राज्ञे हितम्। आचार्याय हितम्। स्पष्टत्वात् त्यक्तान्यष्ट। 'सर्वपुरुषाभ्यां णढञौ' ॥५।१।१०॥ आभ्यामेतौ यथासंख्यं हितार्थे। सर्वशब्दात् णो वा वाच्यः। सार्वम्। सर्वीयम्। पुरुषात्तु हिते वधे वृन्दे विकारे तत्कृते च ढञ्। पुरुषाय हितं तस्य वधः समूहो विकारो वा तेन कृतो वा पौरुषेयः। 'माणवचरकाभ्यां खञ्' ॥५।१।११॥ हिते। माणवीनम्। चारकीणम्। 'तदर्थं विकृतेः प्रकृतौ' ॥५।१।१२॥ प्रकृतिरुपादानकरणम्। तस्यैवोत्तरमवस्थान्तरं विकृतिः। तदर्थमिति प्रत्ययार्थविशेषणं क्रियाविशेषणं वा। तत्र प्रत्ययार्थ-विशेषणपक्षे क्लीबत्वप्रथमान्तत्वे सूत्राणां छान्दसत्वाद् व्यत्ययेन बोध्ये। तस्मै इत्यनुवर्तते। ततश्चायमर्थः। विकृतिवाचिनश्चतुर्थ्यन्ताद्विकृत्यर्थायां प्रकृतौ प्रत्ययार्थे यथाविधि छयतौ स्तः। प्राकारायेष्टकाः प्राकारीयाः। तदर्थे किम्। यवानां धानानां सक्तवः। अत्र प्रकृत्यन्तरनिवृत्ति-र्विवक्षिता धानानां सक्तवो न लाजानामिति न तादर्थ्यम्। विकृतेः किम्। अक्रियमाणे विकृतिग्रहे या काचित् प्रकृतिः स्यात्। न तूपादानमेव। तथा चात्र स्यात्। उदकाय कूपः। अत्र यथा प्रयाजादीनां धर्माणामुत्पत्त्याधारभूतत्वाद्दर्शपौर्णमासौ प्रकृती तथा कूप उदकस्य प्रकृतिर्न तूदकं कूपस्य विकृतिः। अत्यन्तभेदात्। भिन्नस्वभावत्वात्। भिन्नसंतानवर्तित्वाच्च। समानस्वभावयोः समान-

१. After it–इति Bc1, Dc3, Dc4. २. After it—अणोपवादः। Dc3, Dc4. ३. °विशेषणत्वपक्षे Dc3, Dc4. ४. न तु Dc3, Dc4.

संतानवर्तिनोरेव हि[1] प्रकृतिविकृतिभावो यथा प्रादेशेष्टकादीनाम्। प्रकृतौ किम्। खड्गाय कोशः। खड्गो लोहस्य विकृतिः। नास्य कोशः[4] प्रकृतिः। विवक्षितप्रकृतिविकारलाभाय प्रकृतिविकृत्योरुभयोर्ग्रहणम्। 'छदिरुपधिबलेर्ढञ्' ॥५।१।१३॥ उपधिशब्दात् स्वार्थे ढञ्। छदिर्बलिभ्यां तु प्रकृतिविकारभावे। छादिषेयं तृणम्। बालेया स्तण्डुलाः। उपधिरेवौपधेयं रथाङ्गं दारु। 'ऋषभोपानहोर्ञ्यः' ॥५।१।१४॥ प्रकृतिविकारभावे। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्मण्यपि पूर्वविप्रतिषेधादयमेवेष्यते। औपानह्यं चर्म। 'चर्मणोञ्' ॥ ५।१।१५॥ चर्मणो या विकृतिस्तद्वाचिनः प्रकृतौ अञ्। वार्धं चर्म। वार्त्रं[6] चर्म। 'तदस्य तदस्मिन् स्यादिति' ॥ ५।१।१६॥ स्यादिति संभावने लिङ्। तदिति प्रथमान्तादस्य संभाव्यते अस्मिन् संभाव्यते इति षष्ठ्यर्थे सप्तम्यर्थे च यथाविधि छयतौ स्तः। द्विस्तच्छब्दग्रहणमनेकस्मिन् प्रत्ययार्थे प्रत्येकसमर्थविभक्तिः संबन्धनीयेति न्यायं प्रदर्शयितुम्। प्रासादोस्य स्यात् प्रासादीयं दारु। प्राकारोस्मिन् देशे स्यात् प्राकारीयो देशः। प्रासादोस्य नगरस्य स्यादित्यादौ न भवति। इतिकरणस्य विवक्षार्थत्वात् पूर्वत्र प्रकृतिविकारभावस्तादर्थ्यं च विवक्षितमिह तु योग्यतामात्रमिति विषयभेदः। 'परिखाया ढञ्' ॥५।१।१७॥ तदस्य तदस्मिन् स्यादिति विषये। परिखात्र स्यात् पारिखेयी भूः।

इति प्राक्क्रीतीयाः। छयतोः पूर्णोवधिः।

---

१. Dropped Bc1, Dc1. २. °विहारभावः Bc1. ३. प्रसादेष्ट° Dc3. ४. हेतुः for कोशः Bc1. ५. °भावलाभाय Bc1, Dc3. ६. वारत्रं Bc1, Dc2, Dc3.

**तेन क्रीतम्** ॥५।१।३७॥

तृतीयान्तात् क्रीतेऽर्थे ठञ् स्यात् ॥ सप्तत्या क्रीतः साप्ततिकः ।

---

अथ प्राग्वतीया उच्यन्ते । तेष्वध्यार्हीयाः । तत्र स्पष्टत्वात् त्यक्तं सूत्रत्रयम् । 'प्राग्वतेष्ठञ्' ॥५।१।१८॥ 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिसंशब्दनात् प्राक् यदितः परं वक्ष्यते तत्र ठञ् प्रत्ययः स्यादिति ज्ञेयम् । तथोदाहरिष्यामः । 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्' ॥५।१।१९॥ 'तदर्हति' इत्येतदर्हसंशब्दनमभिव्याप्य यदितः परं वक्ष्यते तेषु ठञोपवादष्ठक्प्रत्ययोधिकृतो ज्ञेयः गोपुच्छादीन् वर्जयित्वा । अभिविधावाङ् । तेनार्हत्यर्थेपि ठक् स्यात् । वक्ष्यति । तेन क्रीतम् । निष्केण क्रीतं नैष्किकम् । अगोपुच्छादौ किम् । गोपुच्छेन क्रीतं गौपुच्छीकम् । साप्ततिकम् । प्रास्थिकम् । ठञेवात्र स्यात् । 'असमासे निष्कादिभ्यः' ॥५।१।२०॥ आर्हीयेष्वर्थेषु ठक् । नैष्किकम् । असमासे किम् । द्विनैष्किकम् । ठञेव स्यात् । ननु ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधादसमासग्रहणं व्यर्थमिति चेन्मैवम् । पूर्वत्र 'उगवादिभ्यो यत्' इत्यादौ तदन्तविधिज्ञापनार्थम् । गव्यम् । सुगव्यम् । दन्त्यम् । राजदन्त्यम् । इतःपरमपि प्राग्वतेः संख्यापूर्वपदानामलुगन्तानां तदन्तविधिः । द्वैपारायणिक इति । अलुक् किम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीतम् । अत्राञो लुकि पुनः शूर्पादन्यतरस्यामित्यञ् न स्यात् । सामान्यविहितष्ठञेव स्यात् । द्विशौर्पिकम् । निष्क । पण । पाद । माषवाह । वाह । द्रोण । षष्टि ।

तेन । एतदादिभिष्ठञादीनां समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते इति व्युत्क्रमेणेदं सूत्रं पठितम् । एतच्च तत्पुरुष एव व्याख्यातम् ।

---

१. क्रीतार्थे C, $D_1$. २. ठक् स्यात् P; $D_1$, $D_5$; ठक् $B_1$. ३. Dropped $Dc_2$, $Dc_4$. ४. सूर्पाभ्याम् । सूर्प throughout $Dc_4$. ५. Dropped $Bc_1$, $Dc_3$.

**संख्याया अतिशदन्तायाः कन् ॥५।१।२२॥**

[1]संख्यायाः कन् [2]स्यात् क्रीताद्यर्थे न [3]तु त्यन्तशदन्तायाः । पञ्चकः पटः । तिशदन्तायास्तु । आशीतिकः । चात्वारिंशत्कः ।

**बहुगणवतुडति संख्या ॥१।१।२३॥**

**वतोरिड्वा ॥५।१।२३॥**

वतोः परस्य कनो वा इडागमः [4]स्यात् ॥ तावतिकः । तावत्कः ।

**विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥५।१।२४॥**

आभ्यां ड्वुन् स्यान्न नाम्नि ॥ [5]विंशकः । त्रिंशकः ।

---

**संख्यायाः** । अर्थवद्ग्रहण नानर्थकस्येत्यर्थवतस्तेर्ग्रहणाड्डतेः[6] पर्युदासो न । कतिकः । प्रत्ययग्रहणपरिभाषयैव [7]तदन्तग्रहणे लब्धेप्येकसप्तादिभ्यस्तिप्रत्ययस्याविधानादेकसप्तत्या क्रीतमित्यादौ निषेधो न स्यात् । अन्तग्रहणे तु कृते समुदायस्यान्ते तिशब्दोस्तीति तत्र निषेधः स्यादित्यन्तग्रहणम् ।

**वतोः** । वतोः परस्य कन इति । 'तस्मादित्युत्तरस्य' इति परिभाषयेति भावः ।

**विंशति** । असंज्ञायां किम् । विंशतिकः । त्रिंशत्कः । विंशतित्रिंशद्भ्यामिति योगविभागादाभ्यां कन् । पूर्वेण ह्यतिशदन्ताया इति निषेधान्न स्यात् ।

---

१. संख्यावाचिनः $B_1$. २. $B_1$ drops it. ३. $B_1$ drops it. ४. $B_1$ drops it. ५. $B_1$ has before it:—युवोरनाकौ इति विंशतेर्डितीति तिलोपः; तिविंशतेर्डितीति तिलोपः $D_1$. ६. °ड्डुत्यादेः $Bc_1$, $Dc_4$. ७. तदन्ते गृहीतेप्ये° $Bc_1$, $Dc_4$.

**शताच्च ठन्यतावशते ॥५।१।२१॥**

शतेन क्रीतः शत्यः। शातिकः । अशते किम् । शतं परिमाणमस्य शतकः। सङ्घः।

---

शतात् । आर्हीयेष्वर्थेषु । कनोपवादः । **शतं परिमाणमस्ये**-त्यादि । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति कन् । अत्र प्रकृत्यर्थ एव शतं कनन्तेनोच्यते सङ्घस्य प्रत्ययार्थस्य प्रकृत्यर्थादभेदात् । शतेन क्रीतं शत्यं पटशतमित्यत्र निषेधो न । पटशतमिति पदान्तरं प्रयुज्य प्रत्ययार्थस्य शतत्वं गम्यत इति वाक्यार्थोयं न प्रत्ययार्थः । तथोक्तम् । शतप्रतिषेधेन्यशतेप्रतिषेध इति । प्रकृत्यर्थादन्यस्येत्यर्थः । चकारो समास इत्यस्यानुकर्षणार्थः । तेन द्विशतेन क्रीतं द्विशतकमित्यत्र न । स्पष्टत्वात् त्यक्तानि पञ्चदश । 'कंसाट्टिठन्' ॥५।१।२५॥ आर्हीयेषु । परिमाणत्वात् ठगप्राप्ते ठञोपवादः । टो ङीबर्थः । इकार उच्चारणार्थः । नकार आद्युदात्तार्थः । कंसिकः । कंसिकी । अर्धाचेति वाच्यम् । अर्धिकः । अर्धिकी । कार्षापणाच्च वाच्यः । कार्षापणशब्दस्य प्रतिशब्दादेशो वा वाच्यः । कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी । 'शूर्पादञन्यतरस्याम्' ॥५।१।२६॥ आर्हीयेष्वर्थेषु । परिमाणत्वात् ठगप्राप्ते पक्षे ठञ् । शूर्पेण क्रीतं शौर्पं शौर्पिकम् ॥ 'शतमानविंशतिकसहस्रवसनादण्' ॥५।१।२७॥ आर्हीयेषु । यथायथं ठक्ठञोरपवादः ॥ शतमानेन क्रीतं शातमानम् । विंशत्या क्रीतं विंशतिकं तेन क्रीतं वैंशतिकम् । साहस्रम् । वासनम् । 'विभाषा कार्षापणसहस्राभ्याम्' ॥५।१।२९॥ 'अध्यर्धपूर्वद्विगोः—' इति नित्यं प्राप्ते लुब् विकल्प्यते । अध्यर्यकार्षापणम् । द्विकार्षापणम् । कार्षापणाट्टिठन् वक्तव्यः । पतिशब्दश्चादेशो वा वाच्य इत्यस्य टिठनो लुक् । पक्षे सोपि ।

---

१. B₁ drops शतेन क्रीतः. २. द्विशतमि° Dc₄. ३. वक्तव्यम् Dc₃. ४. After it-अर्थेषु Dc₃. ५. शत° Dc₄. ६. लुक् Bc₁, Dc₃, Dc₄.

अध्यर्धकार्षापणिकम् । द्विकार्षापणिकम् । अध्यर्धप्रतिकः । द्विप्रतिकः । सहस्रान्तात् । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । अध्यर्धशतमानम् । अध्यर्धशातमानम् । द्विसहस्रम् । द्विसाहस्रम् । 'शतमान—' इत्यण् । 'संख्यायाः संवत्सर—' इत्युत्तरपदवृद्धिः । सुवर्णशतमानयोरुप-संख्यानम् । अध्यर्धसुवर्णम् । अध्यर्धसौवर्णिकम् । अध्यर्धशतमानम् । अध्यर्धशातमानम् । 'द्वित्रिपूर्वान्निष्कात्' ॥५।१।३०॥ द्वित्रिपूर्वान्नि-ष्कान्ताद् द्विगोरार्हीयस्य लुग्वा । द्विनिष्कम् । द्विनैष्किकम् । ठञ् । 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः । 'बिस्ताच्च' ॥५।१।३१॥ द्वित्रिपूर्वाद्बिस्ताच्चात् चकाराद्बहुपूर्वबिस्तान्तान् द्विगोरार्हीयस्य वा लुक् । द्विबिस्तम् । त्रिबिस्तम् । बहुबिस्तम् । पक्षे [1]द्विबैस्तिकमित्यादि । 'विंशतिकात् खः' ॥५।१।३२॥ अध्यर्धपूर्वाद् द्विगोश्च । [2]विंशतिक-शब्दान्तादार्हीयेषु खः स्यात् । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । विधिसामर्थ्याच्च लुक् । 'खार्या ईकन्' ॥५।१।३३॥ अध्यर्धपूर्वाद् द्विगोश्च खारीशब्दादीकन् स्यात् आर्हीयेषु । ठञ्लुकोरपवादः । अध्यर्धखारीकम् । द्विखारीकम् । केवलादपीति वाच्यम् । खारीकम् । काकिण्याश्चोपसंख्यानम् । अध्यर्धकाकिणीकम् । द्विकाकिणीकम् । केवलायाश्च । काकिणीकम् । 'पणपादमाषशताद्यत्' ॥५।१।३४॥ उक्तविशेषणादुक्तेऽर्थे । ठक्लुक्कनामपवादः । अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । अयं पादशब्दः परिमाणवाचीति पद्भावो न । प्राण्यङ्गस्य हि स इष्यते । अध्यर्धमाष्यम् । द्विमाष्यम् । अध्यर्धशत्यम् । द्विशत्यम् । 'शाणाद्वा' ॥५।१।३५॥ अध्यर्धपूर्वाद् द्विगोरित्येव । आर्हीयेषु वा यत् । पक्षे ठञ् । तस्य च लुक् । अध्यर्धशाण्यम् । अध्यर्धशाणम् । द्विशाण्यम् । द्विशाणम् । शताच्च वाच्यः । अध्यर्धशत्यम् । अध्यर्धशतम् । द्विशत्यम् । द्विशतम् । द्वित्रिपूर्वादण् च । शाणादुक्ते । चात् यद्वा । द्विशाण्यम् । द्विशाणम् । द्वैशाणम् । 'परिमाणान्तस्यासंज्ञाशाणयोः' इति पर्युदासादादिवृद्धिरेव । 'तस्य निमित्तं संयोगोत्पातौ' ॥५।१।३८॥

---

१. द्विबैस्तमि° Dc4. २. विंशतिशब्दा° Dc4.

**तस्येश्वरः ॥५।१।४२॥**

**सर्वभूमिपृथिवीभ्यामणञौ ॥५।१।४१॥**

षष्ठ्यन्ताभ्यामीश्वरेऽर्थे अणञौ स्तः ॥

---

तस्येति षष्ठ्यन्तान्निमित्तेऽर्थे यथास्वं पूर्वोक्ताष्ठञादयस्त्रयोदश प्रत्ययाः। तच्चेन्निमित्तं संयोग उत्पातो वा। संयोगः संबन्धः। शुभाशुभसूचको महाभूतविपरिणाम उत्पातः। शतस्य निमित्तं धनपतिना संयोगः शत्यः शतिकः। साहस्रः। उत्पातः खल्वपि। शतस्य निमित्तं दक्षिणाक्षिस्फुरणं शत्यम्। वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्। वातस्य शमनं कोपनं वातिकं पैत्तिकं श्लैष्मिकम्। संनिपाताच्चेति वक्तव्यम्। सांनिपातिकम्। 'गोद्व्यचोसंख्यापरिमाणाश्वादेर्यत्' ॥५।१।३९॥ तस्य निमित्तं संयोगोत्पातावित्यर्थे। ठञादीनामपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यच्त्रः। धन्यः। यशस्यः। असंख्यापरिमाणाश्वादेः किम्। पञ्चानां निमित्तं पञ्चकः। प्रास्थिकः। अश्वादेः। आश्विकः। अश्व। अश्मन्। ऊर्णा। उमा। भङ्ग। वर्षा। वसु। ब्रह्मवर्चसादुपसंख्यानम्। ब्रह्मवर्चस्यो गुरुसंयोगः। 'पुत्राच्छ च' ॥५।१।४०॥ यच्चोक्तेऽर्थे। पुत्रीयः। पुत्र्यः।

'सर्वभूमिपृथिवीभ्यामणञौ' ॥५।१।४१॥ उक्तेऽर्थे। ठकोपवादौ। सर्वभूमेर्निमित्तं संयोग उत्पातो वा। सार्वभौमः। अनुशतिकादित्वादुभयपदवृद्धिः। पृथिव्या निमित्तं संयोग उत्पातो वा पार्थिवः। तस्य। षष्ठीप्रकरणे पुनस्तस्येति समर्थनिर्देशस्तस्य निमित्तं संयोगोत्पातावित्यस्य निवृत्तये। अन्यथेश्वरोपि प्रत्ययार्थस्य निमित्तस्य विशेषणं संभाव्येत। स्पष्टत्वात् त्यक्तानि षट्षष्टिसूत्राणि व्याख्यायन्ते। 'तत्र विदित इति च' ॥५।१।४३॥

---

१. The Vritti:—तस्येति षष्ठी समर्थादीश्वरेऽर्थे यथास्वं प्रत्ययाः स्युः $B_2$. २. त्रयोदश dropped $Bc_1$. ३. After it—स्युः $Dc_4$. ४. वा dropped $Bc_1$, $Dc_3$, $Dc_4$.

सर्वभूमेरीश्वरः सार्वभौमः[१]। पार्थिवः[२]।

---

अत्रार्थे सर्वभूमिपृथिवीशब्दाभ्यामणञौ स्तः। सर्वभूमौ विदितः सार्वभौमः। पार्थिवः। 'लोकसर्वलोकाट्ठञ्' ॥५।१।४४॥ तत्र विदिते। लौकिकः। सार्वलौकिकः। 'तस्य वापः' ॥५।१।४५॥ उप्यतेस्मिन्निति वापः क्षेत्रम्। षष्ठ्यन्ताद्वापेर्थे यथाविहितं प्रत्ययः[३]। प्रस्थस्य वापः प्रास्थिकं क्षेत्रम्। 'पात्रात् ष्ठन्' ॥५।१।४६॥ तस्य वापेर्थे। ठञोपवादः। नः स्वरार्थः। षो ङीषर्थः। पात्रिकं क्षेत्रम्। पात्रिकी क्षेत्र[४]भक्तिः। 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' ॥५।१।४७॥ प्रथमासमर्थात् सप्तम्यर्थे यथास्वं प्रत्ययाः। यत् तत् प्रथमासमर्थं वृद्ध्यादि चेत् दीयते। तत्राधमर्णेनोत्तमर्णाय धनातिरिक्तं दीयमानं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भागः आयः। पटादीनामुपादानमूल्यादतिरिक्तं द्रव्यं लाभः। रक्षाकारितो राजभागः शुल्कम्। उत्कोच उपदा। पञ्चास्मिन् वृद्धिरायः शुल्कमुपदा वा दीयते पञ्चकः। शत्यः। शतिकः। साहस्रः। 'पूरणार्धाट्ठन्' ॥५।१।४८॥ तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे। पूरणादार्हीयस्य ठकोपवादः। अर्धादौपसंख्यानिकस्य ठनः। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। अर्धशब्दो रूपकार्धे रूढः। अर्धिकः। 'भागाद्यच्च' ॥५।१।४९॥ चात् ठन्। उक्तेर्थे। भागो वृद्ध्यादिरस्मिन् दीयते भाग्यं शतम्। भागिकम्। भागशब्दो रूपकार्धस्य वाचकः। 'तद्धरति वहत्यावहति भाराद्वंशादिभ्यः' ॥५।१।५०॥ द्वितीयान्ताद्वंशादिभ्यः परात् भाराद् भारभूतेभ्यो वा वंशादिभ्यो हरत्यादिषु यथास्वं प्रत्ययाः। हरति देशान्तरं प्रापयति चोरयति वा वहत्युत्क्षिप्य धारयति आवहत्युत्पादयतीत्यर्थः। वंशभारं हरति वहत्यावहति वा वंशभारिकः। भारभूतान् वंशान् हरति वांशिकः।

---

१. After it—आनुशतिकत्वादुभयपदवृद्धिः २. पृथिव्या ईश्वरः पार्थिव $D_6$. ३. प्रत्ययाः $Bc_1$, $Dc_3$. ४. क्षेत्र drodped $Bc_1$, $Dc_1$, $Dc_3$.

सूत्रार्थद्वयमप्याचार्येण[1] शिष्याः प्रतिपादिताः । वंश । कुटज । बल्वज । श्लक्ष्ण[2] । मूल । स्थूणा । अश्मन् । अश्व । इक्षु । खट्वा । 'वस्नद्रव्याभ्यां ठन्कनौ' ॥५।१।५१॥ द्वितीयान्ताभ्यामाभ्यामेतौ च[3] यथासंख्यं हरत्यादिष्वर्थेषु । वस्नं हरत्यादि वास्निकः । द्रव्यकः । 'संभवत्यवहरतिपचति' ॥५।१।५२॥ द्वितीयान्तादेष्वर्थेषु यथास्वं प्रत्ययाः । आधेयस्य प्रमाणानतिरेकेण धारणं संभवः । धारणार्थत्वाद्भवतेः सकर्मकता । अवहरणमुपसंहरणम् । प्रस्थं संभवत्यवहरति पचति वा प्रास्थिकः कटाहः पाचकश्च । द्रोणादण् च पचत्यर्थे । द्रौणः । द्रौणिकः । 'आढकाचितपात्रात् खोन्यतरस्याम्' ॥५।१।५३॥ उक्तेषु । पक्षे ठञ् । आढकं संभवत्यवहरति पचति वा आढकीना । आढकिकी । आचितीना । आचितिकी । पात्रिकी । पात्रीणा । 'द्विगोःष्ठंश्च' ॥५।१।५४॥ आढकाचितपात्रान्तात् संभवत्यादिषु । चात् खः । अन्यतरस्यामित्यनुवृत्तेष्ठञपि[4] । तत्र विधिसामर्थ्यात् ठन्खयोर्लुक्[5] न । ठञस्तु स्यादेव । खनौ ङीषाद्युदात्तार्थौ । द्व्याढकिकी । द्व्याढकीना । द्व्याढकी । 'कुलिजाल्लुक् खौ च' ॥५।१।५५॥ एतदन्ताद् द्विगोरुक्तेषु । चात् ष्ठन्[6] । अन्यतरस्यामित्यनुवृत्त्या लुगपि विकल्प्यते[7] । तेन ठञोपि श्रवणं पक्षे । द्वे कुलिजे संभवत्यवहरति पचति वा द्विकुलिजीना द्विकुलिजिकी द्विकुलिजी द्वैकुलिजिकी । 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र कुलिजग्रहोपीष्टस्तेन नोत्तरपदवृद्धिः । 'सोस्यांशवस्नभृतयः' ॥५।१।५६॥ प्रथमान्तात् षष्ठ्यर्थे यथाविधि स चेत् प्रथमान्तोंशो वस्नो भृतिर्वा स्यात् । अंशो भागः । वस्नो मूल्यम् । भृतिर्वेतनम् । पञ्चांशो

१. द्वयेप्याचा° Dc3. २. सूक्ष्म Bc1, Dc1. ३. Dropped Bc1, Dc3. ४. °त्यनुवर्तते Bc1, Dc3. ५. ठखयो° Bc1, Dc3. ६. खन् Bc1. ७. निषिध्यते । Dc3.

वस्नो भृतिर्वेतनं वास्य पञ्चकः । 'तदस्य परिमाणम्' ॥५।१।५७॥ प्रथमान्तात् षष्ठ्यर्थे यथास्वम् । प्रस्थः परिमाणमस्य प्रास्थिको राशिः । समर्थविभक्तिप्रत्ययार्थयोः पूर्वसूत्रादेवानुवृत्तौ पुनर्ग्रहण-मध्यर्धपूर्वद्विगोर्लुगभावार्थम् । तेन द्व षष्टी जीवितपरिमाणमस्य द्विषाष्टिक इत्यादि सिद्धम् । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' ॥५।१।५८॥ संख्यावाचिनः परिमाणोपाधिकात् षष्ठ्यर्थे यथास्वं प्रत्ययाः प्रत्ययान्तं चेत् संज्ञादि स्यात् । पञ्च संख्या परिमाणमेषां पञ्चकाः शकुनयः । त्रिकाः शालङ्कायनाः । सप्तको ब्रह्मवृक्षः । अष्टको राजर्षिः । भावे स्वार्थेपि संज्ञायाम् । यथा पञ्चैव पञ्चकाः । त्रयः परिमाणमस्य त्रिकः सङ्घः । अष्टावध्यायाः परिमाणमस्याष्टकं पाणिनीयं सूत्रम् । त्रिकं काशकृत्स्नम् । दशकं वैयाघ्रपदीयम् । पञ्चावृत्तयः परिमाणमस्य पञ्चकमध्ययनम् । स्तोमे डविधिः पञ्चदशाद्यर्थम्[1] । पञ्चदश मन्त्राः परिमाणमस्य पञ्चदश स्तोमः । एकविंशः । 'पङ्क्तिविंशतित्रिंशत्-चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्' ॥५।१।५९॥ एते तदस्य परिमाणमित्यधिकारात् परिमाणिनि निपात्यन्ते । पञ्च पदानि परिमाणमस्य पङ्क्तिश्छन्दः । पञ्चन् शब्दात् तिप्रत्यय-ष्टिलोपश्च निपात्यते । द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्ययाः । विंशतिर्गावः । स्वाभाविकमेकवचनं स्त्रीत्वं च । त्रयाणां दशतां त्रिन्भावः शत्प्रत्ययः । त्रिंशत् । चतुर्णां चत्वारिन्-भावः शत्प्रत्ययः । चत्वारिंशत् । पञ्चानामाकारः शच्च प्रत्ययः । पञ्चाशत् । षण्णां तिप्रत्ययः अपदत्वं च । षष्टिः । सप्तानां त्रिप्रत्ययः । सप्ततिः । अष्टानामशीभावस्तिश्च प्रत्ययः । अशीतिः । नवानां तिप्रत्ययः । नवतिः । दशानां दशतां शभावः तश्च प्रत्ययः । शतम् । सहस्रादयोप्येवंजातीयका[2] एतद्वदेव द्रष्टव्याः । उदाहरणमात्रमेतत् । एते सर्वे यथाकथंचिद् व्युत्पाद्याः ।

१. °द्यर्थः Bc1. २. °प्येवंविधजाती° Dc3.

नात्रावयवार्थेऽभिनिवेष्टव्यम् । 'पञ्चद्दशतौ वर्गे वा' ॥५।१।६०॥ निपात्ये । पञ्च परिमाणमस्य पञ्चद्वर्गः । पक्षे 'संख्याया अति—' इति कन् । पञ्चकः । दशत् । दशकः । 'त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्' ॥५।१।६२॥ वर्गे । त्रिंशदध्यायाः परिमाणमेषां त्रैंशानि ब्राह्मणानि । चत्वारिंशानि । त्रिंशतो योगविभागजे कनि प्राप्ते चत्वारिंशतः प्राग्वतीये ठञि । 'तदर्हति' ॥५।१।६३॥ अर्हतीत्यर्थे द्वितीयान्ताद्यथास्वम् । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । शत्यः । शतिकः । 'छेदादिभ्यो नित्यम्' ॥५।१।६४॥ नित्यग्रहणं प्रत्ययार्थविशेषणम् । नित्यं सदा छेदमर्हति छैदिकः । छेद । भेद । द्रोह । दोह । नर्त । प्रकर्ष । कर्ष । संप्रयोग । विप्रयोग । विप्रकर्ष । प्रेषण । संप्रश्न । विरागस्य विरङ्गादेशश्च । वैरङ्गिकः । 'शीर्षच्छेदाद्यच्च' ॥५।१।६५॥ नित्यमर्हतीत्यर्थे । चात् ठक् । शीर्षच्छेद्यः । शैर्षच्छेदिकः । 'दण्डादिभ्यो यः' ॥५।१।६६॥ नित्यमिति निवृत्तम् । ठकोपवादः । दण्डमर्हति दण्ड्यः । दण्ड । मुसल । मधुपर्क । कशा । अर्घ । मेधा । मेघ । उदक । वध । युग । वृत् । 'पात्राद् घंश्च' ॥५।१।६८॥ यश्च । पात्रमर्हति पात्रियः पात्र्यः । परिमाणार्थत्वात् ठञ्ठकोरपवादः । 'कडङ्गरदक्षिणाच्छ च' ॥५।१।६९॥ यच्च । अर्हत्यर्थे । ठकोपवादः । कडङ्गरीयो गौः । कडङ्गर्यः । दक्षिणीयः । दाक्षिण्यः । अल्पाच्तरस्य परनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति । 'स्थालीबिलात्' ॥५।१।७०॥ छयतौ स्तोऽर्हत्यर्थे । स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाकयोग्या इत्यर्थः । 'यज्ञर्त्विग्भ्यां घखञौ' ॥५।१।७१॥ यथासंख्यमर्हत्यर्थे तत्कर्मार्हतीत्यर्थे चेष्यते । यज्ञियो ब्राह्मणो देशो वा । आर्त्विजीनः ।

इत्यार्हीयाः । ठगादीनां पूर्णोऽवधिः ।

---

१. ठञ Dc3, Dc4. २. दण्ड्यम् Bc1, Dc3. ३. परिमाणापरिमाणार्थत्वात् Bc1, Dc4; परिमाणमपरिमाणार्थत्वात् Dc1. ४. °गरीयो Bc1, Dc3, Dc4. ५. °गर्यः Bc1, Dc3, Dc4. ६. °निपातन° Bc1; °निपात° Dc3.

इतःपरं प्राग्वतीयष्ठञेव । 'पारायणतुरायणचान्द्रायणं वर्तयति' ॥५।१।७२॥ एभ्यो द्वितीयान्तेभ्यो वर्तयतीत्यर्थे ठञ् । द्वितीयाप्रकरणे द्वितीयोच्चारणामिष्टविषये प्रत्ययो यथा स्यात् । पारायणं वर्तयति पारायणिकः । शिष्यो न गुरुः । तुरायणो यज्ञस्तं वर्तयति तौरायणिको यजमानो न याजकः । चान्द्रायणिकस्तपस्वी । 'संशयमापन्नः' ॥५।१।७३॥ ठञ् । अत्रापि पुनर्द्वितीयोच्चारणामिष्टविषयार्थं तेन संशयस्य विषये कर्मण्येव प्रत्ययो न कर्तरि । संशयमापन्नः सांशयिकः स्थाणुः । 'योजनं गच्छति' ॥५।१।७४॥ ठञ् । योजनं गच्छति यौजनिकः । क्रोशशतयोजनशतयोरुपसंख्यानम् । क्रौशशतिकः । यौजनशतिकः । ततोभिगमनमर्हतीत्यप्यर्थे । 'पथः ष्कन्' ॥५।१।७५॥ तं गच्छतीत्यर्थे । षनौ ङीषाद्युदात्तार्थौ । पन्थानं गच्छति पथिकः । पथिकी । 'पन्थो ण नित्यम्' ॥५।१।७६॥ पथः पन्थ इत्ययमादेशो ण च प्रत्ययः सदा गच्छत्यर्थे । पन्थानं गच्छति पान्थः । 'उत्तरपथेनाहृतं च' ॥५।१।७७॥ तृतीयान्तादुत्तरपथादाहृतमिति तेन गच्छतीति चार्थे ठञ् । उत्तरपथेनाहृतस्तेन गच्छति वा औत्तरपथिकः । वारिजङ्गलस्थलकान्ताराजशङ्कुपूर्वपदात् पथष्ठञ् वाच्यः । वारिपथेनाहृतस्तेन गच्छति वारिपथिकः इत्यादि । अण् स्थलपथाद्वाच्यो मधुकमरीचयोरर्थयोः । स्थालपथं मधुकं मरीचं वा । 'कालात्' ॥५।१।७८॥ 'व्युष्टादिभ्योण्' । इति यावत् कालाधिकारः । 'तेन निवृत्तम्' ॥५।१।७९॥ तृतीयान्तात् कालात् ठञ् निवृत्तेर्थे । अह्ना निर्वृत्तमाह्निकम् । 'तमधीष्टो भृतो भूतो भावी' ॥५।१।८०॥ द्वितीयान्तात् कालादिष्वर्थेषु ठञ् । मासमधीष्टः सत्कृत्य व्यापारितो मासिकः । भृतो वेतनेन क्रीतः । स्वसत्तया व्याप्तो भूतः । भावी तादृश एवानागतकालः । 'मासाद्वयसि यत्खञौ' ॥५।१।८१॥ वयसीत्युक्तिसामर्थ्यात् भूत एवात्र युज्यते । मासं भूतो मास्यो

मासीनः । वयसि किम् । मासिकम् । 'द्विगोर्यप्[1]' ॥५।१।८२॥ मासोन्ताद्वयसि । द्वौ मासौ भूतौ द्विमास्यः । षण्मासाच्च । यप् च । औत्सर्गिकः ठञपि समुच्चीयते । वयसि । षाण्मास्यः । षण्मास्यः । षाण्मासिकः । 'अवयसि ठंश्च' ॥५।१।८४॥ 'षण्मासाण्ण्यच्च[2]' ॥५।१।८३॥ षाण्मासिको रोगः । षाण्मास्यः । 'समायाः खः' ॥५।१।८५॥ अधीष्टादिचतुष्टयं 'तेन निर्वृत्तम्' इति चानुवर्तते । समामधीष्टादिस्तया निर्वृत्तो वा समीनः । 'द्विगोर्वा' ॥५।१।८६॥ समान्तान्निवृत्तादिषु पञ्चसुखः । पक्षे ठञ् । द्विसमीनः । द्वैसमिकः । 'रात्र्यहःसंवत्सराच्च' ॥५।१।८७॥ द्विगोर्निवृत्तादिषु वा खः । पक्षे ठञ् । द्विरात्रीणः । द्वैरात्रिकः । द्व्यहीनः । अत्र विभाषा वर्तते । सा च व्यवस्थिता[3] । द्वैयह्निकः । द्विसंवत्सरीणः । द्विसांवत्सरिकः । 'वर्षाल्लुक् च' ॥५।१।८८॥ वर्षान्ताद् द्विगोर्निवृत्तादिषु खठञौ तयोर्लुक् वा । द्विवर्षीणो भोगः । द्विवार्षिकः । द्विवर्षः । 'वर्षस्याभविष्यति' इत्युत्तरपदवृद्धिः । 'चित्तवति नित्यम्' ॥५।१।८९॥ वर्षान्ताद् द्विगोः परस्य प्रत्ययस्य [4]नित्यं लुक् । द्विवर्षो दारकः । 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' ॥५।१।९०॥ षष्टिरात्र[5]शब्दात् कन् प्रत्ययो रात्र[6]शब्दस्य लोपश्च निपात्यते । बहुवचनमतन्त्रम् । धान्यविशेषसंज्ञा षष्टिका इति । तेन न मुद्गादिष्वतिप्रसंगः । 'तेन परिजय्यलभ्यकार्यसुकरम्' ॥५।१।९३॥ तृतीयान्तात् कालवाचिनः परिजय्यादिष्वर्थेषु ठञ् । मासेन परिजय्यादिर्मासिकः । 'तदस्य ब्रह्मचर्यम्' ॥५।१।९४॥ तदिति प्रथमान्ताद् द्वितीयान्ताद्वा[7] कालात् षष्ठ्यर्थे ठञ् । मासोस्य ब्रह्मचर्यस्य मासिकम् । मासं ब्रह्मचर्यमस्य मासिकः । पूर्वत्र ब्रह्मचर्यं प्रत्ययार्थ उत्तरत्र ब्रह्मचारी । आदित्यव्रतगोदानमहानाम्नीभ्यस्तस्य ब्रह्मचर्यं तच्चरतीत्यर्थयोष्ठञ् । आदित्यव्रतस्य ब्रह्मचर्यं तच्चरति वा

---

१. °र्यत् Dc3. २. °सात् ण्यत् च यच्च । Dc3. ३. °स्थितेति ठक् Dc4, Dc3 (ठञ् Dc3). ४. नित्यं dropped Dc3, Dc4. ५. रात्रि° Bc1, Dc4. ६. रात्रि° Bc1, Dc4. ७. द्वितीयान्ताच्च Dc2.

आदित्यव्रतिकमादित्यव्रतिकः। गौदानिकं गौदानिकः। महानाम्न्यो नाम ऋचस्तत्सहचरितं व्रतं तच्छब्देनोच्यते । माहानामिकं माहानामिकः। अवान्तरदीक्षादेस्तच्चरतीत्यर्थे डिनिर्वाच्यः । अवान्तरदीक्षी तिलव्रती देवव्रती । अष्टाचत्वारिंशात् डुनूडिनी वाच्यौ व्रतं चरतीत्यर्थे । अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः अष्टाचत्वारिंशी । चातुर्मास्यानां डुनूडिनौ यलोपश्च । चातुर्मास्यानि चरति चातुर्मासिकः । चातुर्मासी । चातुर्मासात् ण्यो यज्ञे । तत्र भवे । चतुर्मासेषु भवानि चातुर्मास्यानि । यज्ञविशेषाः । तत्सहचरितानि चातुर्मास्यानि । संज्ञायामण् वाच्यः । चतुर्मासेषु भवा पौर्णमासी चातुर्मासी । आषाढी कार्तिकी फाल्गुनी । 'तस्य च दक्षिणा यज्ञाख्येभ्यः' ॥५।१।९५॥ षष्ठ्यन्तेभ्य एभ्यो दक्षिणेत्येतस्मिन्नर्थे ठञ् ।[1] आग्निष्टोमे दीयते आग्निष्टोमिकं भक्तम् ॥

कालाधिकारस्य पूर्णोवधिः ॥

---

१. Bc1, Dc4 have after it— अग्निष्टोमस्य दक्षिणा *आग्निष्टोमिकी । †कालाधिकारेण्याख्यामहायज्ञवाचिनोरपि स्यात् । अन्यथैकादशाहप्रभृतय एव संज्ञा गृह्येरन् । प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति एकादशाहादिष्वस्ति प्रसंगः । 'तत्र च दीयते कार्यं भववत्' ॥५।१।९६॥ सप्तम्यन्तात् कालवाचिनो दीयते कार्यमित्यनयोरर्थयोर्भववत्§ प्रत्ययाः स्युः । यथा । मासे भवं मासिकम् । एवं मासं दीयते कार्यं वा मासिकम् । वतिः सर्वसादृश्यार्थः । हेमन्ते दीयते कार्यं वा हैमनम् । योगविभागश्चात्र कार्यः । तत्र च दीयते इति तेन यज्ञाख्येभ्योऽपि ।

---

* आग्नि° D4. † °वाचिनः कालादपि Dc3. § After it–सप्तम्यन्तात् कालवाचिनो दीयते कार्यमित्यनयोरर्थयोर्भववत् Dc4.

अतः परं सामान्येन प्रत्ययाः । 'व्युष्टादिभ्योण्' ॥५।१।९७॥ सप्तम्यन्तेभ्य एतेभ्यो दीयते कार्यं वा इत्यर्थयोरण् । व्युष्टे दीयते कार्यं वा वैयुष्टम् । व्युष्ट । नित्य । निष्क्रमण । प्रवेशन । तीर्थ । संग्राम । संघात । अग्निपद । पीलुमूल । 'तेन यथाकथा च हस्ताभ्यां णयतौ' ॥५।१।९८॥ तृतीयान्ताभ्यामाभ्यां क्रमादेतौ दीयते कार्यं वा इत्येतदर्थयोः । यथाकथंचिच्छब्दोव्ययसमुदायोनादरवाची । यथाकथंचिद्दीयते कार्यं वा याथाकथाचम् । हस्तेन दीयते कार्यं वा हस्त्यम् । 'संपादिनि' ॥५।१।९९॥ गुणोत्कर्षः संपत्तिः । आवश्यके णिनिः । अत्रार्थे तृतीयान्तात् ठञ् । कर्णवेष्टकाभ्यां संपादि विशेषतः शोभमानं मुखं कार्णवेष्टकिकम् । 'कर्मवेषाद्यत्' । तेन संपादिन्यर्थे । कर्मणा संपादि कर्मण्यम् । वेषेण संपादी वेष्यः । 'तस्मै प्रभवति संतापादिभ्यः' ॥५।१।१०१॥ चतुर्थ्यन्तेभ्यः संतापादिभ्यः प्रभवतीत्यर्थे ठञ् । संतापाय प्रभवति सांतापिकः । अलमर्थे चतुर्थी । संताप । संनाह । संग्राम । संयोग । संपराय । संवेष । निष्पेष । निसर्ग । उपसर्ग । प्रवास । उपवास । संघात । संमोदन । सक्तु । मांसौदनाद्विगृहीतादपि । 'योगाद्यच्च' ॥५।१।१०२॥ चात् ठञ् । प्रभवत्यर्थे । योग्यः । यौगिकः । 'कर्मण उकञ्' ॥५।१।१०४॥ कर्मणे प्रभवति कार्मुकम् । 'समयस्तदस्य प्राप्तम्' ॥५।१।१०४॥ प्रथमान्तात् समयादस्य प्राप्तमित्यर्थे ठञ् । समयः प्राप्तोस्य सामयिकम् । 'ऋतोरण्' ॥५।१।१०५॥ ऋतुः प्राप्तोस्य आर्तवम् । उपवस्तुः प्राशितुश्च वाच्यः । उपवस्ता प्राप्तोस्य औपवस्त्रम् । प्राशित्रम् । 'कालाद्यत्' ॥५।१।१०७॥ कालः प्राप्तोस्य काल्यम् । 'प्रकृष्टे ठञ्' ॥५।१।१०८॥ प्रकर्षे वर्तमानात् प्रथमान्तात् कालात् षष्ठ्यर्थे ठञ् । प्रकृष्टो दीर्घः कालोस्य कालिकमृणम् । ठञ्ग्रहणं विस्पष्टार्थम् । 'प्रयोजनम्' ॥५।१।१०९॥ तदस्य प्रयोजनमित्यर्थे प्रथमान्तात् ठञ् । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । 'विशाखाषाढादण्मन्थदण्डयोः' ॥५।१।११०॥ तदस्य

१. एभ्यो Dc4. २. इत्येतयोः Dc3, Dc4. ३. संपराजय Bc1.

प्रयोजनमित्यर्थे यथासंख्यमेताभ्यां मन्थे दण्डे च वाच्येण् । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । अन्यत्र वैशाखिकः । चूडादेरुपसंख्यानम् । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् । 'अनुप्रवचनादिभ्यश्छः' ॥५।१।१११॥ अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयः । विशिपूरिपदिरुहिभ्यो ल्युडन्तेभ्यः सपूर्वपदेभ्यश्छो वाच्यः । गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् । प्रपापूरणीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् । स्वर्गादिभ्यो यद्वाच्यः । स्वर्ग्यम् । धन्यम् । यशस्यम् । आयुष्यम् । काम्यम् । पुण्याहवाचनादिभ्यो लुग्वाच्यः । पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । शान्तिवाचनम् । स्वस्तिवाचनम् । अनुप्रवचन । उत्थापन । संवेशन । अनुप्रवेशन । अनुवाचन । आरम्भण । अन्वारोहण । 'समापनात् सपूर्वपदात्' ॥५।१।११२॥ प्रयोजने छः । छन्दः समापनं प्रयोजनमस्य छन्दः-समापनीयम् । पदग्रहणं बहुच्पूर्वनिरासार्थम् । 'ऐकागारिकट् चौरे' ॥५।१।११३॥ निपात्यते । एकमसहायमगारं गृहं प्रयोजनमस्य ऐकागारिकः । ङीबन्तोस्तु स्त्रियामेष मा च ञित्स्वरवान् स्म भूत् । अचोरेस्माच्च ठञ् मा भूदिति ह्येवं निपात्यते । केचित्तु इकट्प्रत्ययं वृद्धिं च निपातयन्ति । 'आकालिकडाद्यन्तवचने' ॥५।१।११४॥ समानकालशब्दस्याकाले देशो इकट् च प्रत्ययो निपात्यते । आद्यन्तवचने समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुः । जन्मसमानकालविनाश इत्यर्थः । आकालाट्ठञ् च । आकालिकोन-ध्यायः ।

इति प्राग्वतीयाः प्रत्ययाः । ठञः पूर्णोविधिः ।

---

१. अनुरोहण $Bc_1$, $Dc_3$. २. आरोहण $Bc_1$, $Dc_3$, $Dc_4$.

**तेन तुल्यं क्रिया चेद्वतिः ॥५।१।११५॥**

तृतीयान्तात् तुल्येऽर्थे वतिः स्यात् यत्तुल्यं सा क्रिया चेत् । ब्राह्मणेन तुल्यं वर्तते ब्राह्मणवत् । क्रिया किम् । गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ।

**तत्र तस्येव ॥५।१।११६॥**

सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे वतिः स्यात् ॥ मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवत् मैत्रस्य गावः ।

---

**तेन तुल्यम्** । ब्राह्मणेन तुल्यमित्यादि । ननु ब्राह्मणादयः शब्दा जातिं द्रव्यं च ब्रुवते न क्रियामतो ब्राह्मणवदित्यत्र क्रियायाः केन तुल्यतेति चेदुच्यते । अत्र ब्राह्मणादिशब्दैः ब्राह्मणादिस्था क्रियोच्यते तेन ब्राह्मणक्रियातुल्यक्रियो ब्राह्मणवदित्युच्यते ।

**तत्र तस्य** । अक्रियार्थोऽयमारम्भः । इवार्थ इति । सादृश्ये इत्यर्थः । स्पष्टत्वात् [१]त्यक्तम् । 'तदर्हम्' ॥५।१।११७॥ द्वितीयान्तादर्हार्थे वतिः स्यात् । [२]देवमर्हति देववद्वृत्तम् ।

क्रियायां कर्तृभूतायां प्रत्ययोऽत्र विवक्षितः ।
पूजामर्हति विप्रोऽयमित्यादौ न भवेदतः ॥

---

१. Dropped D6. २. त्यक्तमेकम् Dc3.

**तस्य भावस्त्वतलौ ॥५।१।११९॥**

षष्ठ्यन्ताद्भावेऽर्थे त्वतलौ स्तः ॥ शब्दस्य प्रवृत्तिनिमित्तं भावः । त्वान्तं क्लीबम् । तलन्तं स्त्रियाम् । साधोर्भावः साधुत्वम् । साधुता ।

---

अथावत्वीयाः । इतस्त्वतलोरधिकारः ।

**तस्य भावः** । भवतेरनेकार्थत्वाद् भावशब्दस्याभिप्रायादयोऽनेकार्थाः । तत्र न ज्ञायते कोऽत्रार्थोऽभिप्रेत इति तज्ज्ञानार्थमाह । शब्दस्येत्यादि । भवतोऽस्माच्छब्दप्रत्ययाविति व्युत्पत्त्या इत्यभिप्रायः । विशेषणाद्धि गोत्वादेर्विशेष्ये गवादौ गौरित्यादिः शब्दः प्रवर्तते । गोत्वाद्याकारानुगतश्च प्रत्ययो भवति । स च भावोऽनेकविधः । जातिशब्दानां जातिर्यथा गोशब्दस्य गोत्वं गुणशब्दानां गुणः यथा शुक्लस्य शुक्लत्वं क्रियाशब्दानां क्रिया यथा पाचकस्य पचिक्रिया । केचित्तु क्रियाकारकसंबन्धं क्रियाशब्दानामिच्छन्ति यदृच्छाशब्दानां स्वरूपं यथा डित्थशब्दस्य डित्थत्वमित्यादौ द्रष्टव्यम् । आकाशत्वमभावत्वमित्याद्युपचरितं सामान्यमेतच्च **महाभाष्यादौ** विस्तरेण प्रतिपादितं ततो ज्ञेयम् । ननु नानेत्यादीनामव्ययादीनामसत्त्ववाचित्त्वेन षष्ठ्यर्थेनायोगात् षष्ठ्यन्तत्वाभावात् कथं स्वाद्युत्पत्तिर्नानात्वमित्यादौ । उच्यते । असत्त्वभूतमप्यव्ययं शब्दान्तरेण प्रत्यवमृष्टं षष्ठ्यर्थत्वेन युज्यते । नानेत्यस्य भाव इति । प्रत्यवमर्शार्थं च वृत्तिरेव गमयति । त्वान्तं क्लीबमित्यादि । शब्दशक्तिस्वभावादिति भावः ।

---

१. °ज्ञावार्थे P, D2. २. गोत्वादि विशिष्यते Dc3. ३. °गमश्च Bc1.
४. षष्ठ्यर्थेन प्रयुज्यते Dc4 ; षष्ठ्यर्थेन युज्यते Dc3. ५. स्वाभाव्यादि° Dc3.

## ह्रस्वात्तादौ तद्धिते ॥८।३।१०१॥

ह्रस्वात्परस्य सस्य षः स्यात्तादौ तद्धिते ॥ यजुष्टम्[1]। यजुष्टा। ह्रस्वात् किम्। गीस्त्वम्। तिङन्निषेधः[2]। भिन्द्युस्तराम्[3]।

## आ च त्वात् ॥५।१।१२०॥

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलौ च[4]कारान्नञ्स्नञ्भ्यां[5] समावेशः। स्त्रिया भावः स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम्। पुंस्त्वम्। पुंस्ता।

---

ह्रस्वात्। अपदान्तस्येत्यधिकारात् पदान्तस्याप्राप्ते मूर्धन्ये सत्ययमारम्भः। यजुष्टमिति। यजुषो भावः। सस्य रुत्वम्। तस्य विसर्जनीयः। 'विसर्जनीयस्य सः' इति सः। तस्यानेन षः। गीस्त्वमिति। 'र्वोरुपधाया दीर्घ—' इति दीर्घः। भिन्द्युस्तरामिति। भिदेर्लिङ्। यासुट्सलोपः[6]। झेर्जुस्। 'उस्यपदान्तात्' इति पररूपम्। भम्। 'श्नसोरल्लोपः' इत्यल्लोपः। 'तिङश्च' इति तरप्। 'किमेत्तिङ—' इत्याम्।

आ च त्वात्। त्वतलोरपवादैः सह समावेशार्थं कर्मणि विधानार्थं वचनम्। ननु चात्रत्यश्चकारः किमर्थमित्याशङ्क्याह। चकारादिति। स्पष्टत्वात् त्यक्तमेकम्। 'न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटबुधकतरसलसेभ्यः' ॥५।१।१२१॥ वक्ष्यमाणभावप्रत्यया नञ्पूर्वात्तत्पुरुषान्न स्युः। चतुरादीन् वर्जयित्वा। अपतित्वम्। अपटुता। अरमणीयत्वम्। नञ्पूर्वात् किम्। बार्हस्पत्यम्। तत्पुरुषादिति किम्। नास्य पटवः सन्त्यपटुः। तस्य भावः आपटवम्।

---

१. After it—ज्योतिष्टम् $D_3$, $D_5$, $B_1$, $B_2$. २. तिङा निषेधः P; तिङो निषेधः $B_1$. ३. बिभ्युस्तराम् C. ४. चात् $B_1$. ५. नञ्स्नञोः C, $D_2$, $D_3$, $B_2$. ६. सलोपः $Bo_1$, $Do_4$.

पृथ्वादिभ्य इमनिज्वा ॥५।१।१२२॥

एभ्य इमनिज् वा स्याद्भावे ॥

टेः ॥६।४।१५५॥

भस्य टेर्लोपः स्यादिष्ठेमेयस्सु[2] परतः ॥

र ऋतो हलादेर्लघोः ॥६।४।१६१॥

हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु ॥ पृथोर्भावः प्रथिमा । म्रदिमा । हलादेः किम् । ऋजिमा । लघोः किम् । कृष्णिमा ॥ पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्[4] ॥* पक्षे[5] त्वतलौ[6] ।

---

अचतुरादिभ्यः किम् । आचतुर्यम् । आलवण्यम्[7] । आवट्यम् । आबुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् । ष्यञ् एभ्यो ब्राह्मणादेराकृतिगणत्वात् ।

पृथ्वादिभ्यः । वाक्यस्य महाविभाषयैव सिद्धेर्वावचनमिगन्तलघुपूर्वादिणि चण्डादेर्गुणशब्दात् ष्यञि बालादेर्वयोवचनादञि प्राप्ते तत्समावेशार्थम् । पृथु । मृदु । स्वादु । महत्[8] । तनु । लघु । पाण्डु[9] । पटु । बहु । साधु । आशु । उरु[10] । अणु[11] । चण्ड । खण्ड । बहुल । अक्ष । धन । बाल । होड । पाक । वत्स । मन्द । ऋजु । ह्रस्व । दीर्घ । क्षिप्र । क्षुद्र । प्रिय । रऋतः । परिगणनं चात्र कर्तव्यमन्येषां मा भूदित्यभिप्रेत्याह । मृदु इत्यादि । यद्येवं हलादेर्लघोरिति किमर्थम् । विस्पष्टार्थम् ।

---

१ भावार्थे $B_1$. २. त् इष्ठ इमन् ईयस्सु $B_2$, त् इष्ठ इम ईयस्सु $D_4$. ३. Dropped $D_4$. ४. रत्वमिष्यते $B_1$. ५. P has पक्षे पृथुता; C, $D_1$, $B_2$ have पृथुत्वम् । पृथुता; before पक्षे—वावचनमणादिसमावेशार्थम् । $D_4$; पक्षे । पृथुत्वम् । पृथुता । $D_5$. ६. पृथुत्वम् । पृथुता $D_2$, $D_4$. ७. Before it—आसंगत्यम् $Dc_3$. ८. महि । पद $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ९. लञ्जु $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. १०. Before it–समु $Bc_1$, $Dc_3$; शमु $Dc_1$, $Dc_4$. ११. गुरु $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$.

**वर्णदृढादिभ्यः ष्यञ्च ॥५।१।१२३॥**

वर्णविशेषार्थेभ्यो[1] दृढादिभ्यश्च ष्यञ् स्यात् इमनिज्वा[2] भावेऽर्थे[3] ॥ शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा । लावण्यम् । लवणिमा । षित्त्वात् ङीष् । औचिती । मैत्री[4] । हलस्तद्धितस्येति यलोपः । पक्षे त्वतलौ ।

**गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥५।१।१२४॥**

गुणवचनाद् ब्राह्मणादेश्च[5] ष्यञ् स्यात् कर्मणि भावे[6] च ॥ जडस्य कर्म[7] भावो वा जाड्यम् । ब्राह्मण्यम् । चौर्यम् । पक्षे कर्मभावयोस्त्वतलौ[8] । चतुर्वर्णादीनां स्वार्थे ष्यञ् वाच्यः ।* चत्वार एव वर्णाश्चातुर्वर्ण्यम् । त्रैलोक्यम् । चातुराश्रम्यम् । चतुर्वेदस्योभयपदवृद्धिः ।[9] चातुर्वैद्यम् ॥

---

वर्ण । वर्णेभ्यो दृढादिभ्यश्चेति । बहुवचनं प्रत्येकमभिसंबध्यते । तेन वर्णवाचिनां ग्रहणं न स्वरूपस्येत्यभिप्रेत्याह । वर्णविशेषार्थेभ्य इति । गुणवचनात् सिद्धौ ष्यञ्ग्रहणमुत्तरार्थं वचनं त्विमनिजर्थम् । दृढ । परिवृढ । कृश । भृश । चक्र । आम्र । लवण । अम्ल । वेर्यातलाभमतिर्मनःशारदानाम् । वैयात्यम् । वैलाभ्यम् । वैमत्यम् । वैमनस्यम् । वैशारद्यम् । पक्षे इमनिजादयः । समो मतिमनसोः । सांमत्यम् । सांमनस्यम् । शीत । उष्ण । जड । बधिर । मूक । मूर्ख । पण्डित । मधुर ।

गुणवचन । गुणमुक्त्वा गुणिनि वर्तन्ते ये ते गुणवचनाः । ब्राह्मण । माणव । वाडव । अर्हतो नुम् च । आर्हन्त्यम् । चोर । धूर्त । सांराधय । विराधय । अपराधय । एकभाव । द्विभाव ।

---

१. वर्णविशेषवाचिभ्यो $B_1$. २. इमनिच्च for इमनिज्वा C. ३. भावे $D_5$. ४. P, $D_1$, $D_4$, $D_6$, $B_2$ drop from मैत्री to यलोपः. ५. ब्राह्मणादिभ्यश्च $D_1$. ६. भावेऽर्थे C. ७. भावः कर्म वा $B_2$. ८. भावकर्मणो° $D_2$, $D_3$, $B_1$, C. ९. After it–वाच्या $D_4$. १० आकृष्ट $Bc_1$, $Dc_3$, $Dc_4$.

**स्तेनाद्यन्नलोपश्च ॥५।१।१२५॥**

अस्माद्यत् स्यान्न[1]लोपश्च । कर्म[2]भावयोः ॥ स्तेयम् ।
योगविभागात् पक्षे ष्य । स्तैन्यम् ॥

**सख्युर्यः ॥५।१।१२६॥**

सख्यम् ॥ दूतवणिग्भ्यां च ॥* दूत्यम्[5] । वणिज्यम् ।

**कपिज्ञात्योर्ढक् ॥५।१।१२७॥**

कापेयम् । ज्ञातेयम् ।

---

त्रिभाव । अपत्यभाव । अक्षेत्रज्ञ । संवादिन् । संवेशिन् । संवेदिन् । बहुभाषिन् । शीर्षघातिन् । समस्थ । परमस्थ । विषमस्थ । अनीश्वर[6] । गडुल[7] । दायाद । कुशल । निपुण । पिशुन । बालिश । अलस । दुःपुरुष । कापुरुष । राजन् । गणपति । अधिपति । विशस्ति । विषम । विपात । निपात । आकृतिगणोयम् । गणनं तु बाधकबाधनार्थम् । प्रपञ्चार्थं च । यथा ब्राह्मणात् प्राणिजातित्वात् प्राप्तस्याञो बाधनम् ।

**स्तेनात्** । स्तेयमिति । स्तेनस्य कर्म भावो वा ।

**सख्युः** । सखिशब्दाद्यः भावकर्मणोः । द्यूतवणिग्भ्यां चेति वक्तव्यम् ।

**कपि** । भावकर्मणोः । यथासंख्यामर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते । कपेरिगन्तादिति प्राप्तेण् बाध्यते ।

---

१. °न्नस्य च लोपः $D_1$. २. भावकर्मणोः $D_3$, $B_1$. ३. Before it—स्तेनादिति $B_1$. ४. चेति वक्तव्यम् । $D_4$. ५. द्यौत्यम् after it $D_6$. ६. अतिस्वर $Dc_3$. ७. $Bc_1$, $Dc_3$ have वलय in place of गडुल । दायाद. ८. $Bc_1$, $Dc_3$ have शिंशपा for विषम.

**पत्यन्तपुरोहितादिभ्यो यक् ॥५।१।१२८॥**

सैनापत्यम् । पौरोहित्यम् । राज्यम् ।

**प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योञ् ॥५।१।१२९॥**

एभ्योञ् स्यादुक्तेर्थे ॥ आश्वम् । कौमारम् । औद्गात्रम् । हौत्रम् ।

**हायनान्तयुवादिभ्योण् ॥५।१।१३०॥**

द्वैहायनम् । यौवनम् ।

---

**पत्यन्त** । भावकर्मणोः । पत्यन्तादणि प्राप्ते । पुरोहित । राजास । असमास इत्यर्थः । समासे त्वाधिराज्यमिति ब्राह्मणादित्वात् ष्यञ् । स्वरे विशेषः । अस इति वचनं ज्ञापकमिह प्रकरणे राजन्शब्दस्य तदन्तविधिः स्यादिति । ग्रामिक । दण्डिक । वर्मिक । शीलिक । खण्डिक । अञ्जलिक । पारिषदिक । अविक । आञ्जनिक । सूचक ।

**प्राणभृत्** । प्राणभृतः प्राणिनस्तेषां जातिः प्राणिजातिरित्यर्थः । उक्तेर्थे । भावकर्मणोरित्यर्थः । आश्वमिति प्राणिजातिवाचिन उदाहरणम् । कौमारमिति वयोवाचिनः । औद्गात्रादि उद्गात्रादेः । उद्गातृ । होतृ । उन्नेतृ । प्रतिहर्तृ । प्रशास्तृ । भर्तृ । रथगणक । पत्तिगणक । सुष्ठु । दुष्ठु । अध्वर्यु । वधू । सुभगं मन्त्रे । महते सौभगाय । अन्यत्र ब्राह्मणादित्वात् ष्यञ् । सौभाग्यम् ।

**हायनान्त** । भावकर्मणोः । द्वैहायनमित्यादि । द्विहायनस्य कर्म भावो वा । यूनः कर्म । 'अन्' इति प्रकृत्या ।

---

१. $B_1$ has उक्तेर्थे before it; हृद्भगेत्युभयपदवृद्धिः before it $D_5$. २. संग्रामिक $Bc_1$, $Dc_4$. ३. चण्डिक $Bc_1$, $Dc_3$, $Dc_4$. ४. शिलङ्कु । रितिक । $Bc_1$, $Dc_3$; शिलङ्कु । चितिक $Dc_4$. ५. त्रिक । परिषिक । प्रतिक । सारथिक । साञ्जलिक । सूचक $Bc_1$, $Dc_3$, $Dc_4$. ६. कर्म भावो वा $Bc_1$, $Dc_3$; भावः कर्म वा $Dc_4$.

सौहार्दम् ॥[१] श्रोत्रम् ।

**इगन्ताच्च लघुपूर्वात् ॥५।१।१३१॥**

लघुपूर्वादिगन्तादण् स्यादुक्तेऽर्थे ॥ मौनम् । गौरवम् । लघुपूर्वात् किम् । कण्डूत्वम् ।

**योपधाद्गुरूपोत्तमाद्वुञ् ॥५।१।१३२॥**

[४]रामणीयकम् ।[५] सहायाद्वा ॥* साहायकम् । [६]पक्षे ष्यञ् । साहाय्यम् ।

---

सुहृदयस्य कर्म भावो वा । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' । 'हृद्भग—' इत्युभयपदवृद्धिः । श्रोत्रियस्य यलोपश्चाण् च वाच्यः ॥* श्रोत्रियस्य कर्म भावो वा श्रोत्रम् । युवन् । स्थविर । होतृ । यजमान । पुरुषासे । असे किम् । राजपुरुषत्वम् । भ्रातृ । [७]कुतुक । कन्दुक । [८]श्रमण । कमण्डलु । [९]कुस्त्री । सुहृद् । दुर्हृद् । [१०]सुहृदय । दुर्हृदय । हृदयासे । असे किम् । अहृदयता । सुभ्रातृ । दुर्भ्रातृ । वृष । परिव्राजक । सब्रह्मचारिन् । अनृशंस । [११]चपल । कुशल । निपुण । [१२]कुतूहल । क्षेत्रज्ञ ।

**इगन्तात्** । कथं काव्यम् । ब्राह्मणादिषु द्रष्टव्यः ।

**योपधात्** । त्रिप्रभृतीनामन्त्यमुत्तमम् । तस्य समीपमुपोत्तमम् । गुरूपोत्तमाद्योपधात् प्रातिपदिकाद्वुञ् । योपधात् किम् । विमानत्वम् । गुरूपोत्तमात् किम् । क्षत्रियत्वम् । सहायाद्वेति वक्तव्यम् ।* स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयम् । 'द्वन्द्वमनोज्ञादिभ्यश्च' ॥५।१।१३३॥

---

१. After it—श्रोत्रियस्य यलोपश्चाण् वाच्यः । $D_3$, $D_5$. २. Before it—श्रोत्रियस्य भावः कर्म वा before it $D_5$. ३. लघुपूर्वो य इक् तदन्ता° P, $D_1$. ४. $B_1$ has before it—उक्तेऽर्थे । रमणीयस्य भावः. ५. $B_1$ and C have युवोरनाकौ after it. ६. C, $D_1$, $D_4$, $D_5$ and P omit पक्षे ष्यञ्. ७. नाश । कुरूप । $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ८. श्रवण $Bc_1$, $Dc_1$, $Dc_4$. ९. भस्त्री $Bc_1$, $Dc_1$, $Dc_4$. १०. Before it—कुहृदय $Bc_1$, $Dc_1$, $Dc_4$. ११. Before it—हृदयाश्च $D_4$; हृदयाशु $Dc_3$. १२. Before it—पीयूष $Bc_1$, $Dc_1$, $Dc_3$.

भावकर्मणोर्वुञ् । गौपालपशुपालिका । शैष्योपाध्यायिका । मानोज्ञकम् । मनोज्ञ । प्रियरूप । अभिरूप । कल्याण । मेधाविन् । आढ्य । कुलपुत्र । छान्दस । छात्र । श्रोत्रिय । चौर । धूर्त । विश्वेदेव । युवन् । ग्रामपुत्र । ग्रामखण्ड । ग्रामकुमार । अमुष्यपुत्र । सारपुत्र । 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' ॥५।१।१३४॥ गोत्रवाचिनश्चरणवाचिनश्च वुञ् भावकर्मणोः श्लाघादिषु विषयभूतेषु । श्लाघा विकत्थनम् । अत्याकारोधिक्षेपः । तदवेतस्तत्प्राप्तस्तज्ज्ञो वा । गार्गिकया श्लाघतेत्याकुरुते गार्गिकामवेतः । एवं काठिकया श्लाघत इत्यादि । श्लाघादिषु किम् । गार्ग्यत्वम् । कठत्वम् । 'होत्राभ्यश्छः' ॥५।१।१३५॥ होत्राभ्यः ऋत्विग्विशेषवाचिभ्यो भावकर्मणोश्छः । अच्छावाकस्य भावः कर्म अच्छावाकीयम् । नेष्ट्रीयम् । पौत्रीयम् । बहुवचनं स्वरूपविधिनिरासाय । 'ब्रह्मणस्त्वः' ॥५।१।१३६॥ ब्रह्मशब्दात् होत्रावाचिनः त्वः स्यात् भावकर्मणोः । छापवादः । ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् । नेति वाच्ये त्वग्रहणं तलो बाधनार्थम् । जात्यर्थात्तु ब्रह्मशब्दात् त्वतलौ स्तः एव ।

इत्यवत्वीयाः । त्वतलोः पूर्णोवधिः । नञ्स्नञोरपि पूर्णोवधिः ।

१. अहोरूप Bc1, Dc1, Dc3, Dc4. २. Before it—वृद्ध Bc1, Dc1, Dc3, Dc4. ३. शतपुत्र । Bc1, Dc1, Dc3, Dc4. ४. गार्गिकयात्याकुरुते Dc3, Dc4. ५. Before it—ब्राह्मणत्वं वा Dc4. ६. °निरासार्थम् Dc3. ७. होतृवाचिनः Dc4.

**धान्यानां भवने क्षेत्रे खञ् ॥५।२।१॥**

धान्यविशेषार्थेभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रे[1] खञ् [2]स्यात् ॥ [3]भवत्यस्मिन्निति भवनम् । मुद्गानां [4]भवनं क्षेत्रं मौद्गीनम् ।

**व्रीहिशाल्योर्ढक् ॥५।२।२॥**

[5]उक्तेऽर्थे । व्रैहेयम् । शालेयम् ।

**यवयवकषष्टिकाद्यत् ॥५।२।३॥**

यव्यम् । [6]इत्यादि ।

**विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥५।२।४॥**

तिलादिभ्यो वा [7]यदुक्तेऽर्थे ॥ पक्षे खञ् ॥ तिल्यम् । तैलीनम् । [8]इत्यादि ।

---

**धान्यानाम्** । बहुवचनं स्वरूपविधिनिरासार्थमित्यभिप्रेत्याह । **धान्यविशेषार्थेभ्य** इति । निर्देशादेव षष्ठीसमर्थविभक्तिरित्यभिप्रेत्याह । **षष्ठ्यन्तेभ्य** इति । क्षेत्रसंनिधानाद्भवतिरिहोत्पत्त्यर्थो गृह्यते । न सत्तावाची । धान्यानां किम् । तृणानां भवनं क्षेत्रम् । क्षेत्रे किम् । मुद्गानां भवनं कुसूलः ।

**व्रीहि** । उक्तेऽर्थे । भवनं क्षेत्रम् । आभ्यां खञोपवादो ढक् ।

**यव** । एभ्यो भवने क्षेत्रे यत् । **यव्यमिति** । यवानां भवनं क्षेत्रम् । आदिना यवक्यं षष्टिक्यम् ।

**विभाषा** । आदिना माष्यं माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् । स्पष्टत्वात्

---

१. क्षेत्रेऽर्थे $B_1$, $D_1$, $D_4$. २. $B_1$ drops it. ३. भवन्त्य° $D_5$. ४. भवनक्षेत्रं $B_1$. ५. $B_1$ has आभ्यां ढक् before it; आभ्यां ढक् स्यादुक्तेऽर्थे $D_4$. ६. यवक्यम् । षष्टिक्यम् $B_2$; इत्यादि dropped $D_5$. ७. यद्वा उक्तेऽर्थे P, $D_4$; यत् स्यादुक्तेऽर्थे C. ८. माष्यम् । माषीणम् । उम्यम् । औमीनम् । अणव्यम् । आणवीनम् $B_2$.

## तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥५।२।७॥

सर्वपूर्वकात्[1] पथ्याद्यन्तात् [2]द्वितीयान्ताद्व्याप्नोत्यर्थे खः स्यात् ॥ सर्वपथान् व्याप्नोति सर्वपथीनः । पूर्वपदस्थान्निमित्तात् [4]परस्य तद्धितस्थ[5]स्य [6]नस्य णत्वमिष्यते । सर्वाङ्गीणः ।[7]

---

त्यक्तं सूत्रद्वयम् । 'सर्वचर्मणः कृतः खखञौ' ॥५।२।५॥ सर्वचर्मशब्दात् तृतीयासमर्थात् कृत इत्यर्थे खखञौ स्तः । सर्वशब्दश्चात्र कृतेन प्रत्ययार्थेन संबध्यते न चर्मणा । तत्रायमसमर्थ-समासो द्रष्टव्यः । सर्वैः चर्मणा कृत इत्यस्मिन् वाक्ये वृत्तिः । सर्वचर्मीणः । सार्वचर्मीणः । 'यथामुखसंमुखस्य दर्शनः खः' ॥५।२।६॥ दृश्यतेऽस्मिन् दर्शनः आदर्शादिः । तस्मिन् दर्शनेऽर्थे आभ्यां खः स्यात् । यथामुखमिति निपातनात् सादृश्येऽव्ययीभावः । यथामुखं दर्शनं यथामुखीनम् । संमुखम् । समस्यान्तलोपो निपात्यते । संमुखस्य दर्शनः संमुखीनः । तत्सर्वादेः । आदिना सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः । शरावाच्चेति वाच्यम् । सर्वशरावीणः । स्पष्टत्वात् त्यक्तान्यष्टौ । 'आप्रपदं प्राप्नोति' ॥५।२।८॥ खः । आप्रपदीनं वस्त्रम् । 'अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु' ॥५।२।९॥ अनुपदादिभ्यो द्वितीयान्तेभ्यः [8]क्रमाद्बद्धादिष्वर्थेषु खः । अनुपदं बद्धा अनुपदीना उपानत् । सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः । अयः प्रदक्षिणं गमनम् । अनयोऽप्रदक्षिणगमनम् । अयसहितोऽनयः अयानयः । तं नेयः अयानयीनः शारः । फलकशिरस्थ इत्यर्थः । 'परोवरपरंपरपुत्रपौत्रमनुभवति' ॥५।२।१०॥ एभ्योऽनुभवत्यर्थे खः ।

---

१. सर्वपूर्वात् P, $D_5$. २. C has भाषायाम् before it. ३. $B_1$ has सर्वाङ्गीणः before it. ४. उत्तरपदतद्धितस्थनकारस्य $D_4$, C; उत्तरपद-तद्धितस्थस्य नकारस्य $B_2$, P, $D_1$. ५. °स्थनकारस्य $D_2$. ६. नकारस्य $D_5$. ७. After it—इत्यादि $B_2$, $D_1$, $D_4$, $D_5$. ८. क्रमेण बद्धा° $Dc_3$.

**अध्वनो यत्खौ ॥५।२।१६॥**

अस्माद् द्वितीयान्तादलंगामीत्यर्थे यत्खौ स्तः ॥ अध्वानमलं गच्छत्यध्वन्यः। अध्वनीनः।

---

तत्र परावरशब्दस्य परोवरादेशः। परपरतराणां च परंपरादेशो निपात्यते। परांश्चावरांश्चानुभवति परोवरीणः। परान् परतरांश्चानुभवति परंपरीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। शब्दान्तरं चास्ति मन्त्रिपरंपरेति। 'अवारपारात्यन्तानुकामं गामी' ॥५।२।११॥ गमिष्यतीति गामी। अत्रार्थे एभ्यः खः। अवारपारं गामी अवारपारीणः। व्यस्ताद् विपरीताच्च। अवारीणः। पारीणः। पारावारीणः[3]। अन्तस्याभावोत्ययो वा अत्यन्तम्। अन्तमतिक्रान्तं वा। कामसदृशमनुकामम्। क्रियाविशेषणे चैते। अत्यन्तीनः। अनुकामीनः। 'समांसमां विजायते' ॥५।२।१२॥ विजायत इति[1] गर्भं धारयतीत्यर्थः। समांसमां विजायते समांसमीना गौः। वीप्सा द्विर्वचनं पूर्वपदे सुपो लुगभावो निपातनात्। केचित्तु समायां समायामित्यस्य निपातः समांसमेति वर्णयन्ति विजनिं च गर्भमोचनार्थम्[4]। 'अद्यश्वीनावष्टब्धे' ॥५।२।१३॥ अविदूरे प्रसवे अद्यश्वीना निपात्यते। अद्य श्वो वा विजायते अद्यश्वीना गौः। केचिद्विजायते इति नानुवर्तयन्ति। अद्यश्वीनं मरणम्। 'आगवीनः' ॥५।२।१४॥ वेतनभूतेन गवा भृतः सन्ना गोः प्रदानात् कर्म करोतीत्यर्थे खो निपात्यते। आगवीनः। 'अनुग्वलं गामी' ॥५।२।१५॥ अनुगुशब्दादलंगामीत्यर्थे खः। अनुगवीनः गोपः।

**अध्वनः**। **अध्वन्य** इति। 'ये चाभाव–'[2] इति प्रकृत्या। **अध्वनीन** इति। 'आत्माध्वानौ खे' इति। स्पष्टत्वात् त्यक्तानि सप्त। 'अभ्यमित्राच्छ च' ॥५।२।१७॥ चाद्यत्खौ। अभ्यमित्रमलं

---

१. इति is dropped in P, $D_1$, and C. २. Before it C has—'ये चाभावकर्मणोः' इति प्रकृतिभावः. ३. पारावारीणम् $Dc_2$. ४. °नार्थः $Bc_1$, $Dc_3$, $Dc_4$.

**तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥५।२।२४॥**

**षष्ठ्यन्तात् पील्वादेः कर्णादेश्च क्रमात् पाकमूलयोरर्थयोः[१] कुणब्जाहचौ क्रमात् स्तः ॥ पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः । कर्णस्य मूलं कर्णजाहम् । अक्षिजाहम् ।**

---

गच्छति अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । 'गोष्ठात् खञ् भूतपूर्वे' ॥५।२।१८॥ स्वार्थे भूतपूर्वं गोष्ठं गौष्ठीनम् । भूतपूर्वे किम् । गोष्ठम् । 'अश्वस्यैकाहगमः' ॥५।२।१९॥ एकाहेन गम्यते एकाहगमः । घञ् । निपातनान्न वृद्धिः । अश्वस्यैकाहगमः आश्वीनोऽध्वा । 'शालीनकौपीने धृष्टाकार्ययोः' ॥५।२।२०॥ एतयोरर्थयोरेते खञन्ते निपात्येते । शालीनो जडः । स हि जाड्याज्जनेषु लज्जया स्थातुमशक्तः । अधृष्टः शालाप्रवेशमर्हति । कौपीनं पापं तद्धि लोकनिन्द्यत्वादकार्यं कूपप्रवेशमर्हति । तत्साहचर्यादवयवश्च कश्चित्तदाच्छादनं च कौपीनशब्देनोच्यते । 'व्रातेन जीवति' ॥५।२।२१॥ खञ् । नानाजातीया अनियतवृत्तयः शरीरायासजीविनः सङ्घा व्रातास्तेषां कर्म व्रातम् । व्रातेन जीवति व्रातीनः । व्रातानामन्यतमे एव अन्यत्र न । 'साप्तपदीनं सख्यम्' ॥५।२।२२॥ सख्ये निपात्यते । सप्तभिः पदैरवाप्यं साप्तपदीनं सख्यम् । साप्तपदीनः सखेति धर्मिणि धर्मोपचारात् । 'हैयङ्गवीनं संज्ञायाम्' ॥५।२।२३॥ निपात्यते । ह्यो गोदोहस्य विकारो हैयङ्गवीनम् । घृतस्येयं संज्ञा ।

तस्य । 'चुटू' अस्यानित्यत्वाज्जाहचो जस्येत्संज्ञा न । पीलु । कर्कन्धु[३] । शमी । करीर । कुवल । बदर । अश्वत्थ । खदिर । पील्वादिः । कर्ण । अक्षि । नख । केश[४] । पाद । गुल्फ । भ्रू । दन्त[५] । ओष्ठ । स्पष्टत्वात् त्यक्तमेकम् । 'पक्षात्तिः' ॥५।२।२५॥ मूलग्रहणमनुवर्तते न पाकग्रहणम् । पक्षस्य मूलं पक्षतिः ।

---

१. After it-क्रमात् $D_3$, $D_5$, $B_1$. २. C and $B_2$ drop it. ३. कर्कन्धू° $D_4$. ४. मुख before it $Bc_1$, $Dc_3$, $Dc_4$. ५. Before it-शृङ्ग $Bc_1$, $Dc_1$, $Dc_4$; शृङ्ग for दन्त $Dc_3$.

**तेन वित्तश्चुञ्चुप्चणपौ ॥५।२।२६॥**

तृतीयान्ताद्वित्तेऽर्थे एतौ स्तः। 'चुटू' इत्यस्यानित्यत्वान्न चस्येत्संज्ञा। विद्यया वित्तो[3] विद्याचञ्चुः[4]। विद्याचणः।

**संप्रोदश्च कटच् ॥५।२।२९॥**

[5]एभ्यः कटच् स्यात् ॥ संकटम् । प्रकटम्। उत्कटम्। चात्। विकटम् ॥ अलाबूतिलोमाभङ्गाणुभ्यो[6] रजसि कटच्

---

**तेन**। वित्तः प्रतीतो विज्ञात इत्यर्थः। **अलाबू** इति। एभ्यो रजसि वाच्ये कटच् प्रत्ययो वाच्य इत्यर्थः। **गोष्ठजादय** इति। आदिशब्दः प्रकारे। पशुनामानि गोशब्दादीनि। **संघात** इत्यादि। अनन्तरोक्तस्य प्रपञ्चः। **अविकट** इति विप्रकीर्णानामवीनां विस्तार उच्यते। **उष्ट्रगोयुगमिति**। द्वावुष्ट्रौ। **अश्वषड्गवमिति**। षडश्वाः। **तिलतैलमिति**। तिलानां स्नेहः। **इक्षुशाकटमिति**। इक्षूणां भवनं क्षेत्रम्। स्पष्टत्वात् त्यक्तानि नव। 'विनञ्भ्यां नानाञौ नसह' ॥ ५।२।२७॥ असहार्थे वर्तमानाभ्यामाभ्यामेतौ स्तः स्वार्थे। विना। नाना। ञ आद्युदात्तार्थः। 'वेः शालच्छङ्कटचौ' ॥५।२।२८॥ससाधन-क्रियावचनाद्वेरेतौ स्तः स्वार्थे। विगते शृङ्गे विशाले विशङ्कटे। तद्योगाद् गौरपि विशालो विशङ्कट इत्युच्यते। परमार्थतस्तु गुणशब्दा एते [7]यथाकथं व्युत्पाद्यन्ते। नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेष्टव्यम्।

'संप्रोदश्च कटच्' ॥५।२।२८॥ चकाराद्वेश्च। संकटम्। प्रकटम्। उत्कटम्। विकटम्। 'अवात् कुटारच्च' ॥५।२।३०॥ चकारात् [8]कटच्। अवकुटारः। [9]अवकटः। 'नते नासिकायाः संज्ञायां टीटञ्-नाटज्भ्रटचः' ॥५।२।३१॥ नासिकाया नमने अवात् टीटजादयः

---

१. °श्चुञ्चुप् D1. २. तेनेति तृती° D4. ३. ज्ञातो C, D2, D4, D5. ४. विद्याचुञ्चुः D1. ५. D1 and D4 drop the Vritti; D2, D5, B2 have स्वार्थे only. ६. भङ्गाभ्यो D1; भाङ्गाणुभ्यो D4. ७. यथाकथंचिद् Bc1, Dc3. ८. कुटच् Dc3. ९. अवकुटः Dc3.

वाच्यः ॥* अलाबूनां रजः अलाबूकटम् ॥ गोष्ठजादयः स्थानादिषु पशुनामभ्यः ॥* गवां स्थानं गोगोष्ठम् । माहिषीगोष्ठम् । संघाते[1] कटच् ॥* अवीनां संघातः अविकटः ॥ विस्तारे पटच् ॥*[2] अविपटः । द्वित्वे गोयुगच् ॥* उष्ट्रगोयुगम् । षट्त्वे षड्गवच् ॥* अश्वषड्गवम् ।[3] [4]स्नेहे तैलच् ॥* तिलतैलम् । भवने क्षेत्रे शाकटशाकिनौ ॥* [5][6]इक्षुशाकटम् । इक्षुशाकिनम् ।

---

स्युः । अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगात् नासिकायां पुरुषे च भवन्त्यमी । अवटीटा नासिका । अवटीटः पुमान् । 'नेर्बिडज्बिरीसचौ' ॥५।२।३२॥ निबिडम् । निबिरीसम् । 'इनच् पिटच्चिक चि च' ॥५।२।३३॥ नेरिनच्पिटचौ स्तः तत्संनियोगे यथासंख्यं चिक चि इत्येतावादेशौ स्तः । चिकिनम् । चिपिटम् । कप्रत्ययचिगादेशानिपाताच्चिकोपि वाच्यः । क्लिन्ने चक्षुषि चुल्लचिल्लपिल्ला निपात्याः । चुल्लं चक्षुः । तद्योगात् पुरुषोपि चुल्लादिः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' ॥५।२।३४॥ पर्वतस्यासन्नमुपत्यका । [7]पर्वतस्याधिरूढमधित्यका । 'कर्मणि घटोठच्' ॥५।२।३५॥ घटत इति घटः । पचाद्यच् । सप्तम्यन्तात् कर्मशब्दात् [8]घट इत्यर्थेठच् स्यात् । कर्मणि घटते कर्मठः । अकर्मकत्वाद् घटतेः कर्मशब्दो न कारकम् । अकारकरणाच्चात्र ठस्येको न प्रवर्तते ।

---

१. संघः C. २. Before it—अवीनां विस्तारः $D_5$. ३. After it P has—षडश्वा इत्यर्थः. ४. Before this $B_1$ has—तिलादिभ्यः. ५. Before it—इक्ष्वादिभ्यः $D_4$. ६. इक्षुशाकिनम् । इक्षुशाकटम्. $D_5$. ७. पर्वतस्यारूढ° $Dc_2$. ८. घटत इत्यर्थे $Bc_1$, $Dc_3$.

**तदस्य संजातं तारकादिभ्य इतच् ॥५।२।३६॥**

एभ्यः प्रथमान्तेभ्यः संजातोपाधिकेभ्यः[1] षष्ठ्यर्थे इतच् स्यात्[2]। तारकाः संजाता अस्येति[3][4] तारकितं नभः। पुष्पितो वृक्षः[5]।

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥५।२।३७॥**

प्रमाणोपाधिकात्[6] प्रथमान्तात् षष्ठ्यर्थे एते स्युः। ऊरू[7] प्रमाणमस्य ऊरुद्वयसम्। जानुदघ्नम्। नाभिमात्रम्॥ प्रमाणे लुक्[8]॥* प्रमाणशब्देभ्यः प्रत्ययस्य लुक् स्यात्[9]॥[10] वितस्तिः प्रमाणमस्य वितस्तिः॥ द्विगोर्नित्यम्॥* द्विवितस्तिः। द्व्याढकी।

---

तदस्य। तारक। पुष्प। कंटक[11]। सूत्र। निष्क्रमण। पुरीष। रुचि। कुड्मल। मुकुल। स्तवक[12]। किसलय। वेग। निद्रा। तन्द्रा। बुभुक्षा। पिपासा। श्रद्धा। अभ्र। रोग। अङ्गार। पर्णक। द्रोह। मुख[13]। दुःख। उत्कण्ठ। भार। व्याधि। कर्ण[14]। गर्भादप्राणिनि। गर्भिताः शालयः। प्राणिनि तु गर्भिणी गौः।

**प्रमाणे**। 'प्रथमश्च द्वितीयश्च उर्ध्वमाने मतौ मम'॥ ऊरुद्वयसमुदकम्। ऊरुदघ्नमुदकम्। मात्रच् पुनरविशेषेण। प्रस्थमात्रमित्यपि स्यात्। प्रमाणे ल इति वक्तव्यम्। ल इति पूर्वाचार्याणां लुकः संज्ञेति चेतसि कृत्वा व्याचष्टे। **प्रमाणशब्देभ्य** इति। **वितस्तिरिति**। वितस्तिः प्रमाणं यस्यः सः। द्विगोर्नित्यमित्यपि वक्तव्यम्। ल इति वर्तते। **द्विवितस्तिरित्यादि**। द्वे वितस्ती प्रमाणं यस्य सः। द्वावाढकौ प्रमाणमस्य।

---

१. संजातोपाधिभ्यः $B_1$; संज्ञातोपाधिकेभ्यः $D_1$. २. स्यात् dropped $D_5$. ३. यस्य तत् C. ४. इति dropped P, $D_1$. ५. पुष्पिता वृक्षाः $D_2$. ६. प्रमाणोपाधिकेभ्यः प्रथमान्तेभ्यः $B_1$. ७. ऊरुः $B_1$; ऊरूः $D_4$. ८. लः C. ९. Dropped $B_1$. १०. After it—प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम। मात्रच् पुनरविशेषेण प्रस्थमत्रमपीष्यते॥ $D_4$. ११. कण्टक $Bc_1$, $Dc_4$. १२. After it—कोरक $Dc_4$. १३. सुख $Bc_1$, $Dc_3$, $Dc_4$. १४. Dropped $Bc_1$, $Dc_3$, $Dc_4$.

**पुरुषहस्तिभ्यामण् च ॥५।२।३८॥**

आभ्यामुक्तेर्थेण्[1] स्यात् द्वयसजादयश्च ॥ पौरुषम् ॥

**इनण्यनपत्ये ॥६।४।१६४॥**

अनपत्यार्थेणि[2] इन् प्रकृत्या स्यात् ॥ हास्तिनम्[3] । अपत्ये तु मेधाविनोपत्यं मैधावः[4] । पक्षे । पुरुषद्वयसमित्यादि ।

**यत्तदेतेभ्यः परिमाणे वतुप् ॥५।२।३९॥**

एभ्यः परिमाणोपाधिकेभ्यः षष्ठ्यर्थे वतुप् स्यात् ॥ 'आ सर्वनाम्नः' इत्यात्वम् । यत् परिमाणमस्य यावान् । तावान् । एतावान् ।

---

नित्यग्रहणं संशये विधास्यमानस्य मात्रचोपि लुगर्थम् । प्रमाण-परिमाणाभ्यां संख्यायाश्चापि संशये मात्रच् वाच्यः । सममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । वत्वन्तात् स्वार्थे द्वयसच्मात्रचौ बहुलम् । तावदेव तावद्द्वयसं तावन्मात्रम् । यावद्द्वयसं यावन्मात्रम् ।

**पुरुष** । उक्तोर्थः प्रमाणम् ।

**इनणि** । अणीति किम् । दण्डिनां समूहो दाण्डम् । अनुदात्तादेर-ञ् । इन्निति किम् । सौश्रुतम् ।

**यत्तदेतेभ्यः** ।

'एकादिमानं संख्या स्यादुन्मानं तु तुलादिकम् ।
कुडवादि परीमाणं प्रमाणं त्वङ्गुलादिकम्' ॥

इति भेदात् प्रमाणानुवृत्तावपि परिमाणग्रहणमिदम्[5][6] ।

---

१. उक्तेर्थे for आभ्यां . स्यात् in $B_1$. २. °णि परे $B_1$, $D_1$, $D_2$, $D_5$. ३. After it—हस्ती प्रमाणमस्य हास्तिनम् । एकादिमानं संख्या स्यादुन्मानं तु तुलादिकम् । कुडवादि परिमाणं प्रमाणं त्वङ्गुलादिकम् ॥ $D_5$. ४. मैधावम् $D_1$, $B_2$; after it-दण्डिनोपत्यं दाण्डः $D_2$. ५. °ग्रहः $Bc_1$, $Dc_3$. ६. इदम् dropped $Dc_3$, $Dc_4$, $Bc_1$.

**किमिदंभ्यां वो घः ॥५।२।४०॥**

आभ्यामुक्तेऽर्थे वतुप् स्यात् तस्य च[1] वकारस्य[2] घः स्यात् ।

**इदंकिमोरीश्की ॥६।३।९०॥**

घस्य ईयादेशः[3] । 'यस्येति च' इतीकारलोपः । किं परिमाणमस्य कियान् । इयान् ।

**किमः संख्यापरिमाणे डति च ॥५।२।४१॥**

संख्यापरिच्छेदेऽर्थे[4] वर्तमानात् किमः षष्ठ्यर्थे[5] डतिः स्यात् वतुप् च । तस्य च वो[6] घः । टिलोपः[7] । का संख्या एषां[8]

---

**किमि** । अत्र किमिदंभ्यामिति योगविभागेन वतुपं विधाय वो घ इति द्वितीयेन तस्य घो विधीयत इत्यभिप्रेत्याह । आभ्यामित्यादि ।

**किमः** । संख्यायाः परिमाणं संख्यापरिमाणं संख्यापरिच्छेद इत्यर्थः । अथवा संख्यैव परिमाणं परिच्छेद इत्यर्थः । द्वयमप्यभिप्रेत्याह । **संख्यापरिच्छेदे वर्तमानादिति** । यदा संख्या पृच्छ्यमाना स्यात्तदा किंशब्दस्तस्यां परिच्छेदविशिष्टायां वर्तते । का संख्या एषामिति । संख्यायाः परिमाणमिति पक्षे विग्रहः । संख्यैव परिमाणमिति पक्षे तु का संख्या परिमाणं परिच्छेदिका एषामिति ।

---

१. P, $D_4$ drop च. २. वतुपो वस्य for वकारस्य $B_1$. ३. इयः $B_1$. ४. अर्थे dropped P, $D_4$, Com. ५. Before it—बह्वर्थे $D_4$. ६. वस्य घः $B_1$. ७. टेर्लोपः $D_1$, $D_3$, $B_1$, P, C. ८. येषां C; एतेषां $D_4$.

ते[1] कति विप्राः। कियन्तः। क्षेपे न। केयं संख्या एषां[2] देशानाम्। यत्तद्भ्यामपि डतिरिति केचित्। यति। तति।

**संख्याया अवयवे तयप्** ॥५।२।४२॥

अवयववृत्तेः संख्यायाः षष्ठ्यर्थे अवयविनि तयप् स्यात्। पञ्च अवयवा यस्य तत्[3] पञ्चतयम्। चतुष्टयी रज्जुः।

**द्वित्रिभ्यां तयस्यायज्वा** ॥५।२।४३॥

आभ्यां तयपोयजादेशो वा स्यात्[4]॥ द्वयम्॥ त्रयम्। द्वितयम्। त्रितयम्।

---

अत्र पक्षे संख्यायाः परिमाणेन विशेषणं [5]यत्र परिच्छेदकत्वेन न विवक्ष्यते तत्र मा भूदिति। तेन क्षेपे न तत्र[6] परिच्छेदो नास्तीत्यभिप्रेत्याह। **क्षेपे नेति**। **केचिदिति**। अर्वाचीनाः। तथोक्तं **मुग्धबोधे**। कतियतिततियावत्तावत्एतावत्कियत्इयत इति।

**संख्यायाः**। अवयवग्रहणादवयवी प्रत्ययार्थो गम्यत इत्यभिप्रेत्याह। **अवयविनीति**। **चतुष्टयीति**। चतुरो रेफस्य विसर्गे विसर्जनीयस्य सः। तस्यापि 'ह्रस्वात्तादौ तद्धिते' इति मूर्धन्यः।

**द्वित्रि**। तयपोनुवृत्तावपि तयग्रहणं स्थानिनिर्देशार्थमन्यथा हि प्रत्ययान्तरमयच् विज्ञायेत ततश्च[7] त्रयी गतिरित्यत्र ङीप् तयब्निबन्धनः त्रयो देवा इत्यत्र तयब्निबन्धनो जसः शी आदेशश्च न स्यात्। चः स्वरार्थः।

---

१. ते dropped $D_1$, $D_2$, $D_4$, $D_5$. २. येषां P, C, $D_4$. ३. $B_1$, $D_4$. drop तत्; अस्य for यस्य तत् $D_1$. ४. $B_1$ drops it. ५. च यत्र $Bc_1$. ६. तत्र हि $Bc_1$, $Dc_3$, $Dc_4$. ७. अतश्च $Dc_4$.

## उभादुदात्तो नित्यम् ॥५।२।४४॥

उभात्परस्य तयपो नित्यमयजादेशः स्यात्[1] । स चोदात्तः । उभौ अवयवौ यस्य[2] उभयम् ।

## तदस्मिन्नधिकमिति दशान्ताड्डः ॥५।२।४५॥

प्रथमान्तादधिकोपाधिकाद् दशान्तात् शब्दात् सप्तम्यर्थे डः स्यात् ॥ एकादश[3] अधिका अस्मिन् शते सहस्रे वा एकादशम्[4] । द्वादशम्[5] । शतसहस्रयोरेवेष्यते । नेह[6] । द्वादश अधिका अस्यां त्रिंशतीति । प्रकृतिप्रत्ययार्थयोर्वैजात्ये न ॥* एकादश माषा अधिका अस्मिन् निष्कशते । दशान्तात् किम् । पञ्च अधिका अस्मिन् । अन्तग्रहणं किम् । दश अधिका अस्मिन् ।

---

उभात् । उभशब्दो लौकिकी संख्येति पूर्वेण विहितस्य तयपोयजादेशो विधीयत इत्यभिप्रेत्याह । **उभात्परस्येत्यादि** । अथ न संख्या ततो योगविभागेन तयपं विधायायजादेशः क्रियते । **स चोदात्त** इति चित्त्वादन्तोदात्तत्वे प्राप्ते वचनसामर्थ्यादाद्युदात्त इत्यर्थः । कथमुभये देवमनुष्याः । यतो बहूनामुभावयवौ न घटेते । नैष दोषः । अत्र हि द्वौ राशी समुदायस्यावयवौ एको देवानामपरो मनुष्याणामिति ।

तदस्मिन् । शतसहस्रयोरेवेत्यादि । एतच्च विवक्षार्थादिति-करणाल्लभ्यते । तथोक्तं **काशिकायाम्** । इतिकरणो[7] विवक्षार्थस्तत इदं सर्वं लभ्यत इति । कथमेकादशं शतसहस्रमिति । शतानां सहस्रं सहस्राणां वा शतं शतसहस्रम् । तत्र शतसहस्रयोरित्येव सिद्धम् ।

---

१. $B_1$ drops it. २. अस्य उभयः $D_1$, $B_2$; यस्य स उभयः $D_4$. ३. एकादधिका दश $D_1$; एकादश द्वादश वा अधिका &c. $D_5$, $B_2$. ४. एकादश शतं सहस्रं वा $B_1$ for एकादशम् । द्वादशम् $B_1$. ५. C drops it; $B_2$ has शतम् after it. ६. तेनेह । $D_2$. ७. इतिकरणोपि $Dc_3$.

**शदन्तविंशतेश्च ॥५।२।४६॥**

शदन्ताद्विंशतेश्च डः स्यादुक्तेर्थे ॥ त्रिंशम् । विंशम् । शतम् । संख्यापूर्वादपीष्यते । एकत्रिंशम् । एकविंशम् । [1]शतम् ।

**तस्य पूरणे डट् ॥५।२।४८॥**

षष्ठ्यन्तात् संख्यावाचिनः पूरणेर्थे डट् स्यात् । पूर्यते संपद्यते संख्यानेनेति पूरणः । एकादशानां पूरणः[2] एकादशः । द्वादशः ।[3]

---

**शदन्त** । **संख्यापूर्वादिति** । असंख्यादेस्तु न । गोत्रिंशदधिका अस्मिन् गोविंशतिरधिकास्मिन्निति वाक्यमेव । त्यक्तमेकम् । 'संख्याया गुणस्य निमाने मयट्' ॥५।२।४७॥ गुणो भावः । निमानं मूल्यम् । तदपीह भाग एव । संख्यावाचिनः प्रथमान्ताद्गुणस्य निमाने वर्तमानात् **षष्ठ्यर्थे मयट्** । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । भागे विहितः प्रत्ययः प्राधान्येन भागवन्त-माहेति द्विमयमुदश्विदिति सामानाधिकरण्यम् । गुणस्यैकत्वं विवक्षितं तेनेह न । द्वौ भागौ यवानां त्रय उदश्वित इति । निमेयवाचिनोपि निमाने वाच्ये इष्यते । तक्रस्य द्वौ भागौ निमेयावस्य भागस्य द्विमया यवाः तक्रस्य । गुणस्येति किम् । द्वौ व्रीहियवौ निमानमस्योदश्वितः । निमान इति किम् । क्षीरस्य द्वौ भागौ पचनावस्य तैलस्य ।

**तस्य** । इह द्वे संख्याग्रहणे अनुवर्तेते । तत्रैकेन संख्येयवाचिना प्रकृतिर्विशेष्यत इत्यभिप्रेत्याह । **षष्ठ्यन्तात् संख्यावाचिन इति** । टित्त्वात् ङीप् । संख्यापूरणे किम् । पञ्चानामुष्ट्रिकाणां पूरणो घटः । न हि घटेन उष्ट्रिकाणां पञ्च संख्या संपद्यते । किं तर्हि । लब्धसंख्यानां जलादिना रिक्तता ।

---

१. एकशतम् । $D_5$. २. संख्यापूरणः $B_1$. ३. After it—टित्त्वात् । द्वादशीनाम् $B_2$; द्वादशी $D_4$.

**नान्तादसंख्यादेर्मट् ॥५।२।४९॥**

नान्तात् संख्यार्थात् परस्य डटो मडागमः स्यात् न तु संख्यापूर्वात् ॥ पञ्चमः[1] । नान्तात् किम् । विंशः । संख्यादेस्तु । द्वादशः[2] ।

**षट्कतिकतिपयचतुरां थुक् ॥५।२।५१॥**

एषा डटि परे थुगागमः स्यात् ॥ षष्ठः[3] । चतुर्थः । इत्यादि । चतुरश्छयतौ वलोपश्च ॥* तुर्यः[4] । तुरीयः ।

---

**नान्तात्** । 'तस्मादित्युत्तरस्य' इति परिभाषया डडित्यस्यानुवर्तमानस्य प्रथमान्तस्यापि षष्ठ्यन्तता स्यादित्यभिप्रेत्याह । **परस्य डट इति** । डटः स्वरितत्वेनेहानुवृत्त्या मट आगमत्वं न प्रत्यय इति ज्ञायते । अन्यथा तस्य पूर्वमेव विहितत्वादिहानुवृत्तिर्वृथा स्यादित्यभिप्रेत्याह । **मडागमः स्यादिति** । यद्यपीहागमत्वे प्रयोजनं नास्ति तथापि तमडादौ स्वरविशेषोस्ति । तथा हि तमट आगमत्वे आगमानुदात्तत्वे च डटः प्रत्ययाद्युदात्तत्वे च विंशतितम इत्यन्तोदात्तं स्यात् । यदि प्रत्ययस्तमट् स्यात् मध्योदात्तः स्यात् । तच्च नेष्टम् । **पञ्चम** इति । टेरित्यस्य परत्वेपि अन्तरङ्गत्वात् पूर्वं मयट् ततो भत्वाभावान्न टिलोपः ।

**षट्** । डडितीहानुवृत्तं सामर्थ्यात् सप्तम्यन्तं स्यादित्यभिप्रेत्याह । **डटि परे थुगागम** इति । थुकः पूर्वान्तत्वकरणं षष्ठ इत्यादौ जश्त्वादि मा भूदिति । परत्वादित्वे हि स्वादिष्विति पदत्वं स्यात् । ततश्च 'झलां जशोन्ते' इति जश्त्वं प्रसज्येत[5] । **चतुर्थ** इति । अत्र च रेफस्य विसर्गः । आदिना कतिथः कतिपयथः । अस्यासंख्यात्वेपि अस्मादेव डट् ।

---

१. Before it—पञ्चानां पूरणः $D_2$, $D_3$, $B_1$. २. एकादशः $B_1$. ३. $B_1$ has before it—षण्णां पूरणः. ४. तुरीयः । तुर्यः । $D_5$. ५. प्रसज्येत $Dc_4$.

**बहुपूगगणसङ्घस्य तिथुक्** ॥५।२।५२॥

एषां तिथुगागमः स्यात् डटि[1] । बहुतिथः ।[2] इत्यादि । पूगसङ्घाभ्यामत एव डट् ।

**वतोरिथुक्** ॥५।२।५३॥

वतोरिथुगागमः स्यात् डटि ॥ यावतिथः ।

**द्वेस्तीयः** ॥५।२।५४॥

द्वेः पूरणे[3] तीयः स्यात्[4] । द्वितीयः ।

**त्रेः संप्रसारणं च** ॥५।२।५५॥

त्रेः पूरणे तीयः स्यात् संप्रसारणं च ॥ तृतीयः ।

**विंशत्यादिभ्यस्तमडन्यतरस्याम्** ॥५।२।५६॥

एभ्यः परस्य डटो वा तमडागमः स्यात् ॥

---

बहु । ननु पूगसङ्घाभ्यामसंख्यावाचिभ्यां कथं डडित्याशङ्क्याह । **पूगसङ्घाभ्यामिति** ।

वतोः । **यावतिथ** इति । 'यत्तदेतेभ्यः—' इति वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् ।

द्वे । अयं तु डटोपवादः प्रत्ययो नादेशः । 'कर्मणि द्वितीया' इति टापा निर्देशाज् ज्ञापकात् । आदेशत्वे हि ङीप् स्यात् ।

त्रेः । **तृतीय** इति । अत्र 'हलः' इति दीर्घो न । अण इति हि तत्र वर्तते । पूर्वेण च णकारेणाण्ग्रहणम् ।

**विंशति** । पूरणार्थस्य डटोधिकारात् स आगमी विज्ञायत इत्यभिप्रेत्याह । **डट** इत्यादि ।

---

१. डटि परे P. २. After it—पूगतिथः । गणतिथः । सङ्घतिथः $B_2$. ३. पूरणेर्थे C. ४. C drops it.

विंशतितमः । द्वाविंशतितमः । [2]त्रिंशत्तमः । पक्षे । विंशः । त्रिंशः । द्वाविंशः ।

**नित्यं शतादिमासार्धमाससंवत्सराच्च ॥५।२।५७॥**

एभ्यो [3]नित्यं डटस्तमडागमः[4] ॥ [5]शततमः । एकशततमः । सहस्रतमः । [6]मासतमः । अर्धमासतमः । संवत्सरतमः । मासादेरत एव डट् ।

**षष्ट्यादेश्चासंख्यादेः ॥५।२।५८॥**

षष्ट्यादेर्डटो नित्यं [7]तमट् स्यात् न तु संख्यापूर्वात् । विकल्पापवादः । षष्टितमः । सप्ततितमः । संख्यादेस्तु [8]वा । एकषष्टः । [9]एकषष्टितमः ।

---

विंशत्यादयो लौकिकाः संख्याशब्दा गृह्यन्ते न पङ्क्त्यादिसूत्रसंनिविष्टाः । तद्ग्रहणे एकविंशतिप्रभृतिभ्यो न स्यात् । ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधात् । एवं च सति षष्ट्यादेश्चासंख्यादेरिति पर्युदासोत्र युज्यत एव ।

**नित्यम्** । षष्ट्यादेरिति वक्ष्यमाणेन सिद्धे शतादिग्रहणं संख्याद्यर्थम् ।

**षष्ट्यादेः** । प्राक् शतात् षष्ट्यादयो ज्ञेयाः । शतादीनां स्वशब्देन तमटो विधेः ।

---

१. द्वात्रिंशत्तमः C, $D_1$, $D_2$. २. P and C, $D_2$, $D_4$ have विंशः त्रिंशः in place of त्रिंशत्तमः…द्वाविंशः; $D_5$ has—after विंशतितमः—मासतमः । अर्धमासतमः । त्रिंशतितमः । द्वाविंशतितितमः । विंशः । द्वाविंशः ।. ३. डटो नित्यं $D_2$, $D_5$. ४. After it—स्यात् C. ५. Before it–शतस्य पूरणः । $D_5$. ६. Before it–उत्तरसूत्रेसंख्यादेरिति ज्ञापकात् $D_4$. ७. तमडागमः $B_1$. ८. न $B_1$. ९. $B_1$ drops it.

**मतौ छः सूक्तसाम्नोः ॥५।२।५९॥**

**मतुबर्थे छः स्यात् सूक्ते सामनि वार्थे ॥** अच्छावाकशब्दोस्मिन्नस्ति अच्छावाकीयं सूक्तम् । वारवन्तीयं साम । अनुकरणत्वाद्भिन्नपदादपि । अस्यवामीयम् । कयाशुभीयम् ।

---

**मतौ** । मताविति मतुबर्थ उच्यते साहचर्यादित्याह । **मतुबर्थे** इति । मतुबर्थग्रहणेन समर्थविभक्तिः प्रकृतिविशेषणं प्रत्ययार्थ इति सर्वमाक्षिप्यत इत्यभिप्रेत्याह । **अच्छावाकशब्दोस्मिन्नस्तीति** । **अनुकरणत्वादिति** । अयं भावः । अस्य वामादयोनुकरणशब्दाः अनुकार्यस्वरूपमात्रवाचिनश्चेति तेषामवयवभूतानि पदानि न सन्ति वाक्यत्वाभावादर्थवत्त्वाच्च प्रातिपदिकाद्भिन्नपदत्वावभासेपि प्रत्ययो न भवति । स्पष्टत्वात् त्यक्तानि षड्विंशतिः । 'अध्यायानुवाकयोर्लुक्' ॥५।२।६०॥ एतयोरर्थयोरुत्पन्नस्य छस्य लुक् । इदमेव ज्ञापकं छोभावस्य चेति च वाच्यम् । गर्दभाण्डशब्दोस्मिन्नस्ति गर्दभाण्डो गर्दभाण्डीयोध्यायोनुवाको वा । 'विमुक्तादिभ्योण्' ॥५।२।६१॥ एभ्यो मत्वर्थेण् स्यात् अध्यायानुवाकयोरर्थयोः । विमुक्तशब्दोस्मिन्निति वैमुक्तोध्यायोनुवाको वा । विमुक्त । देवासुर । रक्षोसुर । उपसत् । परिसारक । वसुमत् । पत्नीवत् । सत्त्वन् । दशार्ह । वयस् । हविर्धान । पतत्रिन् । सोम । पूषन् । इडा । अग्नाविष्णू । वृत्रहन् । 'गोषदादिभ्यो वुन्' ॥५।२।६२॥ मत्वर्थे अध्यायानुवाकयोः । गोषदकोध्यायोनुवाको वा । गोषद । इषेत्वा । मातरिश्वन् । देवस्यत्वा । देवीरापः । कृष्णोस्याखरेष्ठः । दैवीं धियम् । अञ्जन । रक्षोहण । प्रतूर्तक । कृशानु । 'तत्र कुशलः पथः' ॥५।२।६३॥ सप्तम्यन्तात् पथः कुशल इत्यर्थे वुन् । पथि कुशलः पथकः ।

---

१. मत्वर्थे $D_1$, $D_5$. २. अच्छावाक् $D_1$. ३. °वतीयं $D_4$. ४. °कारण° $D_4$, $D_5$. ५. पदानि सन्तीति वाक्य° $Bc_1$. ६. Dropped $Bc_1$.

'आकर्षादिभ्यः कन्' ॥५।२।६४॥ तत्र कुशले । आकर्षे कुशलः अकर्षकः । आकर्ष । त्सरु । पिशाच । पिचण्ड । अशनि । अश्मन् । निचय । जय । पाद । ह्लाद । शकुनि । 'धनहिरण्यात् कामे' ॥५।२।६५॥ सप्तम्यन्ताभ्यामाभ्यां कामे कन् । धने कामो धनकामः । धनकः । हिरण्यकः । 'स्वाङ्गेभ्यः प्रसिते' ॥५।२।६६॥ स्वाङ्गवाचिभ्यः सप्तम्यन्तेभ्यः [2]प्रसक्तेर्थे कन् । केशेषु प्रसितः केशकः । बहुवचनात् स्वाङ्गसमुदायादपि । दन्तोष्ठकः । 'उदराट्ठगाद्यूने' ॥५।२।६७॥ तत्र प्रसिते । यः प्रसितः सोविजिगीषुरलसो वा चेत् । औदरिकः । आद्यूने किम् । उदरकः । कन्नेव । 'सस्येन परिजातः' ॥५।२।६८॥ अत्रार्थे सस्यशब्दात् कन् । सस्यशब्दोत्र गुणवाची । सहार्थे इत्थं[3]भावे वा तृतीया । सस्येन परिजातः सस्यको मणिः । सस्यको वत्सः । परितो गुणैः पूर्णः आकारशुद्ध इत्यर्थः । 'अंशं हारी' ॥५।२।६९॥ हारीत्यावश्यके णिनिः । तत्र 'अकेनोः' इति षष्ठीनिषेधात् द्वितीया । अंशशब्दात् द्वितीयान्तात् हारीत्यर्थे कन् । अंशको दायादः । 'तन्त्रादचिरापहृते' ॥५।२।७०॥ कन् । तन्त्रादचिरापहृतस्तन्त्रकः पटः । नव इत्यर्थः । 'ब्राह्मणकोष्णिके संज्ञायाम्' ॥५।२।७१॥ यत्र आयुधजीविनो ब्राह्मणाः स देशो ब्राह्मणकः । उष्णिकाल्पान्ना यवागूः । 'शीतोष्णाभ्यां कारिणि' ॥५।२।७२॥ कन् । इह शीतोष्णे मान्द्यशैघ्र्यार्थे न स्पर्शवचने । शीतं करोति शीतकोलसः । उष्णकः । दक्षः । 'अधिकम्' ॥५।२।७३॥ अध्यारूढस्यारूढलोपे कन्नन्तमधिकमिति निपात्यते । अधिको द्रोणः खार्याः । 'अनुकाभिकाभीकः कमिता' ॥५।२।७४॥ कमितेत्यतस्मिन्नर्थे अन्वभिभ्यां कनि त्रयोप्येते नि[4]पात्याः । अनुकामयते अनुकः । अभिकः । अभीकः । 'पार्श्वेनान्विच्छति' ॥५।२।७५॥ पार्श्वशब्दात् तृतीयान्तादत्रार्थे कन् । पार्श्वेनानृजूपायेनार्थमन्विच्छति

१. Dropped $Dc_2$. २. प्रसितेर्थे $Dc_4$. ३. °भूते वा $Bc_1$, $Dc_3$, $Dc_4$.
४. निपातिताः $Bc_1$.

पार्श्वकः । कौसृतिकः । 'अयःशूलदण्डाजिनाभ्यां ठक्ठञौ' ॥५।२।७६॥ यथासंख्यम् । तीक्ष्णोपायोयःशूलम् । तेनान्विच्छति आयःशूलिकः । राभसिकः । यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स एवमुच्यते । दण्डाजिनं दम्भस्तेनान्विच्छति दाण्डाजिनिको दाम्भिकः । 'तावतिथं ग्रहणमिति लुग्वा' ॥५।२।७७॥ तावतिथमिति पूरणान्तानां सामान्यनिर्देशोयम् । न स्वरूपग्रहणम् । अर्थप्राधान्यान्निर्देशस्य । गृह्यतेनेनेति ग्रहणं ग्रहणसाधनम् । ग्रहणो-पाधिकात् पूरणान्तात् कन् स्वार्थे । पूरणस्य च वा लुक् । द्वितीयेन रूपेण ग्रहणं द्विकं ग्रहणं ग्रन्थस्य द्वितीयकम् । ग्रहणकर्तरि तु नित्यं लुक् । षष्ठेन रूपेण गृह्णाति षट्कश्चैत्रः । ग्रन्थ एव प्रयोगः । 'स एषा ग्रामणीः' ॥५।२।७८॥ प्रथमान्तादत्रार्थे कन् । मैत्रो ग्रामणीः प्रधानमेषां ते मैत्रकाः । 'शृङ्खलमस्य बन्धनं करभे' ॥५।२।७९॥ कन् । शृङ्खलं बन्धनमस्य शृङ्खलकः । करभः । करभस्य दारवः पादपाशः शृङ्खलम् । 'उत्क उन्मनाः' ॥५।२।८०॥ उत्क इति निपात्यते उन्मनाश्चेदर्थः[1] । उत्कः प्रवासी । 'काल-प्रयोजनाद्रोगे' ॥५।२।८१॥ रोगे वाच्ये कालवाचिनः प्रयोजन-वाचिनश्च कन् । अर्थलभ्या समर्थविभक्तिर्यथायोगम् । कालो दिवसादिः । द्वितीयेह्नि भवो द्वितीयको ज्वरः । तृतीयकः । प्रयोजनं कारणं फलं वा । विषपुष्पैर्जनितो विषपुष्पको ज्वरः । उष्णं प्रयोजनमस्य उष्णको ज्वरः । शीतको ज्वरः । उत्तरसूत्रस्थं संज्ञाग्रहणमिहानुकृष्यते तेनायं प्रकारनियमो लभ्यते । 'तदस्मिन्नन्नं प्राये संज्ञायाम्' ॥५।२।८२॥ प्रथमान्तादस्मिन्नर्थे कन् । संज्ञायाम् । यत्तत् प्रथमान्तं प्रायविषयं चेदन्नम् । गुडापूपं प्रायेणान्नमस्यां पौर्णमास्यां गुडापूपिका । वटकेभ्य इनिर्वाच्यः । वटकिनी । 'कुल्माषादञ्' ॥५।२।८३॥ पूर्वेर्थे । कौल्माषी । पौर्णमासी । 'श्रोत्रियंश्छन्दोधीते' ॥५।२।८४॥ छन्दसः श्रोत्रभावो घन् प्रत्ययश्च

१. उन्मादश्चेदर्थः Bc1.

**पूर्वादिनिः ॥५।२।८६॥**

अस्मादिनिः स्यादनेनेत्यर्थे ॥ पूर्वमनेन भुक्तं पीतं वा पूर्वी ॥

**सपूर्वाच्च ॥५।२।८७॥**

सोपपदात् पूर्वादिनिः स्यात् ॥ पूर्वं कृतमनेन कृतपूर्वी कटम् । सुप्सुपेति समासे सति तद्धितः ।

---

निपात्यते छन्दोधीते इति वाक्यार्थे । न स्वरार्थः । श्रोत्रियो विप्रः । तावतिथमित्यतो वानुवृत्ते छान्दस इत्यपि स्यात् । 'श्राद्धमनेन भुक्तमिनिठनौ' ॥५।२।८५॥ अनेन भुक्तमित्यर्थे श्राद्ध-शब्दादिनिठनौ । श्राद्धी । श्राद्धिकः । समानेहनि प्रयोगः । नेह । ह्यः श्राद्धं भुक्तमनेन ।

**पूर्वात्** । **पूर्वमित्यादि** । पूर्वशब्दः क्रियाविशेषणम् । क्रियाविशेषणं च कर्म स्यादिति द्वितीयान्तात् प्रत्ययः । 'सौ च' इति दीर्घः ।

**सपूर्वात्** । **सोपपदादिति** । सहशब्दोत्र विद्यमानवचनः 'वोपसर्जनस्य' इति सहस्य सः । **कृतपूर्वी कटमिति** । भावे निष्ठा न कर्मणीति कटाद् द्वितीया । अथवा कर्मण्येव तथापि द्वितीयात्र स्यादित्युपपादितमधस्तात् । नंनु पूर्वं कृतमनेनेत्यनेकपदावयवत्वा-द्वाक्यं वाक्यस्य चाप्रातिपदिकत्वात् कथं प्रत्यय इत्याशङ्क्याह । **सुप् सुपेत्यादि** । 'पूर्वादिनिः' इत्येव सपूर्वादपि सिद्धौ 'सपूर्वाच्च' इति वदन् ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति परिभाषां ज्ञापयति । सपूर्वात्पूर्वादित्यकयोगेन च व्यपदेशिवद्भावात्पूर्वादपि सिद्धौ 'पूर्वादिनिः' इति पृथग्योगं कुर्वन् व्यपदेशिवद्भावोप्रातिपदिकेनेति परिभाषां ज्ञापयति ।

---

१. भुक्तं वा C, २. ननु च $Bc_1$, $Dc_3$, $Dc_4$.

## इष्टादिभ्यश्च ॥५।२।८८॥

इष्टमनेनेति इष्टी यज्ञे । अधीती व्याकरणे ।

---

इष्टादिभ्यः । इष्टी यज्ञे इति । 'क्तस्येन्विषयस्य कर्मण्यपि' इति सप्तमी । इष्ट । पूर्त । उपसादित । निगदित । परिगदित । निकथित । निषेवित[1] । संकलित[2] । परिकलित । संरक्षित । परिरक्षित । अर्चित । गणित । उपाकृत[3] । अनुगणित । अनुपठित । अवकीर्ण । आयुक्त । गृहीत[4] । आम्नात । श्रुत । आसेवित । अवधारित । अवकल्पित । निराकृत । अनुयुक्त । उपकृत । व्याकुलित[5] । स्पष्टत्वात् त्यक्तानि चत्वारि[6] । 'अनुपद्यन्वेष्टा' ॥५।२।९०॥ अन्वेष्टर्यनुपदीति निपात्यते । अनुपदी गवाम् । 'साक्षाद् द्रष्टरि संज्ञायाम्' ॥५।२।९१॥ साक्षादित्यस्मादव्ययाद् द्रष्टरीति स्यात् संज्ञायाम् । साक्षी उपद्रष्टा । 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' ॥५।२।९२॥ क्षेत्रियजिति निपात्यते परक्षेत्रे चिकित्स्य इत्यर्थे । चोन्तोदात्तार्थः । परक्षेत्रे जन्मान्तरभाविनि देहे चिकित्स्यो य आमृत्योर्न निवर्तते व्याधिः स क्षेत्रियः । अथवा परक्षेत्रे संक्रमय्य चिकित्स्यं विषं क्षेत्रियम् । अथवा परक्षेत्रे चिकित्स्यः परकलत्रे निग्राह्यः[7] पारदारिकः क्षेत्रियः । अथवा परक्षेत्रे सस्यार्थे विनाश्यं तृणं क्षेत्रियम् । सर्वं चैतदाचार्यस्याभिप्रेतमिति प्रमाणम् । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' ॥५।२।९३॥ इन्द्रियमिति घच्प्रत्ययान्तमन्तोदात्तं निपात्यते । रूढिरेषा चक्षुरादिनां तत्र निमित्तानि । इन्द्रलिङ्गादीनि पञ्च । वा शब्दः प्रत्येकं संबध्यते । इन्द्रलिङ्गमिति वा । इन्द्रस्यात्मनो लिङ्गम् । यत इन्द्र आत्मा करणैरनुमीयते नाकर्तृकं करणमस्तीति । इन्द्रदृष्टमिति । आत्मना दृष्टमिति । इन्द्रसृष्टमिति वा । आत्मना

---

१. निपठित Bc1, Dc3, Dc4. २. संकल्पित Bc1. ३. Before it—परिविदित Bc1, Dc3, Dc4. ४. विगृहीत Bc1; निगृहीत Dc3, Dc4. ५. आकुलित Bc1, Dc3, Dc4. ६. सूत्राणि चत्वारि Dc4. ७. विग्राह्यः Bc1.

## तदस्यास्त्यस्मिन्निति मतुप् ॥५।२।९४॥

प्रथमान्तादस्त्युपाधिकादस्यास्मिन् वेत्यर्थे मतुप् स्यात् ॥ श्रीरस्यास्मिन् वास्तीति श्रीमान् । श्रीमती ।

---

सृष्टं तत्कृतेन शुभाशुभेनोत्पन्नमिति कृत्वा । इन्द्रजुष्टमिति वा । आत्मना सेवितं तेन द्वारेण विज्ञानोत्पादनात् । इन्द्रदत्तमिति । आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय । इतिकरणः प्रकारार्थः । सति संभवे व्युत्पत्तिरन्यथापि कार्या इन्द्रोनेन विषयानुपलभत इत्यादि ।

तदस्यास्ति । अस्यास्मिन् वेत्यर्थद्वयस्यैकत्र समावेशे नियमाभावात् पृथगुक्तिः । ततश्चैतत् सिद्धम् । गावोस्य सन्ति गोमान् देवदत्तः । वृक्षा अस्मिन् सन्ति वृक्षवान् पर्वत इति । इतिकरणो विवक्षार्थ इति ।

'भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने ।
संसर्गेस्तिविवक्षायां भवन्ति मतुबादयः' ॥ इति ।

भूम्नि । बहवो गावोस्य सन्ति गोमान् । निन्दायाम् । ककुदावर्ती । ककुदावर्तो निष्फलत्वान्निन्दितः । प्रशंसायाम् । प्रशस्तं रूपमस्यास्ति स रूपवान् । नित्ययोगे । क्षीरिणो वृक्षाः । नित्यं क्षीरसंबद्धा एत उच्यन्ते । अतिशायने । उदरिणी कन्या । यस्या अतिशयेन उदरमस्ति सेयमुच्यते । संसर्गे । दण्डी । संसक्तदण्ड उच्यते । एवं भूमादिविशिष्टेस्त्यर्थे मतुपि सति व्रीहिरस्य यवोस्येत्यादौ सन्मात्रे नातिप्रसङ्गो भवति । एतच्च भाष्यकारेणानादृतम् । तथा चोक्तम् । 'तत् तर्हि भूमादिग्रहणं न कर्तव्यम् । कस्मान्न भवति व्रीहिरस्य यवोस्येति । उक्तं वा । किमुक्तम् । अनभिधानादिति' इति । तथा 'सन्मात्रे चर्षिदर्शनात् । सन्मात्रे च ऋषिर्मतुपं दर्शयति ।

---

१. °स्मिन्नित्यर्थे $D_1$, $D_5$. २. °रस्यास्त्यस्मिन् वा C; °रस्त्यस्यास्मिन्वा $D_1$, $D_5$. ३. P, $D_2$ drop अस्ति; $B_2$, $D_4$ drop अस्तीति.

## तसौ मत्वर्थे ॥१।४।१९॥

तान्तसान्तौ भसंज्ञौ स्तः मत्वर्थे प्रत्यये परे । संप्रसारणम् । अपदत्वान्न रुत्वम् । विदुष्मान् । दोष्मान् ।

गुणवचनेभ्यो मतुबो लुबिष्टः । शुक्लो गुणोस्यास्मिन् वास्तीति शुक्लः पटः । कृष्णः ।

---

यवमतीभिरद्भिर्यूपं प्रोक्षति' इति चोक्तम् । अतो भूमादिवचनमाचार्यैरुपेक्षितमिति ज्ञेयम् । स्पष्टत्वात् त्यक्तमेकम् । 'रसादिभ्यश्च' ॥५।२।९५॥ एभ्यो मतुप् स्यादुक्तेर्थे । रसवान् । रस । रूप । गन्ध । स्पर्श । शब्द । भाव । स्नेह । गुणात् । एकाचः । पूर्वेणैव सिद्धे पुनर्वचनं लुब्निषेधार्थम् । मत्वर्थीयान्तरं च मा भूदिति । कथं रूपिणी कन्या रसिको नटः । उच्यते । गुणादिति गणे पठ्यते । तच्च रसादीना विशेषणम् । तेन ये रसनादीन्द्रियग्राह्या रसादयस्तेषामेवायं पाठः । तेन रूपिणीत्यत्र शोभायोगो गम्यते न चक्षुर्ग्राह्यं रूपम् । रसिक इत्यत्रापि शृङ्गारादिभावयोगो गम्यते न तु रसनेन्द्रिय ग्राह्यो रसः । एकाच इति गणे पठ्यते ततोपि मतुबेव स्यान्नान्यः । स्ववान् ।

**तसौ** । तसाविति वर्णग्रहणं न च वर्णान्मत्वर्थीयः संभवतीति सामर्थ्यात्तदन्तविधिर्विज्ञायत इत्यभिप्रेत्याह । **तान्तसान्ताविति** । **संप्रसारणमिति** । 'वसोः संप्रसारणम्' इति । **अपदत्वान्न रुत्वमिति** । भसंज्ञया पदसंज्ञाया बाधितत्वादपदत्वम् । ततः 'ससजुषो रुः' इति रुत्वं न स्यादित्यर्थः । **विदुष्मानिति** । विद्वांसो विद्यन्तेस्यास्मिन् वा ।

---

१. अपदान्तत्वान्न $D_2$, $D_5$, $B_1$. २. विद्वांसो वर्तन्ते यस्य यस्मिन् वा । दोष्मान् । दोषो विद्यते अस्य अस्मिन् वा ।. ३. लुगिष्टः C, $D_1$, $B_2$. ४. °स्यास्तीति C; °स्यास्ति P; °स्ति शुक्लः पटः $D_1$.

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥८।२।९॥**

मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जात्[1] परस्य मतोर्मस्य वः स्यात् ॥ किंवान् । ज्ञानवान् । विद्यावान्[2] । लक्ष्मीवान् । यशस्वान् । भास्वान् । यवादेस्तु । यवमान् । भूमिमान् ।

**झयः ॥८।२।१०॥**

झयन्तान्मतुपो[3] मस्य वः स्यात् ॥ विद्युत्वान् । अपदत्वान्न[4] जश्त्वम् ।

---

मादुपधायाः । यव । दल्मि । कृमि । भूमि । ऊर्मि । क्रुञ्चा । वशा । द्राक्षा । ध्रजि । ध्वजि । सिञ्जि । हरित् । ककुत् । गरुत् । इक्षु । द्रुम । मधु । यवादिराकृतिगणः ।

झयः । विद्युत्वानिति । विद्युत् विद्यते यस्य स विद्युत्वान् मेघः । स्पष्टत्वात् त्यक्तं सूत्रत्रयं प्रसङ्गाद्व्याख्यायते । 'संज्ञायाम्' ॥८।२।११॥ नाम्नि मतोर्मस्य व[6]भावः स्यात् । अहीवती । कपिवती । मुनिवती । 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती' ॥८।२।१२॥ संज्ञायामेते निपात्यन्ते । आसनस्य आसन्दीभावः आसन्दी वा प्रकृत्यन्तरमस्ति । औदुम्बरी राज्ञ आसन्दीभवतीति प्रयोगदर्शनात् । आसन्दीवान् ग्रामः । अस्थिशब्दस्य अष्ठीभावोष्ठीवान् देहैकदेशः । चक्रीवान् नाम राजा । चक्रस्य चक्रीभावोऽत्र[7] निपात्यते । कक्ष्यायाः संप्रसारणम् । कक्षीवान् नाम ऋषिः । लवणस्य रुमण्भावः । रुमण्वान् नाम गिरिः । चर्मण्वती नदी[8] । नलोपाभावो णत्वं च निपात्यते । संज्ञाया अन्यत्र आसनवान्

---

१. °वर्जाच्च $D_2$. २. C drops विद्यावान् । लक्ष्मीवान्. ३. मतोर्मस्य P, C, $D_1$, $D_2$. ४. अपदान्तत्वा° $D_3$, $D_5$, $B_1$, $B_2$. ५. Before it—शरादीनां वेतसि दीर्घः $Dc_3$. ६. वः $Dc_4$. ७. अत्र dropped $Bc_1$, $Dc_4$. ८. नगरी $Bc_1$, $Dc_3$, $Dc_4$.

**प्राणिस्थादातो लजन्यतरस्याम् ॥५।२।९६॥**

आकारान्ताल्लज्वा स्यान्मत्वर्थे । चूडालः । चूडावान् । प्राणिस्थादिति किम् । शिखावान् दीपः । प्राण्यङ्गादेव । नेह । मेधावान् ।

**सिध्मादिभ्यश्च ॥५।२।९७॥**

एभ्यो लज् वा ॥ सिध्मलः । मांसलः ॥ पक्षे सिध्मवान् ॥

---

अस्थिमान् चक्रवान् कक्ष्यवान् लवणवान् चर्मवतीति । 'उदन्वानुदधौ च' ॥८।२।१३॥ उदकस्योदभावो निपातितः । उदन्वान्नाम ऋषिः । उदन्वानुदधिः । 'राजन्वान् सौराज्ये' ॥८।२।१४॥ शोभनो राजास्मिन्नित्यत्रार्थे निपातः । राजन्वान् देशः । राजन्वती भूमिः । राजवानन्यः ।

**प्राणिस्थात्** । प्रत्ययस्वरेणैवो[2]दात्तत्वे सिद्धे चित्करणं चूडालो- सीत्यादौ 'स्वरितो वानुदात्ते पदादौ' इति स्वरितबाधनार्थम् ।

**सिध्मा** । अत्र महाविभाषयैव लचो विकल्पे सिद्धे अन्यतरस्यां- ग्रहणानुवृत्तिर्मतुप्समुच्चयार्थम् । ततोकारान्तेभ्यः सिध्मादिभ्य इनिठनौ न स्तः किं तु मतुबेव पक्षे स्यादित्यभिप्रेत्याह । **पक्षे सिध्मवानिति** । सिध्म । गडु । मणि । नाभि । बीज । कृष्ण । पांसु । हनु । सक्तु । मांस । परशु । पार्ष्णिधमन्योर्दीर्घश्च । पार्ष्णीलः । धमनीलः । वातदन्तबलललाटानामूङ् च । वातूल इत्यादि । जटाघटाकालाः क्षेपे । क्षेपो निन्दा । जटाल इत्यादि । क्षेपे किम् । जटावांस्तापसः ।

---

१. After it—स्यात् $D_4$, $D_6$. २. °वान्तोदात्तत्वे ले च सिद्धे $Dc_1$, $Dc_3$. ३. Dropped $Bc_1$, $Dc_1$, $Dc_3$, $Dc_4$. ४. पांशु $Dc_3$, $Dc_4$. ५. पर्शु $Dc_2$, $Bc_3$. ६. वा $Dc_3$.

[1]फेनादिलच ॥५।२।९९॥

फेनिलः ।[2] फेनलः । [3]फेनवान् ।

लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ ५।२।१००॥

त्रिभ्यो गणेभ्यः क्रमात् श न इलच् एते वा[4] स्युः ॥ लोमशः । रोमशः । पामनः ।

---

उदकप्रज्ञारोगेभ्यः । क्षुद्रजन्तुभ्यश्चादन्तेभ्यः[5] । विचर्चिकालः । विपादिकालः । यूकालः । मक्षिकालः । आदन्तेभ्यः किम् । कासवान् । दंसवान्[6] । स्पष्टत्वात् त्यक्तम्[7] । 'वत्सांसाभ्यां कामबले' ॥५।२।९८॥ वत्सांसाभ्यां यथासंख्यं कामवद्बलवतोरर्थयोर्लच् । वत्सलः स्वामी । स्नेहवानित्यर्थः । अंसल उपचितांसो[8] बलवानित्यर्थः । न चायमर्थो मतुपि संभवतीति नित्यं लजेव ।

फेनात् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रानुवर्तत इत्यभिप्रेत्याह । फेनवानिति ।

लोमादि । लोमन् । रोमन् । बभ्रू[9] । वल्गु । हरि । कपि । तरु । मुनि । लोमादिः । पामन् । वामन् । धामन् । हेमन्[10] । श्लेष्मन् । कक्षु ।

---

१. Before it the Sûtra—

वत्सांसाभ्यां कामबले ॥ ५।२।९८ ॥

आभ्यां क्रमात् कामे बले चार्थे लच् स्याद्वा ॥ वत्सलः । अंसलः । $D_3$, $B_1$.

२. After it—चकाराल्लच् । $B_1$, $D_4$, $D_5$. ३. Before it—अन्तरस्यामित्यनुवृत्तेः $D_3$, $D_4$, $B_1$. ४. स्युर्वा $B_1$. ५. After it—इष्यते $Dc_3$, $Dc_4$. ६. दंसवान् dropped $Dc_1$. ७. त्यक्तमेकम् $Dc_3$, $Dc_4$. ८. उपचितमांसो $Dc_3$, $Dc_4$. ९. बभ्रु $Dc_4$. १०. हिमन् । हिमवतः $Dc_3$.

अङ्गना । पिच्छिलः । उरसिलः । पक्षे[1] मतुप् ।

**प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ॥५।२।१०१॥**

एभ्यो णः स्यान्मतुप्[2] च ॥ प्राज्ञः । श्राद्धः ।[3] [4]पक्षे । प्रज्ञावान् । इत्यादि ।

---

कद्रु । वलि । सामन् । ऊष्मन् । कृमि । अङ्गात् कल्याणे । कल्याणान्यङ्गान्यस्य । अङ्गना । शाकी । पलाली । दद्रूणां ह्रस्वत्वं च । दद्रुणः । विष्वगित्युत्तरपदलोपश्चाकृतसंधेः । विष्वञ्चोस्य सन्ति विषुणः । विषुशब्दोयं निपात्यते नानार्थे वर्तते । लक्ष्म्या अच्च । लक्ष्मणः । पामादिः । पिच्छ । उरस् । ध्रुव । जटाधोटाकालात् क्षेपे । जटिलः । धोटिलः । कालिलः । क्षेपे किम् । जटावानित्यादि । पर्ण । उदक । प्रज्ञा । पिच्छादिः ।

**प्रज्ञाश्रद्धा** । आदिना श्रद्धावान् । आर्चः । अर्चावान् । वार्तः । वृत्तिमान् । स्पष्टत्वात् त्यक्तानि चत्वारि । 'तपःसहस्राभ्यां विनीनी' ॥५।२।१०२॥ तपःशब्दात् मत्वर्थे वि[7]निः सहस्रादि[8]निः । तपस्वी । सहस्री । 'अण् च' ॥५।२।१०३॥ तपःसहस्राभ्यामणपि स्यात् । तापसः । साहस्रः । ज्योत्स्नादिभ्य उपसंख्यानम् । ज्यौत्स्नः । तामिस्रः । [9]कौतपः । वैसर्पः । वैपादिकः । 'सिकताशर्कराभ्यां च' ॥५।२।१०४॥ आभ्यां मत्वर्थे अण् स्यात् । सैकतः सेतुः । शार्करं मधु । अदेशविषयमिदम् । 'देशे लुबिलचौ च' ॥५।२।१०५॥ सिकता-

---

१. Before this—वत्सांसाभ्यां कामबले । आभ्यां क्रमात् कामबलवतोरर्थयोर्लच् स्याद्वा । वत्सलः । अंसलः । $B_2$. २. Dropped C. ३. आर्च । वार्त after it $B_2$, $D_5$. ४. Dropped P, C. ५. घाटा $Dc_3$. ६. घाटिलः $Dc_3$. ७. विन् $Bc_1$; $Dc_3$, $Dc_4$. ८. °दिन् $Bc_1$, $Dc_4$. ९. Before it—कौडलः $Bc_1$, $Dc_3$, $Dc_4$.

दन्त उन्नत उरच् ॥५।२।१०६॥

[1]उन्नतत्वोपाधिकाद्दन्तशब्दादुरच् स्यात् ॥ [2]उन्नता दन्ता [3]अस्य दन्तुरः ।

ऊषसुषिमुष्कमधो रः ॥५।२।१०७॥

एभ्यो मत्वर्थे रः । ऊषरः । [4]सुषिरः । [5]मुष्करः । [6]मधुरः ॥ [7]खमुखकुञ्जेभ्यश्च ॥* खरः । मुखरः । कुञ्जरः । कुञ्जो हस्तिहनुः ॥ कच्छ्वा ह्रस्वत्वं च ॥* कच्छुरः ।[8]

---

शर्कराभ्यां मत्वर्थीयस्य देशे लुप् स्यादिलजण्मतुपश्च । शर्करा देशः । शर्करिलः । शार्करः । शर्करावान् । सिकता । सिकतिलः । सैकतः । सिकतावान् । देशः ।

दन्त उन्नत । दन्तादुन्नतोपाधिकादुरच् स्यात् । मत्वर्थे इनुठन् [9]सिध्मादिलचामपवादः ।

ऊष । यथासंभवं मतुबादिषु प्राप्तेषु । रसवाचिनो मधुशब्दस्येह ग्रहणं न द्रव्यवाचिनः । तत्र मधुमान् घट इति । नगपाण्डुपांसुभ्यश्च रो वाच्यः । नगरम् । पाण्डुरम् । पांसुरम् ।

---

१. P, $D_1$, $D_2$, $D_4$ drop the Vṛitti; C has—उन्नताद्दन्तादुरच् स्यात्; $B_2$ has—उन्नतोपाधिकात् प्रथमान्ताद् दन्तान्मतुबर्थे उरच् स्यात्। २. C drops उन्नता दन्ता अस्य; उन्नता दन्ता यस्य स $B_2$. ३. यस्य $D_4$. ४. Dropped P, C, $D_1$, $D_4$, $D_5$. ५. Dropped P. ६. मधुरम् P; after it—इत्यादि $D_1$, $D_2$, $D_4$, $D_5$. ७. खनख° $B_1$. ८. After it—नगपांशुपाण्डुभ्यश्च* ॥ नगरम् । पांशुरः । पाण्डुरः । $B_2$, $D_2$; नग॰पांस्वादिभ्यश्चोपसंख्यानम्* ॥ नगरम् । पाण्डुरम् । इत्यादि । $B_1$, $D_3$; ९. तुन्दादिलचामपवादः $Bc_1$, $Dc_3$, $Dc_4$.

**केशाद्वोन्यतरस्याम् ॥५।२।१०९॥**

केशवः ॥ [1]अन्येभ्योपि ॥* मणिवः । [2]सेर्पः । अर्णसो लो[3]पश्च । अर्णवः । पक्षे मतुप् ॥ मेधारथाभ्यामिरन्निरचौ च ॥* मेधिरः । रथिरः ॥

**काण्डाण्डादीरन्नीरचौ ॥५।२।१११॥**

आभ्यामे[4]तौ [5]क्रमात् स्तः ॥ काण्डीरः । अण्डीरः ।

**द्युद्रुभ्यां मः ॥५।२।१०८॥**

द्युमः । द्रुमः ।

---

**केशात्** । मतुप्समुच्चयार्थं पूर्वमन्यतरस्यांग्रहणमनुवर्तते । इदं तु इनूठन्प्राप्त्यर्थम् । ततश्चातूरूप्यं भवति । केशवः । केशी । केश[6]वान् । केशिक इति । स्पष्टत्वात् त्यक्तमेकम् । 'गाण्ड्यजगात् संज्ञायाम्' ॥५।२।११०॥ आभ्यां मत्वर्थे वः । संहितया निर्देशात् गाण्डिगाण्डीशब्दौ गृह्येते । उभयथा हि सूत्रं प्रणीतम् । गाण्डिवं गाण्डीवं धनुः । अजगवं धनुः ।

**काण्डा** । इनूठनोरपवादः ।

**द्युद्रुभ्यां म** इति । द्यौरस्यास्तीति । 'दिव उत्' । केचित्तु द्यु इति उकारान्तं प्रकृत्यन्तरमह्नो वाचकं वर्णयन्ति । रूढिशब्दावेतौ इति पक्षे मतुवत्र न विकल्प्यते । स्पष्टत्वात् त्यक्तमेकम् । 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' ॥५।२।११४॥

---

१. अन्येभ्योपि माणि हरिभ्यामुपसंख्यानमिति वः । पक्षे मतुप् । अर्णसो &c. $D_5$ ; अन्येभ्योप्युपसंख्यानम् $B_1$ ; Before it—पक्षे इन् ठन् मतुप् च $B_2$, $D_2$ (also केशी । केशिकः । केशवान् $D_2$). २. Dropped P, C, $D_1$, $D_2$, $D_4$. ३. सलोपश्च $B_1$, $B_2$ ; अर्णसोन्तलोपश्च $D_4$. ४. आभ्यां क्रमादेतौ $B_1$. ५. Dropped $B_2$. ६. केशिकः । केशवानिति $Bc_1$, $Dc_3$, $Dc_4$.

**अत इनिठनौ ॥५।२।११५॥**

**अकारान्तादिनिठनौ स्तः मत्वर्थे । दण्डी । दाण्डिकः । पक्षे । दण्डवान् ।**

**व्रीह्यादिभ्यश्च ॥५।२।११६॥**

**एभ्य इनिठनौ स्तः मत्वर्थे[1] मतुप् च ॥ व्रीही । शिखी । व्रीहिकः । शिखादेर्न ठन् ।**

---

ज्योत्स्नादयो निपात्यन्ते मत्वर्थे । ज्योतिष इलोपो नश्च प्रत्ययो निपात्यते । ज्योत्स्ना । तमस उपधाया इत्वं रप्रत्ययः । तमिस्रा । शृङ्गादिनच् । शृङ्गिणः । ऊर्जोसुगागमो विनिवलचौ प्रत्ययौ । ऊर्जस्वी । ऊर्जस्वलः । गोर्मिनिः । गोमी । मलादिनजीमसचौ प्रत्ययौ । मलिनः । मलीमसः ।

अतः । पक्षे दण्डवानिति । मतुप्समुच्चयार्थस्यान्यतरस्याग्रहण-स्यानुवृत्तेरित्यर्थः । तपरकरणं किम् । खट्वावान् ।

व्रीहि । शिखादेर्न ठन्निति । शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु परिशिष्टेभ्य उभयमित्यस्माद्वक्तव्याल्लभ्यते[2] । शिखा । माला । मेखला । वीणा । संज्ञा । वडवा । अष्टका । वलाका । पताका । कर्मन् । चर्मन्[3] । एभ्य इनिरेव । शिखीत्यादि । यवखद । नौ । कुमारी एभ्यष्ठन्नेव[4] । यवखदिकः । नाविकः । कुमारिकः । शेषेभ्यो व्रीहि माया शीर्षान्नञ् एभ्यः इनुठनौ स्तः । व्रीही । व्रीहिकः । मायी । मायिकः । आशीर्षी । आशीर्षिकः ।

---

१. मत्वर्थे dropped D4. २. °द्वक्तव्यादेतल्ल° Bc1, Dc4. ३. Before it-वर्मन् Bc1, Dc4. ४. एतेभ्य° Dc3, Dc4.

एकाक्षरात् कृतो जातेः सप्तम्या च न तौ स्मृतौ ॥

स्ववान् । कारकवान् । सिंहवान् । दण्डा अस्यां सन्ति दण्डवती । शाला । क्वचिद्भवतोपि । कार्यी । कार्यिकः ।

तुन्दादिभ्य इलच्च ॥५।२।११७॥

तुन्दिलः । पक्षे इनि ठन् मतुप् च ।

---

एकाक्षरादित्यादि । ताविति इनिठनौ । स्ववानित्येकाक्षरस्योदाहृतिः । कारकवानिति कृदन्तस्य । सिंहवानिति जातेः । दण्डवती शालेति सप्तम्यर्थस्य । क्वचिद् भवतोपीति । इनिठनाविति शेषः । एतच्च सर्वं 'तदस्यास्त्यस्मिन्' इत्येतस्माद् विवक्षार्थादितिकरणाल्लभ्यते ।

तुन्द । पक्षे इत्यादि । इलजभावपक्षे । चकारादिनिठनौ । अन्यतरस्यांग्रहणानुवृत्तेर्मतुप् । एवं चत्वारः प्रत्ययाः स्युः । तुन्दी । तुन्दिकः । तुन्दिलः तुन्दवान् । तुन्द । उदर । पिचण्ड । यव । व्रीहि । व्रीहिशब्देन व्रीह्यर्थः शाल्यादिर्गृह्यते । शालिलः । शाली । शालिकः । शालिमान् । स्वाङ्गाद्विवृद्धौ । महान्तौ कर्णावस्य स्तः कर्णिलः । कर्णी । कर्णिकः । कर्णवान् । स्पष्टत्वात् त्यक्तानि त्रीणि । 'एकगोपूर्वाट्ठञ् नित्यम्' ॥५।२।११८॥ नित्यमिति मतुपो बाधार्थम् । एकशतमस्यास्ति ऐकशतिकः । गौसहस्रिकः । अत इत्येव । एकविंशतिमान् । ऐकगविक इति समासान्तेनादन्तः । कथमेकद्रव्यवत्त्वादिति । पूर्वं द्रव्यवत्त्वादिति मतुपं कृत्वा पश्चादेकेन द्रव्यवत्त्वादेकद्रव्यवत्त्वादिति समासः । 'शतसहस्रान्ताच्च निष्कात्' ॥५।२।११९॥ निष्कोत्तराभ्यां शतसहस्राभ्यां नित्यं ठञ् । नैष्कशतिकः । नैष्कसहस्रिकः । 'रूपादाहतप्रशंसयोर्यप्' ॥५।२।१२०॥ आहतं रूपमस्येति रूप्यो गौः । प्रशस्तं रूपमस्यास्ति रूप्यो गौः । आहतप्रशंसयोः किम् । रूपवान् घटः । अन्येभ्योपि दृश्यते । हिमवान् हिम्यः । गुणवान् । गुण्यः ।

---

१. कार्यमास्मिन्नस्ति कार्यिकः । $D_5$. २. इन् ठन् मतुपश्च इनिठनौ मतुप् च $B_2$, $D_1$, $D_2$. ३. सप्तम्यन्तस्य $Bc_1$, $Dc_4$. ४. °मस्यास्ति $Bc_1$, $Dc_4$. ५. निष्कः $Dc_3$

## अस्मायामेधास्रजो विनिः ॥५।२।१२१॥

असन्तान्मायादेश्च विनिः स्यान्मतुप् च[1] । तेजस्वी । [2]मायावी । [3]मेधावी । 'चोः कुः' । स्रग्वी । पक्षे स्रग्वान् । इत्यादि । व्रीह्यादित्वान्मायी । मायिकः । शृङ्गवृन्दाभ्यामारकन्[4] ॥* शृङ्गारकः । वृन्दारकः । फलबर्हाभ्यामिनन्[5] ॥* फलिनः । बर्हिणः । रथाच्च ॥* रथिनः । शीतोष्णतृषाभ्य[6] आलुच् ॥ तदसहने[7] । शीतं न सहते शीतालुः ।[8] हिमाच्चेलुः[9] ।* हिमेलुः । बलादूलः ॥* बलूलः । वाताच्च ॥* वातूलः । तप्पर्वमरुद्भ्याम् ॥ पर्वतः । मरुत्तः ।

## ऊर्णाया युस् ॥५।२।१२३॥

पदत्वान्नावर्णलोपः ॥ ऊर्णायुः ।

---

**अस्माया** । मतुप् सर्वत्र समुच्चीयत इत्यभिप्रेत्याह । **मतुप् चेति** । **तेजस्वीति** । 'तसौ मत्वर्थे' इति भसंज्ञा ततः पदकार्यं न । शृङ्गवृन्देत्यादीनि वक्तव्यानि । आमयस्योपसंख्यानम् । आमयावी । हृदयाच्चालुरन्यतरस्याम्[10] ।* हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । हिमाच्चेलुरिति वक्तव्यम् । हिमं न सहते हिमालुः ।

**ऊर्णायाः** । ऊर्णायुस् इति स्थिते 'यस्येति च' इत्यकारलोपः प्राप्नोतीत्याशङ्क्याह । **पदत्वादिति** । 'सिति च' इति सूत्रेण पदत्वादिति भावः । केचिच्छन्दोग्रहणमिह[12]ानुवर्तयन्ति ।

---

१. वा $B_1$. २. Dropped $D_1$. ३. $B_1$, $B_2$ drop it. ४. °मारकच् $B_1$, $D_2$. ५. °मिनच् $B_2$, $D_2$. ६. तृषाभ्यश्चा° $D_4$. ७. After it—इति वाच्यम् $D_3$, P, C, $B_1$. ८. After it—उष्णालुः । तृष्णालुः । बलादूलः ॥* $D_5$. ९. P, C, $D_1$ drop हिमा°…हिमेलुः ; हिमाच । हिमालुः । $D_4$. १०. °मिति वाच्यम् $Bc_3$, $Dc_3$, $Dc_4$. ११. Dropped $Dc_2$. १२. इह dropped $Dc_4$.

**वाचो ग्मिनिः ॥५।२।१२४॥**

वाग्मी ।

**आलजाटचौ बहुभाषिणि ॥५।२।१२५॥**

बहुगर्ह्या वागस्यास्तीति वाचालः । वाचाटः ।

**स्वामिन्नैश्वर्ये ॥५।२।१२६॥**

स्वामी । स्ववानन्यः ।

**अर्शआदिभ्योऽच् ॥५।२।१२७॥**

अर्शसः । वैजयन्तः ।

---

**वाचः** । वाक्शब्दात् मत्वर्थे ग्मिनिः स्यात् ।

**आल च्** । कुत्सायामिति वाच्यमित्यभिप्रेत्याह । बहु **गर्ह्या वागस्यास्तीति** । यो हि सम्यक् बहु भाषते स वाग्मीत्येव स न वाचालः ।

**स्वामिन्** । ऐश्वर्ये गम्ये धनवाचिनः स्वशब्दादामिन् प्रत्ययो निपात्यते । स्वं धनमस्यास्तीति स्वामी । **स्ववानन्य** इति । अत्रात्मादावर्थान्तरे स्वशब्दो वर्तते अतोऽत्रैश्वर्यं न प्रतीयते ।

**अर्श** । मत्वर्थे । **अर्शस** इति । अर्शांसि विद्यन्ते यस्य स तथा । आकृतिगणोऽयमित्यभिप्रेत्याह । **वैजयन्त** इति । वैजयन्ती विद्यते यस्य । अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घाटा । अभ्र । अम्ल । लवण । स्वाङ्गाद्धीनात् । खञ्जः पादोऽस्यास्तीति खञ्जः । काणं चक्षुरस्यास्तीति काणः । वर्णात् । शुक्लाः प्रासादा अस्मिन्

---

१. B₁ has कुत्सित इति वाच्यम् before it. २. Before it—ऐश्वर्ये गम्यमाने धनवाचिनः स्वशब्दादामिन् प्रत्ययः स्यात् पूर्वस्य च दीर्घः । B₁. ३. Before it—मतुबर्थे B₁.

**वातातिसाराभ्यां कुक् च ॥५।२।१२९॥**

आभ्यामिनिः स्यात् कुक् चागमः ॥ वातकी । अतिसारकी ।[1]

---

सन्ति शुक्लं नगरम् । प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चित्त्वमर्शसोसीत्यत्र 'स्वरितो वानुदात्ते पदादौ' इति स्वरितबाधनार्थम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत् सर्वमिह द्रष्टव्यमस्याकृतिगणत्वात् । स्पष्टत्वात्त्यक्तमेकम् । 'द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः' ॥५।२।१२८॥ द्वन्द्वः समासः । उपतापो रोगः । गर्ह्यं निन्द्यम् । एतद्विषयेभ्यः प्राणिस्थवाचिभ्य इनिरेव स्यात् मत्वर्थे । कटकवलयिनी । कुष्ठी । ककुदावर्ती । प्राणिस्थात् किम् । पुष्पफलवान् वृक्षः । प्राण्यङ्गान्नेष्यते । पाणिपादवान् । अत इत्युक्तेर्मणिमुक्तावतीत्यादौ न ।

वात । कुक् चागम इति । इनिसंनियोगेन च वातातिसारयोः कुगागमः । वातातिसारयोरुपतापत्वात् पूर्वेणैव सिद्धे इनौ कुगर्थमेतद्वचनम् । रोगादन्यत्र वातवान् देशः । पिशाचाच्चेति वक्तव्यम् । पिशाचकी वैश्रवणः । स्पष्टत्वात् त्यक्तानि त्रीणि । 'वयसि पूरणात्' ॥५।२।१३०॥ पूरणप्रत्ययान्ताद्वयसि इनिरेव स्यात् । पञ्चमो मासः संवत्सरो वास्यास्तीति पञ्चमी उष्ट्रः । दशमी । 'सुखादिभ्यश्च' ॥५।२।१३१॥ एभ्य इनिरेव मत्वर्थे । सुखी । सुख । दुःख । अस्रु । आम्र । अलीक । करुणा । कृपण । सोढ । प्रतीप । शील । हल । माला क्षेपे । व्रीह्यादिपाठेऽपि पुनः पाठपक्षे मतुब् वा धनार्थः । 'धर्मशीलवर्णान्ताच्च' ॥५।२।१३२॥ धर्माद्यन्तादिनिरेव । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ।

---

१. Dropped $B_1$. २. कुगागमः C. ३. After this—पिशाचाच्चेति वक्तव्यम् । पिशाचकी $B_1$; रोगे चायमिष्यते । नेह । वातवती गुहा । पिशाचाच्च । पिशाचा विद्यन्तेस्य पिशाचकी वैश्रवणः $B_2$; $D_4$ follows $B_2$ and has it up to गुहा. ४. इत्युक्ते कर्माणि मुक्ता° $Bc_1$. ५. बालकः $Dc_3$. ६. After it—कलभः $Dc_3$. ७. अर्थ for अस्रु । आम्र $Bc_1$, $Dc_3$; स्वार्थ for them $Dc_4$. ८. फल $Bc_1$, $Dc_4$.

**हस्ताज्जातौ ॥५।२।१३३॥**

हस्ती । हस्तवानन्यः ।

---

हस्तात् । इनिरेव स्यात् । समुदायेन चेत् ज्ञातिरुच्यते । त्यक्तानि चत्वारि । 'वर्णाद् ब्रह्मचारिणि' ॥५।२।१३४॥ वर्णादिनिः स्याद्ब्रह्मचारिणि वाच्ये । वर्णी ब्रह्मचारी । अन्यत्र वर्णवान् । 'पुष्करादिभ्यो देशे' ॥५।२।१३५॥ एभ्यो देशेर्थे इनिरेव । पुष्करिणी । देशे किम् । पुष्करवान् गजः । बलाद्बाहूरुपूर्वपदादुपसंख्यानम् । बाहुबली । ऊरुबली । सर्वादेश्चेति वाच्यम् । सर्वधनी । सर्वबीजी[1] । अर्थाच्चासंनिहिते । असंनिहितोर्थोस्य अर्थी । असंनिहिते किम् । अर्थवान् । तदन्ताच्चेति वाच्यम् । धान्यार्थी । हिरण्यार्थी । विद्यार्थी । पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल । कर्दम । शालूक । विगर्ह[2] । करीष । शिरीष[3] । प्रयवस[4] । हिरण्य । 'बलादिभ्यो मतुबन्यतरस्याम्' ॥५।२।१३६॥ अन्यतरस्यांग्रहणेन प्रकृत इनिः समुच्चीयते । बलवान् । बली । बल । उत्साह । उद्भास[5] । उद्वास । शिला । कूल । चूडा । सुल[6] । कुल । आयाम । व्यायाम । उपयाम । अवरोह । आरोह । परिणाह । 'संज्ञायां मन्माभ्याम्' ॥५।२।१३७॥ मन्नन्तान्मान्ताच्चेनिः स्यात् समुदायेन चेत् संज्ञा गम्यते । दामिनी । मान्तात् । सोमिनी । संज्ञायां किम् । दामवान् । सोमवान् ।

---

१. सर्वजीवी Bc1. Dc3. २. विदर्भ Bc1, Dc3, Dc4. ३. सिरीष Dc4. ४. प्रचय । प्रवास Bc1, Dc4; प्रचय । पङ्कज । प्रवास Dc3. ५. उद्वास Bc1, Dc3, Dc4. ६. मूल । दल । कुल । आयाम &c. Bc1, Dc3, Dc4.

**कंशंभ्यां बभयुस्तितुतयसः ॥५।२।१३८॥**

आभ्यामेते स्युः ॥[१] कंबः । कंभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । एवं शंबादि[२] ।

**तुन्दिवलिवटेर्भः ॥५।२।१३९॥**

एभ्यो भः स्यान्मत्वथ ॥ तुन्दिभः । इत्यादि ।

**अहंशुभमोर्युस् ॥५।२।१४०॥**

[३]आभ्यां मतुबर्थे[५] युस् स्यात् । पदत्वान्न टिलोपः । [६]अहंयुः । शुभंयुः ।

---

**कंशंभ्याम्** । कंशमिति मकारान्तावुदकसुखयोर्वाचकौ । यसः[७] सकारः पदसंज्ञार्थः । तेनानुस्वारपरसवर्णौ सिद्धौ स्तः । भसंज्ञायां हि सत्यां कम्युः शम्युः कम्यः शम्य इति स्यात् ।

**तुन्दि** । तुन्दिरिति वृद्धा नाभिरुच्यते । वलिशब्दः पामादिषु पठ्यते । तेन बलिन इत्यपि स्यात् ।

**अहम्** । अहमित्यव्ययमहंकारे वर्तते । शुभमित्यव्ययं शुभपर्यायः । पदत्वादिति । अहंयुः शुभंयुरित्यत्र युसः सित्त्वात् 'सिति च' इति पदत्वात् अव्ययानां भमात्रे टिलोप इति टिलोपो न भवतीत्यर्थः ।

---

१. After it—मत्वर्थे $B_1$; 'अव्ययानां भमात्रे टिलोप इति टिलोपः ।' कंशमिति मकारान्तावुदकसुखयोर्वाचकौ $D_5$. २. शंबादिः $B_2$, $D_4$. ३. $B_1$ drops it. ४. $B_1$ drops the Vṛitti. ५. मत्वर्थे C. ६. Before it—अनुनासिकस्येष्टिः । $D_4$. ७. युसो यसश्च $Dc_2$.

**रजःकृष्यासुतिपरिषदो वलच् ॥५।२।११२॥**

एभ्यो मत्वर्थे वलच् स्यात् । रजस्वला ।

**वले ॥६।३।११८॥**

वले परे पूर्वस्याणो दीर्घः स्यात् ॥ कृषीवलः[२] ॥ वलच् अन्येभ्योपि दृश्यते ॥* इति वलच् । भ्रातृवलः । पुत्रावलः । उत्सङ्गावलः ॥

**दन्तशिखात् संज्ञायाम् ॥५।२।११३॥**

आभ्यां वलच् स्यात्[४] संज्ञायाम् ॥ दन्तावलः[५] । शिखावलः ॥

---

रजः । रजःशब्दादिनावितरेभ्यो मतुपि प्राप्ते वलच् विधीयते । इतिकरणो विषयनियमार्थोत्रानुवर्तते तेनेह न । रजोस्मिन् ग्रामे विद्यत इति । अन्येभ्योपि दृश्यते इति वाच्यम् । भ्रातृवलः । पुत्रवलः । उत्सङ्गवलः[६] ।

वले । वल इति 'रजःकृष्यासुति परिषदो वलच्' इत्यस्य ग्रहणं न प्रातिपदिकस्य वलस्य । 'वनगिर्योः संज्ञायाम्' इत्यतः संज्ञाग्रहणानुवृत्तेर्भ्रातृवल इत्यादौ न दीर्घः ।

दन्त । दन्तशब्दादिनिठनोः प्राप्तयोर्वलच् विधीयते । शिखाशब्दादिनौ । दन्तावलो धैम्यः[७] । शिखावलो मयूरः ।

इति प्रकृत्यर्थपृथगर्थास्तद्धिताः समाप्ताः ।

समर्थाधिकारस्य प्रथमग्रहणस्य[८] च पूर्णोविधिः ।

---

१. Dropped $D_1$. २. After it—आसुतीवलः । मद्यसंधानमास्तुति । परिषद् विद्यते यस्य स परिषद्वल; वलच् प्रकरणे अन्येभ्योपि &c. $B_2$. ३. This Vārtika up to उत्सङ्गावलः is omitted in P, $D_1$, $D_2$, $D_4$, $D_5$ and C; $D_4$ has after कृषीवलः आसुतीवलः । पर्षद्वलः । परिषद्वलः ।; $D_5$ has आसुतीवलः । परिषद्वलः ।. ४. $B_1$, $D_1$ drop it. ५. After it—धौम्यः । कुञ्जरः । मयूरः । $D_5$. ६. उत्तुङ्गवलः $Bc_1$, $Dc_3$, $Dc_4$. ७. हस्ती $Dc_3$. ८. Dropped $Dc_2$.

**प्राग्दिशो विभक्तिः ॥५।३।१॥**

दिक्शब्देभ्य इत्यतः प्राक् इत ऊर्ध्वं प्रत्यया विभक्तिसंज्ञाः स्युः । विभक्तित्वात्त्यदाद्यत्वादि ॥

**किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥५।३।२॥**

वक्ष्यमाणा प्राग्दिशीयाः प्रत्यया एभ्य एव स्युः । न तु द्व्यादिभ्यः ।

---

अथ स्वार्थिका उच्यन्ते ।

तत्रापि प्रथम प्राग्दिशीयाः । तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यनपेक्षत्वान्नात्रोपयुज्यते इति निवृत्तम् । वावचनं तु क्वचिदनुवर्तते तेन विकल्पेन तसिलादयः स्युः ।

**प्राग्दिशः** । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देश-कालेष्वस्तातिः' । इति वक्ष्यति । अतः तत्प्रागित्यर्थः । विभक्ति-संज्ञाप्रयोजनमाह । **विभक्तित्वादिति** । 'त्यदादीनामः' इत्यादि । इदमो विभक्तिस्वरोपि इत इत्यत्र 'ऊडिदम्पदा—' इत्यनेन लित्स्वरं बाधित्वा तसेरुदात्तत्वं 'लिति' इत्यत्र तस्य सूत्रस्यानुवर्तनात् ।

**किम्** । सर्वनामत्वात् प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते । संख्यार्थोऽत्र बहुशब्दो ज्ञेयः । तेन बहोः सूपादित्यत्र न । प्राग्दिश इत्येव । वैयाकरणपाशः ।

---

१. विभक्तिसंज्ञाः प्रत्ययाः C, $D_1$, $D_2$, $D_5$; ये प्रत्ययास्ते $D_4$.
२. स्वार्थिका $Dc_3$, $Dc_4$. ३. अत्र dropped $Bc_2$, $Dc_4$.

**पञ्चम्यास्तसिल् ॥५।३।७॥**

पञ्चम्यन्तात् किमादेर्वा तसिल् स्यात् स्वार्थे[1] । लः स्वरार्थः । सुपो लुक् ।

**कु तिहोः ॥७।२।१०४॥**

तकारहकारादौ प्रत्यये परे किमः कुः स्यात् । तद्धितत्वात् स्वाद्युत्पत्तिः । अव्ययत्वात् सुपो लुक्[2] । कुतः । कस्मात्[3] । सर्वतः । विभक्तित्वात् पदाद्यत्वम्[4] । ततः । यतः । बहुतः । द्व्यादेस्तु । द्व्याभ्याम् । किमादेः किम् । वृक्षात् । सर्वप्रातिपदिकात् तसिलिति केचित्[5] । कृष्णतः ।

**इदम इश् ॥५।३।३॥**

प्राग्दिशीये परे इदम इश् स्यात् । इतः[6] ।

---

**पञ्चम्याः** । लः स्वरार्थ इति । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वार्थ इति । सुपो लुगिति । कस्मात् तस् इति स्थिते 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुक् ।

**कु ति** । तद्धितत्वात् स्वाद्युत्पत्तिरिति । तद्धितत्वेन प्रातिपदिकत्वम् । ततः स्वाद्युत्पत्तिरित्यर्थः । अव्ययत्वादिति । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति सुपो लुक् इत्यर्थः । सर्वप्रातिपदिकादिति । तथोक्तं मुग्धबोधे । 'तंस्[7]' इति ।

**इदमः** । शकारः सर्वादेशार्थः ।

---

१. स्वार्थे न तु परार्थे । सुपो लुक् B₂. २. Before it–तद्धितश्चासर्वविभक्तिः । D₆. ३. कस्मादिति कुतः । सर्वस्मात् । सर्वतः ।. ४. सर्वात्पदाद्यत्वम् B₁; त्यदाद्यत्वम् । D₄. ५. B₁, D₂ drop it. ६. After it–अस्मात् D₃, D₆, B₁. ७. तसुक्ते Dc₁.

**एतदोऽश् ॥५।३।५॥**

एतदः अश् स्यात् प्राग्दिशीये[1] । अतः विभक्ति-कार्यम् । अमुतः ।

**पर्यभिभ्यां च ॥५।३।९॥**

आभ्यां तसिल् स्यात् ॥ परितः । अभितः ।

**सप्तम्यास्त्रल् ॥५।३।१०॥**

द्व्यादिवर्जात् किमादेः सप्तम्यन्ताद्वा त्रल् स्यात् स्वार्थे ॥ कुत्र । तत्र । एतस्मिन्निति अत्र । अमुत्र ।[4] बहुत्र ।

---

एतदः । 'एतदः' इति योगविभागः कार्यः । 'एतेतौ रथोः' इत्यनुवर्तते । एतदो रथोः परयोरेते इत एतावादेशौ स्तः । रेफादिः 'अनद्यतनेर्हिलन्यतरस्याम्' थादिः पुनरेतदस्थमुप्रत्यय उपसंख्येयः । ततः 'अश्' इति द्वितीयो योगः । तत्र 'एतदः' इत्यनुवर्तते । एतर्हि । इत्थम् । **विभक्तिकार्यमिति** । अदसस्त-सिलि त्यदाद्यत्वम् । 'अदसोसेः—' इति मुभावः । त्यक्तमेकम् । 'तसेश्च' ॥५।३।८॥ प्रतियोगे पञ्चम्यास्तसिः 'अपादाने चाहीयरु-होः' इति वक्ष्यति । तस्य तसेः किंसर्वनामभ्यो बहुभ्यः परस्य तासिलादेशः स्यात् । कुत आगतः । यत आगतः । तत आगतः । तसेस्तसिल्वचनं लित्स्वरार्थं विभक्तिसंज्ञार्थं विभक्तिस्वरार्थं च ।

**पर्यभि** । सर्वोभयार्थे वर्तमानाभ्यामिष्यते । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः । इह न । परिषिञ्चति अभियातीति ।

**सप्तम्याः** । कुत्रेति 'कु तिहोः' । तत्रेति । 'त्यदाद्यत्वम्' । **एतस्मिन्निति अत्रेति** । 'एतदोऽश्' इत्यश् । यदा त्वन्वादेशस्तदा 'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ' इत्यश् अनुदात्तः । अस्य

---

१. Dropped D4. २. After it–परे D5. ३. B1 drops it. ४. सर्वोभयार्थे वर्तमानाभ्यामिष्यते । D5. ५. अत Dc4,

**इदमो हः ॥५।३।११॥**

अस्मात् सप्तम्यन्ताद्धः स्यात्[1] । त्रलोपवादः । इह ।

**किमोत् ॥५।३।१२॥**

किमः सप्तम्यन्तादत् प्रत्ययः स्यात्[2] ॥

**क्वाति ॥७।२।१०५॥**

किमः क्वः स्यादति विभक्तौ ॥ क्व । त्रलपीत्येके । कुत्र ।

**वा ह च च्छन्दसि ॥५।३।१३॥**

**कु तिहोः ॥७।२।१०४॥**[3]

कुह ।

---

सूत्रस्यायमर्थः । एतदोन्वादेशविषयस्याशादेशोनुदात्तः स्यात् त्रतशोः परयोः । तौ त्रतशावनुदात्तौ स्तः । एतस्मिन् गामे सुखं वसामः । अथो अत्राधीमहे । अत्रेति पदमनुदात्तम् ।

इद । इहेति । 'इदम इश्' ।

'किमोत्' । तकारस्येत्संज्ञा 'न विभक्तौ तुस्माः' इति निषेधस्यानित्यत्वात् ।

**क्वाति** । **त्रलपीत्येके** इति । तच्चोक्तं **काशिकायां वृत्तौ** । त्रलमपि केचिदिच्छन्ति । कुत्रेति । तत् कथमुत्तरसूत्राद्वावचनं पुरस्तादपकृष्यत इति ।

**वा ह च** । किमः सप्तम्यन्तात् ह प्रत्ययो वा स्याच्छन्दसि । चकाराद्यथाप्राप्तम् । एतत् सूत्रं वैदिकप्रक्रियायां पठनीयमपि 'कु तिहोः' इति कुआदेशप्रदर्शनार्थं पठितम् । स्पष्टत्वात् त्यक्तमेकम् । 'इतराभ्योपि दृश्यन्ते' ॥५।३।१४॥ सप्तमीपञ्चम्यपेक्षमितरत्वम्[4] ।

---

१. $B_1$ drops it. २. $B_1$, $D_1$, $D_2$ drop it. ३. Before this—किमो हः स्यात् छन्दसि वा । $B_2$. ४. पञ्चमीसप्तम्य° $Bc_1$.

**सर्वैकान्यकिंयत्तदः काले दा ॥५।३।१५॥**

एभ्यः सप्तम्यन्तेभ्यो दाप्रत्ययः स्यात् कालेऽर्थे। त्रलादेरपवादः।

**सर्वस्य सोन्यतरस्यां दि ॥५।३।६॥**

दाप्रत्यये परे सर्वस्य सो वा स्यात् ॥ सर्वस्मिन् काले। सदा। सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काले किम्। सर्वत्र देशे।

**इदमोर्हिल् ॥५।३।१६॥**

अस्मात् सप्तम्यन्तात् कालेर्हिल् स्यात्। ह्स्यापवादः।[4]

---

इतराभ्यो विभक्तिभ्यस्तसिलादयः प्रत्यया दृश्यन्ते। दृशिग्रहणं प्रायिकविध्यर्थम्। तेन भवान् दीर्घायुः देवानां प्रिय आयुष्मानित्येतेषामेव योगे एतद्विधानम्। स भवान्। ततो भवान्। तत्र भवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। तेन भवता। ततो भवता। तत्र भवता। तस्मै भवते। ततो भवते। तत्र भवते। तस्माद्भवतः। ततो भवतः। तत्र भवतः। तस्य भवतः। ततो भवतः। तत्र भवतः। तस्मिन् भवति। ततो भवति। तत्र भवति। एवं दीर्घायुप्रभृतिषूदाहार्यम्।

**सर्वैक**।

**सर्वस्य**। प्राग्दिशीये उभस्योभयादेशो वक्तव्यः। उभाभ्याम्। उभयतः। उभयत्र। उभाभ्यां प्रकाराभ्याम्। उभयथा।

**इदमः**। लः प्रत्ययात् पूर्वस्योदात्तत्वार्थः। ननु च यथा इत इत्यत्र 'ऊडिदम्—' इति विभक्तिस्वरो भवति तथेहापि स्यात्। नैष दोषः। यतस्तसिलो लित्त्वस्य परितोभित इत्यत्र चरितार्थत्वादित इत्यादौ विभक्तिस्वरो भवति। र्हिलस्तु लित्करणमचरितार्थमिति विभक्तिस्वरेण न बाध्यते।

---

१. $B_1$ drops it. २. सर्वस्मिन् देशे $B_1$. ३. $B_1$ drops अस्मात्.
४. After it $B_1$ has—लः स्वरार्थः.

एतेतौ रथोः ॥५।३।४॥

इदमो रेफे[1] थकारे च[2] क्रमात् एत इत आदेशौ स्तः ॥ एतर्हि । काले किम् । इह देशे ।

अधुना ॥५।३।१७॥

इदमो रूपं निपात्यते ।

दानीं च ॥५।३।१८॥

इदमो दानीं प्रत्ययः स्यात्[3] काले ॥ इदानीम् ।

तदो दा च ॥५।३।१९॥

तदः सप्तम्यन्तात् दा स्याद्दानीं च काले ॥ तदा । तदानीम् ।[4] पुनर्दाविधेः फलं चिन्त्यम् ।

---

एत । रेफे अकार उच्चारणार्थः ।

अधुना । इदमोऽशभावो धुनेति च प्रत्ययो निपातनात् ।

दानीम् । इदानीमिति । इदम इश् ।

तदः । ननु 'सर्वैकान्यकिंयत्तदः काले दा' इत्यनेनैव दाविधेः सिद्धत्वात् पुनर्दाविधिर्व्यर्थ इत्याशङ्क्याह । पुनर्दाविधेरिति । फलं चिन्त्यमित्यनेन वैचित्र्यार्थव्यतिरिक्तं फलं नास्तीति सूचितम् । यदि सर्वथा फलाभाव एवाभिप्रेतः स्यात्तर्हि चिन्त्यमिति नावक्ष्यत् ।

---

१. रेफथकारयोः प्राग्दिशीये इदम एत इत एतौ स्तः $B_1$. २. च परे $D_1$. ३. $B_1$ drops it. ४. After it—च $D_4$.

**अनद्यतनेर्हिलन्यतरस्याम् ॥५।३।२१॥**

किमादेः सप्तम्यन्तादनद्यतनेर्हिल् स्याद्वा ॥ कर्हि[1] । यर्हि । तर्हि । पक्षे दादिः ।

**सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥५।३।२२॥**

एते सप्तम्यन्ताः कालविशेषे निपात्यन्ते ॥ समानेह्नि सद्यः । इत्यादिः । उभयद्युश्च[2] ।

**प्रकारवचने थाल् ॥५।३।२३॥**

सामान्यस्य भेदको विशेषः प्रकारः । तद्वृत्तेः किमादेस्थाल् स्यात् ॥ सर्वेण[3] प्रकारेण सर्वथा । यथा । तथा ।

---

**अनद्यतने** । कर्हीति । 'किमः कः' ।

**सद्यः** । **समानेह्नि सद्यः** इति । समानस्य सभावो द्यश्च प्रत्ययोऽहन्यभिधेये निपात्यते । आदिना पूर्वपूर्वतरयोः परभाव उदारी च प्रत्ययौ वर्षे वाच्ये । पूर्वस्मिन् वर्षे परुत् । पूर्वतरस्मिन् वर्षे परारि । इदमः समसण् प्रत्ययो वर्षे । अस्मिन् वर्षे ऐषमः । परस्मादेद्यविप्रत्ययोऽहनि वाच्ये । परस्मिन्नहनि परेद्यवि । इदमोऽश्भावो द्यश्चाहनि । अस्मिन्नहनि अद्य । पूर्वान्यन्यतरेतरापराधरोभयोत्तरेभ्योऽहनि वाच्ये एद्युस् प्रत्ययः । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । अन्यतरस्मिन्नहनि अन्यतरेद्युः । अपरस्मिन्नहनि अपरेद्युः । अधरस्मिन्नहनि अधरेद्युः । उभयोरह्नोरुभयेद्युः । उत्तरस्मिन्नहनि उत्तरेद्युः ।

**प्रकार** । 'किंसर्वनामबहुभ्यः' इति वर्तते । सप्तम्याः । काल इति च निवृत्तम् । **सामान्यस्येति** । यथा ब्राह्मण इति

---

१. $B_1$ drops कर्हि. २. $D_2$ drops च. ३. सर्वप्रकारेण $D_4$; Before it–पूर्वस्मिन् वर्षे परुत्, पूर्वतरस्मिन् वर्षे परारि । अस्मिन् वर्षे ऐषमः । पूर्वस्मिन्नहन्युभयोरह्नोः । तद्वृत्तेः किमादेस्थाल् स्यात् । $D_5$.

**इदमस्थमुः ॥५।३।२४॥**

थालोपवादः । इत्थम् ॥

**किमश्च ॥५।३।२५॥**

अस्मात् थमुर्न थाल् ॥ कथम् ।

---

सामान्यस्य विशेषा माठरादयः प्रकारास्तथेति भावः । ईदृशमेव लक्षणं जातीयरोपि । तथापि स स्वभावात् प्रकारवति वर्तते अयं तु प्रकारमात्रे । अतो विषयभेदात् सामान्यविहितोपि जातीयर् विशेषविहितेन थाला न बाध्यते । तेन किंजातीयस्तज्जातीय इत्यादि सिद्धम् ।

**इदम** । **इत्थमिति** । 'एतेतौ रथोः' इति इदादेशः ।

**किमः** । **कथमिति** । 'किमः कः' ।

इति प्राग्दिशीयाः प्रत्ययाः । विभक्तिसंज्ञायाः पूर्णोवधिः ।

---

१. थमुः स्यान्न $D_1$, $D_3$, $D_4$, $D_5$.

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देश-कालेष्वस्तातिः ॥५।३।२७॥**

सप्तम्याद्यन्तेभ्यो दिक्शब्देभ्यो दिगाद्यर्थेभ्यः स्वार्थे-स्तातिप्रत्ययः स्यात् ।

**पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥५।३।३९॥**

एभ्योस्तात्यर्थे असिप्रत्ययः स्यात् तद्योगे चैषां क्रमात् पुर् अध् अव् इत्यादेशाः स्युः ॥

**अस्ताति च ॥५।३।४०॥**

अस्तातौ परे पूर्वादीनां पुरादयः स्युः ॥ पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः । पुरस्तात् । अधः । अधस्तात् । अवः ।[2]

---

दिक्शब्देभ्य इत्यादि । दिशां वाचकाः शब्दा दिक्शब्दाः । ते यदा स्वभावाद् दिशि देशे काले च वर्तन्ते तदा दिगाद्यर्थाः ते च सप्तमीपञ्चमीप्रथमान्तास्तेभ्य इत्यर्थः । अत्र यथासंख्यं नेष्यते । दिक्शब्देभ्यः किम् । ऐन्द्र्यां दिशि वसति । सप्तमीपञ्चमीप्रथमाभ्य इति किम् । पूर्वं ग्रामं गतः । दिग्देशकालेभ्यः किम् । पूर्वस्मिन् गुरौ वसति ।

पूर्वाधर । एभ्य इति । पूर्वाधरावरेभ्यः । नन्वेषामिति व्यर्थं यतः पूर्वाधरावराणामिति येयं षष्ठी सैव प्रत्ययं विधाय स्थानषष्ठी विज्ञास्यते । संबन्धिभेदाच्च षष्ठ्यर्थे भेदः । सत्यम् । तथापि सुखप्रतिपत्त्यर्थमेषामित्युक्तम् ।

अस्ताति । ननु चासिना बाधितत्वात् पूर्वादिभ्योस्तातिना न भाव्यमेवेति कथमुच्यते अस्तातौ परे पूर्वादीनां पुरादय इति । नैष दोषः । इदमेव हि विधानं ज्ञापकमस्तातिरेभ्यो भवतीति । पुरः पुरस्तादित्यादि । वसत्यागतो रमणीयं वेति शेषः ।

---

१. दिगाद्यर्थैस्तातिप्रत्ययः स्यात् स्वार्थे । P. २. च परे P, C, $D_1$, $D_4$. After it—अवस्तात् । $B_2$, $D_1$, $D_2$.

**विभाषावरस्य ॥५।३।४१॥**

अवरस्यास्तातौ परे अवः स्याद्वा ॥ अवस्तात् । अवरस्तात् । परस्तात् । अपरस्तात् । एवं देशे काले च ।

**दक्षिणोत्तराभ्यामतसुच् ॥५।३।२८॥**

आभ्यामतसुच् स्यादुक्तेर्थे[1] । अस्तातेरपवादः ॥ दक्षिणतः । उत्तरतः ।

**विभाषा परावराभ्याम् ॥५।३।२९॥**

आभ्यामतसुच् स्याद्वा[2] ॥ परतः । अवरतः । पक्षे अस्तातिः ।

**अञ्चेर्लुक् ॥५।३।३०॥**

अञ्चत्यन्ताद् दिक्शब्दात् परस्यास्तातेर्लुक् स्यात् ॥

---

**विभाषा** । पूर्वेण नित्यः प्राप्तो विकल्प्यते । एवं **देशे काले चेति** । उदाहार्यमिति शेषः । पूर्वस्मिन् । पूर्वस्मात् । पूर्वो वा देशः । पुरः पुरस्ताद्वसति आगतो रम्यं वा । तथा पूर्वस्मिन् पूर्वस्मात् पूर्वो वा कालः । पुरः पुरस्ताद्वसत्यागतो रम्यं वा ।

**दक्षिण** । अकारो विशेषणार्थः षष्ठ्यतसर्थप्रत्ययेनेति । दक्षिणशब्दः काले नास्तीति दिग्देशवृत्तिरेव गृह्यते ।

**अञ्चेः** । दिक्शब्दाधिकारे केवलस्याञ्चेरदिक्शब्दत्वादञ्चेरित्ययमञ्चूत्तरपदस्य दिक्शब्दस्य निर्देशो विज्ञायत इत्यभिप्रेत्याह । **अञ्चत्यन्तादिति** । **प्रागिति** । प्रपूर्वादञ्चेः 'ऋत्विक्—' इत्यादिना क्विन् । अञ्चतेस्त्विष्ट इति ङीप् । 'अचः' इत्यल्लोपः । 'चौ' इति

---

१. $B_1$ drops स्यात्. २. स्यादुक्तेर्थे वा । $D_5$.

लुक् तद्धितलुकि । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च ।

**उपर्युपरिष्टात् ॥५।३।३१॥**

ऊर्ध्वशब्दस्यास्तात्यर्थे निपातावेतौ ।[१]

**पश्चात् ॥५।३।३२॥**

अवरस्यास्तात्यर्थे निपातः ।[२]

**उत्तराधरदक्षिणादातिः ॥५।३।३४॥**

एभ्योस्तात्यर्थे आतिः[३] । उत्तराद्वसति इत्यादि ।

---

दीर्घः । प्राचीति स्थिते अस्तातिस्तस्य लुक् । 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययलुक् । कुत्वम् । उदगिति । उदीच्यामुदीच्या उदीची वा दिक् । उत्पूर्वादञ्चतेः पूर्ववत् ङीपि[४] क्विनि च कृते उद ईत् इति कृते शेषं पूर्ववत् ।

**उपरि** । ऊर्ध्वस्योपभावः । रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते । उपरि उपरिष्टाद्वा वसति आगतो रमणीयं वा ।

**पश्चात्** । अवरस्येति । पश्चभाव आतिश्च प्रत्ययो निपात्यते । पश्चाद्वसतीत्यादि । दिक्पूर्वपदस्य चावरस्य पश्चभावः आतिश्च प्रत्ययो वाच्यः । दक्षिणावरायां दिशि वसतीति दक्षिणपश्चादुत्तरपश्चात् । अर्धोत्तरपदस्य दिक्पूर्वपदस्याप्यवरस्य पश्चभावो वाच्यः । दक्षिणपश्चार्धः । अर्धे च परे विना पूर्वपदेनावरस्य पश्चभावो वाच्यः । पश्चार्धः ।

**उत्तरा** । आदिना । उत्तरादागतः उत्तराद्रमणीयम् । अधराद्वसत्यागतो रमणीयं वा । दक्षिणाद्वसत्यागतो रमणीयं वा ।

---

१. After this $B_1$ has—उपरि । उपरिष्टात् ।. २. After it—ऊर्ध्वे वसति । उपरि वसति आगतो रमणीयं वा । $D_5$. ३. $B_1$, $D_4$ have स्यात् after it. ४. क्विनि ङीपि $Bc_1$, $Dc_3$, $Dc_4$.

**एनबन्यतरस्यामदूरेपञ्चम्याः ॥५।३।३५॥**

सप्तमीप्रथमान्तादुत्तराधरदक्षिणादेनब् वा स्याददूरे-[1] स्तात्यर्थे ॥ उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । अपञ्चम्याः किम् । उत्तरादागतः । दिक्-शब्दमात्रादेनबिति केचित् । पूर्वेण[2] ।

**दक्षिणादाच् ॥५।३।३६॥**

उक्तेर्थे[3] न तु पञ्चम्याः ॥ दक्षिणा ॥

**आहि च दूरे ॥५।३।३७॥**

दक्षिणाद्दूरेर्थे आहिः स्यात् चकारादाच् न[4] तु पञ्चम्याः । दक्षिणाहि[5] कैलासाद्वसति ।

**उत्तराच्च ॥५।३।३८॥**

आजाही[6] स्तः ॥ उत्तरा । उत्तराहि ॥

---

**एनप्** । विभक्तित्रये प्रकृते पञ्चमी पर्युदस्यते । तेनायं सप्तमीप्रथमान्तात् प्रत्ययो विज्ञायत इत्यभिप्रेत्याह । **सप्तमीप्रथमा-न्तादिति** । अदूरे चेदवधिमान् अवधेर्भवति । **दिक्शब्दमात्रादिति** । तथोक्तं **काशिकायां वृत्तौ** । केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति दिक्शब्दमात्रात् प्रत्ययं मन्यन्त इति । अपञ्चम्या इति निषेधः प्रागसेरनुवर्तते । असिप्रत्ययस्तु पञ्चम्यन्तादपि भवति ।

**दक्षिणात्** । अदूर इति न स्मर्यते । चकारोऽनूत्तरपदाजाहि-युक्त इति विशेषणार्थः ।[7]

**आहि च** । दूर इति किम् । दक्षिणतो वसति । ननु पञ्चम्या इति किम् । दक्षिणत आगतः ।

**उत्तरात्** । अस्तात्यर्थे । अपञ्चम्या इत्येव । उत्तरत आगतः ।

---

१. स्यान्न तु पञ्चम्या अदूरेस्तात्यर्थे $B_1$. २. पूर्वेण । परेण $B_2$. ३. अस्मादाच् स्यादुक्ते &c. $B_2$. ४. न तु पञ्चम्याः dropped $D_2$, $D_5$. ५. दक्षिणाहि वसन्ति चाण्डालाः । दक्षिणा दक्षिणाहि वा कैलासाद्वसन्ति चाण्डालाः । $B_2$; दक्षिणा दक्षिणाहि वा $D_4$; दक्षिणाहि वसन्ति चाण्डालाः । $D_5$. ६. अस्मादाजाही $B_2$. ७. After it—तस्य प्रत्ययस्वरेणैव सिद्धः $Bc_1$, $Dc_3$.

**संख्याया विधार्थे धा ॥५।३।४२॥**

क्रियाप्रकारवृत्तेः संख्यायाः स्वार्थे धा स्यात् ॥ चतुःप्रकारं चतुर्धा ।

**एकाद्धो ध्यमुञन्यतरस्याम् ॥५।३।४४॥**

एकशब्दात् धा इत्यस्य ध्यमुञादेशो वा स्यात् ॥ ऐकध्यम् । [२] एकधा ।

**द्वित्र्योश्च धमुञ् ॥५।३।४५॥**

द्वित्र्योर्धा इत्यस्य वा धमुञ् स्यात् ।[४] द्वैधम् । द्विधा । त्रैधम् । त्रिधा ।

---

**संख्यायाः** । अत्र विधा इति प्रकार उच्यते । स च द्रव्य-गुणविषयोऽप्यस्तीति । तस्य व्यावृत्तये आह । **क्रियाप्रकारवृत्तेरिति** । एतच्चार्थग्रहणाल्लभ्यते । तद्धि प्रकारविशेषग्रहणार्थमेवान्यथा विधा-विल्येव ब्रूयात् । एवं चेत् नवधा द्रव्यमित्यादयः प्रयोगा न स्युः । नैष दोषः । अत्रापि क्रियाध्याहार्या नवधा द्रव्यमुपदिश्यत इति । स्पष्टत्वात् त्यक्तमेकम् । 'अधिकरणविचाले च' ॥५।३।४३॥ द्रव्य-संख्यान्तरापादने च संख्याया धाप्रत्ययः स्यात् । एकं राशिं पञ्चधा कुरुते । अनेकमेकधा कुरुते । एकधाप्रकरणादेव लब्धेऽपि पुनर्धा-ग्रहणं विधार्थेऽपि विहितस्य धा यथा स्यात् । अन्यथानन्तरस्यैव स्यात् ।

**द्वित्र्योः** । चकारो विकल्पानुकर्षणार्थ इत्यभिप्रेत्याह । वा धमुञ् स्यादिति । धमुञन्तात् स्वार्थे डदर्शनम् । द्वैधानि संश्रयन्ते । त्रैधानि संश्रयन्ते ।

---

१. C has the Sūtra and the Vṛitti after एधाच्च. २. Before it—एकप्रकारः । $D_5$. ३. स्यात् dropped $D_3$, P, $B_1$. ४. After it—चकाराद्विकल्पानुकर्षः $D_3$, $B_1$, $B_2$. ५. तद्धितप्रकार° $Bc_1$; तद्धितत्प्रकार° $Dc_3$, $Dc_4$. ६. अपि dropped $Dc_3$, $Dc_4$. ७. विकल्पत इत्यस्या° $Dc_3$.

**एधाच्च ॥५।३।४६॥**

द्वित्र्योर्धा इत्यस्य एधाच्[1] वा स्यात् ॥ द्वेधा । त्रेधा । षष उत्वमिति उत्वष्टुत्वे वा । षोढा । षड्धा ।

**याप्ये पाशप् ॥५।३।४७॥**

कुत्सितेर्थे[2] प्रातिपदिकात् पाशप् स्यात् ॥ कुत्सितो भिषक् भिषक्पाशः ।

**सोपदादौ ॥८।३।३८॥**

अपदाद्योः कुप्वोः परतो विसर्गस्य[3] सः स्यात् । पाशकल्पकाम्येषु वाच्यः ॥* पयस्पाशम् । पयस्कल्पम्[4] । पदादौ[5] तु पयः पिबति । अनव्ययस्य वाच्यः ॥* नेह । प्रातस्पाशम् ।

---

एधाच् । द्वित्र्योः संबन्धिना धाप्रत्ययस्यैधाजादेशो वा स्यादित्यर्थः ।

याप्ये । कुत्सितेर्थे इति । वर्तमानादिति शेषः । यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तत्कुत्सायां प्रत्ययः । तेन दुःशीलो वैयाकरण इत्यत्र वैयाकरणत्वस्य कुत्साभावान्न भवति ।

सोप । 'कुप्वोः ≍क ≍पौ च' इत्यस्यापवादः । अपदादाविति व्यत्ययेन द्विवचनस्थाने[6] एकवचनमित्यभिप्रेत्याह । **अपदाद्योरिति** । **पाशकल्पकाम्येष्विति**[7] । संभवप्रदर्शनं न परिगणनमित्यभिप्रेत्योदाहृतम् । पयः पिबतीति काम्ये रोरेव विसर्गस्य स इति वाच्यम् । तेनेह न ।

---

१. वा एधाच् $D_4$. २. कुत्सितार्थे C. ३. विसर्जनीयस्य $D_5$. ४. P, C and $D_1$, $D_2$, $D_4$ drop पयस्कल्पम्. ५. Before it—सुपयस्कः । पयस्काम्यति यथासंभवम् $B_2$. ६. द्विवचनस्य स्थाने $Dc_4$, $Dc_3$. ७. °कल्पक° $Dc_3$, $Bc_1$.

इणः षः ॥८।३।३९॥

इणः परस्य विसर्गस्य[1] षः स्यात् कुप्वोः[2] ॥ सर्पिष्पाशम् ।

पूरणाद्भागे तीयादन् ॥५।३।४८॥

पूरणात् तीयादन् स्याद्भागे ॥ स्वरे भेदः । द्वितीयो भागो द्वितीयः[3] । तृतीयः[4] ।

---

गीः काम्यति ।[5] उपध्मानीयस्य च कवर्गे परे सकार आदेशो भवतीति[6] वक्तव्यम् । किं प्रयोजनम् । उब्जिरुँपध्मानीयोपधः पठ्यत इत्यत्र दर्शने अभ्युद्गः समुद्ग इति यथा स्यात् ।

इणः । पूर्वेण संप्राप्ते वचनम् । अपदादावित्येव । अग्निः करोति । वायुः पिबति । कुप्वोरित्येव । सर्पिस्तत्र ।

पूरणात् । पूरणाधिकारे विहितत्वात् पूरणार्थाभिधायित्वाद्व[8] पूरणस्तीयः । पूरणग्रहणमुत्तरार्थम् । न ह्यपूरणस्तीयोस्ति । ननु मुख-पार्श्वतसोरीयः । मुखतीयः । पार्श्वतीय इत्यपूरणोपि तीयोस्ति । मैवं वोचः । अर्थवद्ग्रहणपरिभाषया अर्थवानिह तीयो गृह्यते । न च मुख-तीयादिरर्थवान् । अतः पूरणाग्रहणेपि तस्य ग्रहणं न । ननु व्यर्थमिदं सूत्रम् । यतोकृतेप्यनि तदेव रूपं कृतेपि तदेवेत्याशङ्क्याह[9] । स्वरे भेद इति । भागेर्थे अनि सति 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं स्यात् । ततोत्र स्वरकृतो भेद इत्यर्थः ।

---

१. विसर्जनीयस्य $D_5$. २. After it—परयोः $D_5$. ३. $D_1$ drops it. ४. $D_2$, $D_5$ drop it. ५. इति after it $Dc_2$, $Dc_3$. ६. इति वक्तव्यम् dropped $Bc_1$, $Dc_4$. ७. °रयमु° $Dc_2$. ८. परणार्थय° $Dc_3$. ९. रूपमित्याशङ्क्याह । $Dc_2$.

**प्रागेकादशभ्योच्छन्दसि ॥५।३।४९॥**

पूरणाद्भागेन् स्यात् प्रागेकादशभ्यो न तु छन्दसि ॥ [1]चतुर्थः । [2]दशमः ॥[3]

**षष्ठाष्टमाभ्यां ञ च ॥५।३।५०॥**

[4]चकारादन् । [5]षाष्ठः । [6]षष्ठः । आष्टमः । [7]अष्टमो [8]वा भागः ॥[9]

**भूतपूर्वे चरट् ॥५।३।५३॥**

भूतपूर्व आढ्यः आढ्यचरः ।

---

**प्राक्** । प्राक् किम् । एकादशः । अच्छन्दसि किम् । पञ्चममिन्द्रियमस्यापाक्रामत् ।

**षष्ठ** । अञोभाभ्यामुभौ स्तो न तु यथासंख्येन । यथासंख्ये हि षष्ठादन् स्यात् स च पूर्वेणैव सिद्ध इति षष्ठग्रहो व्यर्थः स्यात् । स्पष्टत्वात् त्यक्ते द्वे । 'मानपश्वङ्गयोः कन्लुकौ च' ॥५।३।५१॥ षष्ठाष्टमाभ्यां भागे यथासंख्यं कन्लुकौ स्तो मानपश्वङ्गयोर्वाच्ययोः । षष्ठको भागो मानं चेत् अष्टमो भागः पश्वङ्गं चेत् । अस्यानो वा लुक् । चकाराद्यथाप्राप्तिम् । षाष्ठः । षष्ठः । आष्टमः । अष्टमः । 'एकादाकिनिच्चासहाये' ॥ ५।३।५२॥ एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् । चकारात् कन्-लुकौ च । एकाकी । एककः । एकः । असहायग्रहणं संख्याशब्द-निरासार्थम् । तदुपादाने हि द्विबह्वोर्न स्यात् । एकाकिनौ । एकाकिनः ।

**भूतपूर्वे** । भूतः पूर्वमिति विगृह्य सुप् सुपेति समासः । भूतपूर्व-शब्दोतिक्रान्तवाची । भूतपूर्वे विशिष्टेर्थे वर्तमानात् स्वार्थे चरट् प्रत्ययः स्यादित्यर्थः । टो ङीबर्थः । आढ्यचरी ।

---

१. चतुर्थो भागश्चतुर्थः $B_1$. २. पञ्चमः C; नवमः $B_1$, $D_2$; नवमः । दशमः $B_2$, $D_5$. ३. After it—अत्रापि स्वरे भेदः P. ४. चादन् भागे $B_1$. ५. षष्ठो भागः षाष्ठः $B_1$. ६. Dropped $D_1$. ७. अष्टमो भागोऽष्ट आष्टमः $B_1$. ८. Dropped C. ९. After it—स्वरे विशेषः C. १०. °प्राप्तं च $Bc_1$.

**षष्ठ्या रूप्य च ॥५।३।५४॥**

षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च ॥ कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः । रूप्ये न पुंवदिति केचित् । शुभ्रारूप्यः । कृष्णचरः ।

**अतिशायने तमबिष्ठनौ ॥५।३।५५॥**

प्रकर्षेऽर्थे एतौ स्तः । टिलोपः । अयमेषामतिशयेन लघुर्लघुतमः लघिष्ठः ।

---

**षष्ठ्याः** । पूर्वसूत्रे भूतपूर्वग्रहणं प्रकृत्यर्थविशेषणम् । इह तु षष्ठ्या ग्रहणात् प्रत्ययार्थविशेषणमित्यभिप्रेत्याह । **षष्ठ्यन्तात् भूतपूर्वेऽर्थे** इति । **रूप्ये न पुंवदिति केचिदिति** । 'तसिलादिष्वकृत्वसुचः' इत्यत्र परिग्रहणं कार्यमिति मन्वाना **भाष्यकारादयः** । ते हि परिगणितेषु रूप्यं न पठितवन्तः ।

**अतिशायने** । अतिशयनमतिशायनम् । निपाताद्दीर्घः । अतिशायनशब्दः प्रकर्षवाचीत्यभिप्रेत्याह । **प्रकर्षेऽर्थे** इति । एतच्च प्रकृत्यर्थविशेषणम् । प्रकर्षे वर्तमानात् प्रातिपदिकादित्यर्थः । प्रकृत्यर्थविशेषणस्य च स्वार्थिकाः प्रत्ययाः सर्वत्र द्योतका भवन्ति । **टिलोप** इति । 'टेः' इति सूत्रेण । यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपर आतिशायिकः प्रत्ययो भवत्येव । देवो वः सविता प्रार्थयतु श्रेष्ठतमाय कर्मणे । युधिष्ठिरः श्रेष्ठतमः कुरूणाम् ।

---

१. Before it—कृष्णारूप्यः $B_2$. २. For प्रकर्षेऽर्थे $B_1$ has बहूनामेकस्य प्रकर्षे. ३. टेर्लोपः C. ४. मन्वाना dropped $Dc_2$. ५. प्रकर्षेऽर्थे $Dc_4$, $Dc_3$.

**तिङश्च ॥५।३।५६॥**

तिङन्तात् प्रकर्षेऽर्थे तमप् स्यात् ॥[1]

**द्विवचनविभज्योपपदे तरबीयसुनौ ॥५।३।५७॥**

द्वयोरेकस्यातिशये विभज्ये चोपपदे सुप्तिङन्तादेतौ स्तः प्रकर्षे । पूर्वयोरपवादः ॥ अयमनयोरतिशयेन लघुः लघुतरः । लघीयान् । विभज्योपपदे[2] । उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः ।

---

तिङः । 'ङ्याप्प्रातिपदिकात्' इत्यधिकारात् तिङो न प्राप्नोतीति वचनम् । ननु तमबिष्ठनाविति उभयोरपि प्रकृतत्वात् कथं तमप् स्यादिति तमबेवोच्यते न इष्ठन्नपीति चेदुच्यते । अजादी गुणवचनादेवेति इष्ठनो गुणवचने नियमितत्वात् तिङन्तात्तस्याप्राप्तेः । उदाहरणं तु 'किमेत्तिङव्यय—' इत्यत्र सूत्रे कथयिष्यति ।

द्विवचन । द्वयोरर्थयोर्वचनं द्विवचनं द्व्यर्थ इति यावत् । अत एवाह । द्वयोरेकस्यातिशये इति । विभक्तव्यो विभज्यः पृथक्कर्तव्य इत्यर्थः । निपातनाद्यत् । अत्राप्यतिशये द्योत्ये इत्येव । यथासंख्यं नेष्यते । उदीच्याः प्राच्येभ्यः पटुतरा इति । 'पञ्चमी विभक्ते' इति पञ्चमी । प्राच्येभ्य इत्येतद्विभज्यमुपपदम् । प्राच्या हि उदीच्येभ्योतिशय्यमाना विभज्यन्ते उदीच्यास्त्वतिशायितारस्तेभ्यः प्रत्ययविधिः ।

---

१. $B_1$, $B_2$, $D_6$ have after it—पचतितमाम् and C has पचतितमः । जल्पतितमः; $D_2$ has पिबतितमाम्. २. $B_1$ has किम् after it; $B_2$ has तु after it. ३. इति for स्यादिति $Dc_2$. ४. अपि dropped $Dc_2$.

**अजादी गुणवचनादेव ॥५।३।५८॥**

इष्ठन्नीयसुनौ गुणवचनादेव स्तः ॥ प्रथिष्ठः । प्रथीयान् । नेह । पाचकतमः । पाचकतरः[1] ॥

**तरप्तमपौ घः ॥१।१।२२॥**

एतौ घसंज्ञौ स्तः ॥

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥५।४।११॥**

किम एदन्तात् तिङोऽव्ययाच्च यो घस्तदन्तादाम् स्यान्न तु द्रव्यप्रकर्षे ॥ किंतराम् । प्राह्णेतराम् । पचतितराम् ।[2] उच्चैस्तराम् । [3]एवं किंतमाम् । इत्यादि । स्वरादित्वादव्ययत्वम्[4] । द्रव्यप्रकर्षे तु । उच्चैस्तरः तरुः[5] ।

---

**अजादी** । एवकार इष्टतोवधारणार्थः । प्रत्ययनियमो न प्रकृतिनियम इति तेन गुणवचनादनजादयोपि भवन्ति ।

**तरप्** । यद्यपि तरतेः 'ऋदोरप्' इत्यपि गुणे च कृते भूतपूर्वेण पकारेण तरबिति रूपं स्यात्तथापि तमपा साहचर्यात् तरबिति प्रत्ययस्यैव ग्रहणम् ।

**किमेत्** । उदित्करणं सामान्यग्रहणविघातार्थम् । अन्यथा आम्ग्रहणेनास्यापि ग्रहणात् किंतरामित्यादौ यस्येति लोपं बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुट् प्रसज्येत । **न तु द्रव्यप्रकर्षे** इति । यद्यपि द्रव्यस्य स्वतः प्रकर्षो नास्ति तथापि क्रियागुणस्थः प्रकर्षो यदा द्रव्ये उपचर्यते तदायं निषेधः ।

---

१. Before it—पाठकतरः । पाठकतमः $D_4$. २. After it—पचतितमाम् । पूर्वाह्णेतराम् । पूर्वाह्णेतमाम् । अतितराम् । अतितमाम् । उच्चैस्तराम् । उच्चैस्तमाम् । स्वरादित्वादव्ययत्वम् । $B_2$, $D_5$ ; $D_2$ has एतितराम् । एतितमाम् for पचतितराम्. ३. एवं किंतमाम् । इत्यादि dropped $D_2$. ४. °दव्ययम् $D_1$. ५. After it—परत्वात् $Dc_3$.

**तुश्छन्दसि ॥५।३।५९॥**

तृजन्तात्[1] प्रकर्षेर्थे इष्ठेयसू[2] स्तः छन्दसि । भाषायामपीति केचित् ।[3]

**तुरिष्ठेमेयस्सु ॥६।४।१५४॥**

तृशब्दस्य लोपः स्यादिष्ठेमेयस्सु ॥ करिष्ठः ।[4] दोहीयसी धेनुः ।

**प्रशस्यस्य श्रः ॥५।३।६०॥**

अस्य श्रादेशः स्यादजाद्योः[5][6] ॥

**प्रकृत्यैकाच् ॥६।४।१६३॥**

इष्ठादावेकाच् प्रकृत्या स्यात् ॥ श्रेष्ठः । श्रेयान् ।

---

**तुः** । तुरिति तृन्तृचोः सामान्यग्रहणमित्यभिप्रेत्याह । तृन्तृजन्तादिति ।

**तुरिष्ठ** । अन्त्यस्य हि 'टेः' इत्येव लोपे सिद्धे[7] सर्वस्य तृशब्दस्य लोपार्थं वचनम् ।

**प्रशस्य** । अजादी इति प्रथमान्तमप्यनुवर्तमानमर्थात् सप्तम्यन्तं विपरिणम्यते इत्यभिप्रेत्याह । अजाद्योरिति । अगुणवचनादपि प्रशस्यशब्दादस्मादेवादेशविधेर्ज्ञापकादजाद्योर्विधिः । एवमुत्तरत्रापि ।

**प्रकृत्या** । एकाच्[8] किम् । पटिष्ठः । प्रकृत्याके राजन्यमनुष्य-युवानः । अके प्रत्यये राजन्यमनुष्ययुवानः प्रकृत्या स्युः । राजन्यकम् । मानुष्यकम् । प्रकृतिभावात् 'आपत्यस्य—' इति यलोपो न । यौवनकम् । मनोज्ञादित्वाद्वुञि 'नस्तद्धिते' इति टिलोपो न ।

---

१. तृन् तृजन्तात् P, C, Com. २. इष्ठेयसौ $B_2$ ; इष्ठेयसुनौ $D_4$, $D_5$. ३. After it—परतः $B_2$, $D_5$. ४. $B_1$ has before it—अतिशयेन दोग्धा दोहीयान्. ५. After it—परतः $B_2$. ६. $B_1$ has before it—तेन 'यस्येति च' इति नावर्णलोपः । अतिशयेन प्रशस्यः. ७. सिद्धे लोपे $Bc_1$, $Dc_4$. ८. एकाचः $Dc_4$ ; एकाजिति $Dc_3$.

ज्य च ॥५।३।६१॥

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः ॥ ज्येष्ठः ।

ज्यादादीयसः ॥६।४।१६०॥

ज्यात्परस्येयस आकारादेशः स्यात् ॥ 'आदेः परस्य' । ज्यायान् ।

वृद्धस्य च ॥५।३।६२॥

वृद्धस्यापि ज्यादेशः स्यादिष्ठेयसोः ॥ अतिशयेन वृद्धो ज्येष्ठः । ज्यायान् ॥

---

ज्य च । योगविभाग उत्तरत्र ज्य इत्यस्यैवानुवृत्त्यर्थः ।

ज्यात् । ननु च 'बहोर्लोपो भू च बहोः' इत्यतो लोपोनुवर्तते ततश्च 'आदेः परस्य' इति इकारस्य लोपे कृते अकृत्सार्वधातुकयोर्दीर्घत्वे सति ज्यायानित्येतत् सिध्यते तत् किमर्थमादित्युच्यत इति चेदुच्यते । लोपस्येष्ठस्य यिट् चेति यिटा व्यवहितत्वादादित्युच्यते । ननु तत्र लोपोप्यनुवर्तत इत्यपि पक्षोस्ति तत् कथं तस्य यिटा व्यवधानम् । एवं तर्हि अङ्गवृत्तेः पुनर्वृत्तावविधिर्निष्ठितस्य इत्येतस्याः परिभाषाया ज्ञापनार्थमात्वं विधीयते ।

वृद्धस्य । वृद्धस्येति स्वरूपग्रहणम् ।

---

१. $B_1$ drops स्यात्. २. स्यात् dropped $B_2$, $D_2$. ३. Dropped $Dc_3$. ४. उच्यते dropped $Dc_2$.

**अन्तिकबाढयोर्नेदसाधौ ॥५।३।६३॥**

एतयोः क्रमादेतावादेशौ[1] स्त इष्ठेयसोः ॥ नेदिष्ठः[2] । नेदीयान् । साधिष्ठः[3] । साधीयान् ॥

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥६।४।१५६॥**

एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठेमेयस्सु । स्थविष्ठः[4] । दविष्ठः[5] । यविष्ठः[6] । ह्रसिष्ठः[7] । क्षेपिष्ठः[8] । क्षोदिष्ठः[9] । एवमीयस्[10] ॥[11] ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात्[12] ह्रसिमा । क्षेपिमा । क्षोदिमा ॥

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः ॥६।४।१५७॥**

प्रियादीनां क्रमात् प्रादय आदेशाः स्युरिष्ठेमेयस्सु ।

---

**अन्तिक** । स्थान्यादेशयोर्यथासंख्यमिष्यते । प्रत्यययोस्तु नेष्यते इति चेतसि कृत्वाह । **एतयोः क्रमादित्यादि** ।

**स्थूल** । परग्रहणं पूर्वस्य यणादेर्लोपो मा भूदिति । यविष्ठः । ह्रसिष्ठः । परस्मिन् लुप्ते सामर्थ्यात् पूर्वस्यैव गुणे सिद्धे पूर्वग्रहणं विस्पष्टार्थम् ।

**प्रिय** । **प्रियोरुबहुलेति** । तेनान्येषामिमनिच् नास्तीति नोदाहार्य इति भावः ।

---

१. आदेशौ dropped $D_5$. २. Before it—अतिशयेन अन्तिकः $D_3$, $B_1$. ३. Before it—अतिशयेन बाढः $D_3$, $B_1$. ४. Before it—अतिशयेन स्थूलः । $D_3$, $D_5$, $B_1$. ५. Before it—अतिशयेन दूरः $D_3$, $B_1$. ६. Before it—अतिशयेन युवा $D_3$, $B_1$. ७. Before it—अतिशयेन ह्रस्वः $D_3$, $B_1$, $B_2$. ८. Before it—अतिशयेन क्षिप्रः $D_3$, $B_1$. ९. अतिशयेन क्षुद्रः क्षोदिष्ठः $D_1$, $D_2$, $D_4$. १०. °मीयसि $B_1$. ११. After it—स्थवीयान् $D_5$. १२. पृथ्वादिमनिच् $B_1$, $D_2$.

[1]प्रेष्ठः । [2]स्थेष्ठः । स्फेष्ठः । [3]वरिष्ठः । [4]बंहिष्ठः । [5]गरिष्ठः । [6]वर्षिष्ठः । [7]त्रपिष्ठः । [8]द्राघिष्ठः । [9]वृन्दिष्ठः । एवमीयसि[10] । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्[11][12] प्रेमा इत्यादि ज्ञेयम् ।

**बहोर्लोपो भू च बहोः ॥६।४।१५८॥**

बहोः परयोरिष्ठमेयसोरादेर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् ॥

**इष्ठस्य यिट् च ॥६।४।१५९॥**

[13]बहोर्भूरादेशः ।[14] इष्ठस्यादेर्लोपस्तस्य यिडागमश्च [15]स्यात् ॥ भूयिष्ठः ।

---

बहोः । पूर्वं बहोरिति पदं पञ्चम्यन्तमुत्तरत्र[16] षष्ठ्यन्तमित्यभिप्रेत्याह । बहोः परयोरिति[17] । पुनर्बहुग्रहणं न स्थानिवत्त्वप्रतिपत्त्यर्थम् । अन्यथा प्रत्ययानामेव भूभावः स्यात् । भूमेति । पृथ्वादित्वादिमनिच् ।

इष्ठस्य । चकारो भू च बहोरित्यस्यानुकर्षणार्थ इत्यभिप्रेत्याह । बहोर्भूरादेश इति । अत्र लोप इत्यनुवर्तत इत्यभिप्रेत्याह । इष्ठस्यादेर्लोप इति । तस्य यिडागमश्चेति । इष्ठस्येत्यर्थः ।

---

१. $B_1$ has before it—अतिशयेन प्रियः २. Before it—अतिशयेन स्थिरः $B_1$. ३. Before it—अतिशयेन उरुः $B_1$. ४. Before it—अतिशयेन बहुलः $B_1$. ५. Before it—अतिशयेन गुरुः $B_1$. ६. Before it—अतिशयेन वृद्धः $B_1$. ७. Before it—अतिशयेन तृप्रः $B_1$. ८. Before it—अतिशयेन दीर्घः $B_1$. ९. Before it—अतिशयेन वृन्दारकः $B_1$. १०. °मीयसि $B_1$, $D_4$. ११. पृथ्वादि for पृथ्वा°…ज्ञेयम् $B_1$. १२. °त्वादिमन् $B_2$. १३. बहोर्भूरादेशः dropped P, $D_2$, $D_3$, $D_5$, $B_1$, C. १४. After it—स्यात् $D_4$. १५. Dropped $B_1$. १६. °मुत्तरं $Bc_1$, $Dc_3$, $Dc_4$. १७. °रित्यादि $Bc_1$, $Dc_3$, $Dc_4$.

**युवाल्पयोः कनन्यतरस्याम् ॥५।३।६४॥**

एतयोः कनादेशो वा स्यादिष्ठेयसोः[1] ॥ कनिष्ठः[2] । कनीयान् । पक्षे यविष्ठः । अल्पिष्ठः । इत्यादि ।

**विन्मतोर्लुक् ॥५।३।६५॥**

विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् ।

---

ननु **काशिकावृत्तिकृता** यिडागमो लोपापवाद इकारश्चोच्चारणार्थ इति व्याख्यातम् । तथा हि लोपापवादो यिडागमस्तस्मिन्निकार उच्चारणार्थ इति । ततस्तेन विरुद्धमिदं व्याख्यानमिति चेन्नैष दोषः । यत उभयस्यापि व्याख्यानस्य **महाभाष्यकारेणा-**ङ्गीकारात् । तथोक्तम् । किं पुनरयं यिशब्द आहोस्वित् यकारः[3] । किं चातः । यदि तावल्लोपोप्यनुवर्तते ततो यिशब्दोप्यनिवृत्तस्ततो यकार इति ।

**युवा** । युवेति स्वरूपग्रहणमिष्यते न जीवद्वंश्यस्य ।

**विन्मतोः** । मतुपा साहचर्यात् मत्वर्थ एव विन् गृह्यते 'तपःसहस्राभ्यां विनीनी' 'अस्मायामेधास्रजो विनिः' इति च । न त्वौणादिकः 'वृदृभ्यां विन्' इति । अस्मादेव लुग्वचनाज् ज्ञायते विन्मतुबन्तादजादी स्त इति ।

---

१, $B_1$ drops स्यात्. २. अतिशयेन युवाल्पो वा before it $D_3$, C, $B_1$.
३. यदीकारः $Dc_4$.

## प्रशंसायां रूपप् ॥५।३।६६॥

प्रशस्तः पटुः पटुरूपः । तिङोनुवृत्तेस्तिङन्तादपि । पचतिरूपम् । क्लीबत्वं लोकात् ।

---

**प्रशंसायाम्** । प्रशंसा स्तुतिः । प्रकृत्यर्थविशेषणं चैतत् । प्रशंसाविशिष्टेर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् स्यादित्यर्थः । प्रकृत्यर्थस्य परिपूर्णत्वे प्रशंसा स्यात् । ततो वृषलरूपः चोररूप इत्याद्यपि सिध्यति । वृषलशब्दस्य शूद्रो वाच्यः । स यदा पलाण्ड्वादिकमपि साधुजनगर्हितं भक्षयति तदा तस्य परिपूर्णं शूद्रत्वं स्यात् । शूद्रः सर्वाशी सर्वविक्रयीति कृत्वा । चौरस्यापि सुगुप्रवस्त्वपहरणेन परिपूर्णता स्यात् । **पचतिरूपमिति** । पचतोरूपं पचन्तिरूपमित्याद्यपि ज्ञेयम् । ननु च स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्त इति पचतोरूपं पचन्तिरूपमित्यत्र द्विवचनबहुवचनाभ्यां भाव्यम् । नैष दोषः । आख्यातस्य हि क्रिया प्राधान्येन वाच्या साधनं त्वप्रधानं यच्च प्रधानं प्रकृत्यर्थस्तस्यैव लिङ्गवचने स्वार्थिकैरनुवर्त्येते । क्रिया चैकैवेति रूपप्प्रत्ययान्तादाख्याताद् द्विवचनबहुवचने न स्तः । एवं तर्हि क्लीबत्वमपि न स्यात् । क्रियाया अलिङ्गत्वादित्याशङ्क्याह । **क्लीबत्वमिति** । अत्रैव हेतुमाह । **लोकादिति** । यदि हि एका क्रिया आख्याताद् द्विवचनबहुवचने न सिध्यते एव । नैष दोषः । साधनमनेकं तदपि वाच्यं तदाश्रये द्विवचनबहुवचने भवतः । रूपप्प्रत्ययादपि तर्हि स्याताम् । न स्याताम् । तिङन्तेनोक्तत्वात् । एकवचनं तु स्यात् तस्यौत्सर्गिकत्वात् । एकवचनमुत्सर्गः करिष्यत इति वचनात् ।

---

१. Before it—प्रकृत्यर्थविशेषणं चैतत् । प्रशंसाविशिष्टेर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् स्यादित्यर्थः । प्रशस्तो वैयाकरणः वैयाकरणरूपः । $D_6$.
२. प्रधानं वाच्यं $Dc_3$, $Dc_4$. ३. भविष्यतः $Dc_3$. ४. प्रत्ययान्तादपि $Bc_1$.
५. तिङन्तेनोक्तत्वान्न । $Bc_1$.

**ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥५।३।६७॥**

सुप्तिङन्तादीषदूनतायामेते स्युः ॥ ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । यजुष्कल्पम्[1] । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ।[2]

**विभाषा सुपो बहुच् पुरस्तात्तु[3] ॥५।३।६८॥**

सुबन्तादुक्तेर्थे बहुच् वा[4] स्यात् स च [5]प्रागेव ॥ ईषदूनः पटुः बहुपटुः । पटुकल्पः । सुपः किम् । यजतिकल्पम् ।

---

ईषत् । संपूर्णता पदार्थानां समाप्तिः स्तोकेनासंपूर्णता ईषदसमाप्तिरित्यभिप्रेत्याह । ईषदूनतायामिति । प्रकृत्यर्थविशेषणं चैतत् । ईषन्न्यूनतायां वर्तमानात् सुप्तिङन्तात् स्वार्थे एते कल्पवादयः प्रत्ययाः स्युरित्यर्थः । **विद्वत्कल्पमिति** । पदत्वात् 'वसुस्रंसुध्वंसु–' इति दत्वम् । **यशस्कल्पमिति** । 'सोपदादौ' इति विसर्गस्य सः । **यजुष्कल्पमिति** । 'इणः षः' इति षः । कल्पपः पकारोनुदात्तार्थः । देशीयरो रेफः 'उपोत्तमं रिति' इति उपोत्तमस्योदात्तार्थः ।

**विभाषा** । विभाषाशब्देन बहुच् संबध्यते न पुरस्ताच्छब्दः । तुशब्देन योगात् । तेन पूर्वत्वं नित्यमेव बहुजेव विभाषा स्यादिति सर्वं चेतसि कृत्वाह । **बहुच् वा स्यात् स च प्रागेवेति** । चोन्तोदात्तार्थः । तच्चान्तोदात्तत्वं सप्रकृतेः प्रत्ययस्य चित्तः[6] सप्रकृतेर्बहुजकजर्थमिति वचनात् ।

---

१. $B_1$ drops यजुष्कल्पम्; $D_5$ drops it and has in its place—सोपदादाविति विसर्गस्य सः । $D_5$. २. After it—यजुष्कल्पम् । $D_5$. ३. तु dropped $D_1$, $D_2$, $D_4$, $D_5$, $B_2$. ४. स्याद्वा $B_2$, $D_5$. ५. प्रकृतेः प्रागेव $B_1$. ६. चित्तः dropped $Bc_1$, $Dc_2$, $Dc_3$.

**प्रकारवचने जातीयर् ॥५।३।६९॥**

पैटुप्रकारः पटुजातीयः । प्रकारवति वायम् । थाल् तु प्रकारमात्रे ।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥६।३।४३॥**

ङ्यन्तस्यानेकाचो ह्रस्वः स्याद् घादौ परे ॥ ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । इत्यादि । उक्तपुंस्कादेव । नेह । आमलकीतरा ।

---

**प्रकार** । रेफः उपोत्तमस्योदात्तार्थः । सामान्यस्य भेदको विशेषः प्रकारः । थाल्जातीयरोर्विषयभेदमाह । **प्रकारवतीत्यादि** । विषयभेदे सति विशेषविहितेनापि थाला जातीयरो बाधो न तेन थाल्प्रत्ययान्ताच्च जातीयर् सिध्येत् तथा जातीय इति ।

**घरूप** । घ रूप कल्पाः प्रत्ययाः । चेलडादीनि उत्तरपदानि । चेलडिति पचादौ पठ्यते । ब्रुव इति पचाद्यजन्ते वच्यादेशो गुणश्च निपातनात् । ब्राह्मणितरेत्यादि । घादिषु पुंवद्भावाद् ह्रस्वत्वं भवति विप्रतिषेधेनेति ह्रस्व एव । इत्यादीत्यादिना ब्राह्मणिकल्पा । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । चेलडादीनां कुत्सितत्वात् 'कुत्सितानि कुत्सनैः' इति समासः । ब्राह्मणिमता । ब्राह्मणिहता । अत्रोभयत्र 'विशेषणं विशेष्येण' इति समासः । ङ्य इति किम् । दत्तातरा । अनेकाचः किम् । नद्याः शेषस्यान्यतरस्यामिति वक्ष्यति । **आमलकीतरेति** । आमलकीशब्दो वृक्षे नित्यस्त्रीलिङ्गः फले नपुंसकलिङ्ग इत्यभाषितपुंस्कः । गौरादित्वात् ङीष् ।

---

१. जातीयच् $D_1$. २. $B_1$ has बहुप्रकारो बहुजातीयः before it. ३. चायम् C, $D_2$, $D_4$. ४. Dropped $D_1$ ; न तु प्रकारमात्रे $D_5$. ५. ह्रस्वो वा $D_5$. ६. $B_1$ drops it. ७. Dropped $D_5$. ८. $B_1$ drops it. ९. After it—गार्गिरूपा । गार्गिकल्पा । कुत्सिता ब्राह्मणी च ब्राह्मणिचेला । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । ब्राह्मणिमता । ब्राह्मणिहता । इत्यादि $B_2$. १०. फले तु $Bc_1$, $Dc_3$, $Dc_4$.

**नद्याः शेषस्यान्यतरस्याम् ॥६।३।४४॥**

अङ्‌व्यन्तनद्या ङ्‌यन्तस्यैकाचो ह्रस्वो वा स्याद्[1] घादौ[2] परे[3] ॥ वामोरुतरा । वामोरूतरा[4] । वामोरुतमा[5] । वामोरूतमा[6] । स्त्रितरा । स्त्रीतरा[6] । एवं तमरूपादि[7] । कृन्नद्याः प्रतिषेधः ॥* लक्ष्मीतरा । तन्त्रीतरा[8] ।

**उगितश्च ॥६।३।४५॥**

उगितो नद्या ह्रस्वो वा स्याद्[9] घादौ[10] । तसिलादिष्विति पक्षे पुंवद्भावो वक्तव्यः[11] । विदुषितरा । विदुषीतरा । विद्वत्तरा । सतितरा । संतीतरा[12] । सत्तरा ।

**प्रागिवात् कः ॥५।३।७०॥**

'इवे[13] प्रतिकृतौ' इत्यतः प्राक् काधिकारः ।

---

नद्याः । शेषं व्याख्याति । अङ्‌व्यन्तनद्या इत्यादिना ।

उगितः । उगितः[14] प्रातिपदिकाद्विहिता या नदी तस्या ह्रस्वो वा स्यादित्यर्थः ।

अथ प्रागिवीयाः ।

प्राक् । तिङन्तादयं कप्रत्ययो नेष्यते अकजिष्यते । तिङश्चेत्यनुवृत्तिरुत्तरत्रैव[15] हि संबध्यते ।

---

१. $B_1$ drops it. २. घादौ परे droped $D_2$. ३. Dropped $D_1$, $D_4$, $B_2$. ४. Dropped $D_4$. ५. Dropped $D_1$, $D_4$, $D_5$. ६. पक्षे वामोरूतरा। स्त्रीतरा । $D_4$. ७. तमरूपादिषु C, $D_3$, $B_1$. ८. P drops तन्त्रीतरा. ९. $B_1$ drops it. १०. घादौ परे । $D_4$. ११. Dropped $D_1$. १२. Dropped $D_1$. १३. इवेति $D_1$. १४. Dropped $Dc_2$. १५. Dropped $Dc_2$.

**अज्ञाते ॥५।३।७३॥**

संबन्धादिनाज्ञातेर्थेधिकृतः कप्रत्ययः स्यात् ॥ कस्यायमश्वः[१] अश्वकः । पयस्कम् । यजुष्कम् ।

**कुत्सिते ॥५।३।७४॥**

अत्र कः स्यात् ॥ कुत्सितोश्वः अश्वकः । अत्र प्रकरणे हलादौ प्रत्यये परे द्वितीयादचः परस्य लोपो वा[२] वाच्यः ॥* देवदत्तकः । देवकः ।

---

**अज्ञाते** । प्रयोगोस्य कथं नु स्यादज्ञातः सर्वथैव यस्तस्माद्धर्मान्तराज्ञानमज्ञानं न स्वरूपत इतीममर्थं चेतसि कृत्वाह । **संबन्धादिने**त्यादि । स्वरूपेण ज्ञाते विशेषरूपेण संबन्धित्वादिना त्वज्ञातेर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे प्रागिवात् क इत्यधिकृतः कः स्यादित्यर्थः । **कस्यायमश्वः अश्वक** इति । स्वेन रूपेण ज्ञातोश्वः स्वामिसंबन्धेन तु विशेषरूपेणाज्ञात इति कप्रत्ययो जातः । **पयस्कम्** । **यजुष्क**मिति । ' सोपदादौ ' ' इणः षः ' इति क्रमात् सषौ ।

**कुत्सिते** । **अत्रे**ति । कुत्सितत्वोपाधिके वर्तमानात् प्रातिपदिकात् स्वार्थे कः स्यादित्यर्थः । **अत्र प्रकरणे** इति । प्रागिवीये प्रकरणे हलादौ प्रत्यये परे प्रकृतेर्द्वितीयादचः परस्य सर्वस्य लोपो विकल्पेन वक्तव्य इत्यर्थः । अजादौ तु ' ठाजादावूर्ध्वं द्वितीयादचः ' इति नित्यं वक्ष्यामः । **देवक** इति । अज्ञाताद्यर्थे के दत्तशब्दस्य लोपः ।

---

१. $B_1$, $B_2$ have पयस्कम् । यजुष्कम् before it. २. Dropped $D_4$ ; वक्तव्यः for वा वाच्यः $D_6$.

**अव्ययसर्वनाम्नामकच् प्राक् टेः ॥५।३।७१॥**

अव्ययानां सर्वनाम्नां च टेः प्रागकच्[1] स्यात् अज्ञाताद्यर्थे। कापवादः। उच्चकैः। नीचकैः। सर्वके। उभयके। प्रातिपदिकात् सुप इत्यनुवृत्तेः केवलस्य सुबन्तस्य वा[2] सर्वनाम्नष्टेः प्रागकच्। प्रयोगाद् व्यवस्था। युष्मकाभिः। अस्मकाभिः। युवकयोः। आवकयोः। युष्मकासु। अस्मकासु। इति केवलस्य। त्वयका। मयका। त्वयकि। मयकि। अत्र सुबन्तस्य तिङोनुवृत्तेः पचतकि। भवतकि।

**कस्य च दः ॥५।३।७२॥**

कान्ताव्ययस्य दकारोन्तादेशः स्यात्[4] अकच्संबन्धे। धकित्। हिरकुत्। पृथकत्।

---

**अव्यय**। 'काकचोर्भिन्नदेशत्वाद्विरोधो नास्ति यद्यपि। अस्ति त्वर्थकृतस्तेन बाध्यबाधकतानयोः'॥ इतीममर्थमभिप्रेत्याह। **कापवाद** इति। अकचः सप्रकृतेरन्तोदात्तः। चितः[5] सप्रकृतेर्बहुजकजर्थमिति वचनात्। अकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः। तूष्णीकामास्ते। शीले को मलोपश्च वक्तव्यः। तूष्णीं शीलः तूष्णीकः।

**कस्य च**। कान्तस्य सर्वनाम्नोभावादव्ययमेवात्र सामर्थ्यादनुवर्तेत इत्यभिप्रेत्याह। **कान्ताव्ययस्येति**। चकारोकच् संनियोगार्थ[6] इत्यभिप्रेत्याह। **अकच्संबन्ध** इति। स्पष्टत्वात् त्यक्तानि त्रयोदश। 'संज्ञायां कन्' ॥५।३।७५॥ कुत्सितत्वोपाधिके वर्तमानात् प्रातिपदिकात् कन् स्यात् तदन्तेन चेत् संज्ञा गम्यते। शूद्रकः। नित्त्वादाद्युदात्तत्वं भेदः। 'अनुकम्पायाम्' ॥५।३।७६॥ कारुण्ये गम्ये सुबन्तात्

---

१. °गकच् प्रत्ययः $B_2$, $D_4$, $D_5$. २. Dropped $B_1$. ३. च वा $B_2$. ४. B drops स्यात्. ५. चितः dropped $Bc_1$, $Dc_3$, $Dc_4$. ६. संयोगार्थ $Bc_1$.

तिङन्ताच्च यथाविहितं प्रत्ययः । अनुकम्पितः पुत्रः पुत्रकः । स्वपितकि । श्वसितकि । 'नीतौ च तद्युक्तात्' ॥५।३।७७॥ सामदानादिरूपा या नीतिस्तस्यां गम्यमानायामनुकम्पायुक्ताद्यथास्वं काकजादिः । हन्त ते धानकाः । हन्त ते गुडकाः । एहकि । अद्धकि । अनुकम्पमानो दानेनाराधयति । पूर्वत्रानुकम्प्यमानादेव प्रत्ययः इह तु व्यवहितादपि । 'बह्वचो मनुष्यनाम्नष्ठज्वा' ॥५।३।७८॥ अनुकम्पायां नीतौ च गम्यायां बह्वचो मनुष्यनामधेयात् ठच् यथाप्राप्तं च । देविकः । देवदत्तकः । बह्वचः किम् । मैत्रकः । मनुष्यनाम्नः किम् । मद्रबाहुकः । 'घनिलचौ च' ॥५।३।७९॥ बह्वचो मनुष्यनाम्नोनुकम्पायां नीतौ च घन् इलच् ठच् क एते प्रत्ययाः । देवियः । देविलः । देविकः । देवदत्तकः । 'प्राचामुपादेरडज्वुचौ च' ॥५।३।८०॥ उपपूर्वाद्बह्वचो मनुष्यनाम्नो नीतावनुकम्पायां च अडच् वुच् घन् इलच् ठच् क एते प्रत्ययाः । उपडः । उपकः । उपियः । उपिलः । उपिकः । उपेन्द्रदत्तकः । प्राचां ग्रहणं पूजार्थम् । वेति ह्यनुवर्तते । 'जातिनाम्नः कन्' ॥५।३।८१॥ बह्वच इति नानुवर्तते । जातिशब्दो यो व्याघ्रादिर्मनुष्यनाम तस्मादनुकम्पायां नीतौ च कन् । व्याघ्रकः । सिंहकः । वानुवृत्तेर्यथादर्शनमन्येपि । व्याघ्रिलः । 'अजिनान्तस्योत्तरपदलोपश्च' ॥५।३।८२॥ मनुष्यनाम्नोजिनान्तात् कन् उत्तरपदलोपश्च पूर्वार्थे । व्याघ्राजिनो नामानुकम्पादिविशिष्टः व्याघ्रकः । सिंहकः । 'ठाजादावूर्ध्वं द्वितीयादचः' ॥ ५।३।८३॥ अत्र प्रकरणे यष्ठोजादिश्च तत्र परे प्रकृतेर्द्वितीयादच ऊर्ध्वं शब्दरूपं लुप्यते । ऊर्ध्वग्रहणं सर्वलोपार्थम् । तथैवोदाहृतम् । देविकः । देवियः । देविलः । ठग्रहणमुको द्वितीयत्वे सति द्वितीयादूर्ध्वस्य लोपे कृते 'इसुसुक्तान्तात् कः' इति कविध्यर्थम् । अनुकम्पितो वायुदत्तो वायुकः । पितृकः । क्वचिच्चतुर्थादच ऊर्ध्वस्य लोपो वा वाच्यः । अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः बृहस्पतियः । लोपः पूर्वपदस्याजादावनजादौ च वा

वक्तव्यः । दत्तियः । दत्तिलः । दत्तकः । विना प्रत्ययेन पूर्वोत्तरपदयोर्वा लोपो वाच्यः । देवदत्तः । दत्तः । देवः । उवर्णात्परस्येलस्यादेर्लोपो वाच्यः । अनुकम्पितो भानुदत्तो भानुलः । वसुलः । वायुलः । सन्ध्यक्षरस्य द्वितीयत्वे तदादेर्लोपो वाच्यः । कहोडः । कहिकः । एकाक्षरपूर्वपदानामुत्तरपदलोपो वाच्यः । अनुकम्पितो वागाशीर्वाचिकः । अत्रेक आशीःशब्दस्य उत्तरपदस्य लोपे कृते तस्यानजादेशत्वात् 'अचः परस्मिन्—' इति स्थानिवद्भावो नास्तीति भसंज्ञा ततः पदनिबन्धनं कुत्वं न । कथमनुकम्पितः षडङ्गुलिः षडिकः । उच्यते । अत्र 'ठाजादावूर्ध्वम्—' इति द्वितीयादच ऊर्ध्वस्य लोपो वाच्यः । तत्र कृते 'यस्येति च' इत्यलोपः । ठस्य पूर्वविधौ स्थानिवत्त्वाद् भत्वं नास्तीत्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वम् । 'शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्' ॥५।३।८४॥ शेवलादीनां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लुप्यते । पूर्वस्यापवादः । अनुकम्पितः शेवलदत्तः शेवलिकः । शेवलियः । शेवलिलः । सुपरिकः । शालिकः । वरुणिकः । अर्यमिकः । एषामकृतसंधीनामयं लोप इष्यते । शेवलेन्द्रदत्तः शेवलिकः । सुपर्याशीर्दत्तः । सुपरिकः । शेवलयिकः । सुपर्यिक इति मा भूत् । 'अल्पे' ॥५।३।८५॥ अल्पविवक्षायां यथाविहितं काकजादिः । अल्पं तैलं तैलकम् । सर्वकम् । उच्चकैः । पचतकि । 'ह्रस्वे' ॥५।३।८६॥ यथाविहितम् । ह्रस्वो वृक्षो वृक्षकः । 'संज्ञायां कन्' ॥५।३।८७॥ ह्रस्वत्वहेतुकायां संज्ञायां कन् । वंशकः । वेणुकः । नदकः ।

१. Before it—दत्तिकः Dc3, Dc4. २. Dropped Dc2. ३. Dropped Dc2.

**कुटीशमीशुण्डाभ्यो रः ॥५।३।८८॥**

एभ्यो रः स्यात् ह्रस्वेर्थे[1] ॥ ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डीरः । पुंस्त्वं लोकात् ।

**वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥३।५।९१॥**

एभ्यस्तनुत्वे[2] ष्टरच् स्यात् ॥ वत्सतरः । वत्सतरी । उक्षतरी[3] । इत्यादि ।

**किंयत्तद्भ्यो[4] निर्धारणे द्वयोरेकस्य डतरच् ॥५।३।९२॥**

द्वयोर्मध्ये एकस्य पृथक्करणे किंयत्तद्भ्यो डतरच्

---

**कुटी** । कस्यापवादः । स्पष्टत्वात् त्यक्ते द्वे । 'कुत्वा डुपच्' ॥५।३।८९॥ कुतूशब्दाद्ध्रस्वत्वे डुपच् । ह्रस्वा कुतूः कुतुपः । चर्ममयं स्नेहपात्रम् । 'कासूगोणीभ्यां ष्टरच्' ॥५।३।९०॥ ह्रस्वत्वे । कस्यापवादः । षो ङीषर्थः । ह्रस्वा कासूः कासूतरी । ह्रस्वा गोणी गोणीतरी । कासूरिति शक्तिरायुधविशेषः । गोण्यावपनम् ।

**वत्स** । **एभ्य** इति । यस्य हि गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तत्तनुत्वौपाधिकेर्थे वर्तमानेभ्यो वत्सादिभ्यः स्वार्थे ष्टरच् स्यादित्यर्थः । प्रथमवया वत्सस्तस्य तनुत्वं द्वितीयवयःप्राप्तिः[5] । तत्र वत्सतर इति स्यात् । तरुण उक्षा । तस्य तनुत्वं तृतीयवयःप्राप्तिः । तत्र उक्षतरः । अश्वेनाश्वायामुत्पन्नोश्वस्तस्य तनुत्वमन्यपितृकता । तत्र अश्वतरः । अनड्वान् ऋषभः । तस्य तनुत्वं भारोद्वहने मन्दशक्तिता । तत्र ऋषभतरः ।

**किंयत्** । **निर्धारणे** इति विषयनिर्देशः । **द्वयो**रिति समुदायान्निर्धारणविभक्तिः । **एकस्ये**ति निर्धार्यमाणनिर्देशः । तत्र निर्धारणं नामैकदेशस्य[6] समुदायाज्जात्या क्रियया गुणेन संज्ञया वा पृथक्-

---

१. ह्रस्वार्थे $D_2$. २. Dropped $D_1$. ३. उक्षतरः $D_1$, $D_3$, $D_4$ ; $B_2$, उक्षतरः । अश्वतरः । ऋषभतरः । $D_5$. ४. कियत्तदो नि° P, C, $D_1$. ५. °वयोवाप्तिः $Dc_3$. ६. नामैकस्य $Dc_3$.

स्यात् स्वार्थे ॥ अनयोः कतरो वैष्णवः । यतरः । ततरः महाविभाषया विकल्पः । अनयोः कः पटुः ।

**वा बहूनां जातिपरिप्रश्ने डतमच् ॥५।३।९३॥**

बहूनामेकस्य[2] निर्धारणे जातिपरिप्रश्नार्थेभ्यः[3] कियत्तद्भ्यो वा डतमच् स्यात्[4] । पक्षे अकजपि । परिप्रश्न इति[5] किमो विशेषणम् । एषां कतमः को वा विप्रः । यतमः[6] । यकः । ततमः । सकः । महाविकल्पात् को भवतां विप्रः यः सः ।

किमोऽस्मिन्नर्थे डतरजपि ॥* भवतां कतरो विप्रः ।

**एकाच्च प्राचाम् ॥५।३।९४॥**

एकशब्दाच्चोक्तेऽर्थे डतरडतमौ[7] स्तः । एतयोरेकतरो विप्रः । एषामेकतमः । पक्षे । एककः । एकः ॥ अन्यशब्दात् डतमच्[8] इति

---

करणम् । तत्र निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्यय इत्येतत् सर्वं चेतसि कृत्वाह । **द्वयोर्मध्ये** इत्यादि । **महाविभाषयेति** । 'समर्थानां प्रथमाद्वा' इत्यत्र वेत्यनया ।

**वा बहूनां** । **पक्षेकजपीति** वावचनादित्यर्थः । **परिप्रश्न** इत्यादि । न यत्तदोरसंभवात् । जातिग्रहणं तु सर्वैरेव संबध्यत इति भावः ।

**एकात्** । **उक्तेर्थे** इति । द्वयोरेकस्य निर्धारणे डतरच् । बहूनामेकस्य निर्धारणे डतमच् । प्राग्ग्रहणं पूजार्थम् । विकल्पोनुवर्तत एव । जातिपरिप्रश्ने इति नानुवर्तते । सामान्येन विधानम् । **अन्यशब्दादिति** । एकाच्चेति चकारादन्यशब्दात् डतमच् इति

---

१. Dropped D1. २. °मेकनिर्धारणे B1. ३. जातिप्रश्नार्थेभ्यः. ४. Dropped D4. ५. P, D1, D5, B2 and C drop इति. ६. यतमः । ततमः । यकः । सकः B1. ७ डतरच् डतमच् इत्येतौ B1. ८. तम C; डतम D1; डतरडतमौ D2.

केचित् । अन्यतमः । सर्वशब्देभ्यः स्वार्थे केन् इति केचित् । बहुतरकम् ।

केणः ॥७।४।१३॥

के परेणो ह्रस्वः स्यात् ॥ कन्यका । नदिका । अणः किम् । नौका ॥ तीयादीकक् स्वार्थे वाच्यः ॥* द्वितीयीकः । तार्तीयीकः ।

---

केचिद् वोपदेवपण्डितादयो वदन्ति । डतमजिति डतरचोऽप्युपलक्षणम् । तथा च वोपदेवपण्डितैर्विचारचिन्तामणावुक्तम् । 'एवमेकतरोऽप्येकतमोऽप्यन्यतरोऽपि च । चकारादन्यतमवत् पक्षेकजपि बाधनात्' ॥ इति । सर्वशब्देभ्य इति । केचिदिति । काशिकाकारादयः । तथा च काशिकाकारेण 'न सामिवचने' इत्यत्रोक्तम् । 'एतदेव ज्ञापकं भवति स्वार्थे कन्निति । तत्र यदेतदुच्यते । एवं हि सूत्रमभिन्नतरकं भवति । एवं तर्हि बहुतरकं व्याप्यत इत्येवमादि तदुपपन्नं भवति' इति ।

केणः । केणः इति । ह्रस्वे तद्धितग्रहणं कर्तव्यं कृति मा भूदिति राकेति । अथवा उणादयोऽव्युत्पन्नानि प्रातिपदिकानीत्येव सिद्धम् । स्पष्टत्वात् त्यक्तमेकम् । 'अवक्षेपणे कन्' ॥५।३।९५॥ यन्निमित्तोवक्षेपस्तस्मादवक्षेपणोपाधिकेऽर्थे वर्तमानात् कन् स्यात् । परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम् । व्याकरणकेन गर्वितोसि । यः स्वयं कुत्सितस्तत्र 'कुत्सिते' इति कः । चैत्रक इति ।

इति प्रागिवीयाः । कस्य पूर्णोविधिः ।

---

१. Before it—अन्यतरः $D_2$, $D_5$. २. क C. ३. Before it—कन्यैव $D_3$, $D_5$, $B_1$. ४. Dropped $D_1$, $D_4$, $D_5$, $B_2$. ५. Dropped $D_1$, $D_3$, $D_5$, $B_2$. ६. Dropped $Bc_1$, $Dc_3$. ७. °मादिषु $Dc_3$.

स्पष्टत्वात्त्यक्तानि चतुस्त्रिंशत् सूत्राणि व्याख्यायन्ते । 'इवे प्रतिकृतौ' ॥५।३।९६॥ प्रतिकृतिविषये सादृश्येऽर्थे वर्तमानात् प्रातिपदिकात् कन् । अश्व इवायमश्वस्य प्रतिकृतिरश्वकः । प्रतिकृताविति किम् । गौरिवायं गवयः । 'संज्ञायां च' ॥५।३।९७॥ इवार्थे कन् । अश्वकः । अश्वसदृशस्य नाम । 'लुम्मनुष्ये' ॥५।३।९८॥ मनुष्येऽर्थे संज्ञायां कनो लुप् । चञ्चेव चञ्चा मनुष्यः । वर्ध्रिका । दासी । खरकुटी । मनुष्ये किम् । उष्ट्रकः । 'जीविकार्थे चापण्ये' ॥५।३।९९॥ जीविकार्थं यदपण्यं तस्मिन् वाच्ये कनो लुप् । वासुदेवः । शिवः । स्कन्दः । विष्णुः । देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते । अपण्ये किम् । हस्तिकान् विक्रीणीते । देवपथादेरेवायं प्रपञ्चः । 'देवपथादिभ्यश्च' ॥५।३।१००॥ इवे प्रतिकृतौ कनो लुप् संज्ञायां विहितस्य च । देवपथः । वारिपथः ।

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।'
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥'

अर्चासु । शिवः । विष्णुः । चित्रकर्मणि । अर्जुनः । दुर्योधनः । ध्वजेषु । कपिः । गरुडः । देवपथ । वारिपथ । अजपथ । राजपथ । शतपथ । शङ्कुपथ । उष्ट्रग्रीव । वामरज्जु । हस्त । इन्द्र । पुष्प । मत्स्य । देवपथादिराकृतिगणः । 'वस्तेर्ढञ्' ॥५।३।१०१॥ इवे प्रतिकृतौ च । वस्तिरिव वास्तेयः । वास्तेयी । 'शिलाया ढः' ॥५।३।१०२॥ शिलेव शिलेयं दधि । योगविभागतो ढञ् च । शैलेयम् । 'शाखादिभ्यो यत्' ॥५।३।१०३॥ शाखेव शाख्यः । शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । स्कन्ध । उरस् । अग्र । शरण । 'द्रव्यं च भव्ये' ॥५।३।१०४॥ भव्योऽभिप्रेतार्थानां पात्रभूतस्तत्रार्थे वर्तमानात्

१. °सदृशनामकः । Dc3. २. खुर° Dc4. ३. After it—देवलः । Dc3. ४. एव उच्यन्ते Dc3. ५. देवपथः । वारिपथः &c. in the Nom. Sing. Dc3, Dc4. ६. वाम । रज्जु Bc1. ७. Before it–शिरस् Bc1, Dc3, Dc4.

द्रुशब्दात् यदन्तो निपातः। द्रुरिवायं द्रव्यम्। राजपुत्रः। द्रव्यं मैत्रः। 'कुशाग्राच्छः' ॥५।३।१०५॥ कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः। 'समासाच्च तद्विषयात्' ॥५।३।१०६॥ इवार्थविषयात् समास-पदादन्यस्मिन्निवार्थे छः। काकतालीयम्। अतर्कितोपनतं चित्री-करणमुच्यते। तथा हि। काकस्यागमनं यादृच्छिकं तालस्य पतनं च। तेन च तालेन पतता काकस्य वधः कृतः। एवमेव देवदत्तस्य गमनं दस्यूनां चोपनिपातस्तैस्तस्य वधः। तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागमसदृश इत्युपमार्थः समासार्थः। पश्चाद्देवदत्तस्य वधः काकवधसदृश इति। द्वितीय उपमार्थः।

'इवार्थे काकतालाद्याः समासाः स्युरमी इति।
ज्ञायते तेन योगेन प्रत्ययश्च विधीयते'॥

'शार्करादिभ्योण्' ॥५।३।१०७॥ इवार्थे। शार्करम्। शर्करा। कपालिका। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नराची। नकुल। सिकता। 'अङ्गुल्यादिभ्यष्ठक्' ॥५।३।१०८॥ अङ्गुलीव आङ्गुलीकः। अङ्गुली। भरुज। बभ्रु। मण्डल। मण्डर। शष्कुल। हरि। कपि। रुह। खल। उदश्वित्। गोणी। तरस्। कुलिश। 'एकशालायाष्ठजन्यतरस्याम्' ॥५।३।१०९॥ एकशालेव एकशालिकः। पक्षे ठक्। ऐकशालिकः। 'कर्कलोहितादीकक्' ॥५।३।११०॥ कर्कः शुक्लोश्वः स इव कार्कीकः। उपाधिना लोहित इव लौहितीकः। स्फाटिकः। 'पूगाञ्ञ्योग्रामणीपूर्वात्' ॥५।३।११२॥ इवार्थो निवृत्तः। नानाजातीया अनियतवृत्तयोर्थकामप्रधानाः सङ्घाः पूगाः। अग्रामणीपूर्वादिति पूर्वशब्दोत्रावयववाची। ग्रामणीः पूर्वोवयवो यस्य स ग्रामणीपूर्वः। न ग्रामणी पूर्वोग्रामणीपूर्वः। अग्रामण्यवयवात् पूगवाचिनो ञ्यः स्वार्थे। लौहध्वज्यः। लौहध्वज्यौ। लौहध्वजाः।

१. यजन्तो Bc1, Dc3, Dc4. २. मैत्रम् Bc1, Dc3. ३. Before it—स प्रत्ययार्थः Bc1, Dc4. ४. ज्ञाप्यते Dc3. ५. नाराच। Bc1, Dc3, Dc4. ६. तरु। Bc1, Dc4. ७. Dropped Dc2; स्फुटिकः Bc1. ८. ग्रामणी? Bc1, Dc4.

शैब्यः । शैब्यौ । शिबयः । 'ञ्यादयस्तद्राजाः' इति तद्राजत्वात् बुहुषु लुक् । अग्रामणीपूर्वात् किम् । देवदत्तो ग्रामणीरेषां ते देवदत्तकाः । देवदत्तो ग्रामणीरवयव इति ञ्यो न । 'स एषां ग्रामणीः' इति कन् । 'आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्' ॥५।३।११४॥ वाहीकेषु ये आयुधजीविसङ्घास्तद्वाचिनः प्रातिपदिकात् ब्राह्मणराजन्यवर्जितात् स्वार्थे ञ्यट् स्यात् । ब्राह्मणे[1] तद्विशेषग्रहः । राजन्ये तु स्वरूपमेव । कौण्डीबृस्यः । कौण्डीबृस्यौ । कुण्डीबृसाः । टो ङीबर्थः । तेन 'अस्त्रियाम्' इति नानुवर्तते । कौण्डीबृसी । आयुधजीवीति किम् । मल्लाः । शैयण्डाः[2] । सङ्घात् किम् । सम्राट् । वाहीकेषु किम् । शबराः । अब्राह्मण्यराजन्यात् किम् । सालङ्कायना[3] राजन्याः । 'वृकाट्टेण्यण्' ॥५।३।११५॥ आयुधजीविसङ्घवाचिनो वृकात् स्वार्थे टेण्यण् । टणौ ङीब्वृद्ध्यर्थौ । वार्केण्यः । वृकाः । आयुधजीविसङ्घविशेषणाज्जातिशब्दान्न ।

कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।

'दामन्यादित्रिगर्तषष्ठाच्छः' ॥५।३।११६॥ दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्य आयुधजीविसङ्घतादिभ्यः स्वार्थे छः । दामनीयः । दामनीयौ । दामनयः । दामनि । औलपि । वैजवापि । औदकि । आच्युतन्ति[4] । काकदन्तकि[5] । शात्रुन्तपि[6] । सार्वसेनि । बिन्दु । तुलुभ[7] मौञ्जायन । सावित्रीपुत्र । त्रिगर्तषष्ठेभ्यः खल्वपि । कौण्डोपरथीयः । कौण्डोपरथीयौ । कौण्डोपरथाः ।

'आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।

कौष्टकिर्जालमानिश्च ब्राह्मगुप्तोऽथ[8] जानकिः ॥' इति ।

'पर्श्वादियौधेयादिभ्यामणञौ' ॥५।३।११७॥ आयुधजीविसङ्घवाचिभ्यः पर्श्वादिभ्योऽण् । पार्शवः । पार्शवौ । पर्शवः । पर्शु । असुर । रक्षस्[9] ।

१. ब्राह्मणेनि त° Dc2. २. सयण्डाः Bc1, Dc4. ३. शाल° Bc1, Dc4. ४. अच्युतन्ति Bc1, Dc3, Dc4. ५. कासदकि Bc1, Dc3, Dc4. ६. शत्रुन्तपि । सर्वसेनि । Bc1, Dc3, Dc4. ७. सुलभ । कौञ्जायन Dc3, Dc4. ८. ब्रह्म° Dc4. ९. राक्षस Bc1, Dc3, Dc4.

बाह्लीक । वयस्[1] । वसु[2] । मरुत् । सात्वत्[3] । दशार्ह[4] । पिशाच । अशनि । कार्षापण । यौधेयादिभ्योऽञ् । यौधेयः । यौधेयादिः कथितः । 'अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्' ॥ ५।३।११८॥ आयुधजीविसङ्घादिति निवृत्तम् । अभिजिदादिभ्योणन्तेभ्यो[5] यञ् स्यात् । अभिजितोपत्यमण् । ततो यञ् । आभिजित्यः । वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः । गोत्रप्रत्ययस्याणो ग्रहणमिष्यते । तेन अभिजितो मुहूर्तः इत्यत्र न । 'पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च' ॥५।४।१॥ पादशब्दान्तस्य शतशब्दान्तस्य च संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् स्यात् लोपश्चान्त्यस्य । 'यस्येति च' इति सिद्धे यल्लोपस्य वचनं पुनः । तेनास्य स्थानिवद्भावाभावः । पादस्य पन्न । द्वौ द्वौ पादौ ददाति द्विपादिकां ददाति । द्विशतिकाम् । 'प्रत्ययस्थात्'—इतीत्वे 'तद्धितार्थ' इति समासः । स्त्रीत्वं स्वभावात् । संख्यादेः किम् । पादं पादं ददाति । वीप्सायां किम् । द्वौ पादौ ददाति । पादशतग्रहणमुपलक्षणार्थम् । अन्यत्रापि दर्शनात् । द्विमोदकिकां[6] ददाति । 'दण्डव्यवसर्गयोश्च' ॥५।४।२॥ दण्डदानयोर्गम्यमानयोः पादशतान्तस्य संख्यादेर्वुन् स्यात् अन्तलोपश्च । अवीप्सार्थ आरम्भः । द्वौ पादौ द्विपदिकां दण्डितः । त्रिशतिकाम् । द्विपदिकां व्यवसृजति । द्विशतिकां ददातीत्यर्थः । 'स्थूलादिभ्यः प्रकारवचने कन्' ॥५।४।३॥ स्थूलप्रकारः स्थूलकः । स्थूल । अणु । माष । इषु । कृष्ण तिलेषु । कृष्णकास्तिलाः । यव व्रीहिषु । यवको व्रीहिः । पाद्यकालावदातसुरायाम् । पाद्यिका सुरा । कालिका सुरा । अवदातिका सुरा । गोमूत्र आच्छादने । गोमूत्रप्रकारमाच्छादनं गोमूत्रकम् । सुराहौ । सुरावर्णोऽहिः सुरकः ।

१. सवन Bc1, Dc3 ; वसन Dc4. २. Dropped Dc3, Dc4. ३. सत्वत् Bc1, Dc3, Dc4. ४. दाशार्ह Dc3. ५. °श्चान्तस्य Dc1. ६. द्विमोदिकां Dc3.

जीर्णशालिषु । जीर्णप्रकारा जीर्णकाः शालयः । पत्रमूल । समस्तो व्यस्तश्च । पत्रमूलकम् । पत्रकम् । मूलकम् । कुमारीपुत्र । कुमारीश्वशुर । मणि । चञ्चद्बृहतोरुपसंख्यानम् । चञ्चत्कः । बृहत्कः । 'अनत्यन्तगतौ क्तात्' ॥५।४।४॥ क्तान्तात् कन् । नात्यन्तं भिन्नं भिन्नकम् । अनत्यन्तगतौ किम् । अत्यन्तं भिन्नम् । 'न सामिवचने' ॥५।४।५॥ इह क्तान्तान्न कन् । सामिकृतम् । अर्धभुक्तम् । स्वार्थिकस्य कनो निषेधः । अत एव ज्ञापकात् कन् । 'बृहत्या आच्छादने' ॥५।४।६॥ स्वार्थे कन् । 'केणः' इति ह्रस्वः । बृहतिका पटी । अन्यत्र बृहती छन्दः । 'अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः' ॥५।४।७॥ एभ्यः स्वार्थे खः । नास्मिन् षडक्षीणि सन्ति द्वाभ्यामेवालोचितोषडक्षीणो मन्त्रः । आशिता गावोस्मिन् आशितंगवीनमरण्यम् । एतौ बहुव्रीही । निपातनान्मुम् । अलंकर्मणे अलंकर्मीणः । अलं पुरुषायालंपुरुषीणः । पर्यादय इति तत्पुरुषः । गुर्वधीनः । अधिशब्दः शौण्डादिषु पठ्यते । नित्यश्चायं प्रत्ययः । गुर्वधीन इति उत्तरत्र विभाषाग्रहात् अन्येपि स्वार्थिका नित्याः स्मर्यन्ते । तरबादयः प्राक् कनः । ञ्यादयः प्राग्वुनः । आमादयः प्राङ् मयटः । बृहतीजात्यन्ताः समासान्ताश्चेति । 'विभाषाञ्चेरदिक्स्त्रियाम्' ॥५।४।८॥ अञ्चत्यन्ताच्छब्दाददिक्स्त्रियां वर्तमानात् स्वार्थे खो वा । प्राचीनम् । प्राक् । प्रतीचीनम् । प्रत्यक् । अदिक्स्त्रियां किम् । प्राची दिक् । दिग्ग्रहः किम् । प्राचीनाः इति । स्त्री किम् । प्राक् । प्राक्शब्दोत्र दिशि वर्तते न तु स्त्रियामव्ययत्वात् । खान्तस्य तु क्लीबत्वं लोकात् । 'जात्यन्ताच्छ बन्धुनि' ॥५।४।९॥ बध्यतेस्मिन् जातिरिति बन्धुशब्देन द्रव्यमुच्यते । जात्यन्ताद्बन्धुनि वर्तमानात् स्वार्थे छः । ब्राह्मणजातीयः । शूद्रजातीयः । बन्धुनि किम् । वन्द्या ब्राह्मणजातिः । 'स्थानान्ताद्विभाषा सस्थानेनेति चेत्' ॥५।४।१०॥ स्थानान्ताद्वा छः स्यात् । सस्थानेन चेत् स्थानान्तमर्थवत्

**प्रज्ञादिभ्यश्च ॥५।४।३८॥**

एभ्यः स्वार्थे णः[1] स्यात् ॥ प्रज्ञ एव प्राज्ञः । प्राज्ञी । प्रज्ञावती तु प्राज्ञा । चौरः[2] ॥[3]

---

स्यात् । सस्थान इति तुल्य उच्यते । समानस्थानअच्छब्दः संबन्धे । समानं स्थानं प्राप्तिर्यस्येति स्थानशब्दः प्राप्तिपर्यायः । करणे तृतीया । सस्थानेन कृत्वा जाड्यमस्येति कृत्वा । पित्रा तुल्यः । पितृस्थानीयः । पितृस्थानः । मातृस्थानीयः । मातृस्थानः । सस्थानेनेति किम् । गोस्थानम् । 'अनुगादिनष्ठक्' ॥५।४।१३॥ अनुगदतीति अनुगादी । अनुगादिशब्दात् स्वार्थे ठक् स्यात् । आनुगादिकः । 'विसारिणो मत्स्ये' ॥५।४।१६॥ विसरतीति विसारी । विसारिणः स्वार्थेण् मत्स्ये वाच्ये । वैसारिणो मत्स्यः । मत्स्ये किम् । विसारी देवदत्तः ।

प्रज्ञा । प्रज्ञ । वणिज् । उष्णिज् । प्रत्यक्ष । विद्वन् । षोडन् । विद्यमान । श्रोत्र शरीरे । श्रौत्रं शरीरम् । अन्यत् श्रोत्रम् । जुह्वत् । कृष्णमृगे । जौह्वतः कृष्णमृग इत्येके । अन्ये कार्ष्णो मृग इत्येव जौह्वते इत्यविशेषेणाहुः । चिकीर्षत् । शत्रु । चोर । चक्षुस् । वसु । मरुत् । क्रुञ्च । सत्वत् । दशार्ह । वयस् । असुर । पिशाच । रक्षस् । अशनि । कार्षापण । देवता । बन्धु । आकृतिगणोयम् ।

---

१. स्वार्थेण् D3, D4. २. Before it—चोर एव B1, B2. ३. After it—चौरी B2, C. ४. समानं स्थानमस्येति कृत्वा । पित्रा तुल्यः । &c. Dc3. ५, अन्यत्र Bc3. ६. देवदत्त Dc4.

**संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥५।४।१७॥**

क्रियापौनःपुन्यगणनार्थायाः संख्यायाः कृत्वसुच् स्यात् ॥ पञ्चकृत्वः । [1]कतिकृत्वो भुङ्क्ते । [2]कतिवारानित्यर्थः ॥

**द्वित्रिचतुर्भ्यः सुच् ॥५।४।१८॥**

एभ्यः सुच् स्यादुक्तेऽर्थे ॥ कृत्वसुचोऽपवादः । द्विः । त्रिः । चतुः [3]पठति ।

---

**संख्यायाः** । **क्रियापौनःपुन्यगणनार्थाया** इति । पौनःपुन्येनात्र साहचर्यादेककर्तृकाणां तुल्यजातीयानां क्रियाणां क्रिययोर्वा जन्मोपलक्ष्यते । तत्संख्यानार्थायाः संख्याया इत्यर्थः । संख्यायाः किम् । भूरीन् वारान् भुङ्क्ते । अभ्यावृत्तिग्रहात् क्रियामात्रग्रहणे न । दश पाकाः । अस्त्यत्र क्रियागणनं नत्वभ्यावृत्तिगणनम् । अभ्यावृत्तिर्हि भिन्नकालानां क्रियाणां स्यात् । गणनग्रहः किम् । यावता संख्या गणनात्मिकैव । अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः संख्येयवचनेभ्यः एव स्यात् प्रत्ययो न संख्यानमात्रवृत्तिभ्यः । गणनग्रहणात् सर्वत्र सिध्यति । शतं वारान् वाराणां वा शतं भुङ्क्ते शतकृत्व इति । क्रियाग्रहणं किम् । यतोऽभ्यावृत्तिः क्रियाया एव स्यान्न गुणद्रव्ययोः । सत्यम् । एकस्य सकृच्चेत्येतदर्थम् । तत्र हि क्रियैव गण्यते नाभ्यावृत्तिः ।

**द्वित्रि** । चकारः प्रकृतेरन्तोदात्तत्वार्थः । प्रत्ययस्य त्वनच्कत्वान्न तस्य ।

---

१. Before it—दशकृत्वः $D_2$. २. पञ्चवारानित्यर्थः $B_1$, P, C. ३. पठति dropped $D_2$, $B_1$, P, C. ४. °गणने $Dc_3$, $Dc_4$.

**एकस्य सकृच्च ॥५।४।१९॥**

**ऐकशब्दस्य[1] सकृदादेशः स्यात्[2] सुच्प्रत्ययश्च[3] ॥**

**'हल्ङ्याब्भ्यः'—इति सुलोपः । सकृद् भुङ्क्ते ।[4]**

---

एकस्य । अभ्यावृत्तिस्त्विह न संभवतीति क्रियागणन एव प्रत्ययः । अत्रापि प्रकृतेरन्तोदात्तार्थश्चकारः । एकपाक इत्यत्र न भवत्यनभिधानात् । [5]स्पष्टत्वात् त्यक्तान्येकोनविंशतिः । 'विभाषा बहोर्धाविप्रकृष्टकाले' ॥५।४।२०॥ बहुशब्दाद् धाकृत्वसुच्च क्रियाभ्यावृत्तिगणने । दिवसस्य बहुधा भुङ्क्ते बहुकृत्वो वा । अविप्रकृष्टकाले किम् । मासस्य बहुकृत्वो भुङ्क्ते । 'समूहवच्च बहुषु' ॥५।४।२२॥ तत्प्रकृतमित्यर्थे समूहविहिता अपि प्रत्ययाः स्युः [7]मयड्वा । मोदकाः प्रकृताः । [8]मौदकिको यज्ञः । मोदकमयो वा । 'अनन्तावसथेतिहभेषजाञ्ञ्यः' ॥५।४।२३॥ स्वार्थे । आनन्त्यम् । आवसथ्यम् । ऐतिह्यम् । भैषज्यम् । स्वार्थिकत्वं विभाषा च सर्वत्रानुवर्तते । अनन्तम् । आवसथः । इतिह । भेषजम् । 'देवतान्तात्तादर्थ्ये यत्' ॥५।४।२४॥ अग्निदेवतायै इदमग्निदेवत्यम् । वायुदेवत्यम् । 'पादार्घाभ्यां च' ॥५।४।२५॥ आभ्यां तादर्थ्ये यत् । पाद्यम् । अर्घ्यम् । समादावतुः । समावद्वसति । नवस्य नूआदेशः त्नप्तनखाश्च प्रत्ययाः । नूत्नम् । नूतनम् । नवीनम् । [9]नश्च पुराणे प्रात् । [10]प्रत्नम् । प्रणम् । प्रतनम् । प्रीणम् । भागरूपनामभ्यो धेयश्च । भागधेयम् । रूपधेयम् । नामधेयम् । अग्नीध्रसाधारणादञ् । आग्नीध्रम् । साधारणम् । वानुवृत्तेः सर्वं वा । 'अतिथेर्ञ्यः' ॥५।४।२६॥ तादर्थ्ये । अतिथये इदमातिथ्यम् ।

---

१. अस्य C, D1, D4, B2. २. Dropped B1, D1, D4, D5. ३. च dropped D4. ४. After it—एकवारमित्यर्थः D2, B1. ५. श्चः । Dc3, Dc4. ६. Omitted Dc2. ७. मयट् च । Dc3, Dc4. ८. Before it—मौदकिकम् । मौदकमयम् Bc3 ; मौदकिकं मोदकमयमस्मिन् प्रकृतमित्यर्थे Dc3, Dc4 (°मित्यत्राप्यर्थे Dc3). ९. प्रात् नश्च पुराणे Bc1, Dc3. १०. Dropped Dc2.

'देवात्तल्' ॥५।४।२७॥ स्वार्थे । देव एव देवता । 'अवेः कः' ॥५।४।२८॥ अविरेवाविकः । 'यावादिभ्यः कन्' ॥५।४।२९॥ स्वार्थे । याव एव यावकः । याव । मणि । अस्थि । इन्द्र । पीत । स्तम्ब । ऋतावुष्णशीते । उष्णकः ऋतुः । शीतकः ऋतुः । पशौ लूनवियाते । लूनकः पशुः । वियातकः पशुः । अणु निपुणे । अणुको निपुणः । पुत्रकृत्रिमे । पुत्रकः कृत्रिमः । स्नातवेदसमाप्तौ । यस्य वेदः समाप्तः स स्नातकः । शून्य रिक्ते । शून्यकः तुच्छः । दान कुत्सिते । दानकं कुत्सितं दानम् । तनु सूत्रे । तनुकं सूत्रम् । ईयसश्च । श्रेयस्कः । ज्ञात । अज्ञात । कुमारी । क्रीडनानि च । कन्दुकः । 'लोहितान्मणौ' ॥५।४।३०॥ स्वार्थे कन् । लोहितको मणिः । 'वर्णे चानित्ये' ॥५।४।३१॥ लोहितान् कन् आगन्तुकत्वे । लोहितकः कोपेन । अनित्ये किम् । लोहितो गौः । लोहितात् लिङ्गाधिकारोक्तस्य 'वर्णादनुदात्तात्तोपधात्तो नः' इत्यस्य बाधनं वा वक्तव्यम् । लोहितिका लोहिनिका कोपेन । 'रक्ते' ॥५।४।३२॥ लाक्षादिना रक्ते यो लोहितशब्दस्ततः कन् । लोहितकः पटः । लोहितिका लोहिनिका शाटी । 'कालाच्च' ॥५।४।३३॥ अनित्ये वर्णे रक्ते च कन् । कालकं मुखम् । कालकः पटः । कालिका शाटी । 'विनयादिभ्यष्ठक्' ॥५।४।३४॥ स्वार्थे । वैनयिकः । विनय । समय । उपायाद्ध्रस्वत्वं[1] च । औपयिकः । कथंचित् । अकस्मात् । उपचार । समाचार । व्यवहार । संप्रदान । समुत्कर्ष । समूह । विशेष । अत्यय । 'वाचो व्याहृतार्थायाम्' ॥५।४।३५॥ संदेशवाचि वर्तमानात् वाक्शब्दात् ठक् स्वार्थे । वाचिकं कथयति । 'तद्युक्तात्कर्मणोऽण्' ॥५।४।३६॥ वाचिकयुक्तात् कर्मशब्दादण् । वाचिकं श्रुत्वा तथैव यत् कर्म क्रियते तत् कार्मणमुच्यते । सान्नायानुजावरानुषूकाष्टुभ-चातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः ।

१. °द्ध्रस्वश्च । Bc1, Dc3.

**बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥५।४।४२॥**

बह्वल्पपर्यायात् कारकवाचिनः शस् [1]स्याद्वा । बहूनि बहुभिर्बहुभ्य इत्याद्यर्थे बहुशो ददाति । [2]भूरिशः । अल्पशः । [3]स्तोकशः । कारकात् किम् । बहूनां स्वामी ।

**संख्यैकवचनाच्च वीप्सायाम् ॥५।४।४३॥**

[4]संख्याया एकवचनाच्च [5]कारकात् वीप्सायां शस् [6]स्याद्वा ॥ द्वौ द्वौ इत्याद्यर्थे द्विशो ददाति । त्रिशः । कतिशः । बहुशः । गणशः । तावच्छः । माषं माषं ददाति माषशः । [7]प्रस्थशः ।

---

एतेणन्ताश्छन्दसि भाषायां चेष्यन्ते । 'ओषधेरजातौ' ॥५।४।३७॥ अण् स्वार्थे । औषधं पिबन्ति । अजातौ किम् । ओषधयः क्षेत्रे रूढाः । 'मृदस्तिकन्' ॥५।४।३९॥ स्वार्थे । मृदेव मृत्तिका । 'सस्नौ प्रशंसायाम्' ॥५।४।४०॥ प्रशंसोपाधिके स्वार्थे मृदः सस्नौ स्तः । मृत्सा । मृत्स्ना । प्रशस्ता मृत् ।

**बह्वल्पार्थे**ति । विशेषानभिधानात् सर्वं कर्मादि कारकं गृह्यत इत्यभिप्रेत्याह । **बहूनि बहुभिर्बहुभ्य इत्याद्यर्थ** इति । अर्थग्रहात् पर्यायेभ्योपि स्यादित्यभिप्रेत्याह । **भूरिश** इत्यादि । बह्वल्पार्थात् किम् । गां ददाति । यत्र मङ्गलं गम्यते तत्रायं प्रत्यय इष्यते । बहुशो ददात्याभ्युदयिके । अल्पशो ददात्यनिष्टे ।

**संख्यैक** । 'नित्यवीप्सयोः' । इति द्विर्वचने प्राप्ते शस् विधीयते । एकोर्थ उच्यते येन तदेकवचनम् । वृत्तौ यदेकार्थं तदेकवचनमिह गृह्यते । माषं माषं ददातीत्येकवचनस्योदाहरणम् । माषादयः शब्दा वृत्तावेकार्था भवन्ति ते परिमाणशब्दा इत्युक्तपरिमाणस्यैवार्थस्य

---

१. वा स्यात् $B_1$; स्यात् dropped $D_3$. २. भूरिशो ददाति $D_3$. ३. $B_1$ drops स्तोकशः. ४. संख्यावाचिनः $B_1$. ५. Dropped $D_5$. ६. $B_1$ drops स्यात् ; $D_5$ drops वा ; वा स्यात् $D_3$. ७. C omits it.

**प्रतियोगे पञ्चम्यास्तसिः ॥५।४।४४॥**

प्रतिना योगे पञ्चम्यन्तात् तसिर्वा ॥ प्रद्युम्नः कृष्णतः प्रति कृष्णाद्वा ॥ आदिमध्यान्तपृष्ठपार्श्वादेश्च ॥* आदित इ[1]त्यादि ।

**अपादाने चाहीयरुहोः ॥५।४।४५॥**

अपा[2]दानपञ्चम्यन्तात् तासिर्वा ॥[3] ग्रामत आयाति ग्रा[4]माद्वा । चौरतो बिभेति चौ[5]राद्वा । अहीयरुहोः किम् । [6]सार्थाद्धीयते । पर्वतादवरोहति ॥

---

वाचकाः । अतोर्थाधिक्ये तेषां वृत्तिर्न संभवति । या तु वाक्ये तेषां प्रयोगेनेकप्रतीतिर्माषा माषा इति सा सविभक्तिकेभ्यो वृत्तौ च सा[7] विभक्तिर्नास्तीत्येकार्था एव स्युः । वृ[8]त्तिस्था चैकार्थता प्रत्ययविधावाश्रीयते न वाक्यस्था । घटं घटं ददातीति घटादयः शब्दा वृत्तावेकार्था न भवन्ति किं तु वाक्ये एकवचनान्तत्वादेकार्थाः । वृत्तौ तु विभक्तिनिवृत्तौ सत्यां घटादय एकार्था न जातिशब्दत्वात् । जातिशब्दो हि जात्याधारभूतायामनेकस्यां व्यक्तौ वर्ततेतो नात्र शस् । यदा त्वर्थप्रकरणादिसहिता घटादयो जातिशब्दा वृत्तावप्येकार्थाः स्युस्तदा भवत्येव शस् घटशो ददातीति ।

**प्रतियोगे** । **प्रद्युम्नः कृष्णतः प्रतीति** । 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयत्वम् । 'प्रतिनिधिप्रतिदाने च' इति पञ्चमी । तसेरिकारो मुखसुखार्थः । **आदीत्यादि** । आकृतिगणोयम् ।

**अपादाने । ग्रामत आयातीति** । 'ध्रुवमपायेपादानम्' इत्यपादानत्वम् । **चौराद् बिभेतीति** । 'भीत्रार्थानां भयहेतुः' इति । हीयेति विकृतनिर्देशो जहातेः प्रतिपत्त्योर्थो न जिहीतेः । भूमेरुज्जिहीते

---

१. मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । $B_2$ ; इत्यादि dropped $D_4$. २. अपादाने $D_2$, $D_4$. ३. After it—न तु हीयरुहोः $B_1$, $B_2$, $D_3$, $D_5$. ४. ग्रामाद्वा dropped $D_5$. ५. चौराद्वा dropped $D_5$. ६. स्वार्थाद्धीयते P, C, $B_1$. ७. सार्वविभक्ति° $Dc_1$, $Dc_2$. ८. वृत्तितस्था° $Bc_1$.

**अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥५।४।५०॥**

संपद्यतेर्यः कर्ता तद्वाचिनः कृभ्वस्तियोगे च्विः स्याद्-तथाभूतस्य तथा भावे गम्ये ॥

---

भूमितः। कथं मन्त्रो हीनः स्वरतो वर्णतो वेति। नैषा पञ्चमी। किं तर्हि। तृतीया। स्वरेण वर्णेन वा हीन इति। 'हीयमानपापयोगाच्च' इति तसिः। स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयम्। 'अतिग्रहाव्यथन-क्षेपेष्वकर्तरि तृतीयायाः' ॥५।४।४६॥ अतिक्रम्य ग्रहोतिग्रहः। अव्यथनमचलनम्। क्षेपो निन्दा। एतद्विषये या तृतीया तदन्तात्तसिर्वा सा चेत् तृतीया कर्तरि न। वृत्तेनातिगृह्यते वृत्तितोतिगृह्यते। वृत्तेनान्यानतिक्रम्य गृह्यत इत्यर्थः। वृत्ततो न व्यथते। वृत्तेन न व्यथते। वृत्ततः क्षिप्तः। वृत्तेन क्षिप्तः। अकर्तरि किम्। देवदत्तेन क्षिप्तः। 'हीयमानपापयोगाच्च' ॥५।४।४७॥ आभ्यां योगादकर्तरि तृतीयायास्तसिर्वा। वृत्ततो वृत्तेन वा हीयते। वृत्ततो वृत्तेन वा पापः। 'क्षेपे पूर्वेण सिद्धत्वात् तत्त्वाख्यान इदं विदुः'। 'षष्ठ्या व्याश्रये' ॥५।४।४८॥ नानापक्षाश्रयो व्याश्रयः। देवा अर्जुनतोभवन्। आदित्याः कर्णतोभवन्। व्याश्रये किम्। वृक्षस्य शाखा। 'रोगाच्चापनयने' ॥५।४।४९॥ रोगवाचिनः षष्ठ्यन्तात् तसिः अपनयने गम्ये। प्रवाहिकातः कुरु। ज्वरतः कुरु। प्रतीकारमित्यर्थः। अपनयने किम्। प्रवाहिकायाः कोपं करोति।

**अभूत**। संपद्यते कर्ता संपद्यकर्ता। निर्देशस्य सौत्रत्वात् तिङा समासस्तिङ्लोपश्चेत्यभिप्रेत्याह। **संपद्यते यः कर्तेति**। यद्वस्तु येन रूपेणाभूतं तस्य तदाकारेण भवनमभूततद्भाव इत्यभिप्रेत्याह। **अतथाभूतस्य तथाभावे गम्ये** इति। प्रागप्रतिपन्नविकारस्योत्तरकालं विकारोपपत्तिरित्युक्तं भवति। तेन यत्र प्रकृतिर्न विवक्ष्यते

**अस्य च्वौ ॥७।४।३२॥**

अवर्णस्य ई स्याच्च् च्वौ । वेर्लोपः[1] । च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति[2] । गङ्गीस्यात् ।

**क्यच्व्योश्च ॥६।४।१५२॥**

हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परे ॥ गार्गीभवति ।

**च्वौ च ॥७।४।२६॥**

च्वौ परेणो दीर्घः स्यात् ॥ शुचीभवति । पटूस्यात् । अव्ययस्य ईत्वदीर्घौ नेति केचित् । दिवास्यात्[3] । स्वस्तिस्यात् ।

---

तत्र प्रत्ययो न । यथा शुक्लं करोतीति विकारमात्रमत्र विवक्ष्यते न प्रकृतिरित्यभूततद्भावो न । कृभ्वस्तियोगे किम् । अशुक्लः शुक्लो जायते । च्वेरिकार उच्चारणार्थः । चः प्रकृतेरन्तोदात्तार्थः ।

**अस्य** । 'च्वौ च' इति दीर्घस्यायमपवादः ।

**क्यच्व्योः** । 'आपत्यस्य च' इति सिद्धे अतद्धितार्थोयमारम्भः । **गार्गीभवतीति** । अगार्ग्यो गार्ग्यो भवति । आपत्यस्येति किम् । साङ्काश्यीभूतः । हल इति किम् । कारिकेयस्यापत्यं कारिकेयिः । कारिकेयीभूतः ।

**च्वौ च** । **अव्ययस्येति** । **केचिदिति** । **वार्तिककारादयः** । तथोक्तं **भाष्ये** । अस्य च्वौ । अव्ययप्रतिषेधश्चोद्यते दोषाभूतमहः दिवाभूता रात्रिरित्येवमादिसिद्ध्यर्थमिति । तथा[4] **मुग्धबोधे**प्युक्तम् । 'च्विः कृभ्वस्स्वभूततद्भावेस्वावीर्घाविव्यस्य[5]' ।

---

१. च्वेर्लोपः $B_1$. २. ब्राह्मणीभवति $B_2$. ३. दिवा स्यात् dropped $D_1$. ४. तथा च $Dc_4$. ५. दीर्घो न व्ययस्येति । $Dc_4$ ; °स्वा दीर्घाव्व्यस्येति । $Dc_3$.

**रीङ् ऋतः ॥७।४।२७॥**

मात्रीकरोति। संपद्य कर्तरि किम्। अगृहे गृहे संपद्यते।

**अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च॥५।४।५१॥**

एषामन्तलोपः स्यात् च्विश्च॥ अरूकरोति। मनी स्यात्।

**विभाषा साति कार्त्स्न्ये ॥५।४।५२॥**

च्विविषये सातिप्रत्ययो वा स्यात् साकल्ये॥

**सात् पदाद्योः ॥८।३।१११॥**

सातेः पदादेश्च सस्य षो न स्यात्॥ दधि सिञ्चति। कृत्स्नं शस्त्रमग्निः संपद्यते अग्निसाद्भवति। अग्नीभवति। कार्त्स्न्ये किम्। एकत्र शुक्लीभवति पटः।

---

**मात्रीकरोतीति**। अमाता माता संपद्यते तां करोति। अगृहे गृहे इति। अधिकरणमेतत् न संपद्य कर्ता।

**अरुः**। सर्वविशेषणसंबन्धात् पूर्वेणैव च्विः सिद्धः। लोपार्थं वचनम्। **अरूकरोतीति**। अनरुः अरुः संपद्यते तं करोतीति। **मनीस्यादिति**। अमनो मनः संपद्यते। चक्षूकरोति। विचेतीकरोति। विरहीकरोति। निरजीकरोति।

**विभाषा**। साकल्ये गम्यमाने इति शेषः। यदि प्रकृतिः कृत्स्ना विकारभावमापद्यते इत्यर्थः। विभाषाग्रहणं च्विप्रापकम्। विकल्पस्तु महाविभाषयैव सिद्धः।

**सात्**। 'आदेशप्रत्यययोः' इति षत्वे प्राप्तेयं निषेधः।

अभिविधौ संपदा च ॥५।४।५३॥

संपदा कृभ्वस्तिभिश्च योगे सातिः स्याद्व्याप्तौ । पक्षे च्विश्च स तु न संपदायोगे । अग्निसात् संपद्यते । जलसाद्भवति लवणं जलीभवति । एकद्रव्यस्य सर्वात्मनान्यथात्वं कार्त्स्न्यम् । सर्वस्यानेकद्रव्यस्यान्यथात्वमभिविधिः ।

तदधीनवचने ॥५।४।५४॥

तदधीनत्वार्थे सातिः स्यात् संपदा कृभ्वस्तिभिर्योगे ॥ राजसात् संपद्यते राजसात् करोति राजाधीनमित्यर्थः ।

---

अभिविधौ । अभिविधेः कार्त्स्न्यस्य चावश्यं विशेषेण भाव्यम् । अन्यथा सूत्रद्वयारम्भो निष्फलः स्यादित्याशङ्क्याह । एकद्रव्यस्येत्यादि । एकस्यापि द्रव्यस्य सर्वात्मता विकाररूपापत्तिर्नैकदेशेन तत् कार्त्स्न्यमित्यर्थः । सर्वस्येति । एकदेशेन सर्वद्रव्यस्यान्यथात्वमभिविधिरित्यर्थः । अयं च विशेषो विवक्षावशाल्लभ्यते । तत्राग्निसाद्भवतीत्यत्र शस्त्रस्य सर्वात्मनाग्निभावो विवक्षितः । जलसाद्भवति लवणमित्यत्र तु लवणस्यैकदेशेन जलभावो विवक्षितः ।

तदधीन । अभूततद्भाव इति निवृत्तम् । अर्थान्तरोपादानात् । कृभ्वास्तियोगे संपदा चेति वर्तते । तदधीनं तदायत्तं तत्स्वामिकमित्यर्थः । स्वामिसामान्यं स्वसामान्यं च तदधीनशब्देन निर्दिश्यते । स्वामिविशेषवाचिनः स्वे वाच्ये सातिः स्यादित्यर्थः ।

---

१. Before it—अग्नीसंपद्यते $D_1$. २. जलीभवति लवणम् for जलसाद्… जलीभवति $B_1$. ३. C has before it—अभूततद्भाव इति निवृत्तम्. ४. $B_1$ drops it. ५. सर्वात्मताकवि° $Bc_1$.

**देये त्रा च ॥५।४।५५॥**

तदधीने देये त्रा स्यात् कृआदियोगे सातिश्च । विप्राधीनं देयं[1] करोति विप्रत्राकरोति । विप्रत्रा संपद्यते । पक्षे । विप्रसात् करोति ।[2]

**देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥५।४।५६॥**

एभ्यो द्वितीयार्थे सप्तम्यर्थे च बहुलं त्रा स्यात् ॥ देवत्रा वन्दे रमे वा । इत्यादि[3] ।

बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः ।

---

देये । देयग्रहणं तदधीनविशेषणम् । विप्राधीनमित्यादि । विप्राय देयमिति विज्ञातं तद्यदा तत्समर्पणेन तदधीनं क्रियते तदा प्रत्ययः । देये किम् । राजसाद्भवति राष्ट्रम् ।

देव । सातिरिति निवृत्तम् । त्राप्रत्ययोनुवर्तते । कृभ्वस्तियोग इति नात्र संबध्यते । सामान्येन विधानमित्यभिप्रेत्याह । एभ्य इत्यादि । इत्यादीत्यादिना मनुष्यत्रा वन्दे रमे वा । पुरुषत्रा । पुरुत्रा । मर्त्यत्रा । विभाषानुवृत्तेर्व्यर्थं बहुलग्रहणमित्याशङ्क्याह । बहुलोक्तेरिति ।

---

१. करोति देयम् D4. २. After this—कृभ्वस्तिभिर्योगे इति नात्र संबध्यते । सामान्येन विधानात् । तेन । देवान् गच्छति । देवत्रा गच्छति । देवेषु वसति । देवत्रा वसति ॥ B2, D5. ३. After it—कृभ्वस्तिभिर्योगे इति नात्र संबध्यते (संपद्यते D2) । सामान्येन (सामान्ये D4) विधानात् । तेन देवान् गच्छति । (After it देवेषु गच्छति D4) देवत्रा गच्छति । P, D2, D4, B1; (After देवत्रा गच्छति B1 has—देवान् वन्दते । देवेषु वसति । देवत्रा वन्दे देवत्रा वसति).

**अभिविधौ संपदा च ॥५।४।५३॥**

संपदा कृभ्वस्तिभिश्च योगे सातिः स्याद्व्याप्तौ । पक्षे च्विश्च स तु न संपदायोगे । [1]अग्निसात् संपद्यते । [2]जलसाद्भवति लवणं जलीभवति । एकद्रव्यस्य सर्वात्मनान्यथात्वं कार्त्स्न्यम् । सर्वस्यानेकद्रव्यस्यान्यथात्वमभिविधिः ।

**[3]तदधीनवचने ॥५।४।५४॥**

तदधीनत्वार्थे सातिः स्या[4]त् संपदा कृभ्वस्तिभिर्योगे ॥ राजसात् संपद्यते राजसात् करोति राजाधीनमित्यर्थः ।

---

**अभिविधौ** । अभिविधेः कार्त्स्न्यस्य चावश्यं विशेषेण भाव्यम् । अन्यथा सूत्रद्वयारम्भो निष्फलः स्यादित्याशङ्क्याह । एकद्रव्यस्येत्यादि । एकस्यापि द्रव्यस्य [5]सर्वात्मता विकाररूपापत्तिर्नैकदेशेन तत् कार्त्स्न्यमित्यर्थः । **सर्वस्येति** । एकदेशेन सर्वद्रव्यस्यान्यथात्वमभिविधिरित्यर्थः । अयं च विशेषो विवक्षावशाल्लभ्यते । तत्राग्निसाद्भवतीत्यत्र शस्त्रस्य सर्वात्मनाग्निभावो विवक्षितः । जलसाद्भवति लवणमित्यत्र तु लवणस्यैकदेशेन जलभावो विवक्षितः ।

**तदधीन** । अभूततद्भाव इति निवृत्तम् । अर्थान्तरोपादानात् । कृभ्वस्तियोगे संपदा चेति वर्तते । तदधीनं तदायत्तं तत्स्वामिकमित्यर्थः । स्वामिसामान्यं स्वसामान्यं च तदधीनशब्देन निर्दिश्यते । स्वामिविशेषवाचिनः स्वे वाच्ये सातिः स्यादित्यर्थः ।

---

१. Before it—अग्नीसंपद्यते $D_1$. २. जलीभवति लवणम् for जलसात्… जलीभवति $B_1$. ३. C has before it—अभूततद्भाव इति निवृत्तम्. ४. $B_1$ drops it. ५. सर्वात्मताकवि° $Bc_1$.

**देये त्रा च ॥५।४।५५॥**

तदधीने देये त्रा स्यात् कृभ्वादियोगे सातिश्च । विप्राधीनं देयं[1] करोति विप्रत्राकरोति । विप्रत्रा संपद्यते । पक्षे । विप्रसात् करोति ।[2]

**देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥५।४।५६॥**

एभ्यो द्वितीयार्थे सप्तम्यर्थे च बहुलं त्रा स्यात् ॥ देवत्रा वन्दे रमे वा । इत्यादि[3] ।

बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः ।

---

देये । देयग्रहणं तदधीनविशेषणम् । विप्राधीनमित्यादि । विप्राय देयमिति विज्ञातं तद्यदा तत्समर्पणेन तदधीनं क्रियते तदा प्रत्ययः । देये किम् । राजसाद्भवति राष्ट्रम् ।

देव । सातिरिति निवृत्तम् । त्राप्रत्ययोनुवर्तते । कृभ्वस्तियोग इति नात्र संबध्यते । सामान्येन विधानमित्यभिप्रेत्याह । एभ्य इत्यादि । इत्यादीत्यादिना मनुष्यत्रा वन्दे रमे वा । पुरुषत्रा । पुरुत्रा । मर्त्यत्रा । विभाषानुवृत्तेर्व्यर्थं बहुलग्रहणमित्याशङ्क्याह । बहुलोक्तेरिति ।

---

१. करोति देयम् $D_4$. २. After this—कृभ्वस्तिभिर्योगे इति नात्र संबध्यते । सामान्येन विधानात् । तेन । देवान् गच्छति । देवत्रा गच्छति । देवेषु वसति । देवत्रा वसति ॥ $B_2$, $D_5$. ३. After it—कृभ्वास्तिभिर्योगे इति नात्र संबध्यते (संपद्यते $D_2$) । सामान्येन (सामान्ये $D_4$) विधानात् । तेन देवान् गच्छति । (After it देवेषु गच्छति $D_4$) देवत्रा गच्छति । P, $D_2$, $D_4$, $B_1$; (After देवत्रा गच्छति $B_1$ has—देवान् वन्दते । देवेषु वसति । देवत्रा वन्दे देवत्रा वसति).

**समयाच्च यापनायाम् ॥५।४।६०॥**

अस्मात् कृञो योगे डाच् यापनेर्थे॥ समयाकरोति । कालक्षेपं करोतीत्यर्थः ।[२]

**सपत्रनिष्पत्रादतिव्यथने ॥५।४।६१॥**

आभ्यां कृञो योगे डाजतिव्यथनेर्थे । सपत्राकरोति मृगम् । सपत्रं शरं मृगकाये प्रवेशयतीत्यर्थः । निष्पत्राकरोति । शरमपरपार्श्वस्य निर्गमयतीत्यर्थः ।[७]

**निष्कुलान्निष्कोषणे ॥५।४।६२॥**

अस्माड्डाच् निष्कोषणेर्थे । निष्कुलाकरोति दाडिमम् ।

---

**समयात्** । कर्तव्यावसरप्राप्तिः समयः । तस्यातिक्रमणं यापना । यापनायां किम् । समयं करोति ।

**सपत्र** । अतिव्यथनमतिपीडनम् । सह पत्रेण वर्तते सपत्रः । निर्गतं पत्रमस्मान्निष्पत्रः । अतिव्यथने किम् । सपत्रं वृक्षं करोति जलसेचकः । निष्पत्रं वृक्षतलं करोति शोधकः ।

**निष्कुलान्** । निष्कोषणमन्तरवयवानां बहिर्निष्काशनम् । निष्कोषणे किम् । निष्कुलान् करोति शत्रून् ।

---

१. डाच् स्यात् $D_1$, $D_4$, $B_2$. २. After it—यापनायां किम् । समयं करोति । शपथमित्यर्थः $B_2$, $D_2$, C. ३. डाच् स्याद° $D_1$, $D_4$, $D_5$. ४. °व्यथने C. ५. निवेशयती° $D_1$. ६. शरस्यापरपार्श्वे निष्क्रामयतीत्यर्थः C. ७. After this C has—अतिव्यथने किम् । निष्पत्रं करोति । वृक्षतलं भूमिशोधकः. ८. °न्निष्पत्रः । $Bc_3$, $Dc_4$. ९. °सनम् । $Dc_1$.

**सुखप्रियादानुलोम्ये ॥५।४।६३॥**

आभ्यां डाच्[1] आनुकूल्येर्थे[2] ॥ सुखाकरोति प्रियाकरोति स्वामिनम्[3] । तच्चित्तमनुवर्तत इत्यर्थः ।

**दुःखात् प्रातिलोम्ये ॥५।४।६४॥**

दुःखाकरोति स्वामिनम् । तच्चित्तं पीडयतीत्यर्थः ।[4]

**शूलात् पाके ॥५।४।६५॥**

आभ्यात्[5] पाकेर्थे[6] डाच् ॥ शूलाकरोति[7] । शूलेन पचतीत्यर्थे ।[8]

**सत्यादशपथे ॥५।४।६६॥**

अनृतप्रतिपक्षात्[9] सत्यात् डाच् स्यात् ॥ सत्याकरोति भाण्डं वणिक् । सत्येन क्रेतव्यामिति तथ्यं करोतीत्यर्थः । शपथे[10] तु[11] सत्यं करोति विप्रः[12] ।

---

**सुख** । आनुलोम्यमनुकूलता । आराध्यचित्तानुवर्तनमिति यावत् । तच्च प्राणिधर्मः । आनुलोम्ये किम् । सुखं करोति तिक्तौषधपानम् ।

**दुःखात्** । प्रातिलोम्यं प्रतिकूलता । स्वाम्यादेश्चित्तपीडनम् । प्रातिलोम्ये किम् । दुःखं करोत्यशनम् ।

**शूलात्** । पाके किम् । शूलं करोति कदन्नम् ।

**सत्यात्** । सत्यशब्दोनृतप्रतिपक्षवचनः । क्वचित्तु शपथे वर्तते । सत्येन शापयेद्विप्रमिति । तस्यायं निषेध इत्यभिप्रेत्याह । अनृतप्रतिपक्षादिति ।

---

१. डाच् स्यात् $D_1$, $D_4$, $D_5$, $B_2$. २. आनुलोम्येर्थे C. ३. रिपुम् P, $D_4$, $B_1$. ४. After this C has—प्रातिलोम्ये किम् । दुःखं करोति रोगः. ५. पाके डाच् स्यात् P. ६. After it—स्यात् $D_1$, $D_2$, $D_3$, $D_4$, $D_5$. ७. शूलाकरोति मांसम् C, $B_2$. ८. C has after it—पाके किम् । शूलं करोति कदन्नम्. ९. C drops it. १०. Before it—सत्यात् किम् । मन्युं करोति $B_2$. ११. Dropped $D_5$. १२. प्रियः $D_1$.

मद्रात् परिवापणे ॥५।४।६७॥

अस्मात् डाच् स्यात् कृञो योगे परिवापणेर्थे ॥ मद्राकरोति कुमारम् ॥ भद्राच्च ॥* भद्राकरोति मङ्गल्यम् । मुण्डनं करोतीत्यर्थः ।[४]

इति तद्धितप्रक्रिया ॥

---

मद्रात् । परिवापणं मुण्डनम् । मद्रशब्दोमङ्गलार्थः भद्राच्चेति । वक्तव्यमेतत् ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे सुविशदमगमंस्तद्धितास्ते समाप्तिम् ॥

---

१. वपनेर्थे D1, D3, B2. २. B1 has before it—अस्माड्डाच् स्यात् कृञो योगे. ३. मङ्गलम् B2. ४. After this C has—परिवापणे किम् भद्रं करोति साधुः.

## नित्यवीप्सयोः ॥८।१।४॥

### आभीक्ष्ण्ये वीप्सायां च पदस्य द्विरुक्तिः स्यात् ॥

---

अथ[1] द्विरुक्तप्रक्रियोच्यते ।

**नित्य** । अयं नित्यशब्दः कूटस्थेष्वविचालिषु भावेषु वर्तते । यथा नित्यमाकाशम् । नित्य आत्मेति[2] । आभीक्ष्ण्येऽपि । नित्यं प्रजल्पेतेति । तत्राभीक्ष्ण्यवाचिनो नित्यशब्दस्येह ग्रहणमित्यभिप्रेत्याह । **आभीक्ष्ण्य** इति । आभीक्ष्ण्यं पुनः पुनः कृतिः । वीप्सा नाम नानाभूतार्थवाचिनां शब्दानां यानि वाच्यानि तेषां क्रियागुणद्रव्यैरेककालं प्रयोक्तुर्व्याप्तुमिच्छा । पदस्य द्विरुक्तिरित्येतत् 'सर्वस्य द्वे' इत्यस्माद-धिकरणसूत्राल्लभ्यते । तस्य चायमर्थः । इत उत्तरं यद्वक्ष्यामः प्राक् 'पदस्य' इति यावत् तत् 'सर्वस्य द्वे' इत्येतदधिकृतं ज्ञेयम् । तत्र सर्वस्य स्थाने द्वे रूपे स्त इत्येकः पक्षः । सर्वस्यैव द्विः प्रयोग इत्यन्यः । तत्र यदा सर्वस्य स्थाने द्वे स्त इति पक्षस्तदा ये शब्दतोऽर्थतश्चान्तरतमे द्वे रूपे एकस्य स्थाने स्तः । यदा द्विःप्रयोगस्तदा स एव शब्दो द्विरावर्तते । ननु सर्वस्येति किमर्थमुक्तम् । पदस्येत्येव किं नोक्तम् । नैवं शक्यम् । इह न स्यात् । प्रपचति प्रपचतीति । अन्यस्य सर्वस्येत्येतदकृतं सर्वं कार्यं प्रतिपत्त्यर्थं[3] द्रष्टव्यम् । तेन पूर्वत्रा-सिद्धीयमद्विर्वचन इत्येवमादि सिध्येत् । ननु च सर्वस्येत्यनुवृत्तेः सर्वस्येति वाच्ये ग्रन्थकारेण पदस्येत्यनुचितमुक्तम् । नानुचितम् । पद्यतेऽर्थोऽनेनेति पदमिति व्युत्पत्त्या वाचकस्य सर्वस्येत्येवोक्तम् ।

---

१. From here to the end of सुबन्त p. 93 in this Ms. is omitted in Dc3. २. आत्मा चेति Dc4. ३. प्रतिपत्त्यर्थे Dc4.

आभीक्ष्ण्यं तिङव्ययकृत्सु ॥ पचति पचति । भुक्त्वा भुक्त्वा । वीप्सायां वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रम्यः ।

---

**आभीक्ष्ण्यं तिङव्ययकृत्सु** इति । अव्ययानि च ते कृतश्चाव्ययकृत इति कर्मधारयः । तिङश्चाव्ययकृतश्चेति तिङव्ययकृत इति द्वन्द्वः । तेषु तिङव्ययकृत्सु । यां क्रियां कर्ताप्राधान्येनानुपरमन् करोति तस्याः क्रियाया धर्म आभीक्ष्ण्यम् । सा च क्रिया साध्यरूपा तिङन्तादिभिरेवोच्यते इति तेषु आभीक्ष्ण्यं न सुबन्तेषु तेषां सिद्धरूपस्य द्रव्यस्यैवाभिधानात् । **पचति पचतीति** । तिङन्तस्योदाहरणम् । **भुक्त्वा भुक्त्वा** इत्यव्ययकृतः । 'आभीक्ष्ण्ये णमुल् च' इति क्त्वान्तस्य 'कृदतिङ्' इति कृत्त्वम् । 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वम् । यद्यपि क्त्वा आभीक्ष्ण्ये विधीयते तथापि तस्य द्विर्वचनसापेक्षस्यैवाभीक्ष्ण्यप्रकाशनशक्तिः[2] । यङ्[3] निरपेक्ष एव प्रकाशयति । पुनः पुनः पचति पापच्यते इति । **वीप्सायामित्यादि** । **वृक्षं वृक्षं सिञ्चतीति** । तत्र प्रयोक्तुः सेचनक्रियया दिगादिभिर्भिन्नानां वृक्षाणां युगपत् प्राप्तुमिच्छा । **ग्रामो ग्रामो रम्य**[1] इति । अत्र रमणीयत्वेन गुणेन युगपत् प्रयोक्तुर्व्याप्तुमिच्छा तत्र ग्रामे ग्रामे पानीयमित्येतदुदाहरणीयम्[4] । यत् तिङन्तं नित्यतया प्रकर्षेण च प्रयुक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते । पचतिपचतितरामिति । इह तु आढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सेष्यते ।

---

१. रमणीयः C, $D_3$. २. After it—तथोक्तं **वृत्तिकृता** । क्त्वाणमुलोर्लोटश्च द्विर्वचनसापेक्षाणामेव पौनःपुन्यप्रकाशनशक्तिः $Dc_4$. ३. यङ् तु $Dc_4$. ४. °मित्यत्रेति । एतदु° $Dc_4$.

**परेर्वर्जने ॥८।१।५॥**

अस्य द्वे स्तो वर्जने ॥ परि परि वङ्गेभ्यो वृष्टो देवः ।

**उपर्यध्यधसः सामीप्ये ॥८।१।७॥**

एषां द्वे स्तः देशतः कालतः सामीप्येऽर्थे[1] ॥ उपर्युपरि-ग्रामम्[3] । अध्यधि सुखम्[2] । अधोधो ग्रामम् ।[4]

**वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सन-भर्त्सनेषु ॥८।१।८॥**

वाक्यादेः संबोधनस्य द्वे स्तः एष्वर्थेषु ॥ असूयायाम्[5] । सुन्दर सुन्दर वृथा ते सौन्दर्यम् । संमतौ[6] । देव देव वन्द्योसि । कोपे ।

---

परेः । परि परि वङ्गेभ्य इति । 'अपपरी वर्जने' इति कर्मप्रवचनीयत्वम् । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । समासे तु वर्जनार्थस्य समासेनैव प्रत्यायितत्वात् न भाव्यं द्विर्वचनेन परिवङ्गं वृष्टो देव इति । असमासे तु वेति वाच्यम् । 'विभाषा वेष्टि—' इत्यतो मण्डूकप्लुत्या विभाषानुवृत्तेः परिवङ्गेभ्यो वृष्टः ।

उपरि । उपर्युपरि ग्राममिति देशकृतसामीप्यस्योदाहरणम् । ग्रामस्य सामीप्येनोपरिष्टाद् देशः इत्यर्थः । 'उभसर्वतसोः—' इत्यादिना द्वितीया । कालकृतसामीप्यस्योदाहरणमध्यधि सुखमिति । उपरि शिरसो घटं धारयतीत्यादौ औत्तराधर्यमात्रं विवक्षितमिति द्विर्वचनं न ।

वाक्यादेः । आख्यातं साव्ययकारकविशेषणं वाक्यम् । परगुणानामसहनमसूया । संमतिः पूजनम् । कोपः क्रोधः ।

---

१, C, $D_3$, $D_5$ drop अर्थे. २. मुषम् $D_2$. ३. नगरम् C; $D_1$, $D_4$ drop it; लोकम् $B_2$, $D_2$. ४. After this C has—सामीप्ये किम् । उपरि चन्द्रमाः. ५. Before it—गुणेषु दोषाविष्करणमसूया $B_2$, $D_3$. ६. संमतौ तु C, $B_2$.

दुर्विनीत दुर्विनीत इदानीं ज्ञास्यति । कुत्सने । धानुष्क धानुष्क [1]व्यर्थं ते धनुः । भर्त्सने । चौर चौर घातयिष्यामि त्वाम् ॥

**एकं बहुव्रीहिवत् ॥८।१।९॥**

द्विरुक्त एकशब्दो बहुव्रीहिवत् [2]स्यात् ॥ तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । एकैकयाहुत्यौ[3] । [4]अतिदिष्टबहुव्रीहौ [5]सर्वनामत्वनिषेधो न । एकैकस्मै देहि ।

---

कुत्सनं निन्दनम् । अपकारशब्दैर्भयोत्पादनं भर्त्सनम् । एते च प्रयोक्तृधर्मा नाभिधेयधर्माः । ननु चासूयादिषु 'स्वरितमाम्रेडितेसूयासंमतिकोपकुत्सनेषु' इति पूर्वपदस्य प्लुतो भाव्यः । भर्त्सने तु 'आम्रेडितं भर्त्सने' इत्याम्रेडितस्यैव प्लुतो [6]भावः । सत्यम् । [7]भवत्येवम् । किं तु सर्वस्यापि प्लुतस्य विभाषितत्वादत्राचार्यवर्यैर्न प्रयुक्तः । वाक्यादेः किम् । अन्त्यस्य च मध्यस्य च मा भूत् । शोभनः खल्वसि माणवक । आमन्त्रितस्य किम् । उदरो देवदत्तः । असूयादिषु किम् । देवदत्त गामभ्याज शुक्लां दण्डेनेति ।

एकम् । एकैकमक्षरमिति । सुब्लोपः । एकैकयेति । अत्र सुब्लोपपुंवद्भावौ । ननु चासत्यपि पुंवद्भावे एतत् सिध्यति । सत्यम् । तथाप्युत्तरार्थमेतत् । ननु च बहुव्रीहिवद्भावे सति तत्स्वरसमासान्तसर्वनामत्वनिषधो भाव्य इत्याशङ्क्याह । अतिदिष्टेत्यादि । सर्वनामत्वनिषेधः स्वरसमासान्तयोरुपलक्षणार्थः । तत्र सर्वनामत्वनिषेधस्तु न बहुव्रीहावित्यत्र बहुव्रीहिरेव यो बहुव्रीहिरिति विज्ञानान्न स्वरसमासान्तौ समासाधिकारे बहुव्रीहौ विज्ञायेते इति न स्तः ।

---

१. वृथा $B_2$. २. Dropped $D_5$. ३, After it—जुहोति $B_2$. ४. आनिर्दिष्ट° $D_3$, $D_4$. ५. °निषेधाभावात् for °निषेधो न C. ६. भाव्यः $Bc_3$, $Dc_4$. ७. भवत्येव $Dc_4$. ८. गामानय $Dc_4$. ९. Dropped $Dc_4$.

**आबाधे च ॥८।१।१०॥**

पीडायामर्थे द्विरुक्तं[1] बहुव्रीहिवत् स्यात्[2] ॥ गतगतः[3] ।[4]

**प्रकारे गुणवचनस्य ॥८।१।१२॥**

सादृश्येऽर्थे गुणवचनस्य द्वे स्तः तच्च कर्मधारयवत् स्यात् ॥ पटुपट्वी । पटुपटुः । न्यूनगुण[5] इत्यर्थः ।

---

**आबाधे** । **गतगत इति** । सुप्लुक् । प्रियस्य चिरगमनात् पीड्यमानः प्रयोक्तैवं प्रयुङ्क्ते । पुंवत्त्वार्थं गतगतेत्यप्युदाहार्यम् ।

**प्रकारे** । **तच्च कर्मधारयवत् स्यादिति** । एतच्च कर्मधारयवदुत्तरेष्वस्मादधिकारसूत्राल्लभ्यते । तस्य चायमर्थः । एतदुत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं स्यात् । कर्मधारयवत्त्वे प्रयोजनं सुब्लुक्पुंवद्भावान्तोदात्तत्वानि । पटुपट्वीत्यत्र 'पुंवत् कर्मधारय—' इति पुंवद्भावः । पटुपटुरित्यत्र 'सुपो धातुप्रातिपदिकयोः' इति सुप्लुक् । 'समासस्य' इत्यन्तोदात्तत्वं च परत्वादनेनाम्रेडितानुदात्तत्वं बाध्यते । अधिकारेणैव सिद्धे यदुत्तरेष्विति वचनं तत् स्पष्टार्थम् । **न्यूनगुण इत्यर्थ** इत्यनेन सादृश्यवृत्तिता दर्शिता । प्रकारे किम् । पटुर्देवदत्तः । गुणवचनस्येति किम् । अग्निर्माणवकः ।

---

१. द्वे स्तः for द्विरुक्तं $D_3$. २. C drops it. ३. गतगतम् for गतगतः । गतगता C; $B_1$ has गतगता only. ४. After it—गतगता P, C, $B_1$, $B_2$. ५. °गुणमित्यर्थः C, अन्यूनगुण $D_3$.

आनुपूर्व्ये द्वे स्त इति वाच्यम् ॥* मूले मूले स्थूला[1] । वृद्धं वृद्धं प्रवेशय । संभ्रमेण प्रवृत्तौ द्वे वाच्ये[2] ॥* सर्प सर्प बुध्यस्व बुध्यस्व । नेह द्वित्वनियमः । [3]सर्प सर्प सर्प बुध्यस्व बुध्यस्व बुध्यस्व । क्रियासमभिहारे च ॥* लुनीहि लुनीहि इत्येवायं

---

आनुपूर्व्य इति । अवीप्सार्थं वचनम् । स्वार्थेवधार्यमाणेनेकस्मिन् द्वे भवतः इति वक्तव्यम् । अस्मात् कार्षापणादिह भवद्भ्यां माषं माषं देहि । स्वार्थे एतद् द्वित्वं न वीप्सायाम् । अत्र हि द्वावेव माषौ दीयेते न कार्षापणसंबन्धिनः सर्वे तेन वीप्सा न । अवधार्यमाणे किम् । अस्मात् कार्षापणादिह भवद्भ्यां माषं देहि द्वौ वा त्रीन् वा । अनेकस्मिन् किम् । अस्मात् कार्षापणादिह भवद्भ्यां माषमेकमेव देहि । नेह द्वित्वनियम इति । किं तर्हि । यावद्भिः शब्दैः संभ्रमोर्थोवगम्यते तावन्तः प्रयोक्तव्या इति भावः । **क्रियासमभिहारे चेति** । एतच्च 'नित्यवीप्सयोः' । इत्येव सिद्धम् । तत् तत्रैव प्रतिपादितम् । पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे स्त इति वाच्यम् । पूर्वं पूर्वं पुष्यन्ति । प्रथमं प्रथमं पच्यन्ते । अतिशायिकोपि दृश्यते । पूर्वतरं पुष्यन्ति । प्रथमतरं पच्यन्त इति । डतरडतमान्तयोस्त्रिलिङ्गशब्दवाच्ये भावे वर्तमानयोः समेनाढ्यत्वादिना धर्मेण या संप्रधारणा तस्यां विषयभूतायां द्विर्वचनं स्यादिति वाच्यम् । उभाविमावाढ्यौ कतरा कतरा अनयोराढ्यता । सर्वे इमे आढ्याः । कतमा कतमा एषामाढ्यता । डतरडतमाभ्यामन्यत्रापि दृश्यते । उभाविमावाढ्यौ । कीदृशी कीदृशी अनयोराढ्यता । तथा स्त्रीनिगदाद्भावादन्यत्रापि दृश्यते । उभाविमावाढ्यौ । कतरः कतरोनयोर्विभव इति ।

---

१. स्थूलाः $D_1$; स्थूला वृक्षाः $D_2$. २. द्वे स्त इति वाच्यम् C. ३. C has before it—किं तर्हि । यावद्भिः सोर्थोवगम्यते तावन्तः शब्दाः प्रयोक्तव्याः.

लुनाति । कर्मव्यतिहारे सर्वनाम्नो द्वे स्तः समासवच्च बहुलम् ॥* यदा न समासवत्तदा प्रथमैकवचनं पूर्वपदस्य[2] द्वितीयाद्येकवचनान्तत्वं[1] परपदस्य । अन्योन्यं विप्रा नमन्ति । अन्योन्येन कृतम्[3] । अन्योन्यस्मै ।[4] अन्योन्यस्मात् । अन्योन्यस्य[5] । अन्योन्यस्मिन् साधवः । एवं परस्परम् । अत्र विसर्जनीयस्य सः कस्कादित्वाज्ज्ञेयः[6] । बहुलोक्तेरेतयोर्नित्यमसमासवत् । इतरशब्दस्य[7] नित्यं समासवदिति ज्ञेयम् ।

---

कर्मव्यतिहार इत्यादि । कर्मव्यतिहारः क्रियाविनिमयः । एकस्यान्यतरभोजनाद्यपरस्यापीतरभोजनादि । समासवच्च बहुलमिति समासवद्भावो बहुलं विधीयते । प्रथमैकवचनं पूर्वपदस्येति । पूर्वपदस्य द्वितीयाद्येकवचनानां स्थाने सुः कर्तव्य इत्यर्थः । द्वितीयादीति । परपदस्य द्वितीयाद्येकवचनान्तस्य द्वितीयाद्येकवचनान्ततैव स्यादित्यर्थः । अत्रेति । परस्परमित्यत्र । इतरेतरमिति द्वितीयान्तस्य द्विर्वचने कृते समासवद्भावेन सुप्लुक् । समासस्य स्वरोन्तोदात्तत्वमाम्रेडितस्वरापवादः । समासत्वादेव प्रातिपदिकत्वात् द्वितीयैकवचनादि ।

---

१. °वचनान्तत्वं B2. २ पूर्वस्य D5. ३. कृतमित्यादि सद्वचः and drops अन्योन्यस्मै···साधवः C. ४. After it—देहि D3. ५. अन्योन्यस्य dropped B1. ६. कस्कादित्वेन ज्ञेयः D3, D4, D5. ७. तु नित्यं P, D3, B1, B2.

इतरेतरम् । स्त्रीनपुंसकयोरुत्तरपदस्य वा आम्भावो वाच्यः । अन्योन्यां परस्परामितरेतरां वा इमाः स्त्रियो भोजयन्ति कुलानि वा । पक्षे अन्योन्यमित्यादि । तृतीयादिषु पुंवत् ॥

---

स्त्रीनपुंसकयोरिति । स्त्रीनपुंसकयोर्यत् सर्वनाम कर्मव्यतिहारे वर्तते तस्योत्तरपदस्य या विभक्तिस्तस्याः स्थाने आम्भावे वा वक्तव्य इत्यर्थः । अन्योन्यां परस्परामिति । द्विर्वचनं विभक्तेराम्भावः पूर्वपदस्य स्युः । पक्षे अन्योन्यमित्यादीति । स्त्रियां समासवद्भावात् सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति टापो निवृत्तिः । स्पष्टत्वात् त्यक्तं सूत्रत्रयं व्याख्यायते । 'अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्' ॥८।१।१३॥ अप्रयासे प्राणिधर्मेर्थे वर्तमानयोः प्रियसुखयोर्द्वे वा । प्रियप्रियेण ददाति । सुखसुखेन ददाति । अकृच्छ्रे किम् । प्रियः पुत्रः । सुखो रथः । 'यथास्वे यथायथम्' ॥८।१।१४॥ यथास्वभावे यथावर्त्म यथायथं निपात्यते । यथायथं पदार्था ज्ञाताः । यथास्वभावमित्यर्थः । यथायथं यान्ति । यथात्मीयमित्यर्थः । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' ॥८।१।१५॥ एषु पञ्चस्वर्थेषु द्विशब्दस्य द्वन्द्वमिति निपात्यते । रहस्ये । द्वन्द्वं मन्त्रयते । स्थित्यनतिक्रमे । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण पौत्रेण प्रपौत्रेणापीति । व्युत्क्रमणे । द्वन्द्वं व्युत्क्रान्ताः । द्विवर्गसंबन्धेन भिन्ना इत्यर्थः । यज्ञपात्रप्रयोगे । द्वन्द्वं यज्ञपात्राणि

---

१. °रुत्तरस्य च C. २. आम्भावो वा वाच्यः C. ३. अम्भावो $D_2$. ४. अन्योन्यम् । परस्परम् । अत्र विसर्जनीयस्य सः $D_1$; अन्योन्यं परस्परमितरेतरं वा $D_2$, $D_3$. ५. वा dropped C. ६. पदार्थो ज्ञातः $Bc_3$, $Dc_4$. ७. व्युत्क्रान्तः $Bc_3$, $Dc_4$. ८. भिन्न $Bc_3$, $Dc_4$.

इति द्विरुक्तप्रक्रिया ॥[2]

---

प्रयुनक्ति धीरः । अभिव्यक्तौ । द्वन्द्वं नारदपर्वतौ । द्वन्द्वं संकर्षणवासुदेवौ । साहचर्येणाभिव्यक्तावित्यर्थः । अन्यत्रापि द्वन्द्वमित्येतदिष्यते । तदर्थं योगविभागः क्रियते । तेन द्वन्द्वं युद्धम् । द्वयोर्युद्धमित्यर्थः । द्वन्द्वानि सहते । चार्थे द्वन्द्वः ।

इति द्विरुक्तप्रक्रिया ॥

भाष्यवृत्तिहरिग्रन्थतद्व्याख्यामर्मवेदिनः ।
कौतुकाक्रान्तमनसः प्रमोदयतु मत्कृतिः ॥ १ ॥

श्रीरामचन्द्राचार्योक्तेः स्पष्टार्थत्वेपि चित्रता ।
न मर्मज्ञैः प्रयोज्योर्थः स्फटिकाकारगो यथा ॥ २ ॥

पदे वाक्ये प्रमाणे च तत्त्वज्ञं ज्ञातृसंमतम् ।
रामचन्द्राचार्यसूरेरन्यं नोपलभामहे ॥ ३ ॥

येन व्याकरणार्णवैकतरणिः सा प्रक्रियाकौमुदी ।
वेदान्तानुमता च वैष्णवमहासिद्धान्तसद्दीपिका ॥
कालज्ञानविधौ व्यधायि विबुधानन्दि प्रबन्धत्रयं ।
कृष्णाचार्यसुतः स नः सुखयतु श्रीरामचन्द्रो गुरुः ॥ ४ ॥

---

१. इति ‥ प्रक्रिया dropped C; इति द्विरुक्तिप्र° D4. २. After it—समाप्ता D3. ३. स्पष्टार्थत्वं विचित्रता Dc1; स्पष्टार्थत्वे विचित्रता Dc2, Bc1, Dc3. ४. तेन वेदमता च वैष्णव° Dc1, Dc2, Dc3, Bc1.

इति[1] श्रीरामचन्द्राचार्यविरचितायां[2]
प्रक्रियाकौमुद्यां सुबन्तप्रक्रिया ॥[3][4]

इति ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे सुविशदमगमत् तत् सुबन्तं समाप्तिम् ॥[5][6]

१. इति श्रीसकलसद्रागमचणश्रीराम° $D_3$, $D_5$, $B_1$. २. श्री dropped P; श्रीमद्रामचन्द्राचार्य° $D_1$. ३. सुबन्तं समाप्तमिति । $D_2$; सुबन्तं समाप्तम् । श्रीरस्तु। $D_4$. ४. After it–समाप्तेयम् C; सुबन्तं समाप्तम् ।श्रीरस्तु । शुभं भवतु ।कल्याणमस्तु । श्रीः" श्रीः $D_1$; सुबन्तं समाप्तम् । श्रीरस्तु ।श्रीः। ॐ नमः। $B_2$; P has सुबन्तं समाप्तम्।; After सुबन्तप्रक्रिया $B_1$ has—समाप्तमिति । छ । यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ शुभं भवतु । कल्याणमस्तु । लेखकपाठकयोः ।; at the end—इति श्रीरामचन्द्रविरचितायां प्रक्रियाकौमुद्यां सुबन्तं समाप्तम् $D_3$. ५. समाप्तम् । $Bc_3$. ६. After this $Dc_1$ has the following:—

श्रीरस्तु । कल्याणमस्तु । इति श्रीप्रक्रियाकौमुदीये प्रसादः समाप्तः ॥ श्रीरस्तु। श्रीकल्याणमस्तु ॥ श्रीरस्तु ।

स्वस्ति संवत् १६०६ वर्षे श्रावणवदि १० रवौ अद्येह श्रीतापीतटे सूर्यपुरे लिखितोयं प्रसादः । समाप्तमिति । श्रीः ।

यादृशं पुस्तकं वीक्ष्य शोधनीयं सदा बुधैः ।
हीनाधिक्यैः स्वरैर्वर्णैरस्माकं दूषणं न हि ॥ १ ॥
यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ २ ॥
यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः ।
यावद् भास्करचन्द्रौ तावदिदं पुस्तकं जयतु ॥ ३ ॥
श्रीरस्तु । लेखकपाठकयोः कल्याणमस्तु ॥ श्रीः ॥ श्री ॥

$Dc_2$ has:—

श्रीरस्तु । मङ्गलमस्तु । लेखक विठलकासीवासी रजपुतः ॥ संवत १६४१ समए अषाढ सुदि द्वादसी वासवीहफइ । श्रीविश्वनाथ । कलभैरव अय नमः ॥ रामचन्द्र राम ॥

$Bc_3$ has—संवत् १९६० वर्षे पौष मासे शुक्लपक्षे ११ तिथौ । लिखितमिदम् । शुभं भवतु ।

